॥ १०८ श्रीराधारमणो जयति ।

महर्षिप्रवरश्रीकृष्णद्वैपायनप्रणीतम्

# श्रीमद्भागवतम् ।



श्रीश्रीपादश्रीधरस्वामिकृतभावार्थदीपिका, श्रीराधारमणदासगोस्वामिविरचितदीपिन्याख्यतट्टिप्पणी श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका, श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली, श्रीमद्वल्लभाचार्यकृतसुबोधिनी, श्रीगौडीयवैष्णवाचार्यप्रवरश्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भाख्यटीका, श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी, श्रीनिम्बार्कसम्प्रदायिश्रीशुकदेवकृतसिद्धान्तप्रदीपाख्यटीका इत्यष्टभिर्व्याख्याभिर्भाषानुवादेन समलङ्कृतम् ।

इदम्

परमहंसपरिव्राजकाचार्यश्रीमत्स्वामिप्रकाशानन्दसरस्वतीपूज्यपादशिष्येण

श्रीनित्यस्वरूपब्रह्मचारिणा

सम्पादितम् ;

[illegible] श्रीराधाविनोद प्रेम सेवा परायण राजर्षि राय

श्रीवनमालिराय बहादुरस्य

सम्पूर्णसाहाय्येन

प्रकाशितञ्च ।

तच्च

काञ्चीमण्डलान्तर्वर्ति 'कान्दूर' पं० श्रीरङ्गाचार्यद्वारा संशोध्य

श्रीवृन्दावनधामनि

स्वकीये "श्रीदेवकीनन्दन" यन्त्रालये

मुद्रितम् ।

सम्वत् १९६१

श्रीलक्ष्मीनृसिंहाय नमः ।

# श्रीमद्भागवतम् ।

## सप्तमस्कन्धः ।

### प्रथमोऽध्यायः ।

॥ ॐ नमो भगवते वासुदेवाय ॥

राजोवाच ।

समः प्रियः सुहृद्ब्रह्मन् भूतानां भगवान् स्वयम् ।
इन्द्रस्यार्थे कथं दैत्यानवधीद्विषमो यथा ॥ १ ॥

न ह्यस्यार्थः सुरगणैः साक्षान्निःश्रेयसात्मनः ।
नैवासुरेभ्यो विद्वेषो नोद्वेगश्चागुणस्य हि ॥ २ ॥

इति नः सुमहाभाग ! नारायणगुणान्प्रति ।
संशयः सुमहाञ्जातस्तद्भवांश्छेत्तुमर्हति ॥ ३ ॥

श्रीशुक उवाच ।

साधुपृष्टं महाराज ! हरेश्चरितमद्भुतम् ।
यद्भागवतमाहात्म्यं भगवद्भक्तिवर्धनम् ॥ ४ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

श्रीगणेशाय नमः ॥

स्वभक्तपक्षपातेन तद्विपक्षविदारणम् ।
नृसिंहमद्भुतं वन्दे परमानन्दविग्रहम् ॥ १ ॥

ऊतिः पञ्चदशाध्याय्यां सप्तमे वर्ण्यतेऽधुना ।
ऊतिश्च वासना प्रोक्ता तत्तत्कर्मानुसारिणी ॥ २ ॥

अशुभा च शुभा चेति द्विधा सा हेतुभेदतः ।
अशुभा महतां कोपाच्छुभा महदनुग्रहात् ॥ ३ ॥

हरेर्द्वारपयोर्वैकुण्ठे वसतोरपि ।
चतुःसनरुषा विष्णुद्वेषाऽशुभवासना ॥ ४ ॥

यथा च दैत्यगर्भेऽपि प्रह्लादस्य सतः स्थिरा ।
नारदानुग्रहादास विष्णौ सद्भक्तिवासना ॥ ५ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

स्वभक्तं च सदा विष्णुर्द्विषन्तमपि रक्षति ।
तृतीयेऽथ भवे कृत्वा कृतवानात्मसात्पुनः ॥ ६ ॥
अतो मनीषिणा यत्नः कार्यो महदनुग्रहे ।
इत्येतदर्थमूतीनामत्र लक्षणमुच्यते ॥ ७ ॥
तत्रादौ दशभिर्दैत्यतत्पुत्रमतिभेदतः ।
महत्कोपानुकम्पोत्थवासनाभेद उच्यते ॥ ८ ॥
सद्वासनाच युज्येत कर्मभिः शुद्धचेतसः ।
परैस्तु पञ्चभिस्तस्मात्क्रियते धर्मनिर्णयः ॥ ९ ॥
तत्र तु प्रथमेऽध्याये हिरण्यकशिपोः सुते ।
विष्णुभक्ते विरोधस्तु विप्रशापजईर्यते ॥ १० ॥

यदुक्तम् पूर्वस्कन्धान्ते "हतपुत्रा दितिः शक्रपार्ष्णिग्राहेण विष्णुना । मन्युना शोकदीप्तेन ज्वलन्ती पर्यचिन्तयत्" इति । तच्छ्रुत्वा विस्मितः परीक्षित्पृच्छति—समइति त्रिभिः । न हि समस्य सुहृदश्च वैषम्यं नामास्ति नच प्रियस्य प्रीतिकर्तृषु वैषम्यं युक्तमित्यर्थः ॥ १ ॥

किञ्च यस्य यैः प्रयोजनं सिध्यति स तत्पक्षपाती भवति यश्चयेभ्यो बिभेति तान्द्वेषेण हन्ति नतु तदत्रास्तीत्याह—नहीति । निःश्रेयसं परमानन्दएव आत्मा स्वरूप यस्य असुरेभ्यश्चोद्वेगो भयं नास्ति अतोविद्वेषोपि नास्त्येव. तत्र हेतु, अगुणस्येति । गुणाधीनौ प्रीतिद्वेषावित्यर्थः ॥ २ ॥

श्रीनारायणस्य गुणाननुग्रहनिग्रहादीन् प्रति तत्त्वं संशयम् ॥३॥
भागवतस्य प्रह्लादस्य माहात्म्यं गीयत इतिसम्बन्धः ॥ ४ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

॥ श्रीमते रामानुजाय नमः ॥

पूर्वस्मिन् स्कन्धे अष्टादशेऽध्याये "हतपुत्रा दितिः शक्रपार्ष्णिग्राहेण विष्णुना" इति विष्णोरिन्द्रस्य पक्षपातित्वमुक्तम् तत्र सर्वान्तरात्मनः सर्वभूतसुहृदो निरतिशयप्रियरूपस्यावाप्तकामस्य निरस्ताखिलदोषस्य परमकारुणिकस्य श्रीभगवतः कथं प्राकृतवद्वैषम्यनैर्घृण्यादिकम् ? इति पृच्छति राजा—सम इत्यादिना त्रिभिः श्लोकैः । यद्यपि तत्तज्जीवकर्मगुणानुगुण्येनान्तरात्मतया नियन्तुर्न वैषम्यादिदोषप्रसक्तिरिति तत्रतत्र बहुवारमुक्तमिति न शङ्कावकाशः, तथापि तत्रतत्रप्रसङ्गादुक्तमेव तद्द्रढयितुं किं गुणानां कर्मणां च प्रत्येकं सुखदुःखादिनिमित्तत्वम् उत समुच्चितानाम्, अथवा कर्मणामेवनिमित्तत्व, गुणानां तु तद्धेतुत्वमुत गुणानामेव तन्निमित्तत्वं कर्मणां तु गुणोपचयापचयादिनिमित्तत्वमित्यादिशङ्का परिहारान् श्रोतुं च प्रश्नः, सम इति. हे ब्रह्मन् ! भगवान् पूर्णषाड्गुण्यो निरस्तनिखिलदोषश्च अनेनाप्तकामत्वं सूचितम् तत एव स्वप्रयोजननिरपेक्षत्वञ्च समः निरस्तनिखिलदोषत्वादेव द्वेष्यप्रियविभागरहितः स हि रागद्वेषादिमूलकः तदभावात्सम इति भावः । किञ्च सर्वभूतानां देवादीनां चासुरादीनां च सुहृद्धितैषी आत्मत्वादितिभावः नह्यात्मन किञ्चिच्छरीरं हितमन्यदहितमात्मत्वादेव च निरतिशयप्रियः एवम्भूतः स्वयं साक्षादेवेन्द्रस्यार्थे प्रयोजनाय कथं दैत्यानवधीद्धतवान्, यथा विषमो रागद्वेषादिप्राकृतगुणयुक्तस्तद्वत् ॥ १ ॥

साक्षान्निःश्रेयसात्मनः पुरुषार्थस्वरूपस्य निरतिशयानन्दरूपस्येत्यर्थः अस्य भगवतः सुरगणैरिन्द्रादिभिर्नेक्षार्थः तदनुगृहीतेन्द्रादिभिः साध्यः कश्चित्पुरुषार्थो न तस्यास्ति स्वयमेव साक्षान्निःश्रेयसात्मत्वादिति भावः तथा असुरेभ्य उद्वेगो भयं तेषु विद्वेषश्च नास्त्येव तत्र हेतुं वदन् तं विशिनष्टि, अगुणस्येति. हि यस्मादगुणस्य सत्त्वादिगुणतन्मूलकरागद्वेषभयरहितस्य ॥ २ ॥

इतीत्थं हे महाभाग ! निर्गुणस्य श्रीनारायणस्य गुणान्प्रति गुणविषयकोमहान् संशयो जातो वर्तते तद्गुणस्तु समन्ताद्यश्रेष्ठात्, गुणानगुणोस्त्येतत्संशयात्मकमज्ञानं छेत्तुमपाहितु भवानेवार्हति नान्य इत्यर्थः ॥ ३ ॥

एवमापृष्टो मुनिस्तावद्राज्ञः प्रश्नमभिनन्दति—साध्विति । हे महाराज ! अद्भुतं प्राकृतचरणासजातीयत्वेन चिन्तयितुमशक्यं हरेश्चरितंप्रति साधु पृष्टं हरिचरित्रविषयकसंशयोद्घाटनरूपत्वात्प्रश्नः साधीयानित्यर्थः । साधुत्वमेव प्रश्नस्य स्पष्टयितु चरित्रं विशिनष्टि—यदिति. यद्धरेश्चरितं भागवतानां माहात्म्यं यस्मिन्नीदृशं अस्त्वेवं ततः किं तत्राह, भगवद्भक्तिं वर्द्धयतीति, भगवद्भक्तिवर्द्धनं भगवद्भक्तेर्वर्द्धनं वृद्धिर्यस्मादिति वा भागवतमाहात्म्येन भगवद्भक्तिवर्द्धकेन युक्तत्वाद्भगवच्चरित्रस्य तद्विषयकः प्रश्नः साधुरिति भावः ॥ ४ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

॥ श्रीवायुपुत्रायनमः ॥

पञ्चस्कन्धाभिधे तीर्थे स्नातः स्वमनसान्वथ ।
श्रीमद्भागवते स्नातुं प्रयते तत्त्वसन्निधे ॥ १ ॥
सेवा येषामपवर्गगतिर्जगतामपमलास्ते—
श्रीमद्विष्ण्वङ्घ्रिसरोरुहयुगले भ्रमन्तः ।
सन्त. कुर्वन्तु दयां मयि विजयध्वजतीर्थे—
नित्यानित्याश्रयस्तादितिजाङ्घ्रिननुतसतीर्थसुतीर्थे ॥ .

सन्ततवेदान्तपरिनिष्ठितानामपि श्रीनारायणपरमप्रसादसन्तरेणानापादितसमीचीनज्ञानामृतकलानां कचित्कचिदसुरजनमोहाय प्रदर्शितशुक्रशोणितस्वरूपकादिभिरिवभगवतः प्रादुर्भावेस्तत्त्वे संशयालूनां सतां विसंशयार्थं श्रीनृसिंहावतारस्तत्प्रसक्तये नानाविधवर्णाश्रमाचारभेदविचारस्तत्पूजाप्रकारश्च निरूप्यते ऽस्मिन्स्कन्धे. तदर्थं परीक्षित्प्रश्नपूर्वकमुपोद्घातं रचयति—सम इति । यो भगवान् भूतानां योग्यतातिरेकेण पक्षपरिग्रहशून्यः आत्मादेः प्रियश्च "तदेतत्प्रेयः" इति श्रुतेः सत्त्वादिप्रदत्वात्तैरनुष्ठितसमर्चनादिसुकृतस्य सुखलक्षणफलदातृत्वेनोपकर्तृत्वाच्च सुहृत् किमत इति तत्राह, स्वयमिति. स स्वयं विषम इवेन्द्रस्यार्थे स्वप्रयोजनमन्तरेण परप्रयोजनार्थं कथं दैत्यानवधीदित्यन्वयः ॥ १ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

ननु, सुरगणैः क्रियमाणस्य स्वप्रयोजनस्य सम्भवादनर्थी-दिति किं न स्यादिति तत्राह—न हीति । हि शब्दो हेत्वर्थः कुतो नास्तीत्यत्राह—निःश्रेयसात्मन इति, नित्यनिर्दुःखानन्द-स्वरूपस्य तादृशत्वं मुक्तस्याप्यस्तीति तत्राह--साक्षादिति, नित्यनिर्दुःखानन्दानुभवस्वरूपस्य परप्राप्यप्रयोजनाभावान्मुक्तस्य तदभावात्. नन्वसुरप्रद्वेषात्सुरहितं क्रियत इति तत्राह--नैवेति, विद्वेषश्च तत्तत्स्वरूपद्योतनायासुरेभ्य इति पञ्चमी 'वृक्षात्पर्णं पतति' इतिवत्कादाचित्कत्वाभावान्नित्ये द्वेषे वधानुपपत्तिरन्यथा वध-स्यापि सन्ततानुवृत्तिः स्यादतो नोपपत्तिः स्यादिति भावः स्वाभिभवलक्षणभयात्तद्वध इति तत्राह—नेति, उद्वेगो भयलक्षणं कुत इत्यत उक्तम् अगुणस्येति "प्राकृतगुणसम्बद्धस्य तादृक्-स्वभावत्वाद्धरेस्तदभावान्निर्गुणश्च" इतिश्रुतेः अनेन निःश्रेयसात्म-नोपि गुणसम्बन्धेन जीववत्तथात्वं स्यादिति शङ्कापि निरस्तेति ज्ञायते ॥ २ ॥ ३ ॥

प्रामाणिकत्वद्योतनाय प्रश्नं स्तौति—साध्विति। तत्र हरिचरिते भागवतानां माहात्म्यं भगवद्भक्तिवर्द्धनमित्यनेन तन्माहात्म्यं भगव-न्माहात्म्याविनाभूतमित्यवगन्तव्यम् ॥ ४ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

॥ श्रीश्रीकृष्णोजयति ॥

अथ सप्तमस्कन्धस्यक्रमसन्दर्भः ।
सप्तमक्रमसन्दर्भे सन्दर्भाणां समाहृतिः ।
क्रियते यन्निदेशेन स मे ऽनन्यगतेर्गतिः ॥

परमात्मत्वेन समः सुहृद्धितकारी प्रियः प्रीतिविषयो भग-वान् एवं सति साम्येनैवोपकर्तव्यत्वेन प्रीतिविषयत्वेन च सर्वे-ष्वेवप्राप्तेषु कथं विषमइव दैत्यानवधीत् विषमत्वमुपलक्षणम् । असुहृदिवाप्रिय इव चेति ॥ १ ॥ २ ॥ ३ ॥

साधु पृष्टमिति सार्द्धमेवान्वितम् । हे महाराज ! इदं यत् पृष्टं तत् साधु सुविचारितमेव. किन्तु हरेश्चरितमद्भुतमपूर्वम् अवै-षम्येपि विषमतया प्रतीयमानत्वेन विचारातीतत्वात्. यत् यत्र हरेश्चरितं भगवद्भक्तिवर्द्धनं भागवतमाहात्म्यं भागवतानां श्रीप्र-ह्लादोपलक्षितभक्तवृन्दानां माहात्म्यं वर्ण्यते । अनेन भागवतार्थ-मेव सर्वं करोति भगवान् नत्वन्यार्थमित्यस्यैवार्थस्य पर्यवसा-नं भविष्यतीति व्यञ्जितं । टीकाच स्वभक्तपक्षपातेनेत्यादिना । अतः गीयतइति। परमं पुण्यं यथास्यात्तथा या गीयते तां कथामिति यत्तदोरध्याहारेणान्वयः । अत्र च तैर्गीयमानत्वेन भक्तकसुखप्रयो-जनत्वमेव व्यञ्जितम् ॥ ४ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

॥ श्रीकृष्णाय नमः ॥

प्रणम्य श्रीगुरुं भूयः श्रीकृष्णं करुणार्णवम् ।
लोकनाथं जगच्चक्षुः श्रीशुकं तमुपाश्रये ॥
गोपरामाजनप्राणप्रेयसेतिप्रभूष्णवे ।
तदीयप्रियदास्याय मां मदीयमहं ददे ॥
ऊतिः स्याद्वासना सात्र सप्तमे कथ्यते द्विधा ।
अशुभाच शुभाचापि कोपतोऽनुग्रहात् सताम् ॥
सन्तश्च त्रिविधाः शुद्धभक्ता ज्ञानादिमिश्रिताम् ।
भक्तिदधानास्तन्मिश्रज्ञानवन्तश्च कीर्त्तिताः ॥
हिरण्यकशिपोः स्वाभाविकीया वासनाऽशुभा ।
तत्र हेतुः सनन्दादिकोपः प्राचीनएव सः ॥
तस्यापि पुत्रो यस्तस्य प्रह्लादस्य शुभोत्तमा ।
शुद्धभक्तो वासना श्रीनारदाकृपिकृपाभवान् ॥
तत् संरक्ष्य सतामाग. कुर्वाणात् नरपसादजा ।
दीनता मानदत्वादि शिवाक्लृप्तमहाक्रान्तः ॥
भक्तिवल्ली नृभिः पाल्या श्रवणाद्याऽनुसेचनैः ।
एवं कथादशाध्यायां भक्तो. कैवल्यमीक्षयेत् ॥
पञ्चाध्यायां कथाभक्ते प्राधान्यं गुणगुननाम् ।
तादृग्भक्तगुरोर्लक्ष्यं दर्शयन्तादृगास्पदं ॥
स्युस्त्रिषु क्रमतः प्रेमशान्तभक्तत्वमुक्तता ।
एवं पञ्चदशाध्यायस्सप्तमः साधु सेव्यते ॥
तत्रतु प्रथमे विष्णोर्वैषम्यं वारयन्मुनिः ।
तस्य पार्षदयोराह सद्क्षेपात्त्रिजन्मः कथाम् ॥

पूर्वस्कन्धान्ते "हतपुत्रा दितिः शक्रपार्ष्णिग्राहेण विष्णुना । मन्युना शोकदीप्तेन ज्वलन्ती पर्यचिन्तयत्" इतीन्द्रपक्षपातलक्षणं विष्णोर्वैषम्यमसहमान इव स्वयमवगतसिद्धान्तोऽपि महामुनेस्तस्य मुखादपि समाधानामृतमास्वादयितुमाह--समइतित्रिभिः । समस्य कथं वैषम्यं ! प्रियस्य कथमसुरेषु प्रीत्यभावः ? सुहृदश्च कथ तेष्व-सौहार्दम् ? ॥ १ ॥

न चेन्द्रादिभिस्तस्य सुखं सिद्ध्यतीत्यतस्तत्पक्षपात इतिवाच्य-मित्याह--नेति । निःश्रेयसं परमानन्दएव आत्मा स्वरूपं यस्य तस्य नहिसुखस्वरूपस्य कश्चिदन्यः सुखंसाधयेदितिभावः । न चासुरादि-भिरुद्वेजकैस्तस्य दुःखं भवेद्यतस्तेषु विद्वेष इत्याह, नैवेति असुरेभ्य. उद्वेगो नास्त्यतो न विद्वेषस्तत्र हेतु. अगुणस्येति ॥ २ ॥

गुणान् अनुग्रहनिग्रहादीन्प्रति ॥ ३ ॥

यद्यतः प्रश्नात् हरेश्चरितं तदुत्तरत्वेनास्य वाच्यं गीयते ॥ ४ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

॥ श्रीकृष्णाय नमः ॥

श्रीकृष्णं नियमानन्दं प्रणम्येह सुखप्रदः ।
सिद्धान्तद्योतको दीपः सप्तमेऽथ विरच्यते ॥
विविधावासनास्त्वत्र कामद्वेषादिकारिताः ।
कृष्णे कृष्णप्रदाः प्रोक्ता अन्येष्वन्यप्रदास्तथा ॥
हरेर्ज्ञानं च भक्तिश्च तथा वर्णाश्रमक्रिया ।
अन्तःकरणशुद्ध्यर्था वर्ण्यते परमादरात् ॥

अतिक्रान्तस्कन्धस्याष्टादशाध्याये "हतपुत्रा दितिः शक्रपार्ष्णि-ग्राहेण विष्णुना । मन्युना शोकदीप्तेन ज्वलंती पर्यचिन्तयत्" इति विष्णोरिन्द्रपक्षपातित्वं श्रुत्वा पृच्छति-सम इति त्रिभिः ॥ १ ॥

गीयते परमं पुण्यमृषिभिर्नारदादिभिः ।
नत्वा कृष्णाय मुनये कथयिष्ये हरेः कथाम् ॥ ५ ॥
(१) ( जिह्वां लब्ध्वापि यो विष्णुं कीर्त्तनीयं न कीर्त्तयेत् ।
लब्ध्वापि मोक्षनिश्रेणीं स नारोहति दुर्मतिः ॥ ० ॥
तस्माद्गोविन्दमाहात्म्यमानन्दरससुन्दरम् ।
शृणुयात्कीर्त्तयेन्नित्यं स कृतार्थो न संशयः ॥ ० ॥
तस्मादिमां कथां पुण्यां गोविन्दचरणाश्रिताम् ।
महापुण्यप्रदां यस्माच्छृणुष्व नृपसत्तम ! ॥ ० ॥ )
निर्गुणोऽपि ह्यजोऽव्यक्तो भगवान् प्रकृतेः परः ।
स्वमायागुणमाविश्य बाध्यबाधकतां गतः ॥ ६ ॥
सत्त्वं रजस्तम इति प्रकृतेर्नात्मनो गुणाः ।
न तेषां युगपद्राजन् ! ह्रास (२) उल्लास एव वा ॥ ७ ॥
जयकाले तु सत्त्वस्य देवर्षीन् रजसोऽसुरान् ।
तमसो यक्षरक्षांसि तत्कालानुगुणोऽभजत् ।
ज्योतिरादिरिवाभाति सङ्घातान्न विविच्यते ॥ ८ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

अगुणस्य उद्वेगादिकारिणीभूततमोरजआदिगुणरहितस्य ॥ २ ॥

नारायणस्य गुणान् निग्रहानुग्रहरूपान् प्रति सुमहान् संशयो-जातस्तं भवान् छेत्तुमर्हति ॥ ३ ॥

एवमापृष्टो मुनिः राजप्रश्नाभिनन्दनपूर्वकम् नहि भगवति वैषम्यादिदोषगन्धगन्धलेशोऽपि प्रकृतिगुणविमोहितजीवकर्मानुरूपं निग्रहादिकं जीवोपकारार्थं स्वकृतधर्मसेतुरक्षार्थं सर्वकर्त्ता सर्वनियन्ता सर्वात्मा सर्वेश्वरो भगवान् करोतीत्युत्तरमाह–साधु-पृष्टमिति सार्द्धैरष्टभिः श्लोकैः । अद्भुतं सर्वपुरुषार्थप्रदत्वेनाश्चर्यभूतं हरेश्चरितं मां प्रति त्वया साधु पृष्टम्. यद्धरेश्चरितं भागवतमहात्म्यं भागवतानां माहात्म्यं यस्मिन् तथाभूतं भगवद्भक्तिं वर्द्धयतीति तथा ॥ ४ ॥

---

भाषाटीका ।

॥ श्रीरुक्मिणी रमणो जयति ॥
॥ श्रीकालीयफणमाणिक्यरञ्जितश्रीपदाम्बुजाय नमः ॥
नत्वा श्रीरुक्मिणीकान्तं ध्यात्वा रामानुजं हृदि ॥
वृन्दावनोद्भवान् गुल्मलतावृक्षान् प्रणम्य च ॥ १ ॥
सप्तमस्कन्धभावार्थबोधिनी भक्तसम्मता ॥
भाषा भागवतार्थेषा क्रियते साभिवर्द्धताम् ॥ २ ॥

राजोवाच ॥

हे ब्रह्मन् ! भगवान् स्वयं प्राणियों का सम और प्रिय है । फिर इन्द्र के लिये विषम के तरह दैत्यों को क्यों मारा ? ॥ १ ॥

साक्षात् परमानन्द स्वरूप इस भगवान का देवताओं से कुछ प्रयोजन नहीं तथा असुर लोगों से कुछ द्वेष नहीं तथा प्राकृत गुण शून्य के कुछ उद्वेग नहीं ॥ २ ॥

हे महा भाग ! इस प्रकार श्री नारायण के निग्रह अनुग्रहादि रूप गुणों का मुझ को बडा संशय उत्पन्न हुआ है इस संशय के छेदन करने को आपही योग्य है ॥ ३ ॥

श्रीशुक उवाच ॥

हे बड भागी हे राजन् ! आपने हरिका अद्भुत चरित्र भला पूंछा । क्योंकि जिसमें भगवद्भक्ति के बढाने वाला भागवत ( भक्त ) का माहात्म्य है ॥ ४ ॥ .

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

कृष्णाय व्यासाय कृष्णं मुनिं नत्वेत्यर्थः ॥ ५ ॥

( १ ) व्याख्यानमन्तरा एते श्लोकाः अधिकाः दृश्यन्ते—वीर० ( क ) पुस्तके । (२) उल्लास इति पाठान्तरम्. विज०

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

क्रम ।"योऽयं कालस्तस्य तेऽव्यक्तबन्धोश्चेष्टामाहुश्चेष्टते येन विश्वम्" इति । तथा चोभयथापि न पारवश्यमित्यायातम्. इत्थमेव श्री-कपिलदेवेनापि "यः कालः पञ्चविंशक." इति । "प्रभावं पौरुषं प्राहुः कालमेके यतो भयम्"इति च तत्र मायाऽव्यक्तपुरुष-गुणात्वलक्षणमतद्द्वयमुपन्यस्तवान् । अत्र चास्य चेष्टा प्रभा-वरूप भक्तिविनोदार्थैव मुख्यावृत्तिः गुणोद्बोधादिकार्यन्तु तत्र स्वत एव भवतीति तत्र प्रवृत्त्याभास एव ततश्च पूर्वांशः स्वय-मेवेति स्वरूपशक्तेरेव विलासः । परस्तु तदाभासरूप एवै-त्याभासशक्तेर्मायाया एवान्तर्गतः । योऽयं काल इत्यादौ निमे-षादिरित्युक्तिस्तु द्वयोरभेदविवक्षयैवेति ज्ञेयम । अत एवं व्याख्येयं यथा भृत्यस्यानुगतो भृत्यः अनुभृत्यः तथा तत्र तत्प्रभावल-क्षणस्य गुणस्याऽनुगत आभासरूपो गुणः अनुगुणः तथा च तेषां कालोऽपि अनुगुणो न तु साक्षाद्गुणोऽपि यस्येति ॥ ७ ॥ ८ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

कृष्णाय व्यासाय ॥ ५ ॥

स्वमायागुणं सत्त्वादिं प्रविश्य अधिष्ठाय बाध्यत्वं बाधकत्वञ्च गतः प्राप्तः गुणानां परस्परबाध्यत्वबाधकत्वलक्षणं वैषम्यगुणाधि-ष्ठातरि भगवत्यारोपितमित्यर्थः ॥ ६ ॥

स्वरूपतस्तु भगवान् सर्वत्र सम एवेत्याह-सत्त्वमिति । प्रकृतेरेव गुणाः न त्वात्मनो भगवतः प्रकृतेरसर्गाकत्वेऽपि स्वरूपभूतत्वा-भावादिति भावः तस्मात् सर्वत्र वर्त्तमानं भगवतो वैषम्यं गुण-वैषम्यमूलकमेव तच्च गुणवैषम्यं गुणानां ह्रासाभिवर्द्धनं तच्च ह्रासाधिक्यं न यौगपद्येन भवति किन्तु क्रमेणेत्याह--न तेषामिति । ह्रासो बाध्यत्वहेतुः उद्गमः आधिक्यं बाधकत्वहेतुः । तेन सत्त्वा-दीनां ह्रासाधिक्ये तदुद्भवानां देवासुरराक्षसानां ह्रासाधिक्ये भवतः इत्यनु-मेये ॥ ७ ॥

तत्र गुणानां तेषां आड्यादेव ह्रासाधिक्ययोरभ्युपत्तिरिति तत्क-र्तृत्वान्तत्र तदधिष्ठातृत्वेन भगवत्प्रवेशमाह-जयेति । सत्त्वस्य जयकाले आधिक्यसमये देवानृषींश्च अभजत् । तदा सत्त्वं यथा अधिकमभूत्तथा तत्राधिष्ठानमपि तस्याधिकमभूदिति तत्र तदंशं प्रविश्य तत्तद्बलमधिकयन् असुरराक्षसादीन् बाधत इत्यर्थः । एवं रजसो जयकाले असुरान् तमसो जयकाले यक्षरक्षांसि तस्य कालस्य अनुगुणः अनुरूपः सन्निति गुणाधिक्यस्यापि कारणं काल एव न तु स इत्यर्थः ॥ ८ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

नारदादिभिर्गीयते यतः परमम् पुण्यम् यतोहरेश्चरितम प्रति पृष्टः कृतोऽनस्तत्प्रत्युत्तरदानार्थं हरेः कथां कथयिष्ये कृष्णाय मुनये कृष्णद्वैपायनं तत्वावगन्तारं तथा ॥ ५ ॥

निर्गुणः प्राकृतगुणानिबन्धनकर्मतज्जन्यदेहादिरहितः अत एवाऽजः प्राकृतगुणहेतुकजन्मरहितः अत एव अव्यक्तः व्यक्तश्चि-दचिदात्मकं विश्वं तद्भिन्नः सर्वदोषास्पृष्ट इत्यर्थः भगवान् स्वाभाविकैश्वर्यादिषड्गुणयुक्तः प्रकृतेरिति पदं सामान्यतया परा-परशब्दवाच्यप्रकृतिद्वयपरम् ।

> "भूमिरापोऽनलोवायुः खं मनोबुद्धिरेव च ।
> अपरेयमितस्त्वन्यां प्रकृतिं विद्धि मे पराम्" ॥

इति प्रकृतिद्वयात्परस्तदाश्रय इत्यर्थः अत एव स्वमायागुणं स्वमायागुणपरिणामं जीवविशिष्टं देहेन्द्रियसंघातमाविश्य अन्तर्या-मितया प्रविश्य बाध्यबाधकतां जीवानां देवासुरादीनां परस्परं या कर्मयोगाद्बाध्यबाधकता तां हेतुतया गतोभवति तत्तत्कर्मानु-सारेण तां तां बाधकतां च देहिभ्यो ददाति स्वयं तु समएवे-त्यर्थः ॥ ६ ॥

स्वमायागुणमाविश्येत्युक्त्या शक्तिगुणाः कार्यकारणरूपाः शक्तिमन्तं सर्वात्मानं न विमोहयन्ति तदात्मकत्वात् जीवात्मानं तु ह्रासवृद्ध्यादिरूपैर्विमोहयित्वा शुभाशुभानि कर्माणि तेन कारयन्ति अतदात्मकत्वादित्याह सत्त्वमित्यादिना सत्त्वंरजस्तमइति गुणाः प्रकृतेः भगवच्छक्तेः, अतोभगवति न प्रभावं कुर्वन्तीतिभावः आत्मनोजीवस्य तु न तदात्मका न भवन्ति तस्य सर्वात्म-त्वाभावात अतस्ते न साधु असाधु च कर्म कारयन्तीतिभावः गुणास्ततज्जीवकर्मपरिपाककालानुसारेण विषमाभवन्ति न तु युगपदित्याह न तेषामिति ॥ ७ ॥

सत्त्वस्य जयकाले देवादिकर्तृकसात्त्विककर्मपरिपाककाले भग-वान् तत्कालानुगुणः सन् देवादीन् अभजत तद्वृद्धिहेतुर्भवति रजसोजयकालेऽसुरान् तमसो जयकाले यक्षरक्षआदीन् अभजदि-त्यन्वयः ॥ ८ ॥

---

भाषाटीका ।

जो परम पुण्य माहात्म्य नारदादि ऋषियों से गाया जाता है । अब मै श्रीकृष्ण मुनि ( वेद व्यासजी ) को नमस्कार करके हरि कथा को कहता हूं ॥ ५ ॥

जो पुरुष जिह्वा को पाकर कीर्तनीय विष्णु का कीर्त्तन नही करता है वह दुर्मति मोक्ष की निसेनी को प्राप्त होकर भी आरोहण नही करता है ॥ ० ॥

तस्मात् आनन्द रस सुन्दर श्रीगोविंद के माहात्म्य को नित्य जो श्रवण करते है कीर्त्तन करते है वे पुरुष कृतार्थ है इस मे संशय नहीं ॥ ० ॥

तिसी से गोविंद चरणाश्रित महापुण्य प्रद इस कथा को हे नृपसत्तम ! आप श्रवण करो ॥ ० ॥

प्रकृति से पर अज अव्यक्त भगवान् निर्गुण होकर भी अपने माया के गुणों मे। प्रविष्ट होकर, बाध्य बाधक भाव को प्राप्त हुए हैं ॥ ६ ॥

सत्त्व रज और तम ये तीनो प्रकृति के गुण है आत्मा के नहीं। हे राजन् ! उन गुणों का ह्रास वा उद्भास एक ही बार नहीं होता है ॥ ७ ॥

विदन्त्यात्मानमात्मस्थं मथित्वा कवयोन्ततः ॥ ९ ॥

यदा सिसृक्षुः पुर आत्मनः परो रजः सृजत्येष पृथक् स्वमायया ।
सत्त्वं विचित्रासु रिरंसुरीश्वरः शयिष्यमाणस्तम ईरयत्यसौ ॥ १० ॥

कालं चरन्तं सृजतीश आश्रयं प्रधानपुम्भ्यां नरदेव ! सत्यकृत् ।
(१) (स्वतन्त्रतन्त्रोभयसिद्धिमाप्नुयाल्लिङ्गात्मनोलिङ्गगुणाश्च सन्ति ॥ ० ॥)

य एष राजन्नपि काल ईशिता सत्त्वं सुरानीकमिवैधयत्यतः ।
तत्प्रत्यनीकानसुरान्सुरप्रियो रजस्तमस्कान्प्रमिणोत्युरुश्रवाः ॥ ११ ॥

(स वा पुनः स्वसृष्टस्य स्थितिरक्षानुवृत्तये ।
सत्त्वं सुरगणान्विष्णुरुपबृंहयते मुहुः ॥ ० ॥)

अत्रैवोदाहृतः पूर्वमितिहासः सुरर्षिणा ।
प्रीत्या महाक्रतौ राजन् ! पृच्छतेऽजातशत्रवे ॥ १२ ॥

भाषाटीका

सत्त्व गुण के वृद्धिकाल में ईश्वर देव और ऋषियों के शरीर में प्रविष्ट होकर, और रजो गुण के वृद्धिकाल में असुरों के देह में प्रविष्ट होकर, तथा तमो गुण के वृद्धि काल में यक्ष राक्षसों के देह में प्रविष्ट होकर, तिस २ काल के अनुगुण उनकी वृद्धि करते हैं ॥ ८ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

सर्वस्यापि निमित्तभेदेन वैषम्ये दृष्टान्तः ज्योतिरादिरिव ज्योतिरग्निर्यथाकाष्ठादिषु जलं यथा पात्रेषु आकाशो यथा घटादिषु तथा भगवान्नानारूप आभाति. ननु, तर्हि तद्वदेव विवेकेन किं न प्रतीयते तत्राह, सङ्घातात्सुरादिदेहात् विविच्यते न पृथक् प्रतीयते तर्हि तान्भजतीति कुतो ज्ञायते तत्राह, विदन्तीति, आत्मस्थं परमात्मानं कवयो निपुणाः मथित्वा कार्यदर्शनलिङ्गेन विचार्य जानन्ति अन्ततः स्वभावकालकर्मादिवादनिषेधेन विदन्तीति पाठे लाभोऽपि ... तत्रापि ज्योतिरादिरेवोदाहरणं यथा सूर्यकान्तादौ दाहदर्शनाज्ज्योतिर्ज्ञायते यथा च गन्धदर्शनाद्वायुरित्यादि ॥ ९ ॥

तदेवं मायागुणाधीनैतद्वैषम्यं न स्वाभाविकमित्युक्तम्. तर्हि गुणपारतन्त्र्यादनीश्वरत्वमाशङ्क्याह—यदा आत्मनो जीवस्य भोगाय पुरः शरीराणि परः परमेश्वरः सिसृक्षुर्भवति तदा सात्त्वेन स्थितं रजः पृथक् सृजति विचित्रासु तासु पूर्षु रिरंसुः क्रीडितुमिच्छुर्यदा तदा सत्त्वं पृथक् सृजति शयिष्यमाणः संहरिष्यन्यदा तदा तमः पृथगीरयति प्रेरयति आधिक्यं नयतीत्यर्थः ॥ १० ॥

यदा सिसृक्षुरित्यादिनिर्देशात्प्रतीतं कालपारतन्त्र्यं वारयन्प्रधानपुरुषपारतन्त्र्यमपि वारयति-कालमिति । हे नरदेव! प्रधानपुरुषयोः निमित्तभूताश्रयं सत्यकृदमोघकर्ता ईशस्तयोः सहकारित्वेनाऽऽश्रयभूतं चरन्तं वर्तमानं कालं स्वयमेव सृजति स्वचेष्टारूपत्वात्कालस्य न तत्पारतन्त्र्यमित्यर्थः । तथाऽपि प्रस्तुते किमायातं तत्राह य एष कालः स एनमेधयति वर्धयत्यतो हेतोरीशिताऽपीश्वरोऽपि सत्त्वप्रधानं सुरानीकं देवसमूहमेधयतीव तत्प्रत्यनीकानसुरान्प्रमिणोति हिनस्ति चेत्यन्वयः उरु प्रभूतं श्रवः कीर्तिर्यस्य सः कालशक्तिभिर्गुणगतवैषम्यमिह सन्निधिमात्रेण तदधिष्ठातरि स्फुरतीति प्रकरणार्थः ॥ ११ ॥

तदानीं तयोर्न सुरपक्षपातेन वधः किन्तु ब्रह्मशापेनासुरीं योनिं प्राप्तयोरनुग्रहार्थं एवेति वक्तुमितिहासमुपक्षिपति—अत्रैवेति । अत्र द्वेषादिरहितस्यापि दैत्यवधे नारदेनेतिहासः प्रस्तावितः ॥ १२ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

"स्वमायागुणमाविश्य बाध्यबाधकतां गतः" इत्यनेन तत्तद्बाध्यबाधकेषु देवासुरादिवर्गेषु ईश्वरस्यानुप्रवेश उक्तः कथमनुप्रविष्टो विज्ञायत इत्यपेक्षायां तत्तदनुप्रवेशे अनुप्रविष्टस्य विविच्य द्रष्टुमशक्यत्वे सम्यगुपायेन विवेचनीयत्वे च दृष्टान्तमाह—ज्योतिरिति । काष्ठादिषु ज्योतिःप्रभृतिवस्तुवत् अनुप्रविष्टोऽप्याभाति तद्गततद्दोषास्पृष्टः प्रकाशते. "अनश्नन्नन्यो अभिचाकशीति" इतिश्रुतेरिति भावः सङ्घातात्काष्ठादिसङ्घातादिव देहेन्द्रियभोक्तृवर्गरूप-

(१) इदमधिकत्वेन पठ्यते--विजय० ।

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

हरेः सन्ति तेषां स्वरूपाभिन्नत्वद्योतनाय चशब्दः ऊर्णनाभिस्तुरीवेमादिविना स्वरूपभूतलीलयैव यथा जालं करोति तथायमित्यर्थपरो वा प्रधानसृष्टिर्ब्रह्मणोऽस्तु अवान्तरसृष्टिरवान्तरकारणात्स्यात् कुलालादेर्दृष्टत्वादित्यतो वाह—स इति, तत्रतत्र कार्यकारणेषु प्रातिस्विकेषु स्थित्वोभयसिद्धिं जगत्कारणस्य जनकत्वलक्षणां कार्यस्य जन्यत्वफलं प्रापयति उभयोः शक्त्योरेतदधीनत्वादित्याह--लिंगात्मन इति, लिङ्गात्मनो मृदादेर्लिंगगुणाः कार्यजननशक्तयः सन्ति ते चानेन नियता इति शेषः, लिङ्गात्मनः कार्यस्य ये लिगगुणा पृथुबुध्नोदराकारादिलक्षणाः सन्ति ते च "तत्रतत्रान्वितो विष्णुस्तत्तच्छक्तिप्रबोधक." इत्यादेः अनेन बाध्यबाधकताङ्गल इत्येतत्स्पष्टीकृतं तथाहि तत्रतत्र देवासुरेषु उभयसिद्धिं जयपराजयलक्षणां कार्यसिद्धिं प्राप्नोति शिरस्त्राणवर्मादिलक्षणं वहतो भटस्य ये लिङ्गगुणाः शौर्यादिलक्षणाजयापजयौ वा ते च हर्यधीनाः "स वै बलं बलिनां चापरेषाम्" इत्यादेः । अत्र सर्वस्य हर्यधीनत्वदर्शनाय प्रधानपुंसोः कार्यकारणाभ्यां कालः सृजतीत्यङ्गीकारे प्रधानपुरुषावन्तरेण कालसृष्टचशक्तिर्हरेःप्रकटिता स्यादित्यन्यथा प्रतीतिनिरासायाचार्यैस्ताभ्यां सहेति व्याख्यानम् ॥ ० ॥

नन्वत्र साम्यगुणाधिकरणस्य हरेर्वैषम्याधिकरणत्वं कथमित्यस्य प्रश्नस्य परिहार. कथं स्फुटमायात इत्याशंक्य स्वतो देवप्रियत्वमसुराप्रियत्वं मनुष्याणामुभयत्वमेव स्वरूपं तद्योग्यतावतां तेषामन्यथा तद्विलक्षणे त्वदभिमतवैषम्यप्रसिद्धिस्वाभाव्यहानी स्यातामित्याशयवानाह--स एष इति । स एष हरिः काले कालविशेषेऽपि ईश्वरः कालस्यापि प्रवर्तनसमर्थः प्रधानपुरुषयोरीशितृत्वं किं वक्तव्यमित्यपिशब्दः स विष्णुः सुरानीकानि सृष्ट्वा तं सत्त्वं बिभर्ति तत्कथं देहादिकारणत्वात्सत्त्वगुणप्रधानान् देवान् संपोषयतीत्यर्थः रजस्तमस्कान् रजस्तमःस्वभावान् तत्प्रत्यनीकान् तेषां सुराणां शत्रुभूतान् असुरान् प्रमिणोति निहन्ति 'मिञ्हिंसायाम्' इति धातुः सुरप्रिय इत्यनेनासुराणामप्रियो मनुष्याणामुभयात्मकः स्वभावत इति ध्वनितं तदुक्तं—

> "स्वभावतः प्रियत्वात्तु सदा देवप्रियो हरिः ।
> अप्रियश्चासुराणां स स्वभावात्तूभयं नृणाम्" इति ।

सत्त्वमेधयति इत्यनेन या सुखयोग्यता रजस्तमस्कानित्यनेन या वधयोग्यता ये च देहेन्द्रियादेः कारणभूतास्त्रयो गुणाः यश्च गुणानामुत्साहकरः कालः यच्च तेषां त्रयाणां गुणानां पुण्यपापोभयलक्षणं कर्म यच्च मूलकारणभूतं प्रकृतिपुरुषस्वरूपं यच्च भक्त्यादिकमेतत्सर्वमवेक्ष्य देवानां भक्त्यादिगुणानितरेषां द्वेषादिदोषान्मनुष्याणामुभयात्मकमुत्पाद्य सुखासुखजयापजयजननमरणादिफलदातृत्वेन भगवत्युक्तं । तदुक्तं—

> "देशकालौ गुणांश्चैव भक्त्यादीनप्यवेक्ष्य तु ।
> योग्यताञ्च तथा कर्म सम इत्यभिधीयते ॥
> स्वतः प्रियोपि देवानामुत्पाद्यैव गुणानिमान् ।
> इतरेषां तथा दोषान्सुखदुःखे ददात्यजः ॥
> उभयं तु मनुष्याणामतः सम इतीरितः" ॥ इति

ननु सुरादिषु स्थितानां गुणदोषाणां तत्तत्कालीनत्वेनोत्तरकाले नाशसंभवेनानित्यत्वे नियमो न स्यादित्याशंक्य शास्त्रविहितत्वान्नियमोऽस्त्येवेत्याशयवानाह--उरुश्रवा इति, उरु बहु श्रूयत इत्युरुश्रवाः शास्त्रं नियमप्रतिपादकं यस्यास तथा तदप्युक्तम्—

> "अनादिनियताश्चैव गुणदोषाः सुरादिषु ।
> यथाक्रमं पुनश्चैव नियमाद्वर्धितास्तथा ॥

"विष्णुनैव ततो नित्यं विषमश्च जनार्दनः" इति नियमाद्वर्धितास्त-थेत्येतत्कुत्रप्रमाणीक्रियते इत्यस्य उरुश्रवा इत्यत्रेति वक्तव्यम्. उरु वर्द्धनलक्षणा श्रवो यस्य स तथेत्यर्थः । ननु, वैषम्यं तदवस्थमेवाभूदिति चेन्न योग्यतानिमित्तत्वात्तदुक्तम् "नविष्णोर्विषमत्वं तु योग्यतापेक्षया क्वचित्" इति हरेर्योग्यतानियत्यायत्. आगच्छदैपरयलक्षणमुरुश्रवस्तदा तदस्तुर्विहितत्वादतउक्तं उरुश्रवा इति तदप्युक्तं "योग्यताया अनियत्या विषमत्वं भवेदिति" नन्वेवंतर्हि क्वापि वैषम्य नैवापद्यते इति चेदुच्यते शुभाशुभयोर्विपर्यये शुभवतामशुभकर्म अशुभवतामसुराणां शुभकर्मानुसृतफलदानेसति विषमत्वं विष्णोर्दोषाय स्यादिति यदत्र तत्त्वयोग्यताबलविहितशुभाशुभोभयकर्मानुसारेण तत्तत्फलस्य निकर्मेन्द्रियार्थं अशुभकर्मदैत्यबलक्षणस्य त्यागेन वैषम्यमित्येन उरुश्रवा—इति जयस्तम्भकल्पनाम हरेर्युक्तं "इन्द्रस्यार्थेऽस्य दैत्यानवधीद्विषमो यथा" इत्यादि प्रश्नपरिहार इति सिद्धं "विषमत्वन्तु दोषाय शुभाशुभविपर्यये । अतस्तादृशवैषम्यम् ब्रह्मसूत्रे निराकृतम् ॥ शुभाशुभनियंतृत्वं न दोषो गुण एव नः । अतस्तदिह कृष्णस्य ब्रह्मसूत्रकृतो विभो." इतिवचनात् ॥ ११ ॥

सुरप्रिय इत्येतद्विवृणोति-स वा इति । अयमर्थः स्वयं सात्त्विकगुणस्तत्पक्षपातात् सुहृन्मुखपक्षमुपबृंहयन् स्वरक्षणं वर्द्धयति किं कारणमत्राह--पुनरिति । स्वेन सृष्टस्य जगतः पुनःपुनः स्थितिरक्षणपुरःसरं स्थितिपालनयोः प्रवर्तनार्थं वा इत्यनेन सृष्ट्यादिरूपकर्मापि तद्वेवेति दर्शयति—यद्वा सिसृक्षुरित्यनेन, स. प्रस्तुतस्स स इति तच्छब्देन परामृशति तत्रापीश्वरशब्देन रुद्र उपक्रान्त इति भ्रान्तिनिरासाय विष्णुरिति यद्वा यत्र क्वापि रुद्रादुत्सर्जनादिकं प्रतीयते तत्रापि तत्स्थहरियोंति प्रकटनाय विष्णुरिति० ॥

सुरप्रिय इत्येतदितिहासेन दर्शयति—अत्रेति । सुरप्रिय एव नासुरप्रियो हरिरिति अन्ययोगव्यवच्छेदार्थं एव शब्द. ॥ १२--१४ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

ननु, तेषुतेषु तेनाविश्यमानं तेजः कथं न लक्ष्यते? तत्राह--ज्योतिरिति । यद्यपि तेषुतेषु निजतेजोंशेनाविष्टोऽसौ सद्धानात् संमिश्रत्वात् न विविच्यते लोकैर्विवेक्तुं न शक्यते तथापि कतयो विवेकनिपुणाश्चन्ततो मथित्वा तस्यापि साहाय्यं तेनापि शुद्धमित्यादिकास्वभावर्योनिषेधेन विविच्य तदंशमात्मकथं तत्सदात्मनि प्रविष्टं आत्मानमीश्वरं विदन्ति तत्र हेतुगर्भो दृष्टान्तः, यस्माच्चातेजः ज्योतिरादिपदार्थं इवाभाति दृष्टिष्विति शेषः । अयमर्थः यथातेदं मणेस्तेजःपूर्वमदर्शनात् । किन्तु तदातपसंयोगेन सौरं तेज एवात्र प्रविष्टमिति सूर्यकान्तादौ तूलादिदाहेन तदनुभावेषु तदाभाति

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

यथा च पूर्ववदेव वायावयं गन्धः पार्थिव एव प्रविष्ट इति तेष्वाभाति तथात्रापीति अथवा नन्वेवं तत्रतत्रावेशितैः स्वतेजोभिरेव क्रीडतीत्यागतं कथं तर्हि तैरपि क्रीडतीति दृश्यते तत्राह—ज्योतिरिति । यथा चक्षुरादिज्योतिर्भिः स्वांशे रूपमात्रे प्रकाश्यमाने गन्धादि गुणापश्रका मृदेवासौ प्रकाशत इति प्रतीयते यथा कर्णाख्येनभसा स्वांशे शब्दमात्रेऽपि गृह्यमाणे दुन्दुभिरेवासाविति प्रतीयते । तच्च तत्तद्गुणानां संमिश्रत्वादेव भवति न वस्तुतः । तथा कवय आत्मानम् ईश्वरं तत्तत्संधानस्थत्वेनान्यैरजानन्ति विविक्तमपि आत्मस्थं स्वांश ज्योतिर्भिरेव क्रीडन्तं जानन्तीत्यर्थः ॥ ९ ॥

तदेवं युद्धादिनिजलीलाभिर्भक्तविनोदनमेव प्रयोजनं विश्वपालनन्तु स्वत एव तत. सिद्ध्यतीत्युक्त्वा सृष्टिप्रलययोः प्रकृतीक्षणादावपि सर्वशङ्कानिरासार्थमिति दिशम् त्रिष्वप्यविशेषमाह—यदेति । यदा यत्र स्वचेष्टालक्षणे काले एष परः परमेश्वरः स्वमायया भक्तकृपया आत्मनः पुरः प्राचीनसृष्टिगतसाधकभक्तरूपाणि स्वस्वाधिष्ठानानि सिसृक्षुर्भवति । प्रकृत्या सह तेषु लीनेषु आविर्भावनार्थमीक्षां करोति । तदा पृथक् स्वरूपशक्तेरितरा असौ जीवमायाख्या शक्तिः पूर्ववत्तच्चेष्टात्मकप्रभावाभासोद्दीप्ता रजः सृजति स्वांशभूताद्गुणत्रयसाम्यादव्यक्ता[illegible] उद्बोधयतीति वा । यथा वा पृथङ्मायानुगत एव काल एव सृजति तथाऽसौ पदेन च काल एवोच्यते अथ विचित्रासु नानागुणवैचित्र्यवतीषु तल्लक्षणासु पूर्षु यदा रन्तुमिच्छुर्भवति तदा सत्त्वं सृजति । यदा पुनस्ताभिरेवाभिजित्वा शायिष्यमाणः शयितुमिच्छुर्भवतीत्यर्थः । तदासौ तमः सृजतीति । ततो भक्तनिमित्तमेव सर्वा एव सृष्ट्यादिक्रिया. प्रवर्त्तन्त इति भावः । यथाङ्गीकृतसकालशक्त्य तृतीये टीकाकृद्भिरपि किमर्थं ससर्ज । स्वमात्रात्मप्रसिद्धये । स्वं मिमीते प्रमिमीते य उपास्ते स स्वमाता । तस्यात्मनो जीवस्य प्रकृष्टायै सिद्धय इति । शयनमत्र पुरुषावतारस्य कदाचित् प्रलयोदधौ योगनिद्रा कदाचिद्भगवत्प्रवेशो वा यद्यपि सर्वेष्वपि जीवेषु अन्तर्यामितया परमेश्वरस्तिष्ठति तथापि तत्रासंसक्तत्वादस्थित एव भवति । स्वभक्तेषु तु समासक्तत्वाच्च तथेति । न च तत्सङ्गादौ तस्येच्छेति यथोक्तव्याख्यानमेव बलवत् । तथा च श्रीगीतासु "मत्स्थानि सर्वभूतानि न चाहं तेष्ववस्थितः । न च मत्स्थानि भूतानि पश्य मे योगमैश्वरम्" इति "ये भजन्ति तु मां भक्त्या मयि ते तेषु चाप्यहम्" इति च । उक्तञ्च हरिभक्तिसुधोदये । "भक्तानां हृदयं शान्तं संश्रयो मे प्रियं गृहम् । वसामि तत्र शोभैव वैकुण्ठाख्यादिवर्णना" इति ॥ १०

ततो य एष चेष्टारूपः कालः स सत्त्वम् । सत्त्वप्रधानं सुरानीकमेधयतीव तत एव तत्प्रत्यनीकान् रजस्तमःप्रधानानसुरान् प्रमिणोतीव हिनस्तीव । ये तु देवेषु भक्ता असुरेषु भक्तद्वेषिणश्च तान् स्वयं पालयति हिनस्ति चैवेति पूर्वमेवोक्तम् । तस्मात्तच्चेष्टालक्षणस्य कालस्यैवं वार्त्ता तस्मादीशितापि एधयतीव प्रमिणोतीव चेति । हे राजन्निति पूर्वाभिप्रायमेव । ननु यदि चेष्टितुः प्रयोजनं न भवति तर्हि कथं कदाप्यसुरानपि स्वपक्षान् विधाय देवैर्न युध्येतेति तत्राह-सुरप्रियः सुरेषु वर्त्तमानाः प्रिया भक्ता यस्य सः । सत्त्वप्रधानेषु सुरेषु प्रायशस्तेषां सर्वेषामनुगमनेनैव तस्यानुगमनम् । कदाचिद्बृहस्पत्यादिषु महत्स्वपराधे तेषामाभिल्येन सुरत्वाच्छादनात्तेषां तस्य तेष्वनुगमनं न स्यादिति जयकाल तु सत्त्वस्येत्याद्युक्तमिति भावः । ननु कथं तेऽपि तान्नानुगच्छन्ति तत्राह—रजस्तमस्कानिति । अत्यन्तभगवद्बहिर्मुखताकर्यास्तयोर्गुणयोररोचकत्वादेवेति भावः । तर्ह्यसौ सदैवासुराणां निग्रहमेव करोतीत्यथाप्यसामञ्जस्यमेवेत्याशङ्क्याह उरुश्रवाः वैरेण यं नृपतय इत्यादि । अहो बकीयमित्यादिभिः उरु सर्वतो विस्तृत महत्तमं वा श्रव. कीर्तिर्यस्य सः । तेषामप्यनुग्रह करोतीति भावः ॥ ११ ॥

तदेवं सिद्धान्तं प्रदर्श्य तत्र स्वभक्तानुग्रहमात्रप्रयोजनस्तत्तत्करोति परेश इति प्रतिज्ञातार्थोदाहरणाय प्रह्लादजयविजयादिकृपासूचकमितिहासविशेषमाह—अत्रैवेति । अत्र विद्वेषादिराहित्येन भक्तानन्दनार्थं स्वैरलीलामात्रत्वे असुराणामपि परमहितपर्यवसायकस्वभावत्वेच । एवकारेण सिद्धान्तान्तरं व्यावर्त्यते ॥ १२ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

सत्त्वादीनामाधिक्यन्यूनताभ्यामेव तदधिष्ठानस्याप्याधिक्य—न्यूनते इत्यत्र दृष्टान्तमाह—ज्योतिर्यथा—काष्ठेषु जलं—यथा—पात्रेषु आकाशं यथा घटेषु अधिकेष्वधिकरूप न्यूनेषु न्यूनरूपं तिष्ठदपि न विषममुच्यते । तथैव देवनिष्ठसत्त्वेऽधिके सति सोऽपि देवेष्वधिकरूपः तदैवासुरनिष्ठे रजसि न्यूनं तत्र न्यूनरूप इत्यसुराणां देववाध्यत्वे देवानामसुरबाधकत्वे सति सोऽपि देवपक्षपाती असुरबाधक इत्युच्यते । एवमसुरनिष्ठरजस्यधिके सोऽप्यसुरपक्षपाती देवबाधक इति लोकप्रतीत्या विषमोऽप्यविषम एवेत्यर्थः । जयकाले तु सत्त्वस्य देवर्षीनभजद्धित्याधिकभजनमेव तत्र विवक्षितं नैव देवपक्षपातित्वमयुक्तम् । तत्त्वजयकाले केवलभजनमेवेति ज्ञेयम् । ननु काष्ठादिषु ज्योतिरादिर्यथाऽस्मिन् काष्ठेऽयं नाग्निरित्येवं विवेकेन प्रतीयते तथा देवादिदेहेऽपि भगवान् किं न प्रतीयते तत्राह सङ्गात् देवादिदेहात् न विविच्यते सत्वस्थ इव न पृथक् प्रत्यक्षीभवतीत्यर्थः । तर्हि स तान् भजतीति कुतो ज्ञायते तत्राह—विदन्तीति । आत्मस्थं देहस्थं परमात्मानं कवयो निपुणा मथित्वा कार्यदर्शनलिङ्गानुमानाज्जानन्ति । अन्ततः स्वभावकर्मादिवादनिषेधेन विन्दन्तीति पाठेऽपि लभन्ते जानन्तीत्येवार्थः । नन्विन्द्रादिपक्षपाती भगवान् कदाचित् सर्वैः प्रत्यक्षीभूत एवासुरान् हन्ति । तथैव रजस्तमसोरपि वृद्धौ सत्यां कदाचिदसुरादीनामपि पक्षपाती भवन् देवादीन् हिनस्तु तदैवोक्तयुक्त्या तस्य साम्यं सिद्ध्येदित्यत आह—ज्योतिरादिरिवेति तमेव श्लोकं तन्त्रेणार्थान्तराभिधायकं ज्योतिरादिरिव ज्योतिरादिगतं रूपरसगन्धस्पर्शं यथा सङ्घाते तद्गति वस्तुनि आभाति स्पष्टतया भासते किञ्च यथा किञ्चित् सङ्घातात्तस्मान्न विविच्यते न पृथक् स्पष्टमाभाति

दृष्ट्वा महाद्भुतं राजा राजसूये महाक्रतौ ।
वासुदेवे भगवति सायुज्यं चेदिभूभुजः ॥ १३ ॥
तत्रासीनं सुरऋषिं राजा पाण्डुसुतः क्रतौ ।
पप्रच्छ विस्मितमना मुनीनां शृण्वतामिदम् ॥ १४ ॥

युधिष्ठिर उवाच ।

अहो अत्यद्भुतं ह्येतद्दुर्लभैकान्तिनामपि ।
वासुदेवे परे तत्त्वे प्राप्तिश्चैद्यस्य विद्विषः ॥ १५ ॥
एतद्वेदितुमिच्छामः सर्व एव वयं मुने ! ।
भगवन्निन्दया वेनो द्विजैस्तमसि पातितः ॥ १६ ॥
दमघोषसुतः पाप आरभ्य कालभाषणात् ।
सम्प्रत्यमर्षी गोविन्दे दन्तवक्रश्च दुर्मतिः ॥ १७ ॥
शपतोरसकृद्विष्णुं यद्ब्रह्म परमव्ययम् ।
श्वित्रो न जातो जिह्वायां नान्धं विविशतुस्तमः ॥ १८ ॥
कथं तस्मिन् भगवति (१) दुरवग्राह्यधामनि ।
पश्यतां सर्वलोकानां लयमीयतुरञ्जसा ॥ १९ ॥
एतद्भ्राम्यति मे बुद्धिर्दीपार्चिरिव वायुना ।
ब्रूह्येतदद्भुततमं (२) भगवांस्तत्र कारणम् ॥ २० ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

ध्वनिश्रुतेः । उक्तार्थमुपसंहरति, हेराजन् ! एष भगवान् यत ईशिता तत्तत्कर्मफलदानादिना सर्वभोक्तृभोग्यवस्तुनियन्ता अतः काले अनुवर्तमानस्य सुरतुङ्गश्च काले सत्त्वं सत्त्वप्रधानं सुरानीकम् । एधयत्येव इवशब्द एवकारार्थे तत्प्रत्यनीकान् सुरानीकविरोधिनोऽसुरान् प्रहिणोति हिनस्ति ॥ ११ ॥

एवं सामान्यतः तत्तज्जीवकर्मानुसारेणानुग्रहादिकं भगवान् करोति न तु वैषम्यादिदोषवान् भवतीत्युक्तम् । अथेन्द्रार्थं दैत्ययोर्वधं तु तयोरनुग्रहायैव कृतवानित्याह—अत्रैवेति । अत्र इन्द्रार्थदैत्यवधे इतिहासः सुरर्षिणा नारदेन अजातशत्रवे युधिष्ठिराय उदाहृतस्तं शृणु इति शेषः ॥ १२ ॥

---

भाषा टीका ।

जैसे तेज ( अग्नि ) आदि पदार्थ काष्ठादि में नाना प्रकार प्रतीत होता है वैसेही परमात्मा भी नाना देहों में प्रकाशित होता है । और देह से भिन्न नहीं प्रतीत होता। निपुणजन अन्त मे आत्मा मे अन्तर्यामि रूप से स्थित परमात्मा को जानते है ॥ ९ ॥

जिस समय परमात्मा जीवों के सुखादि भोग के लिये सृष्टि की इच्छा करता है तब समता से स्थित रजोगुण को पृथक् प्रकट करता है । ऐसे ही उन विचित्र शरीरों मे रमण की इच्छा वाला सत्त्व गुण को तथा शयन की इच्छा वाला तमो गुण को प्रकट करता है ॥ १० ॥

हे राजन् ! यह कालस्वरूप ईश्वर सत्त्व की वृद्धि करते हैं तब सत्त्व प्रधान देव समूह को भी बढाते हैं और सुरप्रिय श्री हरि, उन देवताओं के वैरी रजोगुण तमोगुण वाले जो असुर हैं उनका नाश करते हैं ॥ ११ ॥

हे राजन् ! इस विषय में देवर्षि [ श्रीनारदजी ] ने राजसूय यज्ञ में पूर्वकाल में राजा युधिष्ठिर के पूछने से यह इतिहास कहा था ॥ १२ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

चेदिभूभुजः शिशुपालस्य ॥ १३ ॥ १४ ॥

( १ ) दुरवग्राह्य धामनि-इति पाठान्तरम्. विज० वीर० शुक० । ( २ ) भगवन्नत्र कारणम्. इति पाठान्तरम्. वीर० ।

श्रीधरस्वामिकृतभावार्थदीपिका ।

एकान्तभक्तानामपि दुर्लभा प्राप्तिर्विद्विषो जातेत्येतदत्यद्भुतं हि ॥ १५ ॥

तस्य तु वेनवन्नरकपात एवोचित इत्याह—भगवन्निन्दयेति । तमसि नरके ॥ १६ ॥

दमघोषस्य सुतः शिशुपालः कलभाषणाद् बाल्ये कोमल-भाषणमारभ्य सम्प्रत्यद्यतनाऽप्यमर्षी क्रोधी मत्सरी वा ॥ १७ ॥

श्वित्रः श्वेतकुष्ठम् ॥ १८ ॥

दुरवग्राहं दुष्प्रापं धाम स्वरूपं यस्य तस्मिन् लयं सायुज्यमीयतुर्जग्मतुः अभूतस्यापि दन्तवक्त्रलयस्य तज्जातकप्रा-माण्येन सिद्धवन्निर्देशः ॥ १९ ॥

एतदद्भुततममत एतत्प्रति मे धीर्भ्राम्यति भगवान् सर्वज्ञ-स्त्वं ब्रूहि ॥ २० ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

प्रश्नं तन्निमित्तञ्च विवृणोति—दृष्ट्वेति । राजसूयाख्ये महाक्रतौ चेदिभुजः शिशुपालस्य भगवता छिन्नशिरसः वासुदेवे भगवति श्रीकृष्णे सायुज्यं संश्लेषं महाद्भुतं दृष्ट्वा विस्मितचित्तः पाण्डु-सुतो राजा युधिष्ठिरः तत्र क्रतौ यज्ञसभायामासीनम् उपविष्टं देवर्षिं नारदं मुनीनां शृण्वतां सतामिदं वक्ष्यमाणं पप्रच्छ पृष्टवान् ॥ १३ ॥ १४ ॥

तदेवाह—अहो इति षड्भिः, अहो एतदद्भुतं तदद्भुतत्वे हेतुः, एकान्तिनामनन्यप्रयोजनेन भगवन्तं भजतामपि दुर्लभम्, किंतत् ? परे तत्त्वे प्रकृतिपुरुषविलक्षणेश्वरतत्त्वरूपे श्रीकृष्णे विद्विषः चैद्यस्य प्राप्तिर्यस्येनत् ॥ १५ ॥

मुने नारद ! एतत्सर्वं वयं वेदितुमिच्छामः केनापि भावेन भगवन्तं स्मरतां तत्प्राप्तिर्भवत्येव किमत्र चित्रं, तत्राह-भगवन्निन्दयेति । वेनः पृथोः पिता भगवन्निन्दयैव निन्दामात्रेण हेतुना तमसि नरके द्विजैः ऋषिभिः पातितः ॥ १६ ॥

दमघोषसुतश्चैद्यस्तु कलभाषणात् बाल्यमधुरभाषणादारभ्य बाल्यादारभ्येत्यर्थः सम्प्रति एतत्कालपर्यन्तं गोविन्दे श्रीकृष्णे अमर्षी क्रोधी अतोऽयं नितरां पापात्मा तथा दन्तवक्त्रोऽपि दुरात्मा ॥ १७ ॥

अनयोः परब्रह्मभूतं निर्विकारं श्रीकृष्णमसकृच्छपतोः शिशु-पालदन्तवक्त्रयोः जिह्वायां श्वित्रः श्वेतकुष्ठरोगो वापि न जातः नाप्येतावन्धं तमो नरकमपि विविशतुः किन्तु भगवन्तमेव विविशतुः ॥ १८ ॥

अतः सर्वलोकानां पश्यतां सतां दुरवगाह्यधामनि दुरवग-मज्योतिर्मयस्वरूपे भगवत्यञ्जसा अनायासेन तत्प्राप्तिसाधनानु-ष्ठानमन्तरेणेत्यर्थः कथं लयमीयतुः ? भगवत्सायुज्यं कथं प्रापतु-रित्यर्थः ॥ १९ ॥

इतीत्थं वायुना दीपशिखेव मम बुद्धिर्भ्राम्यति. हे भगवन् ! एतन्महदद्भुतमतोऽत्र कारणं ब्रूहीति ॥ २० ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

एक एवान्तो निर्णयः येषामस्तीति भक्तिरेव पुरुषार्थसाधनं नान्यत्कर्मादिकमिति निर्णयवतां विष्णुरेव मुमुक्षुभिर्निषेव्य इति निश्चयवतां वा ॥ १५ ॥

श्रीहरिनिन्दनं सतां कर्णशूलायमानमप्येतच्छ्रोतुं तच्चित्रमि-त्याशयवानाह-भगवन्निन्दयेति ॥ १६ ॥ १७ ॥

श्वित्रः श्वेतकुष्ठम् ॥ १८ ॥

दुरवग्राह्यं दुर्ज्ञेयं धाम स्वरूपं यस्य स तथा तस्मिन् लयं सायुज्यलक्षणम्; ननु, "अत्युत्कटैः पुण्यपापैरिहैव फलमश्नुते" इति वचनात् श्वित्रो न जात इत्यादिवाक्यं कथं संगच्छते ? भगवद्द्वेषि-णोऽपि बहुविधाः, तत्र केचिन्मरणानन्तरं पापफलं भुञ्जते, के-चिदत्रैव. तत्कुतः ? इतिचेन्न ॥

"नियमाद्भुज्यते पुम्भिर्धर्माधर्मफलं मृतौ ।

केश्चिदत्रापि भुज्येत तस्मान्नाधर्ममाचरेत्" ॥

इतिवचनात् अनेन धर्मिणोऽपि व्याख्याताः धर्मी स्वर्गं विधर्मी निरय-मिति च अत्र कश्चिद्विशेषोऽस्ति जयविजययोः सात्त्विकत्वेन भक्तत्वे-नहेरेति भक्तत्वात्सनकादिशापादसुरजन्मन्यपि कश्चित्तत्त्वलोपात् द्वेषफलभोक्तृत्वयत्वाच्च द्वेषस्य पापिष्ठासुरत्वादनभोक्तृत्वारितत्वाच्च अनेन स्वापराधनाशलक्षणानुग्रहपात्रत्वेन प्रतिज्ञातकपथत्वेन च हरेः सुधप्रियत्वं च विज्ञातमभूदिति रहस्यम् ॥ १९ ॥ २० ॥ २१ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

दृष्ट्वेति युग्मकम् ॥ १३ ॥ १४ ॥

एकां नितरां परमज्ञानिनां "एकान्तमतिरुन्निद्रो जडो मूढ-इवेयते" इति पाद्य इत्यादिना तद्रूपाणि निन्दनञ्च तदौपाधिका-नुकरणमात्रमवलम्ब्येति ज्ञेयं । दन्तवक्त्रस्यापि भूतत्वेन निर्देशो मुनिगणवचनेन निश्चितत्वात् ॥ १५—२१ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

एकान्तिनां निष्परिग्रहाणामपि ॥ १५—१६ ॥

कलभाषणात् बाल्यकोमलभाषणमारभ्य यत् परं ब्रह्म तं विष्णुं कृष्णम् ॥ १७—१८ ॥

प्रत्युत लयं तात्कालिकलोकप्रतीत्या सायुज्यं किञ्चित् कालमेव सहयोगं सह युज्यत इति सयुक् तस्य भावः सायुज्यं ततः परं सारूप्यमीयतुः भाविनमपि दन्तवक्त्रलयं नारद

श्रीशुक उवाच ।

राज्ञस्तद्वच आकर्ण्य नारदो भगवान् ऋषिः ।
तुष्टः प्राह तमाभाष्य शृण्वत्यास्तत्सदः कथाः ॥ २१ ॥

नारद उवाच ।

निन्दनस्तवसत्कारन्यक्कारार्थं कलेवरम् ।
प्रधानपरयोराजन्नविवेकेन कल्पितम् ॥ २२ ॥
हिंसा तदभिमानेन दण्डपारुष्ययोर्यथा ।
वैषम्यमिति भूतानां ममाहमिति पार्थिव ! ॥ २३ ॥
यन्निबन्धोऽभिमानोऽयं तद्वधात् प्राणिनां वधः ।
तथा न यस्य कैवल्यादभिमानोऽखिलात्मनः ।
परस्य दमकर्तुर्हि हिंसा केनास्य कल्प्यते ॥ २४ ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

मुखादेव श्रुत्वा तस्य जातप्रायत्वमननात्प्रश्ननिर्देशः । पश्यतामित्यसम्भवे वस्तुनि प्रामाण्यसिद्ध्यर्थमित्यर्थः ॥ १९ ॥

एतत् फलं प्रति भ्राम्यति अत एतदद्भुततमं ब्रूहि यतो भगवान् सर्वज्ञः नन्वेतत्पदवाच्यमेव, किं तत्राह तत्र यत्र कारणम् ॥ २० ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

चेदीनां देशविशेषाणां भूभुजः शिशुपालस्य भूपतेः ॥ १३ ॥ १४ ॥

परे तत्त्वे वासुदेवे श्रीकृष्णे एकान्तिनामपि दुर्लभा प्राप्तिः विद्विषो जातेत्यद्भुततमत्वाश्चर्यम् ॥ १५ ॥ १६ ॥

कलं मधुरं भाषणं यस्मिन् तस्माद् बाल्यात् आरभ्य सम्प्रति अद्यापि गोविन्दे अमर्षी विद्वेषी ॥ १७ ॥

अव्ययं नित्यशरीरिणां परं ब्रह्म यत् ययोः शपतोः जिह्वायां श्वित्रः कुष्ठं न जातः अन्धन्तमो नरकं न विविशतुः ॥ १८ ॥

दुरवग्राह्यं दुर्ज्ञेयं धाम स्वरूपं यस्य तस्मिन् ॥ १९ ॥ २० ॥

भाषा टीका ।

महा यज्ञ राजसूय में युधिष्ठिर महाराज ने श्रीवासुदेव भगवान् के विषे परमाद्भुत शिशुपाल का सायुज्य देखकर वहां बैठे हुए नारदजीसे सब मुनि लोगों के सुनतेर यह प्रश्न किया ॥१३॥१४॥

युधिष्ठिरजी बोले, कि अहो यह अति अद्भुत है परमैकांति लोगों को भी दुर्लभ परतत्व श्रीवासुदेव की प्राप्ति द्वेषी शिशुपाल को कैसे हुई ॥ १५ ॥

हे मुने! यह बात हम सब लोग जानने की इच्छा करते हैं क्यों कि भगवान् की निन्दा करने से वेनराजा को ब्राह्मणों ने नरक में गिराया था ॥ १६ ॥

यह पापी दमघोष का पुत्र शिशुपाल तो बोलना सीखा तब से लेकर अबतक गोविन्द के विषय द्वेष करनेवाला और दुर्मति दन्तवक्र भी ऐसाही था ॥ १७ ॥

ये साक्षात् परब्रह्म अव्यय विष्णु को कुवाक्य कहने वाले इनदोनों के जिह्वा में कुष्ठ न हुआ और दोनों को नरक न हुआ॥१८॥

दुःख से ग्रहण हो तेज जिनका ऐसे भगवान् में सब लोको के देखते २ ये दोनों कैसे लीन होगये ॥ १९ ॥

वायु से दीपकी जोत के सदृश मेरी बुद्धि भ्रमको प्राप्त होती है यह अति आश्चर्य बात का उत्तर आप दीजिये। इस में भगवान् ही कारण हैं ॥ २० ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

आभाष्य सम्बोध्य सीदन्ति निषीदन्त्यस्यामिति सद् सभा तस्याः सदः सदसः शृण्वत्याः सत्याः कथाः प्राहेत्यन्वयः ॥ २१ ॥

अहोभगवन्निन्दकस्य नरकपातेन भाव्यमिति वदतस्तव कोऽभिप्रायः भगवत्पीडाकरत्वेन वा तदभावेऽपि सुरापानादिवन्निषिद्धनिन्दाचरणाद्वा तत्र तावद्देहाभिमानकृतनिन्दादिनिमित्तत्वात् पीडादीनां भगवतश्च तदभावाच्च पीडाद्यभावोऽस्तीत्याह--निन्दनेति

### श्रीधरस्वामिकृतभावार्थदीपिका ।

सार्द्धैस्त्रिभिः । निन्दनं दोषकीर्तनम् न्यक्कारस्तिरस्कारः निन्दास्तुत्यादिज्ञानार्थं प्रधानपुरुषयोरविवेकेन कलेवरं कल्पितं रचितम् ॥ २२ ॥

तदभिमानेन भूतानां यथा ममाहमिति वैषम्यं तत्कृतं हिंसादिकं च भवति तथा न यस्येत्युत्तरेणान्वयः दण्डस्ताडनं पारुष्य निन्दा तयोर्हेतुभूतयोर्हिंसा पीडा च भवति ॥ २३ ॥

यस्मिन्निबद्धोऽयमभिमानस्तस्य देहस्य वधाद्वधश्च यथा तथा यस्याभिमानोनास्ति अतोऽस्य परमेश्वरस्य हिंसा केन हेतुना कल्प्यते न केनापीति अभिमानाभावे हेतुः कैवल्यादद्वितीयत्वेनाभिमन्तव्याभावात् वैषम्याभावे हेतुः अखिलात्मनः सर्वात्मनइति तर्हि किमिति हन्ति दैत्यांस्तत्राह—परस्य दमकर्तुः हितार्थं दण्डं करोतीत्यर्थः ॥ २४ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

इत्थमापृष्टो नारदः प्रोहेत्याह मुनिः—राज्ञइति । राज्ञो युधिष्ठिरस्य तत्प्रश्नरूपं वचः श्रुत्वा भगवान्नारदस्तुष्टः समीचीनप्रश्नेन हृष्टः सदसः सभायाः शृण्वन्त्याः सत्यास्तं युधिष्ठिरमाभाष्य स्ववचःश्रवणाभिमुखं कृत्वा प्रश्नपरिहाररूपां कथां प्राह ॥ २१ ॥

तामेवाह—निन्दनमित्यादिना इत्यभिरध्यायैः ।अस्य प्रश्नस्य मुख्यमुत्तरं वक्तुं तावत्संसारिचेतनानामिवेश्वरस्य देहात्माभिमानप्रयुक्तस्तुतिनिन्दाद्यभिमानित्व नास्तीति चैद्यस्य मुक्ति ददाविति कश्चित्परिहारमाह—निन्दनेति. हे राजन् ! निन्दनं दोषकथनं स्तवो गुणकथनं सत्कारश्चन्दनलेपादि' न्यक्कारः पांसुक्षेपणादिरेषामर्थो विषयः कलेवरं प्रधानशब्दो देहावस्थप्रधानवचनः परशब्दो देहान्तरजीववचनः तयोरविवेकेन परस्परविलक्षणत्वविषयकज्ञानाभावेन देहात्माभिमानेनेति यावत् तेनाविवेकेन हेतुना कल्पितं कलेवरस्य निन्दनादिविषयत्वमविवेककृतं. न तु अतो जडत्वात्. न हि काष्ठं चन्दनलेपादिरूपसत्कारादिकं मन्यते इति तावन्निर्विवादमित्यर्थः ॥ २२ ॥

एवं स्थिते हे पार्थिव ! यथेह संसारे भूतानां देहात्माभिमानिनां देवमनुष्यादीनां ममाहमिति वैषम्यं ममेयं निन्दा निन्दितोऽहमित्यभिमानरूपवैषम्यं तदभिमानेन ममेयं निन्देत्यभिमानेन दण्डपारुष्ययोर्निमित्तयोर्हिंसा च स्यात् दण्डः ताडनं पारुष्यं निन्दनं परेषां दण्डपारुष्ययोः कृतयोः सतोस्तत्प्रयुक्तो ममेयं निन्दा निन्दितोऽहं ममायं दण्डो दण्डितोहमित्येवंरूपो नानाविधोभिमानस्तत्प्रयुक्तं परेषु निन्दादिकारिषु हिंसाचरणं च यथा लोकानां दृश्यते न तथा यस्येत्युत्तरेणान्वयः देहविषयमपि दण्डपारुष्यादिकं परकृतं देहात्माभिमानेनात्मगतं मत्वा तदभिमानेन परेषु हिंसास्यादित्यनेन यथा हिंसाकारिषु दण्डपारुष्यादिकं देहगतमेव नत्वात्मगतम्. देहात्मनोरविवेकेन त्वात्मगतं न मन्यते तथा हिंस्यमानेष्वपि हिंसा च देहगतैव नत्वात्मगता. देहात्माभिमानात्तु हिंसितोहमित्यभिमान इति सूचितम् ॥ २३ ॥

तदेव स्पष्टमाह—यन्निबन्ध इति । अयमभिमानो दण्डितानां च लोकानां यथा दण्डितोह निन्दितोहमित्यभिमानः यन्निबन्धो यद्धेतुको देहहेतुक इत्यर्थः देहात्माभिमानस्य देहहेतुकत्वाद्देहात्माभिमानहेतुको दण्डितोऽहमित्यभिमानो देहहेतुक एवेत्यभिप्रायेण यन्निबन्धोऽभिमानोऽयमित्युक्तम्. एवं तद्वधाद्धन्यमानेषु तस्य देहस्य वधादेव प्राणिनां देहात्माभिमानिनां वधः देहगत एव वधः नत्वात्मगतो देहात्माभिमानात्तु हतोऽहमित्यभिमान इत्यर्थः। एवं संसारिणां निन्दनादिकं सर्वं देहात्माभिमानकृतमित्युक्तम् अथोक्तार्थविपर्ययमीश्वरे दर्शयति—तथेति । यथा संसारिणां देहात्माभिमानस्तन्मूलको निन्दितोऽहमित्याद्यभिमानश्च यस्येश्वरस्य नास्ति तस्यास्य अभिमानप्रयुक्ता परेषु हिंसा केन हेतुनावकल्प्यते इत्यन्वयः, अभिमानाभावे हेतुः—अखिलात्मन इति, सकलजगदात्मत्वादभिमानो नास्तीत्यर्थः। नन्वात्मत्वेपि तस्य जीववदभिमानः स्यादेव तत्राह—कैवल्यादिति। निरस्तनिखिलदोषत्वादित्यर्थः "अनृतेन हि प्रत्यूढा" इति श्रुत्युक्तरीत्या जीवानामनादिपुण्यपापात्मककर्ममूलको हि देहात्माभिमानः तस्य तु परमपुरुषस्य सर्वान्तरात्मनो निरस्तनिखिलकर्मवश्यत्वादिदोषत्वादभिमानाभाव इति भावः । निन्दितोहमित्याद्यभिमान एव नास्ति किं पुनस्तत्प्रयुक्तं परेषु निन्दकेषु हिंसादिकरणं नास्तीत्याह—हिंसेति. अस्य निन्दनादिना अयुक्ताभिमानरहितस्य हिंसा निन्दकर्मिका केन हेतुना कल्प्यते हिंसाहेतोरभिमानस्याभावाद्धन्तृत्वस्याप्यभावात् [illegible] । ननु, तथापि [illegible] अभिमानस्तत्प्रयुक्ता हिंसा च तस्य नास्तीति, [illegible] समक्षमेव निन्दकं चैद्यं हतवानित्याशङ्क्य [illegible] नाह—परस्य दमकर्तुरिति । परस्य निन्दकादेर्दमकर्तुः [illegible] परस्य हितार्थमेव दण्डं कुर्वन इत्यर्थः शिक्षया परस्मै हिताचरणं च चैद्यस्य [illegible] परिहार्य [illegible] रूपत्वप्रापणेनेदानीं [illegible] इत्यादिभिरपरोक्षं दृश्यमिति भावः । एवं देहात्माभिमानाभावात्परमपुरुषस्य संसारिणामिव स्तुतिनिन्दाद्यभिमानित्व [illegible] निरभिमानत्वात् [illegible] मुक्तिं ददौ इति कश्चित्परिहारः ॥ २४ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

देहाद्यभिमानवतः स्तवनिन्दनादिना मनःखेदहर्षादिसम्भवेन क्रोधादिकं स्यात्तत्रैस्तदभावान्निन्दनादिनाक्षेपानुदयात् स्वतो नित्यतृप्तत्वेन परप्राप्यप्रयोजनाभावात् तत्तद्योग्यतानुसारेण तत्तत्फलदातृत्वं युक्तमित्यादिकं वक्तुमुपक्रमते—निन्दनेति । निन्दनं दोषसंकीर्तनं स्तवः स्तुतिर्गुणलक्षणासत्कारः कायिकपूजा न्यक्कारः कायिकावज्ञा तेषां निन्दनादीनामर्थं विषयभूतं कलेवरं प्रधानपरयोः प्रधानाद्देहेन्द्रियाद्यात्मकात्परस्य जीवस्याविवेकेनाभेदेन कल्पितं स्वतश्चिदानन्दस्य प्रकृतेरनात्मनो महदाद्यादिदं जडशरीरं क्लृप्तमित्यर्थः ॥ २२ ॥

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

ततः किंफलतीति तत्राह—हिंसेति । तदभिमानेन देहाभिमानेन भूतानामविवेकज्ञानिना ममाहमितीह देहे हिंसा ताडनादिलक्षणा दण्डपारुष्ययोर्निमित्तयोर्वैषम्यं विषमावस्था फलतीत्यर्थः ॥ २३ ॥

ततश्च किं तत्राह—यन्निबन्धइति । ममाहमित्यभिमानो यन्निबन्धः यस्मिन् देहे निबद्धः तद्वधात्तस्य देहस्य वधाद्धिंसादिलक्षणात् प्राणिनां चेतनानां वध इत्युपचारः इति यत्तस्मान्निन्दनादिकं देहस्यैव फलति, नात्मनः; तस्य निष्फलमित्याशयः यथा, जीवस्य ममाहमिति देहाभिमानादनर्थपरम्परा तथा हरेरपि देहस्वत्वाविशेषात्साम्यात्किंनेत्याह—तथेति, अखिलात्मनोऽखण्डज्ञानिनो यस्य न तथा जीववद्देहाभिमानो नास्ति. कुत. ? कैवल्यात् देहाद्यभावादेव. ननु, प्रकृत्यात्मकस्य देहस्याभावो हेतुः क्रियते सच्चिदानन्दात्मकदेहस्य वेत्येतयोरिदमेवोत्तरं प्रकृत्यात्मकदेहादेरभावात्प्रकृतिप्राकृतवैकृतामिश्रविरहितसच्चिदानन्दात्मकदेहसद्भावात् स देहः सुखमन्यश्चेत्यादेः ॥ अस्य प्रत्ययात्मनः इदमेषा हिंसा केन निमित्तेनास्तीति कल्प्यते निमित्ताभावान्नैमित्तिकाभाव इत्यर्थ. । अन्यस्मिन् हिंसादिकर्तरि सति हरेर्हिंसादिकमस्तीति कल्पयितु शक्यते स च नास्तीत्याशयेनोक्तम् अकर्तुरिति, तस्यान्यः कर्ता न विद्यत इत्यकर्ता तस्य हिशब्देन यद्यस्यायुधादिना प्रहर्ता दृश्यते तत्फलं छेदादिकन्नास्तीत्याह "अच्छेद्योयमदाह्योयम्" इत्यादेः । तत्सर्वं कथमित्यत उक्तं परस्येति, लोकविलक्षणस्य तर्ह्ययं शून्यकल्प इत्यस्यापीदमुत्तरं परस्य ब्रह्मण. "ब्रह्मविदाप्नोतिपरम्" इतिश्रुतेः । इह हिंसेति लिङ्गव्यत्ययो हिंसायाः कुत्सितत्वद्योतनाय "ङ्वत्ययोऽतिशयकुत्सनभेदेषु" इतिसूत्राज्ज्ञायते हरौ हिंसाशङ्का कुत्सितेत्यर्थः "नास्य जरयैतज्जीर्यते न वधेनास्य हन्यते एतत्सत्यं ब्रह्मपरम्न हन्यते हन्यमाने शरीरे" इत्यादेश्च ॥ २४ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

तत्रोत्तरं श्रीनारद उवाच-निन्दन इति । तत्र निमूढैर्जनैर्निन्दादिकं प्राकृतान् तमआदिगुणानुद्दिश्यैव प्रवर्त्यते । ततः प्रकृतिपर्य्यन्ताश्रयस्य तत्कृतनिन्दादेः अप्राकृतगुणविग्रहादौ तस्मिन् प्रवृत्तिर्नास्त्येव न च जीववत् प्रकृतिपर्य्यन्ते वस्तुजाते भगवदभिमानोऽस्ति । ततश्च तेन तस्य पीडा नास्त्येवेति भगवतस्तन्निन्दाद्यस्पर्शनया सिद्धान्तश्च पूर्ववत् ॥ २२ ॥

ततश्च हिंसेति सार्द्धयुग्मकम् । इह प्राकृते लोके यथा तत्कलेवराभिमानेन न तथेति कैवल्यात् "देहेन्द्रियासु हीनानां वैकुण्ठपुरवासिनाम्" इति कैवल्यादिप्राप्तशुद्धत्वात् तादृशनिन्दाद्यगम्यशुद्धसच्चिदानन्दविग्रहादित्यर्थः तस्य तदगम्यत्वञ्च । "नाहं प्रकाशः सर्वस्य योगमायासमावृतः" इति श्रीभगवद्गीतादिभ्यः तादृशवैलक्षण्ये हेतुः, अखिलानामात्मभूतस्य, तत्र हेतुः परस्य प्रकृतिवैभवासङ्गरहितस्य । हिंसायाम् आविषयत्वे हेत्वन्तरम् । दमकर्त्तुः परमाश्चर्य्यानन्तशक्तित्वात् सर्वेषामेव शिक्षाकर्त्तुरिति ॥ २३—२४ ॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी।

सीदन्ति निषीदन्त्युपविशन्त्यस्यामिति सत् सभा तस्याः शृण्वन्त्याः तस्यां कथाः शृण्वन्त्यामित्यर्थः । आभाष्य हे राजन् ! अवधेहीति सम्बोध्य ॥ २१ ॥

शिशुपालकृतनिन्दादिकं न भगवत्पीडाकरमिति वक्तुं प्रथमं निन्दास्तुत्यादिकं ज्ञानिनां न दुःखसुखदं किन्तु देहाभिमानिनामेवेत्याह—निन्दनस्तवौ वाचिकौ दोषगुणौ सत्कारन्यक्कारौ कायिकौ मानसौ च सम्माननावमानने तदर्थं तन्निरूप्यर्थं प्रकृतिपुरुषयोरविवेकेन आत्मानात्मविवेकाभावेन कल्पितं विरचितम् ॥ २२ ॥

तदभिमानेन देहाभिमानेन मामयं निन्दति स्तौतीत्यादिभिर्यथा दुःखसुखे भवतस्तथैव मामयं हिनस्तीति हिंसापि भवति कस्मिन् सति दण्डस्ताडनं पारुष्यं त्वामहमुत्पाटयिष्यामीति तर्ज्जनं तयोः सतोः एवञ्च भूतानामिह संसारे वैषम्यं स्निग्धं ममैते शत्रवो ममैते बन्धवश्च अहमेतान् हन्मि एतान् पालयामि चेति प्रकारकम् ॥ २३ ॥

यस्मिन्निबद्धोऽयमभिमानस्तस्य देहस्य वधाद्वधश्च यथा अज्ञानिनां तथा नास्य कृष्णस्याभिमानः प्राकृतो नास्ति अस्य परमेश्वरस्य हिंसा केन कल्पते न केनापीत्यर्थः । अभिमानाभावे हेतुः, कैवल्यात् केवलपरमात्मत्वात्. अयं भावः । यद्वा सर्वजीवानां अनात्मा देह आत्मा जीवश्चेत्युभयं वर्त्तते । तथा यदि कृष्णस्याप्यस्थास्यत् तदा कृष्णस्यापि जीवानामिव आधिकोऽभिमानोऽभविष्यदेव । कृष्णस्य तु देहस्तदभिन्नः परमात्मैव तस्मिन् स्वरूपभूते कृष्णोऽहमित्यभिमानोपि तन्मय एव अखिलात्मन इति तदंशस्यान्तर्य्यामिणोऽप्यस्वरूपभूते जीवे जीवदेहे वाभिमानो नास्तीति भावः । अत एव परस्य मायामायिकवस्तुजीवेभ्यो भिन्नस्यातस्तेष्वस्वरूपभूतेष्वभिमानाभावान् कस्तस्य द्वेष्यः को वा द्वेष्टा परमात्मभूते देहे यस्तस्याभिमानः परमात्मैवाहमित्यात्मकस्तेन स कं वा द्वेष्टुं परमात्मानं जानन् तं वा को द्वेष्टु । तर्हि किमिति स्वद्वेषिणः शिशुपालादीन् हिनस्ति तत्राह—दमकर्त्तुस्तेषां हितार्थमेव दण्डं कुर्वतः तस्य सर्वसुहृत्त्वादिति भावः ॥ २४ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

राज्ञः तद्वचः प्रश्नरूपं वचः आकर्ण्य सीदन्ति निषीदन्त्युपविशन्ति यस्यामिति सत्सभा तस्याः शृण्वन्त्याः हे युधिष्ठिर ! इति आभाष्य सम्बोध्य कथाः प्राह ॥ २१ ॥

निन्दनादिना देहात्मबुद्धेर्जीवस्य पीडा भवति न तु तत्त्वविदः भगवतस्तु सुतरां न भवति किन्तु निन्दनादिनापि भग-

तस्माद्वैरानुबन्धेन निर्वैरेण भयेन वा ।
स्नेहात्कामेन वा युञ्ज्यात् कथञ्चिन्नेक्षते पृथक् ॥ २५ ॥
यथा वैरानुबन्धेन मर्त्यस्तन्मयतामियात् ।
न तथा भक्तियोगेन इति मे निश्चिता मतिः ॥ २६ ॥
कीटः पेशस्कृता रुद्धः कुड्यायां तमनुस्मरन् ।
संरम्भभययोगेन विन्दते तत्सरूपताम् ॥ २७ ॥
एवं कृष्णे भगवति मायामनुजईश्वरे ।
वैरेण पूतपाप्मानस्तमीयुरनुचिन्तया ॥ २८ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः

वति मनोनिवेशनं मोक्षहेतुरित्याह—निन्दनमित्यादिना । न्यक्कारस्तिरस्कारः निन्दनाद्यर्थं कलेवरं प्रधानपरयोर्मायाजीवयोरविवेकेनाबोधेन कल्पितम् आत्मतयारोपितमित्यर्थः ॥ २२ ॥

तदभिमानेन कलेवरं आत्मत्वाभिमानेन यथा ममाहमिति वैषम्यं भवति तथा दण्डपारुष्ययोः दण्डे ताडने सति पारुष्ये निन्दायां च सत्यां हिंसा पीडा भवति ॥ २३ ॥

तथा यस्मिन् कलेवरेऽयमभिमानो निबद्धस्तस्य वधात् प्राणिनां वधो लोके प्रसिद्धः स अभिमानः यस्य कैवल्यात् देहेन्द्रियमनोबुद्धिप्राणादिविलक्षणकेवलक्षेत्रज्ञस्वरूपज्ञानात् नास्ति तस्य हिंसा केन कथ्यते अस्य प्रकृतस्य परस्य सर्वचेतनविलक्षणस्य अखिलात्मनः अत एव दमकर्तुः हितार्थं तदनुरूपं दमं दण्डं कुर्वाणस्य केन हिंसा कथ्यत इत्यन्वयः ॥ २४ ॥

---

भाषाटीका

श्रीशुक उवाच ।

भगवान् नारद महर्षिभी राजा युधिष्ठिर का वचन सुन कर संतुष्ट हो राजा को संबोधन देकर सभा के सुनते २ कथा कहने लगे ॥ २१ ॥

नारद उवाच ।

निंदा स्तुति सत्कार और तिरस्कार इत्यादि के ज्ञानार्थ यह कलेवर प्रकृति पुरुष के अविवेक से रचा गया है ॥ २२ ॥

उस देह में अभिमानहोने से मैं मेरा इस प्रकार की विषमता है और उसी विषमता से निन्दा ताडनादि हेतुक हिंसा अर्थात् पीडा और जिस देह में यह अभिमान बँधा है उस देह के वध से प्राणियों का वध जैसे है। ऐसा अखिलात्मा परमेश्वर को अभिमान नहीं तब हितार्थ दूसरे को दंड देने वाले परमात्माको शत्रुहिंसा किस प्रकार कल्पन की जाय ॥ २३—२४ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

यस्माद्भगवतो निन्दादिकृतं वैषम्यं नास्ति तस्माद्येन केनाप्युपायेन ध्यायतस्तेनैव ध्यानेन निन्दादिकृतपापस्यापि नाशात्तमायुञ्ज्यं युक्तमित्याशयेनाह—तस्मादिति सप्तभिः । निर्वैरेण नास्ति वैरं केनापि यस्मिस्तेन भक्तियोगेनेत्यर्थः युञ्ज्यात्मन इति शेषः यस्मादेतैरुपायैः पृथङ्नेक्षते ॥ २५ ॥

तेष्वपि वैरानुबन्धः श्रेष्ठ इत्याह—यथेति । न तथा भक्तियोगेनापि ॥ २६ ॥

अत्र दृष्टान्तः, कीटः पेशस्कृता भ्रमरेण संरम्भो द्वेषो भयं च सएव योगस्तेन ॥ २७ ॥

वैरेण यानुचिन्ता चिन्तनं तयैव पूतः पाप्मा येषां ते तं प्रापुः ॥ २८ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

नन्वेवं भगवन्निन्दासु कस्यचिदपि पापं न स्यान्न च निन्दाप्रयुक्ताभिमानगर्हितनिन्दया नितरां पापित्वप्रसङ्ग इति वाच्यं तादृशस्यापि चैद्यस्य परमपुरुषप्राप्तिदर्शनेन निन्दाया अपापरूपत्वादन्यथा तादृशे निरतिशयमुक्तिप्रतिबन्धे पापे सति तस्य मुक्त्यसम्भवात् किञ्चैवं भगवत्स्तोत्रादिषु पुण्यमपि न स्यात्तथा च सर्वशास्त्रार्थविरोधप्रसङ्गः । किञ्च—

" मामात्मपरदेहेषु प्रद्विषन्तोऽभ्यसूयकाः ।
तानहं द्विषतः क्रूरान्संसारेषु नराधमान् ॥
क्षिपाम्यजस्रमशुभानासुरीष्वेव योनिषु" ॥

इति भगवद्वचनविरोधश्च स्यात्. भगवतः स्तुतिनिन्दाभिमानि-

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

त्वाभावकथनाद्वेनचैद्ययोर्वैषम्यं च न सिध्यति अतो वेनचैद्ययोर्वैषम्यप्रश्नस्य किमुत्तरमित्यपेक्षायां साक्षात्परिहारमाह—तस्मादिति । निन्दादिभाक्संसारितुल्यत्वदोषप्रसङ्गनिराकरणार्थं संसारिचेतनानामिव देहस्तुतिनिन्दाद्यभिमानित्वं भगवतो नास्तीति तद्वैलक्षण्यमात्रमुक्तं "निन्दनस्तवसत्कार" इत्यादिभिः श्लोकैरिति वक्ष्यमाण एव साक्षात्परिहारो बोद्धव्यः तस्मादीश्वरस्यैवंविधस्वभावत्वाद्वैरानुबन्धनिर्वैरभयस्नेहकामानां पञ्चानामन्यतमेन केनचिद्युञ्ज्यात् भगवति मनो युञ्जीतेत्यर्थः "यथा भक्त्येश्वर मनआवेश्य" इत्युत्तरग्रन्थैकार्थ्यात् वैरानुबन्धो वैरविच्छेद निर्वैरेणेति न वैराभावो विवक्षितः अपि तु भक्तिर्विवक्षिता उत्तरग्रन्थे परिगणितहेतुषु पञ्चसु भक्तेरुक्तत्वात् स्नेहः सौहार्दं बाल्यादारभ्येतरपरित्यागाविच्छिन्नवेगेन भगवति मनो युञ्जतोऽग्रजस्य भगवत्प्राप्तिः, वेनस्य तूक्तानामन्यतमेनापि भगवत्ययुक्तमनसो न मुक्तिः प्रत्युत निरयप्राप्तिरिति वैषम्यमिति भावः । मनोयोजनस्य काष्ठामाह—कथञ्चिन्नेक्षते पृथगिति । पृथग्भगवतोऽन्यद्वस्तु किञ्चिदपि केनापि प्रकारेण नेक्षते न विषयीकरोति मनस्तथा तद्युञ्जीत विजातीयप्रत्ययान्तराव्यवहितचित्तवृत्तिर्भवेद्यथा तथेत्यर्थः ॥ २५ ॥

वस्तुतः प्रीतिपूर्वकानुध्यानात्मकभक्तियोगादपि वैरानुबन्धानुध्यानमेव श्रेय इति मया निश्चितमित्याह—यथेति । मर्त्यः संसारी जीवः भगवति यथा वैरानुबन्धेन आशु तन्मयताम् इयात् प्राप्नुयात् तथा भक्तियोगेन आशु नेयादिति मे मया मतिर्बुद्धिर्निश्चिता. अनेन बुद्धिनिश्चय इत्यर्थः । तन्मयतां तच्चिन्तनप्राचुर्यतामित्यर्थः । विकाराद्यर्थासंभवात् प्राचुर्येऽत्र मयडर्थः । पूर्वपूर्वचिन्तनानुसारोत्तरचिन्तनस्य प्राचुर्यं तच्च प्रत्ययान्तराव्यवहितत्वरूपम्. यद्वा तन्मयतां तद्गुणप्राचुर्यं प्राप्नुयादित्यर्थः मुक्तानां प्राचुर्येण भगवद्धर्मसाम्यश्रवणात् ॥ २६ ॥

यथा वैरानुबन्धयोगः श्रेयानेवं भययोगोऽपि भक्तियोगाच्छ्रेयानिति वदन्वैरानुबन्धभययोगयोर्भगवद्विषयकचिन्तासन्तानात्मकयोस्तत्साम्यापत्तिहेतुत्वे दृष्टान्तमाह—कीट इति । पेशस्कृता भ्रमरेण कुड्यायां निरुद्धः कीटो यथा तमेव पेशस्कृतं संरम्भभययोगेन वैरानुबन्धभययोगाभ्याम् अनुस्मरन् तत्स्वरूपतां पेशस्कृता साम्यं विन्दते तथा संरम्भभययोगिनौ भगवत्स्वरूपतां विन्देते इत्यर्थः । तस्यैव स्वरूपं यस्य तत्स्वरूपस्तस्य भावस्तत्स्वरूपता तां तुल्यरूपतां नत्वैक्यमित्यर्थः न हि पेशस्कृता रुद्धः कीटस्तेनैकीभवति उभयोरप्युपलभ्यमानत्वात् अतः साम्यमेव दृष्टान्तात्सिध्यति ॥ २७ ॥

उक्तार्थं दार्ष्टान्तिके दर्शयति—एवमिति । भगवति पूर्णषाड्गुण्ये मायामानुषे स्वसंकल्पोपात्तमनुजाकृतौ साक्षादीश्वरे श्रीकृष्णे विषये वैरेणानुचिन्तया वैरपूर्वकानुध्यानेन धूतपाप्मानः निरस्तवैरादिदोषाः तं कृष्णमापुः प्रापुः धूतपाप्मान इत्यस्यायमभिप्रायः । यद्यपि "यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनूं स्वाम्" इति श्रुत्युक्तरीत्या निरतिशयप्रीतिरूपया अविच्छिन्नस्मृतिसन्ततिरूपया भगवद्भक्त्यैव तत्प्राप्तिहेतुत्वम्. तथा चोक्तम् भगवता—

"पुरुषः स परः पार्थ भक्त्या लभ्यस्त्वनन्यया ।
भक्त्या त्वनन्यया शक्य अहमेवंविधोऽर्जुन ! ॥
ज्ञातुं द्रष्टुं च तत्त्वेन प्रवेष्टुं च परन्तप ! ।
तेषां सततयुक्तानां भजतां प्रीतिपूर्वकम् ॥
ददामि बुद्धियोगं तं येन मामुपयान्ति ते" ॥ इति.

श्रुतिश्च "तमेवं विद्वानमृत इह भवति नान्यः पन्था अयनाय विद्यते" इत्यादिका. भक्तिश्च प्रीतिपूर्वकमविच्छिन्नमनुध्यानम् "प्रीतिपूर्वमनुध्यानं भक्तिरित्यभिधीयते" इति भक्तिलक्षणात्. संरम्भभययोगयोस्तु प्रीतिरूपत्वाभावात्प्रत्युत तद्विपरीतरूपत्वाच्च न भगवत्प्राप्तिहेतुत्वं तथाप्यत्यन्तसंरम्भकृतभावनाप्रकर्षेण स्वहेतुभूतसंरम्भभययोरपि विस्मरणाद्भावनायाश्च निरतिशयानन्दावहशुभाश्रयविषयत्वेन प्रीतिरूपापन्नत्वात्तस्या अपि भगवत्प्राप्तिसाधनत्वमिति. एवञ्च येषां भावनाप्रकर्षेण स्वहेतुभूतवैरादिविस्मरणादिभावो वेनादीनां तेषां भगवन्निन्दादिप्रयुक्तभगवद्विषयकभावनाप्रकर्षाभावेन तन्मूलकनिन्दादिदोषाविस्मृतेर्भगवत्प्राप्त्यभावः प्रत्युत तन्निन्दादिदोषेण निरयप्राप्तिश्चेति वेनचैद्ययोर्वैषम्यमुक्तं भवति, अत एव न स्तुतिनिन्दयोः पुण्यापुण्यत्वप्रतिपादकशास्त्रविरोधोऽपि भावनाप्रकर्षेणाविस्मृतवैरादिदोषवत्पुरुषविषयत्वात्पुण्यापुण्यप्रतिपादकशास्त्राणाम् ॥ २८ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

अत्रैवं हरिस्वरूपे स्थित स्वयोग्यानन्दाविर्भावलक्षणमोक्षसाधनक्षमा क्षीणा भक्तिरेव द्वेषादिकमर्थवादलक्षणं तत्स्वभावज्ञापनार्थमुक्तम् इत्याशयेनाह—तस्मादिति । यस्माज्जडशरीरेन्द्रियाद्यभावेन हरेरहंममाभिमाननिमित्तोपद्रवो दूरं निरस्तः तस्माद्वैरानुबन्धादिना यो हरौ मनो युञ्ज्यात्प्रयुङ्क्ते स कथञ्चित्पृथङ्नेक्षते मनसस्तत्राभिनिवेशेन हरेरन्यं न चिन्तयति तमेवानुस्मरतीत्यन्वयः अनेन वैरादीनामेकतमेनापि हरौ मनो युञ्जानो वैरादिमार्गेण गच्छतीति तत्तद्वस्तुस्वभावात्तथोच्यत इति ज्ञातव्यं तदुक्तमाचार्यैः "कथञ्चिन्नेक्षते पृथक् तस्यैव मनसोऽभिनिवेशेन तदन्यं नेक्षते वैरादीनामेकतमेनापि यो मनो युञ्ज्यात्स तदन्यं नेक्षत" इति स्वभावकथनम्. नन्वत्र संयुञ्ज्यादित्यस्य प्रथमप्राप्तं विध्यर्थं परित्यज्यान्यार्थकल्पनायामश्रुतकल्पनाख्यादिति चेन्न "भक्त्या त्वनन्यया शक्य." "अहमेवंविधोऽर्जुन" "यमेवैष वृणुते तेन लभ्यः" "प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः" इत्यादिना भक्तेरेव भगवत्प्रीतिजनकत्वोक्तेः "अननुभूतिरवधुन्वानः" इत्याद्यनर्थश्रुतेश्च अतो न विध्यर्थोऽङ्गीकारयोग्यः तदप्युक्तं न विधिरिति न केवलं द्रष्टुः स्वस्यैवानर्थोऽपि तु तत्पितॄणामपि तदुक्तम्—

कर्मणा मनसा वाचा यो द्विष्याद्विष्णुमव्ययम् ।
मज्जन्ति पितरस्तस्य नरके शाश्वतीः समाः." ॥ इति.

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

नन्वेकदा कृतद्वेषप्राप्तनरकोपभोगेन क्षीणदोषस्य पुनः शुद्धान्तःकरणतया भक्तिकरणयोग्ययोनिप्राप्तिः स्यादिति तत्राह—

"तानहं द्विषतः क्रूरान् संसारेषु नराधमान् ।
क्षिपाम्यजस्रमशुभानासुरीष्वेव योनिषु ॥
आसुरीं योनिमापन्ना मूढा जन्मनि जन्मनि ।
मामप्राप्यैव कौन्तेय ! ततो यान्त्यधमां गतिम्" ॥ इति.

कीदृशो द्वेष इति तत्राह—

अवजानन्ति मां मूढा मानुषीं तनुमाश्रितम् ।
परम्भावमजानन्तो मम भूतमहेश्वरम्" ॥ इति.

'स्वर्गकामोयजेत' इत्यादि सत्कर्मणा तेषां सद्गतिः स्यात्किन्नेत्याह—

मोघाशा मोघकर्माणो मोघज्ञाना विचेतसः ।
राक्षसीमासुरीं चैव प्रकृतिं मोहिनीं श्रिताः" ॥ इति

ननु तर्हि हिरण्यकशिप्वादेर्दुरन्तापादुत्थितिः कथमभूदिति तत्राह—

"यदनिन्दत्पिता मे त्वामविद्वांस्तेज ऐश्वरम् ।
तस्मात्पिता मे पूयेत दुरन्ताद्दुस्तरादघात् ।
हिरण्यकशिपुश्चापि भगवन्निन्दया तमः ।
विविक्षुरत्यगात्सूनोः प्रह्लादस्यानुभावतः" ॥ इति

इति नन्वेव तर्हि भक्तद्विषिणोः शापवराभ्यां विपर्ययः स्यात्किन्नेत्याह—

"वरतोपि न मुच्यन्ते द्विषन्तः शापतोपि तु ।
भक्ता नैव निपात्यन्ते धर्माधर्मैस्तथेतरैः ॥

इति योग्यताया बलवत्त्वादिति शेषः । नन्वेवं चेत्पुनश्चानर्थ आपन्न इति तत्राह—"अन्यावेशकृतं यत्तु तद्धरायैरपोह्यते । तद्विरुद्धस्वभावानामन्यथा नकथञ्चन" इत्यादि हिरण्यकशिप्वाद्याविष्टासुरकृतपापं प्रह्लादादिभिः परिहृतं न तु स्वतो सुरस्येत्यर्थः ॥ २५ ॥

कुतः स्वतो सुरस्यपापं नपरिह्रियत ? इत्याशङ्क्य द्वेषाभिनिविष्टमनस्कत्वेन तद्योग्यत्वेन भगवत्प्रेरितत्वेनाभीष्टनिवृत्तित्वेन तदात्मकत्वादित्याशयेनाह—यथेति । मर्त्यस्तमोयोग्यो वैरानुबन्धेन निरन्तरं वैरस्मरणेन तन्मयतां तत्तद्द्वेषविषयवस्तुनि यथा मनसोभिनिवेशम् स्यात् प्राप्नोति तथा भक्तिलक्षणोपायेन भक्तिविषये वस्तुनि मनोभिनिवेशं न करोति अत्र किं प्रमाणमिति तत्राह—इतीति । निश्चिता मतिरित्यनेन साक्षिलक्षणा मतिर्गृह्यते भक्तियोगेन इति इत्यत्र सन्धिकार्याभावो द्वेषाभिनिवेशिनां बाहुल्यं भक्त्यभिनिवेशिनां कनीयस्त्वं च दर्शयितुं कुतः एतदवगतमिति चेन्न यथा वैराभिनिवेशेन इत्याद्याचार्योक्तेः वैरिणां बाहुल्यं अन्येषामल्पसङ्ख्यात्वं कथमिति चेन्न हरिणा भक्तानां बाहुल्याकरणात् एतदप्युक्तं कथमन्यथेत्याद्दि ततः कनीयांस एव देवाः ज्यायांसः असुरास्तत इति च भक्त्याऽभिनिवेशिष्वपि कश्चिद्विशेषोऽस्तीति ज्ञापनाय वा सन्ध्यभावः "ऋते ब्रह्माणमव्ययम्" इत्युक्तेः असुराणां नित्यद्वेषाग्राहित्वप्रकटनायानुबन्धेनेति "मागधाद्या यथा नित्यं द्वेषादाग्राहिणो हरौ । न तथा ग्राहिणो भक्ता ऋते ब्रह्माणमव्ययम्" इत्युक्तेः ॥ २६ ॥

ननु तन्मयतामित्यस्य तादात्म्यार्थः किं न स्यादिति तत्राह—कीट इति । द्वेषेण निन्दतश्चैद्यस्य कृष्णेन सायुज्यं कथमभूदिति प्रश्नस्य परिहारः कथमागत इत्यतो वाह, कीट इति यथा पेशस्कृता भृङ्गेण कुड्ये भित्तिसुषिरे रुद्धः कीटः श्यामनामा कृमिः तस्यभृङ्गस्य सरूपतां समानाकारतां विन्दते न तु तादात्म्यं ततो भिन्नत्वेन दृश्यमानत्वात् कीदृशः यान्तं उपर्यागत्य गभीरं नदन्तं भृङ्गं संरम्भभययोगेन ईषत्कोपभययुक्तस्नेहेनान्नं सन्ददातीति स्नेहेन स्वात्मानमाकृष्य क्लिश्नातीति कोपयुक्तभयेन चानुस्मरन् अत्र स्नेहस्यैव प्राधान्यं प्राणधारणपोषणयोः सन्ततमिष्टत्वात् कोपभययोस्तात्कालिकत्वादप्राधान्यमित्यतो योगस्य संरंभभययोर्विशेषणतयोक्तेः योगस्य स्नेहार्थत्वम् ।

"प्रीतिस्नेहस्तथा योग प्रेमबन्धः इतीर्यते" । इति शब्दनिर्णये सिद्धम् ॥ २७ ॥

कृष्णे भगवत्येवं वैरेण युक्तया अनुचिन्तया भक्तिपूर्वस्मृत्या धूतपाप्मानश्चैद्यादयः तं कृष्णमापुरित्यन्वयः अत्र सजीवानां शापादिनासुराविष्टानामेव मुक्तिः न केवलानां तस्मात्सदाविष्टासुरा वैरेण प्राप्तपाप्मानः "असुर्यानामतेलोकाः" इति श्रुतेः त लोकसमुदायं प्रापुः सन्तो जयादयो अनुचिन्तया तं कृष्णमवापुरित्ययं विशेषो वैरयुक्तया अनुचिन्तयेत्याचार्योऽपि शब्देन गर्हाभिधायिना ज्ञातव्यः "अनुचिन्तेति तां प्राहुर्भक्तिपूर्वां तु या स्मृति." इति वचनात् भक्तिपूर्वैवानुचिन्ताऽत्राभिप्रेतेति ज्ञातव्यम् अतोऽत्र चैद्यादीनां भक्तियुतत्वं प्रतिपाद्यत इत्युपगन्तव्यम् अन्यथा कीटोदाहरणं निरन्वितं स्यात् उदाहरणस्यापि भक्त्यर्थत्वं कुत इति चेन्न ।

स्नेहादन्नं ददातीति स्वाकर्षणभयेऽपि वा ।
विद्यमानेऽप्यल्पकोपे सङ्गतिस्नेहतस्तथा ॥
पेशस्कृद्रूपतां कीटो यथा याति तथैव तत् ।
चैद्यादयोऽसुरावेशाद्धरौ द्वेषयुता अपि ॥
निजस्वभावया भक्त्या जाता हरिसरूपताम् ।
तथापि करुणो विष्णुरन्यावेशाद्यदि द्विषन् ॥
हीयते किं ममानेन नित्यानन्दस्वरूपिणः ।
देहबन्धयुतानां हि द्वेषिणाऽपकृतं भवेत् ॥
ममकोह्यपराध्येत निर्दोषसुखरूपिणः ।
अतो मय्यपराधस्तु स्वस्मिन्नेव न मे भवेत् ॥
अतो यद्यसुरावेशात्कृतमेतेन दुष्कृतम् ।
अनादिभक्तो यस्मान्मे मोचयिष्ये ततस्त्वहम् ॥
इति मत्वा मोचयति चैद्यादीनपि केशवः ।

इति वचनात् किं च निर्वैरेणेत्याद्युक्तमत्रानुसन्धेयं तेन स्नेहाद्यायतनस्य देहस्य नाशाद्विना कीटस्योपद्रवाभावाद्धरेरप्युपद्रवाभावोऽनुमीयते "तथापि करुणो विष्णुरन्यावेशाद्यदि द्विषन् हीयते किं ममानेन नित्यानन्दस्वरूपिणः" इत्यादिना च ॥ २८ ॥

———

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

तदेवं "सकृद्यदङ्गप्रतिमान्तराहिता" इत्यादिवत् तदाभासमपि ध्यायतस्तदावेशात् तत्र वैरेणापि ध्यायतस्तदावेशेनैव निन्दादिकृतपापस्यापि नाशात्, तस्माद्युञ्ज्यादिकं युक्तमित्याशयेनाह—तस्मादित्यादिभिः, युञ्ज्यादिति । स्नेहकामादीनां विधातुमशक्यत्वात् सम्भावनायामेव लिङ् । वैरानुबन्धादीनामेकतरेणापि युञ्ज्यात् ध्यायेत् चेत् तदा भगवतः पृथक् नेक्षते तदाविष्टो भवतीत्यर्थः । वैरानुबन्धो वैरभावाविच्छेदः. निर्वैरं वैराभावमात्रम् औदासीन्यमुच्यते तेन कामादिराहित्यमप्यायाति वैरादिभावराहित्यमित्यर्थः । तेन वा वैरादिभावराहित्येन युञ्ज्यात् । विहितत्वमात्रबुद्ध्या ध्यायेत्. ध्यानोपलक्षितं भक्तियोगं कुर्याच्चेत्यर्थः । स्नेहः कामातिरिक्तः परस्परमकृत्रिमः प्रेमविशेषः स तु तेषु साधकेषु तदभिरुचिरेव ॥ २५ ॥

तदेव सर्वेषां तदावेश एव फलमिति स्थिते झटिति तदावेशसिद्धयं तेषु भावमयमार्गेषु निन्दितेनापि वैरानुबन्धेन विधिमय्या भक्तेन साम्यमित्याह—यथेति । वैरानुबन्धेनेति भगस्यादपुपलक्षणं यथा शीघ्रेण तन्मयतां तदाविष्टतां भक्तियोगेन विहितत्वमात्रबुद्ध्या क्रियमाणेन तु न तथा ॥ २६ ॥

अस्तां तावदनन्तशक्तियुक्तस्य तेषु प्रकाशमानस्य भगवच्छ्रिताभासस्य वार्त्ता प्राकृतेऽपि तद्भावमात्रस्य आत्मावेशफलं समदृश्यते इति सदृष्टान्तं तदेव प्रतिपादयति—कीट इति । भ्रमरेभ्यो द्वेषो भयञ्च ताभ्यां योगस्तदावेशस्तेन तत्स्वरूपतां तस्य स्वम् आत्मीयं रूपं आकृतिर्यत्र तत् तां तत्स्वरूपतामित्यर्थः. ॥ २७ ॥

एवमिति । एवमपीत्यर्थः । नराकृतिपरब्रह्मत्वान्माययेव प्राकृतमनुजतया प्रतीयमाने. ननु, कीटस्य पेशस्कृत् द्वेषे पापं न भवति अत्र तु तत्स्यादित्याशङ्क्याह, वैरेण यानुचिन्ता तदावेशः तयैव धूतपाप्मानः. तद्ध्यानावेशस्य तादृक् शक्तित्वादिति भावः ॥ २८ ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

ननु, मास्तु निन्दादेर्भगवत्पीडाकरत्वं निन्दकस्य दुरदृष्टजनकत्वन्तु स्यादेव. यदुक्तं कैमुत्येनापि "निन्दां भगवतः शृण्वंस्तत्परस्य जनस्य वा । ततो नापैति यः सोऽपि यात्यधः सुकृताच्च्युतः" ॥ इति सत्यम्. निन्दा हि द्विविधा. आनुकूल्यमयी प्रातिकूल्यमयी च तत्र प्रथमा प्रेमविलासरूपैव "मृगयुरिव कपीन्द्रं विव्यधे लुब्धधर्मा स्त्रियमकृत विरूपां स्त्रीजितः कामयानाम् । बलिमपि बलिमत्त्वावेष्टयद्ध्वाङ्क्षवद्यस्तदलमसितसख्यैर्दुस्त्यजस्तत्कथार्थः" । इति या सा तु पुरुषार्थचूडामणिमरीचिमञ्जरीव व्रजदेवी तां विना नकैरपि लभ्या. द्वितीया द्विविधा. भगवदभिनिवेशोत्था भगवदनभिनिवेशोत्था च, तत्र प्रथमया शिशुपालादिकृतनिन्दया जन्यमानमेव दुरदृष्टं तत्कारणेनैव भगवत्यभिनिवेशेन सद्य एव निर्दग्धीकृत्य भक्तियोगिनापि समकक्षतां प्राप्य, विनियोग्यत्वमापि प्राप्यत इत्याह—तस्मादिति सप्तभिः । यस्मान्निन्दाया भगवत्पीडाकरत्वं नास्ति, निन्दकस्य च पापक्षयः स्यादेव तस्मादभिनिवेशाद्वैरानुबन्धादिना युञ्ज्यात् भगवति मन इति शेषः । निर्वैरेण नास्ति वैरं केनापि यस्मिन् तेन भक्तियोगेनेत्यर्थः; यद्वा, वैरप्रतिपक्षत्वं निर्वैरं तत्प्रतियोगिस्वपक्षत्वं पुत्रादिभावः, यः खल्वग्रिमश्लोके सम्बन्धशब्दवाच्यत्वेन स्पष्टीभविष्यति तेन स्नेहादयः कामस्तेन प्रीतिजन्येन कामेनत्येन व्याख्येयम्. न तु स्नेहस्य पृथक्साधनत्वं तृतीयान्तत्वप्रक्रमभङ्गापत्तेः फलमाह—कथञ्चिदपि तं भगवन्तं पृथक् नेक्षते. किन्तु स्वीयभावानुरूपमेव तं साक्षात् पश्यतीत्यर्थः । अथ वैरभाववन्ताधिकारिणो प्रति तु पृथक् नेक्षते किन्तु सायुज्यप्राप्त्या तं स्वामिनमेवेक्षते इत्यर्थः एकस्यापि वाक्यस्य पात्रभेदादर्थभेदः श्वेतो धावतीतिवदिति न्यायात् अत्र युञ्ज्यादिति लिङा वैरानुबन्धादिना भगवति मनोभिनिवेशं कुर्यादिति निर्धारणमुच्यते स च शिशुपालादिषु न सम्भवति तेषां रागप्राप्तत्वात् शिशुपालादिदृष्टया [illegible] न श्रूयते तथात्वानुभगवत्प्रातिकूल्यस्य विधानाभावात्. यदुक्तम् "आनुकूल्यस्य सङ्कल्पः प्रातिकूल्यस्य वर्जनम्" इति. न च शिशुपालादयो हन्तेषु जनेषु निन्दितोऽपि वैरानुबन्धो भगवदभिनिवेशं जनयति "तानहं द्विषतः क्रूरान् संसारेषु नराधमान् । क्षिपाम्यजस्रमशुभानासुरीष्वेव योनिषु" ॥ इत्यादि परस्सहस्रवचनविरोधात् नच रागप्राप्तत्वेन वैरानुबन्धो नरकं जनयेत्तु निन्दितो भगवन्निन्दा शिशुपालादिषु व्यभिचारात्. न च शिशुपालादिभक्तेष्वेवं व्यवस्थेति वाच्यं विशिष्टतया वैरानुबन्धस्य शिष्टानुष्ठानादर्शनात्. तस्मैव वैरानुबन्धो भगवदभिनिवेशं जनयति यस्य हन्तृत्वेनाभिमानः श्रुतो दृष्टो वा भगवान् तस्माद्विलोभनानि यथा लोके स्वहन्तृत्वेन निश्चितेभ्यो वैरिभ्यः सर्पादिषु भीतस्य चित्ताभिनिवेशो नान्यैरिति तस्मादेतत् पद्यमेतं केचिद्व्याचक्षते यस्मात् सवैरभाववतामपि हितं करोति तस्मात्तत्र वैरस्यावैधित्वात् वैरभावव्यतिरिक्तेनैव भावेन मनोऽभिनिवेशयेदित्याह— तस्मादिति । निःशब्दस्य नञर्थत्वान्निर्वैरेण वैरभावभिन्नेन बन्धुमित्रपुत्रादिभावेन मनो युञ्ज्यात् कीदृशेन वैरानुबन्धेन वैरे इव अनुबन्धश्चित्ताभिनिवेशो यत्र तेन यो यस्मिन् अनुबन्धः स तस्मिन्नभिनिविष्ट एवेति तादृशस्वभावो नास्ति. तथा स्नेहात् कामेन स्नेहैकहेतुको यः कामस्तेन कीदृशेन भयेन स्वजनार्यपथत्यागोत्थभयवता व्रजयुवतिकानुगामिना कामेनेत्यर्थः भयेन वेति वा शब्दात् निर्भयेन कामेन च रुक्मिण्यादिकामानुगामिना कामेनेत्यर्थः औपपत्यदाम्पत्ययोर्द्वयोरप्यस्ति प्रमाणम्. तथाहि "जारभावेन सुस्नेह सुदृढं सर्वतोऽधिकम्" इति ब्रह्मागमस् "अग्निपुत्रा महात्मानस्तपसा स्त्रीत्वमापिरे । भर्तारं च जगद्योनिं वासुदेवमजं विभुम्" इति कूर्मपुराणञ्च ॥ २५ ॥

परमनिन्द्यस्यापि वैरभावस्य चित्ताभिनिवेशकत्वांशेनैव महिमा अपार एवेत्याह—यथेति । वैरे वैरभावे योऽनुबन्धः सातत्यन्तेन मर्त्यः पूर्वोक्तयुक्तेः स्वस्य भगवद्वध्यत्वज्ञानविशिष्ट एव नान्यः । तन्मयतां स्वीमयः कामुकइतिवत्तदेकाभिनिवेशवत्वं न तथेति सद्यइतिशेषः निश्चिता मतिरिति ममायं निश्चय एव कृत इत्यतोऽत्र प्रमाणं न प्रष्टव्यं यदिभक्तियोगादपि वैरभावो मनो-

कामाद्द्वेषाद्भयात्स्नेहाद्यथा भक्त्येश्वरे मनः ।
आवेश्य तदघं हित्वा बहवस्तद्गतिं गताः ॥ २९ ॥
गोप्यः कामाद्भयात्कंसो द्वेषाच्चैद्यादयो नृपाः ।
सम्बन्धाद्वृष्णयः स्नेहाद्यूयं भक्त्या वयं विभो ! ॥ ३० ॥
कतमोऽपि न वेनः स्यात्पञ्चानां पुरुषं प्रति ।
तस्मात्केनाप्युपायेन मनः कृष्णे निवेशयेत् ॥ ३१ ॥
मातृष्वस्रेयो वश्चैद्यो दन्तवक्रश्च पाण्डव ! ।
पार्षदप्रवरौ विष्णोर्विप्रशापात्पदाच्च्युतौ ॥ ३२ ॥

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

भिनिवेशकत्वांशेनाधिकस्तदा किमुत वक्तव्यं तादृशाभिनिवेशवान् स भक्तियोग इति भावः । तेन श्वित्रो न जातः जिह्वायां नान्धं विविशतुस्तम इति त्वया शिशुपालादीनाम् निष्ठसाधनत्वबुध्या वैरानुबन्धो निन्द्यते मयातिवृष्टसाधनीभूतप्रेमभक्तियोगादपि स्तूयते इति, कुतः शिशुपालादीनां दुर्गतिसंभावनापीति ध्वनिः तेन भावमार्गेष्वतिनिन्द्योपि वैरभावो भगवदभिनिवेशाधिक्यसम्पादकत्वांशेनैव भक्तियोगात् शुद्धात् यदि स्तूयते तदा भावमार्गेऽन्तिर्धयो वसुदेवादीनां वात्सल्यसख्यादिः किमुततरां नन्दादीनामात्यन्तिकतदभिनिवेशं प्रतिक्षणातिभूमसम्पादकः स्यात् इत्यनुध्वनिः तेनार्वाचीनानामपि श्रीनन्दादिभावानुसारेण वात्सल्यादिभावेप्सूनां रागानुगा भक्तिर्वैधभक्तेः सकाशादुत्कर्षवतीति पर्यन्तध्वनिः ॥ २६ ॥

तत्र वैरभाववतां मध्ये केचित् शिशुपालादयः सारूप्यमापुरिति सदृष्टान्तमाह—कीटइति द्वाभ्याम् । पेशस्कृता भ्रमरविशेषेण संरंभोद्वेषः भयञ्च तयोर्योगेन ॥ २७ ॥

माया कृपा सद्गतिप्रापणी मनुजेषु स्वंशभूष्वपि यस्य तस्मिन् यद्वा मायया स्वरूपशक्त्यैव "मनुजं स्वरूपभूतया नित्यशक्त्या मायाख्यया युतः" इति श्रुतेः । वैरेण वैरजनितध्यानावेशेन पूतो-नष्टपाप्मा तन्निन्दनतिरस्कारादिर्येषां ते ॥ २८ ॥

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

यस्माद्भगवतो निन्दनादिना पीडा न भवति प्रत्युत तत्पादपद्मप्राप्तिसाधनं स्मरणं भवति तस्माद्धेतोः वैरानुबन्धेन निर्वैरेण सर्वात्मभावेन भक्तियोगेनेत्यर्थः । युञ्ज्यात् भगवति मनो योजयेत् पृथक् भगवदन्यत् वस्तु कथञ्चिदपि नेक्षते नेक्षेत. किन्तु, भगवति सर्वात्मभावेन मनो युञ्ज्यादित्यर्थः ॥ २५ ॥ २६ ॥

पेशस्कृता भ्रमरेण कुड्यायां रुद्धः कीटः संरम्भो द्वेषो भयञ्च ताभ्यां योगो न स एकाग्र्यं तेनानुस्मरन् तस्य पेशस्कृतः सरूपतां विन्दते ॥ २७ ॥

मायया कृपया भक्तवात्सल्येनेत्यर्थः । मनुजे मनुवंशे आविर्भूते चन्द्रवंशस्यापीलाद्वारा मनुवंशत्वात् वैरेण यानुचिन्ताऽनुध्यानं तेन पूतपाप्मानस्तमापुः ॥ २८ ॥

---

### भाषाटीका ।

तस्मात् वैर के संबंध से भक्ति से भय से स्नेह से अथवा काम से कृष्ण भगवान् में मन लगावै वे किसी प्रकार पृथक् नहीं देखते है ॥ २५ ॥

राजन् ! हमारा तो निश्चय ऐसा है कि मनुष्य जैसे वैर से तन्मयता को प्राप्त होता है वैसा भक्ति योग से नहीं ॥ २६ ॥

जैसे भीत मे भ्रमर का रोका हुआ कीट ( कीडा ) संरंभ ( द्वेष ) और भय के योग से. उसका स्मरण करते २ भ्रमर स्वरूप हो जाता है ॥ २७ ॥

ऐसेही कृपा से मनुष्य रूप को धारण करने वाले साक्षात् ईश्वर ऐसे श्रीकृष्ण भगवान मे वैर से पवित्र होकर सदा उन के चिन्तन करने से कृष्ण ही को प्राप्त हो गये ॥ २८ ॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका ।

तदघं कामादिनिमित्तं पापं हित्वा ॥ २९ ॥

तानाह—गोप्यइति ॥ ३० ॥

तर्हि वेनः किमिति नरके पातितः ? तीव्रध्यानाभावात्पापमेव तस्य फलितमित्याह—कतमोऽपीति । पुरुषं श्रीहरिंप्रति पुरुषे पुरुषस्य कामात्सम्भवाद्भयादिभिश्चिन्तयतां पञ्चानां मध्ये वेनो न कतमोऽपीत्युक्तम् ॥ ३१ ॥

तदेवमितिहासप्रस्तावकथामुक्त्वा श्रीकृष्णे शिशुपालस्य

युधिष्ठिर उवाच ।

कीदृशः कस्य वा शापो हरिदासाभिमर्शिनः ।
अश्रद्धेय इवाभाति हरेरेकान्तिनां भवः ॥ ३३ ॥
देहेन्द्रियासु हीनानां वैकुण्ठपुरवासिनाम् ।
देहसम्बन्धसम्बद्धमेतदाख्यातुमर्हसि ॥ ३४ ॥

नारद उवाच ।

एकदा ब्रह्मणः पुत्रा विष्णोर्लोकं यदृच्छया ।
सनन्दनादयो जग्मुश्चरन्तो भुवनत्रयम् ॥ ३५ ॥
पञ्चषड्ढायनार्भाभाः पूर्वेषामपि पूर्वजाः ।
दिग्वाससः शिशून्मत्वा द्वास्स्थौ तान्प्रत्यषेधताम् ॥ ३६ ॥

श्रीधरस्वामिकृतभावार्थदीपिकायाम्

वैरानुबन्धे कोहेतुरित्यपेक्षायां तमेवेतिहासं वक्तुमाह–मातृष्वस्रेय इति । पदाद्वैकुण्ठाच्च्युतौ ॥ ३२ ॥

हरिदासानभिमृशत्यभिभवतीति तथा कस्य शापः कीदृशो वा अश्रद्धेयोऽनादरणीय इव असम्भवात् भवो जन्म ॥ ३३ ॥

असम्भवमेवाह—जन्महेतुभूतैः प्राकृतैर्देहेन्द्रियासुभिर्हीनां शुद्धसत्त्वमयदेहानामित्यर्थः । प्राकृतदेहसम्बन्धेन सम्बद्धमेतदाख्यानमाख्यातुमर्हसि ॥ ३४ ॥ ३५ ॥

कथम्भूता पञ्च वा षड् वा हायनानि वर्षाणि येषां ते अर्भा बालास्तद्वदाभा येषां ते पूर्वेषां मरीच्यादीनामपि पूर्वजास्तेभ्यः प्रथमं जाताः दिग्वाससो दिगम्बराः अतः शिशून् मत्वा ॥ ३६ ॥

---

श्रीमद्वीरराघवाचार्य्यकृतभागवतचन्द्रचन्द्रिका ।

एवमुक्तार्थं दार्ष्टान्तिके निदर्श्यैवं कैश्चिल्लब्धमित्याह—कामादिति । यथा भक्तियोगेनेश्वरे मन आवेश्य भगवतो गतिं जग्मुस्तथा कामादिभिरपि तस्मिन् मन आवेश्य तदघं मनस आवेशननिमित्तं कामादिरूपमघं हित्वा अत्यन्तभावनाप्रकर्षेण कामादिकं विस्मृत्येत्यर्थः बहवस्तद्गतिं प्राप्ताः ॥ २९ ॥

एतदेवोदाहरणविशेषेषु दर्शयति–गोप्य इति । भगवति कामाद्गोप्यस्तद्गतिं गता इत्यनुषङ्गः भयात्कंसस्तद्गतिं गतः इति विभक्तिविपरिणामः । यद्वा, गोप्यादयः सर्वे प्रतिनियतकामादिभिरूपायैस्तद्गतिं गता इति यौगपद्येनान्वयः । सम्बन्धाद्वृष्णयः स्नेहाद्यूयमिति वृष्णयो यूयञ्च देहसम्बन्धकृतस्नेहादित्यर्थः । अन्यथा पञ्चप्रकारान्तर्भावायोगात् भक्त्या वयं नारदादयस्तत्र स्नेहस्तुल्यस्वाभिकृष्टविषयः प्रेमा भक्तिरुत्कृष्टविषयेति भेदः ॥ ३० ॥

एवमुक्तेनार्थेन सिद्धं वेनस्यैवयोग्यत्वमाह–कतमोऽपीति । उक्तानां पञ्चानां कामक्रोधभयस्नेहभक्तिरूपाणां पञ्चानां मध्ये येनास्त्वीश्वरं परमपुरुषंप्रति कोपि न भवति कामाद्यन्यतमो न भवत्यतस्तन्निन्दया निरयगामितेति भावः । तदुक्तानां पञ्चानां मध्ये येनाप्यन्यतमेनोपायेन भगवति भक्तिरूपं मनो निवेशयेत् निवेशिते च मनसि मनोनिवेशनविषयं कामादिकमपि विस्मृत्य तं प्राप्नोतीति भावः, अत एव हि श्रीविष्णुपुराणे "अपगतद्वेषानुबन्धो भगवन्तमवाप" इति सूक्तम्. ननु, संरम्भभयादिमार्गाणामपि भक्तियोगवद्भगवत्प्राप्तिसाधनत्वे यथा आरब्धविच्छिन्नभगवद्भक्तियोगः पुनर्जन्मान्तरे "पूर्वाभ्यासेन कौन्तेय" इत्यादिभगवदुक्तरीत्या पूर्वाभ्यासेनोपलब्धसम्पूर्णभगवद्भक्तियोगो भगवन्तं प्राप्नोति एवमारब्धविच्छिन्नसंरम्भभयादियोगोपि जन्मान्तरे पूर्वाभ्यासेन परिपूर्णतद्योगो भगवन्तं प्राप्नुयात् नचैवं युक्तम्, अन्यथा विष्णुद्वेषिणां सर्वेषामपि मुक्तिप्रसङ्गः । एवञ्च "यः पुनः पितरं द्वेष्टि तं विद्यादन्यरेतसम् । यो विष्णुं सततं द्वेष्टि तं विद्यादन्त्यरेतसम्" ॥ इत्यादिनिन्दारूपवाक्यानामनर्थकत्वप्रसङ्गः । उच्यते, संरम्भभयादीनां तासामेव जन्मनि स्वविषयस्मारकभावनाप्रकर्षवद्दशायामेव मुक्तिहेतुत्वं न तु विच्छिन्नानां. जन्मान्तरसम्बन्धिनामपि; प्रत्युत तेषां निरयहेतुत्वमेव. भक्तियोगस्य तु विच्छिन्नस्यापि पुनर्जन्मान्तरे भावनाप्रकर्षावहत्वद्वारा मुक्तिसाधनत्वमिति. नचात्र नाशाभावः धर्मिग्राहकमानस्य सत्त्वात् "पार्थ नैवेह नामुत्र विनाशस्तस्य विद्यते" इत्यारभ्य "तत्र तं बुद्धिसंयोगं लभते पौर्वदैहिकम् । यतते च ततो भूयः संसिद्धौ कुरुनन्दन । पूर्वाभ्यासेन तेनैव ह्रियते ह्यवशोपि सः" इत्यन्तेन भगवतैवारब्धस्यापि भक्तियोगस्य पुनः कालान्तरे फलसाधनत्वस्योक्तत्वात् नत्वेवं संरम्भभयादीनां सकृदारब्धानां पुनर्जन्मान्तरे भगवत्प्राप्तिसाधनत्वप्रभापकं किञ्चिद्वचनं विद्यते प्रत्युत "योविष्णुम्" इत्यादिनिन्दा

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

वचनान्येव सन्ति यदि भगवन्निन्दादिकारिणामपि सर्वेषां द्वेषादिविस्मारकभावनाप्रकर्षः स्यात्तर्हि स्यादेव तेषां मुक्तिरिति न कोपि विरोधः ॥ ३१ ॥

एवं संरम्भयोगादीनामपि भगवत्प्राप्तिसाधनत्वेन चैद्यदन्तवक्त्रयोर्न मुक्तौ विस्मयः कार्य इत्यभिधाय न केवलं तयोर्भगवद्विषयकभावनाप्रकर्षे तद्विषयकसम्बन्ध एव हेतुरपि तु पूर्वसिद्धं भगवदानुकूल्यञ्चेति वक्तुमितिहासं प्रतुष्टुषुः प्रश्नावसरप्रदानाय तयोस्तावद्विष्णुपार्षदत्वं विप्रशापाद्भ्रंशञ्चाह—मातृष्वस्रेय इति । मातुः स्वसा भगिनी तस्या अपत्यं पुमान् मातृष्वस्रेयः हे पाण्डव युधिष्ठिर ! यो भवतो मातृष्वस्रेयः चैद्यो दन्तवक्त्रश्च द्वाविमौ पूर्वं विष्णोः पार्षदप्रवरौ द्वारस्थितौ विप्रशापाद्धेतोः पदात्स्वस्थानाच्च्युतौ भ्रंशौ एवञ्च तयोः प्राक्तनद्वेषातिशयात्प्राक्तनात्यन्तभगवदानुकूल्याच्च शापान्ते भावनाप्रकर्षनिष्ठा मुक्तिरिति भावः । अण्डान्तर्वर्तिन्युपेन्द्रादिविष्णुलोके कस्मिंश्चित् "तदुपर्यपि बादरायणः सम्भवात्" इति न्यायेनोपेन्द्राद्युपासनया तद्द्वारपत्याधिकारं गतौ कौचिज्जीवौ स्थितौ पश्चाद्विप्रशापात्पदच्युताविति नारदस्याशयः ॥ ३२ ॥

इममाशयमजानन्नेवं प्रश्नावसरे दत्ते पृच्छति युधिष्ठिरः—कीदृशःइति द्वाभ्याम् । कीदृशः शाप इति शापप्रकारप्रश्नः कस्य वेति तत्कर्तृप्रश्नः, तस्य विशेषणं हरिदासाभिमर्शिन इति हरिदासानभिमृशति पराभवतीतिहरिदासाभिमर्शी तस्य अनेन तस्यानौचित्यं सूचितम्. हरेरैकान्तभक्तानां निकटवर्तिनां भवो जन्म अश्रद्धेय इव अनादर्तव्य इवाभाति प्रतीयते. अयं भावः "एत देवयानं पन्थानमापद्य न च पुनरावर्तते न च पुनरावर्तते" इति श्रुत्युक्तरीत्या मुक्तानामेव पुनरावृत्तिर्न विद्यते किमुत नित्यसिद्धानां भगवत्पार्षदानां भगवत्स्थानाद्भ्रंशाभाव इह जन्माभवश्चाति अत इदं भगवत्पार्षदयोः तत्पदाद्भ्रष्टयोरुच्यमानमिह जन्मानादर्तव्यम् तज्जन्मप्रतिपादकं वाक्यम् "जरद्गवः कम्बलपादुकाभ्याम्" इत्यादिवाक्यवदसङ्गतार्थमिति ॥ ३३ ॥

तयोर्जन्मासम्भवमेव विवृण्वन्पृच्छति—देहेन्द्रियासु हीनानामिति । कर्माधीनप्राकृतदेहेन्द्रियप्राणरहितानां वैकुण्ठपुरवासिनां नित्यसिद्धानामित्यर्थः । अनेन पूर्वमप्यसम्भावितप्राकृतदेहेन्द्रियप्राणसम्बन्धानामित्युक्तम् एवंविधानां देहसम्बन्धः प्राकृतदेहसम्बन्धस्तदनुबन्धिरागद्वेषादिसम्बन्धश्च तयोः समाहारः तद्देतद्यथाभावं महाभाग्यं कथयितुमर्हसि ॥ ३४ ॥

एवमापृष्टो भगवान्नारदः प्रश्नस्योत्तररूपमितिहासं वक्तुमुपक्रमते—एकदेत्यादिना । ब्रह्मणश्चतुर्मुखस्य पुत्राः सनन्दनादयः आदिशब्देन सनत्कुमारसनत्सुजाता विवक्षिताः एते भुवनत्रयं चरन्तः कदाचिद्यदृच्छया विष्णोर्लोकं जग्मुर्ययुः अयं विष्णुलोकशब्दो ब्रह्माण्डान्तर्गतविष्णुलोकविषयः न तु मुक्तप्राप्यपरमव्योमविषयः "वैकुण्ठः कल्पितो येन लोको लोकनमस्कृतः" इति वक्ष्यमाणत्वात् मुक्तप्राप्ये अर्चिरादिमार्गेणैव गम्ये परमव्योम्नि योगिनामपि सनकादिकानां गमनासम्भवान्नित्यसिद्धानामिहोत्पत्त्यसंभवाच्च ॥ ३५

सनन्दनादीन् विशिंषन्नाह—पञ्चेति । पञ्च षड् वा हायना वत्सरा येषां ते अर्भा अर्भकास्तदाभासस्तद्वदवस्थिताः तान्, अर्भशब्दाभिप्रेतं विवृणोति पूर्वेषां रुद्रादीनामपि पूर्वं जातान् दिग्वाससो दिगम्बरानेवंभूतांस्तान्सनन्दनादीन् शिशून् शिशुत्वेनावगत्य विष्णोर्द्वारस्थौ द्वारि स्थितौ द्वारपौ प्रत्यषेधतां न्यवारयताम् ॥ ३६ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

इतोपि भक्तिगर्भकामादिनैव भगवत्प्राप्तिरित्याह—कामादिति । तृतीयार्थे पञ्चमी कामादिभिरपि यथा यथावत् भक्त्या सहैव कृष्णे मन आवेश्य द्वेषादिना यदघमापादितं तदघं हित्वा तस्य कृष्णस्य गतिं लोकं गता इत्यन्वयः प्रथमतः कामादियुक्तया भक्त्या हरौ मनः आवेश्य पश्चाद्यथाभूतया भक्त्याऽघं हित्वेत्यर्थः ॥ २९ ॥

बहव इत्युक्तस्य विषयविभागमाह—गोप्य इति । कामात्कामयुक्तया भक्त्या कंसः कंसाविष्टो भृगुः भययुक्तया भक्त्या चैद्यादयः चैद्यादिस्याजयादयः द्वेषयुक्तया वृष्णयः सम्बन्धो बन्धुना तन्निमित्तया यूयं पाण्डवः समतुलितबहुमानयुक्तया वय शुकादिशब्दवाच्याः केवलया भक्त्या अत्र कश्चन विशेषः—

"गोप्यः कामयुता भक्ता कंसाविष्टः स्वयं भृगुः ।
ज्ञेयो भययुतो भक्तश्चैद्याद्विष्णौ जयादयः ॥
निद्वेषसंयुता भक्ता वृष्णयो बन्धु (१) संयुताः ।
बहुमानस्नेहसायद्वेवा भक्ताः प्रकीर्तिताः ॥
स्नेहोपसर्जनाद्देव बहुमानान्मुनीश्वराः ।
बहुमानोऽपि देवानां कृपिकोपाधिको मतः ॥
प्रागीन्द्रेन्द्रस्तासहितेरेषां यथाक्रमम्" ॥

इति वचनाद्वगन्तव्यः ॥ ३० ॥

अत्रैव पुरुषार्थो न केवलद्वेषेणेत्याशयवानाह—कतम इति । कामाद्युपसर्जनभक्तियोगानां पञ्चानां मध्ये कतमोपि भक्तियोगो वेनस्य नास्ति असौ (२) कश्चन द्वेषात्मक एव यस्मात्तद्भक्तियोगमन्तरेण पुरुषार्थो नास्ति तस्मात्केनापि प्रकारेणापादितेनोपायेन भक्तिलक्षणेन कृष्णे मनो निवेशयेत् द्वेषादिना "उपायो भक्तिरुद्दिष्टो द्वेषाद्या अनुपायकाः" इत्यभिधानाद्न उपायो भक्तिरेव अतो भक्तिमन्तरेणोपायो नास्तीत्यर्थः ॥ ३१ ॥

पेशस्कृता रुद्ध इत्यत्र चैद्यादयः स्वतो भक्ता अनुरागवेशाद्वेषिण इत्युक्तं तत्र हेतुमाह—मातृष्वस्रेय इति । पार्षदप्रवरत्वं स्वतो भक्तत्वे विप्रशापादसुरानिष्टत्वं द्वेषित्वे हेतुः ॥ ३२ ॥

हरिदासान् हरिभक्तान् अभिमृशति स्पृशतीति हरिदासाभिमर्शनः हरेरैकान्तिनां नियतभक्तानां भव उत्पत्तिः शरीरयोगलक्षणः स्वपदभ्रंशलक्षणः शापः अश्रद्धेय इवाभाति सयुक्तिकं निरूपयितुं न क्षममिति प्रतीयते ॥ ३३ ॥

तत्र कारणमाह—देहेति । देहाद्यभावश्च कुतस्त्यानामिति तत्राह—

---

(१) भावप्रधानोनिर्देशः (२) वेनः ।

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

वैकुण्ठेति, तेषां प्राकृतदेहाद्यभावेन जन्मादिकं कथं घटत इति शङ्क्यत इत्यर्थः। देहसम्बन्धः देहयोगः तस्य सम्बन्धः निमित्तभूतः शाप एतच्छापनिमित्तं अनेन देहयोगं तन्निमित्तशापं तन्निमित्तं च व्याख्यातुमर्हसीत्यर्थसमुदायो लभ्यत इत्यर्थः ॥ ३४ ॥

तदर्थजातं कुतोवगम्यत इतिपरिहारवचनादित्यत आदित वक्ति एकदेति ॥ ३५ ॥

पञ्चषड्ढायनार्भाभाः पञ्चवर्षाः षड्वर्षाः अर्भाः अर्भका बालास्तद्वदाभा दीप्तिर्येषां ते तथा तत्समाना इत्यर्थः। शिशून्मत्वा पुरप्रवेशकारणाय वेषान्तरमापन्नानित्याशङ्क्येत्यर्थः। द्वाःस्थौ द्वारि स्थौ जयविजयौ तान् सनन्दनादीन् प्रत्यषेधतां वेत्रविधानेन न्यवारयतामित्यन्वयः। द्वाःस्थावित्युक्त्या जयविजययोः अधिकारस्थत्वं सूचयति तेन वैकुण्ठे अधिकारस्थिनाः मुक्ताश्चेति द्विविधा जनाः सन्ति। तत्राधिकारस्था देहादियोगित्वाद्धरशापयोग्याः पश्चान्नयोग्या इति ज्ञायते तदुक्तम् "अधिकारस्थिताश्चैव विमुक्ताश्च द्विधाजनाः। विष्णुलोकस्थितास्तेषां वरशापादियोगिनः। अधिकारस्थिता मुक्तिं नियतं प्राप्नुवन्ति च। विमुक्त्यनन्तरं तेषां वरशापादयो न तु। देहेन्द्रियासु मुक्ताश्च पूर्वम्पश्चान्नतैर्युताः॥ अप्यभीमानिभिस्तेषां देवैः सात्मोत्तमैर्युताः" ॥ इति अनेन वैकुण्ठे मुक्तामुक्तस्थानद्वयमस्तीति ज्ञायते ३६ ॥ ३७ ॥ ३८ ॥ ३९ ॥ ४० ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

नच शास्त्रविहितेनैव भगवद्धर्मेण सिद्धिः स्यात् न तद्विहितेन कामादिनेति वाच्यम्; यतः कामाद्द्वेषादिति । यथा विहितया भक्त्या ईश्वरे मन आवेश्य तद्गतिं गच्छन्ति तथैवाविहितेनापि कामादिना बहवो गता इत्यर्थः। तदघं तेषु कामादिषु मध्ये यद्द्वेषभययोरघं भवति तद्धित्वैव भयस्यापि द्वेषसम्मिलितत्वादघोत्पादकत्वं ज्ञेयम्. अत्र केचित् काम एवाघं मन्यन्ते । तत्रेदं विचार्य्यते भगवति काम एव केवलः पापावहः किं वा पतिभावयुक्तः अथवा उपपतिभावयुक्त इति. स एव केवल इति चेत् स किं द्वेषादिगणपातित्वात् तद्वत् स्वरूपेणैव वा, परम शुद्धे भगवति यदधरपानादिकं यच्च कामुकत्वाद्यारोपणं तेनातिक्रमेण वा, पापश्रवणेन वा ? नाद्येन. "उक्तं पुरस्तादेतत्ते चैद्यः सिद्धिं यथागतः। द्विषन्नपि हृषीकेशं किमुताधोक्षजप्रियाः" ; इत्यादौ द्वेषादेर्न्यक्कृतत्वात्, तस्य तु स्तुतत्वात्. अतस्तत्र प्रिया इति स्नेहवत् कामस्यापि प्रीत्यात्मकत्वेन तद्वदेव न दोषः। तादृशीनां कामो हि प्रेमैकरूपः "यत्ते सुजातचरणाम्बुरुहं स्तनेषु भीताः शनैः प्रियदधीमहि कर्कशेषु। तेनाटवीमटसि तद्व्यथते न किं स्वित् कूर्पादिभिर्भ्रमति धीर्भवदायुषां नः" इत्यादावतिक्रम्यापि स्वसुखं तदानुकूल्य एव तात्पर्य्यदर्शनात्. सैरन्ध्यास्तु भावोरिरंसाप्रायत्वेन श्रीगोपीनामिव च केवलं तत्तात्पर्य्याभावात्तदपेक्षयैव निन्द्यते नतु स्वरूपतः "सानङ्गतप्तकुचयोः" इत्यादौ "अनन्तचरणेन रुजोऽमृजन्ती" इति "परिरभ्य कान्तमानन्दमूर्त्तिम्" इति काव्यद्वारा तत्स्तुतेः तत्रापि "सहोष्यतामिह प्रेष्ठ ! दिनानि कतिचिन्मया" इत्यत्र प्रीत्यभिव्यक्तेश्च। तदेवं तस्य कामस्य द्वेषादिगणान्तःपतितत्वं परिहृत्य तेन पापावहत्वं परिहृतम्. अथ कामुकत्वाद्यारोपणाधरपानादिरूपस्तत्र व्यवहारोऽपि नातिक्रमहेतुः यतो "लोकवत्तु लीलाकैवल्यम्" इति न्यायेन लीला तत्र स्वभावत एव सिद्धा. तत्रच श्रीभूलीलादिभिस्तस्य तादृशलीलायाः श्रीवैकुण्ठादिषु नित्यसिद्धत्वेन स्वतन्त्रलीलाविनोदस्य तस्याभिरुचितत्वावगमात्. तादृशलीलारसमोहस्वाभाविकं भगवत्ताद्यनुसन्धानमपि तत्कामुकत्वादिमननमपि च तदभिरुचितत्वेनैवावगम्येत. तथा तत्प्रेयसीजनानामपि तत्स्वरूपशक्तिविग्रहत्वेन परमशुद्धरूपत्वात् ततो न्यूनत्वाभावाच्च तदधरपानादिकमपि नाननुरूपम् । पूर्वमुक्त्या तदभिरुचितमेव। तासां तत्स्वरूपशक्तिविग्रहत्वं श्रीकृष्णसन्दर्भे दर्शितमस्ति दर्शयिष्यते च श्रीदशमे, नच प्राकृतराजाजने दोषः प्रसञ्जनीयः तद्योग्यं तादृशं भावं स्वरूपशक्तिः प्रहृष्टा प्राप्यैव तदिच्छयैव तत्प्राप्तेः। अथ पापश्रवणेन च न पापावहोऽसौ कामः तच्छ्रवणादेव. अतः पतिभावयुक्ते च तत्र सुतरां न दोषः तत्तुल्य स्तुतिः श्रूयते "यास्संपर्य्यचरन् प्रेम्णा पादसंवाहनादिभिः। जगद्गुरुं भर्तृबुद्ध्या तासां किं वर्ण्यते तपः" इति महानुभावगतीनामपि तद्भावः श्रूयते । यथा श्रीमध्वाचार्य्यधृतं महाकौर्म्मवचनं "अग्निपुत्रा महात्मानस्तपसा स्त्रीत्वमापिरे । भर्त्तारञ्च जगद्योनिं वासुदेवमजं विभुम्" इति अत एव वन्दितम् "पतिपुत्रसुहृद्भ्रातृपितृवन्मातृवद्धरिम् ये ध्यायन्ति सदोद्युक्ताः तेभ्योऽपीह नमो नमः" इत्यनेन अथोपपतिभावेन च न पापावहोऽसौ "यत्पत्यपत्यसुहृदामनुवृत्तिः" इत्यादिना ताभिरेवोत्तरितत्वात् "गोपीनां तत्पतीनाञ्च" इत्यादिना, श्रीशुकदेवेन "न पारयेऽहं निरवद्य संयुजाम्" इत्यनेन स्वयं श्रीभगवता तादृशानामन्येषामपि तद्भावो दृश्यते यथोदाहरिष्यते श्रीदशमे "पुरा महर्षयः सर्वे दण्डकारण्यवासिनः" इत्यादि । अतः पुरुषेष्वपि स्त्रीभावेनोद्भवात् भगवद्विषयत्वात् न प्राकृतकामदेवतोद्भावितः प्राकृतकामोऽसौ किन्तु "साक्षान्मन्मथमन्मथः" इति श्रवणात् आगमादौ तस्य कामत्वेनोपासनाच्च भगवदेकोद्भावितोऽप्राकृत एवासौ काम इति ज्ञेयम् अत एव मुमुक्षुमुक्तनित्यपार्षदानामपि वाञ्छनीयोऽसाविति दर्शितम् श्रीदशमे "एताः परं तनुभृतः" इत्यादिना. यतः श्रुतयोपि "नित्यसिद्धगोपिकाभावाभिलाषिण्यः साधनरूपेणैव तद्गणान्तःपातिन्यो बभूवुः" इति "निभृतमरुन्मनोक्ष" इत्यादि श्रुतिस्तवे दर्शयिष्यते। तदेवं साधु व्याख्यातं कामादित्यादौ द्वेषभययोरेवाघमित्यादि ॥ २९ ॥

अथ 'बहवस्तद्गतिं गताः' इत्यत्र निदर्शनमाह—गोप्य इति सार्द्धेन। गोप्य इति साधकचरीणां गोपीविशेषाणां पूर्वावस्थामवलम्ब्योच्यते, वयमिति. यथा श्रीनारदस्य "प्रयुज्यमाने मयि तां शुद्धां भागवतीं तनुम्." इत्याद्युक्तरीत्या पार्षददेहत्वे सिद्धे तेन स्वयं वयमिति निजपूर्वावस्थामवलम्ब्योच्यते। तत्रैव वैधी भक्तिः।

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

अधुना लब्धरागस्य तस्य "न मय्येकान्तभक्तानां गुणदोषोद्भवा गुणाः। गुणदोषदृशिर्दोषो गुणस्तूभयवर्जितः" इति न्यायेन विध्यनधीना रागात्मिकैव विराजत इति. अत एव तद्गतिं गता इति तेषां फलप्राप्तेरप्यतीतत्वनिर्देशः एवमेव वक्ष्यते स्वयं भगवता "केवलेन हि भावेन गोप्य." इत्यादि। "मत्कामा रमणम्" इत्यादौ "सङ्गाच्छतसहस्रशः" इति च अत्र ता गोप्य इवाधुनिकयश्च तद्गुणादिश्रवणेनैव तद्भावा भवेयुः यथोक्तम्. "श्रुतमात्रोऽपि यः स्त्रीणां प्रसह्याकर्षते मनः। उरुगायोरुगीतो वा पश्यन्तीनां कुतः पुनः" इति। अथ पार्षदचरस्यापि चैद्यस्यागन्तुकोपद्रवाभासदर्शनेनैव साधकत्वनिर्देशः। सम्बन्धाद्यः स्नेहो रागस्तस्माद्वृष्णयो यूयं चेत्येकम्. 'तस्माद्वैरानुबन्धेन' इत्यादौ कामादित्यादौ चोक्तस्यैवार्थस्योदाहरणवाक्येऽस्मिन् तदैकार्थ्यावश्यकत्वात् पञ्चानामित्यनुरोधात् उभयत्रापि सम्बन्धस्नेहयोर्द्वयोरपि विद्यमानत्वाच्च। सम्बन्धग्रहणं रागस्यैव विशेषज्ञापनार्थं गोपीवदत्रापि सम्बन्धे स्नेहे च वृष्णिविशेषाः पाण्डवसम्बन्धिविशेषाश्च पूर्वावस्थाप्रचलस्य साधकत्वेन निर्दिष्टाः। अतः सम्बन्धे स्नेहोऽपि तदभिरुचिमात्रं ज्ञेयम्. 'भक्त्या विहितया' अस्या एव प्रतिलब्धत्वेन आगमार्गे निर्देष्टुमुपक्रान्तत्वात् ॥ ३० ॥

यदि द्वेषेणापि सिद्धिस्तर्हि वेनः किमिति नरके पातित इत्याशङ्क्याह—कतम इति। पुरुषं भगवन्तं उद्दिश्य पञ्चानां वैरानुबन्धादीनां मध्ये वेनः कतमोऽपि न स्यात् तस्य तं प्रति प्रासङ्गिकनिन्दामात्रात्मकं वैरं. न तु वैरानुबन्धः तत्तीव्रध्यानाभावात् पापमेव तत्र प्रतिफलितमिति भावः। ततोऽसुरतुल्यस्वभावैरपि तस्मिन् स्वमोक्षार्थं वैरानुष्ठानसाहसं न कर्तव्यमित्यभिप्रेतम् अत एव "ये वै भगवता प्रोक्ता उपाया ह्यात्मलब्धये" इत्यादेरपि तेषु अनिष्टाप्तिर्व्याहन्यते अनभिप्रेतत्वेनाप्रोक्तत्वात् तस्मादेव तस्मादिति अत्रापि पूर्ववन्निवेशयेदिति सम्मतिमात्रं न विधिः केनापि तेष्वप्युपायेषु युक्ततमेनैकेनेत्यर्थः। अहो बलादागतबहुप्रयत्नसाध्यभक्तिमार्गेण चिरात् साध्यते स एव चिराद्भावविशेषमात्रेण तत्र च द्वेषादीनामपि तस्मादेवम्भूते परमसद्गुणसद्भावे तस्मिन् 'दूरेऽस्तु पामरजनाज्ञस्य वैरस्य वार्ता' को वाधमः औदास्यमवलम्ब्य प्रीतिमपि न कुर्यादिति रागानुगायामेव तस्य युक्ततमत्वमङ्गीकृतं भवति ॥ ३१ ॥

चैद्यदन्तवक्रौ तु नासुरौ किन्तु हरेः स्वभक्तिप्रवर्तकविप्रकुलदाक्षिण्यभगस्वैरलीलेच्छया तदनुकारिणावेवेत्यभिप्रायं प्रश्नोत्तरभ्यां दर्शयितुमाह—मातृष्वस्रेय इति। तत्र तयोरन्यथाभावः सर्वथा न सम्भवत्येवेति प्रश्नस्यार्थः "न च पुनरावर्त्तते" इति श्रुतेः। "अनावृत्तिःशब्दात्" इति न्यायात् "मामुपेत्य तु कौन्तेय पुनर्जन्म न विद्यते" इति श्रीगीताभ्यः। सन्यायश्चैवासौ सिद्धान्तस्तु तत्रेतिहासमात्रम् तच्च पूर्वयुक्त्यैव सम्भवतीति तदभिप्रायः वक्ष्यते च स्वयम् 'विष्णुचक्रहतांहसौ' इति व्याख्यास्यते च तैः तयोः पापमेव हतं न तु ताविति ॥ ३२—३४ ॥

एकदेति युग्मकम्। यदृच्छया केनापि भाग्योदयेन विष्णोर्लोकं जग्मुः ॥ ३५ ॥ ॥ ३६ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी।

भद्राभद्रभाववन्तः सर्व एव तं प्राप्नुवन्ति साधनतारतम्यात् फलतारतम्यन्तु युक्त्या स्वयं विवेचनीयमित्याह—कामादिति। तदेवं द्वेषजन्यमघं हित्वा द्वेषजन्येनैवावेशेन विनष्टीकृत्येत्यर्थः। न चात्र कामेऽप्यघं व्याख्येयम् "द्विषन्नपि हृषीकेशं किमुताधोक्षजप्रियाः" इति तद्गतीनां प्रियात्वेनाख्यायमानत्वात् तद्गतिं तदीयां गतिं प्रेमाणं मोक्षञ्च ॥ २९ ॥

भावानामाश्रयपदानि नामग्राहमाह—गोप्यः कामात् पूर्वव्याख्यायुक्त्यैव स्नेहोत्थादेव न तु सामान्यतः तादृशीष्वप्यायत्वे कुब्जाद्या इति प्रयुज्येत भयात् कंसः कृष्णवधोद्यतानन उद्धतात् वृष्णयो यादवाः यूयं पाण्डवाश्च सम्बन्धात् पुत्रभ्रात्रादिभावात् मातुलेयभ्रातृस्वस्त्रीयादिभावाच्च, कीदृशात् स्नेहात् स्नेहमयादिति सत्राजित्प्रसेनशतधन्वकर्णदुर्योधनादयो व्याकुलाः न चात्र स्नेहस्य पृथक् तत्प्राप्तिसाधनत्वं व्याख्येयम्, उपसंहारेऽप्य पञ्चसंख्यत्वेनैव भावानां निरूपणात् वयं नारदादयो भक्त्या तद्गतिं गता इति पूर्वस्यैवानुषङ्गः तत्र गोप्यः प्रेमवत् पार्षदात्मताम् कंसः सायुज्यं चैद्यदन्तवक्रपौण्ड्रकाः सारूप्यं अन्ये चासुराः यथायोग्यं सायुज्यसालोक्यादिकं वृष्णयः पाण्डवाश्च सख्यादिभाववत्पार्षदत्वं नारदादय ऐश्वर्यज्ञानवत् पार्षदत्वमित्येवं यथा साधनं तत्तत्प्राकर्षिकवाक्यदृष्ट्या निर्धारितां गतिं तदीयां गताः अत्र "व्रजवासिनां हितार्थाय धृतो गोवर्द्धनो मया" इति हरिवंशवाक्यात् नन्दादिगोपानामपि वृष्णिवत्स्वाद्यैश्वर्यज्ञानशून्यत्वेन स्नेहवत्त्वाधिक्यात् पुत्रादिसम्बन्धस्यानित्यत्वेऽपि प्राप्यत्वं प्रमाणतोऽनुक्तं ज्ञेयम्। ननु, तर्हि शिशुपालवद्भगवन्निन्दात्यन्तपातकी वेनः किमिति नरके पतितस्तत्राह—पुरुषं भगवन्तं प्रति पञ्चानां पूर्वश्लोकोक्तानां भावानां मध्ये कतमस्याप्यनास्पदत्वात् कतमोऽपि न भवति ततावद्वेषीव स्नेहवत्कामवान् न च कंसवद्भीतः तत्र मां हनिष्यतीति बुद्ध्या भगवद्ध्यानावेशमयेन शिशुपालवत् द्वेष्टापि वृष्ण्यादिरिव तत्र कश्चापि सम्बन्धवान् नापि नारदादिरिव भक्त इत्यर्थः तेन शिशुपालादिभिश्च प्रतिकूलभावं दिधीर्षुर्वेन इव नरकं यातीति भावः। यस्मादेवं तस्मात् केनाप्यप्रतिकूलेनैव उपायेन कृष्णे मनो निवेशयेदिति विभेदातस्माद्वैरानुबन्धेनेति श्लोकोक्तविधिना सहैकार्थं ज्ञेयम् ॥ ३०—३१ ॥

तदेवं शिशुपालप्रस्तावादायातं भावमार्गसिद्धान्तं समाप्य श्रीकृष्णे शिशुपालस्य वैरानुबन्धे को हेतुरित्यपेक्षायामाह—मातृष्वस्रेय इति। पदाद्वैकुण्ठात् च्युतौ ॥ ३२ ॥

हरिदासावप्यभिमृशति स्पृशति अश्रद्धेयः शापवाक्ये विश्वासो नोत्पद्यते असम्भवादिति भावः ॥ ३३ ॥

असम्भवमेवाह—देह इति। जन्महेतुभूतैः प्राकृतैर्देहेन्द्रियासुभिर्हीनानां शुद्धसत्त्वमयदेहानामित्यर्थः प्राकृतदेहसम्बन्धेन

अशपन्कुपिता एवं युवां वासं न चार्हथः ।
रजस्तमोभ्यां रहिते पादमूले मधुद्विषः ।
पापिष्ठामासुरीं योनिं बालिशौ यातमाश्वतः ॥ ३७ ॥
एवं शप्तौ स्वभवनात्पतन्तौ तैः कृपालुभिः ।
प्रोक्तौ पुनर्जन्मभिर्वां त्रिभिर्लोकाय कल्पताम् ॥ ३८ ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

स्वसम्बन्धम् एतदाख्यानमाख्यातुमर्हसीति श्रीस्वामिचरणानां व्याख्या ॥ ३४ ॥ ३५ ॥

पञ्च वा षड्वा हायनानि येषां ते अर्भा बालास्तद्वदाभा येषान्ते च पूर्वेषां मरीच्यादीनामपि दिग्वाससः शिशून् मत्वा पुंवद्भाव-आर्षः ॥ ३६ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

यथा भक्त्या तथैव कामादिना ईश्वरे मन आवेश्य तदघं भगवत्पदप्राप्तिप्रतिबन्धकं स्वपापं हित्वा तद्गतिं भगवत्पदं गताः प्राप्ताः ॥ २९ ॥

तत्पञ्चकामेदभक्तान् वर्णयति—गोप्य इति । वृष्णीनां युष्माकं च यः कृष्णे सम्बन्धस्तस्माद्यः स्नेहस्तस्मात् वृष्णयो यूयं च तद्गतिं गता इति योजना भक्त्या यथोक्तेन भजनेन ॥ ३० ॥

कामादिभिरेव भगवच्चिन्तनपराणां मुक्तिरित्यपि नियमो नास्तीत्याह—कतम इति । पुरुषं भगवन्तंप्रति कामादिभिश्चिन्तयतां पञ्चानां मध्ये वेनः कतमोपि न. स हि "भगवन्निन्दया वेनो द्विजैस्तमसि पातितः" इति वाक्यात्, द्विजैस्तमसि पातितोऽपि भगवता पुत्रीभूतेन तमसः पुनरुद्धृतः "वङ्गोऽप्युत्तरत्तमः" इति वचनात्. अतोभगवन्निन्दया भगवति मनोनिवेशनेन तत्कृपापात्रतां प्राप्त उक्तेभ्यः पञ्चभ्योऽन्यः तस्मात्केनाप्युपायेन कामादिपञ्चप्रकारेष्वेकतमेन निन्दयाच साङ्केत्यनामग्राहिस्यादिना वा आसंत्यजिज्ञासुत्वार्थित्वाद्यन्यतमेन वा मनः श्रीकृष्णे निवेशयेत् इति सिद्धान्तः ॥३१॥

शिशुपालो दन्तवक्त्रश्चेति द्वौ न कर्मवशौ जीवौ किन्तु भगवत्पार्षदप्रवरौ भगवदिच्छया भगवदवतारभूतसनत्कुमारशापव्याजेन वैकुण्ठादागतौ, पुनर्वैकुण्ठं गतौ इत्याह—मातृष्वस्त्रेय इत्यादिना; पदाद्वैकुण्ठात् ॥ ३२ ॥

हरिदासौ अभिमृशति विषयीकरोतीति तथा किञ्च हरेः एकान्तिजां भवो जन्म च अश्रद्धेय इवाभाति ॥ ३३ ॥

प्राकृतदेहादिहीनानाम् अप्राकृतदेहादिमतामित्यर्थः । देहसम्बन्धेन जन्ममरणार्हाप्राकृतदेहसम्बन्धेन सम्बन्धमेतदाख्यानमाख्यातुं वर्णयितुमर्हसि ॥ ३४ ॥ ३५ ॥

पञ्च वा षड्वा हायनानि संवत्सराः यस्य तथाभूतो योऽर्भो-बालस्तद्वदाभा येषां ते पूर्वेषां भवादीनामपि पूर्वजाः ॥ ३६ ॥

भाषा टीका ।

बहुत जन काम द्वेष भय स्नेह और भक्ति से ईश्वर में मन लगा कर कामादि से होने वाले पाप को त्याग कर परमात्मा की गति को प्राप्त हुए ॥ २९ ॥

काम से गोपी, भय से कंस, द्वेष से शिशुपालादि राजा लोग, संबंध से यादव लोग, स्नेह से तुमलोग हे राजन् ! तथा भक्ति से हम लोग गोविन्द को प्राप्त हुए ॥ ३० ॥

इन पाचों में से राजा वेन तो भगवान के प्रति कोई भी नहीं हो सक्ता है इसलिये वह नरक में गिराया गया तस्मात् किसी न किसी प्रकार से श्रीकृष्ण में मन लगाना चाहिये ॥ ३१ ॥

हे युधिष्ठिर ! तुमारी मौसी का पुत्र शिशुपाल और दंतवक्त्र ये दोनो विष्णु के पार्षदों में श्रेष्ठ थे, ब्राह्मणों के शाप से अपने पद से च्युत हो गये ॥ ३२ ॥

युधिष्ठिर उवाच ।

युधिष्ठिरजी बोले, कि हरिदासो को स्पर्श करने वाला कैसा शाप और किस हेतु से शाप हुआ, भगवान के एकही भक्तों का इस संसार में जन्म लेना तो कुछ ठीक नहीं मालूम पडता ॥ ३३ ॥

क्योंकि प्राकृत देह इन्द्रिय प्राणो से हीन ऐसे वैकुण्ठ को इस प्राकृत देह के संबंध से होने वाले इस आख्यान को आप कहने योग्य है ॥ ३४ ॥

नारद उवाच ।

नारदजी बोले, कि। एक समय ब्रह्मा के पुत्र सनंदनादि को ने विष्णु के लोक की जाने की इच्छा की, और तीनों भुवनमे विचरते २ वैकुण्ठ लोक में पहुंचे ॥ ३५ ॥

देखने में पांच छैः वर्ष के बालक से जाने जाते परंच अवस्था मे तो पूर्व ( मरीच्यादि ) लोगों के भी पहिले उत्पन्न हुए हैं दोनों द्वारपालों ने इन को नग्नदेखकर बालक जान भीतर जाने को रोक दिये ॥ ३६ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

वासमपि नार्हथः कुतः पुनस्तत्सेवामिति चकारार्थः हे बालिशौ ! अतो हेतोराशु यातम् ॥ ३७ ॥

जज्ञाते तौ दितेः पुत्रौ दैत्यदानववन्दितौ ।
हिरण्यकशिपुर्ज्येष्ठो हिरण्याक्षोऽनुजस्ततः ॥ ३९ ॥

हतो हिरण्यकशिपुर्हरिणा सिंहरूपिणा ।
हिरण्याक्षो धरोद्धारे बिभ्रता सौकरं वपुः ॥ ४० ॥

हिरण्यकशिपुः पुत्रं प्रह्लादं केशवप्रियम् ।
जिघांसुरकरोन्नाना यातना मृत्युहेतवे ॥ ४१ ॥

सर्वभूतात्मभूतं तं प्रशान्तं समदर्शनम् ।
भगवत्तेजसा स्पृष्टं नाशक्नोद्धन्तुमुद्यमैः ॥ ४२ ॥

ततस्तौ राक्षसौ जातौ केशिन्यां विश्रवस्सुतौ ।
रावणः कुम्भकर्णश्च सर्वलोकोपतापनौ ॥ ४३ ॥

तत्रापि राघवो भूत्वा न्यहनच्छापमुक्तये ।
रामवीर्यं श्रोष्यसि त्वं मार्कण्डेयमुखात्प्रभो ! ॥ ४४ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

वां युवयोस्त्रिभिर्जन्मभिः लोकाय स्वस्थानप्राप्तये कल्पतां तावताऽयं शापः समाप्यतामिति पुनः प्रोक्तावित्यर्थः ॥ ३८ ॥ ३९ ॥

धरोद्धारे निमित्ते तत्प्रतिघाती हतः ॥ ४० ॥

हिरण्यकशिपोर्वधे कारणं सूचयति--हिरण्यकशिपुः पुत्र-मिति ॥ ४१ ॥

सर्वभूतानामात्मभूतं कुतः समं ब्रह्मैव पश्यतीति तथा ततः प्रशान्तं द्वेषादिरहितं अत एव भगवत्तेजसा स्पृष्टं व्याप्तम् उद्यमैः शस्त्रास्त्रप्रहारादिभिः ॥ ४२ ॥

विश्रवसः सुतौ ॥ ४३ ॥

न्यहनत् हतवानित्यर्थः । तर्हि तदेव कथनीयमित्युत्सुकं प्रत्याह—रामवीर्यमिति ॥ ४४ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

ताभ्यां प्रतिषिद्धास्ते कुपिताः सन्तः एवं वक्ष्यमाणरीत्या अशपन्. शापप्रकारमेवाह—युवामित्यादिना । रागद्वेषादिरहिते भगवतः पादमूले वासं कर्तुं युवां नार्हथः अप्राकृतं भगवत्पादारविन्दमूलमुपाश्रित्यात्र स्थातुं प्राकृतरागद्वेषादियुक्तौ युवां नार्हथः इत्यर्थः किन्तु बालिशौ मूर्खौ युवामतो भगवत्स्थानादाशु शीघ्रं पापिष्ठां रागद्वेषादिबहुलामासुरीं योनिमासुरजन्मेत्यर्थः यातं प्राप्नुतम् ॥ ३७ ॥

एवमित्थं शप्तौ तौ पार्षदौ स्वस्थानात्पतन्तौ कृपालुभिस्तैः सनकादिभिः प्रोक्तौ तदेवाह—पुनरिति । पुनर्वां युवयोस्त्रिभिर्जन्मभिर्लोकाय पुनस्तल्लोकप्राप्त्यै कल्पतां शापमोक्ष इति शेषः तावता कालेन शापः समाप्यतामित्यर्थः ॥ ३८ ॥

तावेव पार्षदौ विप्रैः शप्तौ इह लोके दितेः पुत्रौ जज्ञाते जातौ बभूवतुः तत्र हिरण्यकशिपुर्ज्येष्ठस्ततो हिरण्याक्षस्तस्यानुजः ॥ ३९ ॥

तत्र ज्येष्ठो हिरण्यकशिपुर्नृसिंहरूपिणा भगवता हतः हिरण्याक्षस्तु धरोद्धारे भूम्युद्धारे निमित्ते सौकरं वाराहं वपुर्बिभ्रता भगवता हतः ॥ ४० ॥

हिरण्यकशिपुवृत्तान्तप्रश्नावतरणाय तद्वृत्तान्तं संग्रहेणाह—हिरण्यकशिपुरिति । स केशवस्य भगवतो निरतिशयप्रियं प्रह्लादं पुत्रं जिघांसुर्हन्तुमिच्छुः पुत्रमरणनिमित्तं नानाविधा यातनाः अकरोत् ॥ ४१ ॥

यातनाः कुर्वाणोऽपि हिरण्यकशिपुस्तं पुत्रं हन्तुमुद्यमैः सर्वोपायैरपि नाशक्नोत्. तत्र हेतुं वदंस्तं विशिनष्टि—भगवतस्तेजसा स्पृष्टं व्याप्तं, तत्र हेतुः, प्रशान्तमशनायापिपासादिरहितं प्रशान्तत्वेव भगवत्तेजःस्पर्श इति भावः । यद्वा, अत एव प्रशान्त तत्र हेतुः समदर्शनं सुखदुःखादिषु द्वन्द्वेषु समदृष्टिर्यस्समः स एव प्रशान्त इति भावः । यद्वा, अत एव समदर्शनं सर्वभूतानामात्मा ईश्वरस्तत्कृतं तत्प्रकारकतया तदात्मतामापन्नम् "शास्त्रदृष्ट्या तूपदेशो वामदेववत्" इत्युक्तरीत्या यथा "वामदेवस्तद्धैतत्पश्यन्नृषिर्वामदेवः प्रतिपेदे अहं मनुरभवं सूर्यश्चाहं कक्षीवानृषिरस्मि विप्रः" इति सर्वभूतान्तरात्मानं भगवन्तं स्वशरीरकं धीसारकृत्स्न सर्वप्रकारतया स एवावस्थित इति प्रकारभेदेऽपि प्रकार्यैक्यात्तदभिप्रायेण वामदेवो मन्वादिभिः

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

महात्मनो ऽसेदमनुसंहितवानेवं प्रह्लादोऽपि " अहं हरिः सर्वमिदं जनार्दनः" इति प्रकारैक्याद्विशिष्टवस्त्वेकदेशत्वात्स्वस्मिन्स्वनिष्ठत्वाभावमालक्ष्याहमेव सर्वभूतान्तरात्मा भगवानित्यनुसंहितवानित्याशयेन तस्य विशेषणं सर्वभूतात्मभूतमित्युक्तम् ॥ ४२ ॥

ततस्तावेव हिरण्यकशिपुहिरण्याक्षौ द्वितीये जन्मनि कैकस्यां भार्यायां विश्रवस्सुतौ जातौ तत्र ज्येष्ठो रावणोऽनुजस्तु कुम्भकर्णस्तावुभौ सर्वलोकानुपतापयतः खेदयत इति सर्वलोकोपतापनौ ॥ ४३ ॥

तत्रापि जन्मनि भगवान् राघवो भूत्वा शापमुक्तये तयोः शापोत्तारणाय न्यहनत्. अनेन हितकारित्वं भगवतः सूचितम् कोऽसौ राघवः? कीदृश तद्वीर्यम्? कथं वा हतवान्? इत्यत्राह—रामवीर्यमिति। वीर्यग्रहणं तज्जन्मादीनामप्युपलक्षणं तदवतारतद्वीर्यादिकं सर्वं, हे प्रभो! मार्कण्डेयमुखाच्छ्रोष्यसि अतो नात्र तन्मया वितन्यत इति भावः ॥ ४४ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

नानायातनाः बहुविधतीव्रवेदनाकारणानि ॥ ४१ ॥

सर्वभूतात्मनि चराचरान्तर्यामिणि हरावेव भूतं स्थितम् ॥४२॥

नन्वासुरीं योनिं यातम् इत्ययं शापः आसुरयोनिप्राप्तिहेतुः तत्र जयविजययोः दित्यां जन्म तदनगुणं केशिन्यादिजन्म कथं युज्यते? " राक्षसीमासुरीं चैव प्रकृतिं मोहिनीं श्रिताः " इति भिन्नयोनित्वादितीमां मन्दाशङ्काम्—

> " हिरण्यकशिपुर्भूतममन्यत मृतौ हरिम्।
> अतो भयानको जातस्तत्र राजानमेव च ॥
> मत्वा राजैव सञ्जातः कृष्णं चक्रादिलक्षणैः।
> मृतिकाले हरिश्चैव मत्वा भक्त्यैव केवलम्।
> द्वास्स्थत्वं हरिमाविश्य प्रापैवमनुजोऽपि तु " ॥

इत्यनेन परिहर्तव्यम्. " यं यं वापि स्मरन् भावं त्यजत्यन्ते कलेवरम्। तं तमेवैति कौन्तेय!" इत्यादेः सुरविरुद्धत्वमुभयोः सममितो हरिद्वेषश्च सम इति भावः ॥ ४३—४५ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

अशपदिति सार्द्धकम्। रजस्तमोभ्यां रहिते प्राकृतसत्त्वादिराहित्येऽपि तन्मात्रराहित्यस्य विवक्षितत्वात्. प्राकृतसात्त्विकत्वेनैतादृशो दोषः सम्भवतीति ॥ ३७—४१ ॥

तमिति। यस्माद्भगवत्तेजसा स्पृष्टं नित्यतदाविष्टत्वात् तस्मात् सर्वेषां भूतानामात्मभूतं परमप्रेमास्पदं तस्मादेव प्रशान्तं विक्षेपरहितम् अन्यत्र समदर्शनं रागद्वेषरहितञ्च तस्मादेव च नाशक्नोदिति ॥ ४२—४५ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी।

वां युवयोस्त्रिभिर्जन्मभिर्वा युवां लोकाय वैकुण्ठं प्रापयितुं कल्पतां समर्थो भवतु शाप इति शेषः ॥ ३७—३८—३६ ॥

धरोद्धारे कर्त्तव्ये सति ॥ ४०—४१ ॥

सर्वेषां भूतानामात्मभूतम् आत्मवत्प्रेष्ठं स्वद्रेष्टर्य्यपि पितरि द्वेषाभावात् प्रशान्तं स्वपरदुःखादीनां तुल्यदर्शनात्समदर्शनम् ॥४२-४४॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

रजस्तमोभ्यां रहिते रजस्तमोपलक्षितकार्यकारणप्रकृतिविलक्षणइत्यर्थः मधुद्विषः पादौ मूलमाश्रयो यस्य तस्मिन् वैकुण्ठे वासं युवां नार्हथ एवं ते कुपिता अशपन् ॥ ३७ ॥

बालिशौ मूढौ अतः आशु शीघ्रमासुरीं योनिं यातम् एवं शप्तौ पतन्तौ तैः कृपालुभिस्त्रिभिर्जन्मभिः पुनर्लोकाय वैकुण्ठाय कल्पतां प्राप्यताम् ॥ ३८ ॥

जज्ञाते जातौ ॥ ३९ ॥

धराया उद्धारे कर्तव्ये सति ॥ ४० ॥

यातनास्तीव्रवेदनाः ॥ ४१ ॥

सर्वेषां भूतानामात्मा भगवान् स भूतोऽनुभूतः साक्षाद्दृष्टो येन तम् अतएव भगवत्तेजसा स्पृष्टं व्याप्तम् अतएव उपर्महन्तुं नाशक्नोत् ॥ ४२ ॥

विश्रवस्सुतौ विश्रवः पुत्रौ ॥ ४३ ॥ ४४ ॥

---

भाषा टीका।

तव उन्होंने कुपित होकर शाप दिया कि तुम दोनों रज तम से रहित इस भगवान के लोक में वास के योग्य नहीं हो। इस लिये हे मूर्ख हो तुम दोनो शीघ्र पापिष्ठ आसुरी योनि को प्राप्त हो ॥ ३७ ॥

ऐसे शाप देने पर जब अपने वचन से पतन होने लगे तब कृपालु मुनिलोगों ने कहा कि तुम फिर तीन जन्म में इस लोक को प्राप्त हो जावोगे ॥ ३८ ॥

वोही दोनों दैत्यदानवों से वंदित ऐसे दिति के पुत्र उत्पन्न हुए उनमें ज्येष्ठ हिरण्यकशिपु और छोटा हिरण्याक्ष हुआ ॥ ३९ ॥

हिरण्यकशिपुको हरिने सिंहरूप धारण कर मारा, और हिरण्याक्ष को पृथिवी के उद्धार करने के समय ( सूकर रूप ) वराहावतार धर कर मारा ॥ ४० ॥

गोविन्द के प्रिय और अपने पुत्र ऐसे प्रल्हाद को मार ने की इच्छावाला हिरण्यकशिपु पुत्र को मारने के लिये नाना प्रकार की यातना ( त्रास ) देने लगा ॥ ४१ ॥

तावेव क्षत्रियौ जातौ मातृष्वस्रात्मजौ तव ।
अधुना शापनिर्मुक्तौ कृष्णचक्रहतांहसौ ॥ ४५ ॥
वैरानुबन्धतीव्रेण ध्यानेनाच्युतसात्मताम् ।
नीतौ पुनर्हरेः पार्श्वं जग्मतुर्विष्णुपार्षदौ ॥ ४६ ॥

युधिष्ठिर उवाच ।

विद्वेषो दयिते पुत्रे कथमासीन्महात्मनि ।
ब्रूहि मे भगवन्येन प्रह्लादस्याच्युतात्मता ॥ ४७ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां
वैयासिक्यां सप्तमस्कन्धे युधिष्ठिरनारदसम्वादे
प्रथमोऽध्यायः ॥ १ ॥

भाषा टीका ।

परंच सर्व प्राणियों का आत्मभूत प्रशांत और समदर्शी तथा भगवत्तेज से रक्षित ऐसे प्रह्लाद को हिरण्यकशिपु बहुत यत्नों से भी न मार सका ॥ ४२ ॥

फिर दूसरे जन्म में वे दोनों पार्षद् विश्रवा ऋषि की पत्नी में सर्व लोगों को दुःख देने वाले रावण और कुंभकर्ण पैदा हुए ॥ ४३ ॥

उस जन्म में भी भगवान ने श्रीराघव होकर उनके शाप दूर करने के लिये उनको मारा. हे राजन् ! श्रीरामचरित्र तुम मार्कण्डेय जी के मुख से सुनोगे ॥ ४४ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

कृष्णचक्रेण हतमंहो ययोस्तौ तयोः पापमेव हतं न तु तानित्यर्थः ॥ ४५ ॥ ४६ ॥

येन कारणेन प्रह्लादस्याच्युतात्मता अच्युतैकचित्तत्वं तदपि ब्रूहीति शेषः ॥ ४७ ॥

इति श्रीमद्भागवते महापुराणे सप्तमस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिकायाम्
प्रथमोऽध्यायः ॥ १ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तावेव रावणकुम्भकर्णावेवाद्य अधुना तृतीये जन्मनि तव मातृष्वस्रात्मजौ क्षत्रियौ शिशुपालदन्तवक्रौ जातावद्य शापेन निर्मुक्तौ श्रीकृष्णचक्रेण हतमंहः पापमूलकं शरीरं ययोस्तौ ॥ ४५ ॥

वैरानुबन्धेन तीव्रमुत्कृष्टं यद्ध्यानं भगवद्विषयकं तेनाच्युतस्य भगवतः सात्मतामात्मनो भावः प्रकारः आत्मता समाना आत्मना सात्मता तां साधर्म्यमित्यर्थः नीतौ प्रापितौ पुनर्विष्णुपार्षदौ भूत्वा हरेः पार्श्वं जग्मतुः ॥ ४६ ॥

यदुक्तं "हिरण्यकशिपुः पुत्रं प्रह्लादं केशवप्रियम् । जिघांसुः" इत्यादिना प्रह्लादस्य केशवप्रियत्वं हिरण्यकशिपोः प्रह्लादे मरणोद्योगपर्यन्तो द्वेषश्चेति तद्विज्ञातुं बुभुत्सुः पृच्छति युधिष्ठिरः—विद्वेष इति । दयिते नितरां प्रीतिविषये तत्रापि महात्मनि सद्गुणाश्रये हिरण्यकशिपोर्विद्वेषः कथमासीत्केन हेतुना आसीदित्यर्थः तदेतत् या च येन कारणेन प्रह्लादस्याच्युतात्मता अच्युते भगवति आत्मा मतिर्यस्य सोच्युतात्मा तस्य भावस्तत्ता तां च हे भगवन्, मे मह्यं ब्रूहि ॥ ४७ ॥

इति श्रीमद्भागवते महापुराणे सप्तमस्कन्धे
श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायाम्
प्रथमोऽध्यायः ॥ १ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

वैरानुबन्धेन वैरयुक्तभक्त्या तीव्रेणात्युत्कटेनाच्युतसात्मतां श्रीकृष्णस्वरूपप्रवेशलक्षणां हरेर्वैकुण्ठगमनानन्तरं पार्षदौ जयविजयाख्यमूलरूपेणैकीभूय हरेःपार्श्वं जग्मतुरित्यन्वयः "अनुबन्धस्तु भक्तिस्याद्बन्धःस्नेह उदाहृतः" इत्यभिधानादनुबन्धशब्दस्य नैरन्तर्यार्थोऽनुपपन्न इति ॥ ४६ ॥

दयितत्वं महात्मत्वञ्च प्रश्नस्य कारणं येन केन निमित्तेन अच्युते आत्मा मनो यस्य स तथा तस्मिन् ॥ ४७ ॥

इति श्रीमद्भागवते महापुराणे सप्तमस्कन्धे
श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम्
प्रथमोऽध्यायः ॥ १ ॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

वैरानुबन्धेति । तदेवं ब्रह्मशापवर्णनेन ब्राह्मणादास्तिरयं मुहुर्युद्धवर्णनेन युद्धेच्छां च कारणत्वेनोपन्यस्तवान् युद्धेच्छैव तु मुख्या ज्ञेया यया पार्षदयोः मुनीनामपि मतिर्विपरीता जाता यथोक्तं तृतीये श्रीभगवतैव 'मतस्तु मे' इति । तथाप्यत्यन्तशापाद्यसम्भवात्तदाभास एव तत्कार्यत्वेन दर्शितः विष्णुचक्रहतांहसावित्यनेन पूर्वोक्तसिद्धान्त एव विवेचनीयः ॥ ४६—४७ ॥

इति श्रीमद्भागवते महापुराणे सप्तमस्कन्धीयस्य

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भस्य

प्रथमोऽध्यायः ॥ १ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

विष्णुचक्रेण हतमंहो ययोस्तौ तयोरपराध एव बहिः शिशुपालदन्तवक्त्राकारतया परिणतो हतो न तु ताविस्यर्थः इति स्वामिचरणाः यथा वह्निना कनकस्य मालिन्यमेव हन्यते न तु कनकं तथैव जयविजययोर्ब्रह्मशिनावरणयोर्नष्टयोस्ततोः जयविजयावेव तेजः—पुञ्जाकारौ श्रीकृष्णे प्रविष्टौ जनैर्दृष्टाविति भावः ॥ ४५ ॥

अकलुनेन सहस्रिनौ आत्मानौ आकारौ ययोस्तस्य भावस्तत्ता तां ध्यानेनैव नीतौ पुनर्मोचलीलायां हरेर्नारायणस्य पार्श्वं जग्मतुरिति मौषललीलायाः पूर्वं श्रीकृष्णशरीर एव नारायणस्यापि प्रविष्टत्वात् पार्षदौ जयविजयावपि तत्रैव प्रविष्टावित्यता विनिनस्तं शिशुपालदन्तवक्त्रौ कृष्णे सायुज्यं प्रापतुरिति तु लोकप्रतीतिः ॥ ४६ ॥

अच्युतात्मतामच्युतैकचित्तत्वं येन तदपि ब्रूहीति शेषः ॥ ४७ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् ।

सप्तमे प्रथमोऽध्यायः सङ्गतः सङ्गतः सताम् ॥ १ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

कृष्णचक्रेण हतमंहः पापं ययोस्तौ ध्यानेन अच्युतसाम्यतां नीताविर्त्युत्तरेणान्वयः । अत्रेदं बोध्यम्, विष्णुपार्षदानां पापासम्भवात् देहपातासम्भवात् वैकुण्ठात्पुनरावृत्त्याद्यसम्भवाच्च भगवतोबहुभिरवतारैर्विहर्तुमिच्छोरिच्छयैव मुनिशापेन रावणादिदेहयोगं प्राप्य बहुकालमासुरेण भावेन भगवन्तमाराध्य पुनर्भगवदिच्छयैव निर्मित इत्युक्तेर्भगवत्कारिताच्छापाद्विमुक्तौ आविष्कृतपार्षददेहौ वैकुण्ठं गताविति ॥ ४५ ॥ ४७— ॥

इति श्रीमद्भागवते महापुराणे सप्तमस्कन्धीये

श्रीमच्छुकदेवकृतसिद्धातप्रदीपे

प्रथमाध्यायार्थप्रकाशः ॥ १ ॥

---

भाषा टीका ।

वेही दोनो तुमारी माता की बहिन के पुत्र क्षत्रिय हुये अब शाप से छूट कर श्रीकृष्ण के चक्र से नष्ट हुआ पाप जिन्हों का ऐसे वेही दोनो विष्णु पार्षद, तीव्र वैर के संबन्ध से उत्पन्न हुए ध्यान से कृष्ण की समता को प्राप्त होकर फिर भगवान के समीप पहुच गये ॥ ४५ ॥ ४६ ॥

युधिष्ठिर बोले, कि—महात्मा प्रिय पुत्र से हिरण्यकशिपु का विद्वेष क्यो भया हे भगवन् ! जिस कारण प्रह्लाद की भगवान में प्रीति हुई सो आप मुझ से कहो ॥ ४७ ॥

इति श्रीमद्भागवत महापुराण सप्तस्कन्ध

प्रथम अध्याय की भाषाटीका

समाप्त ॥ १ ॥

---

इति श्रीमद्भागवते महापुराणे सप्तमस्कन्धे प्रथमोऽध्यायः ॥ १ ॥

## ॥ द्वितीयोऽध्यायः ॥

नारद उवाच ।

भ्रातर्येवं विनिहते हरिणा क्रोडमूर्तिना ।
हिरण्यकशिपू राजन्पर्यतप्यद्रुषा शुचा ॥ १ ॥
आह चेदं रुषा घूर्णः सन्दष्टदशनच्छदः ।
कोपोज्ज्वलद्भ्यां चक्षुर्भ्यां निरीक्षन्धूम्रमम्बरम् ॥ २ ॥
करालदंष्ट्रोग्रदृष्ट्या दुष्प्रेक्ष्यभ्रुकुटीमुखः ।
शूलमुद्यम्य सदसि दानवानिदमब्रवीत् ॥ ३ ॥
भो भो दानवदैतेयास्त्रिमूर्धंस्त्र्यक्ष शम्बर ।
शतबाहो हयग्रीव नमुचे पाक इल्वल ॥ ४ ॥
विप्रचित्ते मम वचः पुलोमन् शकुनादयः ।
शृणुतानन्तरं सर्वे क्रियतामाशु मा चिरम् ॥ ५ ॥
सपत्नैर्घातितः क्षुद्रैर्भ्राता मे दयितः सुहृत् ।
पार्ष्णिग्राहेण हरिणा समेनाप्युपधावनैः ॥ ६ ॥
तस्य त्यक्तस्वभावस्य घृणेर्मायावनौकसः ।
भजन्तं भजमानस्य बालस्येवास्थिरात्मनः ॥ ७ ॥
मच्छूलभिन्नग्रीवस्य भूरिणा रुधिरेण वै ।
रुधिरप्रियं तर्पयिष्ये भ्रातरं मे गतव्यथः ॥ ८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

द्वितीये विष्णुरोषेण लोकं विद्राव्य दानवैः ।
तद्गतभ्रातृपुत्रादीनितिहासैरसान्त्वयत् ॥ १ ॥

भगवद्द्वेषएव तद्द्वेषेपि कारणमित्याशयेनाह-भ्रातरीत्यादिना । एवं देवपक्षपातेन ॥ १ ॥

कोपेन उत् अतिशयेन ज्वलद्भ्यां कोपाग्निधूमेनैव धूम्रमम्बरं निरीक्षमाणः ॥ २ ॥

करालदंष्ट्राभिर्युक्तयोग्रया दृष्ट्या दुष्प्रेक्ष्यं भ्रुकुटीयुक्तं मुखं यस्य सः ॥ ३ ॥ ४ ॥ ५ ॥

समेनाप्युपधावनैर्भजनैर्निमित्तभूतैः पार्ष्णिग्राहेण सता ॥ ६ ।

एवं त्यक्तः स्वभावः समत्वं येन तस्य घृणेः शुद्धतेजोमयस्यापि मायया वनौकसो वराहरूपस्य सतः अस्थिरात्मनोऽव्यवस्थितचित्तस्य कुतः यो यो भजति तं तं भजमानस्यानुसरतः ॥ ७ ॥

तस्य रुधिरेण यावत्तर्पयिष्यामि तावद्यूयं भुवं यातेति तृतीयेनान्वयः ॥ ८ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

एवं तयोः केशवात्मत्वविद्वेषविस्तरबुभुत्सुना पृष्टो भगवान्नारद आह—भ्रातरीति । एवं देवपक्षपातिना क्रोडमूर्तिना वराहरूपिणा भगवता भ्रातरि हिरण्याक्षे विनिहते सति, हे राजन्! रोषेण शुचा शोकेन चार्पितो व्याप्तः पर्यतप्यत् परितापं चकार ॥ १ ॥

इदं वक्ष्यमाणमाह च कथंभूत आह तत्राह, रुषा पूर्णो अत एव सन्दष्टः दशनच्छदः अधरो येन कोपेन उद्गतिशयेन ज्वलद्भ्यां चक्षुर्भ्यां धूम्रमम्बरमाकाशं कोपाग्निधूमेनैव धूम्रमम्बरं निरीक्षमाणः ॥ २ ॥

करालदंष्ट्राभिर्भयङ्करदंष्ट्राभिर्युक्तया उग्रया दृष्ट्या दुष्प्रेक्ष्यं दुर्निरीक्ष्यं भ्रुकुटीयुक्तं मुखं यस्य सदसि सभायां शूलमुद्यम्य उद्धृत्य अनेन स्वसामर्थ्यं सूचितम् दानवान्प्रति इदमुवाच ॥ ३ ॥

तदेवाह—भोभो इति । सामान्येन तावत्सम्बोधनं भोभो दानवा दैतेयाश्चेति विशेषतः सम्बोधनं द्विमूर्द्धन्नित्यादिना ॥ ४ ॥

एते सर्वे यूयं प्रथमं मम वचः शृणुत ततः श्रवणानन्तरमेव मदुक्तमाशु युष्माभिः क्रियतां चिरं विलम्बं मा कुरुत ॥ ५ ॥

किं तत्त्राह—सपत्नैरिति । समेन देवासुरवर्गयोः समेनापि उपधावनैरनुवर्तनैः पार्ष्णिग्राहेण पृष्ठपोदूषकेन देवानां सहायभूतेनेत्यर्थः । हरिणा प्रयोज्यकर्त्रा मत्सपत्नैः प्रयोजककर्तृभिः क्षुद्रैरल्पबलैर्देवैः प्रियः सुहृच्च मे भ्राता हिरण्याक्षो घातितः ॥ ६ ॥

तस्य हरेः कथंभूतस्य घृणेः सूर्यवत्तेजोमयविग्रहस्यापि मायावनौकसः मायोपात्तवराहरूपस्य अत एव त्यक्तः स्वभावो येन तस्य, देवतारूपत्यागादिति भावः । भजन्तं स्वमनुवर्तमानं भजमानस्यानुवर्तमानस्य बालस्येवास्थिरात्मनः अव्यवस्थितचित्तस्य ॥ ७ ॥

एवंभूतस्य हरेर्मम शूलेन भिन्ना ग्रीवा यस्य तस्य भूरिणा रुधिरेण रुधिरप्रियं मम भ्रातरं गतव्यथोऽहं यावत्तर्पयिष्ये तावद्यूयं भुवं यातेत्यन्वयः ॥ ८ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

हिरण्यकशिपुः स्वतो विष्णुभक्तोऽसुरावेशात्तद्द्वेषीत्ययं विवेकः तद्वचनेन ज्ञातुं शक्य इत्येतदर्थमस्याध्यायस्य प्रारम्भः । तत्र प्रह्लादनाम्नि पुत्रे द्वेषः कथं पितुरभूदित्यस्य प्रश्नस्य परिहारं वक्तुमारभते—भ्रातरीति ॥ १ ॥

हरिविषयरुषा भ्रातृविषयशुचा दशनच्छदः ओष्ठः चक्षुषो रोचिषा यथा धूम्रं भवति तथा पश्यन् ॥ २ ॥

भ्रुकुट्या नीलाञ्चितया युक्तमुखः ॥ ३ ॥

हे पाक ! ॥ ४ ॥ ५ ॥

क्षुद्रैरल्पैः कपटिभिर्वा पार्ष्णिग्राहेण पृष्ठावेक्षकेण बालकेन "देवानां दानवानां च सामान्यमधिदैवतम्" इत्यतः समेनाप्युपधावनैः खादनैः विषयेण ॥ ६ ॥

त्यक्तस्वभावस्य त्यक्तनास्यावस्थस्य तत एवाकर्मणः घृणेः शोच्यस्य "घृणिर्विभावसौ सूर्ये रश्मौ शोच्ये विघर्षणे" इत्यभिधानम्. भजन्तं स्वात्मानं सेवमानं भजमानस्य प्रत्युपकारं कुर्वतः ॥ ७ ॥ ८ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

एवं पर्यतप्यतेति सम्बन्धः । मूर्तिनेत्यत्र रूपिणेति क्वचित् ॥ १—२ ॥

आह चेदमिति यदुक्तं तदेव विशिनष्टि—करालेति । भो भो इति युग्मकम् ॥ ३—६ ॥

तस्येति युग्मकम् । वास्तवोऽर्थस्त्वयं त्यक्तः भक्तेभ्यो दत्तः स्वभावः स्वादुत्वादिकं येन 'घृणिग्रहणे' इत्यस्मात् घृणेः । स्पृशां स्त्रीकर्तुः माया कृपा मायेति छान्दसतृतीया लुक् ततः सर्वत्रान्तरः कृपयैव वनौकसः नृसिंहाविर्भावयितुः कृपयैव बालस्येवास्थिरात्मनः भक्तभावानुरूपनानाभावविस्तारयितुः मच्छूलाङ्कस्य तद्गोचरभूता ग्रीवा तदुपलक्षितो विग्रहो यस्य, तस्य मे रुधिरेण श्रीनृसिंहतयाविर्भावे तत्मान्त्रनखदीप्तरुधिरेण रुधिरप्रियं भ्रातरं तर्पयिष्ये 'यथा तरोर्मूलनिषेचनेन" इत्यादेः ॥ ७—९ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

> द्वितीये भ्रातृशोकेन धर्मनाशाय दानवान् ।
> नियोज्य स्वानि हासैर्मित्रादीन् सह सान्त्वयत् ॥

भगवद्द्वेष एव प्रह्लादद्वेषे कारणमभूदिति वक्तुं प्रथमतो भगवद्द्वेषमेव सहेतुक माह—भ्रातर्येवमित्यादिना ॥ १ ॥

अम्बरं निरीक्षन्निति हरेर्निवासं वैकुण्ठं हरिञ्च स्वहस्तेनैव ध्वंसयिष्यामीति भावः । धूम्रमिति चक्षुरग्नेर्धूमव्याप्तत्वादितिभावः ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥

समेनापीति यद्यपि स हरिः सर्वत्र समस्तदापि उपधावनैरुपासनैर्निमित्तभूतैः पार्ष्णिग्राहेण लोभवशाद्देवपक्षपाती संवृत्त इत्यर्थः ॥ ६ ॥

वयमप्युपधावाम इति चेन्मैवं ब्रूध्वं यूयं तावन्मन्नियुक्ते कर्मणि तिष्ठत अहमेक एव तं हनिष्यामीत्याह—तस्येति द्वाभ्याम् । ननु, हरिर्हि परमात्मोच्यते शास्त्रैरतस्तं कथं हनिष्यसि ? तत्राह, त्यक्तस्वभावस्य सर्वत्रोदासीन्यरूपः स्वभावो हि परमात्मनः प्रसिद्धः स यदि तेन त्यक्तस्तदा कुतस्तस्य सम्प्रति परमात्मत्वमितिभावः । प्रत्युत स परमात्मत्वं त्यक्त्वा पशुरभूदित्याह

तस्मिन्कूटेऽहिते नष्टे कृत्तमूले वनस्पतौ ।
विटपा इव शुष्यन्ति विष्णुप्राणा दिवौकसः ॥ ९ ॥
तावद्यात भुवं यूयं विप्रक्षत्रसमेधिताम् ।
सूदयध्वं तपोयज्ञस्वाध्यायव्रतदानिनः ॥ १० ॥
विष्णुर्द्विजक्रियामूलो यज्ञो धर्ममयः पुमान् ।
देवर्षिपितृभूतानां धर्मस्य च परायणम् ॥ ११ ॥
यत्र यत्र द्विजा गावो वेदा वर्णाश्रमाः क्रियाः ।
तं तं जनपदं यात सन्दीपयत वृश्चत ॥ १२ ॥

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

घृणेः पूर्वं शुद्धतेजोमयस्यापि सम्प्रति मायापारतन्त्र्याद्वनौकसः मत्स्यकच्छपादिरूपस्य च किञ्च भजन्तञ्जनमात्रमेव भजमानस्य बालस्येव एकेनैव खण्डलड्डुकेन वशीकृतस्येत्यर्थः । वस्तुतस्तु तस्य भक्तवात्सल्यादेव त्यक्तत्वादिविशेषणपञ्चकम्भवति तच्च तस्य भूषणमेव न तु दूषणमिति भावः । घृणेः शुद्धतेजोमयस्यापि मायया कृपया इत्यादि योज्यम् । मच्छूलाङ्कितः पृथग्भूता जीवा यस्येति प्राकृतस्य मच्छूलस्य तत्र प्रवेशोऽपि न सम्भवेदिति भावः "कुङ्कुमं रुधिरं प्रोक्तम्" इत्यभिधानात् रुधिरेण मद्भ्रातुः कुङ्कुमेन रुधिरप्रियं तन्निर्मोकनकुङ्कुमार्पितं मद्भ्रातुर्भक्त्वा-र्द्रितमावः ॥ ७ ॥ ८ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

विष्णुना हिरण्याक्षे हते सति क्रुद्धो हिरण्यकशिपुर्दानवदैतेयैर्लोकं विप्लाव्य भ्रातृपुत्रादीन्निहासैर्मात्यर्थदितेः भ्रातर्येवमिति द्वितीयाध्यायेन वर्णयति—क्रोडमूर्तिना वराहरूपेण ॥ १ ॥

संदष्टौ दशनच्छदावोष्ठौ येन सः कोपेन उत् उत्पतन्तः ज्वलद्भ्यां चक्षुर्भ्यां धूम्रमम्बरं निरीक्ष्येदमाह ॥ २ ॥

करालदंष्ट्राभिर्भयजनकदंष्ट्राभिर्युक्तया उग्रदृष्ट्या दुष्प्रेक्ष्यं दुर्निरीक्ष्यं भ्रुकुटीयुक्तं मुखं यस्य सः ॥ ३—५ ॥

समेनापि उपधावनैराराधनैः पार्ष्णिग्राहेण सहायेन हरिणा ॥ ६ ॥

शुद्धोस्तेजोमयविग्रहस्येश्वरस्यापि भजन्तं भजमानस्य अत एव त्यक्तः स्वभावः समत्वरूप ईश्वरस्वभावो येन तस्य अत एवास्थिरात्मनश्चलचित्तस्य मायया दम्भेन कापट्येन वनौकसः वराहरूपस्य ॥ ७—८ ॥

---

### भाषाटीका ।

श्रीहरिकिशोरमणो जयति ॥

नारदजी बोले, कि हेराजन् ! वाराह रूपधारी हरीने इस प्रकार भ्राता के मारने पर हिरण्यकशिपु रोष और शोक से बहुत ही तप्त हुआ ॥ १ ॥

और क्रोध से प्रज्वलित होकर दांतों से होठ काट कर कोप से जलते हुए नेत्रों से धुआँधार आकाश को देखता हुआ बोला ॥ २ ॥

कराल दाढ़ और उग्र दृष्टि से न देखी जाय मुख और भ्रुकुटि जिसकी ऐसा हिरण्यकशिपु सभा में दानवों से यह वाक्य बोला ॥ ३ ॥

हे २ दैत्य दानवो ! हे द्विमूर्धन् ! हे त्र्यक्ष ! हे शम्बर ! हे शतबाहो ! हे हयग्रीव ! हे नमुचे ! हे पाक ! हे इल्वल ! ॥ ४ ॥

हे विप्रचित्ते ! हे पुलोमन् ! हे शकुनादिको ! तुम सब लोग मेरा वचन सुनो और पश्चात् जल्दी करो देर न करो ॥ ५ ॥

यद्यपि विष्णु सबों को सम था; तौ भी क्षुद्र वैरी देवताओं ने उसके पीछे पड़ सहाय बनाकर उसी हरि के द्वारा मेरे प्रिय सुहृद भ्राता को मरवा डाला ॥ ६ ॥

अब अपने समत्वरूप स्वभाव को छोड़ने वाले, और अपने सेवकों को भजने वाले, बालक के तरह अस्थिरमन वाले उस विष्णु के गले को अपने शूल से काट कर उसके बहुत से रुधिर से रुधिरप्रिय अपने भ्राता का तर्पण करूंगा तब मेरी व्यथा दूर होगी ॥ ७—८ ॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका ।

ननु, देवैरावध्यः कश्चित्तोऽतस्ते किं न हन्यन्ते ? तत्राह—तस्मिन्हरौ कूटं कपटं अहिते प्रतिपक्षे कूटमीहितं यस्येति वा नष्टेऽदृष्टे सति देवाः शुष्यन्ति स्वयमेव नाशं यास्यन्ति, कुतः ?

इति ते भर्तृनिर्देशमादाय शिरसाऽऽदृताः ।
तथा प्रजानां कदनं विदधुः कदनप्रियाः ॥ १३ ॥
पुरग्रामव्रजोद्यानक्षेत्रारामाश्रमाकरान् ।
खेटखर्वटघोषांश्च ददहुः पत्तनानि च ॥ १४ ॥
केचित्खनित्रैर्बिभिदुः सेतुप्राकारगोपुरान् ।
आजीव्यांश्चिच्छिदुर्वृक्षान्केचित्परशुपाणयः ।
प्रादहञ्छरणान्यन्ये प्रजानां ज्वलितोल्मुकैः ॥ १५ ॥
एवं विप्रकृते लोके दैत्येन्द्रानुचरैर्मुहुः ।
दिवं देवाः परित्यज्य भुवि चेरुरलक्षिताः ॥ १६ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

विष्णुरेव प्राणो येषां ते यथा कृत्तमूले वृक्षे शाखाः स्वयं शुष्यन्ति तद्वत् ॥ ९ ॥

तपोयज्ञादियुक्तान्सूदयध्वं घातयत ॥ १० ॥

ननु, तैः किमपराद्धम् ? तत्राह—विष्णुरिति । द्विजानां क्रिया अनुष्ठानं मूलं यस्य सः यतोऽसौ यज्ञो धर्ममयश्च देवादीनां परायणं परम आश्रयः अतो यज्ञरूपस्य विष्णोर्मूलत्वान्मामनादृत्य तदाश्रयणाच्च ते वध्या इति भावः ॥ ११ ॥

तस्मात्परं मन्त्रं शृणुतेत्याह—यत्रयत्रेति । सन्दीपयत दहत वृश्चत आजीव्यानां वृक्षाणां छेदं कुरुत ॥ १२ ॥ १३ ॥

पुरं हट्टादिमत् ग्रामस्तद्रहितः व्रजो गवां वासः उद्यानं कृत्रिमं वनं क्षेत्रं व्रीह्यादेः आरामोऽकृत्रिमं वनम् आश्रमः ऋषीणां स्थानम् आकरो रत्नादीनां खेटः कृषीवलानां वासः खर्वटो गिरिद्रोण्याश्रयो ग्रामः घोष आभीराणां वासः पत्तनं राजधानी ॥ १४ ॥

खनित्रैः खननसाधनैः आजीव्यानुपजीव्यान् जम्वाम्रकपित्थादीन् शरणानि गृहान् ॥ १५ ॥

विप्रकृते उपद्रुते यज्ञभागानामभावाद्दिवं परित्यज्यालक्षिताः सन्तो भुवि चेरुः ॥ १६ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

ननु, दैवैस्तद्वधः कारितः अतस्ते किं न हन्यन्ते ? तत्राह—तस्मिन्निति । अस्माकमहिते शत्रौ कूटे देवानामाश्रये तस्मिन् विष्णौ नष्टे सति यथा वनस्पतौ छिन्नं मूलं यस्य तस्मिन् सति शाखाः शुष्यन्ति, तद्वद्विष्णुरेव प्राणो जीवनहेतुर्येषां ते दिवौकसः देवाः स्वयमेव नङ्क्ष्यन्ति अतःतन्नाशाय न पृथग्यत्नः कार्य इति भावः ॥ ९ ॥

यावदुर्पर्यिष्ये तावद्युयं ब्रह्मक्षत्रकुलाभ्यां समेधितां ब्रह्मक्षत्रबहुलामित्यर्थः । भुवं पृथ्वीं यात, गत्वा किं कर्तव्यम् ? तत्राह—सूदयध्वमिति, तप आदीनां द्वन्द्वे ततो मत्वर्थीयइनिः । तप आदिभिर्युक्तान् सूदयध्वं घातयत ॥ १० ॥

ननु, तैः किमपराद्धम् ? तत्राह—विष्णुरिति । द्विजानां क्रियामूलो यो यज्ञः स एव धर्मस्तन्मयस्तदाकृतिः पुमान् विष्णुर्द्विजक्रियामूल इति भिन्नपदत्वे द्विजानां क्रिया स्मार्त्ती मूलं यस्य श्रौतयज्ञरूपधर्मस्येत्यर्थः । पुमान् श्रौतस्मार्त्तधर्मशरीरक इत्यर्थः । तथा देवर्षिपितृभूतानां धर्मः देवाद्युद्देश्यको यो धर्मस्तस्य च परायणं परम आश्रयः निर्वाहकः देवाद्युद्देश्यको यो धर्मस्तदाश्रय इत्यर्थः । द्विजेषु तत्तत्कर्तृकयज्ञादिधर्मेषु च विनाशितेषु शरीरविनाशेन विष्णुरपि विनाशितो भवति तद्विनाशे चाश्रयविनाशादाश्रिते धर्मे विनष्टे सति यज्ञधर्मीयचरुपुरोडाशादिहविर्भागादिरूपजीविकाया अभावाद्देवादयोऽपि स्वयमेव विनष्टा भवन्तीति भावः ॥ ११ ॥

तस्माद्यत्रयत्र देशे ब्राह्मणादयो वर्तन्ते तं तं जनपदं देशं यात गच्छत सन्दीपयत दहत वृश्चत लुनीत ॥ १२ ॥

इतीत्थं भर्तुर्हिरण्यकशिपोर्निर्देशमाज्ञाम् आदृता आदरयुक्ताः शिरसा आदाय स्वीकृत्य कदनप्रियाः कदनं भूतद्रोहरूपदुःखं वा तदेव प्रियं येषां ते दानवा दैतेयाश्च प्रजानां कदनं चक्रुः ॥ १३ ॥

कदनक्रियामेव प्रपञ्चयति—पुरेति । तत्र पुरं हट्टादिमत् ग्रामस्तद्रहितः व्रजो गवां वासः उद्यानं कृत्रिमं वनम् क्षेत्रं व्रीह्यादेः आरामः अकृत्रिमं वनम् आश्रमं ऋषीणां स्थानम् आकरो रत्नानां वासः खेटः कर्षकग्रामः खर्वटो गिरिद्रोण्याश्रयो ग्रामः घोष आभीराणां वासः पत्तनं राजधानी एतानि केचिद्ददहुः अग्निप्रक्षेपेण दग्धवन्तः ॥ १४ ॥

केचित्खनित्रैः खननसाधनैः सेतून् प्राकारान् गोपुरांश्च तन्त्वादींश्च बिभिदुः तत्र सेतवो जलबन्धार्थं निर्मितास्तटाकादयः केचिच्च परशुः पाणौ येषां ते आजीव्यानुपजीव्यान् फलितचूताविवृक्षांश्च चिच्छिदुः अन्ये च शरणान् गृहान् प्रादहन् प्रदग्धवन्तः केचिच्चोल्मुकैः साङ्गारकाष्ठैः प्रजान् जनान् जज्वलुः ॥ १५ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

एवं दैत्येन्द्रस्य हिरण्यकशिपोरनुचरैर्मुहुर्मुहुर्लोके विप्रकृते उपद्रुते सति सर्वे देवाः स्वर्गं परित्यज्य असुरैरलक्षितास्तत्र-तत्र भुवि प्रदेशे विचेरुर्जग्मुः ॥ १६ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

अन्तर्दुष्ट दृश्यमानरमणीयं कूटम् आकिपरात्मनः कूटत्वादि-भावचनं मोहनार्थमासुरमतमुदीरितमिति ज्ञातव्य, तदुक्तम्—

"विष्णुभक्तेश्च तज्ज्ञानादन्यतो मुक्तिवाचकाः ।
विष्णोर्गुणाभासवाचः श्रीब्रह्मादेस्तथा क्रमात् ॥
विश्वचादेर्विपर्यश्चैव सुखवाचस्तथा खिलाः ।

मोहनार्थाः समुद्दिष्टास्तथार्थद्योतकास्तथा" इति ॥ ९ ॥ १० ॥

द्विजक्रियामूलः द्विजाश्च यज्ञादिक्रियाश्च मूलं यस्य स तथा भक्तिज्ञानादिमन्तरेण केवलं यागादिक्रियया प्रसन्नो भवतीति एतदासुरं मतम् "विष्णुभक्तेश्च तज्ज्ञानादन्यतो मुक्तिवाचकाः" इत्येतदत्रापि प्रमाणम्, द्विजैः क्रियमाणां यागादि-क्रियां मूलयति प्रतिष्ठापयति इति द्विजक्रियामूल इत्यनेदेव-मतम् 'मूलप्रतिष्ठायाम्" इतिधातुः इज्यत इति यज्ञः धर्ममयः धर्मप्रधानः दानादिधर्मेण प्रसीदतीत्येतदप्यासुरमतम् "यथार्थ-द्योतकः" इति वचनाद्धारकतम इत्यन्योऽर्थः । परायणमुत्तमाश्रय-मित्येतद्देवमतम् ॥ ११ ॥

सन्दीपयत दहत वृश्चत छिन्त ॥ १२ ॥

कदनं कदहिंसायाम् ॥ १३ ॥

गवामावासस्थानं व्रजः गोपालवसतिर्वा आश्रमो मुनिनिवासः आकरो रत्नाद्युत्पत्तिस्थानं खेटः नाट्यस्थानं खर्वटो वस्तविक्रयस्य स्थानं घोष आभीरपल्लिः वणिग्भिरधिष्ठितं पत्तनम् ॥ १४ ॥

आजीव्यान् वृक्षान् नारिकेलक्रमुकान्पनसादीन् ॥ १५ ॥

विप्रकृते विपरीतमापादिते विनाशिते ॥ १६ ॥ १७ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

यतस्तस्मिन्निति । यद्वा ननु, तस्य तद्भक्तमरणादिकया गति-र्नैवास्ति किं तत्सर्पणेन तत्राह—अस्मिन्निति । कूटे कूटस्थे एकरूपतया सर्वकालव्यापिनि हिते भक्तसुहृदि नष्टे अद-र्शनं गते सति सर्वेऽपि प्राकृताप्राकृतदिवौकसस्तदेकप्राण-त्वाच्छुष्यन्ति सुखदनानास्वपत्स्वपि शोषं प्राप्नुवन्ति तस्मा-त्तदाराधनमेव कार्यमिति भावः । ततश्च यदि युष्माकमिच्छा तर्हि यावत्तद्दर्शनं तावदेव यातेति ॥ १० — १४ ॥

मारहरित्यर्द्धकम् ॥ १५ ॥

दिवं विमानस्वर्गं भुवं यातेति हिरण्यकशिपुना पूर्वमुक्तत्वात् तस्य सुमेरुस्थितिप्राप्तेः ॥ १६ — १९ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

कूटहिते कपटचेष्टिते वस्तुतस्तु कूटे कपटिष्वपि मद्विद्विषु ईहितं युद्धचेष्टा यस्य तस्मिन्नित्यतो मम मारणमिति भावः । देवानां तु सौभाग्यं किमद्वर्णनीयं ते तु तदेकप्राणा एवेत्याह तस्मिन्नष्टे दैवात् कदाचिददृष्टे सति तत्तोऽदर्शनार्थत्वात् छिन्नमूले वनस्पतौ यथा विटपाः शुष्यन्ति तथा शुष्यन्ति ते विष्णुरेव प्राणा येषान्ते किं वा विष्णोरपि प्राणतुल्यास्ते परमधन्या एवेति भावः ॥ ९ ॥

ब्रह्मक्षत्राभ्यां तपोबलप्रभावाभ्यां सम्यगेधितां वर्द्धितां भुवं यात किमर्थं सूदयध्वं घातयध्वम् ॥ १० ॥

यतस्तेषां नाशे सति विष्णुः स्वयमेव नङ्क्ष्यतीत्याह—विष्णुरिति । द्विजानां नाशे सति तत्क्रियालोपात् विष्णोर्मूलो-त्स्वातः यज्ञस्य धर्मस्य च नाशात् तत्स्वरूपस्य नाशो भावी किञ्च देवर्ष्यादीनां परायणं परम आश्रय इति देवर्ष्यादीनां वधे तच्छो-कादपि स भविष्यतीति भावः ॥ ११ ॥

सन्दीपयत दहतेति जनपदस्य दाहे तद्वासिनान्तेषां स्वतएव दाह-सिद्धेः वृश्चत तदुपजीव्यवृक्षाणां छेदं कुरुत ॥ १२ ॥

कदनं कष्टम् ॥ १३ ॥

पुरं हट्टादिमत् ग्रामस्तद्रहितः अजोगवांवासः उद्यानं पुष्प-प्रधानं वनं क्षेत्रं व्रीह्याद्येः आरामः फलप्रधानं वनम् आश्रम ऋषी-णां स्थानं आकरो रत्नादीनां खेटः कृषीवलानां वासः खर्वटो गिरि-द्रोण्याश्रयो ग्रामः घोषः आभीराणां वासः पत्तनं राज-धानी ॥ १४ ॥ १५ ॥

विप्रकृते उपद्रुते यज्ञभागानामभावात् दिवं परित्यज्य ॥ १६ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

कूटे कपटे ॥ ९ ॥

तप आदीनि सन्ति येषां तान् सूदयध्वं घातयध्वम् ॥ १० ॥

तप आदिनाशे विष्णुरपि न भविष्यतीत्याशयेनाह—विष्णु-रिति । द्विजाः तत्कर्तृकाः क्रियाश्च तप आद्या मूलं यस्य सः किञ्च यतोऽसौ यज्ञः धर्ममयश्च देवादीनां परायणं परम आश्रयः ॥ ११ ॥

सन्दीपयत अग्निना दहत वृश्चत आयुधैः छेदयत ॥ १२ ॥

आहताः भर्त्रा मानिताः कदनं कष्टम् ॥ १३ ॥

पुरादीन् ददहुः तत्र पुरं हट्टादियुक्तम् ग्रामस्तद्रहितः व्रजो गवामालयः उद्यानं कृत्रिमं वनम् क्षेत्रं व्रीह्यादेः आरामोऽकृत्रिमं वनम् आश्रमः ऋषीणां स्थानम् आकरो रत्नादेः खेटः कृषीवलवासः खर्वटो गिरिद्रोण्याश्रयो ग्रामः घोष आभीरवासः पत्तनं राजधानी ॥ १४ ॥

हिरण्यकशिपुर्भ्रातुः सम्परेतस्य दुःखितः ।
कृत्वा (१) कटोदकादीनि भ्रातृपुत्रानसान्त्वयत् ॥ १७ ॥
शकुनिं शम्बरं धृष्टं भूतसन्तापनं वृकम् ।
कालनाभं महानाभं हरिश्मश्रुमथोत्कचम् ॥ १८ ॥
तन्मातरं रुषाभानुं दितिं च जननीं गिरा ।
श्लक्ष्णया देशकालज्ञ इदमाह जनेश्वर ! ॥ १९ ॥

हिरण्यकशिपुरुवाच ।

अम्बाम्ब हेवधूः पुत्रा वीरं माऽर्हथ शोचितुम् ।
रिपोरभिमुखे श्लाघ्यः शूराणां वध ईप्सितः ॥ २० ॥
भूतानामिह सम्वासः प्रपायामिव सुव्रते ! ।
दैवेनैकत्र नीतानामुन्नीतानां स्वकर्मभिः ॥ २१ ॥
नित्यआत्माऽव्ययः शुद्धः सर्वगः सर्ववित्परः ।
धत्तेऽसावात्मनो लिङ्गं मायया विसृजन्गुणान् ॥ २२॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

खनित्रैः खननसाधनैः आजीव्यान् जीवनहेतून् शस्यानि वृहान् ॥ १५ ॥

विप्रकृते पीडिते यज्ञभागानामप्राप्तौ दिवं त्यक्त्वा अलक्षिताः दानवदैत्यैरज्ञाताः भुवि चेरुः ॥ १६ ॥

भाषाटीका।

उस कपटी शत्रु विष्णु के नष्ट हुए पर, वृक्ष की जड उखाडने से जैसे शाखायें आपही सूख जातीं हैं इसी प्रकार विष्णु जिनके प्राण है वो देवता लोग भी आप से नष्ट होजाँयगे ॥ ९ ॥

अच्छा तौ अब तुम सब लोग ब्राह्मण और क्षत्रियों से पूरित पृथिवी पर जाओ और तप, यज्ञ, स्वाध्याय, व्रत, और दान करने वालों को मार डालो ॥ १० ॥

क्योंकि ? यज्ञ स्वरूप विष्णु का मूल ब्राह्मणों की क्रिया ये हैं और विष्णु धर्म मय पुरुष है, देव ऋषि पितर भूत [ प्राणि ] और धर्म का वही परायण [ उत्कृष्ट आश्रय ] है ॥ ११ ॥

इससे जहां २ ब्राह्मण गायें वेद वर्णाश्रम और वैदिक क्रिया होती हैं उसी २ देश को जाकर अग्नि से जलादो और काट डालो ॥ १२ ॥

कदन (नाश) करने में प्रीति वाले वे दैत्य लोग भी बड़े आदर से अपने भर्त्ता की इस तरह की आज्ञा को शिर से ग्रहण कर प्रजा का नाश करने लगे ॥ १३ ॥

और पुर, ग्राम, व्रज, उद्यान क्षेत्र, वाटिका आश्रम खान किसानों के निवास, पर्वतों के समीप के ग्राम, घोष और राजधानी इत्यादि को जलाने लगे ॥ १४ ॥

कितने एक दैत्य कुदालों से सेतु प्राकार गोपुर द्वारों को और जीविका के वृक्षों को फरसाओं से काटने लगे अन्य दैत्य प्रजाओं के निवास स्थानों को जलाने लगे ॥ १५ ॥

जब हिरण्यकशिपु के अनुचरों ने ऐसा लोक का बहुत विप्रिय किया तब देवता लोग भी स्वर्ग को छोड अलक्षित होकर पृथिवी पर विचरने लगे ॥ १६ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

तदेवं प्रजानां कदनं दानवेषु कुर्वत्सु स्वयं स्वर्गराज्यादि साधयितुं तपस्तप्तुकामः प्रथमं यत्कृतवांस्तदाह—हिरण्यकशिपुरित्यादिना । कटोदकं प्रेताय प्रदेयमुदकम् आदिशब्दात्प्रेतश्राद्धादिकम् ॥ १७ ॥ १८ ॥ १९ ॥

हे वधूरिति भ्रातुर्भार्यां सम्बोधयति ॥ २० ॥

भवतुनाम तस्य श्लाघ्यो वधः तथाप्यस्माकं तावद्बन्धुर्गत एवेति चेत्तत्राह—भूतानामिति । दैवेन प्राचीनकर्मणा एकत्र नीतानां संयोजितानां पुनश्च स्वैः कर्मभिः उन्नीतानां वियोजितानाम् ॥ २१ ॥

( १ ) करोदकादीनि. इति पाठान्तरम्. वीर० ।

यथाऽम्भसा प्रचलता तरवोऽपि चला इव ।
चक्षुषा भ्राम्यमाणेन दृश्यते चलतीव भूः ॥ २३ ॥
एवं गुणैर्भ्राम्यमाणे मनस्यविकलः पुमान् ।
याति तत्साम्यतां भद्रे ! ह्यलिङ्गो लिङ्गवानिव ॥ २४ ॥

### श्रीधरस्वामिकृतभावार्थदीपिका ।

एवं लोकदृष्ट्या शोकं निवार्य्य तत्त्वदृष्ट्या वारयति—नित्य इति । नित्यः मृत्युशून्यः अव्ययः अपक्षयशून्यः शुद्धः निर्मलः सर्वगतः सर्ववित् सर्वज्ञः, सर्वत्र हेतुः, परो देहादिव्यतिरिक्तः अतो मृत इति कृश इति मलिन इति वियुक्त इति अज्ञ इति च मत्वा शोको न कार्य्य इत्यर्थः । कथं तर्हि तस्य संसारः? तत्राह—धत्ते इति । आत्मनो मायया स्वाविद्यया लिङ्गं मूर्तिं धत्ते गुणान् उच्चावचान् देहान् सुखदुःखादीन् वा विशेषेण सृजन् स्वीकुर्वन् लिङ्गशरीरोपाधिः संसार इत्यर्थः ॥ ॥ २२ ॥

एतत्सदृष्टान्तं प्रपञ्चयति—यथेति चतुर्भिः । तरवः प्रतिबिम्बिताः उपाधिधर्मा उपहिते भवन्तीति दृष्टान्तमुक्त्वा ग्राहकधर्मा ग्राह्ये भवन्तीति दृष्टान्तमाह, चक्षुषेति ॥ २३ ॥

अविकलः परिपूर्णएव तत्साम्यताम् मनःसम्मतामित्यर्थः ॥२४॥

### श्रीमद्वीरराघवाचार्य्यकृतभागवतचन्द्रचन्द्रिका ।

ततो दुःखितो हिरण्यकशिपुः संपरेतस्य मृतस्य भ्रातुः हिरण्याक्षस्य करोदकादीनि प्रेतोद्देशेन करेण हस्तेन देयं सलिलं जलं करोदकं तत्प्रभृतीनि प्रेतोद्देशेन कर्त्तव्यानि कृत्वा भ्रातुः हिरण्याक्षस्य पुत्रान् असांत्वयत् ॥ १७ ॥

भ्रातुः पुत्रानुद्दिशति—शकुनिमिति ॥ १८ ॥

तथा देशकालाभिज्ञो ऽसुरेश्वरो हिरण्यकशिपुस्तेषां शकुन्यादीनां मातरं रुषद्भानुं स्वमातरं दितिञ्च श्लक्ष्णया मृद्व्या निपुणया वा गिरा इदं वक्ष्यमाणमाह ॥ १९ ॥

तदेवाह—अम्बाम्बेत्यादिना, यावदध्यायसमाप्ति । अम्बाम्बेति दितेः सम्बोधनम्, हे वधूरिति भ्रातुर्भार्यायाः, हे पुत्रा इति तत्पुत्राणाम्, वीरं हिरण्याक्षंप्रति शोचितुं यूयं नार्हथ कुतो यतो रिपोरभिमुखे शूराणां वधः श्लाघ्यः प्रशस्तः ईप्सितः प्रशस्तत्वेनाभिमतइत्यर्थः ॥ २० ॥

भवतुनाम तस्य वधः श्लाघ्यस्तथाप्यस्माकं तावद्बन्धुगत एवेत्यत्राह—भूतानामिति । इह संसारे भूतानां संवासः सहावस्थानं प्रपागामिव प्रविवन्त्यस्यामिति प्रपा पान्थानां पिपासूनां जलादिपानेन विश्रान्त्यर्थं धार्मिकैर्निर्मिता शाला तस्यां यथा पान्थानां सहावस्थानमस्थिरं तद्वदिह भूतानामपीत्यर्थः । अस्थिरत्वे हेतुं वदन् भूतानि विशिनष्टि, स्वकर्मभिर्हेतुभिर्दैवेन तत्तज्जीवकर्मानुगुणं प्रवृत्तेनेश्वरेणेत्यर्थः । एकत्र नीतानां संयोजितानां पुनरन्यत्रानीतानां वियोजितानाम् ॥ २१ ॥

ननु, जीवतामेव संयोगवियोगौ प्रपादिषु दृष्टौ, कथं पुनरजीवतोऽत्रैव दग्धस्य तत्रतत्र संयोगवियोगौ? इत्यत्राह—नित्य इति । देहस्यास्थिरत्वेऽप्यात्मनः स्थिरत्वात् तत्तत्कर्मायत्तशरीरत्यागोपादानाभ्यां तैस्तैः संयोगवियोगौ उपपन्नाविति भावः । तदेतदुपपादयते, आत्मा अनित्यस्तत्र हेतुरव्ययः विनाशाद्यवस्थारहितः, तत्कुतः? शुद्धः प्रकृतिपरिणामानाश्रयस्वरूपः प्रकृतिपरिणामो हि प्रकृतिगतः तत्कुतः परदेहाद्विलक्षणः तत्कुतः सर्ववित् देहेन्द्रियमनःप्राणादीनां वित् अजडत्वेन देहाद्विलक्षण इति भावः । कथमेकदेशस्थः सर्वं वेत्ति? तत्राह—सर्वगः स्वधर्मभूतज्ञानद्वारा कृत्स्नदेहादिव्यापीति भावः । स्वतः एवम्भूतोऽप्यसावात्मा मायया स्वसम्बन्धिविचित्रपुण्यपापात्मककर्मणा गुणान् सत्त्वादीन्विसृजन् कर्मानुरूपं क्षोभयन्नित्यर्थः । आत्मनः स्वस्य कर्मफलभोगार्थमिति शेषः । लिङ्गं शरीरं धत्ते बिभर्ति गुणक्षोभस्य कर्मानुगुणत्वात्कर्मणः स्वात्मनः कर्तृत्वगुणविसर्गेऽपि कर्तृत्वमुक्तं गुणान्विसृजन्निति, उक्तविधोऽप्यनादिपुण्यपापात्मककर्मफलभोगाय तदनुगुणपरिणामसत्त्वादिगुणपरिणामात्मकं देहं बिभर्ति इत्यर्थः तथाच तस्य तत्रतत्र कर्मायत्तदेहसौलभ्यात्तत्प्रयुक्तावेकस्यैव संयोगवियोगौ सम्भवत इति भावः ॥ २२ ॥

ननु, नायमात्मा देहाद्विलक्षणः किन्तु स एव यतो देवोऽहं मनुष्योऽहमिति देहाद्यभेदेन प्रतीयते तत्राह—यथेति । देवोऽहमित्यादिप्रतीतिर्भ्रान्तिरूपा न प्रमितिरूपेतिभावः । तदेवोपपादयति—यथेति, यथा प्रचलता अम्भसा उदकेनोपाधिना तरवो वृक्षा अपि चलाइव कम्पमाना इव दृश्यन्ते यथाच भ्राम्यमाणेन चक्षुषा भूरपि चलतीव दृश्यते यथा तरुभूम्यादिचलनप्रतीतिर्भ्रान्तिरूपेत्यर्थः ॥ २३ ॥

एवं तथा हे भद्रे, गुणैः सत्त्वादिगुणपरिणामात्मकैः देहेन्द्रियादिभिः सह मनसि भ्राम्यमाणे व्यापृतवति, यद्वा, गुणैः शब्दादिविषयैर्हेतुभिस्तदर्थमित्यर्थः । मनसि भ्राम्यमाणे देहं विषयीकुर्वति सति पुमान् जीवः स्वयमविकलोऽपि निरवयवोऽपि देहाद्भिन्नोऽपीत्यर्थः । तत्साम्यतां देहतुल्यतां याति देवोऽहं मनुष्योऽहमित्यादिदेहरूपेणात्मानं प्रत्येति इत्यर्थः । तत्तां यातीत्यनुक्त्वा तत्साम्यतां यातीतिवदतोऽयमभिप्रायः देवोऽहमित्यादिदेहाकारमात्मानं मन्यमानस्यापि कदाचिद्व्यतिरेकप्रतिपत्तिरस्त्येवेति. तदेव विशदयति, अलिङ्गो लिङ्गवानिवेति. लिङ्गाच्छरीरादन्यः अलिङ्गः आत्मा लिङ्गवानिवात्मानं प्रत्येति ममेदं शरीरमित्येवं रूपेण लिङ्गप्रतिसम्बन्धीवात्मानं प्रत्येतीत्यर्थः । ममेदं शरीरमिति शरीराद्यतिरिक्तत्वेनात्मनः प्रतीतावपि देहात्मभ्रान्तिमतां तत्प्रतीतेरस्फुटत्वद्योतनाय लिङ्गवानिवेतीवशब्दः प्रयुक्तः । अयं भावः, यद्यात्मनो देहाकारत्वेन प्रतीतिः प्रमितिरूपा स्यात्तर्हि तद्भिन्नत्वेन प्रतीतिर्भ्रान्तिरूपा स्यात्

श्रीमद्वीरराघवाचार्य्यकृतभागवतचन्द्रचन्द्रिका ।

तथाचोक्तं शरीरप्रतिभासदशायां तदप्रतीतिदशायाञ्च सुषुप्त्यादावहमर्थस्यात्मनोऽनुवृत्तत्वेन प्रतीयमानत्वादिति ॥ २४ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

कटोदकं प्रेतमुद्दिश्य दीयमानमुदकम् ॥ १८ ॥

तन्मातर तेषां मातरं नाम्ना रुशद्भानु दितिं जननीं च श्लक्ष्णया गिरा इदमाहेत्यन्वयः ॥ १९ ॥

हे वधूः हे सहोदरभार्ये हे पुत्राश्च परेण वध ऐहिकामुष्मिकअनश्लाघ्यो न भवतीति कृत्वा शोक उतात्रैव कांश्चित्काल जीवतीति अभीष्टहान्याप्राप्तः आहोस्वित्पितृमातृपुत्रभावस्य क्षणिकतेति तत्र प्रथमद्वितीयो प्रत्याह रिपोरिति ॥२० ॥

तृतीयं मानरम् एको कटाचीकृत्याह-भूतानामिति । इह कर्मभुवि दैवेन विधिनाऽन्यत्र हरिणा वा एकत्र नीतानां सम्मिलितानामुन्नीतानां पुत्रपौत्रादिसमृद्धिं प्रापितानां भूतानामेकत्र सम्वासः सहवासः प्रपायां पानीयशालायामिव यथाऽध्रुवस्तथाऽनित्यो भवतीत्यन्वयः । "प्रपा पानीयशालास्यान्मन्त्रशाला प्रति श्रयः" इत्यभिधानम् ॥ २१ ॥

भूतानां सहवासोऽनित्यश्चेत्तर्हि केन सहवासो नित्यो भवतीत्याशङ्क्य सर्वगतत्वाज्जीवस्य मन आदीन्द्रियाधारत्वाद्धरिणा सहवासो नित्यः "सता सौम्य तदा सम्पन्नो भवति प्राज्ञेनात्मनान्वारूढ उत्सर्जयन्ति,,इत्यादिना सुषुप्तिमरणावस्थयोरपि सहस्थित्युक्तेरन्यदा किंवक्तव्यमित्याशयेन दैवं मतमाह-नित्य इति । असौ हरिरात्मनो जीवस्य मन आदीन्द्रियज्ञानं धत्ते तस्याधारभूत इत्यर्थः नित्यत्वादिर्नि स्वरूपत्वेनोच्यते, पर इति. जीवव्यावर्तकं मायया स्वेच्छया वासनया वा गुणान् शब्दादीन् विसृजन् ददानः ससारिणा इव चिदचिद्देहेन मनआदीनां नित्यसम्बन्धो युज्यत इत्यतः सर्वगत इत्युक्तम. प्रपायां प्राणिसहवासवत् परमात्मनो देहसम्बन्धो नित्य इत्याशयेनासुरमतमप्यनेनोच्यते गुणान् विसृजन् लुब्धुरसावात्मा आत्मनो भोगायतनं लिङ्गं कर्मज्ञानेन्द्रियपञ्चवायुमनसां समुदितरूपं शरीरं धत्ते मायेत्युक्त्याऽनित्यो देहसम्बन्ध इति ॥ २२ ॥

इतोपि अविद्यावशाद्ब्रह्मैव संसरतीत्येतदासुरं मतमित्याशयेनाह-यथेति । एवं गुणैर्भ्राम्यमाणे इतस्ततश्चञ्चलीक्रियमाणे मनस्यविकलः पुमान्पूर्णपुरुषः श्रीनारायणाः तस्य जीवस्य साम्यं दोषित्वं संसारित्वं यातीति प्रतीयते. कथमिव, लिङ्गवानिव जीव इव मनोदोषैराभासे ब्रह्मप्रतिबिम्बे जीवे दूषिते तद्विषयज्ञानहीने सति तन्महाभासिनो बिम्बभूतस्य ब्रह्मणोपि दुष्टत्वं कल्पयतीत्यर्थः । न चैतदुपपन्नमित्याह-मलिङ्ग इति । नीरूपं तस्मादघटिताविद्याकल्पितमित्यर्थः । अन्यत्र प्राकृतशरीररहितः, कथमिव, प्रचलिताम्भसा तरवोऽपि प्रचला इव दृश्यन्ते यथा, जलसञ्चलनाज्जले प्रतिबिम्बितवृक्षमञ्चलनात्तटस्थानिश्चलवृक्षसञ्चलनं कल्पयत्यज्ञस्तथेति. नन्वत्र प्रतिबिम्बितवृक्षचलनेन तटस्थवृक्षचलनकल्पनमुन्मत्तकल्पनमेव. प्रत्यक्षेणान्यथा दृश्यमानत्वादित्युक्त्वा दृष्टान्तान्तरमाह-चक्षुषेति, यथा, परिभ्रमतः पुरुषस्य भ्राम्यमाणेन चक्षुषा भूर्भ्रमतीव दृश्यते—

"असमः समतामेति भ्रान्तिदृष्ट्यैव केवलम् ।
जीवेन ब्रह्म न समं तत्त्वदृष्ट्या कथञ्चन ॥
यथोदचालनाद्वृक्षप्रतिबिम्बप्रचालनात् ।
तटस्थवृक्षचलनं कल्पयेदबुधो नरः ॥
तथा मनसिजैर्दोषैराभासे दूषिते नरे ।
साभासिनो ब्रह्मणश्च दोषमज्ञः प्रकल्पयेत् ॥
आत्मनश्चक्षुषोर्भ्रान्त्या यथा पश्येद्भ्रमं भुवः ।
तथैव स्वात्मनो दोषाद्दोषवद्ब्रह्म पश्यति,, ॥

इत्येतत्तमाशासिद्धत्वादुक्त एवार्थो न त्वितरः 'विष्णुर्द्विजक्रियामूलः' इत्यारभ्योच्यमानं दैवमासुरञ्चेत्युभयमतज्ञापनाय-

"विप्रयज्ञादिमूलं तु हरिरित्यासुरं मतम् ।
हरिरेव हि सर्वस्य मूलं सम्यङ्मतं नृप" ॥

इत्येतद्वाक्यमाचार्यैरत्रोदाहृतमुपर्यप्यनुसन्धानाय वेति ॥ २३-२४॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

रिपोरप्यभिमुखे किमुत श्रीविष्णोरिति च ॥ २०—२१ ॥

नित्य इत्यत्र जीवेऽपीश्वरधर्मोक्तिरसुरोचितत्वात् सर्वेषाम्याज्ञानमिति युक्तिविरुद्धञ्च तदिति वास्तवार्थे तु सर्वं लोकं गच्छति सर्वगः सर्वं शरीरं विन्दति सर्ववित् ॥ २२—२४ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

कटोदकम् । प्रेताय प्रदेयमुदकं आदिशब्दात् प्रेतश्राद्धञ्च॥१७-१९॥
हे वधूरिति भ्रातुर्भार्यां सम्बोधयति ॥ २० ॥

बन्धुविच्छेददुःखञ्चैवं भावनायां निर्वाप्यतामित्याह-भूतानामिति । प्रपायां पानीयशालायां उन्नीतानां पुनर्वियोजितानाम् ॥ २१ ॥

युष्मत्प्रबोधार्थमुक्तमिदं लोकदृष्ट्या तत्त्वदृष्ट्यातु हिरण्याक्षः स्वरूपात्मैव न तु देहस्तस्यात्मनश्च स्वरूपं शृणुतेत्याह-नित्यः मृत्युरहितः अव्ययः अपक्षयशून्यः शुद्धः निर्मलः सर्वगः सर्वगतः इतीश्वरधर्मोक्तेः जीवेष्वसुरस्वभावात् वस्तुतस्तु सर्वं लोकं गच्छतीति सः सर्वं सुखदुःखादिकं विन्दतीति सः परो देहादिव्यतिरिक्तः असावात्मा आत्मनः स्वस्य लिङ्गं देहं मायया स्वाविद्यया धत्ते किमर्थं गुणान् उच्चावचान् स्थूलदेहान् विशेषेण सृजन् स्वीकुर्वन् तथा तत्प्रदावृत्त्या विसृजन् त्यजन् स्थूलदेहान् स्वीकर्तुं त्यक्तुञ्चेत्यर्थः ॥ २२ ॥

एवं चलिङ्गं धत्तेतस्मात् सूक्ष्मदेहादप्यात्मा भिन्न एवेति दृष्टान्ताभ्यामाह-यथा अम्भसा प्रचलता हेतुना अम्भस्सु प्रतिबिम्बितास्तरवोऽपि चलाइवेक्ष्यन्ते न तु चलाः अम्भोभ्यस्तेषां भिन्नत्वात् एवमेव लिङ्गधर्माः शोकमोहादयस्तदुपहिते आत्मन्यपि प्रतीयन्ते नत्वात्मा शोकमोहादिमान्. तस्माल्लिङ्गाद्भिन्नत्वादित्यर्थः । एवमुपाधिधर्मा उपहिते भवन्तीति दृष्टान्तमुक्त्वाग्राहकधर्माग्राह्येभवन्तीति

एष आत्मविपर्यासो ह्यलिङ्गे लिङ्गभावना ।
एष प्रियाप्रियैर्योगो वियोगः कर्मसंसृतिः ॥ २५ ॥
सम्भवश्च विनाशश्च शोकश्च विविधः स्मृतः ।
अविवेकश्च चिन्ता च विवेकाऽस्मृतिरेव च ॥ २६ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

दृष्टान्तमाह—चक्षुषेति । भ्राम्यमाणेन भ्रमिदोषाक्रम्यमाणेन चलन्ती भ्रमतीव यथा भूताविष्टः पुरुषो भूतग्राह्यउच्यते एवं देहाविष्ट आत्मा देहग्राह्योदेहधर्माक्रान्तउच्यत इत्यर्थः । एवम् अविकलः शुद्धएवात्मा तत्साम्यतां मनःसमतां मनोधर्मग्राहित्वम् ॥ २३ ॥ २४॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

कटोदकादीनि प्रेतदेयतिलाञ्जल्यादीनि ॥ १७—१८ ॥

तेषां हिरण्याक्षसुतानां मातरं रुषाभानुं श्लक्ष्णया मधुरया ॥ १९—२० ॥

दैवेन प्राक्कर्मणा एकत्र नीतानां मातृपुत्रादिदेहसंयोजितानां पुनः स्वकर्मभिरुन्नीतानां मातृपुत्रादिसंयोगप्रददेहेभ्योवियोजितानां संवासः संयोगः प्रपायामिव पानीयशालिकायामिव अनित्य इत्यर्थः ॥ २१ ॥

ननु, कः स आत्मा ? यः कर्मभिर्देहादुन्नीयते, केन देहेन ? त्यक्त्वा देहादुद्गच्छति केन च हेतुना तमपि देहं विभर्तीत्याकाङ्क्षायामाह—नित्य इति । यः कर्मभिरुन्नीयते स आत्मा नित्यो ध्रुवः यतः अव्ययः विनाशाद्यवस्थारहितः अतएव शुद्धः सर्वगः "हृदयमात्मा, बुद्धेर्गुणेनात्मगुणेन चैव, आराग्रमात्रो ह्यवरोपि दृष्टः" इत्यादिश्रुतिभ्यो हृद्गतोऽणुस्वरूपोपि ज्ञातृत्वलक्षणात् गुणात् सर्वेषु पादशिरआदिषु व्याप्तः अत एव पादे मे सुखमित्येवं सर्ववित् परः देहेन्द्रियमनोबुद्धिप्राणादिभ्यो विलक्षणः एवंभूतगुणान् प्रकृतिगुणपरिणामात्मकान् उत्तरदेहलब्धये पूर्वपूर्वदेहान् विसृजन् लिङ्गं सूक्ष्मं देहम् आत्मनः स्थाने आत्मत्वेन मायया धत्ते बिभर्ति मायया आत्मत्वेन धृतेन लिङ्गदेहेन देहाद्देहान्तरं यातीत्यर्थः ॥ २२ ॥

लिंगदेहे आत्मत्वभ्रान्तिमुपपादयति—यथेति द्वाभ्याम् । यथाम्भसा प्रचलता हेतुभूतेन तत्तीरगास्तरवोपि जलगतस्वच्छायाद्वारा चला इव प्रतीयन्ते, भ्रान्त्येति शेषः । यथा च भ्राम्यमाणेन चक्षुषा भूः भ्रमतीव प्रतीयते ॥ २३ ॥

एवं गुणैरनादिप्रकृतिगुणैर्भ्राम्यमाणे स्वरूपज्ञानात् चाल्यमाने मनसि मनोपलक्षिते आत्मनि अविकलः सुखरूपोपि अलिङ्गः देहभिन्नोपि पुमान् तत्साम्यतां लिङ्गदेहसाम्यतां देहोहमिति भावं याति लिङ्गवानिव प्रसिद्धो देहवान् यथा स्थूलोऽस्मि कृशोस्मीति मन्यते तद्वत् ॥ २४ ॥

भाषा टीका ।

हिरण्यकशिपु ने भी अपने मृत भ्राता के शोक से दुःखित होकर उसको तिलांजली देकर भ्राता के पुत्रों को समुझाने लगा ॥ १७ ॥

शकुनि शंबर धृष्ट भूत सन्तापन वृक काल नाभ महा नाभ हरिश्मश्रु और उत्कच, इन सब हिरण्याक्ष के पुत्रों को ॥ १८ ॥

और उनकी माता रुषाभानु तथा हे जनेश्वर ! अपनी माता दिति को देशकाल के जानने वाला हिरण्यकश्यपु मीठी वाणी से ऐसे कहना लगा ॥ १९ ॥

हिरण्यकशिपु बोला कि—हे जननि ! हे वधू ! हे पुत्रो उस वीर का शोक करने लायक नहीं है । क्योंकि शूरवीर का मरना तो शत्रु के सम्मुख ही श्लाघनीय है ॥ २० ॥

हे सुव्रते ! इस संसार में प्राणियों निवास [ प्रपा ] प्याउके निवास के तरह जानो क्योंकि सब लोग दैव योग [ प्राचीन कर्म योग ] से इकट्ठे होते है और उसी से फिर अलग २ होजाते है ॥ २१ ॥

क्योंकि ? आत्मा तो नित्य अव्यय शुद्ध सर्व ( देहेन्द्रियादि ) को जानने वाला और ज्ञान द्वारा सर्व ( देहेन्द्रियादि ) व्यापी है और देहादि से पर अर्थात् विलक्षण है ॥ ऐसा होकर भी अपने पूर्व कर्मों से सत्वादि गुणों को सृजता हुआ अपने प्रारब्ध भोग लिये शरीर को धारण करता है ॥ २२ ॥

जैसे जल के चलते से वृक्ष भी चलते से मालूम पड़ते है ॥ और जैसे भ्रमते हुए नेत्रों से पृथिवी चलती सी मालूम पड़ती है ॥ २३ ॥

इसी प्रकार माया के गुणों से मनके भ्रमने से यह अविकल पुरुष जीवात्मा भी है भले असंसारी होकर भी संसारी की तरह मन समता को प्राप्त हो जाता है ॥ २४ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

लिङ्गभावना देहाभिमानः एष आत्मनो विपर्यासोऽन्यथाभावः तमेवाह--प्रियैर्वियोगोऽप्रियैर्योगश्च कर्म च संसृतिश्च नानागर्भेषु प्रवेशः ॥ २५ ॥

ततश्च सम्भवउत्पत्तिः विवेकस्यास्मृतिरननुसन्धानम् ॥२६॥

अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
यमस्य प्रेतबन्धूनां सम्वादं तं निबोधत ॥ २७ ॥
उशीनरेष्वभूद्राजा सुयज्ञ इति विश्रुतः ।
सपत्नैर्निहतो युद्धे ज्ञातयस्तमुपासत ॥ २८ ॥
विशीर्णरत्नकवचं विभ्रष्टाभरणस्रजम् ।
शरनिर्भिन्नहृदयं शयानमसृगाविलम् ॥ २९ ॥
प्रकीर्णकेशं ध्वस्ताक्षं रभसा दष्टदच्छदम् ।
रजःकुण्ठमुखाम्भोजं छिन्नायुधभुजं मृधे ॥ ३० ॥
उशीनरेन्द्रं विधिना तथाकृतं पतिं महिष्यः प्रसमीक्ष्य दुःखिताः ।
हताः स्म नाथेति करैरुरो भृशं घ्नन्त्योमुहुस्तत्पदयोरुपापतन् ॥ ३१ ॥
रुदत्य उच्चैर्दयिताङ्घ्रिपङ्कजं सिञ्चन्त्यस्रैः कुचकुङ्कुमारुणैः ।
विस्रस्तकेशाभरणाः शुचं नृणां सृजन्त्य आक्रन्दनया विलेपिरे ॥ ३२ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

अत्रापि शोकहेतु विना वृथैवायं शोक इत्यस्मिन्नर्थे प्रेतस्य मृतस्य कस्यचित् ये बन्धवस्तेषाञ्च सम्वादं शृणुत ॥ २७ ॥

उपासत तत्समीपे आवृत्य स्थिताः ॥ २८ ॥

विशीर्णं रत्नमयं कवचं यस्य विभ्रष्टान्याभरणानि स्रजश्च यस्य शरेण निर्भिन्नं हृदयं यस्य असृजा रक्तेनाविलं मलिनम् ॥ २९ ॥

प्रकीर्णाः केशाः यस्य ध्वस्ते अक्षिणी यस्य रभसा संरम्भेण दष्टो दच्छद ओष्ठो येन रजसा कुण्ठमावृतं मुखाम्भोजं यस्य छिन्नमायुधं भुजश्च यस्य ॥ ३० ॥

तस्य पदयोरुपसमीपे आ समन्तादपतन् ॥ ३१ ॥ ३२ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

एवं देहाद्विलक्षणस्य नित्यस्यात्मनः कर्मपरिपाकानुगुणसत्त्वादिगुणपरिणामरूपदेहसम्बन्धस्तदनुध्याननिमित्तस्तदभिन्नत्वप्रत्ययश्च भ्रमरूप इत्युक्तम्. अथ यथा देहसम्बन्धस्तदनुध्याननिमित्तस्तदभेदभ्रमश्च यथा कर्ममूलकः एवं सुखदुःखादिकमपि सर्वं कर्ममूलकमेवेत्याह—एष इति । अलिङ्गे लिङ्गादन्यस्मिन् शरीराद्भिन्ने आत्मनि लिङ्गभावना देहत्वेनानुध्यानं देवोऽहमित्यादिदेहाभेदप्रतीतिरित्येष आत्मनो विपर्ययः अन्यथा प्रतीतिः कर्मसंसृतिः कर्मकृतसंसारो भवतीत्यर्थः । एवं प्रियाप्रियैरिष्टानिष्टवस्तुभिर्योगो वियोगश्च सुखदुःखस्वरूप इत्यर्थः ॥ २५ ॥

सम्भवः उत्पत्तिः विनाशो मरणं नानाविधः शोकः अविवेकः चिदचिदीश्वरयाथात्म्याविवेचनं चिन्ता विषयानुध्यानं विवेकस्यास्मृतिः कञ्चिदाप्तोपदेशादिना जातस्यापि विवेकस्याननुसन्धानञ्चेत्येष सर्वोऽपि कर्मसंसृतिरेव कर्मकृतसंसाररूप एव स्मृतः ॥ २६ ॥

अत्र शोकनिमित्तमन्तरेणापि यः शोकः स व्यर्थ एवेत्यस्मिन्नर्थे इतिहासमप्युदाहरन्ति तत्त्वविदः, इतिहासं विशिनष्टि—पुरातनं न त्वाधुनिककपोलपरिकल्पितं यमस्य प्रेतबन्धूनाञ्च सम्वादरूपं तमितिहासं निबोधत शृणुत ॥ २७ ॥

इतिहासमेवाह—उशीनरेष्वित्यादिना । उशीनरेषु देशेषु सुयज्ञ इति प्रसिद्धः कश्चिद्राजा बभूव स च सपत्नैः शत्रुभिर्युद्धे निहतः तं निहतं ज्ञातयः सपिण्डाः उपासत परिवृत्योपविविशुः ॥ २८ ॥

कथम्भूतं विशीर्णं रत्नमयं कवचं यस्य विभ्रष्टान्याभरणानि स्रक् च यस्माच्छरैर्नितरां भिन्नं हृदयं यस्य असृजा रुधिरेण आविलं व्याप्तम् ॥ २९ ॥

प्रकीर्णाः केशा यस्य ध्वस्ते निश्चेष्टे अक्षिणी यस्य संरम्भेण क्षोभेण दष्टो दच्छदः दन्तच्छदः ओष्ठो येन रजसा कुण्ठमावृतं मुखाम्भोजं यस्य मृधे युद्धे छिन्नमायुधं भुजश्च यस्य तम् ॥ ३० ॥

विधिना दैवेनैवं कृतमुक्तदशां प्रापितम् उशीनरेन्द्रं पतिं भर्तारं प्रसमीक्ष्य तत्पत्न्यः अतीव दुःखिताः हे नाथ ! वयं हताः स्मेति वदन्त्यः करैः पाणिभिः भृशं नितरामुरो मुहुर्मुहुर्घ्नन्त्यः तस्य भर्तुः पदयोश्चरणयोरुपापतन् समीपे समन्तादापतन् ॥ ३१ ॥

तत उच्चैस्स्वरेण रुदन्त्यः कुचकुङ्कुमेनारुणैः कुचयोः पतित्वा ततः प्रस्रवद्भिरिति भावः । अस्रैः शोकजलबिन्दुभिः

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

दयितस्य प्रत्युरंघ्रिपङ्कजं सिञ्चन्त्यः विभ्रष्टाः केशाः आभरणानि च यासां ताः नृणामपि शुचं सृजन्त्यः शृण्वतां उत्पादयन्त्यः आक्रन्दनया रोदनेन सह विलेपिरे विलापञ्चक्रुः ॥ ३२ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

परमात्मानमेवं जानतः किं फलं ? तत्राह—एषइति । अलिङ्गे प्राकृतदेहेन्द्रियादिरहिते अत एव परतन्त्रत्वादिसर्वदोषरहिते परमात्मनि या लिङ्गभावना प्राकृतदेहेन्द्रियात्मत्वादिचिन्ता एष आत्मनः स्वस्यैवायोग्यस्य जनस्य विपर्यासस्तमःप्राप्तिलक्षणोऽनर्थो भवति इहापि यथा परत्र तमोलक्षणोऽनर्थ एवं प्रियाप्रियादियोगवियोगलक्षणापूर्वकर्मानुसारेण संसृतिर्भवति ॥ २५ ॥

कीदृशीति विशेष्याह—सम्भव इति । अज्ञाननिवृत्तिपर्यन्तं पुनः पुनः सम्भवस्तस्मिन्सति स्वरूपविनाशः विवेकस्मृतिः अविवेकिन एव विवेकभ्रान्तिः ज्ञानित्वभ्रान्तिः असुरसिद्धान्तनिष्ठितस्य हिरण्यकशिपोरेवं देवसिद्धान्तोपन्यासेन कथं स्वबन्धुबोधनमितीयमाशङ्का—

"अन्तर्हिरण्यकादीनां भक्तिरस्त्येव केशवे ।
असुरावेशतस्त्वन्यान् हरिस्तोतॄन् द्विषन्ति च" ॥

इत्यनेन परिहरणीयेति ॥ २६ ॥

पुत्रमित्रकलत्रादिभिः सह निवासो दैवाधीन इति मत्वा शोको न कार्य इत्यस्मिन्नर्थे इतिहासलक्षणकथास्तीत्याह—अत्रेति । प्रेतबन्धूनां कस्यचिन्मृतस्य ज्ञातीनाम् ॥ २७—२८ ॥

असृगाविलं रुधिररूषितम् ॥ २९ ॥

स्तब्धाक्षं निश्चलनेत्रं रजःकुण्ठं धूलिधूसरं मुखाम्बुजं यस्य स तथा तं छिन्नआयुधयुक्तौ भुजौ यस्य स तथा तम् ॥ ३०—३१ ॥

कुचकुङ्कुमधूलिभिररुणवर्णैराक्रन्दनया उच्चरोदनेन नृणां शुचः शोकान् विसृजन्त्यः कुर्वाणा विलेपिरे परिदेवनं चक्रुः ॥३२॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

एष इति युग्मकम् । अलिङ्गे देहातिरिक्ते आत्मनि ॥ २५—४५ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

अलिङ्गेऽप्यात्मनि लिङ्गभावना देहाभिमानः एष एवात्मनोविपर्यासः विपर्ययः तस्मादेवात्मनः एषः प्रियाप्रियैर्योगोवियोगश्च चकाराद्विपरीतश्च अप्रियैर्योगः प्रियैर्वियोगश्च कर्म च संसृतिश्च नानागर्भेषु प्रवेशः ॥ २५ ॥

विवेकस्य सतोऽप्यस्मृतिरस्फूर्तिः ॥ २६ ॥

अत्रापि अशोच्यस्यापि शोके इतिहासमपि प्रेतस्य मृतस्य ये बन्धवस्तेषाञ्च ॥ २७ ॥ २९ ॥

रभसा कोपेन दष्टो दन्तच्छदः अधरो येन तं तत्क्षण एव सपत्नैः शस्त्रहतत्वात्तथाभूतत्वेनैव मृत्वापि स्थितमित्यर्थः ॥ ३० ॥ ३१ ॥ ३२ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

देहात्माभिमान एव संयोगवियोगादित्याह—एष इति द्वाभ्याम् । अलिङ्गे देहभिन्ने लिङ्गभावना देहोहमिति भावना सैष आत्मनोविपर्यासः अन्यथाभावः हि हेतौ अत एव विपर्यासाद्धेतोः एष प्रसिद्धः प्रियाप्रियैर्योगोवियोगश्च कर्मभिः संसृतिः संसारश्च ॥ २५ ॥

सम्भवो जन्म विनाशो मरणम् अविवेकः कार्याकार्यविवेकाभावः कथञ्चिद्गुर्वादितो लब्धस्य विवेकस्य अस्मृतिरननुसन्धानम् ॥ २६ ॥

उक्तार्थे इतिहासमाह—अत्रापीति । अत्र आत्मनो ध्रुवत्वेनाशोच्यत्वे ॥ २७ ॥

उशीनरेषु देशेषु तम्य ज्ञातयः उपासत आवृत्य स्थिताः ॥२८॥ कथंभूतं विशीर्णं रत्नमयं कवचं यस्य विभ्रष्टानि आभरणानि स्रजो यस्य शरेण निर्भिन्नं हृदयं यस्य असृगाविलं रुधिरलिप्तम् ॥ २९ ॥

प्रकीर्णाः केशा यस्य ध्वस्ते अक्षिणी यस्य रभसा संरम्भेण दष्टो दन्तच्छदो येन रजसा छन्नं मुखाम्भोजं यस्य छिन्नौ आयुधयुक्तौ भुजौ यस्य तम् ॥ ३० ॥

विधिना कर्मफलदेन तथा कृतं पञ्चत्वं नीतं तस्य पदयोः उप समीपे आ समन्तात् अपतन् ॥ ३१ ॥

नृणां पश्यतां शुचं सृजन्त्य. आक्रन्दनया वैक्लव्यवाण्या विलेपिरे ॥ ३२ ॥

भाषा टीका ।

बस यही आत्मा का विपरीत पना है जो कि अशरीरी के विषय शरीरी की भावना हो जानी और इसी से प्रिय अप्रियों से संयोग और वियोग होता है। और इसी से कर्म निबन्धन संसार भी है ॥ २५ ॥

और इसी से शरीर की उत्पत्ति और विनाश और नाना तरह का शोक अविवेक चिन्ता विवेक और विस्मृति भी होती है ॥ २६ ॥

इस विषय में एक प्राचीन इतिहास कहते हैं ॥ उसमें यमराज और प्रेतबन्धुओं का सम्वाद है उसे तुम सुनो ॥२७॥

उसीनर देशमें एक सुयज्ञ नामक राजा हुआ। उसको युद्ध में वैरियों ने मारडाला उस के जाति लोग उसको चारों तरफ से घेर कर बैठे थे ॥ २८ ॥

अहो विधात्राऽकरुणेन नः प्रभो ! भवान् प्रणीतो दृगगोचरां दशाम् ।
उशीनराणामसि वृत्तिदः पुरा कृतोऽधुना येन शुचां विवर्धनः ॥ ॥ ३३ ॥
त्वया कृतज्ञेन वयं महीपते ! कथं विना स्याम सुहृत्तमेन ते ।
तत्रानुयानं तव वीरपादयोः शुश्रूषतीनां दिश यत्र यास्यसि ॥ ३४ ॥
एवं विलपतीनां वै परिगृह्य मृतं पतिम् ।
अनिच्छतीनां निर्हारमर्कोऽस्तं संन्यवर्तत ॥ ३५ ॥
तत्र ह प्रेतबन्धूनामाश्रुत्य परिदेवितम् ।
आह तान् बालकोभूत्वा यमः स्वयमुपागतः ॥ ३६ ॥

यम उवाच ।

अहो अमीषां वयसाधिकानां विपश्यतां लोकविधिं विमोहः ।
यत्रागतस्तत्र गतं मनुष्यं स्वयं सधर्मा अपि शोचन्त्यपार्थम् ॥ ३७ ॥
अहो वयं धन्यतमा यदत्र त्यक्ताः पितृभ्यां न विचिन्तयामः ।
अभक्ष्यमाणा अबला वृकादिभिः सरक्षिता रक्षति यो हि गर्भे ॥ ३८ ॥
य इच्छयेशः सृजतीदमव्ययो य एव रक्षत्यवलुम्पते च यः ।
तस्याबलाः ! क्रीडनमाहुरीशितुश्चराचरं निग्रहसङ्ग्रहे प्रभुः ॥ ३९ ॥
पथि च्युतं तिष्ठति दिष्टरक्षितं गृहे स्थितं तद्विहतं विनश्यति ।
जीवत्यनाथोऽपि तदीक्षितो वने गृहेऽपि गुप्तोऽस्य हतो न जीवति ॥ ४० ॥

भाषा टीका ।

उस राजा का रत्नों का कवच विखर गया था, आभरण ेर मालायें टूट गई थीं । बाणों से हृदय विदीर्ण हो गया ा शरीर रुधिर से भीग रहाथा ॥ २९ ॥

केश विखरे हुए आखें बैठी हुई, रोष के मारे दांतों से होठों को ाये हुए रज से धूसर है मुख जिसका औ युद्ध मे कट े आयुध और भुजा जिसकी ॥ ३० ॥
रथ ने इस तरह जिसको कर दिया उस उशीनरेन्द्र राजा ो रानियों नें देख कर बडा दुःख पाया ॥ और हे नाथ ! म सब मरचुकीं ऐसे कह कर हाथों से छाती कूटते हुए स के पैरों में गिर पडीं ॥ ३१ ॥

ऊचे स्वर से रोती हुई अपने प्रिय के चरणों को कुच कुम से अरुण अपने अश्रुपातों से धोने लगी । और खुल े केश और आभरण जिनों के ऐसी वो रानियें बहुत चे स्वरसे चिल्लाकर मनुष्यों को शोक पैदा कराती हुई विलाप ने लगी ॥ ३२ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

विलापमेवाह--अहो इति द्वभ्याम् । अकरुणत्वमेवाहुः, येन विधात्रा दृशामगोचरां दशां भवान्प्रणीतो गमितस्तेन विधात्रा त्वमधुना शुचां विवर्धनः कृतोऽसीत्यन्वयः ॥ ३३ ॥

हेमहीपते ! त्वया सुहृत्तमेन विना वयं कथ स्याम भवेम जीवेमेत्यर्थ. । अतो हे वीर, यत्र त्वं यास्यसि तत्र तेऽनुयानम-नुगमनं तव पादयोः शुश्रूषां कुर्वतीनामस्माकं दिश देहि ॥ ३४ ॥

निर्हारं दाहार्थं नयनमनिच्छन्तीनाम् अस्तमस्ताचलंप्रति ॥३५॥
परिदेवितं रोदनं स्वपुरीमेव स्थित आश्रुत्य श्रुत्वा तत्र स्वयमेवोपागतो यमो बालकोभूत्वा तानाह-अहो इत्यादिना ॥ ३६ ॥
अहो आश्चर्यम् अमत्तो वयसाऽधिकानामपि लोकस्य विधिं जन्ममरणादिप्रकारं विपश्यतामपि विमोह'; मोहमेवाह; यत्र यस्मादव्यक्तादागतस्तत्रैव गतमपार्थं शोचन्ति तदुक्तं गीतासु,
"अव्यक्तादीनि भूतानि व्यक्तमध्यानि भारत ।
अव्यक्तनिधनान्येव तत्र का परिदेवना" इति ॥
किञ्च स्वयमपि सधर्माः मृतेन सह समानो मृत्युलक्षणो धर्मो येषां तथाभूतामपि ॥ ३७ ॥

### श्रीधरस्वामिकृतभावार्थदीपिका ।

अबलाः दुर्बला अपि वृकादिभिरभक्ष्यमाणाः वयं न विचिन्तयामः तत्र हेतुः, यो गर्भे रक्षति स एव सर्वत्र रक्षिता ॥ ३८ ॥

ननु, तस्य रक्षणे किम्प्रयोजनम् ? न किञ्चिदपि; किन्तु क्रीडैव केवलमित्याह-य इति । य ईश इदं विश्वं सृजति रक्षत्यवलुम्पते संहरति च भो अबलास्तस्येशितुश्चराचरं क्रीडासाधनमाहुः अतः स एव निग्रहे संहारे सङ्ग्रहे पालने च प्रभुः ॥ ३९ ॥

प्रभुत्वमेवान्वयव्यतिरेकाभ्यां दर्शयति-पथीति । दिष्टेन दैवेनेश्वरेण रक्षितं तेनेश्वरेण विहतमुपेक्षितम् अस्य हतस्तेनोपेक्षितः ॥ ४० ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

विलापमेवाह--अहो इति द्वाभ्याम् । अस्माकं प्रभो हे भर्तः ! अकरुणेन निष्कृपेण विधात्रा ब्रह्मणा दृगगोचरां दशां भवान्नीतो गमितः नः दृशामगोचरामवस्थां प्रणीत इति वान्वयः । येन विधात्रा पुरा उशीनराणां तद्देशोद्भवानां जनानां वृत्तिदः जीवनप्रदः कृतो भवानधुना तेनैव विधात्रा शुचां शोकानां विवर्द्धनः कृतोसि ॥ ३३ ॥

हे महीपते ! सुहृत्तमेन कृतज्ञेन च त्वया विना ते तव सम्बन्धिन्यो वयं कथं स्याम, कथं जीवेमेत्यर्थः । अतस्त्वं यत्र यास्यसि तत्रैव, हे वीर ! तव पदयोः शुश्रूषतीनां सेवाङ्कर्तुमिच्छन्तीनामस्माकमनुयान सहगमनं दिश देहि ॥ ३४ ॥

एवं मृत पतिं परिगृह्य विलपन्तीनां निर्हारं दाहार्थं नयनमनिच्छतीनां सतीनाम् अर्कः सूर्यः अस्तम् अस्ताचलंप्रति संन्यवर्त्तत सन्निकृष्टो बभूव ॥ ३५ ॥

प्रेतस्य मृतस्य ये बन्धवस्तेषां परिदेवितं रोदनमाकर्ण्य स्वपुर्यामेव श्रुत्वा भगवान् यमः स्वयमेव बालकोभूत्वा तत्राक्रन्दनस्थाने समुपागतस्तानाह, हेत्याश्चर्ये ॥ ३६ ॥

तदेवाह—अहो इत्यादिना । अहो इत्याश्चर्ये किन्तत् यद्वयसा मत्तः अधिकानामपि लोकविधिं जन्ममरणादिलोकपरिपाटीं पश्यतामप्यमीषां प्रेतबन्धूनां विशिष्टो मोह इत्येतत्, विमोहमेवाह—यत्र भुवि सम्भवः उत्पत्तिः तत्रैव गतं पुनस्तत्रैव लीनं मनुष्यंप्रति स्वयं सधर्माः मृतेन तुल्यं जन्ममरणादिभाजोपि अपार्थं मुधा शोचन्ति ॥ ३७ ॥

न्यूनवयस्का अपि वयमेवाहो धन्या श्रेष्ठाः, कुतः ? यतः पितृभ्यां मातापितृभ्यां त्यक्ता अपि वयं न विचिन्तयामश्चिन्तां न कुर्मः अबला दुर्बला अपि बाला अपीति वा वृकादिभिरभक्ष्यमाणा वयम्, तत्रहेतुः, यो हि गर्भे रक्षति जन्मनः पश्चादपि स एव हि ईश्वरो रक्षिता रक्षिष्यति ॥ ३८ ॥

कोसौ रक्षिता ? तत्राह—य इति । य ईश्वरः स्वेच्छयैव न तु कर्मणा इदं कृत्स्नं जगत्सृजति तर्हि सोप्यस्मदादिवत्किं जन्ममरणादिभाक् ? नेत्याह-अव्ययः अपक्षयादिविकाररहितः कर्मायत्तप्राकृतदेहरहित इत्यर्थः । यश्च स्वेन सृष्टं जगद्रक्षति यश्च स्वेन रक्षितं जगत्पुनरवलुम्पते संहरति तर्ह्येवंविध ईश्वरः कर्मवश्य इवेत्थं किमर्थं करोति ? तत्राह—हे अबलाः ! तस्यैवं जगदुत्पत्त्यादिकर्तुरीशितुरीश्वरस्यान्तरात्मतयावस्थितस्य चराचरात्मकमिदं जगत् क्रीडनं क्रीडापरिकरं जगद्व्यापारस्तस्य क्रीडारूप इति भावः । अत एव निग्रहसंग्रहयोः निग्रहानुग्रहयोः प्रभुः समर्थः ॥ ३९ ॥

प्रभुत्वमेवान्वयव्यतिरेकाभ्यां दर्शयति-पथीति । यथा पथि च्युतं विसृष्टमपि दिष्टेन दैवेन ईश्वरेण रक्षितमनुगृहीतं सत् तिष्ठति पुनर्लब्धं भवतीत्यर्थः । गृहे स्थितमपि तेन दिष्टेन विहतं सन्निनश्यति एवमरण्ये अनाथः रक्षकान्तररहितोपि तेन दिष्टेन ईक्षितो जीवति तत्सङ्कल्पेन जीवति गृहे गुप्तोप्यस्य हतो अनेनोपेक्षितो न जीवति किन्तु विनश्यत्येव ॥ ४० ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

नो दृशां चक्षुषामगोचरमविषयं नीतः येन विधिना ॥ ३३ ॥

स्याम सत्तांप्राप्नुमः तर्हि किं कर्तव्यमत्राह—तत्रेति । यत्र यास्यसि तत्र पादयोरनुयानं दिश ॥ ३४ ॥

निर्हारं दाहम् ॥ ३५ ॥

हेत्यनेन कथांतरप्रसक्तिं सूचयति यमः ॥ ३६ ॥

मा कुरुध्वं यूयं शोकं युष्माभिः [illegible] इत्याहेति तत्राह—अहोइति । लोकविधिं जन्ममरणादिप्रकारं निपश्यतामीषां प्रेतबन्धूनां विमोहः अहो किं [illegible] सधर्माः जन्मादिसमानधर्माः अमी बन्धवः यत्र [illegible] मनुष्यदर्शनायोग्यात् स्वर्गनरकादन्यत्रोद्भव उत्पत्तिर्देहयोगलक्षणा [illegible] तत्र नतु अक्षाद्यक्षुरगोचरं स्वर्गादिकं गतं मनुष्यमनुशोचन्तीति यत्तदपार्थं व्यर्थं गतानुगतिकत्वात् "अदर्शनादिहायातः पुनश्चादर्शनं गतः" इति वचनात् यत्र स्वर्गादेरुद्भवो यस्य स यत्रोद्भवस्तत्र गतः स्वर्गादिगतमितिवा अपार्थमनुशोचन्तीतिवा सर्वस्य दैवाधीनत्वं स्वानुभवसिद्धमिति ज्ञापयन्पद्धोक्ति, यद्वा यत्र उत्पन्नं तत्र पृथिव्यां गतं मनुष्यशरीरं प्रतिव्यर्थम् अनुशोचन्तीति ॥ ३७ ॥

तस्मात्सर्वं दैवाधीनमिति मत्वा न शोकः कार्य इत्याशयेनाह—अहोवयमिति । पितृभ्यां अबला दुर्बलाः कुतश्चिता नास्तीति तत्राह—यरक्षितेति, यो गर्भेऽस्मान् रक्षति स भगवानधुना बहिर्गतान् रक्षिता हि यस्मात्तस्मादिति शेषः ॥ ३८ ॥

न केवलं रक्षिताऽपि तु सृष्ट्यादिकर्तायतो न संशयः कार्य इतिभावेनाह—यइच्छयेति, अत्रेच्छयेतीच्छाग्रहणेन सर्वत्र सृष्टिप्रसङ्गे मायाशब्दस्येच्छार्थो ज्ञायते हे अबलाः सृष्ट्यादिकर्ता यतो अतः मरणलक्षणस्य निग्रहस्य संग्रहे परिहारलक्षणे प्रभोः समर्थस्य तस्येशितुश्चराचरं क्रीडनं लीलासाधनम् ॥ ३९ ॥

"दैवाधीनं जगत्सर्वम्"इत्युक्तेः कथमीश्वराधीनं चराचरमित्याशंक्य दिष्टदैवादिशब्देन संस्तुतोऽच्युत इत्याशयेनाह—पथीति । भक्तायाभीष्टं दिशतीति दिष्टशब्दवाच्यो मुकुन्दः तेन रक्षितं सत् विहतं अस्यातेन हतः सकाशाद्वा ॥ ४० ॥

भूतानि तैस्तैर्निजयोनिकर्मभिर्भवन्ति काले न भवन्ति सर्वशः ।
न तत्र ह्यात्मा प्रकृतावपि स्थितस्तस्या गुणैरन्यतमो निबध्यते ॥ ४१ ॥

इदं शरीरं पुरुषस्य मोहजं यथा पृथग्भौतिकमीयते गृहम् ।
यथोदकैः पार्थिवतैजसैर्जनः कालेन जातो विकृतो विनश्यति ॥ ४२ ॥

यथाऽनलो दारुषु भिन्न ईयते यथानिलो देहगतः पृथक्स्थितः ।
यथा नभः सर्वगतं न सज्जते तथा पुमान् सर्वगुणाश्रयः परः ॥ ४३ ॥

सुयज्ञो नन्वयं शेते मूढा यमनुशोचथ ।
यः श्रोता योऽनुवक्तेह स न दृश्येत कर्हिचित् ॥ ४४ ॥

न श्रोता नानुवक्ताऽयं मुख्योऽप्यत्र महानसुः ।
यस्त्विहेन्द्रियवानात्मा स चान्यः प्राणदेहयोः ॥ ४५ ॥

भूतेन्द्रियमनोलिङ्गान् देहानुच्चावचान्विभुः ।
भजत्युत्सृजति ह्यन्यस्तच्चापि स्वेन तेजसा ॥ ४६ ॥

यावल्लिङ्गान्वितो ह्यात्मा तावत्कर्मनिबन्धनम् ।
ततो विपर्ययः क्लेशो मायायोगोऽनुवर्त्तते ॥ ४७ ॥

वितथाऽभिनिवेशोऽयं यद्गुणेष्वर्थदृग्वचः ।
यथा मनोरथः स्वप्नः सर्वमैन्द्रियकं मृषा ॥ ४८ ॥

---

भाषा टीका ।

नहीं करते. क्योंकि ? रक्षक तौ वही है जिसने गर्भ में रक्षा की है ॥ ३८ ॥

जो ईश अपनी इच्छा से इस जगत को सृजता है और जो अव्यय रक्षा करता है और अंतमें जो इसका संहार करता है, हे अबलाओ ! सब चराचर जगत को उसी ईश्वर का खिलौना कहते हैं ॥ वही ईश्वर संहार और पालन में समर्थ है ॥ ३९ ॥

प्रारब्ध का रखाया हुआ पदार्थ मार्ग में गिरा हुआ भी स्थित रहता है ॥ और प्रारब्ध का मारा हुआ गृह में धरा हुआ भी नष्ट होजाता है ॥ ऐसे ही अनाथ भी बन में भी उससे रक्षित जीवता है और उस का मारा हुआ घर में भी रक्षित हो तौ भी नहीं जीता ॥ ४० ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

तदेवमात्मनो जन्ममरणादिकमङ्गीकृत्येश्वराधीनत्वान्न शोकः कार्य इत्युक्तमिदानीं तु देहानामेव जन्मादि न त्वात्मन इत्याह-- भूतानीति त्रिभिः । भूतानि देहा निजयोनिः स्वकारणभूतं लिङ्गशरीरं तन्निमित्तैः कर्मभिर्भवन्ति जायन्ते न भवन्ति नश्यन्ति च सर्वशो देवादिदेहा अपि तत्र ह तदा प्रकृतौ देहे स्थितोऽप्यात्मा तस्याः प्रकृतेर्गुणैर्देहधर्मैर्जन्मादिभिर्न निबध्यते न युज्यते यतोऽन्यतमो देहादत्यन्तविलक्षणः ॥ ४१ ॥

नन्वहं कृशः स्थूल इत्यादौ वैलक्षण्यं न प्रतीयते तत्राह-- इदमिति । इदं शरीरं मोहजमविवेकादात्मत्वेन जातम्, वस्तुतस्तु पृथगेव सत् ईयते दृश्यते भौतिकञ्च यथा गृहमित्यन्वयः । अत्रैवं प्रयोगः द्रष्टुर्भौतिकाच्च पुरुषाच्छरीरं भिन्नं दृश्यत्वाद्भौतिकत्वाच्च यथाऽत्यन्ताविवेकिन आत्मत्वेनाभिमतमपि गृहं ततः पृथक् तद्वदिति भौतिकत्वानुमानं विवृण्वन्नात्मनो जन्माद्यभावमुपसंहरति यथा औदकैः परमाणुभिर्जातो बुद्बुदादिर्यथा च पार्थिवैर्जातो घटादिर्यथा च तैजसैर्जातः कुण्डलादिर्विनश्यति तथा तैरेव त्रिविधैः परमाणुभिर्जातो जनो देह एव विकृतः परिणतः सन्विनश्यति नत्वात्मेत्यर्थः ॥ ४२ ॥

पृथगवस्थानाभावेऽपि भिन्नत्वे दृष्टान्तद्वयमाह--यथेति । यथा अनलो दारुष्वेव स्थितोऽपि दाहकत्वेन प्रकाशकत्वेन भिन्न एव प्रतीयते. यथाच देहगतोऽप्यनिलो मुखनासिकादिषु पृथक्स्थित एव प्रतीयते. देहस्थत्वेऽप्यात्मनस्तद्धर्मसंयोगाभावे दृष्टान्माह-- यथा नभो न सज्जते क्वापि सङ्गं प्राप्नोति तथा पुमानपि

### श्रीधरस्वामिकृतभावार्थदीपिका ।

सर्वेषां गुणानां देहेन्द्रियादीनामाश्रयस्तेष्वाश्रितो वा परः पृथगेवेत्यर्थः ॥ ४३ ॥

किञ्च हे मूढाः, यमनुशोचथ सोऽयं युष्मद्भर्ता सुयज्ञः शेते किमिति शोचथ नन्वेतावन्तं कालमसौ शृणोत्यनन्तरं प्रतिवक्ति च, इदानीं तस्यादर्शनान्मृतइति शोचामेति चेत्स तु शोच्यो न भवति प्रागपि तस्यादर्शनादित्याह—यःश्रोतेति ॥ ४४ ॥

ननु, मुखनासिकासञ्चारी प्राणः श्रोता वक्ता च दृष्टएवेति चेन्नासौ श्रोता वक्ता वा चेतनत्वादित्याह—न श्रोतेति । महान्सर्वेन्द्रियचेष्टाहेतुः अत एव "मुख्यः प्राणो वै मुख्यः" इति श्रुतेः । कस्तर्हि श्रोता वक्ता च ? तत्राह—यस्त्विह देहेन्द्रियैस्तत्तदर्थद्रष्टा आत्मा स तु प्राणदेहाभ्यामचेतनाभ्यामन्य एव स चेतनः ॥ ४५ ॥

ननु, चेतनत्वेऽन्यत्वे च तस्याहं कृशः स्थूलः काणो बधिर इत्यादिदेहधर्मोपलब्धिः कुतस्तत्राह, भूतेन्द्रियमनोभिर्लिंग्यन्ते लक्ष्यन्तइति तथा तान्देहांस्तेभ्योऽन्य एव भजत्यहमिति मन्यते तर्हि कथं मोक्षस्तत्राह, तच्च भजनं स्वेन तेजसा विवेकबलेनोत्सृजत्यपि हीत्यनुभवं प्रमाणयति ॥ ४६ ॥

ननु, विवेकानन्तरमप्याहारादिकर्मसु प्रवृत्तेर्बन्धः स्यादेवेत्यतआह-यावदिति । यावल्लिङ्गशरीरेणान्वितस्तदभिमानवानात्मा भवति तावदेव तस्य तत्कर्मनिबन्धनं बन्धहेतुर्भवति ततो विपर्ययो देहधर्मभाक्त्वं ततः क्लेशश्चानुवर्तते नतु लिङ्गाभिमाने निवृत्तेपि यतोऽयं मायायोगो विपर्ययादिः मायया युज्यत इति तथा न परमार्थ इत्यर्थः ॥ ४७ ॥

ननु, सुखदुःखादीनां तत्साधनानाञ्च सत्यत्वप्रतीतेः कुतो मायामयत्वम् ? तथाच बहवो वादिनः सत्यत्वमेव वदन्ति तत्राह-वितथेति । वितथो मिथ्याभूतोऽयमभिनिवेशः कोऽसौ गुणेषु तत्कार्येषु सुखदुःखादिष्वर्थः परमार्थ इति दृग्वचश्चेति यत् स कुत इत्यतआह-यथेति ॥ ४८ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

किं तर्ह्ययमीश्वरोऽपि विषमः ? नेत्याह—भूतानीति । सर्वाणि भूतानि देवमनुष्यादीनि तैस्तैर्निजयोनिकर्मभिः स्वस्वजातिप्राप्तिनिमित्तकर्मभिः काले निजयोनिकर्मपरिपाककाले भवन्ति पुनस्तत्कर्मक्षये न भवन्ति देवमनुष्यादिभूतानां भावाभावौ तत्तत्कर्मानुगुणप्रवृत्तेश्वरायत्तौ, इति न तस्य वैषम्यमितिभावः । ननु, मास्तु वैषम्यं तस्यापि त्वन्तरात्मतयाऽवस्थितः स्वानर्थरूपं संसारं स्वयमेवापादयन् किम भवमज्ञः ? नेत्याह—नेति । तत्र प्रकृतौ देवादिशरीरे जीवान्तरात्मतया स्थितोप्यात्मा परमात्मा न बध्यते न संसरतीत्यर्थः । हेतिविस्मये देहस्थितस्याप्येकस्य न बन्धः अन्यतरस्य तु बन्धः इति विस्मयः इतरस्य बन्धमेवाह—तस्याः प्रकृतेर्गुणैः देवोऽहं स्थूलोहमित्यादिरूपप्रतीतिविषयैर्देहगतदेवत्वमनुष्यत्वादिभिर्देहात्मभ्रमादिभिरित्यर्थः अन्यतमो देहेन्द्रियादीनामन्यतमो जीवः इह परमात्मनोऽपीति च बोध्यम्. निबध्यते निबद्धो भवति संसरतीत्यर्थः । यद्वा, गुणैः शब्दादिभिर्विषयैर्हेतुभिस्तद्भोगहेतुभूतेषु वस्तुषु निबध्यत इत्यर्थः तद्भोग एव हि तस्य संसृतौ कारणमिति भावः । तथा च श्रुतिः "तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्योऽभिचाकशीति" ॥ ४१ ॥

एवं सर्वभूतानामुत्पत्तिलयादेस्तत्तत्कर्मानुगुणप्रवृत्तेश्वरायत्तत्वान्न शोकः कार्य इत्यभिप्रायेदानीं देहस्य विनाशस्वभावत्वादात्मनस्तु तद्विपरीतरूपत्वादुभावपि न शोकविषयाविति वक्तुं तावद्देहात्मनोः परस्परवैलक्षण्यमाह—इदमिति द्वाभ्याम् । इदं परिदृश्यमानं राजादिशरीरं पुरुषस्य जीवस्य मोहजमविद्यासञ्चितकर्मकृतं पुरुषस्य मोहजम् इदं शरीरम् इति व्यतिरेकनिर्देशेन देहात्मनोः परस्परभेदो दर्शितः तत्र देहस्यानात्मत्वं दृष्टान्तेनाह—यथा गृहं गृहिणः पृथक् भिन्नं तथा भौतिकं भूतसङ्घातपरिणाममिदं शरीरमपि पृथक् शरीरिणो भिन्नमीयते अवगम्यत इत्यर्थः । यथा गृहस्य गृहिस्वरूपत्वमत्यन्तासम्भावितं तद्वत् देहस्य देहिस्वरूपत्वमिति दृष्टान्ताभिप्रायः । एवं गृहदृष्टान्तेन जीवाद्देहस्य भेद उक्तस्तेनैव दृष्टान्तेन देहस्य विनाशिस्वभावत्वं चाह-तथेति । यथा मृत्काष्ठादिविकारात्मकं गृहं कालेन विनश्यति तथा औदकैः पार्थिवैस्तैजसैश्चेदं वायवीयाकाशीययोरप्युपलक्षणम् उदकादीनामंशैः कालेन तत्तद्देवादिजातिप्राप्तिनिमित्तकर्मफलपरिपाककालेनेत्यर्थः । जातो जनो देहः जन्मनः पश्चादपि विकृतः बाल्ययौवनस्थविरत्वादिभिरवस्थाभिर्विकारं प्राप्तः पुनः स्वारम्भककर्मविनाशकाले विनश्यति ॥ ४२ ॥

अथात्मनो देहाद्भेदं सदृष्टान्तमाह—यथेति । यथा अनलोऽग्निर्दारुषु स्थितो भिन्न ईयते दारुगतह्रस्वत्वदीर्घत्वकुटिलत्वादिधर्मरहितस्तेभ्यो भिन्न एव दृश्यते यथा च देहगतोऽप्यनिलस्ततः पृथगेव दृश्यते यथा नभः सर्वत्र व्याप्तमपि न सज्जते सर्वगतधर्मैर्न सम्बध्नाति तथा सर्वगुणाश्रयः सत्त्वादिसर्वगुणपरिणामरूपदेहेन्द्रियाश्रयोऽपि पुमान् जीवः परः गुणेभ्यः देहाद्भिन्नः देहगतजन्ममरणादिभिरविकृतस्तस्माद्विलक्षणत्वेनावतिष्ठत इत्यर्थः । अविभागेनावस्थितस्यापि तद्गतधर्मास्पर्शे आद्यं निदर्शनं विजातीयस्यापि सहावस्थाने द्वितीयं तृतीयं तु तदवस्थानेपि पुनस्तद्गतधर्मास्पर्शे इति भेदः ॥ ४३ ॥

एवं देहात्मनोः परस्परविलक्षणस्वरूपयोरभिहितयोरप्यतीवदेहात्मभ्रान्त्याऽनुशोचतां शोकमपनेतुं कः शोकविस्मयभयइत्याशङ्क्य प्रतिक्षिपति—सुयज्ञ इति । हे मूढाः ! भवत्पक्षे यमनु शोचथ सोयं सुयज्ञः शेते युष्माभिः शोच्यः सुयज्ञः शेते विद्यत एव किमर्थं शोक इति भावः । ननु, भवत्पक्षे शयान एव हि सुयज्ञ इति शङ्कार्थस्तत्प्रतिक्षिपति—य इति, य श्रोता भवद्विलापश्रवणक्षमो यश्चानुवक्ता प्रतिवचनक्षमश्च स इह कर्हिचिदपि चिरं सुसूक्ष्मं निरीक्षमाणोऽपि न दृश्यते शयानो देह एव सुयज्ञश्चेत्तद्विलपितं किमिति न शृणोति न प्रतिवक्तीत्यर्थः ॥ ४४ ॥

मुख्यः प्राणोपि श्रवणप्रतिवचनक्षमो न स्यात्किंपुनर्देहो

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

इत्येतज्जीवपरयोर्भेदस्य जीवस्येन्द्रियवत्त्वमौपचारिकमित्यस्य चोपपादने प्रमाणं, जीवस्येन्द्रियवत्त्वमुपचरितं चेत् कस्य तन्मुख्यमित्याशङ्का—

"लेपाभिमानी जीवस्तु स्वरूपानुभवी नच ।
मुक्तेः प्राक् तेन मान्युक्तो न मानी विष्णुरुच्यते ॥
स्वं ममेति पश्यन्नप्यलेपाभिमतिर्यतः ।
सम्यक् स्वरूपानुभवात्स्वतन्त्रत्वादशोषत " ॥

इत्यनेन परिहर्तव्या स्वानधीने वस्तुनि स्वाधीनता बुद्धिर्लेपाभिमान. सोऽस्यास्तीत्येतादृशदोषो वितथाभिनिवेश इत्युच्यते हरेर्जीवदेहेन्द्रियादिषु स्वाधीनेषु स्वाधीनताबुद्धिर्लेपाभिमानः स गुणो यथार्थज्ञानलक्षणः तस्माद्धरेर्देहेन्द्रियादौ स्वामित्वेन तद्वत्त्वं मुख्यं तत्राविवेकग्रहणं कर्मनिबन्धनं ततो विपर्यय इत्यादिलक्षणैर्जीवोऽनीदृशः श्रीनारायण इति स्मर्तव्यम् ॥ ४८ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

भूतेन्द्रियेति । विविधं भवतीति विभुः स्वतेजसा स्वस्वरूपत्वेनोपासितस्य भगवतस्तेजसा अनाद्यविद्यायुक्तस्य पुरुषस्यात्मवेदनम् "स्वतो न सम्भवादन्यस्तत्त्वज्ञो ज्ञानतो भवेत्" इति श्रीभगवद्वाक्यात् ॥ ४९—५० ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

ननु, तर्हि तस्मिन् ईश्वरे वैषम्यं प्रसक्तं कस्याप्युपेक्षणात् कस्याप्यपेक्षणादिति तत्राह-भूतानि मनुष्यपश्वादिदेहाः निजयोनिकारणाभूतैः कर्मभिस्तैस्तैरनेन कर्मणा गौर्भवत्यनेन कर्मणा सूकरो भवत्येवं शास्त्रप्रसिद्धैर्भवन्ति उत्पद्यन्ते न भवन्ति काले नश्यन्ति च सर्वशः सर्वाण्येव तत्र ह स्पष्टं प्रकृतौ देहे स्थितोऽप्यात्मा परमात्मा अन्यतमः पृथग्भूत एवातस्तस्यागुणैर्देहधर्म्मैर्जन्मादिभिर्न निबध्यते केवलं तत्तत्कृतशुभाशुभकर्मफलं स्वसन्निधानमात्रेण जीवयतीत्यतएव तदपेक्षणमुपेक्षणञ्चेति भावः॥४१॥

तस्यान्यतमत्वमुपपादयति--इदमिति । मोहजं पुरुषस्य जीवस्य मोहादेव जातं भन स्थात् परमात्मनः पृथगेव यथा भौतिकं भित्तिद्वारादिमद्गृहं गृहस्थपुरुषात् पृथगीयते पार्थक्यंतदेवोपपादयति-यथा औदकैः परमाणुभिर्बुद्बुदादिः पार्थिवैर्घटादिः तैजसैः कुण्डलादिर्जायते नश्यति च तथा तैरेव त्रिविधैः परमाणुभिर्जातो जनो देह एव विकृतः परिणतः सन् विनश्यति नत्वात्मनेत्यर्थः ॥ ४२ ॥

पृथगवस्थानाभावेपि भिन्नत्वे दृष्टान्तमाह-यथा अनलो दारुष्ववस्थितोपि दाहकत्वेन प्रकाशकत्वेन भिन्न एव प्रतीयते यथा नभो न सज्जते क्वापि सङ्गं न प्राप्नोति तथा पुमानपि सर्वेषां गुणानां देहेन्द्रियादीनामाश्रयस्तेष्वाश्रितो वा परः पृथगेवेत्यर्थः । अतस्तेन परमेश्वरेणोपेक्षितमिमं स्वकर्मवशान्मृतं पतिं कथं नोपेक्षध्वे इति भावः ॥ ४३ ॥

नन्वयं राजा सङ्ग्रामलब्धपराजयः संप्रति शेते कथमिममुपेक्ष्य निःस्नेहा भवितुं शक्नुमस्तत्राह—सुयज्ञ इति । नन्वस्मद्विलापमेनावन्तं कालमस्यावश्रृणोदन्वबोचच्च, तत्राह—य इति । कर्हिचित् प्रागपि मद्दृश्यो नासीदित्यर्थः, यस्तु दृश्यः स इदानीमपि दृश्यते देह इति भावः ॥ ४४ ॥

ननु, यावत् प्राणः स्थितस्तावदेवश्रोतृत्ववक्तृत्वे दृष्टे न तु प्राणे गते सतीत्यतः प्राण एव श्रोता वक्तेति तत्राह—नेति । मुख्योपि "प्राणो वै मुख्यः" इति श्रुतेः । महान् सर्वेन्द्रियचेष्टाहेतुरपि न श्रोता । वक्ता च अचेतनत्वादिति भावः कस्तर्हि श्रोता वक्ता च तत्राह—यस्त्विह इन्द्रियवान् देहेन्द्रियादिमत्त्वेन प्रतीत आत्मा जीवः स च प्राणदेहयोः प्राणदेहेन्द्रियादिभ्योऽन्य एव सचेतनः ॥ ४५ ॥

तर्हि स सम्प्रति कुत्र गत्वा किं करोतीति तत्राह—भूतं प्राणम् इन्द्रियमनोरूपं लिङ्गं सूक्ष्मदेहो येषु तान् स्थूलदेहान् भजति प्राप्नोति त्यजति च यथेमं देहं प्राप्योदसृजदिति भावः । किञ्च स्वेन तेजसा भाग्यलब्धज्ञानबलेन तथापि लिङ्गं देहमपि कदाचिदुत्सृजति ॥ ४६ ॥

लिङ्गदेहत्यागे सत्येव कर्मबन्धान्मुच्यते नान्यथा इत्याह-यावदिति ॥ ४७ ॥

तस्माद्यूयमपि कर्मबन्धमोक्षायैव यतध्वं न तु कर्मफलाय स्वर्गाय वैषयिकसुख दुःखस्यास्थिरत्वेन स्वप्नतुल्यत्वादित्याह वितथो व्यर्थ एवाभिनिवेशोऽयं कोऽसौ यत् गुणेषु गुणकार्येषु सुखादिषु अर्थः वास्तव इति दृग् वचश्च "अपामसोमममृता अभूम अप्सरोभिर्विहराम" इत्यादिकमित्यर्थः । यथा मनोरथः स्वप्न इति मनोरथोपनीतस्य धनपुत्रादिलाभानन्दस्य स्वप्ने स्त्रीसंभोगादिसुखस्य च स्वर्गसुखस्य च तुल्यत्वादित्यर्थः । सर्वमैन्द्रियकम् इन्द्रियग्राह्यं जगदिदं मृषा मिथ्यैव ॥ ४८ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

तथा कर्तृत्वेऽपीश्वरस्य वैषम्यं बन्धनञ्च नास्तीत्याह-भूतानीति । निजयोनयः भूतोद्भवहेतवः सत्त्वादयो मायागुणाः सन्निमित्तैः कर्मभिर्भूतानि मनुष्यादीनि भवन्ति विनश्यन्ति गुणानां निजशब्दवाच्यजीवयोनित्वमाह—अन्यतमः कर्मफलदातुरीश्वरात् भिन्नः कर्मकर्ता जीवः प्रकृतौ तस्यागुणैर्बध्यते तत्तत्कर्मफलभोगार्थं जन्ममरणप्रवाहलक्षणे संसारे पात्यते इत्यर्थः । तत्र प्रकृतौ देहरूपायां जीवकर्मफलादिदानाय स्थितोऽपि आत्मा गुणैर्नैव निबध्यते गुणानां तद्वश्यजीवानां च नियन्तृत्वात् ॥ ४१ ॥

सर्वेषां भूतानामुत्पत्तिमरणादिकं तत्तत्कर्मानुसारीश्वरायत्तमतः शोको न कार्य इत्युक्तमधुना यस्य जन्ममरणे भवतः स देहोऽनित्यो नित्यस्वरूपाज्जीवादन्योऽतो मोहो न कार्य इत्याह—

अथ नित्यमनित्यं वा नेह शोचन्ति तद्विदः ।
नान्यथा शक्यते कर्तुं स्वभावः शोचतामिति ॥ ४९ ॥
लुब्धको विपिने कश्चित्पक्षिणां निर्मितोऽन्तकः ।
वितत्य जालं विदधे तत्र तत्र[1] प्रलोभयन् ॥ ५० ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

इदमिति द्वाभ्याम्। इद प्रसिद्धं पुरुषस्य शरीरं मोहजं मोहहेतुभूतप्रकृतिगुणजं यथा गृहिणः पृथक् गृहं तथा शरीरिणः पृथगेवैतत् प्रतीयते गम्यते इत्यर्थः। यथोदकैर्जलबिन्दुभिर्जातो विकृतः कार्यपदार्थः बुद्बुदादिः पार्थिवैर्मृत्पिण्डैर्जातो घटादिः तैजसैरग्निकणैर्जातः प्रदीपादिः कालेन विनश्यति तथा जनो देहः गुणैर्जातः कालेन विनश्यति न जीवः ॥ ४२ ॥

यथा दारुषु अनलोऽग्निः यथा च देहगतोऽनिलः प्राणवायुः पृथगेव स्थितो देहे यथा नभः सर्वगतं सर्वस्मिन् स्थितमपि न सज्जते तथा पुमान् जीवः सर्वेषां गुणानां देहेन्द्रियादीनामाश्रयो धारकस्तेभ्यः परः पृथगेव ॥ ४३ ॥

नन्विति वितर्के. हे मूढाः! यूय यमनुशोचथ स देहरूपः सुयज्ञपदार्थोऽयं शेते यस्तुश्रोता योऽनुवक्ता श्रोतृत्वादिधर्मवत्त्वात् सुयज्ञशब्दार्थः इह अस्मिन्देहे आसीत्स कर्हिचिदपि न दृश्यते ॥ ४४ ॥

ननु, तर्हि प्राणादिरूप आत्मा किमिति शङ्कां निवारयन् ज्ञानस्वरूपश्रोतृत्वादिधर्मकात्मनस्त्वप्रतिपत्तये प्राणादिजडवर्गवैलक्षण्यमात्मनो दर्शयति--न श्रोतेति द्वाभ्याम् ॥ ४५ ॥

विभुर्सर्वभूतज्ञानवत्त्वात् तथोक्तं भगवता "यथा प्रकाशयत्येकः कृत्स्नं लोकमिमं रविः। क्षेत्रं क्षेत्री तथा कृत्स्नं प्रकाशयति भारत!" भूतेन्द्रियमनांसि लिङ्गानि चिह्नानि येषां तान् देहान् भजति स्वीकरोति उत्सृजति च अत एव स्वेन तेजसा स्वकीयेन ज्ञानरूपेण तेभ्योऽन्यः ॥ ४६ ॥

ननु, देहविलक्षणस्यास्य देहसंयोगकर्मायत्तसुखदुःखभोगादिकं कियत्कालपर्यन्तं भविष्यतीत्यत्रावधिमाह—यावदिति। यावन्मायायोगः अनादिप्रकृतिसम्बन्धः तावदात्मा जीवात्मा लिङ्गान्वितः तावदेव बन्धनं निगडोयमशुभाशुभं कर्म अनुवर्त्तत ततः कर्मानुवृत्तेः तावदेवक्लेशः दुःखानुभवः अशुभकर्मफलम् विपर्ययः सुखानुभवः शुभकर्मफलम् अनुवर्त्तते ॥ ४७ ॥

तावदेव यथा मनोरथः अनीशस्य सोहमिति स्वप्नतोऽमृगस्य मृगोहमिति च सङ्कल्पो मृषा असत्त्वादृशः वितथाभिनिवेशः देहे अहमित्यसदभिनिवेशः अनुवर्त्तते यत् यत एव गुणेषु गुणपरिणामभूतेषु दारापत्यादिषु अर्थदृग्वचः पुरुषार्थदृग्वचनं मम जीवनहेतव एते इत्येवंभूतं वाक्यं च अनुवर्त्तते। किञ्च यावन्मायायोगस्तावदेव सर्वमैन्द्रियकमिन्द्रियग्राह्यं कर्मफलमनुवर्त्तते इति पूर्वेणैवान्वयः ॥ ४८ ॥

भाषाटीका।

ऐसे ही प्राणी लोग भी अपने २ जन्म देने वाले तिन २ कर्मों से समय पर होते है समय पर सब ही नहीं होते। तहां आत्मा प्रकृति में स्थित होकर भी उसके गुणों से देह से अत्यंत भिन्न होने से नहीं बंधता हैं ॥ ४१ ॥

मोह से उत्पन्न यह शरीर भी पृथिव्यादि से उत्पन्न गृहों के सदृश आत्मा से पृथक् है ॥ जैसे जल पृथिवी तेज (सुवर्णादि) बुद्बुदघटकटकादि होते हैं और काल पाकर नष्ट होजाते है इसी प्रकार यह शरीर भी है ॥ ४२ ॥

जैसे अग्नि काष्ठ में भिन्न मालूम होती है। जैसे वायु देह में स्थित होकर भी पृथक् रहता है ॥ और जैसे आकाश सर्वत्र वर्त्तमान होकर भी किसी में सक्त नहीं होता है ऐसे ही सर्व गुणाश्रय पुरुष भी इन सब से भिन्न है ॥ ४३ ॥

हे मूढ अबलाओ! जिसका तुम शोच करती हो वही यह सुयज्ञ तुमारे सन्मुख सोरहा है। जो सुनने वाला और बोलने वाल है वह तो कभी देखा ही न जासक्ता फिर शोक किसका है ॥ ४४ ॥

न इस देह में कोई सुनने वाला और न कोई बोलने वाला है, केवल एक इसमें मुख्य महा प्राण हैं, जो इन्द्रियोंसे वासना का ज्ञाता आत्मा है वह इस शरीर से संबन्ध ही नहीं रखता है ॥ ४५ ॥

भूत इन्द्रिय मन लिंग और ऊंचे नीचे देहको धारण करता है और त्यागता है, तो भी वह आत्मा अपने तेज से पृथक् प्रतीत होता है ॥ ४६ ॥

जब तक आत्माको लिंग शरीर का संबंध है तब ही तक कर्मकृत यह शरीर है और उसी से विपर्यय क्लेश और माया का संबन्ध भी लगा हुआ है ॥ ४७ ॥

जो कि गुणों में अर्थ की दृष्टि का वचन है यही मिथ्या अभिनिवेश है ॥ और जैसे मनोरथ तथा स्वप्न के पदार्थ अचिरथी है ऐसे ही सर्व इन्द्रियों के विषय भी अनित्य है ॥ ४८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका।

उपसंहरति—अथेति। अथ तस्मात् नित्यमात्मानमनित्यं देहं वा तद्विदोनित्यमनित्यं च जानन्तो न शोचन्ति नन्वेवमुपदेष्टारोपि

---

(१) प्रलोभनमिति श्री वीर० श्री विजय० श्री शुक०।

कुलिङ्गमिथुनं तत्र विचरत्समदृश्यत ।
तयोः कुलिङ्गी सहसा लुब्धकेन प्रलोभिता ॥ ५१ ॥
साऽसज्जत शिचस्तन्त्र्यां महिषी कालयन्त्रिता ।
कुलिङ्गस्तां तथापन्नां निरीक्ष्य भृशदुःखितः ।
स्नेहादकल्पः कृपणः कृपणां पर्यदेवयत् ॥ ५२ ॥
अहो अकरुणो देवः स्त्रियाऽऽकरुणया विभुः ।
कृपणां मानुशोचन्त्या दीनया किं करिष्यति ॥ ५३ ॥
कामं नयतु मां देवः किमर्धेनात्मनो हि मे ।
दीनेन जीवता दुःखमनेन विधुरायुषा ॥ ५४ ॥
कथं त्वजातपक्षांस्तान् मातृहीनान्बिभर्म्यहम् ।
मन्दभाग्याः प्रतीक्षन्ते नीडे मे मातरं प्रजाः ॥ ५५ ॥
एवं कुलिङ्गं विलपन्तमारात् प्रियावियोगातुरमश्रुकण्ठम् ।
स एव तं शाकुनिकः शरेण विव्याध कालप्रहितो विलीनः ॥ ५६ ॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका ।

शोचन्तो दृश्यन्ते तत्राह—नात्मेति । आत्मदेहयोर्यथास्वभावो न निवर्तत इत्यर्थः ॥ ४९ ॥

स्वयं सधर्मा अपीति यदुक्तं तत्रेतिहासमाह—लुब्धकइत्यादिना । पक्षिणामन्तक ईश्वरेण निर्मितस्तान् यत्र यत्र ते तत्र तत्र तान् कणादिभिः प्रलोभयन् जालं वितत्य निबध्य धृतवान् पाठान्तरे तेषामभिषादिभिः प्रलोभनं कृतवानित्यर्थः ॥ ५० ॥

कुलिङ्गः कन्दभक्षी पक्षिविशेषः कुलिङ्गयोर्मिथुनम् ॥ ५१ ॥

शिचस्तन्त्र्यां जालस्य सूत्रेऽसज्जत बद्धा बभूव तामापन्नामापद्ग्रस्ताम् दृष्ट्वा कुलिङ्गः पक्षी तां मोचयितुमकल्पः सन् पर्यदेवयत् कृपणाम् आत्मानम् अभिलक्ष्य विलापं चकार ॥ ५२ ॥

आकरुणया सर्वतोऽनुकम्प्यया स्त्रिया किं करिष्यति ॥ ५३ ॥

आत्मनो देहस्यार्धेन अनेन विधुरायुषा भार्याशून्यजीवितेन दुःखं यथा भवत्येवं जीवता किं मे प्रयोजनम् अतो मामपि कामं नयत्वित्यन्वयः ॥ ५४ ॥

न जाताः पक्षा येषां तान्बालकान् कथं बिभर्मि पुष्णामि मन्दभाग्या मे प्रजा मातरं प्रतीक्षन्ते ॥ ५५ ॥

शाकुनिकः पक्षिहन्ता विलीनः सन् ॥ ५६ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

एवं देहात्मनोरुभयोरपि शोकाविषयत्वमुक्तं सहेतुकमुपसंहरति—अथेति । अथ हे अबलाः ! नित्यमात्मानम् अनित्यं देहं प्रत्यपि तत्त्वविदः देहात्मयाथात्म्यविदो न शोचन्ति. कुतः इतिशब्दो—हेत्वर्थकः अस्मात्स्वभावः वस्तुनः स्वाभाविको धर्मः शोचतामपि शोचद्भिरन्यथा कर्तुं न शक्यते न ह्यात्मनः स्वाभाविकं नित्यत्वमपनीयानित्यत्वं केनचिच्छोकाद्युपायेनापादयितुं शक्यं न वा देहस्यानित्यत्वमपनुद्य नित्यत्वम्. न हि वह्नेरौष्ण्यापनयेन शैत्यमापादयितुं शक्यमिति भावः ॥ ४९ ॥

यदुक्तं "स्वयं सधर्मा अपि शोचन्ति" इति तत्र दृष्टान्ततयेतिहासं प्रस्तौति—लुब्धक इति । कश्चिल्लुब्धको व्याधः पक्षिणामन्तकः मृत्युः निर्मितः ईश्वरेण मृत्युत्वेन निर्मितिः अत एव स तत्र-तत्र जालं वितत्य पक्षिणां प्रलोभनं वञ्चकं विदधे कृतवान् ॥ ५० ॥

एवं लुब्धके प्रलोभयति सति तत्र समीपे कुलिङ्गयोः पक्षिणोर्मिथुनं द्वन्द्वं सञ्चरत्सत् लुब्धकेनादृश्यत तयोः स्त्रीपुंसयोः मध्ये कुलिङ्गी स्त्री सहसा वञ्चनोपायेन लुब्धकेन प्रलोभिता बभूव ॥ ५१ ॥

सा महिषी कुलिङ्गभार्या कालवशा सती शिचस्तन्त्र्यां जालसूत्रे प्रसक्ता बद्धा बभूव अथ ततस्ताम् आपन्नाम् आपदं प्राप्तां दीनां कर्मानुगुणेन कालेन यन्त्रितां शिचस्तन्त्र्यामासञ्जितां महिषीं भार्यां कुलिङ्गीं वीक्ष्य कुलिङ्गः पुमान् स्नेहादतीव दुःखितोऽकल्पो विमोचनेऽशक्तो अतएव केवलं स्वयमप्यातुरः दीनस्सन् कृपणां दीनं यथातथा पर्यदेवयत् परितप्तो बभूव ॥ ५२ ॥

तदेवाह—अहो इति त्रिभिः । अहो देवो विधाताऽकरुणो निर्घृणः, अकरुणत्वमेवाविष्करोति—स्त्रिया आकरुणयेति छेदः आकरुणया सर्वतोऽनुकम्प्यया स्त्रिया मम भार्यया नितरां कृपणां दीनं

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

मां प्रत्यनुशोचन्त्या दीनया कुलिङ्ग्या विभुर्देवः किं करिष्यति न किमपि तस्य प्रयोजनम्. किन्तु मय्यकारुण्येन मां वियोज्य स्त्रियं नीतवान् इति भावः॥ ५३॥

यतो मय्यकरुणो देवस्ततो मामपि कामं यथेष्टं नयतु आत्मनोऽर्द्धेन मम किं किं प्रयोजनम्. एकस्मिन्मय्यर्द्धे भार्याख्यं नष्टम् अवशिष्टेनार्द्धेन नकिमपि प्रयोजनमस्तीत्यर्थः। अर्द्धं विशिनष्टि, दीनेन कृपणेन दुःखं यथा भवति तथा जीवता प्राणान्धारयता विधुरायुषा विधुरं भार्यारहितमायुर्यस्य तेन भार्याशून्यजीवितयुकेनेत्यर्थः। अनेनेति निस्स्पृहत्वमुक्तं कार्योपयोगित्वाभावादिति भावः॥ ५४॥

किञ्च अजातौ पक्षौ येषां तान् मात्रा हीनान् रहितान् बालकान् कथमहं बिभर्मि पुष्णामि किञ्च मे मम प्रजाः नीडे मातरं प्रतीक्षन्ते॥ ५५॥

एवं प्रियाया वियोगातुरं दुःखितम् अत एव विशेषणरुदन्तम् अश्रुकण्ठमश्रुपूर्णकण्ठं तं कुलिङ्गं स एव शाकुनिकः शकुनीन्हन्तीति शाकुनिकः लुब्धकः आरात्समीपे निलीनस्तिरोहितस्सन् कालेन कर्मानुगुणेन प्रहितः प्रेरितः शरेण विद्ध्वाथ ताडितवान्॥ ५६॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

यस्मात्सर्वस्येश्वराधीनत्वेन जन्तूनां मरणादिकमपरिहार्यं तस्मात्सर्वथा देहेन्द्रियादेरनित्यत्वं नित्यत्वं चास्तु तथापि शोककरणं न पण्डितमतम् "गतासूनगतासूंश्च नानुशोचन्ति पण्डिताः" इत्यादेरित्याह—अथेति, अनस्तन्मूर्खमतमिति सन्तोष्टव्यं स्वभावत्वादित्याह—नान्यथेति॥ ४९॥

अस्मिन्नेवार्थे कञ्चनेतिहासमाह—लुब्धक इति। लुब्धको मृगयुर्निर्मितो विधिनेतिशेषः वितत्य विस्तृत्य प्रलोभनं वञ्चनम्॥५०-५१॥

सिचा जालेन सह यन्त्रितया तन्त्या सूत्रेण महिषी कुलिङ्गभार्या कालयन्त्रिता कालाधीना अकल्पोऽसमर्थो, मोचयितुमिति शेषः, पर्यदेवयद्विलपितवान्॥ ५२॥ ५३॥

दुःखं जीवता दीनेन क्षीणेनात्मनोऽर्द्धेन मे मम किं प्रयोजनं न किमपि कुतो विधुरायुषाऽऽयूरहितेनात्मनोऽर्द्धस्य नष्टत्वात्॥५४॥

मे प्रजाः पुत्राः॥ ५५॥

शाकुनिकः पक्षिमारकः कालेनान्तकेन प्रहितः प्रेरितः निलीनो वृक्षमूले छन्नः कुलिङ्गं दीर्घतुण्डं "दार्वाघाटो दारुकुट्टः कुलिङ्गो दीर्घतुण्डकः" इत्यभिधानम्॥ ५६॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

तयोरिति। हे महिष्यः॥ ५१—६१॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

अथ नित्यं मीमांसकानां मते अनित्यं नश्वरं सत्यमिति साङ्ख्यानां मते; ननु, तदपि न वयं प्रबुध्यामहे इति तत्राह—नान्यथेति॥४९॥

शोकस्वभाववत्त्वेऽनर्थं इत्यत्रेतिहासमाह—लुब्धक इत्यादिना। निर्मितः ईश्वरेणेत्यर्थः। विदधे पक्षिणो विशेषेण दधार प्रलोभनमिति पाठे आमिषादिभिस्तेषां प्रलोभनं कृतवानित्यर्थः॥५०-५१॥

सिचस्तन्त्यां जालस्य सूत्रे हे महिष्यः॥ ५२॥

देवो विधाता करुणया मयि कृपावत्या॥ ५३—५६॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

तद्विदः नित्यानित्यविदः नित्यं क्षेत्रज्ञः अनित्यं देहादिकं नैव शोचन्ति शोचतामतद्विदां स्वभावस्तु अन्यथा कर्तुं न शक्यः॥ ४९॥

तादृक्स्वभावस्य फलं नाश एवेत्याह—लुब्धक इत्यादिना। निर्मितस्तत्कर्मानुसारिणा ईश्वरेणेति शेषः। जालं वितत्य तत्र प्रलोभनमन्नादिना विदधे॥ ५०॥ ५१॥

सिचो जालस्य॥ ५२॥

कृपणां मा मां कृपया अनुशोचन्त्या स्त्रिया किं करिष्यति॥५३॥

देवः मामपि कामं यथेष्टं नयतु यतः आत्मनः देहस्य अर्द्धेन स्त्र्याख्यस्यार्द्धस्य विनष्टत्वादवशिष्टेन पुरुषाख्येन भागेन मम किंप्रयोजनम्. कथंभूतेन दीनेन दुःखं यथा भवति तथा जीवता विधुरं कलत्ररहितमायुर्यस्य तेन॥ ५४॥

मे प्रजाः नीडे मातरं प्रतीक्षन्ते तान् कथं बिभर्मि पोष्याणि ५५॥

विलीनः वृक्षादिषु छन्नः सन्॥ ५६॥

---

भाषा टीका।

नित्यानित्य वस्तु विवेक वाले नित्य और अनित्य का शोक नही करते और शोक करने वालों के स्वभाव भी अन्य था नहीं कियो जासक्ता है॥ ४९॥

( एक दृष्टांत कहते हैं कि ) परमेश्वर का निर्मित पक्षियों का वैरी एक लुब्धक बन में जाल लगाकर जहां तहां लोभ देता था॥ ५०॥

इतने में वहां कुलिंग नामक पक्षियों का जोडा विचरता हुआ देखपडा उनमे से लुब्धक ने कुलिंगी को एक दम लुभालिया॥ ५१॥

कालविवशहोकर वह कुलिङ्गी उस जालमें फँस गई। उसको उस प्रकार फँसीहुई देखकर कुलिङ्ग अतिदुःखित और असमर्थ आप दीन उस विचारी दीन कुलिङ्गी का बहुत शोक करने लगा,॥ ५२॥

एवं यूयमपश्यन्त्य आत्मापायमबुद्धयः ।
नैनं प्राप्स्यथ शोचन्त्यः पतिं वर्षशतैरपि ॥ ५७ ॥

हिरण्यकशिपुरुवाच ।

बाल एवं प्रवदति सर्वे विस्मितचेतसः ।
ज्ञातयो मेनिरे सर्वमनित्यमयथोत्थितम् ॥ ५८ ॥

यम एतदुपाख्याय तत्रैवान्तरधीयत ।
ज्ञातयोऽपि सुयज्ञस्य चक्रुर्यत्साम्परायिकम् ॥ ५९ ॥

ततः शोचत मा यूयं परं चात्मानमेव च ।
क आत्मा कः परो वाऽत्र स्वीयः पारक्य एव वा ।
स्वपराभिनिवेशेन विना ज्ञानेन देहिनाम् ॥ ६० ॥

नारद उवाच ।

इति दैत्यपतेर्वाक्यं दितिराकर्ण्य सस्नुषा ।
पुत्रशोकं क्षणात्त्यक्त्वा तत्त्वे चित्तमधारयत् ॥ ६१ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां वैयासिक्यां
सप्तमस्कन्धे युधिष्ठिरनारदसम्वादे दितिशोकापनयनंनाम
द्वितीयोऽध्यायः ॥ २ ॥

भाषाटीका।

और बोलाकि, अहो परमेश्वर तू बडा निर्दय है मुझ दीनको शोचनेवाली दयावाली उस बिचारी दीन स्त्री के साथ मेरा वियोग कराकर तू क्या करेगा ॥ ५३ ॥

भलेही ईश्वर मुझे लेजाय क्योंकि ? अपने अर्द्धशरीर से मेरा क्या प्रयोजनहै इस दीन विचारी से वियुक्त इस आयुसे दुःख पूर्वक जीकर भी क्या होगा ॥ ५४ ॥

अब कहो जिनके पङ्ख नही जामें ऐसे विना माताके उन छोटे २ बच्चोंका मै कैसे पालन करूङ्गा मन्दभागी मेरे बच्चे माकी वाट देखरहे है ॥ ५५ ॥

इस तरह प्रियाके वियोग से दुखित रोते हुए विलाप करने वाले उसी कुलिङ्ग को छिपे हुए उसीलुब्धकने बाणसे वेधदिया ॥ ५६ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

आत्मापायं स्वमृत्युम् ॥ ५७ ॥

अयथोत्थितं मिथ्यैवाभिभूतम् ॥ ५८ ॥

साम्परायिकं परलोकंकृत्यम् ॥ २९ ॥

अशोचतेतिपाठे अडागम आर्षः । स्वः पर इत्यभिनिवेश यथाज्ञानं तेन विना ॥ ६० ॥

सस्नुषा स्नुषासहिता ॥ ६१ ॥

इति श्रीमद्भागवते महापुराणे सप्तमस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिकायाम्
द्वितीयोऽध्यायः ॥ २ ॥

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

एवमितिहासं प्रस्तुत्य प्रकृतोपयोगित्वेनोपसंहरति- एवमिति । एवं यथा कुलिङ्गस्तथा यूयमप्यात्मापायं स्वमृत्युम् अपश्यन्तः अनालोचयन्त्योऽत एव अबुद्धयः विवेकशून्याः वर्षशतैरपि शोचन्त्यः एनं पतिं न प्राप्स्यथ ॥ ५७ ॥

एवं प्रेतबन्धुयमसंवादरूपमितिहासं प्रस्तुत्योपसंहरति दैत्यः-- बाल इति द्वाभ्याम् । एवम् इत्थं बाले प्रवदति सति सर्वे ज्ञातयः सुयज्ञस्य सपिण्डाः विस्मितं चेतो येषां ते अयथोत्थितमपुरुषार्थत्वेनाप्रतीतं किन्तु पुरुषार्थत्वेन विपरीतरूपेण प्रतीतं सर्वं देहादिकमनित्यमस्थिरमपुरुषार्थरूपं मेनिरे इति निश्चितवन्त इत्यर्थः ॥ ५८ ॥

यमस्त्वेतदुक्तमुपाख्यानं कथयित्वा तत्रैवान्तर्दधे ततो ज्ञातयः सुयज्ञस्य यत्कर्त्तव्यं सांपरायिकं मृतोद्देशेन कर्त्तव्यं कर्म तत् चक्रुः ॥ ५९ ॥

एवमितिहासमुपसंहृत्य तत्फलितार्थमुपदिशन्नुपसंहरति- तत इति । यतो देहात्मनोरेवं विधस्वभावोऽतो हिरण्याक्षादिरूपं परमन्यमात्मानं स्वं प्रति वा यूयं मा शोचत अहो मां विहाय स गतस्त्वं विहायाहं कथं जीवामीत्येव स्वं परं प्रति वा मा शोचतेत्यर्थः । स्वः पर इत्यभिनिवेशोऽभिमानो यस्याज्ञानेनाऽज्ञानेनानाद्यज्ञानमूलेन कर्मणा विना देहिना कः परः को वा आत्मा कश्च स्वकीयः परकीयो वा स्वपरविभागः स्वीयपरकीयविभागश्च सर्वोऽप्यनाद्यविद्यामूलकर्मानुगतदेहसम्बन्धप्रयुक्तदेहात्माभिमानप्रयुक्त औपाधिक आत्मनां तु केनापि प्रकारेण स्वाभाविकसम्बन्धः शोकहेतुर्न विद्यते यतो मा शोचतेत्याभिप्रायः ॥ ६० ॥

उपरितनं दैत्यस्य सूक्तं वक्तुं तावच्छोकमुपसंहरन् दितेरवस्थितिप्रकारमाह भगवान् नारदः-इतीति । इतीत्थं दैत्यपतेर्हिरण्यकशिपोर्वाक्यमाकर्ण्य स्नुषया पुत्रस्य भार्यया सहिता दितिः क्षणमात्रेण पुत्रशोकं त्यक्त्वा तत्त्वे देहात्मयाथात्म्ये चित्तमधारयत् तत्त्वचिन्तनपरा बभूवेत्यर्थः ॥ ६१ ॥

इति श्रीमद्भागवते महापुराणे सप्तमस्कन्धे
श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायाम्
द्वितीयोऽध्यायः ॥ २ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

अनेन प्रकृते किमभूत्तत्राह-एवमिति । आत्मापायं स्वनाशं देहनाशं वा ॥ ५७ ॥

किं ज्ञातयो बालभाषितमित्युपेक्षां चक्रुरिति तत्राह-बाल इति । यद्देहादिकं तत्सर्वमनित्यं मेनिरे यद्देहात्मत्वं यदयथोत्थितं स्वप्नजाग्रत्स्वप्नभ्रान्तिं मेनिरे "अहं ममाभिमानादित्वयथोत्थमनित्यकम्" इति स्मृतेः । नन्वेवं तर्हि महदादिजगतश्चित्प्रकृतेश्च भ्रान्तिकल्पितत्वमायातं तयोरपि सर्वान्तर्गतत्वादित्याशङ्का वानेन परिहर्तव्या तथा हि, यन्महदादि तत्सर्वं जगदकारवाच्यस्य हरेरनुग्रहान्नित्यं आत् परमात्मनो यथार्थत्वेन सत्यत्वेनोत्थितं सृष्टं चित्प्रधानस्यापि नित्यत्वं भगवन्तमन्तरेण यथाऽस्वातन्त्र्येण स्थितत्वञ्च तदुक्तं च—

> " महदादियथोत्थं च नित्या चापि यथोत्थिता ।
> अस्वतन्त्रैव प्रकृतिः स्वतन्त्रो नित्य एव च ॥
> यथार्थभूतश्च पर एक एव जनार्दनः" ॥ इति.

अनेन महदादेरप्यनित्यत्वादिकं नास्तीति किमु हरेरिति कैमुत्यन्यायो दर्शितः ॥ ५८ ॥

साम्परायिकं मृतविषयम् ॥ ५९ ॥

आत्मपरावुद्दिश्य किमिति शोको न कार्य इति तत्राह—क आत्मेति । देहादिकमप्यपेक्ष्यात्मपरावाक्षिप्येते तथा हि, आत्मपरयोश्चेतनत्वेन नित्यत्वाद्देहादेर्भौतिकत्वेन नश्वरत्वात्कि शब्दस्याक्षेपत्वमेव, तत्त्वानिर्वचनीयः । तर्ह्यहं पर इति व्यवहारस्य किं मूलमिति तत्राह-स्वपरेति, स्वः पर इति दुराग्रहलक्षणमज्ञानमन्तरेण न किमपि कारणं तस्मादात्मनो वृद्धिः श्रीवासुदेवे दृढा मनोरतिरज्ञाननामशत्रुनाशश्चापादनीयौ पुरुषेणेति निश्चेतव्यम्-

> "न हि देहादिरात्मास्यान्न च शत्रुरुदाहृतः ।
> अतो दैहिकवृद्धौ वा क्षये वा किं प्रयोजनम् ॥
> यस्तु देहगतो जीवः स हि नाशं न गच्छति ।
> अतः शत्रुविवृद्धौ वा स्वनाशे शोचनं कुतः ॥
> देहादिव्यतिरिक्तौ तु जीवेशौ प्रति जानताम् ।
> अत आत्मविवृद्धिस्तु वासुदेवे रतिः स्थिरा ॥
> शत्रुनाशस्तथाऽज्ञाननाशो नान्यः कथञ्चन " ॥

इत्यनेन तात्पर्यमवगन्तव्यमिति सिद्धम् ॥ ६० ॥

प्रकरणसमाप्तावितिशब्दः ॥ ६१ ॥

इति श्रीमद्भागवते महापुराणे सप्तमस्कन्धे
श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम्
द्वितीयोऽध्यायः ॥ २ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

इति श्रीमद्भागवते महापुराणे सप्तमस्कन्धीयस्य
श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भस्य
द्वितीयोऽध्यायः ॥ २ ॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

आत्मापायं स्वयं स्वमृत्युम् ॥ ५७ ॥

सर्वं जगदनित्यं यतो यथोत्थितं येन प्रकारेणोत्थितं तथा न तिष्ठतीत्यर्थः ॥ ५८—५९ ॥

स्वश्च पर इत्यभिनिवेश एवाज्ञानं तेन विना ॥ ६०-६१ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् ।
सप्तमस्य द्वितीयोयं सङ्गतः सङ्गतः सताम् ॥ २ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

आत्मनोऽपायं नाशमपश्यन्त्यः वर्षशतैरपि पतिं न प्राप्स्यथ ॥५७॥ एवं बाले प्रवदति अयथोत्थितम् अमृतेपि आत्मनि मरणभ्रमेण वृथैवोत्पन्नं सर्वं शोकादिकम्, अनित्यं विवेकबाध्य यद्वा एवमुक्तप्रकारेण बाले प्रवदति सति अयथैवोत्थितमात्मतयोपस्थितं सर्वं देहेन्द्रियादिकमनित्यं मेनिरे नत्वात्मानमित्यर्थः ॥ ५८ ॥

साम्परायिकं पारलौकिकं यत् तच्चक्रुः कृतवन्तः ॥ ५९ ॥

आत्मान नित्यत्वात् परं देहादिकमनित्यत्वात् मा शोचत "अथ नित्यमनित्यं वा नैव शोचन्ति तद्विदः" इत्युक्तत्वात् ॥ ६० ॥

तत्रे "स रक्षिता रक्षति योहि गर्भे। यदृच्छयेशः सृजतीदमव्ययः" इत्यादिना यमेनोपदिष्टे ॥ ६१ ॥

इति श्रीमद्भागवते महापुराणे सप्तमस्कन्धीये
श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे
द्वितीयाध्यायार्थप्रकाशः ॥ २ ॥

---

### भाषा टीका ।

हे निर्बुद्धिओ ! इसी तरह तुमसब भी अपना नाश न देखकर इसका शोच करतेर सैकडो वर्ष में भी पति को प्राप्त न होवेगी ॥ ५७ ॥

### हिरण्य कशिपु उवाच ।

हिरण्यकशिपुबोला कि, उस बालक के ऐसे बोलने से सब ज्ञाति लोग बडे विस्मित चित्त वाले होकर सब संसार को अनित्य मानते हुए ॥ ५८ ॥

, यमराज भी इतना कहकर वहीं अन्तर्धान होगये जाति लोगों ने भी सुयज्ञ का जो मृतक का कर्म है उसे किया ॥ ५९ ॥

तिसीसे तुम भी सब दूसरे का और अपना भी कुछ शोच मत करो, इस संसार में कौन अपना और पराया कौन हैं । तथा आप कौन और दूसरा कौन है ॥ ६० ॥

प्राणियों ने ज्ञान के विना यह सब अपना और पराया मानलिया है ॥ नारद उवाच ॥ नारद जी बोले, कि-इस प्रकार हिरण्यकशिपु के वाक्य सुन कर वधू सहित दिति ने पुत्रशोक को क्षण मात्र में त्याग कर तत्व में चित्त लगाया ॥ ६१ ॥

इति श्रीमद्भागवत महापुराण सप्तस्कन्ध
द्वितीय अध्याय की भाषाटीका
समाप्त ॥ २ ॥

---

इति श्रीमद्भागवते महापुराणे सप्तमस्कन्धे द्वितीयोऽध्यायः ॥ २ ॥

## ॥ तृतीयोऽध्यायः ॥

नारद उवाच ।

हिरण्यकशिपू राजन्नजेयमजरामरम् ।
आत्मानमप्रतिद्वन्द्वमेकराजं व्यधित्सत ॥ १ ॥

स तेपे मन्दरद्रोण्यां तपः परमदारुणम् ।
ऊर्ध्वबाहुर्नभोदृष्टिः पादाङ्गुष्ठाश्रितावनिः ॥ २ ॥

जटादीधितिभी रेजे सम्वर्तार्क इवांशुभिः ।
तस्मिंस्तपस्तप्यमाने देवाः स्थानानि भेजिरे ॥ ३ ॥

तस्य मूर्ध्नः समुद्भूतः सधूमोऽग्निस्तपोमयः ।
तिर्यगूर्ध्वमधोलोकानतपद्विष्वगीरितः ॥ ४ ॥

चुक्षुभुर्नद्युदन्वन्तः सद्वीपाद्रिश्चचाल भूः ।
निपेतुः सग्रहास्तारा जज्वलुश्च दिशो दश ॥ ५ ॥

तेन तप्ता दिवं त्यक्त्वा ब्रह्मलोकं ययुः सुराः ।
धात्रे विज्ञापयामासुर्देवदेव जगत्पते ! ॥ ६ ॥

दैत्येन्द्रतपसा तप्ता दिवि स्थातुं न शक्नुमः ।
तस्य चोपशमं भूमन् विधेहि यदि मन्यसे ।
लोका न यावन्नङ्क्ष्यन्ति बलिहारास्तवा (१) भिभूः ॥ ७ ॥

तस्यायं किल सङ्कल्पश्चरतो दुश्चरं तपः ।
श्रूयतां किन्न विदितस्तवाथापि निवेदितः ॥ ८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

तृतीये तस्य तपसा तप्तं वीक्ष्य जगद्विधिः ।
आगत्य विस्मितस्तेन संस्तुतश्च वरानदात् ॥

तदेवं साधूनां कदने दानवानादिश्य बन्धूनां शोकं तत्त्वनिरूपणेनापनीय यत्कृतवांस्तदाह— हिरण्यकशिपुरित्यादिना । अप्रतिद्वन्द्वं प्रतिपक्षहीनमेकराजमेकमेव राजानं व्यधित्सत कर्तुमैच्छत् ॥ १ ॥

ऊर्ध्वौ बाहू यस्य नभसि दृष्टिर्यस्य पादाङ्गुष्ठेनाश्रिताऽवनिर्येन ॥ २ ॥

जटानां दीधितिभिः कान्तिभिः अंशुभीरश्मिभिः प्रलयकर्ता अर्क इव रेजे पूर्वं ये अलक्षिताः सन्तो भुवि विचेरुस्ते देवाः पुनः स्वानि स्थानानि भेजिरे ॥ ३ ॥

विष्वगीरितः सर्वतः प्रसृतस्सन् ॥ ४ ॥

द्वीपैरद्रिभिश्च सहिता भूश्चलिता ॥ ५ ॥ ६ ॥

---

( १ ) तव प्रभो इति पाठान्तरम्. विज०।

श्रीधरस्वामिकृतभावार्थदीपिका ।

तव बलिहाराः करप्रदाः पूजाकारिण इति वा अभितो भवतीत्यभिभूः हे सर्वाधिपते! पाठान्तरे भो इति सम्बोधनम् अभितो यावन्न नंक्ष्यन्तीति सम्बन्धः ॥ ७ ॥

ब्रह्मणस्तस्मिन्द्वेषमुत्पादयितुं तत्सङ्कल्पमाहुः—तस्येति चतुर्भिः। तस्य सङ्कल्पस्तव किं न विदितोऽथाऽप्यस्माभिर्निवेदितस्त्वया श्रूयताम् ॥ ८ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

एवं तत्त्वोपदेशेन दित्यादीनां शोकं परिहृतवतो दैत्यस्योपरितन वृत्तान्तमाह भगवान्नारदः—हिरण्यकशिपुरित्यादिना। हे राजन् युधिष्ठिर! हिरण्यकशिपुरात्मानं व्यधित्सत विधातुमैच्छत् कथम्भूतम् अजेयमितरैर्जेतुमशक्यम् जरामरणरहितम् अप्रतिद्वन्द्वं प्रतिपक्षरहितम् एकराजम् एकः स्वयमेव राजा इत्येकराजस्तमेवंभूतमात्मानं साधयितुमैच्छदित्यर्थः। येन साधनेन स्वयमुक्तविधोऽभवत्तादृशं साधनं कर्तुमैच्छदिति यावत् ॥ १ ॥

तत्साधनानुष्ठानप्रकारमेव प्रपञ्चयति—स इति। सः दैत्यः मन्दरगिरेर्द्रोण्यामत्युग्रं तपस्तेपे कृतवान् कथंभूतस्सन् ऊर्द्ध्वौ बाहू यस्य नभसि दृष्टिर्यस्य पादाङ्गुष्ठेनाश्रिताऽवनिर्भूमिर्येन ॥ २ ॥

एवं तपः कुर्वन् दैत्यो जटानां दीधितिभिः कान्तिभिरंशुभिः रश्मिभिः सांवर्तकः प्रलयकालिकः सूर्य इव रेजे रराज. तस्मिन् दैत्ये एवं तपः कुर्वति सति ये देवाः पूर्वं दैत्यैरलक्षितास्सन्तो भुवि चेरुस्ते स्थानानि स्वस्थानानि भेजिरे प्रापुः प्रतिपक्षस्यासुरस्य तप स्थितत्वादुपद्रवाभावात् स्वस्थानानि भेजिरे इति भावः। तस्य दैत्यस्य मूर्द्ध्नः सकाशात्समुद्भूतः निष्क्रान्तस्तपोमयः तपस आगतस्तपोमयः तत आगत इत्यर्थे "मयट्च" इति मयट्, तपःकार्य भूतइत्यर्थः। धूमेन सहितोऽग्निः प्रवृद्धास्तिर्यगूर्द्धमधश्च सर्वतो लोकानतपत् तताप ॥ ३ ॥ ४ ॥

नद्य उदन्वन्त. समुद्राश्च चुक्षुभुर्द्वीपैरद्रिभिश्च सहिता भूः भूमिः चचाल ग्रहैः सहितास्तारा. नक्षत्राणि निपेतुः दश दिशो जज्वलुश्च ॥ ५ ॥

तेन तपोऽग्निना तप्ता देवा दिवं स्वर्गं त्यक्त्वा सत्यलोकं ययुः तत्र ब्रह्मणे विज्ञापयामासुश्च. विज्ञप्तिमेवाह—हे देवदेव देवानामिन्द्रादीनामपि देव, हे जगत्पते, दैत्येन्द्रस्य तपसा तप्ताः वयं दिवि द्युलोके स्थातुं न शक्नुमः ॥ ६ ॥

हे भूमन्, यदि त्वं लोकानां क्षेमं मन्यसे तर्हि हे अभिभो सर्वाभिभवक्षम! तव बलिहाराः हविर्भागप्रदाः पूजाकारिणो वा सर्वे लोकाः यावन्न नङ्क्ष्यन्ति नाशं न यास्यन्ति तावदेव ततःपूर्वमेव तस्य दैत्येन्द्रस्य तपोऽग्निरुपशमं वरप्रदानरूपोपायेन विधेहि कुरु ॥ ७ ॥

देवास्य गूढाभिसन्धिं ब्रह्मणस्तस्मिन् द्वेषमुत्पादयितुं विज्ञापयन्त आहुः—तस्येति। दुश्चरमन्यैःकर्तुमशक्यन्तपश्चरतः कुर्वतः तस्य दैत्यस्याय किल सङ्कल्पः यद्यपि सर्वज्ञस्य तवाविदितं किन्तु, किमपि नास्ति. तथाप्यस्माभिर्वेदितं श्रूयतां त्वयेति शेषः ॥ ८ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

बहुकोटिसंख्या तत्कालेनानेकसंभारैरार्जितैरयोग्यं दुष्प्रापं योग्यञ्चानेकविधिसाधनैः सुसाध्यं तूष्णीं भावेनेत्यादिकं हिरण्यकशिपुतपश्चरणकथनव्याजेनाभिप्रेयतेऽस्मिन्नध्याये व्यधित्सत कर्तुमैच्छत् ॥ १-२ ॥

सम्वर्तार्कः प्रलयसूर्य स्थानानि गमनवर्जनानीनकृतो यात्रां मुक्त्वा स्वस्थानानि भेजुः ॥ ३—६ ॥

उपशमं परिहारम् बलिहारा उपहारार्पका ॥ ७—८ ॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

॥ १——१० ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

तृतीये स तपस्तप्त्वा देवान् सुस्थितदुःस्थितान् ।
कृत्वा धातुः समायातात् स्तुतात् प्राप वरान् वरान् ॥

आत्मानं स्वम् एकएव राजत इत्येकराट् तं वक्ष्यमाणाभिप्रायेण ब्रह्मलोकपर्यन्तं स्वस्यैवैकाधिपत्यं कामयमानोऽभूदित्यर्थः ॥ १ ॥

अतएव तेपे इति ॥ २ ॥

स्थानानि स्वस्वगृहान् शत्रोस्तस्य शात्रवमनालक्ष्येत्यर्थः ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥

अभितो भवतीत्यभिभो हे सर्वाधिपते! सविसर्गपाठे भो इति सम्बोधनं अभि अभितः ॥ ७ ॥ ८ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

हिरण्यकशिपुतपःप्रसन्नोब्रह्मा तस्मै वरानदादितिवर्ण्यते तृतीये—हिरण्यकशिपुः आत्मानमजेयत्वादिगुणकं नास्ति प्रतिद्वन्द्वः प्रतिपक्षो यस्य तथाभूतम् एक एव राजते इत्येकराट् तं व्यधित्सत विधातुमैच्छत् ॥ १ ॥

ऊर्द्ध्वौ बाहू यस्य नभसि दृष्टिर्यस्य पादाङ्गुष्ठेनाश्रिताऽवनिर्येन स दारुणं तपस्तेपे ॥ २ ॥

सम्वर्तार्कः प्रलयार्कोऽंशुभिरिव जटानां दीधितिभिः रश्मिभिः रेजे रराज पूर्वं ये शत्रुभयादलक्षिता भुवि चेरुस्ते देवाः स्थानानि स्वस्वगृहान् भेजिरे प्रापुः ॥ ३ ॥

सृष्ट्वा चराचरमिदं तपोयोगसमाधिना ।
अध्यास्ते सर्वधिष्ण्येभ्यः परमेष्ठी निजासनम् ॥ ९ ॥
तदहं वर्द्धमानेन तपोयोगसमाधिना ।
कालात्मनोश्च नित्यत्वात्साधयिष्ये तथात्मनः ॥ १० ॥
अन्यथेदं विधास्येऽहमयथापूर्वमोजसा ।
किमन्यैः कालनिर्धूतैः कल्पान्ते वैष्णवादिभिः ॥ ११ ॥
इति शुश्रुम निर्बन्धं तपः परममास्थितः ।
विधत्स्वानन्तरं युक्तं स्वयं त्रिभुवनेश्वर ! ॥ १२ ॥
तवासनं द्विजगवां पारमेष्ठ्यं जगत्पते ! ।
भवाय श्रेयसे भूत्यै क्षेमाय विजयाय च ॥ १३ ॥
इति विज्ञापितो देवैर्भगवानात्मभूर्नृप ! ।
परीतो भृगुदक्षाद्यैर्ययौ दैत्येश्वराश्रमम् ॥ १४ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

विष्वगीरितः सर्वतः प्रसृतः तिर्यगूर्द्ध्वमधोलोकानतपत् ततापः ॥ ४ ॥

नद्यश्चोदन्वन्तश्च नद्युदन्वन्तः चुक्षुभुः द्वीपैरद्रिभिश्च सहिता भूश्चचाल ग्रहैः सह ताराः निपेतुः ॥ ५ ॥

तेन तन्मूर्द्धसमुद्भतेनाग्निना ॥ ६ ॥

अभितोगवनीत्यभिधूस्तत्पत्सरोधने हे अभिभो ! सर्वाधिपते ! यावत्तव बलिहाराः पूजाकारिणः न नङ्क्ष्यन्ति ततःप्रागेव तस्योपशमं विधेहि कुरु ॥ ७ ॥

दुश्चरं तपश्चरतस्तस्यायं वक्ष्यमाणः सङ्कल्पः यद्यपि तव किं न विदितं सर्वं विदितमेव. अथाप्यस्माभिर्निवेदितं त्वया श्रूयताम् ॥ ८ ॥

---

भाषा टीका ।

नारदउवाच ।

श्रीनारदजी बोले, कि–हे राजन् ! हिरण्यकशिपुने अपने को अजेय अजर अमर और अप्रति द्वन्द्वी एक राजा कर लिया ॥१॥

क्योंकि ? उसने मंदरपर्वत की गुहा में ऊंचे को बाहू उठाकर आकाश में दृष्टि लगाकर पैरके अंगुष्ठ मात्र से पृथ्वी पर खडा होकर परमदारुण तप किया ॥ २ ॥

तब तौ वह अपने जटाओ की किरणों से सूर्य के तुल्य दीप्त हुआ ॥ जब वह तप करने लगा तब देवता लोग फिर अपने २ स्थानो पर पहुच गये जो कि पहिले पृथ्वी पर विचरते थे ॥ ३ ॥

उसके मूर्द्धा से निकला हुआ धुआं सहित तपो मय अग्नि नीचे ऊपर और चारो तरफ के लोको को तपाता हुआ ॥ ४ ॥

उस समय नदी और समुद्र क्षुभित होगये द्वीपों सहित पृथ्वी कांपने लगी आकाश से ग्रहो सहित तारे टूट २ कर नीचे गिरने लगे और दशो दिशा भी जलने लगी ॥ ५ ॥

तिसी से तपे हुए देवता स्वर्ग को छोडकर ब्रह्म लोक पहुचे । और विधाता से विज्ञापन करने लगे कि हे देव देव ! हे जगत्पते ! हिरण्यकशिपु के तप से तपे हुए हम लोग स्वर्ग मे रहने को समर्थ नहीं है । यदि आप विचारो तौ उसकी शांति करो. हे सर्वाधिपते ! जब तक आपके भेट देने वाले लोक न नष्ट होजावे तिसके पूर्वमे शांतिकरो ॥ ६–७ ॥

घोर तप करने वाले उस हिरण्यकश्यप का ऐसा संकल्प है । आपको क्या नहीं विदित है ? तौ भी निवेदन सुनीइये ॥ ८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

तपोयोगयोः समाधिना निष्ठया सर्वेभिष्ण्येभ्यः श्रेष्ठं निजासनं सत्यलोकं यथा अध्यास्तेऽधितिष्ठति ॥ ९ ॥

तत्तथैवाऽऽत्मनः साधयिष्यामि. ननु, ब्रह्मणातिदीर्घायुषा तपस्तप्त्वा तत्साधितमन्यः कुतस्तत्साधयेत्तत्राहुः–कालात्मनोरिति ।

न ददर्श प्रतिच्छन्नं वल्मीकतृणकीचकैः ।
पिपीलिकाभिराचीर्णं मेदस्त्वङ्मांसशोणितम् ॥ १५ ॥
तपन्तं तपसा लोकान् यथाभ्रापिहितं रविम् ।
विलक्ष्य विस्मितः प्राह प्रहसन् हंसवाहनः ॥ १६ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

यद्यप्यायुषोऽल्पत्वेन देहो वारंवारं म्रियेत तथापि कालस्यात्मनश्च नित्यत्वाद्बहुभिर्जन्मभिस्तपस्तप्त्वा तत्पदं साधयिष्याम्येवेति ॥ १० ॥

वर्धमानेनेति यदुक्तं तदभिप्रायमाह—अन्यथेति । अन्यथा सुरासुरादिव्यत्ययेन अयथापूर्वं पुण्यपापादिव्यत्ययेन इदं जगद्विधास्यामि अन्यैर्वैष्णवादिभिर्ध्रुवादिपदैः किं प्रयोजनमतस्तदेव साधयिष्यामि ॥ ११ ॥

इति त्वत्पदापहरणे तस्य निर्बन्धं शुश्रुमः अत एवासौ तपः परममास्थितो वर्तते यदत्रयुक्तं तदनन्तरमेव विधत्स्व ॥ १२ ॥

अन्यथा तव स्थानभ्रंशे सति साधूनामनिष्टं स्यादिति बोधयन्त आहुः—तव पारमेष्ठ्यमिदमासनम् द्विजानां गवाञ्च भवायोद्भवाय श्रेयसे सुखाय भूत्यै ऐश्वर्याय क्षेमाय लब्धपालनाय विजयायोत्कर्षाय ॥ १३ ॥ १४ ॥

वल्मीकादिभिः प्रतिच्छन्नं प्रथमं न ददर्श पश्चात्कथञ्चिद्विलक्ष्य तं प्राहेति द्वयोरन्वयः । पिपीलिकाभिराचीर्णं समन्ताद्भक्षितं मेदश्च त्वक्च मांसं च शोणितं च यस्य ॥ १५ ॥

अभ्रैरापिहितं छन्नं रविमिव विलक्ष्य विस्मितः प्राह ॥ १६ ॥ १७ ॥

---

श्रीमद्वीरराघवाचार्य्यकृतभागवतचन्द्रचन्द्रिका ।

कोऽसौ संकल्पस्तत्राहुः—सृष्ट्वेति । सर्वधिष्ण्येभ्यः इन्द्रादिस्थानेभ्यः परमे स्थाने तिष्ठतीति परमेष्ठी ब्रह्मा तपोयोगे यः समाधिर्निष्ठा तेन चराचरात्मकमिदं सर्वं जगत्सृष्ट्वा यन्निजासनं सर्वोत्कृष्टं सत्यलोकमध्यास्ते ॥ ९ ॥

तदेवासनमहमात्मनो मम वर्द्धमानेन तपोयोगसमाधिना साधयिष्ये इति. ननु, ब्रह्मणा दीर्घायुषा तपस्तप्त्वा तत्साधितम्, अन्यः कथं तत्साधयेत् ? तत्राहुः-कालात्मनोश्च नित्यत्वादिति । यद्यप्यायुरल्पं तथापि कालस्यात्मनश्च नित्यत्वाद्बहुभिर्जन्मभिः साधयिष्ये इत्यभिसन्धिरित्यर्थः ॥ १० ॥

अभिसन्ध्यन्तरमाहुः-अन्यथेति । तपोबलेनाहमिदं जगदन्यथा अधरोत्तरमयथापूर्वं देवासुरादिव्यत्ययञ्च करिष्ये कल्पान्तैः कल्पावधिभिरत एव कालेन निर्द्धूतैर्विनाश्यैर्वैष्णवादिभिः पदैः वैकुण्ठादिभिः किं प्रयोजनं न किमपीत्यर्थः । अनेन "सर्वार्थान्विपरीतांश्च बुद्धिः सा पार्थ तामसी" इत्युक्तरीत्या स्थायिनो वैष्णवपदस्यास्थिरत्वं सत्यादिलोकानां स्थिरत्वञ्चाभिसंहितवतो दैत्यस्य केवलतामसबुद्धिमत्त्वमावेदितम् ॥ ११ ॥

इतीत्थ त्वत्पदापहरणे तस्य निर्बन्धमभिसन्धिरूपं शुश्रुम. तदर्थमेव परमं तप आस्थितः अतो हे त्रिभुवनेश्वर ! अत्र कर्त्तुं यद्युक्तं तदनन्तरमाश्वेव स्वयमेव विधत्स्व कुरु ॥ १२ ॥

हे जगत्पते ! तवेदं पारमेष्ठ्यं सर्वोत्कृष्टमासनं स्थानं द्विजानां गवाञ्च भवाद्यर्थं तव स्थानभ्रंशे द्विजानां गवाञ्च न भवादिकमस्तीति भावः । तत्र, भवः अलब्धलाभः क्षेमो लब्धपालनं श्रेयो धर्मादिपुरुषार्थः भूतिरैश्वर्यं विजयः उत्कर्षः ॥ १३ ॥

इतीत्थं देवैर्विज्ञापितो भगवानात्मभूः परमात्मनो जातो ब्रह्मा भृग्वाद्यैः परिवृतो दैत्येश्वरस्याश्रमंप्रति ययौ ॥ १४ ॥

वल्मीकादिभिः वल्मीकैस्तृणैः कीचकैर्वेणुभिश्च प्रतिच्छन्नं तं दैत्यं प्रथमं हंसवाहनो ब्रह्मा न ददर्श ततश्च पश्चात्कथञ्चिद्विलक्ष्य विस्मितः प्रहसंस्तं प्राहेति द्वयोरन्वयः । कथंभूतं विलक्ष्य, पिपीलिकाभिराचीर्णमासमन्ताद्भक्षितं मेदश्च त्वक्च मांसञ्च शोणितं च यस्य ॥ १५ ॥

तपसा तपोग्निना लोकांस्तपन्तं कमिव विलक्ष्याभ्रैः पिहितं छन्नं रविं यथा सूर्यमिव ॥ १६ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

किं तद्विज्ञापनमत्राह—सृष्ट्वेति । ब्रह्मा तपोज्ञानादिनेदं चराचरं सृष्ट्वा सर्वधिष्ण्येभ्यो रुद्रादिपदेभ्यः परं यन्निजासनमध्यास्ते "अधिशीङ्स्थासांकर्म" इति सप्तम्यर्थे द्वितीया. अहं तदात्मनः साधयिष्ये इत्यन्वयः ॥ स्वनाशे दुर्घटमत्राह—कालात्मनोरिति । कालस्यात्मनश्चेतनस्य च नित्यत्वात् अविनाशात् अन्यस्य तत्साध्यत्वे हिरण्यकशिपोरीदृशं कर्म नाद्भुतं यतो ब्रह्माणमेकमन्तरेणात्मयोग्याज्ञानेन रागादिना वा मोहिताः जानन्तोपि स्वासदृशं कर्माचरन्तो दृश्यन्ते, तदुदितम्—

"जानतामपि कर्तव्यं कर्मात्मसदृशं सदा ।
तत्रात्मसदृशाज्ञानाद्रागाद्यैर्वा विमोहिताः ॥
जानन्तोपि ह्यसदृशं कर्म कुर्युर्हते विभुम् ।
चतुरास्यं सनायोग्यं कर्म कुर्यात्कथञ्चन" ॥ इति

नचैतत्तपआदिसाध्यम् अयोग्यत्वात्—

"तपसा विद्यया वापि ज्ञानध्यानादिना तथा ।
व्यस्तैः समस्तैरथवा कुर्वता यन्नमुत्तमम् ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

सम्भारविक्षेपशतैर्बहुकोटिभिरेव च ।
न शक्यते समारोढुं ह्यात्मनाऽयोग्यपदं त्विति" ॥

तस्माद्योग्यमेवानुष्ठेयं नायोग्यमिति सिद्धम्. एवं तत्त्वं चेत्तर्हि किमर्थं तपआदेर्विघ्नं कुर्वन्तीति चेन्न. तपआदीनां निष्फलत्वपरिहारार्थत्वात्—

"तथाप्याचरतां कुर्युर्दैत्यानां सुरनायकाः ।
विघ्नं तु तपआदीनां वैयर्थ्यस्यापनुत्तये" ॥

इति वचनात् ॥ ९—१० ॥

वैष्णवो ब्रह्मादिः कर्ता येषां ते तथा तैर्ब्रह्मनिर्मितैरित्यर्थः । "ब्रह्मा स्वयम्भूर्द्रुहिणो वैष्णवः शतधृत्तथा" इतिशब्दनिर्णये. तथापि स्वाज्ञाद्विष्णोः पदमन्योच्यते इति किं न स्यादत्राह—कालनिर्धूतैरिति । तर्हि कियन्त कालं स्थितैरिति तत्राह, कल्पान्तैरिति । मन्वन्तरादिकल्पावसानिकैः "न यत्र माया न रजस्तमश्च" इत्यादिना विष्णोः पदस्य वैलक्षण्योक्तेः ॥ ११ ॥

निर्बन्धमसदाग्रहम् ॥ १२ ॥

ननु, हिरण्यकशिपोरन्येषां पदानि विहाय तव पदाकाङ्क्षायां को विशेषहेतुरत्राह—तवेति । तवामल सकलदुःखानि निरस्य स्थातुं योग्यं पदं पारमेष्ठ्यं अत्यन्तसुखकारणं यस्मात्स्वभाजनां भवाय ज्ञानादिगुणसमृद्ध्यै भूत्यै समृद्धस्य पुनर्ह्रासराहित्याय श्रेयसे संसारान्मुक्तये क्षेमाय रक्षणाय विजयायेन्द्रियजयाय च भवति तस्मादत्युत्तमपदत्वाद्धिरण्यकशिपुरचीक्लृपत्. तदुक्तम्—

"भवाय श्रेयसे चैव न कश्चित्तदपेक्षते ।
मधुकैटभयोश्चैव हिरण्यादेस्तथैव च ॥
नान्यो ब्रह्मपदं वाञ्छत्ययुजूंष्योग्यान्विना क्वचित् ।
ततः श्रेयांसि वाञ्छन्ति न तु तत्पदमाप्तये ॥ इति.

भवो वृद्धिः समुद्दिष्टा श्रेयो मोक्ष उदाहृतः ।
वृद्धस्य न पुनर्ह्रासो भूतिरित्येव कथ्यते" ॥ इति शब्दनिर्णये.

दिवि स्थातुं न शक्नुमः इत्यतो हिरण्यकशिपुना ब्रह्मपदावाप्त्यै सकामं तपसि स्थितमिति ज्ञायते. यः सकामं तप आचरति तस्य तपसा तस्मिँल्लोके स्थितिर्न घटते सन्तप्तकटाहान्तःस्थितिवद्यस्तु निष्कामं तपः करोति तेन सुखावाप्तिः स्यात्. तदुक्तम् "सकामन्तु तपः क्रूरं लोकानां क्षोभकृद्भवेत् । इतरच्छान्तये सर्वलोकानां भवति ध्रुवम्" इति. "ब्रह्माणमभजद्ब्रह्मपदार्थं स हिरण्यकः" इति च ॥ १३—१४ ॥

कीचकैरनिलोद्धूतत्वेन स्वनद्वेणुभिः पिपीलिकाभिर्व्याप्तत्वात् क्वचिच्छरीरावयवैर्मेदसा क्वचित्त्वचा क्वचिच्छोणितेन च युक्तम् १५

तपन्तमित्यनेनापि तपसः क्रूरत्वमाह—मासा विततं अहो दैत्यानामयोग्ये वस्तुनि प्रयत्नातिशय इत्यालोच्य हसन् मन्दस्मितं कुर्वन् हंसवाहनो ब्रह्मा "विष्णुपद्मासनावुक्तौ पण्डितैर्हंसवाहनौ" इत्यभिधानम् ॥ १६ ॥ १७ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

किमन्यैरित्यासुरदृष्ट्या ॥ ११—१६ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

तथास्माभिर्निवेदितं श्रूयतां सर्वधिष्ण्येभ्यः श्रेष्ठम् ॥ ९ ॥

वर्द्धमानेनेति । सांप्रतिकादपि परमेष्ठिनो मम प्रभावोऽधिको भविष्यतीति भावः । ननु, ब्रह्मणा अतिदीर्घायुषा तपस्तप्त्वा तत्साधितं त्वमेतावदायुष्कं कथन्तत्साधयिष्यसीति तत्राह—कालेति । यद्यप्यायुषोऽल्पत्वे मदीयस्थूलं देहो वा वारम्वारं नङ्क्ष्यति तदपि कालस्यात्मनश्च नित्यत्वाद्बहुभिर्जन्मभिस्तपस्तप्त्वा तपसात्मनः पारमेष्ठ्यासनं साधयिष्याम्येवेति ॥ १० ॥

ततश्च इदं जगदन्यथा विधास्ये इति ये ब्रह्मचर्यतपोयजनादिभिरिह लोके दुःखिनस्ते परलोकेऽपि नरकभाजो दुःखिनः कर्तव्याः ये इह लोके वैषयिकसुखभोगभाजस्तिरस्ते एव परलोकस्वर्गिणः वैषयिकसुखभोगोन्मुख्यमेव पुण्याप्तलाभं च तत्स्वलोके एव पापनिष्प्राणनमित्यादिकं प्रवर्तनीयम् । नन्वेवं पूर्वपूर्वमहाफलेषु न प्रवृत्तं तत्राह—अन्यथापूर्वमपि योजसा यो जपा विधास्ये । ननु, स्वेन त्वयाधिवेदितं पारमेष्ठ्यासनमेव किं सर्वधिष्ण्येभ्यः श्रेष्ठं मन्यसे तत्राह—किमन्यैरिति । वैष्णवादिभिर्धुवादिपदैः किं प्रयोजनं कालनिर्धूतैरिति ध्रुवपदस्यापि नित्यत्वमननमसुरस्वभावत्वात् ॥ ११ ॥

इति त्वत्पदाहरणे तस्य निर्बन्धं शुश्रुम अत एवायं तपः परममास्थितः ॥ १२ ॥

तत् पारमेष्ठ्यमिदमासनं भवाय कीदृशाय श्रेयसे उत्तमसुखायेत्यर्थः । स चेदिदं प्राप्स्यति तदा विकर्तं करिष्यतीति भावः भूत्यै सृष्टानां लोकानां धर्मादिसम्पत्त्यै तदधिकारे त्वधर्मैर्विपर्ययिष्यतीति भावः । क्षेमाय कल्याणाय विजयाय उत्कर्षाय तदधिकारे तु अकल्याणपराभवावेव भाविनाविति भावः ॥ १३ ॥

यथाविति तर्ह्याशुनैव वरदानैस्तत्तपसो निवर्तयामीत्याशयेन ॥ १४ ॥ १५ ॥

प्रथमं वल्मीकादिभिः प्रतिच्छन्नं तं न ददर्श ततः कथं चित्तं विलक्ष्य प्राहेति द्वयोरन्वयः । ग्रसितो समन्ताद्भक्षितं मेघाच्छादितं रविमिव ॥ १६ ॥ १७ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

यथा तपोयोगयोस्तपश्चित्तैकाग्र्ययोः समाधिना सम्पादनेन परमेष्ठी ब्रह्मा सर्वधिष्ण्येभ्यः श्रेष्ठमिति शेषः । निजासनं सत्यलोकम् अध्यास्ते तिष्ठति ॥ ९ ॥

तथा तपोयोगसमाधिना वर्द्धमानेन ततोऽप्यधिकेन तत्परमे

## ब्रह्मोवाच ।

उत्तिष्ठोत्तिष्ठ भद्रं ते तपःसिद्धोऽसि काश्यप ! ।
वरदोऽहमनुप्राप्तो व्रियतामीप्सितो वरः ॥ १७ ॥
अद्राक्षमहमेतत्ते हृत्सारं महदद्भुतम् ।
दंशभक्षितदेहस्य प्राणा ह्यस्थिषु शेरते ॥ १८ ॥
नैतत्पूर्वर्षयश्चक्रुर्न करिष्यन्ति चापरे ।
निरम्बुर्धारयेत्प्राणान्को वै दिव्यसमाः शतम् ॥ १९ ॥
व्यवसायेन तेऽनेन दुष्करेण मनस्विनाम् ।
तपोनिष्ठेन भवता जितोऽहं दितिनन्दन ! ॥ २० ॥
ततस्त आशिषः सर्वा ददाम्यसुरपुङ्गव ! ।
मर्त्यस्य ते अमर्त्यस्य दर्शनं नाफलं मम ॥ २१ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

सुखात्मनमात्मनः साधयिष्ये । ननु, तत्तल्लोकानां नश्वरत्वादित्यत आह— कालात्मनोऽनित्यत्वादिति ॥ १० ॥

अतोऽहं निश्चयतस्तथा परमेष्ठिस्थानाप्रकारादन्यथाकारेण अन्यथापूर्वं परमेष्ठिनिर्मितांश्चपरानिम् ओजसा कर्तेजसा विद्यासे कल्पान्ते कालनिकृष्टैर्दैत्यनादिभिर्लोकैः किं प्रयोजनम् कालनिर्झ्नेषु वैष्णवस्यापि लोकस्य गणना तु तामसीबुद्धियोगात् "अधर्मं धर्ममिति या मन्यते तमसावृता । सर्वार्थान्विपरीतांश्च बुद्धिः सा पार्थ तामसी" इति श्रीमुखवचनात् ॥ ११ ॥

इति त्वत्पदापहरणे तस्य निर्बन्धं सङ्कल्पं शुश्रुमः अत एव परम तप आस्थितः यदत्रयुक्तं तदनन्तरमेव विधत्स्व कुरु ॥ १२—१३—१४ ॥

वल्मीकादिभिः प्रतिच्छन्नम् पिपीलिकादिभिः आचीर्णा सर्वतो भक्षितं मेदश्च त्वक्च मांसञ्च शोणितञ्च यस्य तं प्रथमं न ददर्श ॥ १५ ॥

पश्चाद्भ्रैरविहितं छन्नं रविमिव विलक्ष्य प्राह ॥ १६—१७ ॥

---

### भाषा टीका ।

वह कहता है कि ब्रह्मा अपने तप योग और समाधि के बल से सब लोक से श्रेष्ठ सत्य लोक का अधिष्ठाता हुआ है ॥ ९ ॥

इस वास्ते मैं भी तप योग और समाधि के बल को बढाकर अपने को सिद्ध करूंगा क्यों कि ? काल का अंत नहीं और आत्मा भी नित्य है ॥ १० ॥

इस जगत को मैं पुण्यपापादि के व्यत्यास करके अन्य प्रकार का ही करूंगा ॥ क्योंकि ? कल्पान्त में काल से नष्ट होने वाले ध्रुव आदि लोक आदि से क्या प्रयोजन है ॥ ११ ॥

हम लोगों ने उसका ऐसा निर्बन्ध सुना है इसी कारण वह परम तप मे स्थित है । आप स्वयं त्रिभुवन के ईश्वर हो जैसा उचित समझो वैसा यत्न करो ॥ १२ ॥

क्योंकि ? हे जगत्पते ! आपकी परमेष्ठीपने की गद्दी गौ ब्राह्मणों के वृद्धि सुख ऐश्वर्य पालन और उत्कर्ष के लिये है ॥१३॥

हे नृप ! भगवान् ब्रह्माजी से देवताओं ने जब ऐसे विज्ञापन किया तब ब्रह्माजी भी भृगुदक्षादिकों के सहित दैत्येश्वर हिरण्यकश्यप जहां तप करता था उस आश्रम पर गये ॥ १४ ॥

वहां देखे तो वल्मीक तृण और बांसो से ढका हुआ, और पिपीलिकाओ ने चर लिया त्वक् मेद मांस और रुधिर जिस्का ॥ १५ ॥

और तप से लोकों को तपा रहा, जैसे मेघ से ढका हुआ सूर्य ऐसे उस दैत्य को देखकर हंस वाहन ब्रह्माजी विस्मय को प्राप्त होकर हंसते हुये बोले ॥ १६ ॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका ।

हृत्सारं धैर्यं दंशैर्मक्षिकादिविशेषैर्भक्षितो देहो यस्य ॥ १८ ॥

निरम्बुर्निषिद्धमम्बु येन सः त्यक्तोदक इत्यर्थः ॥ १९ ॥

ते त्वया अनेन व्यवसायेनैव तावज्जितोऽहम् तपोनिष्ठेन भवता तु सुतरांजितः ॥ २० ॥

मर्त्यस्य तवामर्त्यस्य मम दर्शनमफलं निष्फलं न भवति ॥२१॥

नारद उवाच ।

इत्युक्त्वादिभवो देवो भक्षिताङ्गं पिपीलिकैः ।
कमण्डलुजलेनौक्षद्दिव्येनामोघराधसा ॥ २२ ॥
स तत्कीचकवल्मीकात्सह ओजोबलान्वितः ।
सर्वावयवसम्पन्नो वज्रसंहननो युवा ।
उत्थितस्तप्तहेमाभो विभावसुरिवैधसः ॥ २३ ॥
स निरीक्ष्याम्बरे देवं हंसवाहमवस्थितम् ।
ननाम शिरसा भूमौ तद्दर्शनमहोत्सवः ॥ २४ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

आदौ भवतीत्यादिभवो ब्रह्मा औक्षत्प्रोक्षितवान् ॥ २२ ॥

वज्रवत्संहननमङ्गदार्ढ्यं यस्य तप्तस्य हेम्न इवाभा देहकान्तिर्यस्य ॥ २३ ॥

तस्य दर्शनेन महानुत्सवो यस्य ॥ २४ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

उक्तमेवाह—उत्तिष्ठेति । हे काश्यप ! उत्तिष्ठोत्तिष्ठ ते तव भद्रं कुशलमभीष्टमिति यावत् भविष्यति यतस्त्वं तपस्सिद्धः तपसा सिद्धः फलपर्यन्ततपस्सम्पन्नः अत एव च वरदस्त्वदभीष्टदोऽहमनुप्राप्तः "अत ईप्सित इष्टोऽर्थो व्रियतां वाच्यताम् ॥ १७ ॥

न तवैतत् हृत्सारं धैर्यं मदद्भुतमद्राक्षं दृष्टवानस्मि हि यस्माद्दंशैर्भक्षितो देहो यस्य तस्य प्राणा अस्थिषु शेरते अस्थीनि भक्षयन्तस्तिष्ठन्तीत्यर्थः ॥ १८ ॥

पूर्वर्षयो भृग्वादयोऽपि नैवंविधाः तपश्चक्रुः अपरे अर्वाचीना न करिष्यन्तीति किम्पुनर्वक्तव्यम्. को वै पुमान्देवमानेन शतं समाः वर्षाणि निरम्बु त्यक्तोदकं यथा भवति तथा प्राणान्धारयेत् ? न कोऽपीत्यर्थः ॥ १९ ॥

हे दितिनन्दन ! मनस्विभिर्योगिभिरपि दुष्करेण तेनानेन व्यवसायेनैव तावज्जितोऽहं तपोनिष्ठेन भवता तु सुतरां जितः ॥२०॥

यतोऽहं जितस्ततस्ते तुभ्यम् हे असुरश्रेष्ठ ! सर्वा आशिषः इष्टार्थान् ददामि मर्त्यस्य मरणधर्मवतस्ते तव अमर्त्यस्य तद्रहितस्य मम दर्शनमफलसाधनं न भवति किन्तु सफलमेवेत्यर्थः ॥ २१ ॥

इतीत्थमुक्त्वा आदिदेवो ब्रह्मा अमोघराधसा अमोघप्रभावेन दिव्येन कमण्डलुजलेन पिपीलिकैर्भक्षितमङ्गं यस्य तं दैत्यं औक्षत्प्रोक्षितवान् ॥ २२ ॥

ततः प्रोक्षणानन्तरं कीचकाच्छन्नवल्मीकादेधसः काष्ठनिचयाद्विभासुरग्निरिव उत्थितः वल्मीकं भित्वा बहिर्निर्गत इत्यर्थः । कथंभूतः सहसा प्राणबलेन ओजसा इन्द्रियबलेन बलेन देहबलेन चान्वितः तथा सर्वैरवयवैः पाणिपादादिभिः सम्पन्नो युक्तः वज्रवत्संहननमङ्गदार्ढ्यं यस्य स युवा यौवनयुक्तश्च तप्तस्य हेम्न इवाभा यस्य सः तप्तसुवर्णतुल्यकान्तिरित्यर्थः ॥ २३ ॥

एवंविधः उत्थायाम्बरे हंसवाहनमवस्थितमधिष्ठितं देवं ब्रह्माणं निरीक्ष्य स दैत्यस्तस्य ब्रह्मणो दर्शनेन महानुत्सवः सन्तोषो यस्य तादृशः शिरसा भूमौ ननाम ॥ २४ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

हृदो हृदयस्य सारं दार्ढ्यं दंशाः सूचीमुखाः शूकाः ते तव अस्थिष्वेव शेरते इति यस्मात्तस्मादद्भुतम् ॥ १८ ॥

इतोऽप्यद्भुतमित्याह—नैतदिति । निरम्बुर्जलपानरहितः "निर्निश्चयनिषेधयोः" इत्यमरः "क्षुरेव तु पुनर्वै वेत्यवधारणवाचकाः" इत्यभिधानाद्वा इत्यनेन दिव्यशतसमास्वेकापि किञ्चिदूना न भवतीत्याह ॥ १९ ॥

इनः समर्थः तेन व्यवसायेन अमनस्विभिर्मनोबलरहितैः दुष्करेण पुरुषप्रयत्नेन जितो वशीकृतः "पराभूतं वशस्थञ्च जितमित्युच्यते बुधैः" इति शब्दनिर्णये ॥ २० ॥

ददामि दास्यामीति इच्छामि मर्त्यस्य मरणशीलमनुष्यशरीरं प्राप्तस्य ते तव अमर्त्यस्य जरामरणशून्यस्य देवस्य मम दर्शनमभूद्यस्मात्तस्मान्निष्फलं नैव ॥ २१ ॥

आदिर्हरेर्भवो जन्म यस्य स तथा विष्णुभूरित्यर्थः । सर्वस्यादौ भवतीति वा औक्षत् प्रोक्षितवान् दिव्यत्वमाह, अमोघेति ॥ २२ ॥

एधसः इन्धनात् ॥ २३ ॥ २४ ॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

उत्तिष्ठेत्यनेन पूर्वं मूर्द्धस्थितस्य पश्चादुपवेशः सूचितः ॥ १७ ॥

उत्थाय प्राञ्जलिः प्रह्व ईक्षमाणो दृशा विभुम्।
हर्षाश्रुपुलकोद्भेदो गिरा गद्गदयाऽगृणात्॥ २५॥

हिरण्यकशिपुरुवाच।

कल्पान्ते कालसृष्टेन योऽन्धेन तमसा वृतम्।
अभिव्यनक् जगदिदं स्वयञ्ज्योतिः स्वरोचिषा॥ २६॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

दंशभक्षितत्वं पूर्वं पिपीलिकाभक्षितत्वं पश्चादिति ज्ञेयम्॥
॥ १८—३२॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी।

दृत्सारं धैर्यम्॥ १८॥ १९॥ २०॥

असुरजातित्वेऽपि मरणधर्मवरवान्मर्त्यस्य ते मत्येन त्वया॥२१॥

पिपीलिकैरिति। पिपीलिकादंशादिभिरित्यर्थः। आदिभवो ब्रह्मा अमोघमव्यर्थं राधः संसिद्धिर्यतस्तेन औक्षत प्रोक्षितवान्॥ २२॥

वज्रस्येव संहननमङ्गस्य दार्ढ्यं यस्य सः॥ २३॥ २४॥ २५॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

दृत्सारं धैर्यं दंशैर्भक्षितो देहो यस्य तस्य प्राणा अस्थिषु शेरते तिष्ठन्ति॥ १८॥

निरम्बु निर्जलं यथा स्यात्तथा दिव्यसमाः शतं मानेन शतं सम्वत्सरान् प्राणान् को धारयेन्न कोऽपीत्यर्थः॥ १९॥

मनस्विनां मनस्विभिर्दुष्करेण ते तव व्यवसायेन तपोऽर्थसङ्कल्पेनैव अहं जितः तपोनिष्ठेन भवता तु सुतरां जितोऽस्मीत्यन्वयः॥ २०॥

आशिषः वाञ्छितानर्थान्॥ २१॥

दक्षादिप्रजापतिभ्यः आदौ भवो जन्म यस्य सः अमोघराधसा सफलप्रभावेन औक्षितवान्॥ २२॥

राधसो विभावसुरिव तस्मात्कीचकवल्मीकात् सह ओजोबलान्वितः मनइन्द्रियदेहशक्तियुक्तः वज्रस्येव संहननमङ्गदार्ढ्यं यस्य स उत्थितः॥ २३॥

तस्य दर्शनेन महोत्सवो यस्य सः॥ २४॥

---

भाषा टीका।

ब्रह्मोवाच।

ब्रह्माजी बोले कि हे काश्यप! हे हिरण्यकश्यप! तुम तपसे सिद्ध हुए तुमारा मंगल हो तुम उठो २ हम वरदान देने वाले प्राप्त हुए जो तुमारा इच्छित वर है उसे मागलो॥ १७॥

हमने तुमारा बड़ा अद्भुत धैर्य देखा देखो तुमारे देह को वन मक्षिकाओं ने भक्षण कर लिया तुमारे प्राण तो अस्थियों मे सोरहे हैं॥ १८॥

ऐसा पूर्व ऋषियो ने भी नहीं किया और भी कोई लोग न कर सकेंगे॥ भला बिना अन्न के देवताओं के सौ वर्ष तक कौन प्राण धारण करेगा॥ १९॥

हे दितिनन्दन! मनस्वियों से भी दुष्कर तुमारे इस व्यवसाय से और तप मे निष्ठावाले ऐसे तुम से हम जित हुए अर्थात् हार चुके॥ २०॥

हे असुर श्रेष्ठ! इसी से हम तुमारी सब कामनाओं को देते है तुमारे सदृश मरण धर्म वाले को हम सदृश देवताओं का दर्शन विफल नहीं हुआ करता है॥ २१॥

नारद उवाच

नारदजी बोले, कि—श्रीब्रह्माजी ने ऐसे कहकर पिपीलिकाओंने भक्षण किया अंग जिनका ऐसे हिरण्यकश्यप के शरीरको अमोघ प्रभाव वाले दिव्य कमंडलु के जल से प्रोक्षण किया॥२२॥

वह हिरण्यकशिपु बांसो के वल्मीक से सह ओज बल से युक्त अवयवो से संपन्न वज्र सदृश पुष्टांग युवा सुवर्ण सदृश कांति वाला ऐसा इंधन से जैसे अग्नि इस प्रकार उठकर खड़ा हुआ २३

वह हिरण्यकशिपु आकाश में स्थित हंस वाहन श्रीब्रह्माजी को देखकर उनके देखने से बड़ा उत्सव युक्त होकर शिर से भूमि में प्रणाम करता हुआ॥ २४॥

---

श्रीधरस्वामिकृतभावार्थदीपिका।

हर्षेणाश्रूणि पुलकोद्भेदश्च यस्य सः॥ २५॥

अन्धेन निबिडेन तत्र हेतुः। कालसृष्टेन प्रकृतिगुणक्षोभेण न तु ध्वान्तेन तमसा वृतमिदं जगद्योऽभिव्यनगभिव्यक्तम् अकरोत् यश्च त्रिगुणेनाऽऽत्मना इदं जगत्सृजत्यवति पालयति लुम्पति संहरति च तस्मै रजःसत्त्वतमसां धाम्ने आश्रयाय महते पराय परमेश्वराय नम इति द्वयोरन्वयः॥ २६॥ २७॥

आत्मना त्रिवृता चेदं सृजत्यवति लुम्पति ।
रजःसत्त्वतमोधाम्ने पराय महते नमः ॥ २७ ॥

नम आद्याय बीजाय ज्ञानविज्ञानमूर्तये ।
प्राणेन्द्रियमनोबुद्धिविकारैर्व्यक्तिमीयुषे ॥ २८ ॥

त्वमीशिषे जगतस्तस्थुषश्च प्राणेन मुख्येन पतिः प्रजानाम् ।
चित्तस्य चित्तेर्मनइन्द्रियाणां पतिर्महान् भूतगुणाशयेशः ॥ २९ ॥

त्वं सप्ततन्तून्वितनोषि तन्वा त्रय्या चातुर्होत्रकविद्यया च ।
त्वमेक आत्मात्मवतामनादिरनन्तपारः कविरन्तरात्मा ॥ ३० ॥

त्वमेव कालो निमिषो जनानामायुर्लवाद्यावयवैः क्षिणोषि ।
कूटस्थ आत्मा परमेष्ठ्यजो महांस्त्वं जीवलोकस्य च जीव आत्मा ॥ ३१ ॥

त्वत्तः परं नापरमप्यनेजदेजच्च किञ्चिद्व्यतिरिक्तमस्ति ।
विद्याः कलास्ते तनवश्च सर्वा हिरण्यगर्भोऽसि बृहत्त्रिपृष्ठः ॥ ३२ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

अत्र च स्वप्रकाशत्वं जगत्प्रकाशकत्वं तत्कारणत्वं तत्सृष्ट्यादिकर्तृत्वं परमेश्वरत्वं महत्त्वञ्चेति षड्विधत्वमुक्तम्. तदेव प्रपञ्चयन्नमस्करोति—नमइति चतुर्भिः । बीजाय कारणाय तत्र हेतुः आद्याय ज्ञानं ज्ञप्तिर्विज्ञानं विषयाकारं ज्ञानं मूर्तिर्यस्य तस्मै अनेन स्वप्रकाशत्वं जगत्प्रकाशकत्वञ्च दर्शितम्. बीजायेति निमित्तत्वमुक्तम्. उपादानत्वमाह, प्राणादयो ये विकारास्तैरूपैर्व्यक्तिं कार्याकारमीयुषे प्राप्तवते ॥ २८ ॥

एवमात्मना त्रिवृता चेत्यनेनोक्तं कारणत्वं द्वेधा दर्शितम् महत्त्वमीश्वरत्वं चाह--त्वमिति । त्वमेव जगतो जङ्गमस्य तस्थुषः स्थावरस्य च ईशिषे नियन्ताभवसि केन मुख्येन प्राणेन सूत्रात्मरूपेण अतस्त्वं प्रजानांपतिः तासां चित्तस्य चित्तेश्च तत्परिणामभूतायाश्चेतनाया मनसश्च तन्नियम्यानामिन्द्रियाणाञ्च पतिः अतस्त्वमेव महान् भूतानामाकाशादीनां तद्गुणानां शब्दादिविषयाणामाशयानां तद्वासनानामीशश्च एतेनैव स्रष्टृत्वम् दर्शितम् ॥ २९ ॥

इदानीं यज्ञप्रवर्तकत्वेनांतर्यामित्वेन जगत्पालकत्वमाह—त्वमेव सप्ततंतूनग्निष्टोमादियज्ञान्विस्तारयसि, कथम् ? त्रय्या तन्वा वेदत्रयरूपेण कथम्भूतया चत्वारो होतारो यत्र तच्चातुर्होत्रकं कर्म तद्विषयतया विद्यया आत्मवतां प्राणिनामात्मभूतस्त्वमेवान्तरात्मा चान्तर्यामी कुतः यतः कविः सर्वज्ञः तत्कुतः एकोऽखण्डः तत्र हेतुः अनादिरनन्तपारश्चेति नास्त्यन्तः कालतः पारश्च देशतो यस्य सः ॥ ३० ॥

कालरूपेण संहर्तृत्वमाह-त्वमेवेति । लवाद्यैः कालावयवैः क्षिणोषि क्षपयसि एवं सृष्ट्यादिकर्तृत्वेऽपि निर्विकारत्वमेवाह, कूटस्थइति. तत्र हेतवः आत्मा ज्ञानरूपः परमेष्ठी परमेश्वरः अजो जन्मशून्यः महान् अपरिच्छिन्नः किञ्च जीवलोकएव-कर्मवशाज्जन्मादिभिर्विक्रियते त्वन्तु तस्य जीवो जीवनहेतुः यतस्तस्याऽऽत्मा नियन्ता ॥ ३१ ॥

तत्कुतस्तत्राह-त्वत्तइति । त्वत्तोऽव्यतिरिक्तं यदि किञ्चिद्भवेत्तर्हि तस्मादेव जन्मादिविकारो नियन्तृत्वादिकं वा भवेत्तत्तु नास्तीत्याह, परं कारणमपरं कार्यम् तत्र चैजज्जङ्गममनेजत्स्थावरञ्च त्वद्व्यतिरिक्तं नास्ति. ननु, मद्बोधकशास्त्रं व्यतिरिक्तमस्तीतिचेन्न यतो विद्या वेदोपवेदादिविद्यास्थानानि कलाश्च तदङ्गानि तवैव तनवो ननु त्वद्व्यतिरिक्ताः तत्कुतः यतस्त्वं बृहद्ब्रह्मैवासि तदपि कुतस्तत्राह हिरण्मयरूपं ब्रह्माण्डं गर्भे यस्य सः त्रिपृष्ठस्त्रिगुणात्मकस्य प्रधानस्य पृष्ठे परतः स्थितः "अक्षरात्परतः परः" इत्यादि श्रुतेः ॥ ३२ ॥

---

श्रीमद्वीरराघवाचार्य्यकृतभागवतचन्द्रचन्द्रिका ।

तत उत्थाय प्राञ्जलिः बद्धाञ्जलिः प्रह्वः नम्रः दृशा चक्षुषा विभुं ब्रह्माणं निरीक्षमाणः हर्षणाश्रूणि पुलकोद्भेदो रोमोद्गमश्च यस्य तादृशः गद्गदया गिरा अगृणात् अस्तौषीत् ॥ २५ ॥

तदेवाह कल्पान्त इत्यादिनवभिः । तामसत्वाद्ब्रह्माणमेव सर्वकारणं सर्वेश्वरञ्च मत्वा स्तौति. यद्वा, परमेश्वरधर्मारोपेण स्तौति-कल्पान्त इति । कल्पान्ते दैनं दिनकल्पान्ते कालेन निमित्तेन सृष्टेनान्धेन तमसा आवृतमिदं जगत्पुनर्यः स्वयंज्योतिः

व्यक्तं विभो ! स्थूलमिदं शरीरं येनेन्द्रियप्राणमनोगुणांस्त्वम् ।
भुङ्क्षे स्थितो धामनि पारमेष्ठ्ये अव्यक्त आत्मा पुरुषः पुराणः ॥ ३३ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

प्रह्वः नम्रः हर्षेणाश्रूणि पुलकोद्भेदो रोमाञ्चश्च यस्य सः अगृणात् अस्तौषीत् ॥ २५ ॥

चतुराननं भगवद्दृशं भगवत्तया स्तौति—कल्पांते इति नवभिः। किञ्च चतुर्मुख एव परमात्मेतिस्वीकारे "सर्वार्थान्विपरीतांश्च बुद्धिः सा पार्थ तामसी" इति भगवदुक्ता तामसीबुद्धिरेव हेतुः अन्धेनातिनिबिडेन तमसावृतमिदं जगत् यः स्वयंज्योतिः स्वप्रकाशः स्वरोचिषाऽव्यनक् प्रादुश्चकार ॥ २६ ॥

त्रीन् गुणान् वृणोति नियम्यतया स्वीकारोतीति त्रिवृत् तेन सृजत्यवति लुंपति च रज आदिधाम्ने आश्रयाय मन इति द्वयोरन्वयः ॥ २७ ॥

आद्याय बीजाय सर्वकारणकारणाय ज्ञानं शास्त्रीयं विज्ञानं तदनुरूपोऽनुभवः तेन मूर्तिर्यस्य तदुभयगम्यायेत्यर्थः। प्राणाश्चेन्द्रियाणि च मनश्च बुद्धिश्च विकाराः पृथिव्यादिभूतानि च तैर्व्यक्ति विराड्रूपमीयुषे नमः ॥ २८ ॥

प्राणेन मुख्येन सर्वेन्द्रियनायकेन सहितस्य जगतो जङ्गमस्य तस्थुषः स्थावरस्य च त्वमेव ईशिषे ईशिता नियन्ता भवसि प्रजानां पतिः चित्तस्य चित्तेर्बुद्धेर्मनसः इन्द्रियाणाञ्च पतिः भूतानां खादीनां गुणानां शब्दादीनामाशयस्याहङ्कारस्य च ईशः अत एव महान् सर्वश्रेष्ठः ॥ २९ ॥

त्वमेव तनूंस्तनून् तन्यन्ते विस्तार्यंते इतितन्तवस्तान् अग्निष्टोमादियज्ञान् चातुर्होत्रकविद्यया चत्वारोहोतारः होता उद्गाता अध्वर्युः ब्रह्मेति यत्र तच्चातुर्होत्रकं कर्म तत्प्रकाशकया विद्यया त्रय्या वेदत्रयरूपया तन्वा वितनोषि आत्मवतां देहवतां त्वमेक आत्मा आधारः अन्तरात्मा अन्तर्यामी च अनादिः कारणशून्यः नास्ति अन्तः कालतः पारो देशतो यस्य सः यद्वा अनन्तो निरवधिकस्वरूपः पारोऽन्येषामवधिभूतः स चासौ सचेत्यर्थः। कविः क्रान्तदर्शी सर्वविदित्यर्थः ॥ ३० ॥

कालादीनां परमात्मशक्तित्वेन तदनतिरिक्तं वदन् परमात्मनः सर्वात्मत्वं दर्शयति—त्वमेव काल इत्यादिना। त्वमेव लवाद्यवयवैर्जनानामायुः क्षिणोषि अतः कालोऽसि स्वयं तु कूटस्थः अक्षीणः आत्मा परमात्मासि यतो अजो कर्मनिमित्तजन्मशून्यः परमेष्ठी परमलोकस्थः अत एव महान् सर्वपूज्यः जीवलोकस्य बद्धजीवानां लोकस्य कार्यकारणरूपस्याचेतनपदार्थस्य आत्मा आश्रयः चकाराज्जीवलोकश्च त्वमेवासि जीवःक्षेत्रज्ञश्च त्वमेवासि ॥ ३१ ॥

त्वत्तः परं कारणं प्रकृत्यादिरूपमपरं कार्यं महदादिरूपमेजच्चेतनमनेजदचेतनञ्च व्यतिरिक्तं नास्ति भवतः सर्वात्मत्वात् विद्या वेदाद्याः कलास्तदङ्गानि ते तनवः तन्यन्ते विस्तार्यन्ते इति तनवः त्वन्निश्वासादिरूपा इत्यर्थः। हिरण्यं ब्रह्माण्डं गर्भस्यान्तः प्रविष्टं यस्य सोसि बृहत् विपुलस्वरूपोसि एवंभूतोपि त्रयाणां लोकानां पृष्ठे उपरि सत्यलोके स्थितः मादृशानां हितायेति शेषः ॥ ३२ ॥

---

भाषा टीका।

हिरण्यकशिपु भी उठकर नम्र हो हाथ जोड़ दृष्टि से ब्रह्माजी को देखता हुआ मारे हर्ष के अश्रु और रोमांच वाला गद्गद वाणी से स्तुति करने लगा ॥ २५ ॥

हिरण्यकशिपुरुवाच ॥

हिरण्यकशिपु बोला, कि,—कल्पके अंत में काल से सृष्ट ऐसे अंधतम से ढके हुए इस जगत को जिस स्वयं ज्योति ने अपनी कांति से प्रकाशित किया ॥ २६ ॥

और जो अपने त्रिगुण आत्मा से इस जगतको सृजता पालता और संहार करता है ऐसे त्रिगुण धामा परमेश्वर को नमस्कार है ॥ २७ ॥

आद्यबीज रूप ज्ञान विज्ञान मूर्ति और इन्द्रिय मन बुद्धि के विकारों से व्यक्ति को प्राप्त होने वाले ऐसे आपको नमः ॥ २८ ॥

आपही मुख्य प्राण रूप से स्थावर और जंगमो के नियंता हौ। और प्रजाओं के पति हौ, तथा चित्त चेतना मन और इन्द्रियों के पति हौ, महान् हौ, भूतगुण और आशय ( अंतः करण ) के ईश हौ ॥ २९ ॥

आपही ( चातुर्होत्रक विद्या ) अर्थात् चार हवन करने वाले जिसमें ऐसे कर्म को प्रति पादन करने वाली त्रयी (वेदत्रयी) रूप तनु से अग्निष्टोमादियज्ञों का विस्तार करते है ॥ और आपही प्राणियों के अंतर्यामी आत्मा है. क्योंकि ? आप सर्वज्ञ होकर आद्यन्तसे रहित है ॥ ३० ॥

आपही बिना निमेष वाले काल हौ जनों की आयु को क्षणालव आदि अवयवो से क्षीण करते हौ। आप कूटस्थ आत्मा परमेष्ठी अज महान् और जीवो के जीव और नियंता हौ ॥ ३१ ॥

जो कुछ पर अपर स्थावर जंगम जगत है सो आप से व्यतिरिक्त कुछ भी नहीं, सर्व विद्या और कला आपका तनू हैं आप हिरण्यगर्भ हौ, और त्रिगुणात्मक ब्रह्मांड के ऊपर पृष्ठ पर स्थित हौ ॥ ३२ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका।

ननु, ब्रह्माण्डशरीरस्य जीवस्य मम कुतो ब्रह्मत्वं कुतोवा ब्रह्माण्डगर्भत्वादि ? तत्राह,व्यक्तं कार्यमिदं तव शरीरं व्यक्तं सत्यमिति वा येन शरीरेण त्वमिन्द्रियप्राणमनसां गुणान्विषयान्भुङ्क्षे किञ्च पारमेष्ठ्ये पारमैश्वर्ये धामनि स्वरूपे स्थित एव भुंक्षे नत्वस्मदादिवत्स्वरूपातिरोधानेन अतस्त्वमव्यक्त आत्मा निरूपाधिब्रह्मैव पुराणः पुरुषश्चेत्यर्थः ॥ ३३ ॥

अनन्ताव्यक्तरूपेण येनेदमखिलं ततम् ।
चिदचिच्छक्तियुक्ताय तस्मै भगवते नमः ॥ ३४ ॥
यदि दास्यस्यभिमतान् वरान्मे वरदोत्तम ! ।
भूतेभ्यस्त्वद्विसृष्टेभ्यो मृत्युर्माभून्मम प्रभो ! ॥ ३५ ॥
नान्तर्बहिर्दिवा नक्तमन्यस्मादपि चायुधैः ।
न भूमौ नाम्बरे मृत्युर्न नरैर्न मृगैरपि ॥ ३६ ॥
व्यसुभिर्वाऽसुमद्भिर्वा सुरासुरमहोरगैः ।
अप्रतिद्वन्द्वतां युद्धे ऐकपत्यं च देहिनाम् ॥ ३७ ॥
सर्वेषां लोकपालानां महिमानं यथात्मनः ।
तपोयोगप्रभावाणां यन्न रिष्यति कर्हिचित् ॥ ३८ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां वैयासिक्यां
सप्तमस्कन्धे हिरण्यकशिपोर्वरयाचनं नाम
तृतीयोऽध्यायः ॥ ३ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

ननु, ब्रह्मत्वे पुराणपुरुषत्वं कथमेकस्य ? तत्राह-अनन्तेति । हे अनन्त, येन त्वया व्यक्तेन मनोवचनागोचरेण रूपेणेदं विश्वं ततं व्याप्तं तस्मै तुभ्यं भगवते अचिन्त्यैश्वर्याय नमः भगवत्त्वे हेतुः चिदचिच्छक्तियुक्ताय चिच्छक्तिर्विद्या अचिच्छक्तिर्माया ताभ्यां युक्तायेति ॥ ३४ ॥ ३५ ॥

अन्यस्मात्त्वत्सृष्टव्यतिरिक्तादपि आयुधैर्मृत्युर्माभूत् ॥ ३६ ॥

व्यसुभिरप्राणैः असुमद्भिः सप्राणैः यथा आत्मनस्तवास्ति महिमा तथाऽप्रतिद्वन्द्वतादिकं देहीतिशेषः ॥ ३७ ॥

तपसा योगेन च प्रभावो येषां तेषां यदणिमाद्यैश्वर्यं न रिष्यति न नश्यति तच्च देहीत्यर्थः ॥ ३८ ॥

इति श्रीमद्भागवते महापुराणे सप्तमस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिकायाम्
तृतीयोऽध्यायः ॥ ३ ॥

———

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

यदुक्तम् कृत्स्नस्य तच्छरीरत्वं तस्य सर्वान्तरात्मत्वञ्च तदुपसंहरन्नमस्करोति–व्यक्तमिति द्वाभ्याम् । हे विभो देव ! स्थूलं चिदचिदात्मकमिदं जगत्तव व्यक्तं शरीरं, स्थूलशरीरमित्यर्थः । तर्हि किं सूक्ष्मं शरीरम् ? तत्राह--अव्यक्तः प्राकृतैरिन्द्रियैरगम्यः आत्मा सर्वान्तरात्मा जगत्कारणपुरुषः एवंविधस्त्वं येन शरीरेण चतुर्मुखशरीरेण पारमेष्ठ्ये स्थाने स्थितः इन्द्रियादीनां गुणान्विषयान् शब्दादीन् भुङ्क्ते, तत्स्थूलमिति शेषः । येन शरीरेण जीवानामिन्द्रियादीन् सृष्ट्वा तद्व्यापारैर्लीलारसत्वेन भुङ्क्ते तदनुभवसि तत्सूक्ष्मं शरीरमित्यर्थः ॥ ३३ ॥

अनन्तं त्रिविधपरिच्छेदरहितमतीन्द्रियं यत्स्वरूपं तदनन्ताव्यक्तरूपं येनानन्ताव्यक्तरूपेण इदमखिलं जगदन्तरात्मतया ततं व्याप्तं तस्मै चिदचिच्छक्तिभ्यां कार्योपयुक्तापृथक्सिद्धविशेषेण भूताभ्यां चेतनाचेतनाभ्यां युक्ताय, तच्छरीरकायेत्यर्थः । भगवते पूर्णषाड्गुण्याय तुभ्यं नमः ॥ ३४ ॥

एवं परमात्मत्वाभिमानेन तद्धर्मारोपेण वा तद्गुणयुक्तत्वेन परम् आवेशावताररूपं ब्रह्माणं स्तुत्वाऽथ वरान्वृणुते--यदीति । हे वरदश्रेष्ठ ! यदि ममाभिमतान् वरान्दास्यसि तर्हि तावत्त्वया सृष्टेभ्यो भूतेभ्यः सकाशान्मम मृत्युर्मरणं माभूत् एवमनुगृहाणेत्यर्थः । विष्णोरपि चतुर्मुखसृष्टत्वाभिमानेन त्वद्विसृष्टेभ्य इत्युक्तम् ॥ ३५ ॥

तथान्तः गृहादीनामन्तः तेभ्यो बहिः दिवा अह्नि नक्तं रात्रौ अन्यस्मात्त्वत्सृष्टव्यतिरिक्तात् त्वत्तोऽप्यायुधैरपि भूमौ पृथिव्याम् अम्बरे चाकाशे मृगैर्नरैश्च ॥ ३६ ॥

व्यसुभिरप्राणैः असुमद्भिः प्राणिभिश्च सुरैरसुरैर्महोरगैर्महासर्पैश्च मम मृत्युर्माभूत् अयमेको वरः । वरान्तरञ्च याचते—अप्रतिद्वन्द्वतामिति । युद्धे अप्रतिद्वन्द्वताम् अप्रतिपक्षताम्. अयं द्वितीयः । देहिनां प्रजानामैकपत्यमेकाधिपतित्वम्. अयं तृतीयो वरः ॥ ३७ ॥

## श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका

तथा आत्मनो मम सर्वेषां लोकपालानाम् इन्द्रादीनां महिमानं माह स्वयम्. अयं चतुर्थः । किञ्च तपसा योगेन च प्रभावो येषां तेषां योगिनां यश्च रिष्यति न नङ्क्ष्यति अणिमाद्यैश्वर्यं तदपि देहीति शेषः । पञ्चमोऽयं वरः ॥ ॥ ३८ ॥

इति श्रीमद्भागवते महापुराणे सप्तमस्कन्धे
श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायाम्
तृतीयोऽध्यायः ॥ ३ ॥

---

## श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

ज्ञानानन्दादिलक्षणगुणमूर्तिं निरूप्याधुनाऽव्यक्तमूर्तिं निरूपयति—व्यक्तमिति । हिरण्यगर्भ इत्यनेन ब्रह्माण्डस्य शरीरकथाऽधीयत्वं सूचितम्, तत्र तिष्ठन् हरिः सुखलक्षणान् गुणान् भुङ्क्ते न तु देवदत्तवद् दुःखलक्षणानित्यतो वाह- व्यक्तमिति । पारमेष्ठ्ये धामनि वैकुण्ठादिस्थाने सत्यलोके वा स्वरूपभूते महिम्नि वा स्थितः पुराणः पुरुषस्त्वं येन शरीरेणेन्द्रियप्राणमनसां गुणान्विषयानेव भुङ्क्ते न तु दुःखलक्षणान्,कुत एतत् ? अत्राहात्मेति "एष ह्यानन्दमादत्ते त आत्मेति" इतिश्रुतेः । आनन्दस्वभावत्वात्. तर्हि तद्विषयज्ञानं कथं नोत्पद्यते ? इति तत्राह—अव्यक्त इति ।"तदव्यक्तमाहहि" इति सूत्रात्. हे विभो, तदिदं व्यक्तं ब्रह्माण्डलक्षणं तव स्थूलशरीरमाचक्षत इति शेषः । यद्वाऽनेन ब्रह्माणमेव तद्योग्यैर्विशेषणैः स्तौति. तथाहि, पुरं शरीरमश्नातीति पुराणः आणेरत्यभिधानादात्मा चतुर्मुखः अवतारेण व्यक्तिर्नारीत्यव्यक्तः जगत्सृष्ट्याद्यैश्वर्यलक्षणान् गुणान् इनरत्परपदम् ॥ ३३ ॥

कथमपरञ्जङ्गमाण्डं जगत्त्वद्व्यतिरिक्तं नास्ति त्वया व्याप्तत्वादिस्वर्थेनाऽव्याप्तिरुक्ता. तदिदं कीदृशेन रूपेण व्याप्तमिति मन्दाशङ्कापरिहाराय स्पष्टमाह—अनन्तेति । अनेन परिच्छिन्नस्य सर्वस्यापरिच्छिन्नाद्वयेवाहर्तुं युक्तिविरुद्धमित्युक्तं भवति "तम आसीत्तमसा गूढमग्रे" इति श्रुतेः । प्रकृत्या व्याप्तत्वप्रतीतेः कथं हरेरेवेति शिष्योक्तिर्घटते ? इति । तत्राह—चिदचिदिति । शक्तिपदस्याद्विरावृत्तिः कर्तव्या " शक्यस्याच्छक्तयो भार्याः " इति वचनात् उभयविधा या शक्तिः प्रकृतिस्तस्याः या कार्येषु शक्तिस्तस्या अपि भगवच्छक्त्यविनाभूतत्वात्तद्व्याप्तिस्तन्नियतेत्यत एव युक्तायेत्युक्तं न चानेन गुणभूतत्वं हरेरिति वाच्यम् 'शिष्येणोपाध्याय आगतः' इत्यत्रोपाध्यायप्राधान्यवदुपपत्तेः । ननु, लोके प्रतिवस्त्वेकनियतत्वादर्शनात् चिदचिदात्मकप्रपञ्चे कस्यचित्तदनियतत्वलक्षणवत्त्वानन्त्येन सर्वव्याप्तत्वं हरेः कथं युज्यते ? इत्यतो वाह—चिदचिदिति, " द्रव्यं कर्म च कालश्च" इत्यादेः परमाणुमात्रवस्तुनोऽपि भगवदनियतत्वासम्भवात् एतादृशी शक्तिरस्यास्तीति कुत इत्यत उक्तं भगवत इति उक्तार्थपदम् "भूयिष्ठां ते नम उक्तिं विधेम" इति वाक्यार्थं स्मरता हिरण्यकेन नम इत्युक्तं तदुक्तेः फलाधिकत्वात् ॥ ३४ ॥

किं बहुनोक्तेन त्वदभीष्टं वदेत्याशङ्कित आह—यदीति । विविधत्वेन सृष्टेभ्यः ॥ ३५ ॥

अन्यस्मादपि कालात् अथवा भावात् अवयवविशिष्टात् भूतेभ्य इत्युक्तेऽप्यन्येभ्यः किमित्यतो विशिनष्टि—न नरैरिति ॥ ३६ ॥

व्यसुभिर्विगतप्राणैः पाषाणादिभिः असुमद्भिर्ग्राहादिभिः ऐकपत्यं ऐकाधिपत्यम् ॥ ३७ ॥

महिमानं वृणे इति शेषः । आत्मनस्तव यो महिमा स यथा न रिष्यति न नश्यति तथा मम महिमाऽस्तु यो महिमा यथा कर्हिचित् न रिष्यति तथात्मनो मम महिमा न नश्यत्विति चेति ॥ ३८ ॥

इति श्रीमद्भागवते महापुराणे सप्तमस्कन्धे
श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम्
तृतीयोध्यायः ॥ ३ ॥

---

## श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

त्वत्त इत्यस्य टीकायां वेदोपवेदादीत्यादि व्याख्यानात्. विद्याः कला इति द्वन्द्वसमासः अतो विद्याः कलाश्चेति पाठो न सभ्य' ॥ ३२ ॥ ३३ ॥

अनन्तेत्यस्य टीका वैष्णवसिद्धान्तानुगता तत्र चिच्छक्तिः स्वरूपभूता अचिच्छक्तिर्मायेति ज्ञेयम् ॥ ३४ ॥

अमरत्ववरो न प्राप्यत इति छलेन तं वृणुते—यदीति । त्वद्विसृष्टेभ्यः साक्षात् त्वत्सृष्टेभ्यः ॥ ३५ ॥

अन्यस्मात् रुद्रप्रजापत्यादिसृष्टादित्यर्थः । ब्रह्मत उपर्यस्यामननात्. पुनः कर्तृगणं निषेधयति । न नरैरिति पादत्रयेण भगवतोऽप्राकृतप्राणत्वाद्व्यसुभिर्वासुमद्भिर्वेति तत्रैव सङ्गच्छते कर्तृकरणात् न चैतत्करणं निषेधपरम् अप्राणिभिः प्राणिभिर्वेत्युक्ते तस्यैव प्राप्तत्वात् । हन्तुर्जीवदेहसाम्येऽपि सप्राणभागान्निष्क्रान्तस्य कर्तनीयनखाग्रभागस्य त्यक्तप्राणत्वाच्च श्रीभगवति तु तन्निषेधकं श्रीरुक्मिण्यादिवाक्यं "त्वक्श्मश्रुरोमनखकेशपिनद्धमन्त." इत्यादिना प्राकृतानां निन्दयाऽप्राकृतानां तेषामानन्दरूपत्वं साधितम्. अत उक्तं वाराहे "न तस्य प्राकृता मूर्तिर्मेदोमज्जास्थिसम्भवा" इत्यादि ॥ ३६—३८ ॥

इति श्रीमद्भागवते महापुराणे सप्तमस्कन्धे श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे
तृतीयोऽध्यायः ॥ ३ ॥

---

## श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी।

व्यक्तं वैराजरूपं तव स्थूलं येन शरीरेण त्वमिन्द्रियप्राणमनसां गुणान् विषयान् भुंक्षे किन्तु पारमेष्ठ्ये परमैश्वर्ये धामनि स्वरूपे स्थित एव भुंक्षे न तु स्वरूपतिरोधानेन अतस्त्वमव्यक्तो ब्रह्मा आत्मा अन्तर्यामी पुराणपुरुषो भगवांश्च ॥ ३३ ॥

चिच्छक्तिरन्तरङ्गा स्वरूपभूता अचिच्छक्तिर्माया गुणमयी बहिरङ्गा ताभ्यां गुणातीतगुणमयलीलार्थं युक्ताय ॥ ३४ ॥

नन्वलमेतावत्या स्तुत्या वरांस्तावद्गृहाण तत्राह—यदीति ।

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

हिरण्यकशिपोराशयः यद्यहममृत्युर्भूयासमिति वरं याचिष्ये तदा वरोऽयमसंभव एव यतः कल्पान्ते वयं ब्रह्मादयोपि मरिष्याम एवेति मद्वरं प्रत्याख्यास्यत एव तस्मादेवं युक्त्या वरं वृणोमि यत् फलतोऽमरत्वमेव प्राप्तं भविष्यतीति त्वद्विसृष्टेभ्यः इति सर्वेषां भूतानां ब्रह्मसृष्टत्वादपरः कोऽवशिष्ट इति भावः॥ ३५॥

मृत्युः स्वतोपि सम्भवेदत आह—नांतर्बहिर्दिवा नक्तमिति। सर्वदेशकालनिषेधेन स्वाभाविको मृत्युर्वारितः साकारो वराहादिरूपो विष्णुर्ब्रह्मसृष्ट एव स तु निराकारस्सन् यदि चक्रायस्त्रं चालयेत्तर्हानर्थ इत्याशङ्क्याह—अन्यस्मादपि आयुधैर्न मृत्युः अन्तर्बहिःशब्दाभ्यां सर्वदेशस्य प्राप्तत्वेपि तयोः सम्बन्धिशब्दत्वेन प्रतियोगिविशेषोपस्थापकत्वेऽनर्थ इत्याशङ्क्य पुनर्देशं निषिध्यति न भूमाविलनेन सप्तपातालानाम् अम्बरे इत्यनेन सप्तस्वर्गाणां च निषेधः, पुनर्दक्षादिसृष्टभूतेभ्यो भयमाशङ्क्याह—न नरैरिति॥ ३६॥

सर्वजीवजातीनामुल्लेखनाऽशक्यत्वादाह—व्यसुभिः प्राणहीनैः असुमद्भिः प्राणान्वितैः॥ ३६॥

एवं वस्तुतोऽहममरएवास्मीति मत्वा वरान्तरं वृणोति अप्रतीति॥ ३७॥

यथा आत्मनस्तवास्ति तथा तपोयोगाभ्यां प्रभावो येषां तेषां यत् अणिमाद्यैश्वर्य्यं न रिष्यतिर्न नश्यति तच्च देहीति॥ ३८॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम्।
सप्तमे च तृतीयोऽयं सङ्गतः सङ्गतःसताम्॥ ३॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

पारमेष्ठ्ये धामनि सत्यलोके स्थितः येन स्थितिरूपेण हेतुना अव्यक्तः पुराणः पुरुषस्त्वम् व्यक्तं स्थूलमिदं शरीरं वैराजम् इन्द्रियप्राणमनसां गुणांश्च भुङ्क्षेऽनुभवसि॥ ३३॥

चिज्जीवरूपा अचित्कालादिरूपा ताभ्यां युक्ताय नमः॥ ३४॥

त्वद्विसृष्टेभ्यः त्वन्निर्मितेभ्यः॥ ३५॥

अन्यस्मात्वत्सदृशादपि॥ ३६॥

व्यसुभिः प्राणहीनैः असुमद्भिः सप्राणैः॥ ३७॥

लोकपालानां तपोयोगाभ्यां प्रभावो येषां तेषां मुनीनाञ्च आत्मनः स्वस्य च यत् येन लब्धेन कर्हिचिदपि न रिष्यति न हीयते, जन इति शेषः। तादृशं महिमानं देहि॥ ३८॥

इति श्रीमद्भागवते महापुराणे सप्तमस्कन्धे
श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे
तृतीयाध्यायार्थप्रकाशः॥ ३॥

---

भाषा टीका।

हे विभो! यह व्यक्त (कार्यरूप) आपका स्थूल शरीर है जिस शरीर से आप इन्द्रिय प्राण और मनके गुणों (विषयों) को पारमेष्ठ्य धाम में स्थित होकर भोगते हो, और आप साक्षात् अव्यक्त आत्मा पुराण पुरुष हो॥ ३३॥

अनंत अव्यक्त रूपसे जिन आप से यह सब जगत् व्याप्त हो रहा है चेतन अचेतन शक्ति युक्त उस परमात्मा भगवान को नमस्कार हो॥ ३४॥

हे वरदोत्तम! यदि आप मुझे अभीष्टवर देते हो तो हे प्रभो! तुम्हारे रचे हुए प्राणियों से मेरी मृत्यु न हो॥ ३५॥

और भीतर बाहर दिन में रात में और किसी से तथा आयुधों से, भूमि में आकाश में मनुष्यों से मृगों से भी मेरी मृत्यु न हो॥ ३६॥

बिना प्राण वालों से अथवा प्राणवालों से मृत्यु न होवे और देवता असुर और महोरगों से युद्ध में अप्रतिद्वंद्वता को प्राप्त होजाऊं अर्थात् इनसे न हारूं और प्राणि मात्र का एक पति होजाऊं॥ ३७॥

तप और योग से है प्रभाव जिनका ऐसे लोक पालों की जो महिमा और जो कभी किसी प्रकार नष्ट न हो ऐसी आपकी महिमा को भी दीजिये॥ ३८॥

इति श्रीमद्भागवत महापुराण सप्तमस्कन्ध
हिरण्यकश्यप वरयाचन
तृतीयाध्याय समाप्त॥ ३॥

---

इति श्रीमद्भागवते महापुराणे सप्तमस्कन्धे तृतीयोऽध्यायः॥ ३॥

## ॥ चतुर्थोऽध्यायः ॥

नारद उवाच ।

एवं वृतः शतधृतिर्हिरण्यकशिपोरथ ।
प्रादात्तत्तपसा प्रीतो वरांस्तस्य सुदुर्लभान् ॥ १ ॥

ब्रह्मोवाच ।

तातेमे दुर्लभाः पुंसां यान्वृणीषे वरान्मम ।
तथाऽपि वितराम्यङ्ग ! वरान् यदपि दुर्लभान् ॥ २ ॥
ततो जगाम भगवानमोघाऽनुग्रहो विभुः ।
पूजितोऽसुरवर्येण स्तूयमानः प्रजेश्वरैः ॥ ३ ॥
एवं लब्धवरो दैत्यो बिभ्रद्धेममयं वपुः ।
भगवत्यकरोद्द्वेषं भ्रातुर्वधमनुस्मरन् ॥ ४ ॥
स विजित्य दिशः सर्वा लोकांश्च त्रीन् महासुरः ।
देवासुरमनुष्येन्द्रान् गन्धर्वगरुडोरगान् ॥ ५ ॥
सिद्धचारणविद्याध्रानृषीन् पितृपतीन्मनून् ।
यक्षरक्षःपिशाचेशान्प्रेतभूतपतीनथ ॥ ६ ॥
सर्वसत्त्वपतीन् जित्वा वशमानीय विश्वजित् ।
जहार लोकपालानां स्थानानि सह तेजसा ॥ ७ ॥
देवोद्यानश्रिया जुष्टमध्यास्ते स्म त्रिविष्टपम् ।
महेन्द्रभवनं साक्षान्निर्मितं विश्वकर्मणा ।
त्रैलोक्यलक्ष्म्यायतनमध्युवासाखिलर्द्धिमत् ॥ ८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

चतुर्थे तु वरॉल्लब्ध्वा विजित्याखिललोकपान् ।
विष्णुद्वेषेण तान्सर्वान् दैत्येन्द्रः समपीडयत् ॥ १ ॥

शतधृतिर्ब्रह्मा ॥ १ ॥
मम मत्तः यदपि यद्यपीमे दुर्लभाः ॥ २ ॥
अमोघोऽनुग्रहो यस्य प्रजेश्वरैर्मरीच्यादिभिः ॥ ३ ॥
अद्भुतं तपस्तप्तं तदाह-एवमित्यादिना ॥ ४—६ ॥
सर्वेषां सत्त्वानां प्राणिजातानां ये ये पतयस्तान् ॥ ७ ॥
त्रिविष्टपं स्वर्गमध्यास्ते स्माधिष्ठितवान् तत्र स्वर्गेऽपि महेन्द्र-भवनमध्युवासाधिवसति स्म ॥८॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

एवं दैत्येन वृतान् वरान् ददौ ब्रह्मेत्याह भगवान्नारदः-एवमिति ।

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

एवमित्थं वृतो याचितः शतधृतिर्ब्रह्मा हिरण्यकशिपोस्तपसा तोषितः तस्य दुर्लभान्वरान् प्रादात् ॥ १ ॥

इत्येदमाह ब्रह्मा—हे तात ! मम मत्तो यान्वरान् वृणीषे ते इमे वराः पुंसो यद्यपि दुर्लभाः तथापि दुर्लभानपि तान्वरान् अङ्ग हे हिरण्यकशिपो ! तुभ्यं वितरामि वर्त्तमानसामीप्ये लट् दत्तवानस्मीत्यर्थः ॥ २ ॥

एवमुक्त्वा अमोघः सत्योऽनुग्रहो यस्य स विभुर्भगवान् ब्रह्मा असुरवर्येण पूजितः प्रजेश्वरैर्भृगुदक्षाद्यैः स्तूयमानः स्वस्थानं जगाम ॥ ३ ॥

एवं लब्ध्वा वरा येन स दैत्यो हिरण्यवत्प्रकाशवपुर्हुलं देहं बिभ्राणो भ्रातुर्हिरण्याक्षस्य वधं भगवत्कृतं स्मरन् भागवतद्वेषसहितं भगवति द्वेषमकरोत् ॥ ४ ॥

तदेव प्रपञ्चयितुमुपोद्घातमाह--स इत्यादिना । स महासुरो हिरण्यकशिपुस्त्रीँल्लोकान् सर्वा दिशश्च विजित्य तथा देवादीन् सर्वसत्त्वपतीन्सर्वभूताध्यक्षांश्च जित्वा वशमानीय विश्वजिद्बभूव लोकपालानां तेजसा सह स्थानानि जहारापहृतवान् ॥ ५—७ ॥

देवोद्यानञ्च जहारेत्यनुषङ्गः श्रिया सर्वसमृद्ध्या जुष्टं युक्तं त्रिविष्टपं स्वर्गमध्यास्तेस्म अधिष्ठितवान् "अधिशीङ्स्थासां कर्म" इति कर्मत्वम्. विश्वकर्मणा निर्मितं त्रैलोक्यलक्ष्म्या आयतनमाश्रयं भोग्यभोगोपकरणादिसर्वसमृद्धिमन्महेन्द्रस्य भवनं साक्षाद्ध्युवास अध्युषितवान्॥ ८ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

वरदानादिना सम्भूतं लवणाब्धिजलवृद्धिह्रासवत् क्षयिकं भगवद्भक्तैश्वर्यं श्रीनारायणप्रसादाविर्भूतमनन्तकालीनं शाश्वतं स्यात्तदेवापाद्यं बुभूषुभिरित्यादितात्पर्यं निरूप्यते कतिपयेष्वध्यायेषु. तत्र हिरण्यकशिपवे ब्रह्मवरदानप्रकारं तेनास्य सर्वविजयप्रकारञ्च निरूपयति-एवं वृत इत्यादिना । अथशब्देन न केवलं ब्रह्मणो वरदानमेवोच्यते अपि तु हिरण्यकशिपुविषया कथा साकल्येन कथ्यत इति सूचयति ॥ १ ॥

मम सकाशाद्यदपि दुर्लभान् अन्ततो दुःखप्रापकान् "दुरशोभनदुःखयोः" इति यादवः ॥ २ ॥

भगवान् पूज्यः अत्र प्रतिक्षणं दृष्टश्रुतविस्मरणशीलानां मन्दानां स्फुरणार्थं कृतव्याख्यानानां पदानां पुनरपि तथा वचनं न दोषाय तदर्थं हीदं प्रवृत्तमिति, अमोघानुग्रहः योग्यानामितिशेषः ॥ ३ ॥

समग्रैश्वर्यादिगुणरत्नाकरे परे द्वेषमकरोदसुरावेशाज्जयांशत्वेन स्वतोभक्तोपीति तात्पर्यम्,तदुक्तम् "स्वतो भक्ता हिरण्याद्याः परावेशाद्धरौ द्विषः" इति "परोरिपरमात्मनोः" इत्यभिधानादत्र परः शत्रुरसुरः तदावेशादित्यर्थः ॥ ४ ॥ ५ ॥ ६ ॥

सर्वसत्त्वपतीन् सिंहादीन् बलश्रेष्ठान्वा किं बहुना विश्वं चराचरं विजितवानिति तेजसा प्रभावेन सह जहार ॥ ७ ॥

त्रिविष्टपं स्वर्गं स्वर्गे त्रीणि स्थानानि सन्ति ततोपि श्रेष्ठं महेन्द्रभवनममरावतीनाम तत्स्थानापेक्षया साक्षात्तुरीयमित्युच्यते "साक्षात्प्रत्यक्षतुर्ययोः" इत्यभिधानात्. अत एवाखिलर्द्धिमदित्युक्तं साक्षात्प्रत्यक्षमध्युवासेत्यनेन वा सङ्गमयितव्यं त्रीणि विष्टपानि स्थानानि सकलसमृद्धिमन्त्यस्मिन्निति त्रिविष्टपशब्दार्थपर्यालोचनयाऽयमर्थस्सम्पद्यते त्रिदिवपदस्याप्ययमेवार्थः अन्यथा त्रिशब्दस्य गतिर्वक्तव्येति ॥ ८ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

॥ १-२४ ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

वरान् लब्ध्वा द्विषन् विष्णुं देवदेवाञ्जिरास सः ।
प्रह्लादस्य गुणाः प्रेमभक्त्युत्थास्तुर्य ईर्य्यते ॥

हिरण्यकशिपोः हिरण्यकशिपुना तस्य तस्मै ॥ १ ॥

यदपि यद्यपीमे दुर्लभास्तदपि इमान् दुर्लभान् वितरामीति व्यवहितान्वयः सोढव्यश्चेदेवं व्याख्येयं वरान् कीदृशान् यतां प्राप्नुवतामपि दुर्लभान् यान् प्राप्यापि न प्राप्नुवन्ति तानित्यर्थः ॥ २——४ ॥

गरुडा गरुडजातयः पक्षिणः ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥ ॥ ११ ॥ १२ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

लब्धवरस्य हिरण्यकशिपोर्भगवति द्वेष तत्पुत्रस्य प्रह्लादस्य च भक्तिं चतुर्थेऽध्याये श्रीनारदो वर्णयति—एवमिति । शतधृतिर्ब्रह्मा ॥ १ ॥

मम मत्तो यान् वृणीषे ते इमे यद्यपि दुर्लभास्तथापि वितरामि तुभ्यं ददामि ॥ २ ॥

अमोघः सत्योऽनुग्रहो यस्य स विभुर्विपुलज्ञानः ॥ ३ ॥

हेममयं सुवर्णवत्प्रकाशमानम् ॥ ४ ॥

स दिग्गजादीन् विजित्य लोकपालानां तेजसा सह स्थानानि जहारेति चतुर्थेनान्वयः ॥ ५—६ ॥

सर्वेषां सत्त्वानां प्राणिजातीनां पतीन् जित्वा वशमानीय एवं विश्वजित् सन् लोकपालानामिन्द्रादीनां तेजसा तत्तन्महिम्ना सह स्थानानि जहाराऽपहृतवान् ॥ ७ ॥

देवोद्यानानां श्रीभिर्जुष्टं त्रिविष्टपं देवलोकमध्यास्ते स्म अधिष्ठितोऽभूत् तत्रापि साक्षान्महेन्द्रभवनमध्युवासेत्युत्तरेणान्वयः ॥ ८ ॥

---

यत्र विद्रुमसोपाना महामारकता भुवः ।
यत्र स्फाटिककुड्यानि वैदूर्यस्तम्भपङ्क्तयः ॥ ९ ॥
यत्र चित्रवितानानि पद्मरागासनानि च ।
पयःफेननिभाः शय्या मुक्तादामपरिच्छदाः ॥ १० ॥
कूजद्भिर्नूपुरैर्देव्यः शब्दयन्त्य इतस्ततः ।
रत्नस्थलीषु पश्यन्ति सुदतीः सुन्दरं मुखम् ॥ ११ ॥
तस्मिन्महेन्द्रभवने महाबलो महामना निर्जितलोक एकराट् ।
रेमेऽभिवन्द्याङ्घ्रियुगः सुरादिभिः प्रतापितैरूर्जितचण्डशासनः ॥ १२ ॥
तमङ्ग ! मत्तं मधुनोरुगन्धिना विवृत्तताम्राक्षमशेषधिष्ण्यपाः ।
उपासतोपायनपाणिभिर्विना त्रिभिस्तपोयोगबलौजसां पदम् ॥ १३ ॥
जगुर्महेन्द्रासनमोजसा स्थितं विश्वावसुस्तुम्बुरुरस्मदादयः ।
गन्धर्वसिद्धा ऋषयोऽस्तुवन्मुहुर्विद्याधरा अप्सरसश्च पाण्डव ! ॥ १४ ॥
स एव वर्णाश्रमिभिः क्रतुभिर्भूरिदक्षिणैः ।
इज्यमानो हविर्भागानग्रहीत्स्वेन तेजसा ॥ १५ ॥
अकृष्टपच्या तस्याऽऽसीत्सप्तद्वीपवती मही ।
तथा कामदुघा द्यौस्तु नानाश्चर्यपदं नभः ॥ १६ ॥

---

भाषा टीका ।

श्रीहरिस्मरणाय नमः ॥

॥ नारद उवाच ॥

नारदजी बोले, कि—जब हिरण्यकशिपु ने ऐसे वरमाँगे तब उसके तप से प्रसन्न होकर ब्रह्माजी ने हिरण्यकश्यप को अति दुर्लभ भी ये वर थे तौ भी दिये ॥ १ ॥

ब्रह्मोवाच ॥

ब्रह्माजी बोले, कि—हे तात ! जिन वरो को तू माँगता है ये पुरुषो को बडे दुर्लभ है, हे भाई ! यद्यपि ये वर दुर्लभ है तौ भी मैं तुझ को देताहूं ॥ २ ॥

तदनंतर वर देकर असुरवर्य से पूजित होकर अमोघ अनुग्रह वाले प्रजेश्वरों से स्तूयमान श्रीब्रह्माजी भी अपने धाम को गये ॥ ३ ॥

दैत्य भी इस प्रकार वर पाकर सुवर्ण मय शरीर को धारण करता हुआ भ्राता के वध का स्मरण करता हुआ भगवान श्री विष्णु में द्वेष करने लगा ॥ ४ ॥

वह महासुर दशो दिशाओं को और तीनों भुवनो को जीतकर देव असुर मनुष्येन्द्र गन्धर्व गरुड उरग सिद्ध चारण विद्याधर ऋषिगण पितर मनुष्य यक्ष राक्षस पिशाच भूत प्रेत और इनके अधिप तथा सर्व जन्तुओ के पतियों को जीत कर अपने वश मे लाकर विश्व को जीत कर तेज सहित सर्व लोक पालोके स्थानो को हरण करता हुआ ॥ ५ ॥ ६ ॥ ७ ॥

देवताओं के उद्यान की शोभा वाले स्वर्गका अधिष्ठाता होकर त्रैलोक्य की शोभा का एक स्थान अखिलसमृद्धिवाले साक्षात् विश्वकर्मा के रचे हुये महेन्द्रभवन मे निवास करने लगा ॥ ८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

अखिलसमृद्धियुक्तत्वमेवाह-यत्रेति त्रिभिः ॥ ९ ॥
मुक्तादामानि परिच्छदाः परिकराः यासाम् ॥ १० ॥
सुदतीः सुदत्यः ॥ ११ ॥
ऊर्जितमधिकं चण्डं तीव्रं शासनं यस्य ॥ १२ ॥
अङ्ग हेराजन् ! उरुगन्धिनोग्रगन्धेन मधुना सुरया मत्तम् अत एव विवृत्ते विघूर्णिते ताम्रे अक्षिणी यस्य तम् अशेषाधिष्ण्यपाः सर्वलोकपाला उपायनयुक्तैः पाणिभिरुपासत सेवन्ते त्रिभिर्ब्रह्मविष्णुरुद्रैर्विना पदमाश्रयभूतम् ॥ १३ ॥

### श्रीधरस्वामिकृतभावार्थदीपिका ।

उपासनप्रकारमाह—जगुरिति ॥ १४ ॥ १५ ॥ १६ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

महेन्द्रभवनं विशिनष्टि—यत्र भवने विद्रुममयानि सोपानानि यासु ताः भुवःस्थलानि वेदिकादीनि महामारकताः इन्द्रनीलमय्यः यत्र भवने स्फाटिकमयानि कुड्यानि भित्तयः यत्र वैदूर्यमणिमयस्तम्भपंक्तयः सन्ति ॥ ९ ॥

यत्र च चित्रवितानानि चित्रकविस्तराणि पद्मरागरत्नमयान्यासनानि च पयःफेननिभाः दुग्धफेनवन्मृदुलाः शुभ्राश्च शय्याः मुक्तादामानि परिच्छदाः परिकराः यासां ताः ॥ १० ॥

यत्र च देव्यः देवानांसम्बन्धिन्यः सुदत्यः स्त्रियः कूजद्भिर्ध्वनद्भिर्नूपुरैः तत्रतत्र शब्दयन्त्यः शब्दं कुर्वत्यो रत्नस्थलीषु सुन्दरं स्वीय मुखं पश्यन्ति ॥ ११ ॥

तस्मिन्नेवंभूते महेन्द्रस्य भवनेऽजितमत्तपारबलः महामनाः अव्याहतसङ्कल्पः अतएव निर्जितो लोको येन स्वयमेक एव राजा ऊर्जितमधिकं चण्डं तापकं शासनं यस्य सः अत एव प्रतापितैः सुरादिभिर्वन्द्यमानाङ्घ्रिपद्मस्तादृशो रेमे ॥ १२ ॥

अङ्ग हे युधिष्ठिर ! उरुणातिप्रगोणगन्धेन मधुना सुरया मत्तमतएव विहृते विघूर्णिते ताम्रे अक्षिणी यस्य तपोयोगस्य बलस्य देहबलस्य ओजस इन्द्रियबलस्य च पदमाश्रयं तं दैत्यं त्रिभिर्विना ब्रह्मविष्णुरुद्रैर्विना अन्ये सर्वे उपायनं पूजाद्रव्यं तद्युक्तपाणिभिर्लोकपालाः उपासितवन्तः ॥ १३ ॥

उपासनाप्रकारमेवाह— जगुरिति चतुर्भिः । ओजसा स्वबलेन महेन्द्रस्यासनमास्थितमधिष्ठितं तं दैत्यं विश्वावसुतुम्बुरुप्रभृतयः जगुर्गानञ्चक्रुः, तद्गुणान् जगुरित्यर्थः । गन्धर्वाः सिद्धाः ऋषयश्च विद्याधरा अप्सरसश्च मुहुर्मुहुरस्तुवन् हे पाण्डव ! ॥ १४ ॥

स एवाऽसुरो वर्णाश्रमवतिभिर्ब्राह्मणादिभिः भूरिदक्षिणा येषु तैः क्रतुभिर्मुहुर्मुहुरिज्यमानः आराध्यमानः स्वबलेन हविर्भागानग्रहीत् ॥ १५ ॥

तस्यासुरस्य सम्बन्धिनी या सप्तद्वीपयुक्ता पृथिवी अकृष्टपच्या कर्षणेन विना फलिन्यभूत् तथा द्यौः स्वर्गाभिमानिनी देवता यथाकामं यथेष्टं दोग्ध्रीप्रार्थान्पूरयतीति तथा अभूत् तथा नभः अन्तरिक्षाभिमानिदेवता नानाश्चर्यमयं विविधविचित्रवस्तुप्रदमभूत् ॥ १६ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

सोपानमारोहावरोहलक्षणं कुट्टिमम् ॥ ९ ॥

वितानमुपरिपिधानवस्त्रम् ॥ १० ॥

सुदतीः प्रशस्तदन्तपंक्तयः स्त्रियः ॥ ११ ॥ १२ ॥

त्रिभिरादित्यवसुरुद्रैर्मरुदादिदेवानामेष्वन्तर्भावविवक्षया त्रिधा भिन्नैः, तदुक्तम्—

"आदित्या वसवो रुद्रास्त्रिविधा हि सुरा यतः ।
मरुतश्चैव विश्वे च साध्याश्चैव च तद्गताः ॥
अतस्त्रय इति प्रोक्ताश्चत्वारो मानुषाः स्मृताः ।
उपायनं ददुः सर्वे विना देवान् हिरण्यके" ॥

इति वचनात् न ब्रह्मविष्णुमहेश्वरैरित्यर्थो ग्राह्यः किञ्चायं तात्पर्यः तथा हि, द्विविधा देवाः, यज्ञभागभुजस्तदभुज इति, तत्र प्रथमे त्रिधा भिन्ना जातिभिन्नत्वात्तत्रैषामाह्वाने समूहेनागमनाच्च, चरमेषु सुरशब्दमात्रं वर्तते, तदन्तेवासिवद्वर्तमानाः—

"अयज्ञभागेष्वपि तु सुरशब्दः प्रयुज्यते ।
यज्ञभागभुजस्त्वेव त्रय इत्यभिशब्दिताः" ॥

इति वचनादयं विशेषः कल्प्यत इति इतोऽप्यत्र त्रित्वसंख्यया आदित्यादय उच्यन्त इत्यङ्गीकर्तव्यम्. दैत्यस्य देवोपास्यत्वे देवानां सदा सद्यशोभाजामयशः स्यात्तदनुपपन्नम् प्रमाणविरोधात् इतरेषाम् उभयभाक्त्वमितीश्वरक्लृप्तमिदमिति—

"यत्र क्व यश स्थानमन्येषामिति केशवः ।
सर्वत्रापि तु देवानामित्यन्यान्पूजयेत् क्वचित्" ॥

इत्युक्तेश्च 'योगः सन्नहन.' इत्यभिधानाद्दाक्षिण्यादिनानोपायस्थानीभूतः ॥ १३ ॥ १४ ॥ १५ ॥

अकृष्टपच्या उल्लेखनमन्तरेण सस्यादिपरिपाकोपेता ॥ १६ ॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

उपायनयुक्तैः पाणिभिरुपास्यत त्रिभिः ब्रह्मविष्णुरुद्रैर्विना पदत्राश्रयभूतम् ॥ १३—१४—१५ ॥

तस्य भगवद्धर्मिष्ठत्वेपि तस्य राज्ये महीप्रभृतयोऽकृष्टपच्यत्वादिगुणयुक्ता यद्बभूवुस्तद्दैत्यभयादेव अन्यथा पृथ्व्यादीनां तत्कर्तृको नमः स्तुत एव सम्भवेत् तेनस्तु न तादृक्प्रभाव आसीत् यं भृग्वादय एव भस्मीचक्रुरस्तु भृग्वादीनां तेजः प्रथममेवाजहारेति विवेचनीयम् ॥ १६ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे

त्रैलोक्यलक्ष्म्या आयतनमाश्रयम् यत्र महेन्द्रभवने विद्रुममार्गाः सोपानाः आरोहमार्गाः ॥ ९ ॥

पद्मरागखचितान्यासनानि सिंहासनानि ॥ १० ॥

पयःफेननिभाः मृदुलाः सिताः शय्याः मुक्तादामानि परिच्छदाः परिकराः यासां ताः सुदतीः सुदत्यः ॥ ११ ॥

प्रतापितैः पराजितैः सुरादिभिरभिवन्दितमङ्घ्रियुगं यस्य सः ऊर्जितमधिकं चण्डं भयङ्करं शासनं यस्य स रेमे ॥ १२ ॥

हे अङ्ग ! तं कशिपुं तप आदीनां पदमाश्रयम् उरुगन्धिना बहुगन्धेन मधुना सुरया मत्तमत एव विवृत्ते विघूर्णिते ताम्रेऽत्यरुणे

रत्नाकरश्च रत्नौघांस्तत्पत्न्यश्चोहुरूर्मिभिः ।
क्षारसीधुघृतक्षौद्रदधिक्षीरामृतोदकाः ॥ १७ ॥
शैला द्रोणीभिराक्रीडं सर्वर्तुषु गुणान् द्रुमाः ।
दधार लोकपालानामेक एव पृथग्गुणान् ॥ १८ ॥
स इत्थं निर्जितककुबेकराड्विषयान् प्रियान् ।
यथोपजोषं भुञ्जानो नातृप्यदजितेन्द्रियः ॥ १९ ॥
एवमैश्वर्यमत्तस्य दृप्तस्योच्छास्त्रवर्तिनः ।
कालो महान्व्यतीयाय ब्रह्मशापमुपेयुषः ॥ २० ॥
तस्योग्रदण्डसंविग्नाः सर्वे लोकाः सपालकाः ।
अन्यत्रालब्धशरणाः शरणं ययुरच्युतम् ॥ २१ ॥
तस्यै नमोऽस्तु काष्ठायै यत्रात्मा हरिरीश्वरः ।
यद्गत्वा न निवर्त्तन्ते शान्ताः सन्यासिनोऽमलाः ॥ २२ ॥
इति ते संयतात्मानः समाहितधियोऽमलाः ।
उपतस्थुर्हृषीकेशं विनिद्रा वायुभोजनाः ॥ २३ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

अङ्घ्रिर्यां यस्य तम् त्रिभिर्हरिविरञ्चिहरैर्विना अखिलधिष्ण्यपाः उपायनयुक्तपाणिभिरुपासन ॥ १३ ॥

उपासनप्रकारं दर्शयति--जगुरित्यादिना ॥ १४—१५ ॥

अकृष्टपच्या कर्षणं विनैव सस्यपक्वसस्या ॥ १६ ॥

---

भाषाटीका ।

जिस भवन मे मूंगा की सीढी मरकतमणी की भूमि स्फटिक मणिके चौतरे वैडूर्यमणी की खंभो की पंक्तियां हैं ॥ ९ ॥

और जहां पर विचित्र चँदेवा तन रहे पद्मरागमणि के आसन हैं ॥ दुग्ध के फेन के सदृश शय्यायें, मौतियो के मालाओ के सब परिकर जिनके ऐसी शब्दायमान नूपुरों से जहां तहां शब्द करती हुई सुंदर दंतपंक्तिवाली अपने सुंदर मुख को रत्नस्थली में देख रही हैं ॥ १०—११ ॥

उस महेन्द्रभवन मे महाबली लोकों को जीतने वाला एकराट् सुरादिकों से वंदितचरणयुगल प्रचंडशासन हिरण्यकशिपु रमण करता भया ॥ १२ ॥

हे राजन् ! बडे सुगन्धि मधुसे मत्त, निकलेहुए लाल नेत्र जिसके ऐसे उस हिरण्यकश्यप को ब्रह्मा विष्णु महादेव को छोड़कर और सब लोको के अधिपति हाथो मे भेट लेलेकर उपासना करते थे। क्योंकि वह तप योग बल पराक्रम का एकही आश्रय था ॥ १३ ॥

हे पाण्डव ! जब अपने पराक्रम से वह इन्द्रासनपर बैठा तब विश्वावसु तुंबुरु और मरुन्नदादिक तथा गन्धर्व सिद्ध ऋषि विद्याधर और अप्सरा आदि हम सब लोग उसी का गान करते थे ॥ १४ ॥

उस समय वर्णाश्रमधारी प्रजाओ भूरि दक्षिणावाले यज्ञो से बडी पूजित होकर अपने तेज से यज्ञ के भागों को ग्रहण करता था ॥ १५ ॥

उसके राज्य मे भूमि बिना कमाई हुई फल को देती थी स्वर्ग भी कामनाओ को पूर्ण करता रहा और आकाश नाना आश्चर्य वाला होगया ॥ १६ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

तत्पत्न्यो नद्यः ऊहुर्वहन्तिस्म रत्नाकरानेवाह--क्षारेति ॥ १७ ॥

आक्रीडं क्रीडास्थानम् द्रुमाः सर्वेषु ऋतुषु गुणान् पुष्पफलादीन् सच लोकपालानाम्पृथग्विधान्गुणान्वर्षणदहनशोषणादीनेकएव दधार ॥ १८ ॥

निर्जिताः ककुभो येन यथोपजोषं यथाप्रीति ॥ १९ ॥

*** ( ॐ नमो भगवते तुभ्यम्पुरुषाय महात्मने ।**
**विशुद्धानुभवानन्दसन्दोहाय यतोऽभयम् ॥ ० ॥ )**
**तेषामाविरभूद्वाणी अरूपा मेघनिस्वना ।**
**सन्नादयन्तीककुभः साधूनामभयङ्करी ॥ २४ ॥**

श्रीधरस्वामिकृतभावार्थदीपिका ।

महान्कालः एकसप्ततियुगानि किञ्चिदधिकानि ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥

अरूपा वक्तृरहिता ॥ २४ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

रत्नाकराः समुद्राः तत्पत्न्यो गङ्गादिनद्यश्च ऊर्मिभिस्तरङ्गैः रत्नसमूहानूहुः प्रापयामासुः रत्नाकरानेवाह—क्षारेति, सीधुः सुरा क्षौद्रमिक्षुरसः अमृतं शुद्धं क्षारादिरसाम्बुदकानि येषां ते क्रमोऽत्र न विवक्षितः ॥ १७ ॥

शैलः पर्वत जात्यभिप्रायमेकवचनम् द्रोणीभिः कन्दरैर्नैमान् दधार कथंभूतान् सर्वर्तुषु वसन्तादिषु ऋतुषु सर्वे स्वे स्वे गुणाः फलपुष्पादयो येषां नानाक्रीडान् क्रीडास्थानोपयुक्तान् सर्वर्तुषु सर्वान् वृक्षान्, सफलपुष्पानेव दधारेत्यर्थः । तदेव रूपयति—लोकपालानां तदाधिपत्यवेलायामित्यर्थः । एको द्रुमः वसन्तादिकालनियमेन पृथग्गुणान् फलपुष्पादीन्दधार अस्यत्वाधिपत्ये अनियतकाले सर्वान्गुणान् दधारेत्यर्थः । यद्वा अयमसुर एक एव सर्वेषां लोकानां पृथग्गुणान् प्रतिनियतान्गुणान् दधार सर्वेषामाधिपत्यमेक एव चकारेत्यर्थः ॥ १८ ॥

इत्थं निर्जिताः ककुभो दिशो येन स दैत्यः एक एव राजा सन् यथोपजोषं यथाप्रीति प्रियानिष्टान्विषयाननुभवन्नपि नातृप्यत् न तृप्तवान् यतोऽयमजितेन्द्रियः ॥ १९ ॥

इत्थमैश्वर्येण मत्तस्याऽतएव दृप्तस्याऽतएव च उच्छास्त्रवर्तिनः वैदिकमार्गाननुवर्तिनः, उत्पथप्रतिपन्नस्येत्यर्थः । ब्रह्मशापं सनकादीनां शापमुपेयुषः प्राप्तवतः महान् कालो बहुवर्षात्मकः कालः व्यतीयाय अतिक्रान्तोऽभूत् ब्रह्मशापमुपेयुष इत्यनेन तज्जन्मावसानकालः प्राप्त इति सूच्यते ॥ २० ॥

तदेव वक्तुं तन्निमित्तं तावदाह— तस्य दैत्यस्योग्रदण्डेनोग्रशासनेन संविग्नाः भीताः सपालकाः सर्वे लोकाः अन्यत्राऽलब्धं शरणं निवासस्थानं यैस्ते अच्युतं भगवन्तं शरणं ययुः प्राप्ताः अन्यत्रालब्धशरणा इत्यस्यानन्यरक्षका इति वार्थः । पूर्वं दैत्यतपःपीडितास्तदुपशमनाय ब्रह्माणं शरणमुपगम्य वरप्रदापनेन ह्यनिष्टमेव चक्रुः पुनरेतदनिष्टपरिहारो ब्रह्मणापिकर्त्तुमशक्य इत्यालोच्याऽनन्यशरणा भगवन्तमेव शरणं ययुरित्यर्थः ॥ २१ ॥

शरणवरणप्रकारमेवाह—तस्या इति । तस्यै काष्ठायै दिशे नमः काष्ठां विशिषन्ति, यत्रेति । यत्र यस्यां काष्ठायामीश्वरः सर्वनियन्ता हरिराश्रितार्तिहरो भगवानास्ते शान्ताः रागादिरहिताः अत एव शुद्धान्तःकरणाः संन्यासिनः न्यासविद्यानिष्ठाः यत् याञ्च काष्ठां गत्वा प्राप्य न निवर्त्तन्ते पुनर्नावर्तन्ते न पुनः संसरन्ति तस्यै काष्ठायै नमः इति यस्यां दिशि प्रणतार्तिहरो भगवानास्ते तद्दिगभिमुखोऽस्मद्रक्षणोपाय [illegible]पूर्वकं भगवन्तं शरणं ययुः, काष्ठायै नम इति दिक्शरणवरणकथनेन देवानामपि भगवत्स्वरूपं दुर्ग्रहमिति सूचितम् ॥ २२ ॥

इतीत्थं ते देवाः संयतात्मानः स एव भगवान् रक्षिष्यतीति निश्चयमुक्तमनसः समाहितधियः भक्ता संयतात्मान इति बाह्येन्द्रियजय उक्तः, समाहितधिय इत्यनेनान्तरिन्द्रियजयः, वायुभोजना इत्यनेन प्राणजयः, विनिद्रा इत्यनेन कायजयः एवंविधाः हृषीकेशमुपतस्थुस्तुष्टुवुः वक्ष्यमाणां सन्त जगुर्वा ॥ २३ ॥

भगवते षाड्गुण्यपूर्णाय पुरुषाय सर्वान्तरात्मने महात्मने महाननुकम्पायुक्त आत्मा मनो यस्य तस्मै विशुद्धः अनुभवो ज्ञानम् आनन्दः सुखं तयोः सन्दोहः पूरः तद्रूपाय यतः यत्समाश्रयणादाश्रितानामभयं तस्मै नमः ॥ ० ॥

तेषां देवानामेवमुपतिष्ठतां वाणी शब्द आविरभूत्तैः श्रुतेत्यर्थः । कथम्भूता अरूपा अदृष्टवक्तृका मेघनिस्वना मेघघोषतुल्या ककुभो दिशः सन्नादयन्ती प्रतिध्वनयन्ती साधूनामभयङ्करी ॥ २४ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

तत्पत्न्यः तेषां समुद्राणां पत्न्यो नद्यः क्षारं लवणम् ॥ १७ ॥ १८ ॥

यथोपजोषं यथासुखम् ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥

यतो यस्माद्धरेरभयं भवति तस्मा इति अरूपा अशरीरिणी ॥ २४ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

तत्पत्न्यः नद्यः रत्नाकरानेवाह—क्षारेति । आक्रीडं क्रीडास्थानम् ॥ १७—२१ ॥

काष्ठायै दिशे यत्र दिशि हरिरस्तीति सर्वदेशस्यासुरतेजोग्रस्तत्वात् वयं क्वचित् पुण्यतीर्थे गत्वा तं स्तुमहे इति भावः । यद्वा तस्मै उत्कर्षाय नमः यस्मिन्नुत्कर्षे हरिरिति अन्ये सर्वं एवोत्कर्षाः

* श्लोकोऽयमधिकः पाठः । विज० वीर० ।

मा भैष्ट विबुधश्रेष्ठाः सर्वेषां भद्रमस्तु वः ।
मद्दर्शनं हि भूतानां सर्वश्रेयोपपत्तये ॥ २५ ॥
ज्ञातमेतस्य दौरात्म्यं दैतेयापसदस्य च ।
तस्य शान्तिं करिष्यामि कालं तावत् प्रतीक्षत ॥ २६ ॥
यदा देवेषु वेदेषु गोषु विप्रेषु साधुषु ।
धर्मे मयि च विद्वेषः स वा आशु विनश्यति ॥ २७ ॥
निर्वैराय प्रशान्ताय स्वसुताय महात्मने ।
प्रह्लादाय यदा द्रुह्येद्धनिष्येऽपि वरोर्जितम् ॥ २८ ॥

नारद उवाच ।

इत्युक्ता लोकगुरुणा तं प्रणम्य दिवौकसः ।
न्यवर्तन्त गतोद्वेगा मेनिरे चासुरं हतम् ॥ २९ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

अनेनासुरेण जिता इति भावः "काष्ठोत्कर्षे स्थितौ दिशि" इत्यमरः ॥ २२—२४ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

ततस्तस्य नद्यः ऊहुः प्रापयामासुः, रत्नाकरानाह—क्षारेति । सुरादीन्युदकानि येषां ते तत्र सीधुः सुरा क्षौद्रमिक्षुरसः अमृतं शुद्धम ॥ १७ ॥

आक्रीड क्रीडास्थानम् पुष्पफलादीन् ॥ १८ ॥

निर्जिताः ककुभो दिशो येन सः यथोपजोषं यथाप्रीति विषयान् भुञ्जानोऽपि नातृप्यत यतोऽजितेन्द्रियः ॥ १९ ॥

उच्छास्त्रवर्तिनं शास्त्रमुल्लङ्घ्य वर्त्तमानस्य ॥ २०—२१ ॥

काष्ठायै दिशे संन्यासिनः सम्यक् न्यासः आत्मात्मीयभरस्य भगवति अर्पणं सोऽस्ति येषान्ते भगवत्प्रपन्नाः ॥ २२—२३ ॥

अरूपा वक्तृमूर्त्तिदर्शनरहिता हे विबुधश्रेष्ठाः ॥ २४ ॥

भाषा टीका ।

समुद्र और नदी भी रत्नों के समूह को अपनी लहरों से फैकने लगीं समुद्रों से लवण मदिरा घृत मधु दधि दुग्ध अमृत और जल जो चाहो सो मिलनेलगा ॥ १७ ॥

और उस समय पर्वत भी गुहाओं से क्रीडास्थान को धारण करते हुए, वृक्ष सब ऋतुओं के गुणों को धारण करने लगे तथा हिरण्य कशिपु भी एकही पृथक् २ सबलोक पालों के गुणों को धारण करने लगा ॥ १८ ॥

वह हिरण्यकश्यप इस तरह सर्व दिशाओं को जीतकर यथेष्ट प्रिय विषयों को भोगता हुआ भी तृप्त न हुआ क्योंकि ? अजितेन्द्रिय था ॥ १९ ॥

ऐसा ऐश्वर्य से मत्त शास्त्र को छोडकर वर्तनेवाले विप्र शाप को प्राप्त करनेवाले उस हिरण्यकश्यप का बहुत काल व्यतीत होगया ॥ २० ॥

उसके उग्र दंड से उद्विग्न होकर सबलोक लोकपाल अन्यत्र कहीं स्थान को न प्राप्त होकर गोविन्द के शरण गये ॥ २१ ॥

और ऐसा बोले, कि—उस दिशा को नमस्कार है जिसमें हमारा ईश्वर हरि है जहां जाकर शान्त सन्यासी लोग फिर नहीं निवृत्त होते हैं ॥ २२ ॥

इस प्रकार मनको रोक बुद्धि को समाहित कर हृषीकेश भगवान् का उपस्थान करनेलगे है कैसे कि ? रात दिन जिन को निद्रा नहीं आती और वायु का भोजन करते हैं ॥ २३ ॥

तब उन लोगों को मेघ सदश शब्दवाली, साधुओं को अभय देनेवाली दिशाओं मे नाद करती हुई, भगवान् की वाणी सुनपड़ी ॥ २४ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

मम दर्शनं अवश्यं सर्वेषां श्रेयसामुपपत्तये भवति ॥ २५ ॥ २६ ॥ २७ ॥

ननु, देवादिविद्वेषेऽप्यस्य विनाशो नास्ति ब्रह्मवरेणोर्जितत्वात्तत्राह–निर्वैरायेति । सर्वमहं सहे न मद्भक्तद्रोहमितिभावः ॥२८॥

असुरञ्च हतं मेनिरे तदानीं तद्द्वेषे प्रवृत्तत्वादितिभावः ॥२९॥

तस्य दैत्यपतेः पुत्राश्चत्वारः परमाद्भुताः ।
प्रह्लादोऽभून्महांस्तेषां गुणैर्महदुपासकः ॥ ३० ॥
ब्रह्मण्यः शीलसम्पन्नः सत्यसन्धो जितेन्द्रियः ।
आत्मवत्सर्वभूतानामेकः प्रियसुहृत्तमः ॥ ३१ ॥
दासवत्सन्नतार्याङ्घ्रिः पितृवद्दीनवत्सलः ।
भ्रातृवत्सदृशे स्निग्धो गुरुष्वीश्वरभावनः ।
विद्याऽर्थरूपजन्माढ्यो मानस्तम्भविवर्जितः ॥ ३२ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

तमेव द्वेषं वक्तुमादौ सुतस्य महत्त्वमाह—तस्येति । गुणैर्महानभूत्, गुणानेवाह, महदुपासक इत्यादिना ॥ ३० ॥

सत्या सन्धा प्रतिज्ञा यस्य एकएव प्रियश्च सुहृत्तमश्च ॥ ३१ ॥

दासवत्सम्यङ्नता अर्याणामङ्घ्रयो येन गुरुषु ईश्वर इतिभावना यस्य ॥ ३२ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

वाणीमेवाह—माभैष्टेति । हे विबुधश्रेष्ठा ! यूयं माभैष्ट भयं माकुरुत वो युष्माकं सर्वेषां भद्रं सुखमेवास्तु हि यस्मात्मम दर्शनं कटाक्षो भूतानां श्रेयसे उपपत्तये प्राप्तये भवति ॥ २५ ॥

दैतेयाधमस्य तस्य हिरण्यकशिपोर्यद्दौरात्म्यं तन्मया ज्ञातं विदितमेव तस्य दैत्यस्य शान्तिं वधं करिष्यामि कालः तद्वधोचितकालस्तावत्प्रतीक्षतां किञ्चित्कालविलम्बं सहध्वमित्यर्थः ॥२६॥

कोऽसौ तद्वधोचितः कालः ? तत्राह—यदेति । यस्मिन् काले देवादिषु तस्य नितरां द्वेषस्तदा स आशु विनश्यति ॥ २७ ॥

ननु, देवादिषु विद्वेषेऽपि न तस्य नाशः, कथम् ?ब्रह्मवरेणोर्जितत्वादित्यत्राह—निर्वैरायेति । यदा प्रह्लादाय द्रुह्येत्तदा वरैरूर्जितमपि हनिष्ये हनिष्यामि कथम्भूताय महात्मने अहमेवात्मा यस्य स महात्मा तस्मै निर्वैराय सर्वभूतसुहृदे प्रशान्ताय रागादिरहिताय स्वस्यात्मजाय निरतिशयप्रियभक्तविषये यदा द्रोहङ्करिष्यति आश्वेव तदा हनिष्यामि मद्भक्तविषयापराधस्य मम नितरामसह्यत्वादिति भावः ॥ २८ ॥

इतीत्थं लोकगुरुणा भगवता उक्ताः दिवौकसो देवाः भगवन्तं प्रणम्य गतोद्वेगाः गत उद्वेगो भयं येषां तादृशास्सन्तो न्यवर्तन्त, भगवदुपस्थितेरितिशेषः । असुरं हिरण्यकशिपुं हतप्रायञ्च मेनिरे अमन्यन्त ॥ २९ ॥

तस्य पूर्वमेव विप्रशापमुपेयुषः उचितकाले हनिष्यामीत्येवंविधभगवत्सङ्कल्पविषयस्य दैत्यपतेर्हिरण्यकशिपोः परमाद्भुताश्चत्वारः प्रह्लादानुह्लादसंह्लादह्लादाख्याः पुत्रास्तेषां मध्ये प्रह्लादो गुणैरक्रोधादिभिर्महाञ्छ्रेष्ठोऽभूत् माहात्म्यावहगुणैस्तं विशिनष्टि, महदुपासक इत्यादिना महतां भागवतानामुपासकः भागवतभक्तिपर्यन्तभगवद्भक्तिनिष्ठः इयमेव भगवद्भक्तेः परा काष्ठेति भावः ॥३० ।

ब्रह्मण्यः ब्राह्मणकुले साधुरनुकूलो ब्रह्मण्यः यद्वा ब्रह्मणि परस्मिन्नितरां साधु ब्रह्मण्यः शीलेन सुस्वभावसद्वृत्यात्मकेन युक्तः सत्यसन्धः सत्यप्रतिज्ञः जितानि इन्द्रियाणि अन्तर्बाह्यानि येन सर्वभूतानामात्मना तुल्यमात्मवत् एकएव असाधारणः प्रियतमः सुहृत्तमश्च प्रियसुहृत्तमः आत्मा यथा प्रियतमः स्वहितैषी च तद्वद्यमपि सर्वभूतविषयकप्रीतियुक्तस्तद्धितैषीत्यर्थः ॥ ३१ ॥

दासवत्सम्यङ्नताः नमस्कृताः आर्याणां महतामङ्घ्रयो येन पितृवद्दीनेषु वात्सल्ययुक्तः भ्रातृवत्सदृशेषु स्वतुल्येषु स्निग्धोऽनुरागयुक्तः गुरुषु ईश्वरत्वेन भावना दृष्टिर्यस्य विद्यादिभिर्हेतुभिर्योऽभिमानो गर्वो दम्भश्च ताभ्यां विवर्जितः तत्रार्थो वित्तं रूपं सौन्दर्यं जन्माभिजात्यम् आदिशब्दः प्रकारार्थः विद्यादिसदृशमन्यदपि मानादिनिमित्तं विवक्षितम् ॥ ३२ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

मद्दर्शनं मद्विषयज्ञानम् ॥ २५ ॥ २६ ॥

अस्य देवादिषु विद्वेषः स आशु साधनसामग्र्याम् । २७ । २८ । । २९ । ३० ।

आत्मवत् परमात्मवत्—

"अन्येषां हरिसाम्यं तु किञ्चित्साम्यमुदीरितम् ।
सम्यक्साम्यं तु मत्स्यादेरितिशास्त्रस्य निश्चयम्"

इतिवचनादत्रहरिसाम्यकथनं तात्पर्यादवगन्तव्यम् ॥ ३१ ॥

मानस्तम्भविवर्जितः अभिमाननिमित्तस्तम्भदोषरहितः ॥३२ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

मद्दर्शनं श्रवणद्वारापि मदनुभवः ॥ २५ ॥ २६॥

यदा यस्य देवादिषु विद्वेषः स्यात् तदा स वै प्रसिद्धौ आश्वेव नश्यति ॥ २७ ॥

**नोद्विग्नचित्तो व्यसनेषु निस्स्पृहः श्रुतेषु दृष्टेषु गुणेष्ववस्तुदृक् ।**
**दान्तेन्द्रियप्राणशरीरधीः सदा प्रशान्तकामो रहितासुरोऽसुरः ॥ ३३ ॥**
**यस्मिन्महद्गुणा राजन् गृह्यन्ते कविभिर्मुहुः ।**
**न तेऽधुनाऽपि धीयन्ते यथा भगवतीश्वरे ॥ ३४ ॥**

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

तथाप्यसुनत्वादाश्चर्यप्रभावमपि सम्प्रति वरोर्जितमपि तं स्वयमहमेव हनिष्यामि । किन्त्वहमपि तत्प्रभावलोपकच्छिद्र-विशेषं प्रतीक्षमाणोऽस्मीत्याह निर्वैरायेति ॥ २८—३५ ॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

मद्दर्शनं हीति स्तम्भान्मद्दर्शनं यावदेव न भवति तावदेव युष्माकं दुःखमिति भावः ॥ २५—२७ ॥

ननु. ब्रह्मवरोर्जितोऽयं बहुकालेन एव देवादीन् द्विषन्नपि नैव नश्यति तत्राह-निर्वैरायेति । सर्वमहं सहे न भक्तद्रोहमिति भावः ॥ २८—३१ ॥

सम्यक् ततो आर्य्याणां अङ्घ्रयो येन सः गुरुष्वितिबहुवचनं गौरवेणैव श्रीभगवन्मन्त्रोपदेशकं गुरावित्यर्थः । रहित आसुरो भावो मत्सरादिर्यस्य सः ॥ ३२—३३ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

विबुधश्रेष्ठत्वमत्र भगवद्विषयकज्ञानवत्त्वं हे मज्ज्ञानवन्त इत्यर्थः । अतो मा भैष्ट यतो मद्दर्शनं मज्ज्ञानं सर्वश्रेयसामुपपत्तये भवति सर्वश्रेयोपपत्तये इत्यत्र सन्धिरार्षः ॥ २५—२६ ॥

यदा यस्य देवादिषु विद्वेषस्तदा स आशु विनश्यति देवादिकोपादेवेति भावः ॥ २७ ॥

यदा तु मद्भक्तेषु यस्य विद्वेषस्तदा मद्भक्तानां समदर्शिनां क्रोधादिविकाराभावात् मद्भक्तद्रुहोहन्ताऽहमित्याशयेनाह- निर्वैरायेति ॥ २८—२९ ॥

निर्वैरायेति निर्वैरायेत्यनेन संक्षेपतो भगवता वर्णितान् प्रह्लादगुणान् मुनिर्विस्तरतो वर्णयति--तस्येत्यादिना ॥ ३० ॥

शब्दब्रह्मपरब्रह्मब्राह्मणेभ्यो हितकृत् ब्रह्मण्यः सत्यसन्धः सत्यप्रतिज्ञः सर्वभूतानामात्मवत् एक एव प्रियः सुहृत्तमश्च दासवत्सन्नता आर्य्याणां श्रेष्ठानामङ्घ्रयो येन गुरुषु ईश्वरमन्त्रस्वरूपगुणाद्युपदेष्टृषु ईश्वरवद्भावना यस्य सः ॥ ३१—३२ ॥

---

### भाषा टीका ।

वाणी बोली, कि—हे देवता लोगों ! भय मतकरो तुम्हारा मङ्गल हो हमारा दर्शन प्राणियों की सर्व मङ्गल की सिद्धि के लिये होता है ॥ २५ ॥

दैत्यों में भी इस हिरण्यकश्यप की दुरात्मता में जानचुका तिसकी शांति मैं करूंगा तब तक कुछ काल की प्रतीक्षा करो ॥ २६ ॥

जिस समय यह देवताओं में वेदों में गौ ब्राह्मण और साधुजनों में तथा धर्म्म में और मेरे विषय में द्वेष करने लगेगा तब वह शीघ्र ही नष्ट होजायगा ॥ २७ ॥

निर्वैर प्रशान्त अपने पुत्र माहात्मा प्रह्लाद से जब द्रोह करेगा वरा कैसे भी वरों से बढा हो मैं उसी समय उसको मारूंगा ॥ २८ ॥

॥ नारद उवाच ॥

नारदजी बोले, कि- देवताओं को लोक गुरु गोविन्द की जब ऐसी आज्ञा हुई, तब उद्वेग को छोडकर गोविन्द को प्रणाम कर वहां से लौटे और असुरको तो मरा समुझने लगे ॥ २९ ॥

उस दैत्य पति के परम अद्भुत चार पुत्र थे उन सब में प्रह्लाद गुणों से वडा था और महात्माओं की उपासना करने वाला था ॥ ३० ॥

और ब्रह्मण्य शील सम्पन्न सत्य प्रतिज्ञ वाला जितेन्द्रिय-तथा आत्मा के सदृश सर्व प्राणियों का एक प्रिय और सुहृतम भी था ॥ ३१ ॥

और श्रेष्ठजनों के चरणों का दासवत् सेवक, और दीनो का पितृवत् परिपालक, सदृश लोगों में भ्राता के तुल्य स्नेह वाला तथा गुरजनों में ईश्वर भावना वाला विद्यार्थ रूप श्रेष्ठ जन्म युक्त और मान गर्व से वर्जित था ॥ ३२ ॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका ।

व्यसनेषु प्राप्तेष्वपि नोद्विग्नचित्तः दृष्टेषु श्रुतेषु गुणेषु विषयेषु निःस्पृहः यतस्तेष्ववस्तुदृक् दान्ता इन्द्रियादयो यस्य रहित आसुरो भावो मत्सरादिर्यस्य सः असुरोऽपि सन् प्रशान्तकामः ॥ ३३ ॥

यं साधुगाथासदसि रिपवोऽपि सुरा नृप ! ।
प्रतिमानं प्रकुर्वन्ति किमुतान्ये भवादृशाः ॥ ३५ ॥
(१) गुणैरलमसङ्ख्येयैर्माहात्म्यं तस्य सूच्यते ।
वासुदेवे भगवति यस्य नैसर्गिकी रतिः ॥ ३६ ॥
न्यस्तक्रीडनको बालो जडवत्तन्मनस्तया ।
कृष्णग्रहगृहीतात्मा न वेद जगदीदृशम् ॥ ३७ ॥
आसीनः पर्यटन्नश्नन् शयानः प्रपिबन्ब्रुवन् ।
(२) नाऽनुसन्धत्त एतानि गोविन्दपरिरम्भितः ॥ ३८ ॥
क्वचिद्रुदति वैकुण्ठचिन्ताशबलचेतनः ।
क्वचिद्धसति तच्चिन्ताह्लाद उद्गायति क्वचित् ॥ ३९ ॥
नदति क्वचिदुत्कण्ठो विलज्जो नृत्यति क्वचित् ।
क्वचित्तद्भावनायुक्तस्तन्मयोऽनुचकार ह ॥४० ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

अधुनाऽपि ते गुणा नापिधीयन्ते तिरोहिता न भवन्ति ॥ ३४ ॥

साधुगाथासदसि साधुकथाप्रसङ्गवत्यां सभायाम् यं प्रह्लादम् प्रतिमानं दृष्टान्तम् रिपवोऽपि सुराः कुर्वन्ति किं वक्तव्यं भवादृशा विष्णुभक्ताः ॥ ३५ ॥

सूच्यते मया केवलं द्योत्यते सुष्ठु कथ्यत इति वा ॥ ३६ ॥

नैसर्गिकरतेर्लिङ्गान्याह—न्यस्तक्रीडनक इति षड्भिः । तन्मनस्तया तदेकचित्तत्वेन ॥ ३७ ॥

एतान्यासनादीनि गोविन्देन परिरम्भित आत्मना एकीकृतः ॥ ३८ ॥

रुदति रोदिति रौति वैकुण्ठस्य चिन्तया शबला व्यामिश्रा क्षुभिता चेतना यस्य तस्य चिन्तयाऽऽह्लादो यस्य ॥ ४९ ॥

क्वचिदुत्कण्ठो मुक्तकण्ठः सन् अनुचकार तच्चेष्टादिकं स्वयं कृतवान् ॥ ४० ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

व्यसनेषु दुःखहेतुषु नोद्विग्नमभीतं चित्तं यस्य दृष्टेष्वैहिकेषु श्रुतेष्वामुष्मिकेषु च स्वर्गस्वाराज्यादिषु गुणेषु विषयेष्ववस्तुदृगनित्यबुद्धियुक्तोऽत एव तेषु स्पृहादिरहितः सदा दान्ताः नियमेन वशीकृताः इन्द्रियादयो यस्य प्रशान्ताः कामा यस्य, निस्स्पृह इत्यनेन सन्निहितेषु विषयेषु इच्छाराहित्यमुक्तम्. प्रशान्तकाम इत्यनेन त्वसन्निहितेष्वित्यतो न पौनरुक्त्यं. स्वयमसुरोऽपि रहितासुरः मात्सर्याद्यासुरभावरहितः ॥ ३३ ॥

हे राजन् ! यस्मिन् प्रह्लादे गुणा उक्ता वक्ष्यमाणा अन्ये च कविभिर्मुहुर्मुहुर्महद्यथा भवति तथा गृह्यन्ते बहुमन्यन्त इत्यर्थः । महदिति क्रियाविशेषणमन्यथा सामानाधिकरण्यसमासे "आन्महत्"इत्यात्वापत्तिः महतः प्रह्लादस्य गुणा इत्यर्थे यस्मिन्नित्यनेन पौनरुक्त्यापत्तिः महतां गुणा इति वा, ते गुणाः अधुना अद्यापि नापिधीयन्ते न तिरोहिता भवन्ति, न विस्मृता भवन्तीति यावत. यथा भगवतीश्वरे गुणाः पुनःपुनः कविभिर्गृह्यन्ते नापिधीयन्ते तद्वत् ॥ ३४ ॥

हे नृप युधिष्ठिर ! साधुगाथासदसि साधुकथाप्रसङ्गवत्यां सभायां रिपवः शत्रवोऽपि यं प्रह्लादं प्रतिमानं साधनत्वे दृष्टान्तं कुर्वन्ति किं पुनर्भवादृशा अन्ये प्रतिमानं कुर्वन्तीति ॥ ३५ ॥

मया परं केवलमसङ्ख्येयैर्गुणैस्तस्य माहात्म्यं सूच्यते, न साकल्येन तद्गुणा वर्णयितुं शक्या इति भावः । अलमिति पाठेऽधिकं तस्य माहात्म्यं सूच्यते. मया दिङ्मात्रं गुणप्रदर्शनेन माहात्म्यं सूच्यते, नत्वेतावत्तस्य माहात्म्यमित्युच्यते इत्यर्थः । अपारमाहात्म्ये हेतुं वदन् विशिनष्टि—वासुदेवेति. यस्य प्रह्लादस्य वासुदेवे भगवति नैसर्गिकी स्वाभाविकी उत्पत्तिसिद्धेत्यर्थः । रतिः स्वभावतः वासुदेवे रतानां वासुदेवस्येवानन्तमाहात्म्यमिति भावः ॥ ३६ ॥

(१) गुणैः परमसंख्येयैः इतिपाठान्तरम्—वीर० (२) नाऽनुसन्दध एतानि इति पाठान्तरम्. वीर० विज० ॥

क्वचिदुत्पुलकस्तूष्णीमास्ते संस्पर्शनिर्वृतः ।
अस्पन्दप्रणयानन्दसलिलामीलितेक्षणः ॥ ४१ ॥
स उत्तमश्लोकपदारविन्दयोर्निषेवयाऽकिञ्चनसङ्गलब्धया ।
तन्वन्परां निर्वृतिमात्मनो मुहुर्दुस्सङ्गदीनान्यमनःशमं व्यधात् ॥ ४२ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

एव विलज्जो नृत्यति तदैव स्फूर्तिभङ्गे सति तद्विरहखेदाधिक्येन तद्भावनातिशययुक्तः उन्मादसञ्चारिप्रावल्येन अहमेव हरिरिति तन्मयस्सन् तल्लीलां रामकृष्णाद्यवतारगतामपि अनुचकार अनुकृतवान् ॥ ४० ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

व्यसनेषु आपत्सु नोद्विग्नचित्तः श्रुतेषु पारलौकिकेषु दृष्टेषु ऐहिकेषु च गुणेषु विषयेषु यतोऽवस्तुदृक् अनित्यत्वदर्शित्वतो निस्पृहः दान्ताः वशगाः इन्द्रियादयो यस्य सः ॥ ३३ ॥

यथा भगवति तथा यस्मिन् ये महान्तो गुणाः ते कविभिर्विवेकिभिः त्वस्मिन् अधुनापि मुहुर्गृह्यन्ते पुनःपुनः संगृह्यन्ते ते चात्मनि न धीयन्ते अविवेकिभिरात्मनि धारयितुं न शक्यन्ते इत्यर्थः ॥ ३४ ॥

हे नृप ! साधूनां गाथायाः गुणकथायाः सदसि समाजे रिपवः सुरा अपि यं प्रह्लादं प्रतिमानमुपमानं प्रकुर्वंति अमुकः साधुः प्रह्लादसम इत्येवं वर्णयन्तीत्यर्थः । तर्हि भवादृशाः साधवः अन्ये रिपुभिन्नाः स्वकीयाश्च प्रतिमानं प्रकुर्वंतीति किमुत ॥ ३५ ॥

यस्य वासुदेवे भगवति नैसर्गिकी स्वाभाविकी रतिः प्रीतिः तस्य असङ्ख्येयैर्बहुभिर्गुणैः पर्याप्तमिति तस्य माहात्म्यं सूच्यते द्योत्यते गुणस्तु मुख्यो वासुदेवे रतिरेव तत्रैव सर्वे गुणाः सन्ति तदभावे सर्वे गुणा दोषा एवेति भावः । उक्तं चैतच्चतुर्थे स्कन्धे "किं जन्मभिस्त्रिभिर्वेह शौक्लसावित्रयाज्ञिकैः" इत्यादिना ॥ ३६ ॥

तां नैसर्गिकीं वासुदेवे रतिं प्रह्लादस्य वर्णयति भगवान्नारदः न्यस्तक्रीडनक इति षड्भिः । तन्मनस्तया वासुदेवविषयकचित्तत्वेन ॥ ३७ ॥

गोविंदेन परिरम्भितः एतानि आसनपर्यटनादीनि नानुसंधत्त न बुबुधे ॥ ३८ ॥

वैकुण्ठचिन्तया शबला विह्वला चेतना यस्य रुदति रोदिति तस्य गोविन्दस्य चिन्तया ध्यानेनाह्लादो यस्य सः ॥ ३९ ॥

क्वचिदुत्कण्ठः उर्ध्वीकृतकण्ठस्सन् नदति ध्वनति क्वचिच्च तन्मयो गोविन्दमयः सन् अनुचकार तल्लीलां स्वयं चकार ॥ ४० ॥

भाषा टीका ।

और सदा निस्पृह रहता तथा दृष्ट श्रुत ( देखे सुने हुए ) विषय को कुछ वस्तु नहीं समुझता था, इन्द्रिय प्राण शरीर और बुद्धिका दमन करनेवाला सदा प्रशांत कामना वाला और आसुर भाव से रहित था ॥ ३३ ॥

हे राजन् ! जिस प्रल्हाद में बडे २ गुण थे जिन गुणों को बडे २ महात्मा लोग ग्रहण करते हैं वे गुण प्रल्हाद के अब भी तिरोहित नहीं है जैसे कि भगवान श्रीमन्नारायण में ॥ ३४ ॥

हे नृप ! साधु कथा प्रसंगवाली सभा में वैरी जो देवता लोग हैं वो भी जिस प्रल्हादको उत्तम पुरुषों का दृष्टांत बनाते हैं फिर आप सदृश विष्णुभक्तों का तो कथा ही कहना ॥ ३५ ॥

उसके असंख्येय गुणों को तो कहां तक कहैं पर उसके माहात्म्यमात्र की सूचना करते हैं कि जिसकी भगवान वासुदेव के विषैं स्वाभाविक प्रीति थी ॥ ३६ ॥

जो कि कृष्ण में मन लगने से जड़ के तरह बालकपने में भी खिलौनों को छोड बैठा, और कृष्णरूप ग्रह से गृहीत हुआ मन जिसका ऐसा प्रल्हाद, जगत् कैसा है यह भी नहीं जानता हुआ ॥ ३७ ॥

बैठे चलते सोते खाते पीते बोलते में भी गोविन्द में पूर्ण रीति से चित्त लगजाने से प्रल्हाद को इन सब बातों का अनुसंधान नहीं रहता था ॥ ३८ ॥

वैकुंठ भगवान की चिन्ता से क्षुभित होगई चेतना जिसकी ऐसा प्रल्हाद कभी रोने लगता कभी हंसने लगता कभी परमात्मा की चिन्ता के आल्हाद से गाने लगता ॥ ३९ ॥

किसी समय ऊंचे स्वर से नाद करने लगता कभी निर्लज्ज होकर नांचने लगता किसी समय हरिभावना युक्त होकर तन्मय होकर भगवान का अनुकरण करने लगता ॥ ४० ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

संस्पर्शस्तत्कृतापरिष्वङ्गेन निर्वृतः अस्पन्दः स्थिरो यः प्रणयस्तेन य आनन्दस्तेन यत्सलिलं तेन युक्ते आमीलिते ईषन्निमीलिते ईक्षणे यस्य सः ॥ ४१ ॥

आत्मनः परां निर्वृतिं तन्वन्दुस्सङ्गेन दीनस्यान्यस्यापि

तस्मिन्महाभागवते महाभागे महात्मनि ।
हिरण्यकशिपूराजन्नकरोदघमात्मजे ॥ ४३ ॥

॥ युधिष्ठिर उवाच ॥

देवर्ष एतदिच्छामो वेदितुं तव सुव्रत ! ।
यदात्मजाय शुद्धाय पिताऽदात्साधवे ह्यघम् ॥ ४४ ॥

(१) पुत्रान् विप्रतिकूलान् स्वान् पितरः पुत्रवत्सलाः ।
उपालभन्तो शिक्षार्थं नैवाघमपरो यथा ॥ ४५ ॥

किमुतानुवशान् साधूंस्तादृशान् गुरुदेवतान् ।
एतत्कौतूहलं ब्रह्मन्नस्माकं विधम प्रभो ! ॥
पितुः पुत्राय यद्द्वेषो मरणाय प्रयोजितः ॥ ४६ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां
वैयासिक्यां सप्तमस्कन्धे प्रह्लादचरिते
चतुर्थोऽध्यायः ॥ ४ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

अघ द्रोहमकरोत् ॥ ४३ ॥

प्रथमाध्यायान्ते पृष्टमेवार्थमतिविस्मयेन पुनः पृच्छति--देवर्षे इति । नव त्वत्तस्तववाक्यमिति वा साधवेऽघमदात् साधे द्रोहं कृतवानिति यदेतद्वेदितुं ज्ञातुमिच्छामः ॥ ४४ ॥

उपालभन्ते आक्षिपन्ति अघन्तु नैव कुर्वन्ति अपरः शत्रुरिव ॥ ४५ ॥

अनुवशाननुकूलान् साधूनरागरोषान् गुरुः पितैव देवता येषां तानुद्दिश्याघ न कुर्वन्तीति किमु वक्तव्यमित्यर्थः । पुत्राय पुत्रमुद्दिश्य पितुर्द्वेषः पित्रा कृतो द्वेषः पुत्रस्य मरणार्थं प्रयोजितः प्रवर्तित इति यदेतत्कौतूहलं विधमापाकुरु यद्वा यद्यस्मात्पुत्राय यो द्वेषः स पितुर्मरणाय प्रयोजितोऽत एतत्कौतूहलं विधमेत्यर्थः ॥ ४६ ॥

इति श्रीमद्भागवते महापुराणे सप्तमस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिकायां
चतुर्थोऽध्यायः ॥ ४ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

क्वचिच्च संस्पर्शेनाऽविच्छिन्नानुध्यानेन निर्वृतः सुखितः अस्पन्दः स्थिरो यः प्रणयः स्नेहस्तेन च आनन्दस्तेन यत्सलिलं तेनाऽऽमीलिते ईषन्मीलिते ईक्षणे यस्य उत्पुलकः उदञ्चितरोमा तूष्णीमास्ते॥ ४१॥

स प्रह्लादः अकिञ्चनसङ्गो निरुपाधिकस्नेहस्तेन लब्धया उत्तमश्लोकस्य भगवतः पदारविन्दयोः निर्वृत्या मुहुर्मुहुरात्मनः स्वस्य परां निर्वृतिमानन्दं तन्वन् वितन्वन्, मन इत्यार्षत्वाल्लुप्तषष्ठीकं पृथक् पदम्, यद्वा, तत एव सविशेषणस्यापि समासः विषयासङ्गेन दीनस्य मनसः शमं शान्तिं रागादिराहित्यं व्यधाच्चक्रे दुःसङ्गदीनस्येति विशेषणं लोकपरिपाटीकृतं न तु तस्य कदाचिदपि विषयासक्तमभून्मन इति भावः ॥ ४२ ॥

हे राजन् ! तस्मिन्नेवंभूते महाभागवतश्रेष्ठे महाविवेकिनि महात्मन्युक्तविधमाहात्म्ये तत्राप्यात्मजे हिरण्यकशिपुरघ द्रोहमकरोत् ॥ ४३ ॥

एवंविधस्य द्रोहानर्हत्वशङ्कया पृच्छति युधिष्ठिरः—देवर्ष इति । हे देवर्षे ! एतद्वेदितुं ज्ञातुमिच्छामः, किन्तत् ? हे सुव्रत ! शुद्धाय निरपराधाय साधवे महाभागवताय तत्राप्यात्मजाय अनेन द्रोहानर्हविषयत्वमुक्तम्. पितेत्यनेन द्रोग्धृत्वानर्हत्वम् अघं द्रोहमधाच्चक्रे इत्येतत् ॥ ४४ ॥

उक्तविशेषणलब्धार्थमेव विशदयति—पुत्रेष्विति । प्रतिकूलेषु पुत्रेषु विषयभूतेषु पुत्रवत्सलाः पितरः शिक्षार्थं केवलमुपालभन्ते आक्षिपन्ति अपरे यथा शत्रवइवाघं द्रोहं नैव कुर्वन्ति, प्रतिकूलानपि पुत्रान् केवलं शिक्षार्थमुपालभन्ते न तेभ्यो द्रुह्यन्ति, किम्पुनरनुकूलान् साधून् गुरुः पितैव दैवतं येषां तानुपालभन्ते न तु तेभ्यो द्रुह्यन्ति इति भाव' ॥ ४५ ॥

अतो हे ब्रह्मन् ! अस्माकमेतत्कौतूहलम् एतत्प्रश्नकौतूहलं विधम अपनय हे प्रभो ! पुत्राय यः पितुर्द्वेषः स मरणाय पितुर्मरणाय

---

(१) पुत्रेषु प्रतिकूलेषु. इति पाठान्तरम्. श्री-वीर० ।

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

प्रयोजितः प्रयोजकोऽभूदिति यदेतत्प्रश्नकौतूहलमित्यन्वयः पितुः पुत्रविषयकद्वेषः अस्यैव मरणप्रयोजकः कथमभूदित्येवं विध-प्रश्नविषयकौतूहलं विधमेत्यर्थः ॥ ४६ ॥

इति श्रीमद्भागवते महापुराणे सप्तमस्कन्धे श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायाम् चतुर्थोऽध्यायः ॥ ४ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

स्पर्शेषु विषयेषु स्पृहारहितः अत्यन्तप्रापणः प्राणसेवारहितः आनन्दसलिलेन सन्तोषाश्रुजलेन निमिषेण किञ्चिन्निमीलित-नेत्रः ॥ ४१ ॥

अकिञ्चनानां महतां सतां सेवालक्षणसङ्गेन प्राप्तया ॥ ४२ ॥

अघं मरणलक्षणं व्यसनम् ॥ ४३ ॥

"विद्वेषो दयिते पुत्रे कथमासीन्महात्मनि" इति स्वपृष्टं कथा-न्तरासक्त्या नारदेनापरिहृतम् जानन् राजा युधिष्ठिरः पुनरपि जानन्नकरोदयमात्मज इति प्रसङ्ग श्रुत्वा तदेव पृच्छति--देवर्षे इति । पुत्रस्य मरणकारणमासुरकर्म न तु शास्त्रीयनीतिज्ञापनाय साधवे अघमिति संहिताकार्यं न कृतम् ॥ ४४ ॥

अपरे बान्धवाः ॥ ४५ ॥

विभ्रमं परिहर पुत्राय प्रयोजितो विद्वेषः पितुर्मरणायाभूदिति यत्तस्मात्कौतूहलमिति ॥ ४६ ॥

इति श्रीमद्भागवते महापुराणे सप्तमस्कन्धे श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम् चतुर्थोऽध्यायः ॥ ४ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

संयोगे कचिदुत्पुलक इति । संस्पर्शः कृपामयतत्कर्तृका-लिङ्गनस्फूर्तिः ॥ ४१ ॥

दन्त्यपाठे स्वसमं स्वान्तःकरणतुल्यं व्यधात् ॥ ४२ ॥

महाभागवतत्वलक्षणं पूर्वमेव दर्शितम्. महान् भागो भाग्यं श्रीनारदकृपारूपं यस्य महान् पूज्य आत्मा धैर्यगाम्भीर्यादि-युक्तः स्वभावो यस्य ॥ ४३ ॥ ४४ ॥

पुत्रानिति सार्द्धकम् ॥ ४५--४६ ॥

इति श्रीमद्भागवते महापुराणे सप्तमस्कन्धे श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे चतुर्थोऽध्यायः ॥ ४ ॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

कचिदुत्पुलक इति क यामि कुत्र प्रभुं प्राप्स्यामीति कस्माच्चि-त्स्फूर्तिच्छेददुःखेन कुण्ठितेन अकस्मात् स्वहृदय एव दर्शितस्य तत्पादाम्बुजस्पर्शेन निर्वृत उत्पुलकः न तिष्ठति स्पन्दते यस्य स. प्रणयेनानन्दसलिलं ययोस्तथाभूते ईषन्मुद्रिते नेत्रे यस्य स च स च स च सः ॥ ४१ ॥

ननु, तस्य हिरण्यकशिपुप्रभृतिदुःसङ्गे कथं स्थिरा भक्ति-स्तत्र प्रह्लादस्य तस्य सङ्गेनान्येऽपि दुःसङ्गिनस्तत्सहपाठिनः कृतार्था बभूवुः कथं तस्यैव दुःसङ्गाशङ्केत्याह--सङ्गेनेति । दुःसङ्गी-नस्यान्यस्यापि मनः शमं "शमो मन्निष्ठता बुद्धेः" इति भगवद्-वचनात् भगवन्निष्ठमकरोत् ॥ ४२ ॥

अघं द्रोहम् ॥ ४३ ॥

प्रथमाध्यायान्ते पृष्टमेवार्थमतिविस्तरेण पुनः पृच्छति देवर्षे इति । तत्र त्वत्तः श्रव तु तम् ॥ ४४ ॥

नैव घ्नं प्रापयन्ति अतः अनुशासनात् अनुकूलात् ॥ ४५ ॥

कुतूहले भवं कौतूहलं सन्देहं छिन्धि सन्देहः कः पुत्राय पुत्रं हन्तुं पितुर्द्वेषः एष यो द्वेषः मरणाय तस्य स्वपुत्रस्य सेन प्रवर्तितो योजितः ॥ ४६ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् । सप्तमे तु चतुर्थोऽयं सङ्गतः सङ्गतः सताम् ॥ ४ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

उत्पुलको आनन्दोत्थः संस्पर्शेन ध्यानदृष्टभगवच्चरणस्पर्शेन निर्वृतः सुखितन्तूष्णीमास्ते तत्पन्दुःखनाशेन अवलम्बरणा च आन-न्दस्रुतेन यत्सलिलं तेन युक्ते आमीलिते ईषन्मुद्रिते ईक्षणे यस्य सः ॥ ४१ ॥

अकिञ्चनानां भगवदनन्यशरणानां सङ्गमेन लब्धया उत्तम-श्लोकस्य पुण्यकीर्तेर्हरेः पदारविन्दयोर्निषेवया आत्मनः परां निर्वृतिं परं सुखं तन्वन् दुःसङ्गेन दीनस्येतरस्यापि मनः शमं भगव-न्निष्ठं व्यधादकरोत् ॥ ४२ ॥

अघं पापं द्रोहमित्यर्थः ॥ ४३ ॥

यत् शुद्धाय अघमयात् शुद्धे द्रोहं कृतवानित्यर्थ. । एतत् तत्र त्वत्तः वेदितुमिच्छामः ॥ ४४ ॥

पुत्रवत्सलाः पितरो विप्रतिकूलानपि शिक्षार्थमेवोपालम्भन्ते आ-क्षिपन्ति अपरः शत्रुर्यथा तथा अघं नैव कुर्वन्ति हिंसां वाच्य-मनुवशान्वादिगुणयुक्तानुमति अघं न कुर्वन्तीति ॥ ४५ ॥

पुत्राय पुत्रं हन्तुं यो द्वेषः स पितुर्मरणाय प्रयोजितः, पितेति शेषः । इत्येतत्कौतूहलं विधम अपाकुरु ॥ ४६ ॥

इति श्रीमद्भागवते महापुराणे सप्तमस्कन्धीये श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे चतुर्थाध्यायार्थप्रकाशः ॥ ४ ॥

---

भाषा टीका ।

किसी समय [illegible] औत्सुक्यसे आनंदित होकर [illegible] हुआ और [illegible] होकर प्रेम से हुआ [illegible] निमीलित है नेत्र जिसका ऐसा होकर [illegible] ॥ ४१ ॥

[illegible] चरणार-विन्द की सेवा [illegible] आनन्द को परम काष्ठा का विस्तार करता हुआ [illegible] दुःसंग से [illegible] के मन को भी शान्त करता हुआ ॥ ४२ ॥

हे राजन् ! [illegible] महात्मा महाभागवत अपने पुत्र प्रह्लाद से हिरण्यकशिपुने [illegible] क्यों किया ॥ ४३ ॥

युधिष्ठिर उवाच ।

युधिष्ठिरजी [illegible] हे मुने ! मैं आप से इसके जानने की इच्छा करता हूं कि परमसुशील अपने पुत्रको पिताने कैसे द्रोह किया ॥ ४४ ॥

पिता लोग पुत्रो के विषय मे ऐसे वत्सल होते हैं कि अत्यंत प्रतिकूल भी अपने पुत्रों को शिक्षा ही लिये कुछ आक्षेप करते है, शत्रुके तरह दुष्ट अभिप्राय वाले नही होते है ॥ ४५ ॥

फिर गुरु लोगो को देवता के सदृश मानने वाले अपने वशवर्ति सुशील प्रल्हाद सदृशो पर क्या ही कहना, हे ब्रह्मन् यही मुझे बड़ा कौतूहल है कि पिताने पुत्र के लिये मरणार्थ द्वेष किया इस कौतूहल को आप दूर करो ॥ ४६ ॥

इति श्रीमद्भागवत महापुराण सप्तमस्कन्ध चतुर्थोध्याय की भाषा टीका समाप्त ॥ ४ ॥

---

इति श्रीमद्भागवते महापुराणे सप्तमस्कन्धे चतुर्थोध्यायः ॥ ४ ॥

## ॥ पञ्चमोऽध्यायः ॥

नारद उवाच ।

पौरोहित्याय भगवान् वृतः काव्यः किलासुरैः ।
षण्डामर्कौ सुतौ तस्य दैत्यराजगृहान्तिके ॥ १ ॥
तौ राज्ञा प्रापितं बालं प्रह्लादं नयकोविदम् ।
पाठयामासतुः पाठ्यानन्यांश्चासुरबालकान् ॥ २ ॥
यत्तत्र गुरुणा प्रोक्तं शुश्रुवेऽनुपपाठ च ।
न साधु मनसा मेने स्वपरासद्ग्रहाश्रयम् ॥ ३ ॥
एकदाऽसुरराट् पुत्रमङ्कमारोप्य पाण्डव ! ।
पप्रच्छ कथ्यतां वत्स मन्यते साधु यद्भवान् ॥ ४ ॥

प्रह्लाद उवाच ।

तत्साधु मन्येऽसुरवर्य देहिनां सदा समुद्विग्नधियामसद्ग्रहात् ।
हित्वात्मपातं गृहमन्धकूपं वनं गतो यद्धरिमाश्रयेत ॥ ५ ॥

नारद उवाच ।

श्रुत्वा पुत्रगिरो दैत्यः परपक्षसमाहिताः ।
जहास बुद्धिर्बालानां भिद्यते परबुद्धिभिः ॥ ६ ॥
सम्यग्विधार्यतां बालो गुरुगेहे द्विजातिभिः ।
विष्णुपक्षैः प्रतिच्छन्नैर्न भिद्येतास्य धीर्यथा ॥ ७ ॥
गृहमानीतमाहूय प्रह्लादं दैत्ययाजकाः ।
प्रशस्य श्लक्ष्णया वाचा समपृच्छन्त सामभिः ॥ ८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

पञ्चमे गुरुतोऽधीतं त्यक्त्वा विष्णुस्तुतौ रतम् ।
घातयन्द्विपसर्पाद्यैः सुतं दैत्यो न चाशकत् ॥ १ ॥

भगवद्भक्तिरेव विद्वेषे कारणमिति वक्तुमाह--पौरोहित्यायेत्यादिना । काव्यः शुक्रः अतस्तस्य सुतौ दैत्यराजगृहान्तिके न्यवसतामितिशेषः ॥ १ ॥

पाठ्यान्दण्डनीत्यादीन् पाठ्यानसुरबालकानितिचान्वयः ॥ २ ॥

अनु श्रवणानन्तरं तथैव पपाठ च किन्तु तत्साधु न मेने तत्र हेतुः स्वः परः इत्यसद्ग्रहो मिथ्याभिनिवेशस्तदाश्रयो यस्य तत् ॥ ३ ॥ ४ ॥

हे असुरवर्य ! असद्ग्रहादहं ममेति मिथ्याऽभिनिवेशाद्धेतोः समुद्विग्ना धियो येषां ते वनं गतः सन्हरिमाश्रयेतेति यत्तदेवाहं साधु मन्ये कथम्भूतं गृहम् आत्मपातमात्मनोऽधःपातनिमित्तम् कुतः अन्धकूपवन्मोहावहम् ॥ ५ ॥

### श्रीधरस्वामिकृतभावार्थदीपिका ।

परपक्षे विष्णौ समाहिताः परिनिष्ठिताः हासे हेतुः बुद्धिरिति ॥ ६ ॥

विष्णुपक्षैर्भागवतैर्हेतुभूतैः ननु, त्वद्गृहे कुतस्तेषां प्रवेशः सत्यम् तथाऽपि प्रतिच्छन्नैर्वेषान्तरेण छन्नैः ॥ ७ ॥

दैत्यैर्गृहमानीतम् ॥ ८ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका

एवमापृष्टद्वेषनिमित्तस्तद्वृत्तान्तावदुपोद्घातमाह भगवान्नारदः—पौरोहित्यायेत्यादिना । भगवान् काव्यः शुक्रः पौरोहित्याय पुरोहितकर्मकर्तुमसुरैर्वृतः, किलेति प्रसिद्धिं द्योतयति तस्य काव्यस्य सुतौ शण्डामर्काख्यौ दैत्यराजस्य हिरण्यकशिपोः गृहसमीपे आस्तामित्यन्वयः ॥ १ ॥

तौ च शण्डामर्कौ दैत्यराजेन प्रापितं नीतिशास्त्रपठनार्थं प्रापितं प्रह्लादमन्यांश्चासुरबालकांश्च पाठ्यान् दण्डनीत्यादीन् पाठयामासतुः पठनं कारितवन्तौ अत्र नयकोविदसभेति क्रियाविशेषणं यथा नयकोविदाः नीतिशास्त्रनिपुणाभवन्ति तथा पाठयामासतुरिति ॥ २ ॥

तत्र एवं स्थिते प्रह्लादो यद्गुरुणा प्रोक्तं तच्छुश्रुवे श्रुतवान् अनुपठितवांश्च परन्तु तत्प्रोक्तं मनसा साधुत्वप्रधानतया न मेने तत्र हेतु वदन् प्रोक्तं विशिनष्टि—स्वपरासद्ग्रहाश्रयम् अयं स्वः स्वकीयो मित्रम् अयन्तु परः शत्रुरित्येवंरूपो योऽसद्ग्रहो वृथाग्रहरूपोऽभिमानस्तदाश्रयं हेतुभूतम् ॥ ३ ॥

एवं स्थिते हे पाण्डव ! कदाचिदसुरराट् पुत्रं प्रह्लादमङ्कारोप्योत्सङ्गे निधाय हे वत्स पुत्र, भद्र तात यदीप्सितं तत्रोच्यते यत्साधु मन्यते तत्कथ्यताम्. इत्येवं पप्रच्छ ॥ ४ ॥

एवं दैत्येन पृष्टः प्रह्लादस्तमाह—तत्साध्विति । हे असुरवर्य दैत्यराज ! असद्ग्रहात् देहात्माभिमानस्वातन्त्र्याभिमानतन्मूलमद्यादिविषयाभिनिवेशादिरूपादसद्ग्रहाद्धेतोः सदा नित्यं समुद्विग्ना नितरां भीता धीर्येषां तेषां देहिनां कुत्सितदेहधारिणामात्मपातं पतत्यनेनेति पातम् आत्मनः अधःपतनहेतुमन्धकूपतुल्यं गृहं त्यक्त्वा वनमरण्यं प्रविष्टो हरिम् आश्रितवन्बहरं भगवन्तमाश्रयेतेति यत्तदेव साधु मन्ये इति. हित्वेतिपदेन हेयसंक्षेपः हरिमाश्रयेतेत्येनेन उपादेयतत्त्वतदनुष्ठानसंक्षेपः वनं गतइति विविक्तदेशोपलक्षणम् ॥ ५ ॥

एवमुक्तो दैत्यराजः किमाहेत्याह देवर्षिः—श्रुत्वेति । परपक्षसमाहिताः परपक्षे विष्णौ समाहिताः परिनिष्ठिताः पुत्रस्य प्रह्लादस्य गिरः श्रुत्वा दैत्यो जहास हासपूर्वकमुवाचेत्यर्थः । तदेवाह—बालानां बुद्धिः परबुद्धिभिः परस्मिन् शत्रौ विष्णौ बुद्धिर्येषां तैर्भिद्यते अन्यथाक्रियते विपरीताक्रियते इत्यर्थः ॥ ६ ॥

नूनं गुरुगेहे प्रतिच्छन्नैर्विष्णुपक्षैर्द्विजातिभिः ब्राह्मणैः अयं बालो भिद्यते विपरीतबुद्धिः क्रियते अतोऽस्य बालस्य बुद्धिर्यथा भिद्येत तथा सम्यग्विधार्यतां विचार्यतामित्यर्थः ॥ ७ ॥

ततो दैत्ययाजकाः दैत्यपुरोहिताः स्वगृहम्प्रति दैत्यभटैरानीतम् प्रापितं प्रह्लादम् आहूय प्रशस्य प्रस्तुत्य सामोक्तिभिः श्लक्ष्णया मृद्व्या उक्त्या च समपृच्छन् ॥ ८ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

हिरण्यकशिपुप्रह्लादसंवाददर्शनेन भक्तिस्वरूपं हरेर्निरतिशयस्वातन्त्र्यं च निरूपयत्यस्मिन्नध्याये—काव्यः शुक्रः शण्डश्च मर्कश्च शण्डामर्कौ तस्य शुक्रस्य दैत्यराजगृहान्तिके न्यवसतामास्ताम् ॥ १ ॥

राज्ञा हिरण्यकशिपुना ॥ २ ॥

अपाठनस्य [illegible] सूचितं हेतुमाह—नेति । अस्माकुले किञ्चिदाह—न अपेति, “स्वातन्त्र्यात् [illegible]” [illegible] गृह्णातीति [illegible] : पक्षः स आश्रयो यस्य तत्तथानिराकारपक्षतिप्रत्ययहेतुरित्यर्थः । प्रपञ्चस्वरूपस्यासद्ग्रहः शून्यत्वप्रतिपादकः [illegible] अद्वैतविषयत्वादित्यर्थसहिता जीवपरस्वरूपयोरत्यन्ताभावं गृह्णातीति स्वरूपासद्ग्रहः जीवपरमात्मनामभिन्नाविति यः सिद्धान्तः स आश्रयः यस्य तत्तथा अद्वैतविषयत्वादित्यर्थः इति वा, स्वरूपासद्ग्रहः जीवाभिन्नः [illegible] पातः स आश्रयो यस्य तत्तथा वैष्णवसिद्धान्तविरुद्धत्वादित्यर्थः इति वा व्याख्याभेदः [illegible] ॥ ३ ॥ ४ ॥

हे असुरवर्य ! असद्ग्राहिपराभिनिवेशात् समुद्विग्नधियां परवशीकृतबुद्धीनां देहिनां तत्साधु संसारनिर्मूलसाधनं मन्य इत्यन्वयः । किं तदिति. तत्राह—हित्वेति. आत्मपातं स्वस्य निरयपातम् अन्धमज्ञानं यस्य कूप निधानस्थानं गृहं हित्वा वनं सज्जनसङ्गमकल्ययां गतः ॥ ५ ॥

सज्जनशिक्षार्थं प्रह्लादेन तत्त्वमुक्तं न तु तं ग्राहयितुं तस्यासुरत्वेन दुराग्रहगृहीतत्वात्तत्फलमाह—श्रुत्वेति । परिहासः फलं परबुद्धिभिः प्रतिपक्षबुद्धिभिःपरपक्षसमाहिताः पूर्वपक्षविषयत्वेन प्रवृत्ताः ॥ ६ ॥

पुत्रस्येमां गिरमश्रुत्वेव न हासः किं त्वनभिमत एवेत्यभिप्रेत्याह—सम्यगिति । विधार्यतामवधार्यतां विष्णुपक्षः प्रतिच्छन्नो येषां ते तथा तैर्विष्णुसिद्धान्तमभिगृह्यास्थितैरित्यर्थः ॥ ७ ॥

अवशवशीकरणाय चत्वार उपाया विहितास्तत्र द्विजातीनां सामोपाय एव श्रेयानिति दर्शयितुं परकृतबुद्धिभेदश्च ज्ञातुं तत्रापि योग्यानां भगवत्तत्त्वविषयज्ञाननिश्चयाय च दैत्यभयाच्च दैत्ययाजकाः प्रह्लादमपृच्छन्नित्याह । गृहमिति—सामभिर्वचनैः ॥ ८ ॥

वत्स ! प्रह्लाद ! भद्रं ते सत्यं कथय मा मृषा ।
बालानति कुतस्तुभ्यमेष बुद्धिविपर्ययः ॥ ९ ॥
बुद्धिभेदः परकृत उताहो ते स्वतोऽभवत् ।
भण्यतां श्रोतुकामानां गुरूणां कुलनन्दन ! ॥ १० ॥

प्रह्लाद उवाच ।

(१) स्वः परश्चेत्यसद्ग्राहः पुंसां यन्मायया कृतः ।
विमोहितधियां दृष्टस्तस्मै भगवते नमः ॥ ११ ॥
स यदाऽनुव्रतः पुंसां पशुबुद्धिर्विभिद्यते ।
अन्य एष तथाऽन्योऽहमिति भेदगताऽसती ॥ १२ ॥
स एष आत्मा (२) स्वपरेत्यबुद्धिभिर्दुरत्ययानुक्रमणो निरूप्यते ।
मुह्यन्ति यद्वर्त्मनि वेदवादिनो ब्रह्मादयो ह्येष भिनत्ति मे मतिम् ॥ १३ ॥
यथा भ्राम्यत्ययो ब्रह्मन्स्वयमाकर्षसन्निधौ ।
तथा मे भिद्यते चेतश्चक्रपाणेर्यदृच्छया ॥ १४ ॥

नारद उवाच ।

एतावद्ब्राह्मणायोक्त्वा विरराम महामतिः ।
तं निर्भर्त्स्याथ कुपितः स दीनो (३) राजसेवकः ॥ १५ ॥
आनीयतामरे ! वेत्रमस्माकमयशस्करः ।
कुलाङ्गारस्य दुर्बुद्धेश्चतुर्थोऽस्योदितो दमः ॥ १६ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

बालान्सर्वानति अतिक्रम्य तुभ्यं तव ॥ ९ ॥ १० ॥

अहो मायामोहिताः भवन्तो मामाक्षिपन्तीत्याशयेन तावदाह—स्वःपरश्चेति । मिथ्याभिनिवेशो यदीयया माययैव कृतो न तु वास्तवः अत एव तदीयया मायया विमोहितबुद्धीनां भवतामेव दृष्टो न तु मम तस्मै अचिन्त्यमायेश्वराय नमः ॥ ११ ॥

अहो किमेतत्प्रलपसि तव बुद्धिभेदो यतोऽजनस्तं कथयेत्याक्षिप्तः सन्स्तत्प्रसादादेवेत्युत्तरमाह—स इति त्रिभिः । स भगवान्यदाऽनुव्रतोऽनुकूलो भवति तदा पशूनामविवेकिनामिव बुद्धिर्भेदगता असती मिथ्या संसारविषया विभिद्यते अभिन्नात्मनिष्ठा भवति ॥ १२ ॥

भेदस्यासत्त्वं दर्शयन्नाह—स एष परमात्मैव स्वःपर इति चाविवेकिभिर्निरूप्यते युक्तश्चैतत् यतो यस्य वर्त्मनि जिज्ञासायां ब्रह्मादयोऽपि मुह्यन्ति, तत्र हेतुः, दुरत्ययं दुर्घटमनुक्रमणमनुचरितमनुवर्णनं वा यस्य ॥ १३ ॥

ननु, निर्विकारस्य कथं मतिभेदकत्वं ? तत्राऽह—यथेति । यथा अयो लोहमाकर्षस्यायस्कान्तस्य समीपे स्वयमेव भ्रमति तथा मे चेतश्चक्रपाणेः सन्निधौ तव कुतो जातस्तत्सन्निधिः ? तत्राऽह—यदृच्छयेति कस्य तपोदानादेः फलमेतदिति न ज्ञायत इत्यर्थः ॥ १४ ॥

राजसेवक उवाचेति शेषः ॥ १५ ॥

अरे वेत्रं कशाऽऽनीयतां सामदानभेददण्डानां मध्ये चतुर्थो दमो दण्डोऽस्य दुर्बुद्धेरुदित उक्तः शास्त्रेषु दुर्बुद्धित्वे हेतुः कुलस्याङ्गारवन्नाशहेतोः ॥ १६ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

प्रश्नमेवाह—वत्सेति द्वाभ्याम् । हे वत्स ! प्रह्लाद ! ते तव भद्रमस्तु, न त्वां ताडयाम इति भावः । सत्यं यथार्थं कथय मृषा मिथ्या मा कथय. किं कथयेयम् ? तत्राह—बालानिति । बालानति अतिक्रम्य सर्वान् बालान् विहाय तुभ्यं तवैव एष बुद्धिविपर्यासः कुतो हेतोः ? अभूदिति ॥ ९ ॥

नाभि·

किमयं बुद्धिविपर्यासः परैर्विष्णुपक्षपातिभिः

---

(१) परः स्वश्चेति पाठान्तरम्. वीर० विज० क्रम० वि-चक्र० सिद्धा० । (२) स्वपरेत्यबुद्धिर्दुरत्ययानुक्रमणो-इति पाठान्तरम्. वीर
(३) राजसेवकमिति पाठा० वीर० ।

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

उताहो आहोस्वित् स्वत एव तवाभवत् हे दैत्यकुलनन्दन ! त्वद्गुरूणां श्रोतुकामानामस्माकं भवतां कथ्यतामिति ॥ १० ॥

एवमुक्त आह प्रह्लादः-पर इत्यादिना चतुर्भिः । यत्पृष्टं बुद्धिभेदः परकृतः उत स्वाभाविक इति तत्र तमिमं स्वपरविभागं देहात्माभिमानरूपाज्ञानमूलकं भगवन्मायामोहितानामिति निन्दितुं तावद्देहात्माभिमानादिरूपमोहनिमित्तविचित्रमायाशक्तियुक्तं भगवन्तं नमस्करोति-पर इति. यस्येश्वरस्य मायया हेतुना स्व परश्चेत्यसद्ग्राहः इदं मित्रमयं शत्रुरयमन्देवो मनुष्यो ब्राह्मण इत्यादिदेहात्मभ्रमः कृतः सम्पादितः विमोहितधियां भगवन्मायया विमोहिता धीर्येषां तेषां भवतामेव दृष्टो न ममेति भाव तस्मै पूर्णषाड्गुण्याय नमः विमोहितधियामित्यनेन "दैवी ह्येषा गुणमयी मम माया दुरत्यया" इति भगवदुक्तरीत्या भगवदप्रपन्नानां भवतामेवासद्ग्राहः न तु तत्प्रपन्नस्य मम इति सूचितम् ॥ ११ ॥

तदेव व्यञ्जयन्नसद्ग्राहं निन्दति—स इति । स भगवान् यदा पुंभिरनुव्रतः आश्रितः तदा पुंसां पशुबुद्धिः पशुष्विव बुद्धि देहात्माभिमानरूपा बुद्धिर्विभिद्यते निरस्यते कासौ पशुबुद्धिः ? या, अन्य एष अन्योऽहम् इत्येवंरूपा सर्वशरीरेषु ज्ञानैकाकारतया एकजातीयतया चात्मस्वरूपाणां विभिन्नता एव इत्येवंरूपा भेदबुद्धिः अनात्मभूतदेहादिषु मनुष्यादिशरीरगता अत एवासती दुष्टा अत एव वा सैषा पशुबुद्धिरित्यर्थः ॥ १२ ॥

एव स्वपरविभागे तु मूलं देहात्मभ्रमादेर्भगवन्मायाहेतुकत्व कथनेन तदनुग्रहतत्सन्निधिकथनेन च भगवत एवाज्ञानप्रदत्वं तन्निवर्तकत्वञ्चोक्तम्. अथ ज्ञानप्रदातृत्वमपि तस्यैवेति ह—स इति । स उक्तविध एव आत्मा प्रकृत. परमात्मा स्वपरेत्यबुद्धि स्व. परइति बुद्धिरहितः सर्वान्तरात्मतया सर्वत्र समतया स्थितइत्यर्थः । दुरन्वयं पुरुषान्तरैरनन्वेष्टव्यमनुक्रमणं व्यापारो यस्य तादृशो निरूप्यते अन्वेष्टव्यः सर्वे सर्वशक्तिलीलया करोतीत्यर्थः । यस्य वर्त्मनि मार्गे तत्स्वरूपविमर्शने वेदवादिनो ब्रह्मादयोऽपि मुह्यन्ति स एष एव परमात्मा मम मतिं बुद्धिं भिनत्तीत्यर्थः । स्वपरेत्यबुद्धिरित्यनेन देवासुरादिविभागमन्तरेण सर्वेषां शास्तृत्वमुक्तम्. दुरत्ययानुक्रमण इत्यनेन सर्वशक्तित्वं वेपराधीनत्वं हित्यञ्चोक्तम्. यद्वर्त्मनि ब्रह्मादयोऽपि मुह्यन्तीत्यनेन तत्प्रसादादेव ब्रह्मादीनामपि ज्ञानोदयः अन्यथा केवलं तेषामपि मोह एवेत्युक्तम्. स्वपरेत्यबुद्धिभिरिति तृतीयान्तमपि पाठान्तरं तत्र स्वः पर इति न विद्यते बुद्धिर्येषां तैः स्वपरविभागात्मकविवेकरहितैरित्यर्थः । तादृशैर्दुरन्वयानुक्रमणोऽनितरसाधारण व्यापारो निरूप्यते ज्ञायते इत्यर्थः । तत्प्रसादादेव तद्देहात्माभिमानादिभिः ज्ञानाज्ञानादिप्रदत्वेन परमात्मा ज्ञायते इत्यर्थः ॥ १३ ॥

६ एवं ज्ञानप्रदत्वमुक्तम् अथ तस्यैव तत्प्रदानेन स्वस्य प्रवर्तकत्वमाह—यथेति । आकर्षसन्निधौ अयस्कान्तसन्निधाने यथा यन्तोहं स्वयमेव यथा भ्रमति, भ्राम्यति चञ्चलं भवतीत्यर्थः । तथा स्वेच्छया चेतोऽपि चक्रं पाणौ यस्य तस्य हरेः सन्निधौ यदृच्छया देवान्तरनिरपेक्षं भिद्यते तत्प्रसादादयस्कान्तसान्निध्याइव ममैवंविधा बुद्धिवृत्तिरभूदित्यर्थः । अनेन "बुद्धिभेदः परकृतः उताहो ते स्वतोऽभवद्" इति प्रश्नस्योत्तरमुक्तं भवति ॥ १४ ॥

एवमुक्तो गुरुराहेत्याह-मुनिः—एतावदिति । ब्राह्मणान् दैत्ययाजकान् प्रत्येवम् एतावदेवोक्त्वा महामतिः स प्रह्लादो विरराम तूष्णीम्बभूव. ततो दीनः उपायान्तरेण तं स्ववशीकर्तुमशक्तो गुरुः तं निर्भर्त्स्य कुपितस्सन् राजसेवकम् उवाचेति शेषः॥१५॥

तदेवाह—आनीयतामिति द्वाभ्याम् । अरे हे राजभट ! इयर्थः वेत्रं प्रहरणसाधनयष्टिविशेषमानीयताम् अस्माकमयशोऽपकीर्तिङ्करोतीत्ययशस्करस्तस्य अतएव कुलस्य दैत्यकुलस्याङ्गारवन्नाशकः तस्य दुर्बुद्धेरितः पर इतः शिक्षणोपायः चतुर्थ एव स्यात् दण्ड एवो पायः कर्तव्यो, न सामादिरित्यर्थः । चतुर्थोऽस्योदितो दम इति पाठे उदितः शास्त्रोक्तः चतुर्थो दण्डोपाय एवास्य दमो दमनसाधनमित्यर्थः ॥ १६ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

तुभ्यं तव यो बुद्धिविपर्यय एव तावन्न् अवस्थान् अतिक्रम्य कुतोऽभूदिति शेषः बालानां बुद्धिमतिक्रम्यैव बुद्धिभेदः कुतः तस्मात्तुभ्यं रोचित इति वा ॥ ६ ॥

एतदेव विवृण्वन्ति-बुद्धिभेद इति । अस्माकं तत्त्वेन वक्तव्यं त्वयेत्यतो गुरूणामिति ॥ १० ॥

उत्तरं वक्ति—पर इति । पुंसां योऽयं परस्त्वेत्यसद्ग्राहः "एकमेवाद्वितीयम्" इतिश्रुतेः परमार्थवस्तुन एकत्वे प्रमाणसिद्धे सिद्धे तत्र श्रीनारायणमन्तरेण परविषयकर्तृत्वे स्वविषयकर्तृत्वमिति भेदः स्वातन्त्र्यकल्पनालक्षणोभन्यथ ज्ञानत एव परमेश्वरस्येच्छया कृतः कल्पितः सर्वकर्तृत्वाच्चरस्य तस्मै भगवते महामहिम्ने नमस्कुर्वे । तत्प्रत्युक्तमित्याह-विमोहितधियामिति.इदं प्रत्यक्षसमा-स्वादृशी बुद्धिर्भवादृशैरेव कार्येति शेषः । विमोहितेत्यनेनापीश्वरकर्तृत्वं ज्ञायते ॥ ११ ॥

यन्मायेत्युक्तं स्पष्टं दर्शयति–स यदेति । स भगवान् यदा पुंसां स्वात्मपरबुद्धिजनकत्वेनानुगतोऽनुकूलो भवति तदा पशुबुद्धिरहबुद्धिर्विभिद्यते तत्कथमित्यत उक्तम्, अन्य इति. एष देवदत्तोऽन्यः स्वतन्त्रोऽहमन्यः स्वतन्त्र इति किमस्याधिकरणमिति तत्राह-देहगतेति. अत एवासती बुद्धिज्ञानत्वेन मोक्षानुपयोगित्वात् "अन्यो सावन्यो हमस्मीति न स वेद यथा पशुः" इति श्रुतिगतीके तानेन श्लोकेन जीवपरयोर्भेदं निषिध्य चिदैक्यं विधीयत इतीममर्थं विधायाऽर्थान्तरकल्पनायां किं प्रमाणमितीयमाशङ्का— स्वातन्त्र्येणान्यसत्ताङ्गीकारनिषेधाय श्रुतिरित्यवयम "अन्योसावन्योह- मिति पश्यन्न इति स्म ह"—

"आत्मानमन्तर्यमयेदिति भेदं स्वरूपतः ।
आह तद्ब्रह्मणोऽधीना भिन्ना जीवाः सदैव तु ॥
स्वरूपसत्ताकर्तृत्वं भोगो मोक्षस्तथैव च ।
मुक्तस्यावस्थितिश्चैव सर्वं विष्णोर्वशे सदा" ॥

इत्यनेन परिहृतेति ज्ञातव्यम् ॥ १२ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी।

दुर्गमम् अनुक्रमणं अनुसरणं यस्य सः न च सुबुद्धिभिः शास्त्रैः सुगममेव तदनुसरणमिति वाच्यमित्याह—यद्वर्त्मनि यत्प्राप्तिमार्गेऽनुसरणरूपे भक्तियोगे वेदवादिनो वेदार्थतात्पर्यविवेचका अपि मुह्यन्ति यूयन्तु ज्ञानलवदुर्विदग्धाः किमुतेति भावः। एष भगवान् मे मतिं भिनत्ति युष्मन्मतिभ्यस्सकाशाद्भिन्नाङ्कुरोति ॥ १३ ॥

स एव मतेर्भेदः किमाकार इति चेत्तत्राह—यथा अयो लोहं आकर्षस्यायस्कान्तस्य सन्निधौ स्वयं भ्राम्यति तथैव मे चेतः चक्रपाणेः सन्निधौ स्वयमेव भ्राम्यति भिद्यते युष्मच्चेतोभ्यः सकाशाद्भिन्नं भवति यदृच्छयेति नात्र मत्कर्मतपोदानादेर्हेतुत्व स्स्मभवतीत्यर्थः। अयमर्थः अयस्कान्तेन स्वशक्त्यैव लोहमाकृष्य स्वसंयुक्तीक्रियते तत्र किमपि कारणं प्रयोजनञ्च नास्तीत्ययस्कान्तस्य स्वभाव एव यथा तथैव चक्रपाणेरपि स्वभाव एवायं यत्कृपापरवशतया स्वभक्तस्य चेतस' स्वस्मिन्नाकर्षणमिति तत्र मम किं स्वातन्त्र्यमस्तीति भाव' ॥ १४ ॥

राजसेवक उवाचेति शेष' ॥ १५ ॥

वेत्रं प्रहरणदण्डविशेषः यद्यमयशस्करस्ततोऽस्य दुर्बुद्धेरुपायानां मध्ये चतुर्थो दमो दण्डः उदितः उक्तः शास्त्रेषु ॥ १६ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

बालानुपति उल्लङ्घ्य युष्मं तव बुद्धिविपर्ययः कुतो जातः ॥ ९ ॥

ते बुद्धिभेदः प्रवृत्तिमार्गमस्मदाद्यनुष्ठितं त्यक्त्वा वासुदेवे बुद्धिप्रवेशः परेण केनापि कृतः उताहो स्वतोऽभवदिति भण्यताम् ॥ १० ॥

परः स्वश्चेति असद्ग्राहः दुराग्रह' यस्य मायया प्रकृत्या कृतः तयैव मोहितधियां भवतां दृष्टो, न तु मम. तस्मै भगवते नमः सर्वस्य वासुदेवात्मकत्वात् तदनुग्रहतो वासुदेवबुद्धिप्रवेशस्तस्य श्रीमद्गुरोर्विशेषतः परत्वासम्भवात् हरिगुरुप्रसादं विना स्वतश्च वासुदेवे बुद्धिप्रवेशासम्भवात् बुद्धिभेदः परकृतः उताहो ते स्वतोऽभवदिति वाक्यं सर्वथाऽनुपपन्नमिति भावः ॥ ११ ॥

तव बुद्धिभेदः कुत इत्यत्राह-सएषइति। स भगवान् यदा अनुवृत्तः अन्तर्यामिरूपेण गुरुरूपेण च अनुकूलो भवति तदा एषोऽन्योऽहमन्यः इति भेदगता इत्येवं वासुदेवात्मकभ्रान्तिविलम्बितं भेदं प्राप्ता अत एवासती संसारप्रापिका अत एव पशूनामिव विवेकहीना बुद्धिर्विभिद्यते प्रवृत्तिमार्गाद्भिभिन्ना भवति वासुदेवे प्रविशतीत्यर्थः ॥ १२ ॥

नन्वस्माकमनुव्रतः स कुतो नेत्यत्राह-स इति। स एष आत्मा परमात्मा दुरत्ययं दुरधिगममनुक्रमणम् अतत्त्वज्ञैर्वर्णनं यस्य अत एव स्वस्य परः शत्रुरिति अबुद्धिभिः परमात्मा भजनीय इति नास्ति बुद्धिर्येषां तैर्निरूप्यते न तु भवादृशास्तत्प्रपन्ना भवन्तीति भावः। "न मां दुष्कृतिनो मूढाः प्रपद्यन्ते नराधमाः। माययापहृतज्ञाना आसुरं भावमाश्रिताः" इति श्रीमुखोक्तेः ॥ भवतामसुरपक्षीयाणान्तु का वार्ता वेदवादिनो वेदत्रयीप्रोक्तकर्मनिष्ठास्तेभ्योऽपि श्रेष्ठाः ब्रह्मादय. यद्वर्त्मनि यत्प्राप्तिमार्गे मुह्यन्ति स्वपरेति सन्धिरार्षः ॥ १३ ॥

तत्कृपया तु मम बालस्यपि चेतस्तद्वर्त्मनि प्रविशतीत्याह-यथेति। यथा आकर्षसन्निधौ अयस्कान्तसमीपे अयो लोहः स्वयं भ्राम्यति तथा मे चेतो यदृच्छया चक्रपाणेः सन्निधौ भवतां प्रकृतिमार्गाद्भिन्नं भवति, तद्वर्त्मनि प्रविशतीत्यर्थः ॥ १४ ॥

त प्रह्लादम् स ब्राह्मणो निर्भर्त्स्याहेति शेषः ॥ १५ ॥

अरे वेत्रमानीयताम् यतोऽयमस्माकमयशस्करः अतोऽस्य कुलाङ्गारस्य दैत्यकुलनाशहेतोः दमः दमनहेतुः उपायानां चतुर्थो दण्ड उदितः शास्त्रे उक्तः ॥ १६ ॥

---

भाषाटीका।

हे वत्स प्रह्लाद! तुमारा भला हो तुम सच कहो झूठ मत बोलो कि इन बालकों को भी अतिक्रमण करके यह तुमारी विपरीति बुद्धि कैसे हुई ॥ ९ ॥

यह तुमारी बुद्धि का भेद किसी दूसरे के सिखाने से है अथवा आपही से है, हे कुलनन्दन! हम तुमारे गुरु लोक सभी सुनने की इच्छा करते हैं तुम कहो ॥ १० ॥

प्रह्लादउवाच ॥

प्रह्लाद बोले, कि यह अपना यह पराया ऐसा असत् ग्रहण जिसकी माया से मोहित बुद्धि वाले असत्पुरुषों को होरहा है उस भगवान को नमस्कार है ॥ ११ ॥

वही भगवान् जब पुरुषों पर अनुकूल होता है तब यह अन्य है मैं अन्य हूं इस प्रकार पशुओं के तरह भेद को प्राप्त जो दुष्ट बुद्धि सो मेरीतरह भेद को प्राप्त हो जाती है ॥ १२ ॥

जिसके चरित्र का अनुवर्णन दुर्घट है और अबुद्धि लोग जिस को स्व पर ऐसा करके वर्णन करते हैं और जिसके मार्ग से वेद वादि बड़े २ ब्रह्मादिक मोहित होते हैं वही परमात्मा हमारी मति का भेद करते हैं ॥ १३ ॥

हे ब्रह्मन्! जैसे चुंबक के समीप में लोह आपही खिंच जाता है इसी प्रकार मेरा भी चित्त उन चक्रपाणि की इच्छा से भिन्न होरहा है ॥ १४ ॥

नारद उवाच ॥

नारदजी बोले, कि—महामति प्रह्लाद ब्राह्मण से इतना कह कर चुप होगए ॥ वह विचारा दीन ब्राह्मण राज सेवक प्रह्लाद को भय दिखाकर कुपित होकर बोला ॥ १५ ॥

अरे! हमारा वेत्र तौ लाओ यह हमारी अकीर्ति कराने वाला है इस कुलांगार दुर्बुद्धि को चतुर्थ उपाय दंड ही उचित है ॥ १६ ॥

दैतेयचन्दनवने जातोऽयं कण्टकद्रुमः ।
यन्मूलोन्मूलपरशोर्विष्णोर्नालायितोऽर्भकः ॥ १७ ॥
इति तं विविधोपायैर्भीषयंस्तर्जनादिभिः ।
प्रह्लादं ग्राहयामास त्रिवर्गस्योपपादनम् ॥ १८ ॥
तत एनं गुरुर्ज्ञात्वा ज्ञातज्ञेयचतुष्टयम् ।
दैत्येन्द्रं दर्शयामास मातृमृष्टमलङ्कृतम् ॥ १९ ॥
पादयोः पतितं बालं प्रतिनन्द्याऽऽशिषाऽसुरः ।
परिष्वज्य चिरं दोर्भ्यां परमामाप निर्वृतिम् ॥ २० ॥
आरोप्याङ्कमवघ्राय मूर्द्धन्यश्रुकलाऽम्बुभिः ।
आसिञ्चन्विकसद्वक्त्रमिदमाह युधिष्ठिर ! ॥ २१ ॥

हिरण्यकशिपुरुवाच ।

प्रह्लादानूच्यतां तात ! स्वधीतं किञ्चिदुत्तमम् ।
कालेनैतावताऽऽयुष्मन् ! यदशिक्षद्गुरोर्भवान् ॥ २२ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

तत्कुतः ? तत्राह—दैतेया एव चन्दनद्रुमास्तेषां वनेऽयं कण्टकद्रुमतुल्यो जातः, तदेवाऽऽह, यस्य दैतेयचन्दनवनस्य मूलोन्मूलने परशुस्थानीयस्य विष्णोरयमर्भक एव नालायितो नालवदाचरत् यथा परशोश्छेदकत्वे कवलादिद्रुमनिर्मितो दण्डः सहकारी न तेन विना छेदनासम्भवात्तथाऽयं विष्णोर्दैत्यमूलच्छेदे हेतुर्जात इत्यर्थः ॥ १७ ॥

इति तं प्रह्लादं भीषयन्धर्मार्थकामत्रिवर्गस्य प्रतिपादकं शास्त्रमध्यापयामास ॥ १८ ॥

ज्ञात ज्ञेयानुपायानां चतुष्टयं सामदानादि येन तं दैत्येन्द्रं प्रति मात्रा मृष्टमुद्वर्त्य स्नापितम् अलङ्कृतं भूषणतिलकादिभिः ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

कुलनाशकत्वं व्यनक्ति—दैतेया एव चन्दनद्रुमाः तेषां वनेऽयं कण्टकद्रुमतुल्यो जातस्तन्मूलेऽपि तेषां दैतेयचन्दनवनानां यानि मूलानि तेषामुन्मूलने छेदने परशोः परशुस्थानीयस्य विष्णोरयमर्भको नालायितः नालवदाचरितवान् यथा परशोश्छेदकत्वे कर्बुरादिद्रुमनिर्मितो दण्डः सहकारी तं विना छेदनासंभवात् तथा अयं विष्णोः दैत्यमूलस्य छेत्तुः सहकारी जात इत्यर्थः ॥ १७ ॥

इतीत्थं वदन् तर्जनादिभिर्नानोपायैर्भीषयन् प्रह्लादं तं त्रिवर्गस्योपपादनं धर्मार्थकामप्रतिपादकं शास्त्रं ग्राहयामास ॥ १८ ॥

ततो गुरुरेनं प्रह्लादं ज्ञातं ज्ञेयानामुपायानां सामादीनां चतुष्टयं यस्य तादृशं ज्ञात्वा मात्रा मृदा उद्वर्त्य स्नापितम् अलङ्कृतञ्च प्रह्लादं दैत्येन्द्रं प्रति दर्शयामास, पितृसन्निधौ प्रापयामासेत्यर्थः ॥ १९ ॥

ततः पादयोः प्रणमन्तं नमस्कुर्वन्तं बालम् आशिषा आशीः पूर्वकं प्रतिनन्द्य असुरो हिरण्यकशिपुः दोर्भ्यां भुजाभ्यां (पुत्रस्य शिरः) परिष्वज्य परमां निर्वृतिमानन्दं प्राप्तवान् ॥ २० ॥

तत उत्सङ्गे निधाय मूर्द्धन्युपाघ्राय च अश्रुकलाम्बुभिर्हर्षाश्रुजलबिन्दुभिरासिञ्चन् विकसद्वक्त्रं यस्य तादृशो दैत्यः सुतं प्रतीदं वक्ष्यमाणमाह—युधिष्ठिरेति पाठे सम्बोधनम् ॥ २१ ॥

तदेवाह—प्रह्लादेति । हे आयुष्मन् तात ! पुत्र प्रह्लाद ! भवानेतावता कालेन गुरोः सकाशाद्यदुपशिक्षदधीतवांस्तन्मध्ये किञ्चिदुत्तमं स्वधीतं सम्यगावृत्त्या गृहीतं तत् हे तात ! प्रह्लाद, अनूच्यतां सम्यगनुक्रमेण पठ्यताम् ॥ २२ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

उन्मूलयतीत्युन्मूलः स चासौ परशुश्च उन्मूलपरशुस्तत् स्वदैतेयचन्दनवनस्य मूलं तन्मूलपरशुस्तस्य नालायितः मण्डपवत्तन्वानः ॥ १७ ॥

त्रिवर्गस्योपपादनं शास्त्रम् ॥ १८ ॥

ज्ञातं ज्ञेयानां धर्मादिपुरुषार्थानां चतुष्टयं येन स तथा तं ज्ञातज्ञेयसाधनचतुष्टयं वा मातृमृष्टं शरीरमलत्यागेन स्नानं कारितम् १९ ॥ २० ॥ २१ ॥

प्रह्लाद उवाच ।

श्रवणं कीर्तनं विष्णोः स्मरणं पादसेवनम् ।
अर्चनं वन्दनं दास्यं सख्यमात्मनिवेदनम् ॥ २३ ॥
इति पुंसाऽर्पिता विष्णौ भक्तिश्चेन्नव लक्षणा ।
क्रियते भगवत्यद्धा तन्मन्येऽधीतमुत्तमम् ॥ २४ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

सुष्ठु अधीतं पठितम् ॥ २२ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

पुनश्च स एव तादृशपरमशुद्धरूपस्य विष्णोर्नालायितः इत्यसामञ्जस्यमतीवेति भावः ॥ १७—२२ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

यस्य वनस्य मूलोन्मूलने परशुस्थानीयस्य विष्णोर्नालायितो दण्डस्थानीयः लोके हि परशोर्दण्डो वर्बुर एव भिन्नः स च कण्टकिद्रुमः ॥ १७ ॥

ग्राहयामास ग्राहयितुं यतते स्मेत्यर्थः ॥ १८ ॥

ज्ञातं ज्ञेयं ज्ञातुमर्हं चतुष्टयं सामदानभेददण्डात्मकमुपायचतुष्कं येन तत् ॥ १९—२१ ॥

सुष्ठु अधीतं संशयादिरहितं अनुकूलं गुरोर्हिरण्यकशिपुमते शुक्राचार्यात्मजात् प्रह्लादमते गुरोः श्रीनारदात् ॥ २२ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

किञ्च दैतेयचन्दनवने अयं कण्टकद्रुमः यत् यस्य दैतेयचन्दनवनस्य यन्मूलं हिरण्यकशिपुप्रभृतिदैत्ययूथपसमूहभूनन्तदुन्मूलयतीति तथा तस्य परशोः परशुस्थानीयस्य विष्णोर्नालयियो नालमिवाचरदयमर्भकः ॥ १७ ॥

त्रिवर्गस्य धर्मार्थकामसमूहस्योपपादनं प्रतिपादकं प्रवृत्तिशास्त्रं ग्राहयामास ॥ १८ ॥

ततस्तदनन्तरं गुरुः पाठकः एनं प्रह्लादं ज्ञातं ज्ञेयचतुष्टयं ज्ञातव्यभूतानां सामदानभेददण्डानां चतुष्टयं येन तं तथाभूतं ज्ञात्वा मात्रा मृष्टमुद्वर्त्यस्नापितमलंकृतञ्च दैत्येन्द्रंप्रति दर्शयामास ॥ १९ ॥

चिरञ्जीवेत्याद्याशिषा प्रतिनन्द्य ॥ २० ॥

अश्रुकलाम्बुभिः आनन्दाश्रुबिन्दुजलैः ॥ २१ ॥

आयुष्मन् हे तात ! प्रह्लाद ! एतावता कालेन गुरोस्सकाशात् भवान् यत्किञ्चित् अशिक्षत् तत्र उत्तमं सारभूतं सुष्ठु अधीतम् अनूच्यताम् अनुकथ्यतां भवता ॥ २२ ॥

---

भाषा टीका ।

यह दैत्य रूप चंदन वन में कंटकद्रुम उत्पन्न हुआ है जिस दैत्य रूप चन्दन वन की मूलका उन्मूलन करने वाला जो विष्णुरूप परशु ( कुल्हाडी ) उसका नाल ( बेंटा ) रूप सहकारी यह बालक है ॥ १७ ॥

इस तरह तर्जन आदि नाना उपायों से प्रल्हाद को भय देते हुए, अर्थ धर्म और काम इस त्रिवर्ग के प्रतिपादक शास्त्र को पढाने लगे ॥ १८ ॥

तदनंतर गुरुने जाना कि यह सामदानादि चारों उपायों को जानचुका तब माता से उबटन स्नान आदि पूर्वक अलंकृत कराकर, दैत्येन्द्र के समीप ले गये ॥ १९ ॥

असुरराज भी चरणों मे पड़े हुए बालक को असीस द्वारा अभिनंदन कर बाहुओं से आलिंगन कर बड़े हर्ष को प्राप्त हुआ ॥ २० ॥

और गोद मे बैठा कर मस्तक आघ्राणकर उसके प्रसन्न मुख को प्रेमाश्रुओं से सींचता हुआ, हे युधिष्ठिर ! यह वक्ष्य माण वाक्य बोला ॥ २१ ॥

हिरण्यकशिपुरुवाच ॥

हिरण्यकशिपु बोला, कि—तात प्रह्लाद ! तुम्हारी दीर्घ आयु हो इतने काल तक जो तुमने कुछ गुरुजी से सीखा और जो अच्छा पढा उसे कहो ॥ २२ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

पादसेवनं परिचर्या, अर्चनं पूजा, दास्यं कर्मार्पणम्, सख्यं तद्विश्वासादि, आत्मनिवेदनं स्वशरीरसमर्पणम्, यथा विक्रीतस्य गवाश्वादेर्भरणपालनादिचिन्ता न क्रियते तथा देहं तस्मै समर्प्य तच्चिन्तावर्जनमित्यर्थः ॥ २३ ॥

निशम्यैतत्सुतवचो हिरण्यकशिपुस्तदा ।
गुरुपुत्रमुवाचेदं रुषा प्रस्फुरिताधरः ॥ २५ ॥
ब्रह्मबन्धो ! किमेतत्ते विपक्षं श्रयताऽसता ।
असारं ग्राहितो बालो मामनादृत्य दुर्मते ! ॥ २६ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

इति नव लक्षणानि यस्याः सा अधीते न चेद्भगवति विष्णौ भक्तिः क्रियते साचार्पितैव सती यदि क्रियेत ननु कृता सती पश्चादर्प्येत तदुत्तममधीतं मन्ये नत्वस्माद्गुरोरधीतं शिक्षितं वा तथाविधं किञ्चिदस्तीति भावः ॥ २४ ॥ २५ ॥

न विद्यते सारं यत्र तदसारम् न विद्यते सारं यस्मादिति वास्तवोऽर्थः ॥ २६ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

यदुक्तमुत्तममधीतमध्ये किञ्चिदनूद्यतामिति तत्राह-श्रवणमिति । यदुक्तं पूर्वं "वनं गतो यद्धरिमाश्रयेत" इति तदेवाश्रयणं निरूपयति, श्रवणमिति द्वाभ्याम् पुंसां श्रवणादीनि नव लक्षणानि यस्याः सा भक्तिर्नवलक्षणा भक्तिप्रतिपादकशास्त्रमधीतं चेत्तदेव स्वधीतमुत्तमं मन्ये न त्वमुना गुरोः सकाशादधीतं नतु गुरुभिर्नाध्यापितमिति भावः । स्वधीतप्रश्नोत्तरनिगमनमुत्तममधीतमिति श्रवणमित्यादि तु पूर्वोक्ताश्रयणविवरणपरं भगवत्यद्धा क्रियते वेदभीतविधाप्रतिपाद्या नव लक्षणा भक्तिर्निष्काम्यभावेन भगवति क्रियते इति यत्तदपि सा भक्तिर्विष्णावर्पितेति यच्च तदेतदुत्तमं मन्ये न केवलं नवलक्षणा भक्तिप्रतिपादकशास्त्राध्ययनमात्रमेवोत्तमम् अपि तु तदर्थानुष्ठानमनुष्ठितस्यैश्वरे समर्पणं चेत्तदुत्तमं मन्ये केवलाध्ययनमात्रस्य व्यर्थं स्यादिति भावः अर्पिता विष्णावित्यनेन भक्तेरनन्यप्रयोजनत्वेन कर्तव्यतोक्ता. तत्र विष्णोः श्रवणं तत्स्वरूपरूपगुणविभूतिश्रवणम्. कीर्तनं नामोच्चारणाद्यात्मकम्, स्मरणं स्वरूपादिविषयकमेव पादसेवनार्चनवन्दनदास्यसख्यानि तु तदीयपर्यन्तानि वन्दनं नमस्कारः पादसेवनं पादयोः सम्वाहनं तच्चार्चाविग्रहतदीयपादयोश्चेति वेदितव्यं परव्यूहविभवादेरतीन्द्रियत्वेन तत्पादसेवनासम्भवात् यद्वा भगवद्विषये मानसिकं तदीयविषये तु कायिकं विवक्षितम् आत्मनिवेदनम् "ओमित्यात्मानं युञ्जीत" इति श्रुत्युक्तरीत्या तच्छेषत्वानुसन्धानं यद्यपि भक्तिर्नाम ध्यानोपासनादिशब्दवाच्याऽहरहरभ्यासाधेयातिशया आप्रयाणादनुवर्तमाना विवेकादिसाधनसप्तकानुगृहीता तैलधारावदविच्छिन्नस्मृतिसन्तानात्मिका प्रीत्यात्मिका प्रत्यक्षतापन्ना ध्रुवानुस्मृतिः । ननु श्रवणादिरूपेण नवलक्षणा, तथाप्युक्तविधाया भक्तेरेव कर्मज्ञानयोगादिवच्छमदमादिवच्च श्रवणादीन्यप्यविलम्बेन निवर्तकान्युच्यन्ते. यद्वा,नवलक्षणा लक्ष्यते एभिरिति लक्षणानि चिह्नानि ज्ञापकानि भक्तियोगपरिपाकावस्थाज्ञापकानीति यावत्. उक्तविधभक्तियोगनिष्ठेन रागत एव श्रवणादीनि क्रियन्ते.लोकेऽपि हि यद्वस्तुविषया प्रीतिस्तद्विषयकश्रवणादीनि स्वत एव प्राप्तानीति न तत्र यत्नेन भवितव्यम्. अतः श्रवणादीनि प्रीत्यात्मकभक्तियोगकारितावस्थाविशेषरूपाणि तन्निष्पत्तिसूचकानीति तात्पर्यम्. एवं प्रीतिकारितश्रवणादिपर्यन्तभक्तियोगानुष्ठानमेव "वनङ्गतो यद्धरिमाश्रयेत" इत्युक्तमाश्रयणमित्युक्तं भवति ॥ २३ ॥ २४ ॥

एतदेवंविधं सुतस्य वचो निशम्याकर्ण्य तदा हिरण्यकशिपुः रुषा प्रस्फुरितः कम्पमानः अधरोष्ठो यस्य तादृश इदं वक्ष्यमाणं गुरुपुत्रं प्रत्युवाच ॥ २५ ॥

तदेवाह—हे ब्रह्मबन्धो ब्राह्मणाभास ! किमेतत्ते त्वया कृतमिति शेषः, अतीवानुचितमेतत्कृतमित्यर्थः । किं तत् ? यन्मामनादृत्य विपक्षं शत्रुपक्षमाश्रयता अत एव असता मह्यमहितकारिणा त्वया हे दुर्मते ! असारं ग्राहितो बाल इति एतत् ॥ २६ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

नियन्तृत्वेनात्मनि मयि स्थितो भगवानिति नितरां वेदनमात्मनिवेदनम्—

"कुक्कुरस्यापि ममान्तःस्थो नियन्तैव हरिः सदा ।
इति ज्ञानं समुद्दिष्टं मत्स्वगात्मनिवेदनम्" ॥

इत्येतदात्म समर्पणं नार्थः किंतूक्त एवार्थः इत्युक्तकारेण श्रवणादिभिर्लक्ष्यते असंभवव्यभिचारपरिहारेण ज्ञायत इति ॥ २३ ॥

नवलक्षणा विष्णौ भक्तिर्यस्मिन् शास्त्रेऽर्पिता प्रतिपादिता पुंसा सा भगवत्युत्तमश्लोके अद्धा निर्व्याजेन क्रियते चेद्यदि तर्हि तदधीतं शास्त्रमुत्तमं मन्ये नान्यदित्यन्वयः । नव श्रवणादीनि लक्षणानि चिह्नानि यस्यां सा तथा ॥ २४—२५ ॥

ते त्वया ॥ २६ ॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

श्रवणमिति युग्मकं । तत्र श्रवणन्नाम, रूपगुणपरिकरलीलामयशब्दानां श्रोत्रस्पर्शः एवं कीर्तनस्मरणयोरपि क्रमो ज्ञेयः स्मरणं यत्किञ्चिन्मनसानुसन्धानम्. पादसेवनं कालदेशाद्युचितपरिचर्या. अर्चनं विष्णुपूजा. वन्दनं नमस्कारः. दास्यं तद्दासोऽस्मीत्यभिमानः, सख्यं बन्धुभावेन तदीयहिताशंसनम्,

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

आत्मनिवेदनं देहादिशुद्धात्मपर्यन्तस्य सर्वतोभावेन तस्मिन्नेवार्पणम् इति नवलक्षणानि यस्याः सा भगवति तद्विषयिका श्रद्धा साक्षाद्रूपा न तु कर्माद्यर्पणरूपपरम्परा भक्तिरियं तत्रापि श्री विष्णुरेवार्पिता तदर्थमेवेदमिति भाविता न तु धर्मार्थादिष्वर्पिता एवमेवम्भूता चेत् क्रियेत, तदा तेन कर्त्रा यदधीतं तदुत्तमं मन्ये इत्यर्थः। तथाच श्रीगोपालतापनी श्रुतिः "भक्तिरस्य भजनं तदिहामुत्रोपाधि नैराश्येनामुष्मिन् मनः कल्पनमेतदेव नैष्कर्म्यम्" इति. अत्र नवलक्षणसमुच्चयो नावश्यकः एकेनैवाङ्गेन साध्याव्यभिचारश्रवणात् क्वचिदन्याङ्गमिश्रणन्तु तथापि भिन्नश्रद्धारुचित्वात्. ततो नवलक्षणशब्देन सामान्योक्त्या तन्मात्रानुष्ठानं विधीयत इति ज्ञेय नवलक्षणत्वञ्चास्याः अन्येषामप्यङ्गानां तदन्तर्भावाद्युक्तम्. किञ्चित्रात्र विशिष्यलिख्यते—तदेव नामादिश्रवणभक्त्यङ्गक्रमः, तत्र यद्यप्येकतरेणापि व्युत्क्रमेणापि सिद्धिर्भवत्येव तथापि प्रथमं नाम्न. श्रवणमन्तःकरणशुद्ध्यर्थमपेक्ष्यम्. शुद्धेचान्तःकरणे रूपश्रवणेन तदुदययोग्यता भवति सम्यगुदितेच रूपे गुणानां स्फुरणं सम्पद्यते. सम्पन्ने च गुणानां स्फुरणेन परिकरवैशिष्ट्ये तद्वैशिष्ट्यं सम्पद्यते ततस्तेषु नामरूपगुणपरिकरेषु सम्यक् स्फुरितेषु लीलानां स्फुरणं सुष्ठु भवतीत्यभिप्रेत्य साधनक्रमो लिखितः। एवं कीर्त्तनस्मरणयोश्च ज्ञेयम् इदश्च श्रवणं श्रीमहन्मुखरितं तन्महात्म्यं जातरुचीनां परमसुखदम्. तच्च द्विविधम्, महदाविर्भावितं महत्कीर्त्त्यमानञ्चेति तत्रापि श्रवणे श्रीभागवतश्रवणन्तु परमश्रेष्ठं तस्य तादृशप्रभावमयशब्दात्मकत्वात् परमरसमयत्वाच्च. अत्र मूर्त्याभिमतयात इतिवत्तिजाभीष्टनामादिश्रवणन्तु सुकुरावर्णाश्रितत्वम् तत्रापि सवासनमहानुभवमुखात् सर्वस्य श्रीकृष्णनामादिश्रवणन्तु परमभाग्यादेवसम्पद्यते, तस्य पूर्णभगवत्वात् इति. एव सङ्कीर्त्तनादिष्वप्यनुसन्धेयम्. तत्र यत् स्वयं सम्प्रति कीर्त्यते तदपि श्रीशुकदेवादिमहत्कीर्त्तितचरत्वेनानुसन्धाय कीर्त्तनीयमिति तदेवं श्रवणं दर्शितम्. अस्य कीर्तनादितः पूर्वत्वं तद्विना तदज्ञानात्। विशेषतश्च यदि साक्षादेव महत्कृतस्य कीर्त्तनस्य श्रवणभाग्य सम्पद्यते तदैव स्वयं पृथक्कीर्त्तनीयमिति तत्प्राधान्यात्. एवमेवोक्तं तद्वाग्विसर्गइत्यादौ टीकाकृद्भिः यत् यानि नामानि वक्तरि सति शृण्वन्ति श्रोतरि सति गृणन्ति अन्यदातु स्वयमेव गायन्तीति. अथातः कीर्त्तनम्, तत्र पूर्ववत् नामादिक्रमोज्ञेयः नामकीर्त्तनञ्चेदमुच्चैरेव प्रशस्तं "नामान्यनन्तस्य हतत्रपः पठन्" इत्यादौ. अथ तथोपदिष्टं कलियुगपावनावतारेण श्रीभगवता "तृणादपि सुनीचेन तरोरपि तितिक्षुणा। अमानिना मानदेन कीर्त्तनीयः सदा हरिः" ॥ इति. इयञ्च कीर्त्तनाख्या भक्तिर्भगवतो द्रव्यजातिगुणक्रियादीन् जनैकविषयापारकरुणामयीतिश्रुतिपुराणादिविश्रुतिः कलौ तदीनत्वम्. यथा ब्रह्मवैवर्त्ते "अतः कलौ तपोयोगविद्यायज्ञादिकाः क्रियाः। सङ्गा भवन्ति न कृता कुशलैरपि देहिभिः" ॥ इति. अत एव कलौ स्वभावत एवातिदीनेषु लोकेष्वाविर्भूयताननायासेनैव तत्तद्युगगतमहासाधनानां सर्वमेव फलं ददाना सा कृतार्थयति. यत एव कलौ भगवतो विशेषतश्च सन्तोषो भवति. अत्र कलिप्रसङ्गेन कीर्त्तनस्य गुणोत्कर्ष इति वक्तव्यं भक्तिमात्रे कालदेशादिनियमस्य निषिद्धत्वात्. तस्मात् सर्वत्रैव युगे श्रीमत्कीर्त्तनस्य समानमेव सामर्थ्यम् कलौ श्रीभगवता कृपया तद्ग्राह्यम् इत्यपेक्षयैव तत्तत्प्रशंसेति स्थितम् अत एव यद्यन्या भक्तिः कलौ कर्तव्या तदा तत्संयोगेनैवेत्युक्तं "यज्ञैः सङ्कीर्त्तनप्रायैर्यजन्तिहि सुमेधसः" इति। तत्र च स्वतन्त्रमेव नामकीर्त्तनमत्यन्तप्रशस्तं "हरेर्नाम हरेर्नाम हरेर्नामैव केवलम्। कलौ नास्त्येव नास्त्येव नास्त्येव गतिरन्यथा" इत्यादौ. अत्र पाद्मोक्ताः दशापराधाः त्याज्याः यथा सनत्कुमारवाक्ये "सर्वापराधकृदपि मुच्यते हरिसंश्रयः। हरेरप्यपराधान् यः कुर्याद्द्विपदपांसनः॥ नामाश्रयः कदाचित् स्यात् तरत्येव स नामतः। नाम्नोपि सर्वसुहृदो ह्यपराधात् पतत्यधः" ॥ अपराधाश्च संक्षिप्य लिख्यन्ते, यथा सतां निन्दा (१) श्रीविष्णोस्सकाशाच्छिवनामादेः स्वतन्त्रयामननम् (२) गुर्ववज्ञा (३) श्रुतितदनुगतशास्त्र निन्दनम् (४)। हरिनाममहिम्नि अर्थवादमात्रमिति मननम् (५) तत्र प्रकारान्तरेणार्थकल्पनम् (६)। नामबलेन पापे प्रवृत्तिः (७)। अन्यशुभक्रियाभिर्नामसाम्यमननम् (८)। अश्रद्धाने विमुखेऽप्यशृण्वति नामोपदेशः (९)। नाममाहात्म्ये श्रुतेऽप्यप्रीतिरिति (१०)। एतेषामपराधानामन्यप्रायश्चित्तञ्चोक्तम् तत्रैव "नामापराधयुक्तानां नामान्येव हरन्त्यघम्। अविश्रान्तप्रयुक्तानि तान्येवार्थकराणि च" इति। एतत्स्वपराधेषु तत्सन्तोषणार्थमेव सन्ततनामकीर्त्तनादिकं समुचितम् अम्बरीषचरितादौ तदेकक्षम्यत्वे नानापराधानां दर्शनात् उक्तञ्च नामकौमुद्याम महदपराधस्य भोगएव निवर्त्तकस्तदनुग्रहो वेति. अत एवोक्त श्रीशिवंप्रति दक्षेण—"योऽसौ मया विदिततत्त्वदृशा सभायाम्" इत्यादि. अस्मिन्कीर्त्तने निजदैन्यतिज्ञाभिप्रविज्ञापितपाठावद्यन्तर्भावौ तथात्र श्रीभागवतस्थितनामादिकीर्त्तनन्तु पूर्ववदन्यदीयनामादिकीर्त्तनादधिकं ज्ञेयम्. अथ कीर्त्तनादिभिः शुद्धान्तःकरणश्चेत् "एतन्निर्विद्यमानानाम्" इत्याद्युक्तत्वान्नामकीर्त्तनापरित्यागेन स्मरणं कुर्यात् तदेव नामादिसम्बन्धित्वेन बहुविधं भवति तच्च पञ्चविधं यत्किञ्चिदनुसन्धानं स्मरणं सर्वतश्चित्तमाकृष्य सामान्याकारे मनोधारणं धारणा. विशेषतो रूपादिचिन्तनं ध्यानं अमृतधारावदनवच्छिन्नं तद्ध्रुवानुस्मृतिः ध्येयमात्रस्फुरणं समाधिरिति क्वचिल्लीलादियुक्ते च तस्मिन् अन्यास्फूर्तिः समाधिस्स्यात् एतद्रूपो दासादिभक्तानां पूर्वस्तु प्रायः शान्तभक्तानाम् अथ रुचिः शक्तिश्च चेतदपरित्यागेन पादसेवाच कर्त्तव्या सेवा स्मरणसिद्ध्यर्थं सा क्रियते पादसेवायां पादशब्दो भक्त्यैव निर्दिष्टः तत. सेवायाः सादरत्वं विधीयते अस्य श्रीमूर्त्तिदर्शनस्पर्शनपरिक्रमानुव्रजनभगवन्मन्दिरगङ्गापुरुषोत्तमद्वारकामथुरादितदीयतीर्थस्थान--गमनादयोऽप्यन्तर्भाव्याः तत्परिकरप्रायत्वात् गङ्गादीनां परमभागवतत्वपक्षे तु तत्सेवादिकं महत्सेवादावेव पर्यवस्यति तुलसीसेवा च तस्याश्चैवान्तर्भाव्या ततो महतामिव गङ्गादीनां भक्तिनिदानत्वम्. अथार्चनम्. तन्मार्गे श्रद्धाचेदाश्रितमन्त्रगुरुस्तं विशेषतः पृच्छेत् यद्यपि श्रीभागवतमते पञ्चरात्रादिवदर्चनमार्गस्यावश्यकत्वं नास्ति तद्विनापि श्रवणादीनामेकतरेणापि पुरुषार्थसिद्धेरभिहितत्वात्. तथोक्तं प्राचीनैरपि।——

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

"श्रीविष्णोः श्रवणे परीक्षिदभवत् वैय्यासिकिः कीर्त्तने-
प्रह्लादः स्मरणे तदङ्घ्रिभजने लक्ष्मीः पृथुः पूजने ।
अक्रूरस्त्वभिवन्दने कपिपतिर्दास्येऽथ सख्येऽर्जुनः-
सर्वस्वात्मनिवेदने बलिरभूत् कृष्णाप्तिरेषां परम्" ॥ इति.

तथापि श्रीनारदादिवर्त्मानुसरद्भिः श्रीभगवता सह सम्बन्धविशेषं दीक्षाविधानेन श्रीगुरुचरणसम्पादितं चिकीर्षद्भिः कृतायां दीक्षायामर्चनमवश्यं क्रियेतैव यद्यपि सम्यक्समन्तो गृहस्थास्तेषां त्वर्चनमार्ग एव मुख्यः तदकृत्वापि निष्किञ्चनवत्केवलस्मरणादिनिष्ठत्वे वित्तशाठ्यप्रतिपत्तिः स्यात्. परद्वारा सम्पादनं व्यवहारनिष्ठत्वस्यालसत्वस्य वा प्रतिपादकं ततो अश्रद्धामयत्वाद्धीनमेव तत्. किञ्च, गृहस्थानां परिचर्यामार्गे द्रव्यसाध्यतया तदर्चनमार्गादिविशेषेण प्राशस्त्यमर्चनमार्गस्य प्राधान्यम् अत्यन्तविक्षिप्तचित्तत्वात्तेषां तथा गार्हस्थ्यधर्मस्य देवता यागरूपस्य शाखापल्लवादिस्थानीयस्य मूलसेकरूपं तदर्चनमित्यपि तदकरणे महान् दोषः । दीक्षितानाञ्च सर्वेषां तदकरणे नरकपातः श्रूयते । अशक्तमयोग्यं प्रति चाग्नेये। "पूजितं पूज्यमानं वा यः पश्येद्भक्तितो हरिम् । श्रद्धया मोदयेद्यस्तु सोऽपि योगफलं लभेत्" ॥ इति. योगोऽत्र पाञ्चरात्रोक्तः क्रियायोगः. किञ्चार्चनमार्गे अवश्य विधिरत्नाणि: तत्र वैष्णवसम्प्रदाय एव प्रमाणम् । ननु, भगवन्नामात्मका एव मन्त्राः तत्र विशेषेण नमः शब्दाद्यलङ्कृताः । श्रीभगवता श्रीमहर्षिभिश्चाहितशक्तिविशेषाः श्रीभगवता समं सम्बन्धविशेषप्रतिपादकाश्च. तत्र केवलानि भगवन्नामान्यपि निरपेक्षाण्येव परमपुरुषार्थफलपर्यन्तदानसमर्थानि ततो मन्त्रेषु नामतोऽप्यधिकसामर्थ्ये लब्धे कथं दीक्षाद्यपेक्षा ? उच्यते यद्यपि स्वरूपतो नास्ति तथापि प्रायः स्वभावतो देहादिसम्बन्धेन कदर्यशीलानां विक्षिप्तचित्तानां जनानां तत्सङ्कोचीकरणाय श्रीमहर्षिप्रभृतिभिरत्रार्चनमार्गे क्वचित् काचिन्मर्यादा स्थापितास्ति ततस्तदुल्लङ्घने शास्त्रं प्रायश्चित्तमुद्भावयति तत उभयमपि समञ्जसमिति. तदेतदर्चनं द्विविधम् । केवलं कर्ममिश्रञ्च, तयोः पूर्वं निरपेक्षाणां श्रद्धावताम् उत्तरं व्यवहारचेष्टानिष्ठायवताम् यादृच्छिकशरणानुष्ठानकर्त्तादिवद्गुणालाक्षितश्रद्धानां । तथा तदुत्परीत्यलक्षितश्रद्धानामपि प्रतिष्ठितानां भक्तिवार्त्तानभिज्ञबुद्धिषु स्वाचरणैर्वैदिककर्मानुष्ठानलोपोऽपि माभूदिति लोकसङ्ग्रहपराणां गृहस्थानां दर्शितम् । अस्याङ्गानि चागमादौ ज्ञेयानि तथा श्रीकृष्णजन्माष्टमीकार्तिकादिव्रतैकादशीजागरणदिवस अर्चनान्तर्गत्वम् अथास्मिन् पादसेवनार्चनमार्गे अपराधाः त्याज्याः अत्रागमोक्तानुसारेण लिख्यन्ते—

"यानैर्वा पादुकैर्वापि गमनं भगवद्गृहे ।
देवोत्सवाद्यसेवा च अप्रणामस्तदग्रतः ॥
उच्छिष्टे वाप्यशौचे वा भगवद्वन्दनादिकम् ।
एकहस्तप्रणामश्च तत्पुरस्तात् प्रदक्षिणम् ॥
पादप्रसारणञ्चाग्रे तथा पर्यङ्कबन्धनम् ।
शयनं भक्षणञ्चापि मिथ्याभाषणमेव च ॥
उच्चैर्भाषा मिथो जल्पो रोदनानि च विग्रहः ।
निग्रहानुग्रहौ चैव नृषु च क्रूरभाषणम् ॥
कम्बलावरणञ्चैव परनिन्दा परस्तुतिः ।
अश्लीलभाषणञ्चैव अधोवायुविमोक्षणम् ॥
शक्तौ गौणोपचारश्च अनिवेदितभक्षणम् ।
तत्तत्कालोद्भवानाञ्च फलादीनामनर्पणम् ॥
विनियुक्तावशिष्टस्य प्रदानं व्यञ्जनादिके ।
पृष्ठीकृत्यासनञ्चैव परेषामभिवादनम् ॥
गुरौ मौनं निजस्तोत्रं देवतानिन्दनं तथा ।
अपराधास्तथा विष्णोर्द्वात्रिंशत् परिकीर्तिताः" ॥

वाराहे च येऽन्येऽपराधास्ते संक्षिप्य लिख्यन्ते । राजान्नभक्षणम् ध्वान्तागारे हरेः स्पर्शः विधिं विना हर्य्युपसर्पणं वाद्यं विना तद्द्वारोद्घाटनं कुक्कुरदृष्टभक्ष्यसंग्रहः अर्चने मौनभङ्गः पूजाकाले विड्उत्सर्गायगमनं । गन्धमाल्यादिकमदत्वा धूपनम् अनर्हपुष्पेण पूजनं तथा—

"अकृत्वा दन्तकाष्ठञ्च कृत्वा निधुवनं तथा ।
स्पृष्ट्वा रजस्वलां दीपं तथा मृतकमेव च ॥
रक्तं नीलमधौतञ्च पारक्यं मलिनं पटम् ।
परिधाय मृतं दृष्ट्वा विमुच्यापानमारुतम् ॥
क्रोधं कृत्वा श्मशानञ्च गत्वा भुक्त्वाप्यजीर्णभुक् ।
भुक्त्वा कुसुम्भं पिण्याकं तैलाभ्यङ्गं विधाय च ॥
हरेः स्पर्शो हरेः कर्मकरणं पातकावहम्" ॥

तथा तत्रैवान्यत्र । भगवच्छास्त्रानादरेण नरप्रतिपत्तिः अन्यशास्त्रप्रवर्त्तनं तदग्रतस्ताम्बूलचर्वणं एरण्डपत्रस्थपुष्पैरर्चनं आसुरकाले पूजा पीठे भूमौ चोपविश्य पूजनं स्नपनकाले वामहस्तेन तत्स्पर्शः पर्युषितैर्याचितैर्वा पुष्पैरर्चनं पूजायां ष्ठीवनं तस्यां स्वगर्वप्रतिपादनं तिर्यक्पुण्ड्रधृतिः अधौतपदत्वेऽपि तन्मन्दिरप्रवेशः अवैष्णवपक्वनिवेदनं अवैष्णवदृष्टौ पूजनं विघ्नेशमपूजयित्वा कपालिनं दृष्ट्वा वा पूजनं नखाम्भसा स्नपनं घर्माम्बुलिप्तत्वेऽपि पूजनम् इत्यादयः अन्यत्र निर्माल्यलङ्घनं भगवच्छपथादयोऽन्ये च बहवः अथ तथापि प्रमादिके भगवदपराधे पुनर्भगवत्प्रसादनानि कर्त्तव्यानि. यथा स्कान्दे अवन्तीखण्डे श्रीव्यासवाक्यम्. "अहन्यहनि यो मर्त्यो गीताध्यायं पठेत्तु वै । द्वात्रिंशदपराधांस्तु क्षमते तस्य केशवः." इति तत्रैव द्वारकामाहात्म्ये "सहस्रनाममाहात्म्यं यः पठेत् शृणुयादपि । अपराधसहस्रेण न स लिप्येत् कदाचन" इति तत्रैव रेवाखण्डे—

द्वादश्यां जागरे विष्णोर्यः पठेत्तुलसीस्तवम् ।
द्वात्रिंशदपराधान् हि क्षमते तस्य केशवः ॥ इति.

तत्रैवान्यत्र । तुलस्यारोपणं कार्यं श्रवणेन विशेषतः ।
अपराधसहस्राणि क्षमते पुरुषोत्तमः" ॥ इति.

अत्रैवान्यत्रकार्तिकमाहात्म्ये—

तुलस्या कुरुते यस्तु शालग्रामशिलार्चनम् ।
द्वात्रिंशदपराधांश्च क्षमते तस्य केशवः" ॥ इति.

ब्रह्मपुराणे—

यः करोति हरेः पूजां कृष्णशस्त्राङ्कितो नरः ।
अपराधसहस्राणि नित्यं हरति केशवः" ॥ इति.

आदिवाराहे—

"सम्वत्सरस्य मध्ये तु तीर्थे सौकरवे मम ।
कृतोपवासः स्नानेन गङ्गायां शुद्धिमाप्नुयात् ॥
मथुरायां तथाप्येवं सापराधः शुचिर्भवेत् ।
अनयोस्तीर्थयोरेकं यः सेवेत् सुकृती नरः ॥
सहस्रजन्मजनि कृतानपराधान् जहाति स." ॥ इति.

सौकरवे सूकरक्षेत्राख्ये अथार्चनमार्गे क्वचिन्मानसपूजाविहितास्ति यथा पाद्मे उत्तरखण्डे "साधारणं हि सर्वेषां मानसेज्या नृणां प्रिया" इति गौतमीये—सन्न्यासिनां मुमुक्षूणां मानसोपहृतिः परा" इति तन्महिमा यथा श्रीनारदपञ्चरात्रे श्रीनारायणवाक्ये "अयं यो मानसो योगो जराव्याधिभयापहः" इत्यादौ—

"यश्चैतत्परया भक्त्या सकृत् कुर्यान्महामते ।
क्रमादिनेन विधिना तस्य तुष्याम्यहं मुने ।" ॥ इति.

यथा कश्चित् स्वतन्त्रापि भवति—मनोमय्या मूर्तेरष्टमतया स्वातन्त्र्येण विधानात् "अर्चादौ हृदये वापि यथा लब्धोपचारकैः." इत्यादिविहितवचने वाशब्दात् । अत्र ब्रह्मवैवर्ते कथा च. यथा, प्रतिष्ठानपुरे कश्चिद्द्विज आसीत् स च दरिद्रोऽपि कर्माधीनमात्मानं मन्यमानः शान्त एवासीत् स तु सरलबुद्धिः कदाचिद्विप्रेन्द्राणां सदसि वैष्णवान् धर्मान् शुश्राव ते च धर्मा मनसापि सिद्ध्यन्तीति श्रुत्वा दरिद्रः स्वयं तथैवाचरितुमारब्धवान् ततश्च गोदावरीस्नानपूर्वकं नित्यं कर्म समाप्य शान्तमतिर्भूत्वा विविक्तासनप्राणायामादिपूर्वकं स्थिरीभूयमनसैवाभिमतां हरिमूर्तिं स्थापयित्वा स्वयं दुकूलादिकं परिधाय दृढं परिकरं बद्ध्वा तत्सदनं सम्मार्ज्य ता प्रणम्य च राजतसौवर्णघटैः सर्वेषां गङ्गादितीर्थानां जलमाहृत्य तथा नानापरिचर्याद्रव्याण्युपनीय तदीयस्नपनादिकं आरात्रिकान्तं महाराजोपचारं समाप्य दिनन्दिनं सुखातिशयमाप्नुवन्नासीत् तदेवं बहुषु कालेषु गतेषु कदाचिन्मनसैव घृतसहितं परमान्नं निर्माय सौवर्णपात्रेण तद्भोजनार्थमुत्थाप्य स्थितः तप्ततया स्फुरिते तस्मिन् प्रविष्टमङ्गुष्ठयुगलं दग्धं प्रतियन् हन्त तदिदं दुष्टं जातमिति दुःखेन समाधिभङ्गेऽपि जाते दग्धाङ्गुष्ठतया बहिरपि पीडितो बभूव तदवगत्य वैकुण्ठे समुपविष्टेन श्रीवैकुण्ठनाथेन हसता श्रीप्रभृतिभिस्तत्कारणं पृष्टेन च सता स्वान्तिकं विमानेनानयामासे तथाविधतया दर्शयामासे स्वान्तिकयोग्यतया स्थापयामासे च । अथ वन्दनम्. तच्च यद्यप्यर्चाङ्गत्वेनापि वर्तते तथापि कीर्तनस्मरणवत् स्वातन्त्र्येणापीत्यभिप्रेत्य पृथग्विधीयते एवमन्यत्रापि वन्दनस्य पृथग्विधानं च्चानन्तगुणैश्वर्यश्रवणात् तद्गुणानुसन्धानपादसेवादौ विधृतदैन्यानां नमस्कारमात्रे कृताध्यवसायानामर्थे स एष नमस्कारस्तस्यार्चनत्वेनाप्यति दिष्टः नमस्कारेऽपराधाश्चैते परिहर्त्तव्याः

विष्णुस्मृत्यादिदृष्ट्या ये खलु एकहस्तकृतत्ववस्त्रावृतदेहत्वभगवत्तदग्रपृष्ठवामभागांशतन्निकटगर्भमन्दिरगतत्वादिमयाः । अथ दास्यम् "जन्मान्तरसहस्रेषु यस्य स्यान्मतिरीदृशी । दासोऽहं वासुदेवस्य सर्वान् लोकान् समुद्धरेत्" ॥ इतीतिहाससमुच्चयोक्तलक्षणम् । अस्तु तावत्तद्भजनप्रयासः केवलतादृशत्वाभिमानेनापि सिद्धिर्भवतीत्यभिप्रेत्यैवोत्तरत्र निर्देशश्च तस्य एतस्य कार्यभूतं परिचर्यादिकं केवलपरिचर्यादिकं केवलपरिचर्यारूपत्वे भेदो न स्यात्. अथ सख्यम् । यथा अगस्त्यसंहितायाम्—

परिचर्यापराः केचित् प्रासादेषु च शेरते ।
मनुष्यमिव तं द्रष्टुं व्यवहर्तुञ्च बन्धुवत्" ॥ इति.

अत एव "यन्मित्रं परमानन्दमित्यत्र मित्रपदविन्यासः कृतः । अस्य चोत्तरपाठः प्रेमविस्रम्भभावनामयत्वेन दास्यादप्युत्तमत्वापेक्षया. किञ्च परमेऽश्वरेपि यत् सख्यं विधीयते तत्राश्चर्यं "नादेवोदेवमर्चयेत्" इति तद्भावस्यापि विधानश्रवणात् किन्तु तद्भावस्तत्सेवा विरुद्ध इति भक्तैरपेक्षते सख्यन्तु परमसेवानुकूलमित्युपादीयते इति । तदेतत् साक्षाद्भजनात्मकं दास्यं सख्यञ्च टीकायामपि दर्शितमस्ति तस्यैव मे सौहृदसख्यमैत्रीदास्यं पुनर्जन्मनि स्यादिति श्रीदामविप्रवाक्ये । यथा श्रीकृष्णस्य भक्तवात्सल्यं दृष्ट्वा भक्तिं प्रार्थयते तस्येति सौहृदं प्रेम च सख्यं हिताशंसनञ्च मैत्री उपकारकत्वं दास्यं सेवकत्वञ्च तत्समाहार एकवचनं तस्य तत् सम्बन्धि मे मम स्यात् ननु विभूतिरित्येतत् अत्र दास्यसख्याभ्यां कर्मार्पणविश्वासौ न स्यातां साक्षाद् भक्तित्वाभावात् कर्मार्पणस्य फलं भक्तिविश्वासश्च सत्त्वाभिनिवेशहेतुः श्रवणकीर्त्तनमित्यादौ विष्णोः श्रवणं विष्णोः कीर्त्तनमिति अथात्मनिवेदनं तत् कार्यञ्चात्मार्थचेष्टाशून्यत्वं तन्न्यस्तात्मसाधनसाध्यत्वं तदर्थैकचेष्टामयत्वञ्च इदं ह्यात्मार्पणं गोविक्रयवत् विक्रीतस्य गोवर्त्तनार्थं विक्रीतवता चेष्टा न क्रियते तस्य च श्रेयःसाधकत्वं क्रीतवानेव स्यात् स च गौस्तस्यैव कर्म कुर्यात् न पुनर्विक्रीतवता चेष्टा न क्रियते तस्य च श्रेयःसाधकत्वं क्रीतवानेव स्यात् स च गौस्तस्यैव कर्म कुर्यात् न पुनर्विक्रीतवतोऽपीति अत्र केचिद्देहार्पणमेवार्पणमिति मन्यन्ते यथा भक्तिविवेके "चिन्तां कुर्यान्न रक्षार्थे विक्रीतस्य यथा पशोः । तथार्पयन् हरौ देहं विरमेदस्य रक्षणात्" ॥ इति केचिच्छुद्धक्षेत्रज्ञार्पणमेव. यथा श्रीमदालवन्दारस्तोत्रे "वपुरादिषु योऽपि कोऽपि वा गुणतो सानि यथा तथा विधः । तदहं तव पादपद्मयोरहमद्यैव मया समर्पितः" । इति अत्र योपि कोपि वेति वादिभेदात् स्वरूपतः अथवा गुणतो यथा तथाविधा देवमनुष्यादिरूपः असानि भवानि कामचारे लोट् तदयमिति सचासावयश्चेति विग्रहात् सोऽयमित्यर्थः । तत्र केवलमात्मनिवेदनं दानसमये बलिराजे दृश्यते भावेषु मिश्रेषु दास्येनात्मनिवेदनं श्रीमदम्बरीषे प्रेयसी भावेन श्रीरुक्मिणी देव्याम् एवं सख्यादिनापि ज्ञेयम् ॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥

सन्ति ह्यसाधवो लोके दुर्मैत्राश्छद्मवेषिणः ।
तेषामुदेत्यघं काले रोगः पातकिनामिव ॥ २७ ॥

गुरुपुत्र उवाच ।

न मत्प्रणीतं न परप्रणीतं सुतो वदत्येष तवेन्द्रशत्रो ! ।
नैसर्गिकीयं मतिरस्य राजन्नियच्छ मन्युं कददाः स्म मा नः ॥ २८ ॥

नारदउवाच ।

गुरुणैवं प्रतिप्रोक्तो भूय आहासुरः सुतम् ।
न चेद्गुरुमुखीयं ते कुतोऽभद्राऽसती मतिः ॥ २९ ॥

प्रह्लाद उवाच ।

मतिर्न कृष्णे परतः स्वतो वा मिथोऽभिपद्येत गृहव्रतानाम् ।
अदान्तगोभिर्विशतां तमिस्रं पुनःपुनश्चर्वितचर्वणानाम् ॥ ३० ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

विप्राधमयोरनयोर्गुरुत्वं नास्तीति गुरोः श्रीनारदात् सकाशात् केवलां भक्तिमेवाहमधिगतवानस्तामेव ब्रवीमि इति मतम्पि कृत्वाह-श्रवणमिति । पादसेवनं परिचर्या अर्चनं पूजा दास्यं स्वस्य दासत्वभावना सख्यं स्वस्य तन्मित्रत्वभावना दृढविश्वासश्च आत्मनिवेदनम् आत्मसमर्पणञ्च तच्च भावविशेषेण सहितं रहितञ्च यथा रुक्मिण्यादीनां वैरोचन्यादीनां पुंसा पुम्मात्रेणेति नात्र वर्णाश्रमादिनियम इति भावः, पुंस्त्वस्य जीवमात्रकत्वात् स्त्रियापि नवलक्षणानि यस्या इत्येषां मध्ये किमपिकुनश्चेत्सदा भक्तिरित्यर्थः । अद्धा साक्षादेव ननु ज्ञानकर्मादिव्यवधानेनेत्यर्थः । साच अर्पितैवसतीयद्विक्रियेत न तु कृता पश्चादर्प्यतेति श्रीस्वामिचरणाः । यद्वा सा यदि विष्णौ अर्पिता क्रियेत विष्णुसुखोद्देशेनैव ननु तत्फलस्य स्वस्मिन् विनियोगेनेत्यन्याभिलाषशून्यत्वं द्योतितं तदा उत्तमम् अधीतं मन्ये इति उत्तमा भक्तिरिति भावः ॥ २३ ॥ २४ ॥ २५ ॥

ते त्वया वस्तुतस्तु न विद्यते सारो यतस्तत् ॥ २६ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

हरिभजनोपदेष्टा गुरुर्भवत्यतः उत्तमं स्वधीत हरिभजनवतश्च श्रीनारदाद्धरिभजन स्वधीतमाह—श्रवणमिति । पादसेवनं परिचर्या अर्चनं पूजा दास्यं दासत्वभावना सख्यं मित्रत्वभावना आत्मनिवेदनं सपरिकरात्मसमर्पणम् ॥ २३ ॥

इति नवलक्षणानि यस्याः सा भक्तिः अद्धा साक्षात् विष्णौ अर्पिता तत्प्रीणनैकप्रयोजनकता स्वङ्कल्पिता सती पुंसा क्रियतेचेत् तदधीतमुत्तमं मन्ये ॥ २४—२५ ॥

हे ब्रह्मबन्धो ब्राह्मणाधम ! मामनादृत्य असता त्वया योऽयं सारं आहितः ॥ २६ ॥

---

भाषा टीका ।

प्रह्लादउवाच ॥

प्रह्लाद बोले, कि—विष्णुका श्रवण कीर्त्तन स्मरण पाद सेवन अर्चन वंदन दास्य सख्य और आत्मनिवेदन ॥ पुरुष यदि साक्षात् विष्णु भगवान में इस नवधा भक्ति को समर्पण करै तो मैं उसी को उत्तम पढना मानता हूं ॥२३-२४॥

हिरण्यकशिपु भी पुत्र के इस प्रकार के वचन सुन कर मारे रोष के होट फरकने लगे और क्रोध करके गुरुपुत्र से इस प्रकार बोला ॥ २५ ॥

हे ब्राह्मणाधम हे दुर्मते ! विपक्षका आश्रय लेने वाले असत तुझने मेरा निरादर कर इस बालक को क्या असार पढादिया ॥ २६ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

मित्रत्वेन प्रवर्त्तमानस्यापि तव विरोधाचरणं नासम्भावितमित्याह—सन्तिहीति । दुष्टं मैत्रं मित्रत्व येषां ते दुर्मैत्राः रोगइति "ब्रह्महा क्षयरोगी स्यात्सुरापः श्यावदन्तकः । स्वर्णहारी तु कुनखी दुश्चर्मा गुरुतल्पगः" ॥ इत्यादिस्मृत्युक्तपात-

न ते विदुः स्वार्थगतिं हि विष्णुं दुराशया ये बहिरर्थमानिनः।
अन्धा यथाऽन्धैरुपनीयमाना वाचीशतन्त्यामुरुदाम्नि बद्धाः॥ ३१॥
नैषां मतिस्तावदुरुक्रमाङ्घ्रिं स्पृशत्यनर्थापगमो यदर्थः।
महीयसां पादरजोऽभिषेकं निष्किञ्चनानां न वृणीत यावत्॥ ३२॥

श्रीधरस्वामिकृतभावार्थदीपिका।

किनां काले नरकभोगानन्तरं रोगो यथोदेति तथा तेषां दुर्जनानां सुजनत्वेन वर्तमानानामप्यघं विद्वेषादिकमुदेतीत्यर्थः॥ २७॥

मत्प्रणीतं मया पाठितं नाऽन्यस्य कृतं कुत्सितं दोषं माकृथ भद्रः भद्रागम आपं, मयि दोषारोपं मा कृथा इत्यर्थः। इन्द्रशत्रो! इति न हि ब्राह्मणेषु तव कोप उचित इति भावः॥ २८॥

गुरुमुखी गुरुवाक्यजनिता हे अभद्र!॥ २९॥

आस्तामियं वार्ता भवादृशानां विषयासक्तानामज्ञानाधिकारादित्याशयेनाऽऽह—मतिरिति। परतो गुरोः स्वतो वा मिथो वाऽन्यतो नाभिपद्येत न सम्पद्येत केषां गृहव्रतानां गृह एव व्रतं तत्कृत्य इ.निकृत्यचिन्ता येषाम्। अत एवाऽदान्तैरनुपरतैर्गोभिरिन्द्रियैर्हेतुभूतैस्तमिस्रं संसारं विशतां तत्र चर्वितस्यैव चर्वणं येषाम्॥ ३०॥

ननु, श्रीकृष्णस्य परमानन्दस्वरूपत्वात्तेऽपि तन्निष्ठा एव किन्न स्युः? इति चेत्तत्राज्ञानादित्याह—नेति। ये दुराशया विषयवासितान्तःकरणास्ते हि विष्णुं न विदुः, तत्र हेतुः, स्वस्मिन्नेवार्थः पुरुषार्थो येषां गतिं गम्यताम्। ननु, तेऽपि गुरूपदेशाद्विष्णुं ज्ञास्यन्ति, तत्राऽऽह, बहिर्विषयेष्वर्थो येषां ते बहिरर्थास्तानेव गुरुत्वेन मन्तुं शीलं येषां ते अतोऽन्धैरुपनीयमाना अन्धाः यथा पन्थानं न विदुः किन्तु गर्ते पतन्ति तथा तेऽपीशस्य तन्त्यां दीर्घरज्ज्वां वेदलक्षणायामुरूणि दामानि ब्राह्मणादिनामानि यस्यां तस्यां काम्यैः कर्मभिर्बद्धा एव भवन्तीत्यर्थः। तदुक्तम्—

"विषयाविष्टचित्तानां विष्ण्वावेशः सुदूरतः।
वारुणीदिग्गतं वस्तु व्रजन्नैन्द्रीं किमाप्नुयात्"॥

इति॥ ३१॥

ननु च "एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा" इत्यादिश्रुतिप्रतिपादितं विष्णुं कथं न विदुः? कुतो वा तेषां तमिस्रप्रवेशः? तत्राऽऽह—नैषामिति। निष्किञ्चनानां निरस्तविषयाभिमानानां महत्तमानां पादरजसोऽभिषेकं यावन्न वृणीत तावच्छ्रुतिवाक्यतो जाताप्येषां मतिरुरुक्रमस्याङ्घ्रिं न स्पृशति न प्राप्नोति, असम्भावनादिभिर्विहन्यत इत्यर्थः। अनर्थस्य संसारस्यापगमो यदर्थो यस्याङ्घ्रिस्पर्शिन्यामतेरर्थः प्रयोजनं महदनुग्रहाभावान्न तत्त्वनिश्चयो नापि मोक्षस्तेषामित्यर्थः॥ ३२॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

मित्रत्वेन वर्त्तमानस्यापि तव विरोधाचरणं नासम्भावितमित्याह—सन्तीति। दुष्टं मैत्रं मित्रत्वं येषां ते अत एव असाधवश्छद्मवेषिणः कपटवेषधारिणो भवादृशा अपि हि लोके सन्ति तेषामघं द्रोहं काले उचितकाले प्रकटो भवति रोगः पातकिनामिव यथा "ब्रह्महा क्षयरोगी स्यात्सुरापी श्यावदन्तकः स्वर्णहारी तु कुनखी दुश्चर्मा गुरुतल्पगः"॥ इति स्मृत्युक्तः पातकिनां रोगः उचितकाले उदेति तथा तेषामघं द्रोहादिकमुचितकाले उदेतीत्यर्थः॥ २७॥

एवमुपालब्ध आह गुरुपुत्रः—नेति। न मया पाठितं नापि परेण, किन्तु केवलमेष तव पुत्र एव वदत्येवं, हे इन्द्रशत्रो! तव आज्ञालङ्घनरूपस्य कर्मणो विपरीतत्वादिति भावः। न स्वपरोक्तिरित्युक्तं किं तर्हि नैसर्गिकीति, हे राजन्! अस्य त्वत्पुत्रस्येयं मतिर्नैसर्गिकी स्वाभाविकी न तु परैः शिक्षिता, अतो मन्युं क्रोधं नियच्छ उपसंहर नोऽस्मभ्यं मा कृथा कुत्सितं दुःखमित्यर्थः। नाकर्तुं न दद्यादित्यर्थः। अस्मद्विषयेऽवज्ञार्थे। कदनात्मनां न इति पाठान्तरम्। तत्र कदनात्मनां दीनात्मनां नः मन्युं मद्विषयं क्रोधं नियच्छेत्यर्थः॥ २८॥

इत्थं गुरुणा तदुक्तो दैत्यः सुतमाहेत्याह देवर्षि—गुरुणेति। तदेवाह—नेति। हे अभद्र! इयं बुद्धिर्गुरुमुखी गुरूपदेशजाता न चेत्तर्हि कुतो हेतोस्तवासती दुष्टा मतिरभूत्॥ २९॥

एवमुक्त आह प्रह्लादः—मतिरिति। यत्पृष्टं कुतस्तवेयं मतिरिति तत्र महतामनुग्रह एवेदृशीमतिहेतुरिति वक्तुं तावन्महद्भिरननुगृहीतानां भवादृशानामीदृशी मतिर्दुर्लभेत्याह—मतिरिति। गार्हस्थ्यरतानां स्वतः परतो वा मिथोऽन्योन्यस्माद्वा कृष्णे मतिर्भक्तिरूपात्मिका नाभिपद्येत तत्र हेतुं वदन् गृहव्रतान्विशिनष्टि—अदान्तगोभिरिति। अदान्तैरजितैर्गोभिरिन्द्रियैर्हेतुभिस्तमिस्रं निरयरूपं संसारं पुनःपुनर्विशतां चर्विततनुभुक्तं तस्यैव पुनश्चर्वणमुपभोगो येषां पूर्वपूर्वभुक्तमेव विषयं भुञ्जानानां पूर्वेद्युर्भुक्तानेव वनितादीन् विषयान् पुनरपरेद्युर्भुञ्जानानामिति वा एवं विषयासक्तचित्तानां त्वादृशां कृष्णे मतिर्दुर्लभा इत्युक्तम्, यद्वा चर्वितचर्वणाः पशवस्तत्तुल्यानामिति॥ ३०॥

मास्तु कृष्णे मतिः स्वश्रेयोऽपि न स्वयं जानन्तीत्याह—नेति। स्वार्थश्च गतिश्च स्वार्थगतिस्तं स्वस्य पुरुषार्थभूतं तदुपायभूतञ्च विष्णुं गृहव्रता न विदुः, तत्र हेतुं वदंस्तान्विशिनष्टि, बहिरर्थमानिनः बहिः शब्दादिविषयेषु अर्थमानिनः पुरुषार्थाभिमानिनः अतस्ते अन्धैरुपनीयमाना अन्धा यथा पन्थानं न विदुः किन्तु श्वभ्रे पतन्ति तथा तेऽपि ईशस्य तन्त्यां वेदलक्षणायां स्थूलरज्ज्वामुरुदाम्नि वर्णाश्रमधर्मादिरूपनानाविधकण्ठसूत्रे बद्धा भवन्ति वेदोक्तकेवलकाम्यकर्मण्यासक्ताः प्रलोभितास्तत्रैवासक्ताः

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

पुनः पुनः संसरन्तो दुःखमेव प्राप्नुवन्ति न तु निरतिशयानन्दरूपपुरुषार्थलक्षणं भगवन्तं प्राप्नुवन्तीत्यर्थः ॥ ३१ ॥

तदेव व्यनक्ति–नेति । एषामुक्तविधानां विषयासक्तचित्तानां मतिर्बुद्धिः उरुक्रमस्य निरतिशयमहिमशालिनो भगवतो निरतिशयपुरुषार्थरूपमङ्घ्रिं न स्पृशति न विषयीकरोति तदङ्घ्रिस्पर्शनं विशिनष्टि, यदर्थः यस्योरुक्रमस्याङ्घ्रिस्पर्शस्य अर्थः प्रयोजन फलमनर्थापगमः दुःखनिरासरूपः कियत्पर्यन्तं न स्पृशति तत्राह—यावन्निष्किञ्चनानामनन्यप्रयोजनानां महीयसां महाभागवतानां पादरजस्सेवां न वृणीत न वृणुयात् महत्सेवां न कुर्यात्तावन्न स्पृशतीत्यर्थः । मम मातृगर्भावस्थानदशायामेव महीयसः श्रीनारदस्यानुग्रहादियं बुद्धिरुरुक्रमस्याङ्घ्रिविषयाऽभूदिति गूढोऽभिप्रायः ॥ ३२ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

साधुत्वेन वृतस्य गुरोर्दुर्नीते इति सम्बोध्य निन्दनं कथं युज्यते ? इति तत्राह–पन्थ इति ।—

"गुरोरप्यवलिप्तस्य कार्याकार्यमजानतः ।
उत्पथं प्रतिपन्नस्य कार्यं भवति शासनम्" ॥

इति वाक्य हिशब्देन स्मारयति पातकिनां पापफलत्वेन रोग उदेति यथा, तथा तेषामघमपराधलक्षणं व्यसनं प्रकाशत इत्यन्वयः ॥ २७ ॥

लोके सन्त्वसाधवः नाहं तादृशः यतस्त्वत्पुत्रो न मया पाठितं नापि परेण पठ्यत इत्याह—नमदिति । तर्हि कस्मादियं मतिरभूदिति तत्राह–नैसर्गिकीति । तदा तस्मिन्पक्षे ममाऽस्मत्स्वरूपाभिमानी मया ग्राहितेयं मतिरिति कस्तस्मात् कोपं संहरेति ॥ २८ ॥

पुत्राय क्रुध्यन्तमाह–गुरुणेति । गुरुमुखी गुरुमुखादुत्पन्नेयं मतिः ॥ २९ ॥

सत्येव मन्मतिः त्वन्मतिरेवासतीति पितरं कटाक्षीकृत्य परिहरति–मतिरिति । परतो गुर्वादिबोधनप्रयत्नेन स्वतः स्वप्रयत्नेन तत्र निमित्तमाह—गृहेति । वनादिनिवासमन्तरेण गृह एवावस्थानलक्षणं व्रतं येषां ते तथा तेषाम्, ननु "कुटुम्बी शुचौ देशे स्वाध्यायमधीयानः" इतिश्रुतेर्गृहस्थानामपि श्रेयःप्राप्त्युपपत्तेरिति तत्राह—अदान्तेति । अदान्तानामिन्द्रियनिग्रहरहितानां पुरुषाणां गोभिर्वागिभिस्तमिस्रं नरकसुखकल्पं विषयसुखं विशतां भुञ्जानानां तत्रापि नूतनापूर्वभोगो नास्तीत्यभिप्रेत्याह—पुनरिति । पुनः पुनर्भुक्तविषयानेव भुञ्जानानामित्यर्थः । अदान्तगोभिरशिक्षिताभिर्वागिभर्वेदनाभिस्तमिस्रमतत्त्वार्थविषयमज्ञानम् अन्यथाज्ञानञ्च विशतां गाहमानानां न तत्रापि यत्नो स्तीत्याह—पुनरिति वा ॥ ३० ॥

एतदेव स्पष्टमाह–न त इति । दुरन्तेषु प्रतीतिसुन्दरेषु परिणामविषयेष्वाशयो येषां ते तथा तत्र हेतुमाह–बहिरिति । बहिरर्थेषु मुखतः प्रतीयमानार्थेष्वेव भावस्तात्पर्यार्थनिश्चयो येषां ते तथा श्रुतितात्पर्यार्थानभिज्ञा इत्यर्थः । एते स्वार्थगतिं पुरुषार्थस्वरूपं स्वभक्तप्रयोजनसाधकं वा कृष्णं न विदुरित्यन्वयः । अत्र कारणमाह–वाचीति । ईशानस्यामीशस्य वेदवाग्लक्षणतन्त्यां ब्राह्मणादिबहुनामाख्यलक्षणानामदाम्नि बद्धाः अत्रोदाहरणमाह—अन्धा इति । अन्धैरज्ञैरुपनीयमाना उपदिश्यमानकर्ममार्गाः अन्धा अज्ञा उपदिष्टान्यमार्गं यथा न विदुस्तथेति अनेन "अन्धेनैव नीयमाना यथान्धाः" इति स्मृतिं स्मारयन्ति ॥ ३१ ॥

नन्वेवं तर्हि गृहव्रतानां मुक्त्युपायः कः ? इत्याह—नैषामिति । यावदेषां गृहव्रतानां मतिर्महीयसां निष्किञ्चनानां सन्यासिनां पादरजोऽभिषेकं न वृणीत तावन्तं कालमुरुक्रमस्याङ्घ्रिं न स्पृशति न विषयीकरोति उरुक्रमस्याङ्घ्रिस्पर्शस्य किं फलम् ? अत्राह–अनर्थेति । यस्य हरेरङ्घ्रिस्पर्शोत्थफलमनर्थापगमः संसारनिवृत्तिः अथवाऽनर्थापगमो यस्मात् पादरजोभिषेकादुत्थितः प्रकाशितो भवति तम् ॥ ३२ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

गुरुरेव मुखं द्वारं यस्याः सा गुरुमुखी ॥ २९ ॥ ३० ॥

स्वस्मिन् श्रीविष्णोरेवार्थः प्रेमरूपः पुरुषार्थो येषां तेषाम् ॥ ३१ ॥

अनर्थस्य तत्स्पर्शविघ्नस्यापगमः ॥ ३२—३५ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

मद्वैरिपक्षवर्ती त्वमेतावद्दिनान्ते मद्दृशैव व्यक्तोऽभूस्तदद्यैव ते समुचितां दक्षिणां दास्यामीत्यर्थान्तरस्य न्यासेनाह—सन्तीति दुष्टे मैत्र्य मित्रत्वं येषान्तं अघं द्वेषादिकं उदेति दैवात् प्रकटीभवति रोग इति—

"ब्रह्महा क्षयरोगी स्यात् सुरापः श्यावदन्तकः ।
स्वर्णहारी तु कुनखी दुश्चर्मा गुरुतल्पगः" ॥

इत्यादिस्मृत्युक्तः ॥ २७ ॥

हे इन्द्रशत्रो ! इति मयि दीने ब्राह्मणे कोपस्ते नोचित इति भावः । नोऽस्मभ्यं कृत् कुत्सितं दोषं मास्म अदाः अदागम आर्षः मयि दोषारोपणं माकृथा इत्यर्थः ॥ २८ ॥

हे अभद्र ! असती वस्तुतस्तु भद्रा सती सर्वोत्तमा ॥ २९ ॥

सत्यमियं कृष्णविषया मतिर्भवन्मते असत्येव किञ्चैषा मतिर्भवादृशानां साधूनां कुतोऽपि कदाचिदपि नोत्पद्यत इति वक्रोक्त्या उपहसन्नाह–मतिरिति । परत ईदृशाद्गुरोरन्यतो वा स्वतो वा मिथोऽन्योन्यतो वा नाभिपद्येत न संपद्येत किन्तूत्तरग्रन्थदृष्ट्या महच्चरणरजोभिषेकाभिलाषारहितानामिति तदीयस्वगतोक्तिरत्र श्लोकेऽपि ज्ञेया केषां गृहव्रतानां गृहासक्तानां गृहव्रतत्वमेवाह, अदान्तैरवशीकृतैर्गोभिरिन्द्रियैस्तमिस्रं नरकम् ननु, गृहव्रताः कदाचित्स्वर्गिणोऽपि भवन्ति तत्राह—स्वपराभ्यां

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

चर्वितस्यैव पुनःपुनश्चर्वणं येषां तेषां वेश्यालय. स्वर्गो वा तुल्य एवेति भावः ॥ ३० ॥

ननु, रे मूढ मामिन्द्रादिवन्द्यपादपीठं पितरमपि वक्रोक्तिविषयीकुरुषे शृणु रे कुमते शृणु शुक्राचार्यस्य शिष्या महाविद्वांसस्त्वद्गुरुवः किं सर्वशास्त्रतात्पर्यं न जानन्ति ? यतस्तेभ्योऽधीतमर्थं न त्वं साधु मन्यसे, इत्यत आह—नेति। ते स्वस्य अर्थरूपां गतिं विष्णुं न विदु. किं त्वनर्थरूपाङ्गतिं स्वर्गादिमेव जानन्तीति भावः। यतो दुराशया. दुष्टान्तःकरणाः बहिर्विषयसुखमनर्थमेव अर्थं मन्तुं शीलं येषां ते अतस्त एव यदि विष्णुं न विदुः तदा कथं तच्छिष्या ज्ञास्यन्तीति सदृष्टान्तमाह अन्धैरुपनीयमानाः उपदिष्टमार्गाः सन्तोऽन्धा यथा गर्त्तं पतन्ति तथैव वाचि वेदलक्षणायां तन्त्यां दीर्घरज्ज्वां उरूणि दामानि ब्राह्मणादिनामानि यस्य तस्यां कर्मनिर्बन्धा एव भवन्तीत्यर्थः ॥३१॥

ननु च यदि विष्णुरेव स्वार्थरूपा गतिः शास्त्रैरुच्यते तदा त्वद्गुरूणां सर्वशास्त्रज्ञानामपि मतिः विष्णुनिष्ठैवोत्पद्येते त्यतस्तेषां विष्णुनिष्ठमतित्वाभावादेव विष्णुभक्तिरशास्त्रीयेत्यनुमीयत इत्यत आह—नैषामिति। निष्किञ्चनानां "मत्कृतेत्यक्तकर्मासस्त्यक्तस्वजनबान्धवाः" इति भगवद्वाक्यविश्वासात् त्यक्तव्यावहारिकनिस्तुषकलनाभिलाषकर्मज्ञानादीनां भक्तिमात्रैकवासनत्वेन महीयसां पादरजसा स्वस्य वैष्णवत्वेनाभिषेकं यावन्न वृणीत तावन्मतिरुरुक्रमाङ्घ्रिं नस्पृशयति—

"यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ।
तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः." इति ॥

"यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनुं स्वाम्" इत्यादि श्रुतिभ्यः अनर्थस्य संसारस्य अपगमोऽपवर्ग इत्यर्थः यथा अङ्घ्रिस्पर्शिन्या मतेरर्थः प्रयोजनमानुषङ्गिकमेव फलं मुख्यं फलन्तूरुक्रमाङ्घ्रिस्पर्शः स एव ॥ ३२ ॥ ३३ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

असाधवः दुराचाराः छद्मवेषिणः मित्रत्वेन वर्त्तमानाः शत्रवः अत एव दुष्टं मैत्रं मित्रत्वं येषां ते तेषामघं दुर्मित्रत्वं पातकिनां रोगो यथा तद्वत्काले उदेति प्रकटं भवति ॥ २७ ॥

हे इन्द्रशत्रो ! एष तव सुतो यद्ब्रवीति तन्मत्प्रणीतं न परप्रणीतं मत्पितृपितामहादिप्रणीतं वा न भवति किन्त्वस्येयं नैसर्गिकी मतिः अतो मन्युं नियच्छ उपसंहर नोऽस्मभ्यं कलं कष्टं मास्म अदाः अडागम आर्षः ॥ २८ ॥

गुरुमुखी गुरूपदिष्टा न चेत्तर्हि कुतोऽभूत् ॥ २९ ॥

कृष्णमतेरात्मनः कृतार्थतां द्योतयितुमकृष्णमतीनामकृतार्थतामाह—मतिरिति द्वाभ्याम्। गृहव्रतानां प्रवृत्तिमार्गनिष्ठानां पुनः पुनश्चर्वितचर्वणानां भुक्तविषयभोगरतानाम् अदान्तैर्गोभिरिन्द्रियैस्तमिस्रं जन्ममरणप्रवाहलक्षणं संसारं विशताम् मतिः परतः स्वतो मिथोऽन्योन्यतो वा नाभिपद्येत ते शोच्या इति भावः ॥ ३० ॥

ये दुराशयाः दुष्टे विषयसुखे आशयोऽन्तःकरणं येषां तथाभूताः अत एव बहिरर्थेषु ध्यानानन्दादिकैर्दूरतस्त्यक्तेषु मानिनः पुरुषार्थाभिमानिन. वागीशस्य वेदस्वामिनो हरेः तन्त्यां वेदलक्षणायां दीर्घरज्जुस्थानीयायामुरूणि दामानि ब्राह्मणादीनि नामानि तत्तद्बन्धनस्थानानि यस्यां बद्धाः स्वार्थमति अश्यते इत्यर्थः। प्राप्योऽर्थ. स्वस्यार्थः स्वार्थगम्यते अनयेति गतिः प्राप्यमार्ग. स चासौ स च उपायोपेयरूपः तं न विदुः ते संसार एव पतन्ति अन्धा यथान्धैर्नीयमानाः गम्यं देशं तन्मार्गञ्च न विदुः प्रत्युत गर्ते पतन्ति तद्वत् तेषामुपदेष्टारोऽपि स्वार्थगतिं विष्णुं न जानन्ति संसारे एव निमज्जन्तीति दृष्टान्ताभिप्रायः ॥ ३१ ॥

अज्ञानहेतुमाह—नैषामिति। एषां मतिः यावदकिञ्चनानां भगवच्चरणैकशरणानां पादरजोऽभिषेकं न वृणीत तावत् उरुक्रमाङ्घ्रिं न स्पृशति न विषयीकरोति यस्याम् उरुक्रमाङ्घ्रिस्पर्शिन्यामतेरर्थः प्रयोजनं अनर्थस्य अर्थो मोक्षस्तद्विपरीतस्य बन्धस्यापगम ॥ ३२ ॥

---

भाषा टीका।

लोक मे कपट रूपी दुष्ट मैत्री वाला बहुत से असाधु (दुष्ट) है, कि जिनका पाप समय पाकर पातकियो के रोग की तरह प्रकट होता है ॥ २७ ॥

गुरुपुत्रउवाच ॥

गुरुपुत्र बोला, कि—हे इन्द्रशत्रो ! तुमारा पुत्र न हमारा बनाया हुआ न दूसरे का बनाया हुआ भी कहता है, इसकी मति ऐसी स्वाभाविक है राजन् ! आप क्रोध को रोकिये हम लोगो पर मिथ्या दोषारोपण न कीजिये ॥ २८ ॥

नारद उवाच ॥

नारदजी बोले, कि—जब गुरु ने लोट कर फिर ऐसा कथन किया तब असुर फिर पुत्र से बोला कि—यदि तेरी यहमति गुरुमुखी नहीं तो फिर यह खोटी मति कहां से हुई ॥ २९ ॥

प्रह्लाद उवाच ॥

प्रह्लाद बोले, कि—गृहकी चिंता वाले और अनशक्ति इन्द्रियो से वार २ चर्वित विषयों का चर्वण करने वाले अत एव वारंवार संसार में प्रविष्ट होने वाले ऐसे लोगो की मति कृष्ण में आप से वा गुरू के उपदेश से वा अन्य किसी से नहीं लगती ॥ ३० ॥

बहिर्विषय में अर्थ दृष्टि वाले जो दुराशय लोग है वे परम पुरुषार्थ के प्रापक श्री विष्णु को नही जान सक्ते है, अंधो के हाथ पकड के चलने वाले अन्धे जैसे मार्ग न जान सक्ता किन्तु खड्डे में पडते है इसी प्रकार ये लोग भी ईश्वर की वाणी रूप तंती में बंधे हुए संसार ही में पडते है ॥ ३१ ॥

इत्युक्त्वोपरतं पुत्रं हिरण्यकशिपूरुषा ।
अन्धीकृतात्मा स्वोत्सङ्गान्निरस्यत महीतले ॥ ३३ ॥
आहामर्षरुषाविष्टः कषायीभूतलोचनः ।
वध्यतामाश्वयं वध्यो निस्सारयत नैर्ऋताः ॥ ३४ ॥
अयं मे भ्रातृहा सोऽयं हित्वा स्वान्सुहृदोऽधमः ।
पितृव्यहन्तुर्यः पादौ विष्णोर्दासवदर्चति ॥ ३५ ॥
विष्णोर्वा साध्वसौ किं नु करिष्यत्यसमञ्जसः ।
सौहृदं दुस्त्यजं पित्रोरहाद्यः पञ्चहायनः ॥ ३६ ॥
परोऽप्यपत्यं हितकृद्यथौषधं स्वदेहजोऽप्यामयवत्सुतोऽहितः ।
छिन्द्यात्तदङ्गं यदुतात्मनोऽहितं शेषं सुखं जीवति यद्विवर्जनात् ॥ ३७ ॥
सर्वैरुपायैर्हन्तव्यः सम्भोजशयनासनैः ।
सुहृल्लिङ्गधरः शत्रुर्मुनेर्दुष्टमिवेन्द्रियम् ॥ ३८ ॥
नैर्ऋतास्ते समादिष्टा भर्त्रा वै शूलपाणयः ।
तिग्मदंष्ट्रकरालास्यास्ताम्रश्मश्रुशिरोरुहाः ॥ ३९ ॥
नदन्तो भैरवान्नादांश्छिन्धि भिन्धीति वादिनः ।
आसीनं चाहनञ्छूलैः प्रह्रादं सर्वमर्मसु ॥ ४० ॥

भाषा टीका ।

इनकी मति जब तक निष्किञ्चन महात्मों के चरणरज के अभिषेक को नहीं स्वीकार करता है तब तक इसकी मति भगवच्चरणारविंद का स्पर्श नहीं करती है जिस स्पर्श से संसार रूप अनर्थ दूर होता है ॥ ३२ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

निरस्यत चिक्षेप ॥ ३३ ॥

अमर्षोऽसहनं तेन सहितया रुषाऽऽविष्टो व्याप्तः कषायीभूते आताम्रे लोचने यस्य हे नैर्ऋता राक्षसाः ! ॥ ३४ ॥

वध्यत्वे हेतुः यतोऽयं मे भ्रातृहा कुतः यो विष्णोः पादौ दासवदर्चति, तत्पक्षपातीत्यर्थः। अतः स एवायमित्यन्वयः ॥ ३५ ॥

अहो विष्णुरप्यविश्वसनीयं किमितिस्वीकृतवानित्याह–विष्णोर्वेति अहाजहौ ॥ ३६ ॥

ननु, तवायमपत्यं कथं वध्यस्तत्राऽऽह––परोऽप्यौषधमिव हितकृच्चेदात्मीयपत्यमेव ज्ञेयः सुतः स्वदेहजोऽप्यहितश्चेदामय इव ज्ञेयः आस्तां ममतास्पदस्य कथा, अङ्गमपि च यत्करचरणादि तदप्यात्मनोऽहितं चेच्छिन्द्यादेवेत्यर्थः ॥ ३७ ॥

अतः सर्वैरुपायैर्हन्तव्यः सम्भोजो भोजनम् भोजनादिषु विषादिप्रयोगैरित्यर्थः। यथा दुष्टमिन्द्रियं मुनेः शत्रुः ॥ ३८ ॥

तिग्मास्तीक्ष्णा दंष्ट्रा येषाम् करालान्यास्यानि भयङ्कराणि मुखानि येषां ते च ते च ताम्राणि श्मश्रूणि शिरोरुहाश्च येषाम् ॥ ३९ ॥ ४० ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

इतीत्थमुक्त्वोपरतं तूष्णीमासीनं पुत्रं रुषा क्रोधेनान्धीकृतः आत्मा विवेको यस्य स हिरण्यकशिपुः स्वस्योत्सङ्गात् महीतले निरस्य तं पातयित्वा आहचेत्युत्तरेणान्वयः । निरस्यतीति पाठे न्यपातयदित्यर्थः ॥ ३३ ॥

अमर्षः असहनं तत्सहितया रुषा आविष्टो व्याप्तः अतएव कषायीभूते आताम्रे लोचने यस्य सः आह च उक्तवांश्च तदेवाह––वध्यतामिति । हे नैर्ऋताः ! इत एनं निःसारयत बहिर्गमयत अयं बालो वध्यो वधार्हः अतःआशु वध्यतां हन्यताम् ॥३४॥

वध्यत्वे हेतुर्यतोऽयं मे मम भ्रातुर्हन्ता कुतःयोऽयमधमः

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

बालः स्वान् स्वकीयान् सुहृदोऽस्मान् हित्वा पितृव्यस्य पितृभ्रातुर्हिरण्याक्षस्य हन्तुर्विष्णोः पादौ चरणौ दासवदर्चति तत्पक्षपातीत्यर्थः। अतः स एवाऽवधमित्यन्वयः, हित्वाऽसून् सुहृद इति पाठे. अयं मे भ्रातृहा कुतः यदस्मादधमोऽयं सुहृदः प्रियानसून् प्राणान् हित्वा विष्णवे समर्प्य दासवत्तत्पादावर्चति अतोऽयमेव प्रह्लादो मे भ्रातृहेत्यर्थः॥ ३५॥

मद्दृष्टान्तेन विष्णोरप्ययमसमञ्जसोऽननुकूलः साधुकरिष्यति किन्तु? न करिष्यत्येव. अव्यवस्थितचित्तत्वादिति भावः। यतोऽसौ पञ्चहायनः पञ्चवर्षवयस्क एवसन् दुस्त्यजं स्वकुमञ्चकं पित्रोः मातापित्रोः सौहृदमहादत्याक्षीत्॥ ३६॥

ननु,तवायं पुत्रः तत्कथं वध्यः?तत्राह-परोपीति। परोऽपि शत्रुपक्षप्रभवोपि यथा औषधं तथा हितकृत् हितकारी चेत्तर्हि सोऽपत्यं पुत्र एव देहाज्जातोऽप्यामयवद्रोगवदहितो दुःखकृच्चेत्तर्हि आमयवत्परित्याज्यः। आस्तां ममतास्पदस्य कथा हि यस्मायदङ्गं करचरणादिकमपि सर्पदंशव्रणादिदूषितं सदात्मनोऽहितं दुःखकृच्चेत्तर्हि तदङ्गं छिन्द्यादेव यस्य दुष्टाङ्गस्य विसर्जनात्परिहाराच्छेषमवशिष्टमङ्गं सुखं जीवति॥ ३७॥

अतोऽयं सुहृल्लिङ्गधरः पुत्रवेषधारी शत्रुर्यथा दुष्टमिन्द्रियं मुनेः शत्रुः तद्वद्वर्तमानः सर्वैर्गरलादिमिश्रितसम्भोजनादिभिरुपायैर्हन्तव्यः॥ ३८॥

एवं भर्त्रा दैत्येन्द्रेण समादिष्टाः ते नैर्ऋताः शूलपाणयः तिग्माः तीक्ष्णा दंष्ट्रा दन्ताः येषां करालान्यास्यानि येषां ताम्रश्मश्रूणि शिरोरुहाणि च येषां तादृशाः॥ ३९॥

भैरवान् भयङ्करान्नादान्वदन्तः कुर्वन्तश्छिन्धिभिन्धीति वदन्त आसीनम् उपविष्टं प्रह्लादं सर्वेषु मर्मस्थानेषु शूलैरहनन् हतवन्तः॥ ४०॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

कषायीकृतलोचनः रक्तनेत्रः॥ ३३—३४॥

पितृव्यस्य हिरण्याक्षस्य हन्तुः असावसमंजसः प्रह्लादः विष्णोः किं वा साधु करिष्यति॥ ३५॥

कथमसमंजसो भूत्तत्राह-सौहृदमिति॥ ३६॥

परः शत्रुरप्यवद्यं क्लेशेनापि हितकृच्चेत्स एव सुतः यथा औषधं तिक्तत्वेन "हरीतकी मनुष्याणां मातेव हितकारिणी" इति वचनात् स्वदेहजोऽपि सुतोऽपि अहितोऽपकारीचेत्तं छिन्द्यादामयवत् किञ्चात्मनः स्वस्य यदहितमङ्गं सर्पदष्टं तच्छिन्द्यात्तदेव विशिनष्टि-यद्विवर्जनादिति शेषमङ्गं सुखं जीवतीत्यन्वयः॥ ३७॥

संभोजो भोजनम्॥ ३८—३९॥

भैरवं नादमुद्दिश्य॥ ४०॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

पञ्चहायन इति। गर्भे चिरकालस्थितत्वात्॥ ३६—३८॥

नैर्ऋता इति युग्मकम्। दृष्टा इति क्वचित्। किन्तु स्वाम्यसम्मतः॥ ३९—४०॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी।

अमर्षः असहनं तेन सहितया रुषा आविष्टः हे नैर्ऋताः! राक्षसाः॥ ३४॥

अयं मे भ्रातृहा, ननु, विष्णुस्ते भ्रातृहा प्रसिद्धस्तत्राह स विष्णुरयमेवेत्यर्थः। कुतः हित्वेत्यादि दासवदिति अत्रुरमदराजनन्दनोपि भृत्येत्यर्थः विष्णुना स्वदासेषु स्वसारूप्यार्पणात् विष्णुरेवायमिति वध्यताम्॥ ३५॥

विष्णुरप्यविश्वसनीयः कथमिमं बुद्धिमान् भूत्वा कथं विश्वस्तः स्यादित्याह—विष्णोर्वेति,॥ ३६॥

ननु, त्वदपत्यमयमस्माभिः कथं हन्तुमर्हस्तत्राह-परोऽप्यौषधमिव हितकृच्चेत्तर्ह्यपत्यमिव ज्ञेयः आस्तां ममतास्पदस्य कथा अङ्गमपि यत् करचरणादि तदप्यात्मनोऽहितं चेत् छिन्द्यादेवेत्यर्थः॥ ३७॥

भोज्यादिवस्तुषु विषाद्यैर्यैरपि हन्तामित्याह—सर्वैरिति॥ ३८॥ ३९॥ ४०॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

इत्येवमुक्त्वोपरतं तूष्णीं स्थितम् स्वस्योत्सङ्गात् महीतले निरस्यन् अपातयत्॥ ३३॥

अमर्षेण पुत्रसिद्धान्तासहनेन युक्तया रुषाऽऽविष्टोऽभिभूतः कषायीभूतेऽतिताम्रे लोचने यस्य सः हे नैर्ऋताः अयं वध्यः आशु निस्सारयत तदनन्तरं वध्यतामित्याह॥ ३४॥

वध्यत्वे हेतुमाह-अयमिति। यो मे भ्रातृहा विष्णुः सोऽयं प्रह्लादः तद्दासत्वात्तदनन्य इत्यर्थः। तदेवाह,यः स्वान्सुहृदोऽस्मदादीन् हित्वा पितृव्यहन्तुर्विष्णोः पादौ दासवदर्चति सोऽयम् अधमः वधार्ह इत्यर्थः॥ ३५॥

यः पञ्चहायनः पञ्चवर्षः पित्रोः सौहार्दं दुस्त्यजम् अहात् अत्यजत् सोऽसावसमञ्जसः अविश्वसनीयः विष्णोर्वा किं साधु प्रियं करिष्यति॥ ३६॥

राजनीतिरियं यदुपलात्पुत्रोऽप्येवंविधो वध्य इत्याह-पर इति। परःशत्रुरपि अपत्यं यदि हितकृत् यथौषधम् स्वदेहजः सुतोप्यहितश्चेत्परः शत्रुरेव आमयवत् यदङ्गमङ्गुल्यादि अहिविषादिना आत्मनोऽहितं तच्छिन्द्यादेव यद्विवर्जनात् शेषं शरीरं सुखं यथा तथा जीवति॥ ३७॥

यस्मादयं मुनेर्दुष्टमिन्द्रियमिव सुहृल्लिङ्गधरः शत्रुरतः सम्भोजोभोजनं तदादिभिः विषदूषितान्नदानादिभिर्मारणोपायैर्हन्तव्यः॥ ३८॥

परे ब्रह्मण्यनिर्देश्ये भगवत्यखिलात्मनि ।
युक्तात्मन्यफला आसन्नपुण्यस्येव सत्क्रियाः ॥ ४१ ॥
प्रयासेऽपहते तस्मिन्दैत्येन्द्रः परिशङ्कितः ।
चकार तद्वधोपायान्निर्बन्धेन युधिष्ठिर ! ॥ ४२ ॥
दिग्गजैर्दन्दशूकैश्च अभिचाराऽवपातनैः ।
मायाभिः सन्निरोधैश्च गरदानैरभोजनैः ॥ ४३ ॥
हिमवाय्वग्निसलिलैः पर्वताक्रमणैरपि ।
न शशाक यदा हन्तुमपापमसुरः सुतम् ।
चिन्तां दीर्घतमां प्राप्तस्तत्कर्तुं नाभ्यपद्यत ॥ ४४ ॥
एष मे बह्वसाधूक्तो वधोपायाश्च निर्मिताः ।
तैस्तैर्द्रोहैरसद्धर्मैर्मुक्तः स्वेनैव तेजसा ॥ ४५ ॥
वर्तमानोऽविदूरे वै बालोऽप्यजडधीरयम् ।
न विस्मरति मेऽनार्यं शुनःशेप इव प्रभुः ॥ ४६ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

[illegible] हिंस[illegible]ऽभिद्य्राः तिग्माः तीक्ष्णाः दंष्ट्रा येषां करालानि [illegible]वदनानि येषां ते च तथा ताम्राश्मश्रूणि [illegible] शिरोरुहाश्च येषां ते ॥ ३९ ॥ ४० ॥

भाषा टीका ।

इतना कहकर चुप होने पर मारे रोष के अंधा हो रहा जो हिरण्यकशिपु, उसने अपने पुत्र प्रह्लाद को गोद से उठाकर पृथ्वी पर पटक दिया ॥ ३३ ॥

क्रोध से व्याप्त होने से लाल नेत्र जिसके ऐसा हिरण्यकशिपु बोला, कि हे राक्षसो ! यह लड़का वध के योग्य है, इसको मारो और निकाल दो ॥ ३४ ॥

यह अधम हमारे भ्राता का घातक है, क्योंकि ? अपने सुहृदों को छोड़कर पितृव्य के मारने वाले विष्णु के चरणों को दास के तरह पूजता है ॥ ३५ ॥

जो पांच वर्षका ही अपने मा बापों से सौहृद छोड़चुका यह खोटा विष्णु का क्या भला करेगा ? ॥ ३६ ॥

जो दूसरा होकर भी औषध के तरह हितकारी है वह अपना पुत्र है और अपने देह से भी पैदा है पर रोग के तरह दुःखदायी हो तौ वह पुत्रभी वैरी है जो अपना अहित करने वाला अंग भी हो ( जैसे सर्प की काटी अंगुली ) तौ उसे काट डाले, कि जिसके बिना शेष मे सुख पूर्वक जीवता रहे ॥ ३७ ॥

भोजनादिक में विषादि प्रदान से ऐसे सर्व उपायों से इसे मारना चाहिये क्योंकि यह सुहृद का चिन्ह धारण करने वाला शत्रु है जैसे मुनि के दुष्ट इन्द्रिये शत्रु है ॥ ३८ ॥

अपने भर्त्ता की आज्ञा पाकर तीक्ष्णडाढे और कराल मुख वाले लाल २ डाढी मूंछ और केश जिनके ऐसे वे राक्षस लोग हाथों में त्रिशूल लेने से भयंकर, बैठे हुए प्रह्लादके सर्व मर्म स्थानों मे शूलो से प्रहार करने लगे ॥ ३९ ॥ ४० ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

परे ईश्वरे युक्तः समाहित आत्मा मनो यस्य तस्मिन्प्रह्लादे तेषां नैर्ऋतादीनां प्रहाराः निष्फलाः आसन् जाताः तत्र हेतवः ब्रह्मणि निर्विकारेऽनिर्देश्येऽविषये भगवति निरतिशयैश्वर्येऽखिलात्मनि शक्रादीनामपि नियन्तर्येवम्भूते परे अपुण्यस्य निर्दैवस्य सत्क्रियाः महोद्यमा इव ॥ ४१ ॥ ४२ ॥

दन्दशूकैः सर्पैः अभिचाराः कृत्यादयः अवपातनानि गिरिशृङ्गादधःपातनानि तैः मायाभिः शम्बरनिर्मिताभिः अवटादिषु सन्निरोधैश्च ॥ ४३ ॥

पर्वताक्रमणैः पर्वतानां तदुपरि क्षेपैः बहुवचनैरभिचाराद्यावृत्तिं दर्शयति तद्धननं कर्तुं नाभ्यपद्यत न प्राप नाशकोदित्यर्थः ॥ ४४ ॥

अप्रमेयानुभावोऽयमकुतश्चिद्भयोऽमरः।
नूनमेतद्विरोधेन मृत्युर्मे भविता न वा ॥ ४७ ॥
इति तं चिन्तया किञ्चिन्म्लानश्रियमधोमुखम्।
शण्डामर्कावौशनसौ विविक्त इति होचतुः ॥ ४८ ॥

श्रीधरस्वामिकृतभावार्थदीपिका।

चिन्तामेवाऽऽह-एष इति त्रिभिः। मे मया अत्यासु यदुं यथा भवति तथोक्तः असद्धर्मैरपकारैरभिचारैर्वा ॥ ४५ ॥

अविदूरे समीपे वर्तमानोऽपि बालोऽप्ययमजडधीर्मे ऽभिचारो मेऽनार्यमन्यायं शत्रुत्वं वा न विस्मरति अजीगर्तस्य मध्यमपुत्रः शुनःशेफोनाम पितृभ्यां हरिश्चन्द्राय विक्रीतस्तन्यथा तयोरपकारमविस्मरंस्तद्विपक्षं विश्वामित्रमाश्रित्य गोत्रान्तरमापन्नस्तद्वत् यद्वा स्वभावापरित्यागे दृष्टान्तः शुनःशेफः पुच्छमिवेति ॥ ४६ ॥

अप्रमेयोऽपरिमेयोऽनुभावो यस्य न कुतश्चिद्भयं यस्य अमरोऽमृत्युरयमस्य च न वा भविता अन्यथा मृत्युरेव भविष्यतीत्यर्थः ॥ ४७ ॥

औशनसौ उशनसः पुत्रौ नीतिज्ञौ विविक्ते एकान्ते ॥ ४८ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

अनिर्देश्ये स्वेनाचेतनसजातीयत्वेन निर्देष्टुमशक्ये अखिलात्मनि हन्तृहन्तव्यान्तरात्मनि पूर्वोपाडुगुणे परे ब्रह्मणि युक्तः नियुक्तः आत्मा मनो यस्य तस्मिन् प्रह्लादे नैर्ऋतैः कृता मारणोपाया अफलाः व्यर्थाः बभूवुः, मरणहेतवो न बभूवुरित्यर्थः। यथा अपुण्यस्य पापस्य कृता अपि सत्क्रियाः सन्ध्योपासनादय. अफलास्तद्वत् फलहेतुत्वं विशेषणाम् अखिलात्मनि युक्तात्मनीति। अयं भावः, का... स्वदेहसम्बन्धमनुकूलसुखदुःखभोक्तृत्वतदनुगुणपुण्यपापकर्तृत्वानुगुणं जीवपर्यन्तदेहेन्द्रियादिप्रेरणरूपमखिलात्मत्वप्रयोजनानु... तम्. तत्र हन्त्रन्तरात्मतया हन्तव्यस्य तज्जननानुगुणव्यापारानुगुणं नियमयन्नपि पुनर्हन्तव्यस्य हन्तृव्यापारजन्यदुःखानुभवानुगुणतया नियमयतीति. कथमेकस्यैवंविधं परस्परविरुद्धं नियमनमितिशङ्कानिराचिकीर्षयाऽनिर्देश्य इत्युक्तम् लोकविलक्षणविविधविचित्रशक्तेरीदृशं नियन्तृत्वमुपपन्नमित्यभिप्रायः ॥ ४१ ॥

एवं शूलघातादिरूपमरणोद्योगरूपे प्रयासे अपहते व्यर्थे सति दैत्येन्द्रो हिरण्यकशिपुः परिशङ्कितः किमहो अयं शूलघातादिभिरपि नाहन्यत किमस्मादेव मम मृत्युर्भविष्यतीत्याशङ्कितः हे युधिष्ठिर! निर्बन्धेन तस्य प्रह्लादस्य वधोपायान् चक्रे ॥ ४२ ॥

तानेव विविधोपायानेव प्रपञ्चयंस्तैरप्यहतत्वमाह—दिग्गजैरिति। दिग्गजाक्रमणैः दन्दशूकेन्द्रैः सर्पश्रेष्ठदंशनैः अभिचारैर्मारणहोमैः अवपातनैः गिरिशृङ्गेभ्योऽधःपातनैः मायाभिरकस्मादशनिपातनादिभिः सन्निरोधैर्नवरन्ध्रापिधानैः गरदानैः विषप्रयोगैः अभोजनैरदनाशै. ॥ ४३ ॥

हिमादिषु पातनैः पर्वताक्रमणैः पर्वतानां तदुपरि निक्षेपैः एवंविधैरुपायैरसुरैः प्रयोज्यकर्तृभिः यदा निरपराधं सुतं हन्तुं न शशाक नाशक्नोत् तदा तत्कर्तुं तद्धननङ्कर्तुं नाभ्यपद्यत उपायान्तरं न लेभे इत्यर्थः। प्रत्युत दीर्घतमां चिन्तां प्राप्तः ॥ ४४ ॥

चिन्तामेव प्रपञ्चयति—एष इति। एष बालो मे मया बहुसाधु यथा भवति तथोक्तः तथा वधोपायाश्च निर्मिताः कारिताः असद्धर्मैरभिचारादिभिस्तैस्तैः द्रोहैः शूलघातादिभिश्च मुक्तोऽविहतः स्वेनैव तेजसा माहात्म्येन उक्तोपायेभ्योऽविदूर एव वर्तमानो बालोऽप्ययमजडा निपुणा धीर्यस्य तादृशः मे मम अनार्यं द्रोहं न स्मरति शुनःशेफ इव यथा शुनश्शेफाख्यः पितृभ्यां हरिश्चन्द्राय विक्रीतस्सन् तयोरपकारं विस्मरन् तद्विपक्षं विश्वामित्रमाश्रित्य गोत्रान्तरमापन्नस्तद्वत् यद्वा स्वभावापरित्यागे दृष्टान्तः शुनःशेफः पुच्छमिवेति प्रभुः जितेन्द्रियः ॥ ४५ ॥ ४६ ॥

अप्रमेयोऽपरिमेयोऽनुभावो यस्य न कुतश्चिद्भयं यस्य अत एवामरो ... एतस्य विरोधेन हेतुना नूनं ममैव मृत्युः भविता भविष्यति न वा भविता एतद्विरोधेन मम मृत्युभावे हेत्वन्तरेण नैव भविष्यतीत्यर्थः ॥ ४७ ॥

इतीत्थं तच्चिन्तया पुत्रविषयकचिन्तया म्लानश्रियं निस्तेजस्कं किञ्चिदधोमुखं तं हिरण्यकशिपुमौशनसौ उशनसः शुक्रस्य पुत्रौ शण्डामर्काख्यौ विविक्ते निर्जने देशे, तस्य प्रतिज्ञाभङ्गादिति भावः, इति वक्ष्यमाणप्रकारेण ऊचतुः ॥ ४८ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

अनिर्देश्यत्वादिगुणशालिनि हरौ युक्तात्मनि प्रयोजितमनस्के प्रह्लादे अपुण्यस्येव पापिन इव तत्क्रियाः तेषां नैर्ऋतानां ताडनादिक्रियाः ॥ ४१—४२ ॥

वधोपायमाह-दिग्गजैरित्यादिना। अवपातनं गिरिशृंगादधःपातनं सन्निरोधैरनिर्गमनगृहे निक्षिप्य पीडनैः पर्वताक्रमणैः पर्वतारोहणैः उपरि पर्वतपातनैर्वा ॥ ४३—४४ ॥

तत्कर्तुं हननं कर्तुम् ॥ ४५ ॥

असद्धर्मैरसतां योग्यैः अविदूरे समीपे विदूरे वा वर्त-

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

मानोऽजडधीः पटुतरबुद्धिः अनार्यं मूर्खकर्म अन्याय्यमिति पाठे तच्छास्त्रविरुद्धं मद्यमपरं श्रुतं दत्वाहमेनं विश्वासिष्यामीत्याद्यजीगर्तकृतकर्म शुनःशेपेन यथा सोढुं नयोनि ॥ ४६—४७ ॥

इति वक्ष्यमाणप्रकारं हेत्युच्यमानेर्थे तात्पर्योऽनिशयं वक्ति ॥४८॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी।

भगवति हरौ युक्तः संयुक्तः आत्मा देहो यस्य तस्मिन् 'गोविन्दपरिरम्भिनः' इत्यादि पूर्वोक्तेः पित्रा स्वाङ्गगुप्ते पुत्रे इवेति भावः ननु, तर्हि किं भगवदङ्गोपरि शस्त्रप्रहाराः अभूवंस्तत्र न हि न ह्यसम्भवादेवेत्याह—परे इत्यादि । ब्रह्मणि व्यापके निर्विकारे अनिर्देश्ये भगवति अतर्क्यैश्वर्ये अखिलात्मनि शस्त्रादीनामपि नियन्तरि शस्त्राघाताः कथ सम्भवतीतिभावः अपुण्यस्य दुर्भाग्यस्य ॥ ४१ ॥ ४२ ॥

अभिचारैः कृत्यादिभिः अवपातनैरत्युच्चदेशादधःपातनैः गर्त्तादिसन्निरोधैः बहुवचनैरभिचाराद्याद्युत्तयः सूचिताः तद्धननं कर्तुं नाऽभ्यपद्यत नाशक्नोदित्यर्थः ॥ ४३ ॥ ४४ ॥

चिन्तामाह—एष इति त्रिभिः । असतां धर्मैरभिचारैश्च ॥४५॥

अविदूरे वर्त्तमानोपि मे अनार्य्यं शत्रुं निष्कुं न विस्मरति स्वभावापरित्यागे दृष्टान्तः शुनः शेफः पुच्छमिव वस्तुतस्तु शुनश्शेफो नाम पितृभ्यां हरिश्चन्द्राय विक्रीतो मध्यमः पुत्रः स यथा तयोरपकारमविस्मरंस्तद्विपक्षं विश्वामित्रमाश्रित्य गोत्रान्तरमापन्नस्तद्वत् ॥ ४६ ॥ ४७ ॥ ४८ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

अखिलात्मनि परे अखिलविलक्षणे बृहत्स्वरूपगुणादिमति भगवति युक्त आत्मा मनो यस्य तस्मिन् प्रह्लादे प्रयासा अफला आसन् सम्यक् कृता अपि निष्फला जाता इत्यत्र दृष्टान्तमाह—अपुण्यस्य पापिनः बहुपापाचरणेन सत्कर्मनाशकस्य सत्क्रियाः नित्यनैमित्तिकानि सत्कर्माणि इव ॥ ४१ ॥

अपहृते निष्फले जाते निर्बन्धेनात्याग्रहेण ॥ ४२ ॥

दिग्गजादिभिः हन्तुं यदा न शशाक तदा चिन्तां प्राप्तस्तत्कर्तुं नाऽभ्यपद्येतेत्यनेनान्वयः दिग्गजैस्तदाक्रमणैः दन्दशूकेन्द्रैस्तद्दंशनैः अभिचारैः कृत्यादिभिः अवपातनैः पर्वतादितः मायाभिः आसुरीविद्याभिः सन्निरोधैरवटादिषु ॥ ४३ ॥

पर्वताक्रमणैस्तदुपरिपर्वतनिक्षेपैः यदा हन्तुं न शशाक तदा दीर्घतमां दुस्तरां चिन्तां प्राप्तस्सन् तद्घातं कर्तुमुपायं नाऽभ्यपद्यत न प्राप्तः ॥ ४४ ॥

चिन्तामेवाह—एषेत्यादिना । मे मया असाधु परुषं यथा स्यात्तथोक्तः वधोपायाश्च बहुधा निर्मिताः तैर्द्रोहैर्वधो पायैरसतां धर्मैरसद्भिः कर्तुमुचितैः स्वेनैव तेजसा भजनबलेन मुक्तः ॥ ४५ ॥

यद्यप्ययं बालस्तथापि अविदूरे वर्त्तमानः अजडधीः पण्डितः अभ्रः समर्थश्च शुनःशेफः पुच्छमिव स्वभावापरित्यागीत्यर्थः अतो मेऽनार्य्यं न विस्मरति ॥ ४६ ॥

अनश्च नूनं निश्चितमेतद्विरोधेन मे मृत्युर्भविता भविष्यति वाऽथवा अप्रमेयानुभावोऽपि अयममरो देवरूपः ममानार्य्यं विस्मृत्य मां न घातयेदित्यर्थः ॥ ४७ ॥

औशनसौ शुक्रपुत्रौ अतः शुक्रोक्तनीतिशास्त्राभिज्ञत्वाद्विविक्ते एकान्ते इति वक्ष्यमाणमूचतुः ॥ ४८ ॥

---

### भाषा टीका ।

परब्रह्म अनिर्देश्य (प्राकृत इन्द्रियों का अविषय) अखिल जीवों का आत्मा षड्गुण सम्पन्न परमात्मा में चित्त लगा जिसका ऐसे प्रल्हाद के उपर वे शस्त्र सब निष्फल हो गये जैसे प्रारब्धहीन पुरुष के उद्यम ॥ ४१ ॥

हे युधिष्ठिर ! दैत्यों के प्रयास के नष्ट होने पर दैत्येन्द्र हिरण्यकशिपु शंकित होकर निर्बन्ध से प्रल्हाद के वध का उपाय करने लगा ॥ ४२ ॥

हस्ती सर्प अभिचार अवपातन नाना प्रकार की माया और निरोध विषदान भोजन न देना । हिम वायु अग्नि जल ऊपर पर्वत से पटकना इत्यादिक उपायों से निष्पाप अपने पुत्र को असुर जब न मार सका तब बडी दीर्घ शका को प्राप्त हुआ और मारने के उपाय को न प्राप्त हुआ ॥ ४३-४४ ॥

और बोला कि—इसको मैंने बहुत परुष कहा और मारने के भी बहुत से उपाय रचे और द्रोह भी किये परंच उन २ द्रोहों से और अधमों से यह बालक अपने तेज से ही मुक्त होगया ॥ ४५ ॥

और मेरे समीप रहकर बालक होकर भी यह निर्भय चित्त है और यह मेरी शत्रुता को नही भूलता, और इसका स्वभाव नही लक्ष होता, जैसे कुत्ते की पूंछ कितना ही यत्न करो पर सीधी नही होती ॥ ४६ ॥

इसके प्रभाव का प्रमाण नहीं होसक्ता और इसको कहीं से भय भी नहीं और यह अमर मालूम होता है क्या इसके विरोध से मेरी मृत्यु तो न होगी ? ॥ ४७ ॥

इस तरह की चिंता से किञ्चित् म्लान हुई शोभा जिसकी और नीचे को मुखकर बैठा हुआ ऐसे हिरण्यकशिपु से शुक्राचारी के पुत्र शंडामर्क दोने एकांत में ऐसे बोले ॥ ४८ ॥

जितं त्वयैकेन जगत्त्रयं भ्रुवो विजृम्भणत्रस्तसमस्तधिष्ण्यपम् ।
न तस्य चिन्त्यं तव नाथ ! [1] चक्ष्महे न वै शिशूनां गुणदोषयोः पदम् ॥ ४९ ॥
इमं तु पाशैर्वरुणस्य बद्ध्वा निधेहि भीतो न पलायते यथा ।
बुद्धिश्च पुंसो वयसाऽऽर्यसेवया यावद्गुरुर्भार्गव आगमिष्यति ॥ ५० ॥
तथेति गुरुपुत्रोक्तमनुज्ञायेदमब्रवीत् ।
धर्मो ह्यस्योपदेष्टव्यो राज्ञां यो गृहमेधिनाम् ॥ ५१ ॥
धर्ममर्थं च कामं च नितरां चानुपूर्वशः ।
प्रह्लादायोचतू राजन् ! प्रश्रिताऽवनताय च ॥ ५२ ॥

### श्रीधरस्वामिकृतभावार्थदीपिका ।

भ्रुवोर्विजृम्भणेनैव त्रस्ताः समस्ता धिष्ण्यपा लोकपाला यस्मिन् तस्य तव चिन्त्यं न चक्ष्महे न पश्यामः पदमालम्बनं नैवास्ति बद्धा शिशूनां गुणदोषयोः पदं विषयो न भवतीत्यर्थः ॥ ४९ ॥

तथाऽपि तु बन्धनमस्योचितमित्याहतुः-इमन्त्विति । यावद्गुरुर्भार्गव आगमिष्यति तावद्बद्ध्वा निधेहि ततः किमत ऊचतुः यतः पुंसो बुद्धिश्च वयसा तथा आर्यसेवया समीचीना भवति ॥ ५० ॥

अनुज्ञाय तथेत्यङ्गीकृत्य ॥ ५१ ॥

ततश्च तौ प्रह्लादाय धर्मादिकमूचतुः प्रश्रितश्चासावयनतश्च तस्मै ॥ ५२ ॥

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तदेवाह—जितमिति । तव भ्रुवो विजृम्भणेन चलनमात्रेण त्रस्ता भीताः सर्वे धिष्ण्यपाः लोकपालाः यस्मिन् तज्जगत्त्रयं त्वयैकेनासहायेन जितम् एवंभूतस्य तव हे नाथ प्रभो ! चिन्तनीयं न चक्ष्महे न पश्यामः शिशूनां बलमिति शेषः तद्गुणदोषयोः पदं विषयो नवै न भवतीत्यर्थः ॥ ४९ ॥

अत इमं बालं यावद्गुरुर्भगवान्भार्गवः शुक्र आगमिष्यति तावद्वरुणस्य पाशैः बद्धं निधेहि कुरु भीतोऽयं यथा न पलायते तथा बद्धं निधेहीत्यर्थः। ततः किं तत्राहतुः वयसा आर्याणां सेवया च पुंसो बुद्धिर्भविष्यति ॥ ५० ॥

एवं गुरुपुत्रोक्तं तथेत्यनुज्ञायाङ्गीकृत्य दैत्येन्द्र इदं वक्ष्यमाणमब्रवीत्. तदेवाह—धर्मइति । अस्य बालस्य धर्मा उपदेष्टव्याः, के ते ? ये राज्ञां ये च गृहस्थानां ते ॥ ५१ ॥

एवमुक्तौ गुरुपुत्रौ तथैवोपदिदिशतुरित्याह नारदः—धर्ममिति । धर्मार्थकामस्वरूपात् साधनात् नितरामत्यन्तमानुपूर्वशः हे राजन् प्रश्रयेण विनयेन अवनताय नम्राय प्रह्लादायोचतुरुपदिदिशतुः ॥ ५२ ॥

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

धिष्ण्यपाश्चन्द्रादित्यादयः लोकपाला वा चक्ष्महे पश्यामः शिशूनां प्रेङ्खायां शयनशीलानां बुद्धिविकासरहितानां वा तत्करणे गुणदोषयोः पदमास्पदं न वै हि गुणदोषग्रहणबुद्धिविकासाभावादित्यर्थः। शिशूनां गुणदोषयोः पदं नास्तीति वा ॥४९॥

तर्हि का परबुद्धिरित्यत्रोच्यते—इममिति । तुनाऽधुनेयमेव बुद्धिरिति विशिनष्टि, कियन्तं कालमेवमिति तत्राह—यावदिति । तावदिति शेषः तनश्च किन्तत्राह, बुद्धिश्चेति. पापजननी च वयसा कालविशेषविशिष्टेनातुलत्वगुणेनार्याणां सेवया स्यादिति शेषः ॥ ५०—५१—५२ ॥

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

शिशूनां गुणदोषयोः पदमालम्बनं नास्ति । यदालम्ब्य तौ प्रवर्त्तेत तदेव तेषां नास्ति सारासारविचाराभावात् ॥४९॥५०॥

गृहमेधिनां तत्रापि राज्ञाम् ॥ ५१—५३ ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

तस्य तव चिन्त्यं स्वाभिलषणीयवस्तुनोऽप्राप्त्या चिन्तनीयं किमपि न चक्ष्वहे न पश्याव इत्यर्थः पुत्रोऽयं मे मद्विरुद्धस्वभाव इति चेत्तत्राह—नेति । शिशूनां पदं व्यवसायं गुणदोषयोर्मध्ये न चक्ष्वहे न किमपि पश्यावः शैशवान्ते सति बुद्धेर्भद्राभद्रत्वं ज्ञास्याव इति भावः । वै इति चार्थे । चक्ष्वहे इत्युभयत्रान्वयः ॥ ४९ ॥

भवतु सम्प्रति किं करोमि तत्राहतुः—इमन्त्विति । यतः पुंमात्रस्यैव बुद्धिर्वयसा बाल्यात् परेणैव तथा आर्यस्य सेवया च, क आर्यः ? कदा वा अनेन सेव्यः ? तत्राह—यावदेत्यर्थः भार्गवः शुक्राचार्य्य इत्यर्थः ॥ ५० ॥

अनुज्ञाय अङ्गीकृत्य ॥ ५१ ॥ ५२ ॥

( १ ) चक्ष्वहे इति—चक्रवर्ति० ।

यथा त्रिवर्गं गुरुभिरात्मने उपशिक्षितम् ।
न साधु मेने तच्छिक्षां द्वन्द्वारामोपवर्णिताम् ॥ ५३ ॥
यदाचार्यः परावृत्तो गृहमेधीयकर्मसु ।
वयस्यैर्बालकैस्तत्र सोपहूतः कृतक्षणैः ॥ ५४ ॥
अथ तान् श्लक्ष्णया वाचा प्रत्याहूय महाबुधः ।
उवाच विद्वांस्तन्निष्ठां कृपया प्रहसन्निव ॥ ५५ ॥
ते तु तद्गौरवात्सर्वे त्यक्तक्रीडापरिच्छदाः ।
बाला न दूषितधियो द्वन्द्वारामेरितेहितैः ॥ ५६ ॥
पर्युपासत राजेन्द्र तन्न्यस्तहृदयेक्षणाः ।
तानाह करुणो मैत्रो महाभागवतोऽसुरः ॥ ५७ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां
वैयासिक्यां सप्तमस्कन्धे प्रह्लादचरिते
पञ्चमोऽध्यायः ॥ ५ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

[illegible] ॥ ४८ ॥

[illegible] ॥ ५० ॥

गृहपुत्रोक्तं [illegible] ॥ ५१ ॥

तौ च [illegible] तस्मै धर्मादिकमूचतुः ॥ ५२ ॥

भाषाटीका ।

हे नाथ ! तुम हमारे लें टी भृकुटि के निक्षेप से तीनों जगत और समस्त लोकेशों ने जिन लिया अब आप के चिन्ता के तारक कुछ नहीं दिखाई देने फिर आप सरीखों को बालकों का चरित कुछ भी गुण दोष का विषय नहीं हैं ॥ ४९ ॥

और इस लड़के को तौ वरुण के पाशों से बांधकर रक्खो कि जिससे भय के मारे भाग न जाय और पुरुष की बुद्धि भी अवस्था अधिक होने तथा श्रेष्ठों के सेवा से अच्छी होजाती है और तब तक श्रीगुरुजी ( शुक्राचार्य ) भी आए जाते हैं ॥ ५० ॥

गुरु पुत्र के वचन को अंगीकार कर हिरण्यकशिपु बोला कि अच्छा और अब इसको गृहस्थ राजाओं के जो धर्म हैं उनको उपदेश करो ॥ ५१ ॥

नारदजी बोले, कि हे राजन् तदनन्तर वे दोनो गुरुपुत्र नम्र और नम्रता हुए प्रह्लाद को क्रम से निरंतर धर्म अर्थ और काम का उपदेश करने लगे ॥ ५२ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

यथा यथावत् त्रिवर्गमुपशिक्षितमपि न साधु मेने तथां शिक्षां च कुतः द्वन्द्वे रागद्वेषादिभिर्विषयेष्वारमणं येषां तैरुपवर्णिताम् ॥ ५३ ॥

परावृत्तोऽन्यत्र गतः स उपहूतः सन्धिः पादपूरणार्थम् क्रीडार्थं कृतक्षणैः कृतोत्सवैर्लब्धावसरैरितिवा ॥ ५४ ॥

तन्निष्ठां तेषां निष्ठां जन्ममरणादिलक्षणां विद्वान् ॥ ५५ ॥

द्वन्द्वारामाणामीरितैरीहितैश्च न दूषिता धीर्येषाम् यतो-बालाः ॥ ५६ ॥

तस्मिन्नेव न्यस्तं हृदयमीक्षणञ्च यैः ॥ ५७ ॥

इति श्रीमद्भागवते महापुराणे सप्तमस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिकायाम
पञ्चमोऽध्यायः ॥ ५ ॥

श्रीमद्वीरराघवाचार्य्यकृतभागवतचन्द्रचन्द्रिका ।

तद्यथावत् त्रिवर्गमात्मने स्वस्मै उपशिक्षितमपि साधु न मेने नामन्यत तच्छिक्षाञ्च कुतः द्वन्द्वैः रागद्वेषादिभिः विषयेष्वारामो येषां तैरुपवर्णिताम् ॥ ५३ ॥

किञ्च यदा आचार्यः गार्हस्थ्यधर्मेषु पराङ्मुखः परोक्षं प्रवृत्तः व्यासङ्गान्तरपर इत्यर्थः । तदा कृतक्षणैः लब्धावकाशैः वयस्यैः समानवयस्कैः बालैस्तत्रोपहूतः सः प्रह्लादः ॥ ५४ ॥

महान्सुधीर्विद्वान् श्लक्ष्णया मधुरया वाचा तान् बालकानुप्रत्याहूय सम्बोध्य कृपया प्रहसन्निव तन्निष्ठां विज्ञानमार्गनिष्ठाम् उवाच ॥ ५५ ॥

ते तु बालकाः सर्वे तद्गौरवात् तद्वचनगौरवात् त्यक्ताः क्रीडापरिच्छदाः क्रीडोपकरणानि यैर्द्वन्द्वारामाणामीरितैरीहितैश्च न दूषिता धीर्येषान्ते ॥ ५६ ॥

हे राजेन्द्र ! तस्मिन्नेव प्रह्लादे न्यस्तं हृदयं मन ईक्षणञ्च यैस्ते तं प्रह्लादमेव पर्य्युपासत शुश्रूषनः परिवेष्ट्योपविविशु-रित्यर्थः । तान्पर्युपासीनान् कारुण्यमैत्र्ययुक्तो महाभागवतो ऽसुरः प्रह्लादः प्राह आह॥ ५७ ॥

इति श्रीमद्भागवते महापुराणे सप्तमस्कन्धे

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायाम्

पञ्चमोऽध्यायः ॥ ५ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

यथा द्वन्द्वारामोपवर्णितां रागद्वेषादिव्यापृतबुद्धिभिर्व्याख्याताम् ॥ ५३ ॥

यदाचार्योऽध्यापनात्परावृत्त उपरतः गृहमेधीयकर्मस्वग्निहोत्रादिलक्षणेषु व्यापृतो वा तत्र तदा कृतक्षणैः कृतावसरैः वयस्यैर्बालकैः स उपहूतः क्रीडार्थमितिशेषः 'सोऽचिन्तुमद्भुमता सोऽचिन्तुसर्वां' सैषदाशरथीराम इत्यादिषु छन्दश्चोऽयं प्रयोगः ॥५४॥
अथागतस्मन् तस्यां क्रियायां निष्ठामिच्छां विद्वांस्तेषां वयस्यानां निष्ठां स्वस्मिन् स्नेहविशेषं वा ॥ ५५ ॥

द्वन्द्वारामेरितैर्वचनैरीहितैः प्रवृत्तिभिश्च न दूषितधियः ॥५६॥
स एषोऽसुः "स एष प्राणः" इति श्रुतेः मुख्यप्राणे रमत इत्यसुरः ॥ ५७ ॥

इति श्रीमद्भागवते महापुराणे सप्तमस्कन्धीये

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम्

पञ्चमोऽध्यायः । ५ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

यदेति तत्र तदा ॥ ५४—५७ ॥

इति श्रीमद्भागवते महापुराणे सप्तमस्कन्धे

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे

पञ्चमोऽध्यायः ॥ ५ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

यथावत् त्रिवर्गमुपशिक्षितमपि साधु न मेने तां शिक्षाञ्च यतो द्वन्द्वारामे सांसारिकलोकविषये एव उपवर्णितां न तु पारमार्थिके ॥ ५३ ॥

पराङ्मुखः अध्यापनस्थानात् परावृत्य स्वगृहं गतः कर्मसु-ग्राम्येन तदा स प्रह्लादः कृतक्षणैः क्रीडार्थं कृतोद्यमैः वत्स [illegible] अयं तिष्ठतः समय इति कृतावसरैः ॥ ५४ ॥

तेषां बालानां स्वस्मिन् गुरुत्वनिष्ठां विज्ञाय आलक्ष्य प्रहसन्निव अहो इमे अपि भगवदनुकम्पाजाले पतिताः इति स्मयमानः ॥ ५५ ॥

द्वन्द्वारामाणां शिक्षाणां [illegible]रीहितैश्चेष्टितैश्च न दूषिता धीर्येषान्ते ॥ ५६ ॥ ५७ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् ।
सप्तमे पञ्चमोऽध्यायः सङ्गतः सङ्गतः सताम् ॥ ५ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

प्रह्लादस्तु गुरुभिर्यथावदात्मने उपशिक्षितं त्रिवर्गं न साधु मेने तच्छिक्षाञ्च द्वन्द्वारामाणामनुपवर्णितां न साधु मेने ॥ ५३ ॥

यदाऽऽचार्यो गृहमेधीयकर्मसु पराङ्मुखः परोक्षो भूत्वा प्रवृत्तः तत्रावसरे कृतक्षणैर्लब्धावसरैः सः प्रह्लाद उपहूतः ॥ ५४ ॥

अथ तदाह्वानानन्तरं सोऽपि महाबुधस्तान्प्रत्याहूय सम्बोध्य प्रहसन् तन्निष्ठां तस्मिन् स्वोपास्ये विष्णौ निष्ठां कृपयोवाच ॥ ५५ ॥

ते बालकास्तु द्वन्द्वारामाणामसुराणामीरितैर्वाक्यैरीहितैश्चेष्टितैश्च न दूषिता धीर्येषां तथा भूताः ॥ ५६ ॥

पर्य्युपासत प्रह्लादस्य परित उपविविशुः, कथम्भूताः ? तस्मिन् प्रह्लादे न्यस्तानि हृदयानीक्षणानि च यैस्ते तथा ॥ ५७ ॥

इति श्रीमद्भागवते महापुराणे सप्तमस्कन्धे

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे

पञ्चमाध्यायार्थप्रकाशः ॥ ५ ॥

भाषा टीका ।

गुरु ने प्रह्लाद को त्रिवर्ग का विषय यथावत् सिखाया परंच द्वंद्वारामों से उपवर्णित उस शिक्षा को प्रल्हाद ने अच्छा न माना ॥ ५३ ॥

जब एक समय आचार्य किसी गृह में स्वीय कर्म के निमित्त अन्यत्र चले गये तब अवसर मिलने पर समान वयस्क बालकों ने इनको ( क्रीडार्थ ) बुलाया ॥ ५४ ॥

तब तो बड़े बुद्धि वाले विद्वान प्रल्हादजी कृपा करके उनको समीप बुलाकर हंसते से उनकी निष्ठा ( दशा ) को कहने लगे ॥ ५५ ॥

वो लडके भी सब प्रल्हाद के गौरव से क्रीड़ा की सामग्री को छोडकर समीप आये, और हे राजन् संसारिओं के कथन और चेष्टा से नहीं दूषित हुई बुद्धि जिनकी ऐसे वो बालक लोग प्रल्हाद में हृदय और नेत्र लगाकर भोले २ प्रल्हाद के चारों तरफ बैठ गये। तब बडे कारुणिक मैत्र महा भागवत प्रल्हाद उनसे बोले ॥ ५६–५७ ॥

इति श्रीमद्भागवत महापुराण सप्तमस्कन्ध, पञ्चमाध्याय

की भागवताचार्यकृत भाषा टीका

समाप्त ॥ ५ ॥

इति श्रीमद्भागवते महापुराणे सप्तमस्कन्धे पञ्चमोऽध्यायः ॥ ५ ॥



## ॥ षष्ठोऽध्यायः ॥

प्रह्लाद उवाच ।

* ( हन्तार्भका ! मे शृणुत वचो वः सर्वतः शिवम् ।
वयस्यान्पश्यत मृतान् क्रीडान्धा माप्रमाद्यथ ॥ ० ॥
न पुरा विवशं बाला आत्मनोऽर्थे प्रियैषिणः ।
गुरूक्तमपि न ग्राह्यं यदनर्थेऽर्थकल्पनम् ॥ ० ॥
यदुक्त्या न प्रबुध्येत सुप्तस्त्वज्ञाननिद्रया ।
न श्रद्दध्यान्मतं तस्य यथाघोह्यन्धनायकः ॥ ० ॥
कः शत्रुः क उदासीनः किं मित्रं चेह आत्मनः ।
भवत्स्वपि नयैः हिंस्याद्धैनं सम्पद्दिशत्पदम् ॥ ० ॥
यो न हिंस्याद्धर्मकामस्सात्मानं स्वजने वशः ।
पुनः श्रीलोकयोर्हेतुः समुक्तान्ध्योतिदुर्लभः ॥ ० ॥ )

प्रह्लाद उवाच ।

कौमार आचरेत्प्राज्ञो धर्मान् भागवतानिह ।
दुर्लभं मानुषं जन्म तदप्यध्रुवमर्थदम् ॥ १ ॥
यथा हि पुरुषस्येह विष्णोः पादोपसर्पणम् ।
यदेष सर्वभूतानां प्रिय आत्मेश्वरस्सुहृत् ॥ २ ॥
सुखमैन्द्रियकं दैत्याः ! देहयोगेन देहिनाम् ।
सर्वत्र लभ्यते दैवाद्यथा (१) दुःखमयत्नतः ॥ ३ ॥
तत्प्रयासो न कर्तव्यो यत आयुर्व्ययः परम् ।
न तथा विन्दते क्षेमं मुकुन्दचरणाम्बुजम् ॥ ४ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

षष्ठे गुरौ गृहव्यग्रे प्रह्लादो दैत्यबालकान् ।
अनुकम्प्य परं तत्त्वं नारदोक्तमुपादिशत् ॥ १ ॥
निरर्थकक्रियालापैरायुर्व्ययमजानताम् ।
प्रह्लादः सदयं प्राह धर्मं भागवतं कृती ॥ २ ॥

कौमार इत्यादिना इहैव मानुषजन्मनि धर्मानाचरेत्, यतोऽर्थदमेतत्. तत्र च कौमार एव यतस्तदप्यध्रुवम्; नचैवंभूतं जन्मान्तरम् यतो दुर्लभम् तत्र धर्मानेवाचरेन्न सुखार्थं प्रयासान्. तत्र भागवतानेव, न काम्यान् ॥ १ ॥

इह भागवतानेव धर्मानाचरेदित्येतदुपपादयति–यथाहीति,

---

* एते श्लोकाः विजयध्वजरीत्याऽधिकाःपठ्यन्ते ॥ (१) यथाऽसुखमिति वीर० पा० ।

श्रीधरस्वामिकृतभावार्थदीपिका ।

ब्रनुभिः । इह पुरुषस्य विष्णोः पादोपसर्पणमेव यथाऽनुरूपं योग्यमित्यर्थः । यद्यस्मादेष प्रिय इत्यादि ॥ २ ॥

ननु, भोगोद्यमः कथन्त्याज्य इति चेत्तत्राऽऽह–सुखमिति । सर्वत्र नरकादावपि दैवात्पूर्वादृष्टादेव ॥ ३ ॥

अतस्तदर्थं प्रयासो न कर्तव्यः यतः प्रयासात्परं केवलमायुषो व्यय एव यतस्तथा तेन प्रकारेण क्षेमं न प्राप्नोति ॥ ४ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

एवं दैत्यकुमारैः पर्युपासितो महाभागवतः प्रह्लादस्तेभ्यः करुणयाऽनन्तस्थिरफलब्रह्मानन्दानुभवसाधनभागवतधर्मानुपदि-दिक्षुरुपदेक्ष्यमाणधर्मप्रतिष्ठापनाय तद्धेतुवैराग्यजननाय च वैषयिकसुखानामल्पास्थिरत्वं दुःखगर्भत्वमत एव हेयत्वम-त्यल्लभ्यत्वञ्च विवक्षुस्तावन्मनुष्यजन्मन एव भागवतधर्मा-चरणार्हत्वं तत्राप्यस्थिरत्वेन बाल्यात्प्रभृत्येव तद्धर्मानुष्ठानस्य कर्तव्यत्वञ्चाह—कौमार इति । इह मनुष्यजन्मन्येव प्राज्ञः हेयो-पादेयविभागाभिज्ञः पुमान् कौमारे बाल्य एव तत्प्रभृतीत्यर्थः भाग-वतान् भगवत्सम्बन्धिनः भगवत्प्राप्तिसाधनान् धर्मानेवाचरेत् भगवच्छब्देन तेषां निष्फलत्वशङ्काप्रयुक्ताऽननुष्ठेयत्वशङ्काप्युदस्यते. तथाहि—

"शुद्धे महाविभूत्याख्ये परे ब्रह्मणि शब्द्यते ।
मैत्रेय ! भगवच्छब्दः सर्वकारणकारणे ॥
सम्भर्त्तेति तथा भर्ता भकारोऽर्थद्वयान्वितः ।
नेता गमयिता स्रष्टा गकारार्थस्तथा मुने ! ॥
ऐश्वर्यस्य समग्रस्य वीर्यस्य यशसः श्रियः ।
ज्ञानवैराग्ययोश्चैव षण्णां भग इतीरणा ॥
वसन्ति यत्र भूतानि भूतात्मन्यखिलात्मनि ।
स च भूतेष्वशेषेषु वकारार्थस्ततोऽव्ययः ॥
ज्ञानशक्तिबलैश्वर्यवीर्यतेजांस्यशेषतः ।
भगवच्छब्दवाच्यानि विना हेयैर्गुणादिभिः" ॥

इत्यादिना श्रीमत्पराशरोक्तप्रत्यक्षरसमुदायनिर्वचनावगताः संभ-र्तृत्वभर्तृत्वनेतृत्वगमयितृत्वस्रष्टृत्वसर्वशरीरकत्वसर्वभूतान्तरात्म-त्वनिरस्तानिखिलदोषत्वषाड्गुण्यपूर्णत्वादयोऽर्थाः अत्र विव-क्षिताः । तत्र संभरणं नामोपकरणसंविधानं तच्च, प्रकृतिपुरुष-कालानां कार्योत्पत्तियोग्यतापादनरूपम् भर्तृत्वम्. निरुपाधिकस्वा-मित्वं नेतृत्वम्. गमयितृरूपं स्थितिकर्तृत्वं गमयितृत्वम्. सङ्क्रमयि-तृत्वरूपं संहर्तृत्वम्. स्रष्टृत्वमुद्गमयितृत्वरूपं सृष्टिकर्तृत्वम्. यशो-गुणवत्ता यथा. श्रीर्भोग्यसम्पत्. वैराग्यं विरक्तिः सा च परिपूर्ण-त्वादनादररूपा एवञ्चाऽनुष्ठितैर्धर्मैः प्राप्यस्य भगवत एवं विधत्वात्तत्प्राप्ति निःश्रेयसरूपत्वात्तत्प्राप्तिसाधनभूता धर्माः परमपुरुषार्थार्थिभिरवश्यमनुष्ठेयास्ते च बाल्यादारभ्यैव कर्त-व्या इत्यर्थः । इहैवेत्यनेन मनुष्यजन्मन एव भगवद्धर्माचरणोपयु-क्तत्वमन्यस्य तु तदननुगुणत्वञ्चाभिप्रेतम्. तत्रापि पुरोवर्ति-परामर्शिनेह शब्दप्रकृतिभूतेनेदंशब्देनाधुना वर्त्तमानमनुष्य-जन्मन्येव भगवद्धर्मकर्त्तव्यताऽभिप्रेता. नन्वन्यस्मिन्नपि मनुष्य-जन्मनि तेषां कर्तुं शक्यत्वात्किं विशेषेणाधुनिक एव जन्मनि कर्त्तव्यतोच्यते इत्यत आह—दुर्लभं मानुषं जन्मेति । विविध-विचित्रात्मकपुण्यपापात्मककर्मभिः देवतिर्यङ्मनुष्यस्थावरादि-रूपेण संसरतो जीवस्य नियमेन प्रतिजन्म मानुषजन्मैवेति विश्वासहेतोरभावात् दुर्लभं मानुषं जन्म सुकृतपरिपाकविशे-षाल्लभ्यमिति. तत्रैव भगवद्धर्मानाचरेदिति भावः । ननु, किं विशे-षेण कौमार एवाचरेदित्युच्यते यथेष्टं विषयभोगानन्तरं चतु-र्थे वयसि तेषां कर्तुं शक्यत्वादित्यत आह—तदप्यध्रुवमिति । चतुर्थवयःपर्यन्तजीवन हेतोर्विश्वसनीयस्याभावात्कौमारात्प्रभृत्ये-वाचरेदितिभावः । ननु, चिरकालसाध्या भगवद्धर्माः कथमस्थिरेण मनुष्यजन्मना निर्वर्त्यते ! कथन्तरां निःश्रेयसप्राप्तिः ? अत आह–अर्थ-दमिति, यद्यप्यध्रुवं तथाप्यर्थदमित्यर्थः । अयं भावः, यद्यप्यध्रुवं तथापि चिरकालजीवननिमित्ते कर्मण्यारब्धभगवद्धर्मविरोधिक-र्माभावे च सति यथावत्फलपर्यन्तभगवद्धर्मोपसंहारद्वारा निः-श्रेयसरूपनिरतिशयपुरुषार्थदं चिरजीवनहेत्वभावे वा आरब्धभग-वद्धर्मविरोधिकर्मसद्भावेऽपि वा "नेहाभिक्रमनाशोऽस्ति, न हि कल्या-णकृत्कश्चिद्दुर्गतिं तात ! गच्छति" इत्यादिभगवदुक्तरीत्या जन्मान्तरे यथावद्भगवद्धर्मोपसंहारद्वारा निःश्रेयसरूपार्थदं भवतीति. अत्र "सर्वं वाक्यं सावधारणम्" इति न्यायेनाब्भक्षो वायुभक्ष इत्यादिव-त्कौमार एव भागवतान्धर्मानेवेहैवेत्यवधारणमभिप्रेतम् ॥ १ ॥

तत्र भागवतानेव धर्मानाचरेदित्यवधारणं तावदुपपादयति-यथाहीति । हि तथाहीत्यर्थः यथाशब्दो योग्यताद्योतकः इह मनु-ष्यजन्मनि विष्णोः परमपुरुषार्थस्वरूपस्य पादयोरुपसर्पणं भजनं यथा योग्यं तदेव युक्तमित्यर्थः । कुतः ? यद्यस्मादेष परमपुरुषः सर्व-भूतानामात्मेश्वरः अन्तः प्रविश्य प्रशासनपूर्वकं भर्ता, शरीरस्यात्मा-ऽनुवर्त्तनं युक्तमिति भावः । नन्वात्माप्यपुरुषार्थरूपस्तत्रानुवर्तनी-योऽत आह—प्रिय इति । प्रियः इष्टतमः निरतिशयानन्दरूप इत्यर्थः । आनन्द एव हीष्टः स एव हि पुरुषार्थरूपः इति भावः । नन्वेवं-भूतोऽपि निष्कृपत्वादनुवर्त्तमानान् प्राणयापयेत्तत्राह–सुहृ-दिति । "एष ह्येव साधु कर्म कारयति तं यमेभ्यो लोकेभ्य उन्निनीषति" इति श्रुत्युक्तरीत्या स्वानुवृत्त्युपक्रममात्रेणाविर्भूत-परमकारुण्यगुणकः उत्तरोत्तरं स्वानुवृत्तिप्रवर्तनारूपहितकारी-त्यर्थः ॥ २ ॥

विष्णोः पादोपसर्पणमेव युक्तमित्यनेन वैषयिकसुखसाधन-यत्नो न युक्त इत्युक्तम् तदेव सहेतुकं सदृष्टान्तञ्चोपपादय-न्निहैवेत्यवधारणमप्युपपादयति–सुखमिति । हे दैत्याः ! देहिनां देह-योगेन देहसम्बन्धमात्रेण इन्द्रियकं सुखं सर्वत्र पश्वादिजन्मस्वप्या-धुनिकयत्नमन्तरेणापि दैवात्प्राचीनकर्मणैव लभ्यते तत्र दृष्टान्तः यथाऽसुखमिति, असुखं दुःखं यथा यत्नमन्तरेणापि दैवादेव लभ्यते. तथा वैषयिकं सुखमपीत्यर्थः । सर्वत्र लभ्यते इत्यनेन वैष-यिकसुखलाभः सर्वजन्मसाधारणः भगवद्धर्मलाभस्तु मनुष्य-जन्मासाधारण इत्युक्तं भवति ॥ ३ ॥

यतो वैषयिकं सुखं सर्वजन्मसाधारणं तच्च दैवादेव सुलभम्

श्रीमद्वीरराघवाचार्य्यकृतभागवतचन्द्रचन्द्रिका ।

असुखवत्तस्मात्प्रयासो वैषयिकसुखार्थप्रयासो न कर्त्तव्यः एवमविजानता कृतोपि प्रयासः केवलमायुर्व्ययकर इत्याह—यत इति। अतोवैषयिकसुखार्थात्प्रयासात्परं केवलमायुःक्षयएव, नान्यत्किञ्चिदस्ति प्रयोजनमित्यर्थः। ननु, जन्मान्तरे पुनरैन्द्रियकसुखलाभार्थं कर्त्तव्य एव यत्नस्तत्राह—न तथेति, यद्यपि कृतोऽपि तदर्थप्रयासो जन्मान्तरेऽथवैषयिकसुखसाधनस्तथापि तथा तद्वत्क्षेमं न प्राप्नोति। कथं यथा मुकुन्दचरणाम्बुजं, भजन्निति शेषः। यथा भगवच्चरणाम्बुजं भजन् पुमान् निःशेषदुःखनिवृत्तिपूर्वकं नित्यनिरुपाधिकनिरतिशयाऽपरिच्छिन्नब्रह्मानन्दानुभवरूपं क्षेमं प्राप्नोति, तथा वैषयिकसुखार्थं यतमानस्तादृशं क्षेमं न विन्दते किन्तु दुःखमिश्रानित्यसोपाधिकाल्पमिदानीमनुभूयमानसजातीयं प्राप्नोतीत्यर्थः॥ ४॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

मुकुन्दचरणारविन्दनिरन्तरसेवैवेहामुत्रानश्वरानन्दनिदानम्, नान्यदतः सैव बुभूषुभिरनुदिनं कर्तव्येति विधीयतेऽस्मिन्नध्याये, तत्र प्रह्लादो बालकान् किमाहेत्याशंक्याह—हन्तेति। बालानुकम्पायां वाक्यारम्भे वा तद्वचःश्रवणात्किं फलं स्यादिति तत्राह—वइति। वः सर्वतः सर्वस्मात् शिवं सुखं स्यादिति शेषः कीदृशं वच इत्यतोवाह, व इति। शिवं शुभं मङ्गलम्, ननु, कस्मान्मङ्गलमिति तत्राह, वयस्यानिति संसारविरक्तिजनकत्वेन पुरुषार्थहेतुत्वान्मङ्गलमित्यर्थः। अनेनाधुनाऽस्माकं बालत्वमुत्तरत्र श्रेयःसम्पादनाय प्रयतामहे इत्याशा निरस्तेति ज्ञायते यतोऽस्मदायुः कृतान्तविलुलितं तस्मात् क्रीडासक्तत्वेन युष्माद्धितविमर्शप्रमादो न कार्य इत्याह—क्रीडान्धा इति॥ ०॥

ननु, बालानां लीलान्धत्वं स्वभाव इति तत्राह—नेति। इतः पुरातना बाला अन्तःकरणं क्रीडायां विवशं न कुर्वन्तीति शेषः तर्हि किङ्कार्यं... इति तत्राह—आत्मन इति, अर्थं जन्मप्रभृति आत्मनोऽर्थं आत्मनः प्रियैषिणः परमात्मनः ज्ञानेच्छवः मोक्षलक्षणप्रियेच्छवो वा आत्मनः प्रियैषिणः स्वप्रयोजनसाकांक्षमाणा आबाल्यात्प्रवर्तन्त इति वा, तन्वस्माभिरपि क्रीडासाकांक्ष्यां गुरुश्चानुपदिष्टत्रिवर्गविषयशास्त्रश्रवणश्रेयसि प्रवर्त्यते तत्र गुर्ववसरप्रतीक्षणायेयं क्रीडेति तत्राह—गुरुकमिति। कुतो न ग्राह्यमिति तत्राह—यदनर्थ इति, संसारहेतुत्वादनर्थे त्रिवर्गलक्षणे श्रेयस्त्वकल्पनं यत्तस्मादिति शेषः—

"त्रैविद्या मां सोमपाः पूतपापा यज्ञैरिष्ट्वा स्वर्गतिं प्रार्थयन्ते"

"इष्टापूर्तं मन्यमाना वरिष्ठं नान्यच्छ्रेयो वेदयन्ते प्रमूढाः"

इत्यादेश्च॥ ०॥

ननु, गुरूक्तेर्यथार्थत्वेन ज्ञानहेतुत्वोपपत्तेः कथं तदनर्थेऽर्थकल्पनामिति तत्राह—यदुक्त्येति। अज्ञानलक्षणनिद्रया सुप्तस्त्रिवर्गविषयलक्षणमाग्रहलक्षणो यथार्थज्ञानविरोधित्वादज्ञानं नाम न तु ज्ञानमात्राभावः सुप्तस्यापि गुरूक्त्या प्रबोधो हि प्रयोजनं स नोत्पद्यते चेत्तदुपदेशेन किं प्रयोजनं प्रत्युत तदनुष्ठानेनानर्थ एव स्यादिति भावः। अतः फलितमाह—नेति—अत्रोदाहरणमाह—यथेति, अन्धो नायको नेता यस्य स तथा हि शब्देनोभयोरप्यन्धत्वान्मार्गज्ञानं नोत्पद्यते यथा, तथात्रापीत्यस्माच्छ्रद्धा न कार्या॥ ०॥

ननु,

"समूलघातमघ्नन्तः पराघ्नोद्यन्ति भूभृतः।

निक्षिप्योदर्चिषं कक्षे शेरते ते भिमारुतम्॥

आपत्सु मित्रं जानीयात्पुत्रमुत्तरजन्मनि।

य उदास्ते स्वकार्येषु स निद्यो यत्नतो नरः"

इत्यादि नीतिशास्त्रं शत्रुमित्रोदासलक्षणज्ञापकं हितकारित्वाद्धित्वाभ्यां नो बोधयेत तन्मतं कथं न श्रद्दध्यादित्युच्यत इति तत्राह—क इति। यः शत्रुः स आत्मनो मम पक्षे कः, न कोपीत्यादि योज्यं त्वत्पक्षे शत्र्वाद्यभावेऽप्यस्मत्पक्षेस्युरिति तत्राह—भवत्स्विति। भवत्पक्षेपि के शत्र्वादयः स्युर्न केप्यतो नयैर्नीतिशास्त्रश्रवणजनितैर्नीतिभिः किं फलं स्यान्न किमपीत्यर्थः। नीतिभिरापत्परिहारः सम्पत्प्राप्तिश्च स्यातामिति तत्राह, दैवमिति। सर्वोत्कृष्टत्वात् श्रीनारायण एव सम्पद्विपदाश्रयो न नीतिमांस्तस्यान्वयव्यतिरेकाभावात् अस्मत्पित्रादौ दर्शनात् आत्मनो देहस्य यः शत्र्वादिस्तस्य भवत्सु स्थितैर्नयैः किं स्यादपरिहार्यत्वान्मरणादिकं प्राप्यत एव कामादिकमज्ञानमन्तरेण न नयमात्रेण परिहृयत इति शेषं पूर्ववत्॥ ०॥

ननु, तर्हि माभूच्छ्रद्धेयं नीतिशास्त्रं प्रवृत्तिलक्षणधर्मशास्त्रमभ्यसनीयं श्रेयोहेतुत्वादत्राह—य इति। य आत्मानं परमात्मानमुद्दिश्य धर्मकामः धर्मेच्छां न हिंस्यान्न हिनस्ति न त्यजति किं चानुतिष्ठति सोतिदुर्लभः प्रशान्तात्माकोटिष्वपि महात्मनः खोके अवशीकृतेन्द्रियग्रामस्य भगवद्विषयनिवृत्तलक्षणधर्मेच्छा कथं स्यादिति तत्राह—स्वजन इति, स्वेन सह जन्यत इति स्वजनः इन्द्रियग्रामस्तस्मिन्विषये वशो न भवति वशीकृतेन्द्रियग्राम इत्यर्थः यद्वा पुत्रमित्रादिलक्षणे स्वजने वशो न स्वानुष्ठानानुकूलपुत्रादिक इत्यर्थः अत एव मुक्तान्धः उज्झितान्धस्वभावः नन्वैहिकामुष्मिकफलाकांक्षायां निवृत्तिधर्ममनुतिष्ठतः कथं तत्फलावाप्तिः स्यादत्राह—पुनरिति। पुनश्चार्थे निवृत्तिधर्ममनुतिष्ठञ्छ्रीलोकयोरिह लोकपरलोकयोर्हेतुश्च भवति पुनर्निवृत्तिधर्मानुष्ठानानन्तरं वा प्रवृत्तिनिवृत्तिधर्मयोरनुष्ठानयोः पुनर्भेदोस्ति पूर्वस्य ततः पातोस्ति इमं लोकं हीनतरं वा विशन्ति "क्षीणे पुण्ये मर्त्यलोकं विशन्ति" इत्यादेः। अन्यस्य ज्ञानसामग्रीं सम्पाद्य ततः पुनरन्ते वैकुण्ठलोकप्राप्तिश्च स्यात् "स एवास्माज्जीवघनात् परात्परं पुरिशयं पुरुषमीक्षते यं यं लोकं मनसा संविशाति विशुद्धसत्त्वः कामयते यांश्च कामान् तं तं लोकं जयते तांश्च कामांस्तस्मादात्मज्ञं ह्यर्चयेद्भूतिकामः" इत्यादेः "पुनरप्रथमभेदे" इत्यमरः। यद्वा आत्मानं धर्मयुक्तः कामो यस्य स तथा तं वा नरं नहिंस्यान्न पीडयति स्वात्मानं प्रवृत्तिधर्मकांक्षया पीडितं न करोति सोतिदुर्लभः धर्मधारके हरौ कामो यस्य स तथा निवृत्तिधर्मनिरत इत्यर्थः। तं नाधःपातयतीति वा सज्जनसेवानिर-

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

तन्त्रेण तद्रक्षश्च श्रिय ऐहिक्याः सम्पदः स्वतः स्वरूपज्ञाया लोकस्य ज्ञानस्यापरोक्षलक्षणस्य च पात्रं वा अत्र प्रवृत्तिनिवृत्तिलक्षणौ धर्मावनुष्ठाय तत्फलानिच्छयैव भगवद्भक्तिमनिशं कुर्वाणाः पुरुष उत्तमा इति तात्पर्यम् ॥ ० ॥

नन्वस्तु निवृत्तिधर्मानुष्ठानस्य श्रेयःसाधनत्वं तस्य नेदानीमवसरः वार्द्धके कर्त्तव्याऽविनाभूतत्वात्—

"बाल्ये विद्यां निषेवेत यौवने दारसंग्रहम् ।
स्थाविर्ये मोक्षमातिष्ठेत्सर्वदा धर्ममाचरेत्" ॥

इतिस्मृतेरिति तत्राह—कौमार इति । सर्वदेति विशेषणाद्विद्याभ्यासकालेऽपि मोक्षधर्मानुष्ठानं कर्तव्यमिति न तस्य स्मृतिविरोधः नानायोनिषु का योनिः श्रेयःसाधनमिति तत्राह—दुर्लभमिति । यस्मात्तु जन्म तदपि तदेवार्थदं ज्ञानादिप्रयोजनप्रदम् अत एव बहुपुण्यसाधनत्वाद्दुर्लभं तर्हि चिरकालस्यापि किम् ? नेत्याह—अध्रुवमिति । "सस्यमिव मर्त्यः पच्यते सस्यमिव जायते पुनः अपि सर्वं जीवितमल्पमेव" इत्यादिश्रुतेः अध्रुवमपि मानुषं यज्जन्म सुदुर्लभं तत्पर्याये दुर्लभतरं "एतद्धि दुर्लभतरं लोके जन्म यदीदृशम्" इति श्रुतेः ॥ १ ॥

ननु, कथञ्चं पुरुषार्थप्रदं नन्वन्यथा बहूनां सर्वेषामपि पुरुषार्थः स्यान्न चासौ दृश्यत इति अदृष्टनाशकत्वाख्याद्यङ्कुरविच्छित्त्यामाह—यदाहीति । इह मानुषे यदा यदि कृष्णोः पुरुषस्य विष्णोः पादोपसर्पणं सम्भवति तदैवं "यावत्क्लेशापरे नष्टे तावत्तुल्यविशेषता" इति. एतद्धिशब्देन सूचयति अतो मानुषी योनिरेव निःश्रेयसः कारणं नान्या अलङ्कृताद्देवानर्हत्वेनाभ्यासात्. अतः कौमारवय आरभ्य भगवत्सेवा कर्तव्येति भावः । ननु, श्रीहरिसेवान्तरेणान्यसेवा अर्थदा किं न स्यादिति तत्राह, यदेष इति । सर्वभूतप्रियत्वादिगुणयुक्त एव इति यद्यस्मादेतत्सेवैव पुरुषार्थदा नान्यसेवा "तदेतत्प्रेय." इति श्रुतेः "एष सर्वेश्वरः" इति च ॥ २ ॥

इतोऽपि भगवत्सेवालक्षणनिवृत्तिधर्मानुष्ठानमेव कर्तव्यं न प्रवृत्तिधर्मसेवनं विषयसुखसौलभ्याय तदनुष्ठानमिति नोच्यते तदन्तरेणापि तल्लभ्यते यथा दुःखमित्याह—सुखमिति । सर्वत्र नरकादावपि "सुखस्यानन्तरं दुःखं दुःखस्यानन्तरं सुखम्" इति स्मृतेः दैवात् प्रारब्धकर्मप्रेरकात् ॥ ३ ॥

अतश्च किमिति तत्राह—तदिति । तस्मात्तत्प्रयासऐन्द्रियसुखप्राप्तये प्रवृत्तिधर्मकरणे बहुक्लेशो न विधेयः, कुतो न विधेयः ? इति तत्राह, आयासेति । परं केवलमायासेनायुषो व्ययः क्षय एवावशिष्यत इति शेषः । प्रवृत्तिधर्मानुष्ठानस्य दुःखासम्भिन्नप्रदेशोद्देशत्वात्तत्कथं दुःखकरत्वेन निन्द्यत इति तत्राह, न तथेति । मुकुन्दचरणाम्बुजं भजन्यथा क्षेमं विन्दते प्रवृत्तिधर्मानुष्ठायी न तथा नश्वरं सुखं लभत इत्यन्वयः "प्लवा ह्येते अदृढा यज्ञरूपाः" इति श्रुतेः ॥ ४ ॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

भागवतान् धर्मानाचरेत् यतोऽर्थदमेतज्जन्म देवादिजन्मनि महाविषयावेशात् पश्वादिजन्मनि विवेकाभावाच्च तत्रापि न विलम्बेनेत्याह—कौमारे कौमारमारभ्येत्यर्थः । यतस्तदपि जन्म ध्रुवं पुनर्दुर्लभञ्च तथाच ब्रह्मवैवर्त्ते "प्राप्यापि दुर्लभतरं मानुष्यं विबुधेप्सितम् । यैराश्रितो न गोविन्दस्तैरात्मा वञ्चितश्चिरम् ॥ अशीतिं चतुरश्चैव लक्षांस्तान् जीवजातिषु । भ्रमद्भिः पुरुषैः प्राप्यं मानुष्यं जन्म पर्ययात् ॥ तदप्यफलतां जातं तेषामात्माभिमानिनाम् । वराकाणामनाश्रित्य गोविन्दचरणद्वयम्" इति शास्त्रस्य प्राधान्येन मानुषमधिकृत्य प्रवर्त्तत्वात् तदनुवादेनोक्तिरियं तद्बुद्ध्यादिसामान्येन मानुषत्वमारोप्यैवेति ज्ञेयम् ॥ १ ॥

तत्र भागवतधर्माचरणस्यैव युक्तत्वं दर्शयति—यथाहीति । यत् यस्मात् एष भूतानां स्वभाव एव प्रियः प्रेमविषयः प्रेमकर्त्ता च तत्र हेतुः आत्मा परमात्मा पादोपसर्पणे हेत्वन्तरं यस्माच्चैष ईश्वरः कर्त्तुमकर्त्तुमन्यथाकर्त्तुं समर्थः सुहृत् सर्वेषां हितं चिकीर्षुश्चेति ॥ २ ॥ ३ ॥

मुकुन्दचरणाम्बुजरूपं क्षेमम् ॥ ४ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

षष्ठे तु ग्राहयामास प्रह्लादो भक्तिमर्भकान् ।
आसक्तिं देहगेहादौ त्याजयामास बोधयन् ॥

तानाह करुणो मैत्र इति पूर्वमुक्तं तत्र किमाहेत्यत आह—कौमारे धर्मानाचरेत्. ननु, कौमारे वर्णाश्रमधर्माणामनाधिकारस्तत्राह—भागवतान् श्रवणकीर्त्तनादीन् इह भारतभूमौ. ननु, तान् यौवनदावपि कृत्वा कृतार्थीभवति. तत्राह, प्राज्ञ इति । यदि कौमारान्त एव मृत्युः स्यात्तर्हि किं भवेदिति प्रकृष्टज्ञानवान्, ननु, तत्र का चिन्ता ? जन्मान्तरन्तु भावि तत्रैव भक्तिः कार्य्येति तत्राह, दुर्लभं मानुषं जन्म तदपि आभ्यासमध्यध्रुवम् अद्य वर्त्तमानत्वेऽपि तस्य श्वः स्थितौ निश्चयाभावात्. ननु, तर्हि तावन्मात्रकालेन कुतो भक्तिसिद्धिस्तत्राह, अर्थदं मुहूर्त्तमात्रव्याप्तिभक्तिमतामपि खट्वाङ्गादीनां सिद्धिदर्शनात् ॥ १ ॥

भागवतधर्मान् केन प्रकारेणाचरेदित्यपेक्षायामाह, यथा येन प्रकारेण विष्णोः पादयोरुपसमीपे सर्पणं प्राप्तिर्भवेत्तथा आचरेदित्यनुषंगः तमेव प्रकारं चतुर्विधं व्यञ्जयन् विष्णुं विशिनष्टि—यद्यस्मादेष प्रिय इत्यादि तेन "येषामहं प्रिय आत्मा सुतश्च सखा गुरुः सुहृदो दैवमिष्टम्" इति भगवदुक्तिप्रामाण्येन कान्तभावशान्तिरतिदास्यभावसख्यभावानां मध्ये येन भावेन उपसर्पितुमिच्छेत्तेनैवोपसर्पयन् भागवतान् धर्मानाचरेदिति रागभक्तावपि विधिर्व्यञ्जितः । आत्मतुल्यत्वादात्मा सुत इति तन्त्रेणोक्त्या पञ्चैव भावाः प्रह्लादेनोपदिष्टा इति वा ॥ २ ॥

सुखभोगार्थमुद्यमस्तु मानुषं देहं प्राप्य न कर्त्तव्य इत्याह सुखमिति । देहयोगेनेति सुखदुःखे देहधर्मावेवेत्यर्थः । सर्वत्र पश्वादावपि ॥ ३ ॥

ततो यतेत कुशलः क्षेमाय भयमाश्रितः ।
शरीरं पौरुषं यावन्न विपद्येत पुष्कलम् ॥ ५ ॥
पुंसो वर्षशतं ह्यायुस्तदर्धं चाजितात्मनः ।
निष्फलं यदसौ रात्र्यां शेतेऽन्धं प्रापितस्तमः ॥ ६ ॥
मुग्धस्य बाल्ये कौमारे क्रीडतो याति विंशतिः ।
जरया ग्रस्तदेहस्य यात्यकल्पस्य विंशतिः ॥ ७ ॥
दुरापूरेण कामेन मोहेन च बलीयसा ।
शेषं गृहेषु सक्तस्य प्रमत्तस्यापयाति हि ॥ ८ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

तथा तेन प्रकारेण क्षेमं न विन्दते क्षेममेवाह, मुकुन्देति ॥ ४ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीप. ।

भगवद्भजनमेव परमपुरुषार्थं इत्याहाऽसुरबालकान्प्रति श्रीप्रह्लादः—कौमार इति, षष्ठेनाध्यायेन । मानुषं जन्म दुर्लभम् बहुपुरुषार्थप्रदं यतोऽर्थदं पुरुषार्थदम् तत्तस्मात् पुरुषार्थसिद्ध्ये इह मनुष्यजन्मनि भागवतान् धर्मान् आचरेत, ननु, धर्मान्तराचरणे को दोषः ? अत्राह-प्राज्ञ इति । भगवद्धर्म चरणेऽपुनरावृत्तिपदप्राप्तिः तद्धितरधर्माचरणे तु पुनरावृत्तिपदप्राप्तिरित्येवं ज्ञानवानित्यर्थः—

"देवान् देवयजो यान्ति मद्भक्ता यान्ति मामपि ।
आब्रह्मभुवनाल्लोकाः पुनरावर्तिनोऽर्जुन ॥
मामुपेत्य तु कौन्तेय पुनर्जन्म न विद्यते"

इति श्रीमुखवचनमत्रानुसन्धेयम् तत्रापि कौमारे आचरेत् तत्र हेतुमाह, अध्रुवमनित्यम् अनियतकालस्यापि तारुण्यं स्थास्निरम् आश्रमादाश्रमान्तरगमनञ्च न परीक्षेत् ब्रह्मचर्यादेव सर्वं त्यक्त्वा भगवद्धर्मपरो भवेदित्यर्थः । तथा च श्रुतयः "यदहरेव विरजेत्तदहरेव परिव्रजेत्" "किमर्थं वयं यजामहे येषामयमात्मालोकः किं धनेन किं प्रजया त्यागेनैकेनामृतमानशुः" इत्याद्याः । स्मृतिश्च "स्मर्तव्यः सततं विष्णुः विस्मर्तव्यो न जातु चित् । सर्वे विधिनिषेधाः स्युरेतयोरेवकिङ्कराः" इति ॥ १ ॥

एतदेवोपपादयति-यथा हीति, चतुर्भिः । पुरुषस्येह जन्मनि विष्णोः पादोपसर्पणमेव यथा योग्यम् यस्मात् सर्वभूतानां चेतनाचेतनानां भोक्तृभोग्यपदार्थानाम् ईश्वरः, ईश्वरत्वे हेतुः, आत्मा आश्रयः सर्वेषां चेतनाचेतनानां तत्परापरप्रकृतिरूपत्वात्, अत एव प्रियः प्रीतिप्रवृत्तिदत्वात् अत एव सुहृत् सर्वदा सर्वत्रानुकूलत्वात् ॥ २ ॥

ननु, ऐन्द्रियकसुखमपि मानुषजन्मन्येव सुकरमतस्तदर्थं यतितव्यमित्यत्राह-सुखमिति । दैवात् पूर्वकर्मवशात् यथाऽयत्नतो दुःख लभ्यते तथा सर्वत्र सर्वयोनिषु देहयोगेन सुखमपि ॥ ३ ॥

तत्तस्माद्धेतोः यत ऐन्द्रियकसुखप्रयासात्परं केवलमायुर्व्ययः तत्प्रयासो न कर्तव्यः, ननु, ऐन्द्रियकसुखरूपस्य फलस्य सत्त्वात्कथं केवलमायुर्व्ययस्तेन भवतीत्यत आह, तथा तादृशेनैन्द्रियकसुखप्रयासेन क्षेमं निरतिशयसुखदं मुकुन्दचरणाम्बुजं न विन्दते न प्राप्नोति ॥ ४ ॥

---

भाषा टीका ।

प्रह्लाद उवाच ।

प्रह्लाद बोले, कि—इस संसार में यह मनुष्य जन्म बड़े प्रयोजन ( मुक्ति पर्यन्त ) का देने वाला है पर बड़ा दुर्लभ है सोभी अध्रुव ( अनिश्चित ) है इसी से बुद्धिमान् कुमार अवस्था मे ही भागवत धर्मों का आचरण करे ॥ १ ॥

इस संसार मे पुरुष को श्रीविष्णुभगवान् के चरणोंकी शरणजाना यही योग्य है, क्योंकि ? यह विष्णुही सर्वप्राणियों का प्रियआत्मा ईश्वर और सुहृद है ॥ २ ॥

हे दैत्यबालको ! जीवों को इन्द्रियों का सुख तो देह के योग से प्रारब्ध के आधीन सर्वत्र ही मिलता है जैसे कि ये दुःख आप ही मिलता है ॥ ३ ॥

उस सुख के लिये प्रयास नहीं करना योग्य है क्योंकि इस में केवल व्यर्थ ही आयु गमाना है पुरुष जैसा गोविन्द के चरणारविन्द के शरण मे सुख को प्राप्त होना है वैसा अन्यत्र नहीं होता है ॥ ४ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

भयमाश्रितः संसारं प्राप्तः पुरुषरूपं शरीरं यावत्पुष्कलमस्ति न विपद्येत सद्योमं न भवेत् नश्येदितिवा तावच्छीघ्रं क्षेमाय यतेत ॥ ५ ॥

आयुर्व्ययक्रममाह-पुंसइति त्रिभिः । यद्यस्माच्छेते ॥ ६ ॥

(१)(पश्यध्वं मतिवैषम्यं ज्ञातीनां नः कुटुम्बिनाम् ।
श्रेयो विघातादायामादीहतामनुसंसृतिम् ॥ ० ॥ )
को गृहेषु पुमान् सक्तमात्मानमजितेन्द्रियः ।
स्नेहपाशैर्दृढैर्बद्धमुत्सहेत विमोचितुम् ॥ ९ ॥
कोन्वर्थतृष्णां विसृजेत् प्राणेभ्योऽपि य ईप्सितः ।
यं क्रीणात्यसुभिः प्रेष्ठैस्तस्करः सेवको वणिक् ॥ १० ॥
कथं प्रियाया अनुकम्पितायाः सङ्गं रहस्यं रुचिरांश्च मन्त्रान् ।
सुहृत्सु च स्नेहसितः शिशूनां कलाक्षराणामनुरक्तचित्तः ॥ ११ ॥
पुत्रान् स्मरंस्ता दुहितॄर्हृदय्या भ्रातॄन् स्वसॄर्वा पितरौ च दीनौ ।
गृहान्मनोज्ञोरुपरिच्छदांश्च वृत्तीश्च कुल्याः पशुभृत्यवर्गान् ॥ १२ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

विंशतिर्वर्षाण्यायुर्याति ॥७॥

दुरापूरेण दुःखैः समन्तादापूर्यमाणेन ॥ ८ ॥

ननु, यौवने गृहासक्तोऽपि पश्चाद्विरक्तस्सन् क्षेमं साधयतीत्याशंक्य तदसम्भवं दर्शयन्कौमार एवाचरेदित्येतदुपपादयति-को गृहेष्विति सप्तभिः ॥ ९ ॥

यमसुभिः क्रीणाति प्राणहानिमङ्गीकृत्यापि साधयति तस्करादिः तमित्यर्थं तृष्णां को नु विसृजेत् ॥ १० ॥

किञ्च कथमित्यादि प्रियायाः सङ्गादिकं स्मरन्कथं त्यजेदिति तृतीयेनान्वयः । मन्त्रान्हितशिक्षालापान् सुहृत्सु च सङ्गम् तेषां स्नेहेन सितो बद्धः कलानि मधुराण्यक्षराणि येषां तेषां च सङ्गम् तेष्वनुरक्तं चित्तं यस्य ॥ ११ ॥

ताः श्वशुरगृहे स्थिताः हृदय्या हृदयङ्गमाः मनोज्ञा उरवः परिच्छदा येषु तान् गृहान् वृत्तीर्जीविकाः कुल्याः कुलपरम्परागताः ॥ १२ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

ततः कारणाद्भवगतनर्थानहं संसारमाश्रितः पुमान् कुशलः हेयोपादेयविभागकुशलस्सन् क्षेमायैव उक्तविधधर्मार्थमेव यतेत कौमार एवेत्युक्तमवधारणं प्रतिपादयितुं तदवतारयति-शरीरमिति । पौरुषं पुरुषस्य जीवस्य स्वस्य सम्बन्धि शरीरं यावत् पुष्कलं पटुतरमस्ति न तु विपद्येत विपन्नं न भवति तावदेव क्षेमाय यतेतेति पूर्वेणान्वयः बाल्यादारभ्यैव यतेतेति भावः ॥ ५ ॥

एतदेव प्रतिपादयन् विषयासक्तस्य कृत्स्नं वृथायुर्व्ययमाह— पुंस इति । पुंसो मनुष्यस्य तावद्वर्षशतं ह्यायुर्जीवनयोग्यकालः शतवर्षपरिमितः तस्य शतवर्षपरिमितस्यायुषोऽर्द्धं पञ्चाशद्वर्षात्मकमजितेन्द्रियस्य निष्फलमेव यातीत्युत्तरेणान्वयः । नैष्फल्येन याने हेतुं वदन्पुमांसं विशिनष्टि, यदिति. यद्यस्मादसावजितात्मा पुमान् रात्र्याम् अन्धन्तमः निद्रात्मकं प्रापितस्तूष्णीं शेते जितेन्द्रियः कौमार एवारब्धभक्तियोगरूपभगवद्धर्मयोगस्तु रात्र्यामपि मध्यमं यामद्वयं निद्रार्थमुपयोज्य पूर्वोत्तरयोर्यामयोरनियतं काले भगवद्धर्ममाचरतीति भावः ॥ ६ ॥

एवं बाल्ये मुग्धस्य मूढस्य दशवर्षाणि कौमारे क्रीडतो दशवर्षाणीत्येवं विंशतिर्वर्षाणां याति, जितेन्द्रियः कुशलस्तु तस्यामपि विंशत्यां भगवद्धर्ममनुतिष्ठतीति भावः । एवमुत्तरत्राप्यूह्यम्. जरया ग्रस्तो देहो यस्य अत एवाकल्यस्यासमर्थस्य स्नानभोजनादेरस्य वर्षाणां विंशतिर्याति बाल्यात्प्रभृत्यारब्धभगवद्धर्मस्तु तदभ्यासशिक्षितदेहत्वात्तस्यामपि विंशत्यां तदनुतिष्ठतीति भावः ॥ ७ ॥

एवमहर्भोगात्मकाद्वायुषश्चत्वारिंशद्वर्षाणि गतानि शेषमवशिष्टं दशवर्षात्मकमायुः दुरापूरेण दुःखैः समन्तादापूर्यमाणेन कामेन तदनुबन्धिना बलीयसा मोहेन चकारात् क्रोधेन च गृहेषु गृहधर्मेषु सक्तस्यात एव प्रमत्तस्य स्वहितमजानतोऽपयाति जितेन्द्रियस्तु कुशलः कामाद्युपशमेन तस्मिन्नपि दशवर्षात्मके वयसि भगवद्धर्ममनुतिष्ठतीति भावः ॥ ८ ॥

एवमजितेन्द्रियस्य वैषयिकसुखरतस्यायुषो नैष्फल्यमारब्धभक्तियोगस्य कुशलस्य जितेन्द्रियस्य तु निःश्रेयससाधनभगवद्धर्मप्रसाधनोपयुक्तत्वेन साफल्यं भागवतधर्माणामेव निरतिशयश्रेयस्साधनत्वं तेषाञ्च वर्त्तमानमनुष्यजन्मनैवानुष्ठेयत्वं चोक्तम्. अथ वैराग्यमन्तरेणोपदिष्टोऽपि भागवतधर्मः प्रतिष्ठितो न भवतीति वैराग्येण तावदेषां भवितव्यं तच्च सत्संगतिमन्तरेण न सेत्स्यतीति तया भवितव्यम्. सा च विषयासक्तचित्तजनसङ्गपरिहारमन्तरेण दुर्लभेत्यभिप्रेत्य तत्परिहारश्च गृहवित्तकलत्रापत्यादिष्वनुरक्तचित्तस्य यद्यप्यशक्यस्तथाप्युपा-

(१) श्लोकोऽयमधिकः पठ्यते विज० ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

येन विवेकात्मना दुस्सङ्गः परिहार्य इति वक्तुं तावद्गृहादिष्वनुरागस्य दुस्त्यजत्वमनर्थावहत्वञ्चाह—को गृहेष्वित्यादिना। तावद्गृहानुरागस्य दुस्त्यजत्वमाह—क इति. गृहेष्वासक्तं ममेदं गृहमित्यभिमानयुक्तं दृढैः दुर्मोचनीयैः स्नेहा एव पाशास्तैर्बद्धमात्मानं विमोचयितुमजितेन्द्रियश्च कः पुमानुत्सहेत, कोऽप्युत्साहं न कुर्यादित्यर्थः। जितेन्द्रियस्तूत्सहेतैवेति भावः। अनेन "हित्वात्मपातं गृहमन्धकूपम्" इतिपूर्वमुक्तगृहाभिनिवेशत्याग एव भगवदाश्रयणे प्रथमं कारणमित्युक्तम् ॥ ९ ॥

तदभिनिवेशत्यागश्च वित्तकलत्रापत्यादनुरागत्यागपूर्वकः सोऽप्यजितेन्द्रियस्य दुश्शक इत्याह—को न्विति। अर्थतृष्णां वित्तस्पृहाम् अजितेन्द्रियश्चेत् क पुमान् विसृजेत् त्यजेत् दुस्त्यजत्वे हेतुत्वेनोक्तां विशिनष्टि—य इति. यां यथः प्राणेभ्योऽपि गरीयसीमिति. प्राणस्पृहापेक्षया गरीयसीं दृढतरामित्यर्थः। प्राणेभ्योऽपि गरीयस्त्वमेव दृष्टान्तमुखेन दर्शयन्नर्थं विशिनष्टि—यमिति. यमर्थमसुभिः प्राणैः तस्करश्चोरः सेवकः आयुधोपजीवी वणिक् नाविकश्च क्रीणाति प्राणहानिमङ्गीकृत्यापि तस्करादिर्यमर्थं साधयति तद्विषयां तृष्णां को नु विसृजेदित्यर्थः ॥ १० ॥

किञ्च अनुकम्पितायाः दयायुक्तायाः प्रियायाः रहसि भवं सङ्गं रुचिरान् मनोज्ञान् हितालापांश्च सुहृत्सु च सङ्गं स्मरन् कथं प्रियासङ्गं त्यजेदिति तृतीयेनान्वयः। कथम्भूतः ? तत्स्नेहसितः तेषां प्रियादीनां स्नेहेन सितो बद्धः कलानि मधुराव्यक्ताक्षराणि येषां तेषां शिशूनां च सङ्गमित्यनुषज्यते सङ्गं तेष्वनुरक्तं चित्तं यस्य सः ॥ ११ ॥

पुत्रान् हृद्याः हृदयङ्गमा दुहितॄः श्वशुरगृहे स्थिताः तथा भ्रातॄन् स्वसॄर्भगिनीश्च दीनौ मातापितरौ च उरवः बहवः परिच्छदाः भोगोपकरणानि येषु तान् मनोज्ञान् गृहांश्च कुल्याः कुलक्रमागताः वृत्तीर्जीविकाश्च पशून् भृत्यवर्गांश्च कथं त्यजेत कथन्तरां विरज्येत विरक्तः स्यात् ॥ १२ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

तस्मादिदमेव कर्त्तव्यमिति तत्राह—नन्विति। चशब्दोऽप्यर्थः अर्थं तत्कालस्य इत्याह—अतोऽपि बाल्य एव मुक्तये प्रयतेतेत्याह—शरीरमिति। पौरुषं पुरुषस्य विद्यमानं पुष्कलं पुष्टमन्धपङ्गुत्वाद्यभावेन निष्कल्यविगुणमित्यर्थः। विपद्येत मरणलक्षणां विपत्तिं प्राप्नोति ततःप्रागेव यतेतेति शेषः ॥ ५ ॥

"शतायुर्वै पुरुषः" इतिवचनात् शतायुः शरीरस्थितेर्निश्चितत्वात्तदन्तरालकालेऽपि क्रमेण समार्जनोपपत्तेः बाल्य एव निवृत्तिलक्षणश्रेयसे यतनीयमिति नियमो नापेक्षित इत्याशङ्क्य गर्भवाससमारभ्य शतायुःपर्यन्तं स्वतः परतो वा शरीरस्य नाशदर्शनाच्च तत्स्थितिनिश्चयः शाश्वतः अस्तु वा कस्याचित्तथापि न श्रेयो यत्नो दृश्यते अन्यव्यापारायासग्रस्तत्वेन शिश्नमेलनलक्षितवत्सराणां क्षयादेवं न शतवर्षायुषेणापि मुकुन्दचरणारविन्दसेवालक्षणश्रेयःसम्पादनं सुशकमित्याह—पुंस इति ॥ ६ ॥ ७ ॥

दुरापूरेण न शक्यपूरणेन हिशब्दो हेतौ ॥ ८ ॥

निद्रादिकमन्तरेणावशिष्टकालान्तरालेऽपि श्रेयो विघ्नहेतुरस्तीत्याह—पश्यध्वमिति। कलहलक्षणं मतिवैषम्यं मनुसंस्मृतिमित्यनेनैकोऽपि क्षणो नावशिष्यत इति सूचयति ॥ ० ॥

नन्वस्माकं श्रेयश्च्छा नास्ति चेदनेतेषु चेतनेषु कस्य चित्सा स्यादनवसरमापद्येतेति तत्राह—क इति ॥ ९ ॥

ननु, प्रवृत्तिधर्मेण माभूच्छ्रेयोऽर्थेन तत्साधनो मुकुन्दपादसेवा कुतो निरुध्यत इति तत्राह—को न्विति। योऽर्थस्तदर्थतृष्णा अर्थान्वेषणे तृष्णयैवार्जितस्य व्यये लिप्सयाऽर्थेन सुकृतं साधयेति बोधने साधयिष्यामीति कण्ठोपरि गद्गदानिर्गदेनैव कालो यातीति पुरुषायुषेणापि वित्तेन सुकृतार्जनं दुर्घटमिति विष्यव्ययमन्तरेण कायक्लेशेनैव श्रीहरिचरणनिषेवणं जन्मसफलङ्करोतीति भाव तत्र दर्शनं प्रमाणयति तस्करादयो मृता अप्यर्थतृष्णां न मुञ्चन्तीत्येतदुपलक्षणं परितः प्रत्येसन नानाजीवानां वर्तते ॥ १० ॥

ननु. माभूदर्थाच्छ्रेयः कामादस्त्वित्याशंक्य कीदृशो सौ भगवद्भक्तिकामो विषयकामो वा न द्वितीयः अभिध्यायन्वसंरतिप्रणोदनातिदीर्घजीविते को रमेतेत्यादि शास्त्रानिन्दितत्वात्तस्य विषयनिरक्त्या तत्त्यागेन भाव्यं तस्य दुःसाधनत्वादित्याह—कथमिति. रहस्यं रहसि भवं सङ्गं मैथुनलक्षणं कथं त्यजेदित्युत्तरेणान्वयः मन्त्रादिगृहीतानां संलापानां रसेनेति शेषः ॥ ११ ॥

प्रत्ता दत्ताः हृद्याः हृदयप्रियाः रुचिरच्छदान् रुचिरपरिकरान् कुल्याः कुलपरंपरया समागताः वृत्तीर्जीवनकरीः ॥१२॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

पुरुषरूपमिति स्वामीपौरुषमिति सम्बन्धोक्तिः ॥ ५ ॥ ६ ॥

कौमार इत्यत्र कैशोर इति क्वचित् ॥ ७—२० ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी।

भयमाश्रित इति हरिभजनाभावे स्थानाङ्कुष्टाः पतन्त्यध इति सर्वश्रुतवेति वैधभक्तौ विधिरुक्तः पुष्कलं जरारोगाद्यभावात् पुष्टं यत्नसमर्थमित्यर्थः ॥ ५ ॥

आयुर्व्ययक्रममाह—पुंस इति ॥ ६ ॥

क्रीडत इति बालैर्बालाभिश्च सह ॥ ७ ॥

शेषचमशिष्टमायुः ॥ ८ ॥

**त्यजेत कोशस्कृदिवेहमानः कर्माणि लोभादवितृप्तकामः ।**
**औपस्थ्यजैह्व्यं बहुमन्यमानः कथं विरज्येत दुरन्तमोहः ॥ १३ ॥**

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

तत्रापि कुत्रापि भजेदिति विवेकवत्त्वेपि भजनासामर्थ्यमाह—क इति । तस्मात् कौमारत एव भजने आरम्भणीये भजन एवासक्त्या ब्रुवन्नपि ममानान्यत्रानासक्त्या भजनं सिद्ध्यति नान्यथेति भावः ॥ ६ ॥

द्रव्याशक्तेः प्राबल्यं दर्शयति—कोन्विति । योऽर्थः अर्थस्य प्राणेभ्योऽपि प्रियत्वमाह, यम् अर्थं प्राणैः क्रीणाति प्राणहानिमङ्गीकृत्यैव तस्करो द्रव्यार्थं रात्रौ धनिनां गृहं प्रविशति सेवको राजकीयो युद्धाभिमुखं चलति वणिक् समुद्रादि दुर्गमगामी ॥ १० ॥

स्त्रीपुत्राद्यासक्तेः प्राबल्यं दर्शयति—कथमिति । प्रियायाः सङ्गादिकं स्मरन् कथं त्यजेदिति तृतीयेनान्वयः मन्त्रान् हितशिक्षालापान् सितो बद्धः शिशूनाञ्च सङ्ग श्वशुरगृहे स्थिताः सुहृदयाः हृदयङ्गमाः वृत्तीर्जीविकाः कुल्याः कुलपरम्पराप्राप्ताः ॥ ११ ॥ १२ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

ततो हेतोः भयमाश्रितः जन्ममरणादि महलक्षणं संसारं प्राप्तो बहुजीव' कुशलो मुमुक्षुः सन् पौरुषं मृषं शरीरं यावन्न विपद्येत यावद्य पुष्कलं तावत् क्षेमाय मुकुन्दचरणाम्बुजाय तत्प्राप्तय इत्यर्थः यतेत ॥ ५ ॥

कौमारे यो हि क्षेमाय न यतेत तस्याकुशलस्य तु मुकुन्दचरणाम्बुजप्राप्तिर्न घटेत इत्याह—पुंसइति द्वादशभिः ॥ ६ ॥

मुग्धस्य बाल्ये बालैः क्रीडनः कौमारे विद्याग्रहणादिना च क्रीडनः विंशतिवर्षाणि आयुर्याति ॥ ७ ॥

दुरापूरेण दुःखेनापि पूरयितुमशक्येन बलीयसा सर्वेभ्योपि जयकर्त्रा ॥ ८ ॥

गृहेष्वासक्तमात्मानं स्नेहपाशैर्बद्धं विमोचितु क उत्सहेत न कोपीश्वरकृपाभाजनं विनेत्यर्थः ॥ ९ ॥

योऽर्थः प्राणेभ्योपीप्सितः प्रियतमः यमर्थं तस्करः परगृहप्रवेशेन राजसेवको युद्धेन वणिक् दुर्गमदेशप्रवेशेन असुभिः प्राणैः क्रीणाति तस्यार्थस्य तृष्णां कोऽनु विसृजेत् ॥ १० ॥

प्रियायाः रहस्यं गोप्यं सङ्गं रुचिरान् मनोहरान् मन्त्रान् मधुरभाषणानि शिशूनाञ्च कलभाषिणां सङ्गं सुहृत्सु सङ्गं च स्मरन् स्नेहसितः प्रियादिस्नेहबद्धः प्रियाद्यनुरक्तचित्तश्च कथं त्यजेदिति तृतीयेनान्वयः ॥ ११ ॥

हृद्याः हृदयङ्गमाः ताः लोके प्रसिद्धस्नेहविषयाः मनोज्ञाः उरवः परिच्छदाः ये तु तान् कुल्याः पितृपितामहाद्यागताः पशूनां भृत्यानां च वर्गान् समूहान् ॥ १२ ॥

---

भाषा टीका ।

तस्मात् कुशल पुरुष संसार को प्राप्त होकर अपने परमक्षेम के लिये यत्नकरे जवतक कि यह अच्छा भला मनुष्य शरीर विपत्ति को न प्राप्त हो ॥ ५ ॥

देखो पुरुष की सौ वर्षकी आयु है तिसमें भी अजितात्मा पुरुष की अर्द्ध आयु निष्फल है क्योंकि ? यह अन्धतमको प्राप्त होकर रात्रि में सोता है ॥ ६ ॥

और बीस वर्ष भोले भाले की बाल और कौमार अवस्था में खेलने में जाती है। और बीस वर्ष जरा अवस्था से ग्रस्तदेह वाले असमर्थ की व्यर्थ जाती है अर्थात् उस समय कुछ साधन नहीं बन सका ॥ ७ ॥

शेष मध्य की जो आयु है वह दुष्पूर काम और बलवान् मोह से गृह में आसक्त अत एव प्रमत्त पुरुष की व्यर्थ चली जाती है ॥ ८ ॥

अजितेन्द्रिय पुरुषों में ऐसा कौन होगा जो कि, गृह में आसक्त और दृढ स्नेह पाशों से बँधे हुए इस आत्मा को छुड़ाने का उत्साह करेगा ॥ ९ ॥

भला प्राणों से भी जो प्रिय इस तरह के द्रव्य की तृष्णा को कौन छोड़ सका है. जिस द्रव्य को तस्कर चाकर और वणिक् अपने प्रिय प्राणों से कीनते है ॥ १० ॥

अनुकम्पित अपनी प्रिया के एकान्त सङ्ग को और सुहृद्लोगों के स्नेह से बँधा हुआ, छोटे २ बच्चों की मधुर वाणी से अनुरक्त चित्त, अपने हृदयंगम ( बहुत ही प्रिय ) लडके लडकी और भ्राता लोगों की याद कर २ तथा दीनविचारे माता पिताओं की और नाना प्रकार के मनोहर उपकरण वाले घरों की तथा अपनी कुल परम्परा और उत्तम २ पशु, और नौकर चाकरों की याद कर २ के इन सबों को कौन छोड सका है ॥ ११ ॥ १२ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

कोशस्कृत् कोशस्कारी कीटः स यथा आत्मनो हितं गृहं कुर्वाणो निर्गमाय द्वारमपि नावशेषयति तथा कर्माणीहमानः तन्त्वबितृप्तकामोऽपि दोषदर्शनेन विरक्तः संस्त्यजेत्तत्राऽऽह—

कुटुम्बपोषाय वियन्निजायुर्न बुध्यतेऽर्थं विहतं प्रमत्तः ।
सर्वत्र तापत्रयदुःखितात्मा निर्विद्यते न स्वकुटुम्बरामः ॥ १४ ॥
वित्तेषु नित्याभिनिविष्टचेता विद्वांश्च दोषं परवित्तहर्तुः ।
प्रेत्येह चाथाप्यजितेन्द्रियस्तदशान्तकामो हरते कुटुम्बी ॥ १५ ॥
विद्वानपीत्थं दनुजाः ! कुटुम्बं पुष्णन्स्वलोकाय न कल्पते वै ।
यः स्वीयपारक्यविभिन्नभावस्तमः प्रपद्येत यथा विमूढः ॥ १६ ॥
यतो न कश्चित् क्व च कुत्रचिद्वा दीनः स्वमात्मानमलं समर्थः ।
विमोचितुं* कामदृशां विहारक्रीडामृगो यन्निगडो विसर्गः ॥ १७ ॥
ततो विदूरात्परिहृत्य दैत्याः ! दैत्येषु सङ्गं विषयात्मकेषु ।
उपेत नारायणमादिदेवं स मुक्तसङ्गैरिषितोऽपवर्गः ॥ १८ ॥
न ह्यच्युतं प्रीणयतो बह्वायासोऽसुरात्मजाः ! ।
आत्मत्वात्सर्वभूतानां सिद्धत्वादिह सर्वतः ॥ १९ ॥
परावरेषु भूतेषु ब्रह्मान्तस्थावरादिषु ।
भौतिकेषु विकारेषु भूतेष्वथ महत्सु च ॥ २० ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

औपस्थ्यं जैह्व्यञ्च सुखं बहुमन्यमानस्तदेवाधिकं मन्यमानः अतो दुरन्तो मोहो यस्य स कथं विरज्येत विरक्तः स्यात् ॥ १३ ॥

दुरन्तमोहत्वं दर्शयन्नाह, कुटुम्बपोषणाय वियत्क्षीयमाणं निजमायुः पुरुषार्थञ्च विहतं न बुध्यते अत एव तापत्रयेण दुःखितचित्तोऽपि न निर्विद्यते तत्र दुःखबुद्धिं न करोति यतः स्वकुटुम्बे रामो रतिर्यस्य ॥ १४ ॥

प्रत्युत चौर्यं करोतीत्याह—वित्तेष्विति । नित्यमभिनिविष्टं चेतो यस्य स परवित्तहर्तुः प्रेत्य नरकलक्षणमिह च दण्डादिरूपं दोषं यद्यपि विद्वान् जानन्नथाप्यशान्ताभिलाषस्तत्परवित्तं हरत्येव ॥ १५ ॥

तदेवं को गृहेषु पुमानित्यादि सप्तभिः श्लोकैरुपपादितं गृहादिषु प्रसक्तस्य वैराग्याद्यसम्भवमुपसंहरति--विद्वानिति । स्वलोकायात्मपरामर्शाय न कल्पते किन्तु विमूढो यथा तथा विद्वानपि तमोऽभिनिवेशमेव प्रपद्यते. तत्र हेतुः, य इति. स्वीयमिदं पारक्यमिदमिति विभिन्नो भावो भावना यस्य सः ॥ १६ ॥

तस्मात्कौमार एव भागवतान्धर्मानाचरेदिति सहेतुकमुपसंहरति--यत इति । यतः कश्चिदपि स्वमात्मानं मोचितुं न समर्थस्ततो नारायणमुपेत शरणं यातेत्युत्तरेणान्वयः । असामर्थ्ये हेतुः अलं दीनो लम्पटः अतः कामो दृशि यासां तासां विहारे क्रीडायां निमित्ते क्रीडामृगः, विहारमिति पृथक्पाठे तासां विहारसाधनमात्मानम् यतस्तासां क्रीडामृगः स इत्यन्वयः । किञ्च यद्यासु निगडः शृङ्खलातुल्यो विसर्गः पुत्रपौत्रादिरूपो भवति ॥ १७ ॥

विदूरात्दूरतः सङ्गं परिहृत्य त्यक्त्वा आदिदेवं नारायणमुपेतेत्यन्वयः । स मुक्तसङ्गैरपवर्गः इषितः इष्टः ॥ १८ ॥

ननु, बह्वायासमन्तरेण कथं हरिप्रीणनमिति चेत्तत्राह—नहीति । बह्वायासोऽपि न भवेत् ॥ १९ ॥

आत्मत्वात्सर्वत्र सिद्धत्वादिति च हेतुद्वयमुपपादयति--परावरेष्विति, चतुर्भिः । ब्रह्मा अन्तो येषां स्थावर आदिर्येषां तेषु भूतेषु भौतिकेष्वजीवेषु घटादिषु महत्सु च भूतेष्वाकाशादिषु ॥ २० ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

कथम्भूतः कोशस्कृदिव कोशकारी कीट इव कर्माणीहमानो यथा कोशस्कृदिदं कोशात्मकं गृहं कुर्वन्नात्मनो निर्गमाय द्वारमपि नावशेषयति । तथा स्वबन्धकानि कर्माणि कुर्वाण इत्यर्थः । अवितृप्तः कामो यस्य तादृशः औपस्थ्यं जैह्व्यञ्च सुखं बह्वाधिकं मन्यमानः अतो दुरन्तो मोहो यस्य ॥ १३ ॥

दुरन्तमोहं दर्शयन्विशिनष्टि—कुटुम्बपोषणाय वियत्क्षीयमाणं निजायुः परिच्छिन्नायुर्यस्य तादृशो विशेषण हितमनुकूलमर्थं परमं पुरुषार्थं न वेद, विहतमिति पाठे, विहतमपि स्वाभिप्रेतमर्थं न वेद दृष्टान्तत्वेन नानुसन्धत्ते सर्वत्र देशे काले च तापत्रयेण दुःखित आत्मा मनो यस्य तादृशो न निर्विद्यते संसृतौ हेयत्वबुद्धिं न करोति यतः स्वकुटुम्बे रामो रतिर्यस्य ॥ १४ ॥

* वामदृशामिति. पाठान्तरम्. वीर०—विज० ॥

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

प्रत्युताकार्यं करोति इत्याह—वित्तेष्विति । परद्रव्यापहारिणो या दोषः प्रेत्य मरणानन्तरं नरकलक्षणाः इह च लोके दण्ड-रूपश्च तं विद्वान् जानन्नपि वित्तेषु नित्यमभिनिविष्टं चेतो यस्य स्याऽजितेन्द्रियोऽशान्तकामः कुटुम्बी च सन् तत्परस्य वित्तं हरति ॥ १५ ॥

एवं कौ गृहेष्वित्यादिभिः सप्तभिः श्लोकैर्गृहादिष्वनुरागो दुस्त्यज इत्युक्तम्. अथ तस्यानर्थावहत्वमाह-विद्वानिति । हे दनुजाः ! इत्थं विद्वानपि उक्तविधं संसारं जानन्नपि कुटुम्बं पुष्णन् तिष्ठन् यः स्वलोकाय आत्मयाथात्म्यदर्शनाय न कल्पते न समर्थो भवति प्रकृतिपुरुषेश्वरयाथात्म्यावमर्शनपरो न भवति, किन्तु इदं स्वीयमिदं परकीयमित्येवं विभिन्नो भावो यस्य, सर्वस्य परमात्मशेषतामजानन्नित्यर्थः, यथावत् विमूढः स तमो नरकमेव प्रपद्येत, यद्वा तत्त्वविदपि कुटुम्बभरणासक्तो देहात्माभिमान-स्तदनन्तरमभिमानयुक्तो मूढवन्नरकमेव प्रपद्यते, न मुक्तिम् किंपुनः केवलमूढ इत्याह–विद्वानपीति । विद्वानपि प्रकृतिपुरुषेश्वरयाथात्म्य विदपि स पुनः स्वीयपारक्यविभिन्नभाव इत्थं कुटुम्बं पुष्णन्भवति स स्वलोकाय परमपदप्रापणाय न कल्पते किन्तु नितरां मूढवत्तम एव प्रपद्येत विदुष एवंगतिः, किं पुनरविदुष इति भावः यथा विमूढ इति दृष्टान्तवाक्यं किंपुनर्न्यायोऽत्रोच्यते ॥ १६ ॥

एवं गृहाद्यासक्तेर्दुस्त्यजत्वमनर्थावहत्वञ्चोक्तम्. अथोक्तमुपसं-हरन् दुस्त्यजगृहाद्यनुरागत्यागनिमित्तमसत्सङ्गं परित्यज्य सत्सङ्गादिद्वारा भगवत्समाश्रयणमित्याह—यत इति । यतः क्वचिदपि गृहाद्यभिनिवेशाद् आत्मानं क्वचिदपि काले कुत्रचिदपि देशे मोचयितुं निर्गमयितुं कश्चिदपि न समर्थः इत्यर्थः । अत्र सामर्थ्ये हेतुगर्भम्-तो दैत्यो निपुणपदं, यासां दृशौ, तासां तासां विहारे क्रीडामृगः मुमुक्षुभिर्दूरतः त्याज्यः इत्युक्तम्. विहारमिति पृथक्पदपाठे विहारस्थानमात्मानमित्यन्वयः । वामदृशां विहारक्रीडामृगत्वं विशि-नष्टि, यदिति । यद्यस्माद्वामदृशां क्रीडामृगत्वादेव निगडरूपो निसर्गः संसारबन्धो भवति प्रथमिति वा इदः यत क्रीडामृग इत्येतदन्व-येन निगडरूपः संसार इत्यर्थः यदिति हेतुपक्षे यच्छब्देन वामदृशां वा परामर्शः, यत् यासु निगडः शृङ्खलरूपो विसर्गः पुत्रादिरूपः सर्ग इत्यर्थः । आविसर्गं इति वा हेतुः यद्यस्मात्क्रीडामृगत्वादाविसर्गः । आविसर्गो निगडः शृङ्ख-लतुल्यः संसारबन्धो भवतीत्यर्थः ॥ १७ ॥

ततहेति । ततः यतो गृहादिष्वासक्तः आत्मानं मोचयितुमसमर्थ-स्ततो विषयेषु शब्दादिष्वेव आत्मा मनो येषां तेषां दैत्येषु सङ्गं दूरात्परिहृत्य आदिदेवं जगदुदयस्थितिलयलीलं स्वतेजसा दीप्य-मानं नारायणं जीवानां प्रार्थ्यं प्रापकमाधारञ्च भगवन्तम् उपेत तत्सङ्गादिप्रगाढपाशारणं व्रजेत यद्यपात्र सत्सङ्गतेः कण्ठोक्ति-र्नास्ति तथापि स्वस्य सत्सङ्गतेरेव हेतोर्ज्ञानोदयस्य स्वेनैव व-क्ष्यमाणत्वात्स्वसङ्गस्यैव तैः सत्सङ्गतेः कृतप्रायत्वाच्च तदनुक्तावपि स्वाभिप्रेतैव. एवं गृहाद्यासङ्गस्य दुस्त्यजत्वदोषावहत्वादिकथनेनैव तेषां वैराग्यमुदेष्यतीति वैराग्यमपि सम्पादनीयमिति शब्दतो नोक्तं स्वस्यैव ज्ञानोपदेष्टृत्वादाचार्यत्वेनावस्थितत्वाद्गुर्वभिगमन-मपीह शब्दतः कर्तव्यत्वेन नोक्तम् किन्तु श्रीशरणपदमात्रेणैव कुरुते-तिशब्देनोक्तम्. धर्मान्भागवतानिति भगवच्छब्देनाभिमेत निष्फल-त्वशङ्काव्युदासं व्यनक्ति-स इति । स उपेयो नारायणः अपवर्ग परमपुरुषार्थलक्षणापवर्गहेतुत्वेन मुक्तः सङ्गो देहतद्गुणेष्वि येन्नारोपित इष्टः स एव मुक्तसङ्गानामिष्टोऽपवर्गः फलरूप इत्यर्थः ॥ १८ ॥

एतदेव प्रतिपादयितुं तावत्तत्समाश्रयणस्य दुःशकत्वशङ्कां निराकुर्वन्नाह–नहीति । हे असुरात्मजाः ! अच्युत सङ्गाश्रयणादेव आश्रितान्न च्यावयतीति अच्युतः तं प्रीणतः पुंसो बह्वायासो न हि विद्यते देवतान्तरप्रीत्युत्पादकसाधनाऽनुष्ठानवद्भगवत्प्रीत्युत्पादकत-द्धर्मानुष्ठाने नायासो विद्यत इत्यर्थः. अनायासे हेतुः आत्मत्वादिति. सर्वभूतानामात्मत्वात्सर्वतः सिद्धत्वात्सुलभत्वात्सर्वत इति "सार्व-विभक्तिकस्तसिः" षष्ठ्यर्थः । इह लोके सर्वत. सर्वेषां देवासुरा-दिस्त्रीपुरुषवर्णाश्रमादिविभागमन्तरेण सर्वेषां सिद्धत्वादित्यर्थं । अयमभिप्राय, न हि सुलभस्य तृणलोष्ठादेरन्वेषणाय विदूरगम-नादिरूपः प्रयासोऽपेक्षितः सर्वत्र सर्वेषां सुलभत्वादेव सर्वेषा-मात्मत्वेन सर्वत्र सुलभस्य प्रीणनेनातीवायास इति. यद्वा, सि-द्धत्वादित्यस्य स्वर्गादिवन्न साध्य पुरुषार्थः अपितु सिद्धरूप. साध्यपुरुषार्थसाधने हि यागाद्यनुष्ठानरूपप्रयासबाहुल्यम् सिद्ध-स्यतु तल्लाभोपयुक्तप्रीणनोपायतत्समाश्रयणमात्रमपेक्षितमित्यर्थः यद्वा, आत्मत्वादित्यनायासे पृथग्घेतु आत्मा हि स्वशरीरे नि-रतिशयप्रीतियुक्तस्तद्रक्षणशीलश्च लोके दृष्टः एवं सर्वेषां जी-वानां परमात्मानं प्रतिशरीरत्वात्तद्विषयकप्रीतेस्तस्य स्वत-स्सिद्धाया अपि विपुलापराधैरनभिव्यक्तायास्तदभिव्यक्त्यावहं कि-ञ्चिदानुकूल्यादिकमात्रमपेक्षितमिति भावः । सिद्धत्वादिति तन्ने-वान्यो हेतुः, न हि सिद्धस्य हिरण्यनिधेस्तत्परिज्ञानमन्तरेण तल्लाभोपयुक्तोऽन्यः प्रयासोऽपेक्षितः एवं परमात्मनोऽपि निरतिशय-पुरुषार्थरूपस्य हृदये सिद्धत्वात्तल्लाभोपयुक्तस्वामित्वशेषित्वादि-याथात्म्यज्ञानपूर्वकतत्समाश्रयणमात्रेण तस्य समाश्रितविष-यकप्रीतिरुदेष्यतीति नातीवायासो विद्यते इत्यर्थः ॥ १९ ॥

"आत्मत्वात्सर्वभूतानाम्" इत्येतदेव प्रपञ्चयति—परावरेष्विति चतुर्भिः । ब्रह्मा चतुर्मुखोऽन्तो येषां स्थावरा आदिर्येषां तेषु परा-वरेषु ब्रह्मादिषु भूतेषु चराचरात्मकदेहभाक्षु चेतनेष्वित्यर्थः । तथा भौतिकेषु पृथिव्यादिभूतपरिणामरूपेष्वचेतनेषु घटपटादिषु महत्सु पृथिव्यादिमहाभूतेषु ॥ २० ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

कोशस्थः कोशकारी कीटः, एतदेव स्पष्टयति–औपस्थ्य-मिति ॥ १३ ॥

यविति क्लृप्तं निजमात्मीयमायुर्यस्य स तथा शास्त्रवि-हितमर्थं श्रेयोलक्षणं न बुध्यते स्वकुटुम्बे भार्यादौ रामः क्रीडा यस्य स तथा न निर्विद्यते विरक्तो न भवति ॥ १४ ॥

परवित्तहर्तुश्चोरादेरिह देहात्प्रेत्य यत्पूर्वमार्जितम्

गुणेषु गुणसाम्ये च गुणव्यतिकरे तथा ।
एक एव परो ह्यात्मा भगवानीश्वरोऽव्ययः ॥ २१ ॥
प्रत्यगात्मस्वरूपेण दृश्यरूपेण च स्वयम् ।
व्याप्यव्यापकनिर्देश्यो ह्यनिर्देश्योऽविकल्पितः ॥ २२ ॥
केवलानुभवानन्दस्वरूपः परमेश्वरः ।
माययान्तर्हितैश्वर्य ईयते गुणसर्गया ॥ २३ ॥
तस्मात्सर्वेषु भूतेषु दयां कुरुत सौहृदम् ।
आसुरं भावमुन्मुच्य यया तुष्यत्यधोक्षजः ॥ २४ ॥
तुष्टे च तत्र किमलभ्यमनन्त आद्ये किन्तैर्गुणव्यतिकरादिह ये स्वसिद्धाः ।
धर्मादयः किमगुणेन च कांक्षितेन सारं जुषां चरणयोरुपगायतां नः ॥ २५ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

[illegible] सर्वेषां भूतानां चेतनाचेतनानामात्मत्वात्[illegible] सर्वतः [illegible] इह जगति [illegible] हेतोः [illegible] नहि ॥ १९ ॥

[illegible] सर्वत्र [illegible] भूतेषु चेतनाचेतनरूपेषु अस्तीति शेषः ॥ २० ॥

भाषा टीका ।

क्रोध कर कीडे के सदृश चेष्टा करने वाला नाना प्रकार के कर्मों को करता हुआ कामनाओं से तृप्त नहीं होनेवाला दुरन्त मोहवाला इन्द्रियोंको बहुत मानने वाले कैसे वैराग्य को प्राप्त हो सक्ता है ॥ १३ ॥

कुटुम्ब पोषण मे क्षीण होरहा जो आयु उसको और नष्ट हुए भये पुरुषार्थ को यह प्रमत्त नहीं जानता है सर्वत्र तापत्रय से दुःखित होकर भी उस दुःख को दुःख नहीं मानता है, क्योंकि ? अपने कुटुम्ब में रागवाला है ॥ १४ ॥

द्रव्य के विषैं नित्य ही प्रविष्ट चित्त वाला होकर पराये के द्रव्य हरने में पर लोक और इस लोक में जो नरक और दण्डादि दोष है उसको जानता भी है तो भी अजितेन्द्रिय अशान्त काम यह कुटुम्बी चोरी करता ही है ॥ १५ ॥

हे दनुजो ! ऐसे जानता हुआ भी कुटुम्ब पोषण करता हुआ आत्म विचार करने को समर्थ नहीं होता और अपने पराये पदार्थ में भिन्न भावना वाला होकर जैसे मूढ नरक को प्राप्त होता है तैसे ही जानता हुआ भी ॥ १६ ॥

जिसकारण कहीं भी कोई भी अपने आत्माको इस संसारसे छुडाने को समर्थ नहीं क्योंकि ? विचारा दीन स्त्रियोंके विहार करने का क्रीडा मृग हो रहा है जिन स्त्रियों [illegible] बन्धन होता है ॥ १७ ॥

[illegible] हो ! तस्मात् विषयात्मक दैत्यों के सङ्गको दूरसे [illegible] आदिदेव श्रीनारायणके शरण जाओ क्योंकि ? वही मुक्तसङ्ग मुनिलोगो का इष्ट है ॥ १८ ॥

हे असुर बालको ! नारायणको प्रसन्न करने मे बहुत परिश्रम नहीं है क्योंकि ? वह सर्व प्राणियों के आत्मा है और सर्व सिद्ध है ॥ १९ ॥

परा वर स्थावरो से लेकर ब्रह्मापर्यन्त प्राणियों मे तथा पञ्चभूतो के विकार घटपटादिक और पञ्च महाभूतों मे । गुणों मे प्रकृति मे और महत्तत्वादिकमें एकही ईश्वर अव्यय परमात्मा भगवान श्रीमन्नारायण विराजते है ॥ २० ॥ २१ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

गुणसाम्ये प्रधाने गुणव्यतिकरे महदादौ च परो ब्रह्मस्वरूपः ॥ २१ ॥

कथं तर्हि द्रष्टृदृश्यभोक्तृभोग्यादिभेदः ? माययेत्याह, प्रत्यगात्मा द्रष्टा भोक्ता तत्स्वरूपेण व्यापकतया निर्देश्यः दृश्यं भोग्यं देहादि तद्रूपेण च व्याप्यतया निर्देश्यो मायया ईयत इत्युत्तरेणान्वयः वस्तुतस्तु स्वयमविकल्पितोऽनिर्देश्योऽपि सन् यद्वा अनिर्देश्योऽप्ययं निर्देश्यः सन् विकल्पित ईयत इत्यन्वयः ॥ २२ ॥

यतः केवलोऽनुभवात्मक आनन्द एव स्वरूपं यस्य, नन्, स एवचेत्सर्वत्र नहि सर्वत्र सर्वज्ञत्वाद्युपलभ्येत तत्राऽऽह, गु[illegible]त्मकः सर्गो यस्याः सा गुणसर्गा तया माययाऽन्तर्हितैश्वर्यः सन् ॥ २३ ॥

यस्मादेवं तस्मात्सर्वेषु भूतेषु यथोचित दयां [illegible] कुरुत यया दयया उन्मुच्य सन्त्यज्य ॥ २४ ॥

धर्मार्थकाम इति योऽभिहितस्त्रिवर्ग ईक्षा त्रयी नयदमौ विविधा च वार्ता ।
मन्ये तदेतदखिलं निगमस्य सत्यं स्वात्मार्पणं स्वसुहृदः परमस्य पुंसः ॥ २६ ॥
ज्ञानं तदेतदमलं दुरवापमाह नारायणो नरसखः किल नारदाय ।
एकान्तिनां भगवतस्तदकिञ्चनानां पादारविन्दरजसाऽऽप्लुतदेहिनां स्यात् ॥ २७ ॥
श्रुतमेतन्मया पूर्वं ज्ञानं विज्ञानसंयुतम् ।
धर्मं भागवतं शुद्धं नारदाद्देवदर्शनात् ॥ २८ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

ततः किमत आह, तुष्टे च तत्र तस्मिन्किमलभ्यम् तथाऽपि गुणपरिणामादैवादेव स्वसिद्धा अयत्नतः सिद्धा धर्मादयस्तैः किम् अगुणेन च मोक्षेण काङ्क्षितेन किं तमुपगायतामस्माकमकाङ्क्षितस्यापि तस्य सिद्धेः यद्वा माभून्मोक्षस्तस्य चरणयोः सार जुषां सुधां सेवमानानां तेनापि किमित्यर्थः ॥ २५ ॥

ननु, च धर्मादेरपुरुषार्थत्वे किमित्याचार्याभ्यां वेदोक्तत्वेन सत्यत्वाभिहितस्तत्राऽऽह, धर्मोऽर्थः कामश्चेति यस्त्रिवर्गस्तदर्थं च य ईक्षाद्या अभिहिताः ईक्षा आत्मविद्या त्रयी कर्मविद्या नयदमौ तर्को दण्डनीतिश्च द्विविधा च वार्ता जीविका तदेतत्सर्वं निगमस्यार्थजातं स्वसुहृदः स्वान्तर्यामिणः परमस्य पुंसः स्वात्मार्पणसाधनं चेत्तर्हि सर्वं सत्यं मन्ये तत्परत्वात् अन्यथा तदसत्यमेव यद्वा तदेतदखिलं निगमस्य त्रैगुण्यविषयस्य प्रतिपाद्य मन्ये सत्यं पुनर्निस्त्रैगुण्यलक्षणं परमस्य पुंसः स्वात्मार्पणमेवेत्यर्थः । तदुक्तं भगवता "त्रैगुण्यविषया वेदा निस्त्रैगुण्यो भवार्जुन!" इति ॥ २६ ॥

तेषां पुनर्विश्वासार्थं गुरुसम्प्रदायमाह-ज्ञानमिति । यत्र नारदः श्रोता तत्र कुतोऽस्माकमधिकार इति माशङ्कित्याह-भगवत एकान्तभक्तानां यत्पादरजस्तेनाऽऽप्लुतानां जातानां देहिनां सर्वेषामपि तज्ज्ञानं स्यान्न तूत्तमानामेवेति नियमः ॥ २७ ॥

अत एव मयापि पूर्वं नारदाच्छ्रुतं विज्ञानसहितमनुभवपर्यन्तं ज्ञानं धर्मं च श्रुतम् ॥ २८ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

गुणेषु सत्त्वादिषु गुणानां सत्त्वादीनां साम्यं यस्मिंस्तस्मिन् प्रधाने मूलप्रकृतावित्यर्थः । गुणव्यतिकरे गुणवैषम्यवति महदहङ्कारादौ चेत्यर्थः ॥ २१ ॥

प्रत्यगात्मस्वरूपेण प्रत्यगात्मा जीवः स्वं स्वासाधारणं रूपं शरीरं यस्य तेन प्रत्यगात्मशरीरकत्वेनेत्यर्थः । दृश्यमचेतनं रूपं यस्य तेन अचेतनशरीरकत्वेन चेत्यर्थः । एकः स्वसमानरहित एव पर आत्मा परमात्मा अन्तः प्रविश्य भर्त्ता अव्ययः अस्पृष्टशरीरगतविकारः निरस्तनिखिलदोषः षाड्गुण्यपरिपूर्णः ईश्वरो जीवकर्मानुगुणं नियन्ता व्याप्यव्यापकनिर्देश्यः व्याप्येषु व्यापकतया निर्देश्यः अविकल्पितः जातिगुणादिरहितः ॥ केवलोऽनुभवः दुःखप्रतिभटं ज्ञानम् आनन्दरूपं तदेव स्वरूपं यस्य सः परमेश्वरः स्वव्यतिरिक्तेश्वरान्तररहितः गुणसर्गया संसारिणां मोहादिगुणान् सृजतीति तया मायया अन्तर्हितैश्वर्यः संसारिणामप्रकाशमानमहिमा ईयते गम्यते सदाचार्योपदेशेन ध्यायत इत्यर्थः । उक्तविधतत्याथात्म्यज्ञानपूर्वकं तत्समाश्रयणमात्रमेव तत्प्रीतिनिमित्ततत्प्रीतिहेतुरुपाय इति भावः । अत्र 'अविकल्पित.' 'केवलानुभवानन्दस्वरूप.' इति पदद्वयेन "अस्थूलमनण्वह्रस्वम्" 'सत्यं ज्ञानमनन्तम्' 'विज्ञानमानन्दम्" इति श्रुत्यर्थप्रत्यभिज्ञापनेन प्राप्य ब्रह्मस्वरूपमुक्तम् अवशिष्टैरेक एवेत्यादिभि. प्रथमान्तपदैः 'प्रत्यगात्मस्वरूपेण' दृश्यरूपेणचेति पदद्वयेन च प्राप्यस्य गुणा उक्ताः, "परावरेषु भूतेषु प्रत्यगात्मस्वरूपेण" चेत्यनेन जीवस्य तच्छेषत्वापरपर्यायतच्छरीरत्वकथनेन प्राप्तृस्वरूपमुक्तम् "गुणसर्गया मायया ऽन्तर्हितैश्वर्य." इत्यनेनाऽनाद्यात्मकत्वस्वतन्त्रात्मत्वादिकाऽमोहादिप्राकृतगुणमय एव प्राप्तिविरोधीति कथनेन विरोधिस्वरूपमप्युक्तम्. तत्प्राप्तिफलन्तु तच्चरणकैङ्कर्यादिरूपं "सारं जुषां चरणयो." इति वक्ष्यति. एवमर्थपञ्चकमुपदिष्टं भवति पूर्वम् "उपेतनारायणम्" इति तत्समाश्रयणं कर्तव्यत्वेन विहितं तस्य दुष्करत्वशङ्कापरिहारप्रसङ्गात्समाश्रयणोपयुक्तार्थपञ्चकज्ञानं सदाचार्योपदेशात्सम्पाद्यमित्युक्तम्. एवमर्थपञ्चकज्ञानपूर्वकतत्समाश्रयणमात्रमेव तत्प्रसादजननद्वारा तत्प्राप्तिहेतुरित्यभिप्रेतम्, तत्समाश्रयणञ्च तद्भक्तिप्रपत्त्यन्यतरात्मकमधिकारभेदेन व्यवस्थितमिति तात्पर्यम् ॥ २२ ॥ २३ ॥

यदुक्तं "न ह्यच्युतं प्रीणयतो बह्वायासः" इति तदुपसंहरन् तत्प्रीतिनिमित्ततत्सन्तोषजनकं हेत्वन्तरमाह–तस्मादिति । यस्मात् सर्वान्तरात्मत्वादिप्राप्यब्रह्मस्वरूपादिज्ञानपूर्वकतत्समाश्रयण— मात्रमेव तत्प्राप्त्यावहतत्प्रीतिहेतुस्तस्माद्यूयं सर्वं आसुरं भावं भूतद्रोहशीलत्वादिरूपम् उन्मुच्य समूलं त्यक्त्वा परमात्मशरीरेषु सर्वेषु भूतेषु ब्रह्मादिस्तम्बपर्यन्तेषु यथोचितं दयां सौहृदञ्च कुरुत यथाऽनया अधोक्षजो भगवांस्तुष्यति तादृशीं भूतेषु दयां कुरुतेत्यर्थः ॥ २४ ॥

तुष्यत्यधोक्षजः ततः किमत आह—तुष्ट इति । तस्मिन्नाद्ये जगत्कारणभूते अनन्ते भगवति तुष्टे सति अलभ्यं किम्.? न किमपि सर्वं तस्मिन् तुष्टे सति अभिलषितं सुलभमेवेत्यर्थः । यद्यपि सुलभं तथापि निरतिशयपुरुषार्थं रूपतच्चरणारविन्दानुभवरूपममृतमनुभवद्भिः

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

आत्मा सर्वेषामात्मा मूलभूत एको निरस्तसमानातिशयो भगवानेव. ननु, सर्वभूतत्वे सति तस्य विकारित्वं स्यादित्याह, अव्ययः निर्विकारस्वरूपः विश्वं सृजतीति भाव. ॥ २१ ॥

स्वरूपेण निर्विकारत्वं सर्वमूलत्वञ्चोपपादयति, प्रत्यगात्मस्वरूपेण "अणुर्ह्येष आत्मा चेतसा वेदितव्य एषपरस्यांश." इत्यादिश्रुतिप्रसिद्धजीवस्वरूपेण स्वांशेन महद्येन दृश्यरूपेण "देवात्मशक्तिं स्वगुणैर्निगूढाम्"इत्यादिश्रुतिप्रसिद्धशक्तिविकारेण च व्याप्यव्यापकानिर्देश्यः व्यष्टिसमष्टिकार्यरूपतया निर्देश्यः स्वयं तु अविकल्पितः स्वरूपतो व्यष्टिसमष्टिकार्यभावेन नैव निरूपितो ऽतोनिर्देश्यः परिणामित्वस्थूलत्वकृशत्वादि निर्देशानर्ह इत्यर्थ.। यतःप्रत्यगात्मा द्रष्टा भोक्ता तत्स्वरूपेण व्यापकतया अनिर्देश्यः दृश्यं भोग्यं देहादि तद्रूपेण च व्याप्यतया निर्देश्य इत्यादि व्याख्यातं तदयुक्तम् प्रत्यगात्माणुत्वप्रतिपादकश्रुतिविरोधात् प्रत्यगात्मनो भोक्तुर्व्यापकत्वे सति उत्क्रान्त्याद्यसंभवप्रसङ्गात् स्वर्गनरकगतसर्वशरीरविषयकसुखदुःखाद्यनुभवप्रसङ्गाच्च ॥ २२ ॥

सर्वेषु जीवेषु स एवोक्तलक्षणः परमेश्वरो वर्तते इत्याह— केवलानुभवानन्दस्वरूप इति । केवलो निरस्तसमानातिशयः अनुभवो ज्ञानं स चावासावानन्दश्च स्वरूपं यस्य सः गुणः गुणमयः संसारः सृज्यते इति सर्गः मायैव यस्याः तया अन्तर्हितमावृतमैश्वर्यं ज्ञानं यस्य तस्मिन् जीवे ज्ञातावेकात्म्यं सर्वेषु जीवेषु ईयते"अन्तःप्रविष्टः शास्ता जनानाम्" इति श्रुतेर्ज्ञायते ॥ २३ ॥

यस्मादेवं तस्मादासुरं भावमुन्मुच्य सर्वेषु भूतेषु दयां सौहृदञ्च कुरुतदनेन तद्भजनं भवतामनुरूपमिति भावः । यथैव अधोक्षजस्तुष्यति ॥ २४ ॥

तस्मिंस्तुष्टे सर्वं यद्यदिष्टं तत्तदाचिरमेव लब्धं भविष्यति धर्मादिकस्यायत्नलभ्यस्य का कथाऽतिदुर्लभो मोक्षोपि न कामितव्यो निष्कामतया तद्ध्यानमेव कर्तव्यमित्युपदिशति, तुष्टे— चेति । तस्मिन् तुष्टे सति किमलभ्यं न किमपीत्यर्थः । एवं सति उपगायतां तद्गुणादिकीर्तननिष्ठानां चरणयोः सारं सौन्दर्यं जुषतां सेवमानानां तच्चरणाध्यानवृत्तीनां नोऽस्माकं यदा अगुणेन प्राकृतगुणसम्बन्धरहितेन मोक्षेणाप्याकाङ्क्षितेन किं, न किमपि तदा गुणव्यतिकरात् प्रकृतिगुणपरिणामात् स्वसिद्धाः अयत्नलभ्याः अर्थात्संसारे भ्रमता जीवेन यत्र कुत्र लभ्या एव ये धर्मादयः धर्मार्थकामाः तैराकांक्षितैः किं, न किमपीत्यर्थः हरिदासेन यदि भजनफलभूते मोक्षेपि आकाङ्क्षा न कार्या तर्हि धर्मादिषु कुत इति फलितोऽर्थः ॥ २५ ॥

ननु,वेदोक्तानि कर्मज्ञानाद्यात्मकानि बहूनि श्रेयस्साधनान्यनादृत्य चरणयोःसारं जुषामिति परमपुरुषचरणध्यानमेव कुतोमुख्यं श्रेयस्साधनं मन्यसे इत्यत्र सर्वस्य वेदोक्तसाधनजातस्य परमपुरुषचरणध्यानाङ्गत्वान्न कस्याप्यनादर इत्याह, धर्मार्थेति । परमस्येति अधिकरणस्य शेषत्वविवक्षया षष्ठी परमे पुंसि अंशिनि आत्मनोऽशभूतस्य।पेयं परमपुरुषस्वरूपगुणाचिन्तया नियोजनंप्रति निगमस्यार्थभूतं यदेतदखिलं धर्मादिकं श्रेयःसाधनं सत्यं मन्ये इत्यन्वयः।धर्मादीनां समाहारद्वंद्वे पुंस्त्वमार्षम्। धर्मादिरूपस्त्रिवर्गो योऽभिहितो वर्णितः ईक्षा आत्मानात्मपरमात्मस्वरूपगुणादिज्ञानम् त्रयी कर्मविद्या नयदमौ तर्को दण्डनीतिश्च विविधा वार्त्ता जीविकाः तत्र धर्मस्य हृदयशुद्धिद्वारा ज्ञानसाधनत्वं ज्ञानस्य ध्रुवास्मृतिपरभक्तियोगादिपदवाच्यपरध्यानसाधनत्वम्,अन्यस्य सर्वस्य जीवनद्वाराधर्मसाधनत्वमितिदिक् "सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत्" इतिसूत्रमत्रानुसन्धेयम् ॥ २६ ॥

यदन्यैर्दुरवापं तदेतज्ज्ञानम् नारदाय अस्मद्गुरवे नरसखो नारायण आह उक्तवान् तदधुना एकान्तिनां मुमुक्षूणां भगवतः पादारविन्दरजसा आप्लुतदेहिनां स्यान्नान्येषाम् ॥ २७ ॥

विज्ञानेनाऽनुभवेन संयुतम् धर्मं धर्मरूपम् भागवतं भगवत्प्राप्तिसाधनम् एतज्ज्ञानं मया नारदाच्छ्रुतम् ॥ २८ ॥

---

भाषाटीका ।

स्वयं अनिर्देश्य और अविकल्पित जो ईश्वर है वही चेतनाचेतन शरीर वाला होने से व्याप्य और व्यापक पने से निर्देश करने के योग्य है ॥ २२ ॥

वही केवलानुभव और आनन्द स्वरूप वाला होकर भी परमेश्वर है अर्थात् ईश्वरों का भी ईश्वर निरवधिक नियंता है परंच जीवों को अनेक गुणों की सृष्टि करने वाली माया से अंतर्हित ऐश्वर्य लीन होता है ॥ २३ ॥

हे दैत्य बालकों ! तस्मात् तुम दैत्य आसुर भाव को छोड़ कर सर्व प्राणियों पर दया करो और सौहृद रखो जिससे हरि प्रसन्न होवै ॥ २४ ॥

सब से आदि में होने वाला और जिसका अंत नहीं ऐसा जब ईश्वर प्रसन्न होजाय तब क्या अलभ्य है तथापि जो प्रारब्ध के आधीन धर्मादिक आपही सिद्ध हैं उन सब से क्या प्रयोजन है और चरण रजकी सेवा करने वाले और चरणों के गुण गान करने वाले हम लोगों को मोक्ष से भी क्या प्रयोजन है ॥२५॥

धर्म अर्थ और काम यह कथितजो त्रिवर्ग तथा आत्मविद्या और कर्मविद्या तर्क दण्डनीति और दो प्रकारकी जीविका यह सम्पूर्ण निगमअर्थ, जो परम सुहृद परमात्माको जो आत्मा अर्पण करदेवेतो सर्व सत्य है, नहीतो असत्यही है ॥ २६ ॥

यह निर्मल और दुर्लभज्ञान नरके सखा श्रीमन्नारायणने नारद को दियारहा सो यह ज्ञान एकांती और भगवान के चरण कमलकी रजसे स्नान करने वाले अकिञ्चनमहात्माओं को होता है ॥ २७ ॥

मैने यह ज्ञान प्रथम देव दर्शन श्रीनारदजी के मुखसे सुना है और विज्ञान सहित शुद्धभागवत धर्म भी सुना है ॥ २८ ॥

---

दैत्यपुत्रा ऊचुः ।

प्रह्लाद ! त्वं वयं चापि नर्तेऽन्यं विद्महे गुरुम् ।
एताभ्यां गुरुपुत्राभ्यां बालानामपि हीश्वरौ ॥ २९ ॥
बालस्यान्तःपुरस्थस्य महत्सङ्गो दुरन्वयः ।
छिन्धि नः संशयं सौम्य ! स्याच्चेद्विश्रम्भकारणम् ॥ ३० ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायाम्
वैयासिक्यां सप्तमस्कन्धे प्रह्लादानुचरिते
षष्ठोऽध्यायः ॥ ६ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

तत्रातिविस्मिताः पृच्छन्ति-प्रह्लादेति । हेप्रह्लाद ! त्वं वयमेताभ्यां शण्डामर्काभ्यामृते ऽन्य गुरुं न विद्म. एतदागमनात्पूर्वमेवाहं नारदपार्श्वे गत इति चेत्तत्राऽऽहुः, बालानामप्यतिशिशूनामस्माकमेतावीश्वरौ नियन्तारावतस्त्वयान्यत्र गमनं न सम्भवति ॥ २९ ॥

स एवात्रागत इत्यपि न सम्भवतीत्याहु -बालस्येति । दुरन्वयो दुर्घटः विश्रम्भकारणं विश्वासहेतु. ॥ ३० ॥

इति श्रीमद्भागवते महापुराणे सप्तमस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिकायाम्
षष्ठोऽध्यायः ॥ ६ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तत्र विस्मिताः पृच्छन्ति दैत्यकुमाराः—प्रह्लादेति । हे प्रह्लाद ! त्वं वयञ्चाप्येताभ्यां गुरुपुत्राभ्यामृते विनाऽन्यं गुरुं न विद्महे, एतदागमनात्पूर्वमेवाहं नारदपार्श्वे गत इत्यत्राहुः, बालानामपि शिशूनामपि सतामस्माकमेतावेवेश्वरौ नियन्तारौ अतस्तवान्यत्र गमनं न सम्भवतीति नः शङ्का वर्त्तत इत्यर्थः ॥ २९ ॥

नारद एवात्रागत इति न सम्भवतीत्याहुः—बालस्येति । अन्तःपुरस्थस्य बालस्य तव महतो नारदस्य सङ्गो दुरन्वयो दुर्घटः हे सौम्य, प्रह्लाद ! नोऽस्माकं संशयं छिन्धि अपनुद विश्रम्भकारणं विश्वासहेतुः स्याच्चेत् असम्भावितत्वेनाऽस्माभिरविश्वसनीयो नारदसङ्गमः त्वदुक्तस्तत्र यद्यस्माद्विश्वासहेतुरस्ति चेत्तदुपपादनपूर्वकं तत्सङ्गतिविषयं संशयं छिन्धीत्यर्थः ॥ ३० ॥

इति श्रीमद्भागवते महापुराणे सप्तमस्कन्धे
श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायाम्
षष्ठोऽध्यायः ॥ ६ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

एतस्मिन्नवसरे दैत्यपुत्राः प्रह्लादकथितार्थशङ्कया तं पृच्छन्तीत्याह—प्रह्लादेति । एताभ्यां गुरुपुत्राभ्यां शण्डामर्काभ्यामृते नान्यं गुरुं विद्महे यस्मात् किञ्च विज्ञानेश्वरविषयं विदितं तदुपाधिनापि बालानामक्षराभ्यासनिरतानामस्माकमीश्वरो न कांक्षित इति यस्मात् अन्यगुर्वभावेऽपीश्वर उपदेष्टा स्यादतो वाह, बालानामिति । बालानामीश्वरोऽस्त्यपि किं नास्तिप्रतिपत्त्यभावात् ॥ २९ ॥

कस्मिंश्चिदवसरे देशान्तरेऽन्यगुरुसङ्गतिः किं न स्यादिति तत्राह, बालस्येति । तस्मादुत्पन्नं नः संशयं जहीत्यन्वयः तत्र कृत्यमाहुरित्याह, स्यादिति ॥ ३० ॥

इति श्रीमद्भागवते महापुराणे सप्तमस्कन्धीये
श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम्
षष्ठोऽध्यायः ॥ ६ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

इति श्रीमद्भागवते महापुराणे सप्तमस्कन्धीये
श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे
षष्ठोऽध्यायः ॥ ६ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

सविस्मयं पृच्छन्ति—प्रह्लादेति । एताभ्यामृतेऽन्यं गुरुं न विद्मः बालानामीश्वरावेति त्वयाऽप्येतद्धस्तात् स्वमुन्मोच्य तत्पार्श्वं गन्तुमशक्यमिति भावः ॥ २९ ॥

स एवात्रागत इत्यपि न सम्भवतीत्याहुः, बालस्येति ॥ ३० ॥

इति सारार्थदर्शिन्याम् हर्षिण्याम् भक्तचेतसाम् ।
षष्ठोऽध्यायः सप्तमस्य सङ्गतः सङ्गतः सताम् ॥ ६ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

हे प्रह्लाद ! एतावयाम् अन्यं ते गुरुं, वदसीति शेषः । वयन्तु न विद्महे न विद्म. एतावेव नो बालानामीश्वरौ गुरू अन्यत्रभेया- इन्यत्र गमनासम्भवादिति भावः ॥ २९ ॥

नारदेन सह तव समागम इह न सम्भवतीत्याहुः, अन्तःपुरस्थस्य महतः नारदेन सह सङ्गमो दुरन्वय इति विस्रंभस्य विश्वासस्य कारणं नुव स्यादस्ति चेत्तर्हि तद्दर्शनेन संशयं छिन्धि ॥ ३० ॥

इति श्रीमद्भागवते महापुराणे सप्तमस्कन्धीये

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे

षष्ठाध्यायार्थप्रकाशः ॥ ६ ॥

भाषा टीका ।

दैत्यपुत्रा ऊचुः ।

दैत्यपुत्र बोले, कि—हे प्रह्लाद ! तुम और हम सब भी इन दोनो गुरुपुत्रों को छोड कर तीसरे किसी गुरु को जानते ही नहीं, क्योंकि ? हम लोगों के छोटी अवस्था से यही शिक्षक है ॥ २९ ॥

और भीतर रनिवास में रहने वाले तुमको तो महत्पुरुषका सङ्ग बहुत ही दुर्लभ है, हे सौम्य ! जो हम लोगों पर विश्वास हो ? तो यह हमारा संशय दूर करो ॥ ३० ॥

इति श्रीमद्भागवत महापुराण सप्तमस्कन्ध, षष्ठ अध्याय की भागवताचार्यकृत भाषा टीका

समाप्त ॥ ६ ॥

इति श्रीमद्भागवते महापुराणे सप्तमस्कन्धे षष्ठोऽध्यायः ॥ ६ ॥

## ॥ सप्तमोऽध्यायः ॥

नारद उवाच ।

एवं दैत्यसुतैः पृष्टो महाभागवतोऽसुरः ।
उवाच स्मयमानांस्तान्स्मरन्मदनुभाषितम् ॥ १ ॥

प्रह्लाद उवाच ।

पितरि प्रस्थितेऽस्माकं तपसे मन्दराचलम् ।
युद्धोद्यमं परं चक्रुर्विबुधा दानवान्प्रति ॥ २ ॥
पिपीलिकैरहिरिव दिष्ट्या लोकोपतापनः ।
पापेन पापोऽभक्षीति वादिनो वासवादयः ॥ ३ ॥
तेषामतिबलोद्योगं निशम्यासुरयूथपाः ।
वध्यमानाः सुरैर्भीता दुद्रुवुः सर्वतो दिशम् ॥ ४ ॥
कलत्रपुत्रमित्राप्तान् गृहान् पशुपरिच्छदान् ।
नावेक्षमाणास्त्वरिताः सर्वे प्राणपरीप्सवः ॥ ५ ॥
व्यलुम्पन् राजशिबिरममरा जयकाङ्क्षिणः ।
इन्द्रस्तु राजमहिषीं मातरं मम चाग्रहीत् ॥ ६ ॥
नीयमानां भयोद्विग्नां रुदतीं कुररीमिव ।
यदृच्छयागतस्तत्र देवर्षिर्ददृशे पथि ॥ ७ ॥
प्राह नैनां सुरपते ! नेतुमर्हस्यनागसम् ।
मुञ्च मुञ्च महाभाग ! सतीं परपरिग्रहम् ॥ ८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

सप्तमे मातृगर्भस्थे स्वस्मिन्नारदभाषितम् ।
प्रह्लादो वर्णयामास शिष्यप्रत्ययसिद्धये ॥ १ ॥
मयापि नारदादेतन्मया गर्भे इतीरितुम् ।
तत्प्रस्तावकथामाह पद्यैः षोडशभिः सुधीः ॥ २ ॥ १ ॥

अस्माकं पितरि हिरण्यकशिपौ स्वकृतेनैव पापेन पापोऽसावभक्षि भक्षित इति हर्षेण वदन्तो युद्धोद्यमं चक्रुः ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥

राज्ञः शिबिरमावासं व्यलुम्पन् सर्वस्वापहारेण नाशितवन्तः ॥ ६ ॥ ७ ॥

अनागसं निरपराधामेनां नेतुं मार्हसीति प्राह. ॥ ८ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

दैत्यकुमारैरेवं पृष्टः प्रह्लादस्तत्सङ्गतिहेतुमुपपादयंस्तत्त्वत्रय-याथात्म्योपदेशपूर्वकं सपरिकरं भगवद्भक्तियोगमुपदिष्टवानित्याह,

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

भगवान्नारद'-एवमिति । एवम् इत्थं दैत्यसुतैः पृष्टो भागवतोत्तम' प्रह्लादस्तान्दैत्यपुत्रान्प्रति स्मयमानो मया नारदेनानुभाषितं स्मरन्नुवाच ॥ १ ॥

तदेवाह—पितरीत्यादिना, नाऽधुनात्यजहात्स्मृतिरित्यन्तेन । अस्माकम् पितरि हिरण्यकशिपौ तपसे तपः कर्तुं मन्दराचलम्प्रति प्रस्थिते प्रयाते सति इन्द्रादयो विबुधा देवाः दानवान्प्रति युद्धोद्यमं चक्रु ॥ २ ॥

कथम्भूतास्सन्त. लोकोपतापन' लोकानां दुःखकारी पापः पापात्मा स्वपापेनैव दैवात्पिपीलिकैरहिः सर्प इव भक्षि भक्षितः इति वादिनो वदन्त' सन्तः वासव इन्द्र आदिर्येषां ते युद्धोद्यमं चक्रुरिति पूर्वेणान्वयः ॥ ३ ॥

तत' किं जातम् ? तत्राह—तेषां वासवादीनां बलोद्योगं बलप्रयुक्तयुद्धोद्योगं निशाम्य दृष्ट्वा सुरैर्वध्यमाना अत एव भीताः सन्तोऽसुरयूथपाः सर्वे त्वरिताः सर्वतो दिशं दुद्रुवुः पलायितवन्तः ॥ ४ ॥

कथम्भूताः कलत्रादीन् नावेक्षमाणास्तेषु त्यक्तस्पृहा इत्यर्थ, तत्र हेतुः. सर्वे प्राणपरीप्सव. प्राणानामपरित्यागेच्छवः तत्र परिच्छदा भोगोपकरणानि ॥ ५ ॥

ततो जयशालिनोऽमरा देवाः राज्ञो हिरण्यकशिपोः शिबिरं गृहं व्यलुम्पन् सर्वस्वापहारेण नाशितवन्तः इन्द्रस्तु राज्ञो हिरण्यकशिपोर्भार्यां मम मातरमग्रहीत् ॥ ६ ॥

तामिन्द्रेण नीयमानामत एव भयोद्विग्नां कम्पितां कुररीमिव क्रन्दन्तीं रुदतीं देवर्षिर्नारदो यदृच्छयोपगतः पथि ददर्श प्राह च ॥ ७ ॥

तदेवाह—हे सुरपते ! अनागसं निरपराधामेनां नेतुं त्वं नार्हसि अतो हे महाभाग ! परेणाऽन्येन हिरण्यकशिपुना परिगृहीतां परदारानित्यर्थ', मुञ्च मुञ्च ॥ ८ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

श्रुतेषु सत्सु साधनानां भक्तेरेव प्राधान्यं हरेर्मुख्यप्रसादजनकत्वाद्भक्तिरेव पुरुषेणापाद्येत्यादिकं निरूप्यतेऽस्मिन्नध्याये, भक्तिप्रतिपादनात्मकत्वादस्य शास्त्रस्य पुनः पुनस्तत्प्रतिपादनान्न पुनरुक्तिशङ्का कार्या तत्र दैत्यपुत्रैः पृष्टः प्रह्लादः किं चकारेति युधिष्ठिरशङ्कान्वितस्तां परिहरन्नारद आह—नारद इति। नारदस्य ममाऽनुशासनम् ॥ १ ॥ २ ॥

अहिः सर्पः पिपीलिकैर्यथा भक्ष्यते तथा लोकोपतापनः पापो हिरण्यकशिपुः स्वपापेनाऽभक्षि नष्टप्रायोभूत् दिष्ट्या सुखमस्तु लोकार्थमिति ब्रुवाणाः "दिष्ट्या शमुपजोषञ्च" इत्यमरः ॥ ३—५ ॥

व्यलुम्पन् जयकांक्षिणो जितयुद्धाः असुरजयेन प्रकाशमानाः ॥ ६ ॥ ७ ॥

तवोपभोक्तुं योग्या न भवतीत्याह—परपरिग्रहमिति ॥ ८ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

॥ १—९ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

सप्तमे नारदात् प्राप यज्ज्ञानं मातृगर्भगः ।
तदेवोपादिशद् बालान् भक्तिं प्रेम च तत्फलम् ॥

॥ १—५ ॥

राज्ञो हिरण्यकशिपोः शिबिरं आवास व्यलुंपन् सर्वस्वापहारेण नाशितवन्तः ॥ ६—८ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

तद्विश्वासकारणं सप्तमे वर्ण्यते एवमुक्तरीत्या ॥ १ ॥

तपसे तपःकर्तुं मन्दराचलमस्माकं पितरि हिरण्यकशिपौ प्रस्थिते सति तत्रापि पिपीलिकैर्भक्षिते सति तदा बालवादयः पिपीलिकैरहिरिव लोकोपतापनः पापः पापेन अभक्षि अक्षित इति वदन्तो दानवान् प्रति युद्धोद्यमं चक्रुरिति द्वयोरन्वयः ॥ २ ॥ ३ ॥

अतिबलेन उद्योगं यत्नम् ॥ ४ ॥

नावेक्षमाणाः तत्प्रतीक्षामकुर्वाणाः ॥ ५ ॥

राजशिबिरं राजस्थानम् व्यलुम्पन् सर्वस्वापहारेण शून्यं कृतवन्तः ॥ ६ ॥

यदृच्छया भाग्यवशात् ॥ ७ ॥

परपरिगृहं परदारान् अनागसं नास्त्यागोऽपराधो यस्यास्ताम् एनां नेतुं मार्हसीति प्राह, ॥ ८ ॥

---

भाषा टीका ।

श्रीरुक्मिणीकान्ताय नमः ।

नारद उवाच ॥

नारदजी बोले, कि—इस प्रकार दैत्य पुत्रों ने महा भागवत प्रह्लाद को जब पूंछा तब प्रह्लाद विस्मय को प्राप्त होनेवाले दैत्यपुत्रों के प्रति मेरे भाषण का स्मरण करता हुआ बोला ॥ १ ॥

प्रह्लाद उवाच ।

प्रह्लाद बोला, कि हमारे पिता जब तप के लिये मन्दराचल

इन्द्र उवाच ।

आस्तेऽस्या जठरे वीर्यमविषह्यं सुरद्विषः ।
आस्यतां यावत्प्रसवं मोक्ष्येऽर्थपदवींगतः ॥ ९ ॥

नारद उवाच ।

अयं निष्किल्बिषः साक्षान्महाभगवतो महान् ।
त्वया न प्राप्स्यते संस्थामनन्तानुचरो बली ॥ १० ॥
इत्युक्तस्तां विहायेन्द्रो देवर्षेर्मानयन्वचः ।
अनन्तप्रियभक्त्यैनां परिक्रम्य दिवं ययौ ॥ ११ ॥
ततो नो मातरमृषिः समानीय निजाश्रमम् ।
आश्वास्येहोष्यतां वत्से ! यावत्ते भर्तुरागमः ॥ १२ ॥
तथेत्यवात्सीद्देवर्षेरन्ति साऽप्यकुतोभया ।
यावद्दैत्यपतिर्घोरात्तपसो न न्यवर्त्तत ॥ १३ ॥
ऋषिं पर्यचरत्तत्र भक्त्या परमया सती ।
अन्तर्वत्नी स्वगर्भस्य क्षेमायेच्छाप्रसूतये ॥ १४ ॥
ऋषिः कारुणिकस्तस्याः प्रादादुभयमीश्वरः ।
धर्मस्य तत्त्वं ज्ञानं च मामप्युद्दिश्य निर्म्मलम् ॥ १५ ॥
तत्तु कालस्य दीर्घत्वात् स्त्रीत्वान्मातुस्तिरोदधे ।
ऋषिणानुगृहीतं मां नाधुनाऽप्यजहात्स्मृतिः ॥ १६ ॥

भाषा टीका ।

को गये, तब देवताओं ने दानवों के प्रति युद्ध का बड़ा उद्यम किया ॥ २ ॥

और देवता लोग बोले, कि-भला भया सब लोकों को दुःख देने वाले पापी को उसी के पाप से सर्प के नाई पिपीलिकाओं ने भक्षण करलिया ॥ ३ ॥

देवताओं की सेना का उद्योग देखकर असुर यूथप लोग भी भयभीत होकर ताडित हुए २ अपने २ स्त्री पुत्र मित्र आप्त लोकों को तथा गृह पशु और उपकरणादि को न देख कर बड़ी जल्दी सब दिशाओं को प्राण लेकर भाग गये ॥४-५॥

जीत की इच्छा वाले देवता लोगों ने भी राजा के निवास स्थान का भङ्ग कर दिया, और इन्द्र ने राजमहिषी मेरी माता को ग्रहण कर लिया ॥ ६ ॥

तब भय से उद्विग्न कुररी ( पक्षिणी ) के तरह रोनेवाली मेरी माता को इन्द्र ले चला, इतने में अकस्मात् उस मार्ग में आए हुए नारदजी दिखाई पड़े ॥ ७ ॥

और नारद जी बोले, भी कि-हे सुरपते ! हे महाभाग ! तुम इस बिचारी निरपराधिनी पराई स्त्री को लेजाने के योग्य नहीं हो, इस बिचारी सती को छोडो २ ॥ ८ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

अविषह्यं दुःसहम् अतोऽनया प्रसवपर्यन्तमत्रास्यताम् ततअर्थस्य पदवीं मार्गं गतः प्राप्तः सन् जातं पुत्रं हत्वा मोक्ष्यामीत्यर्थः ॥ ९ ॥

साक्षात्स्वगुणैरेव महान् तु पित्रादिसम्बन्धात् त्वया हेतुभूतेन संस्थां मृत्युं न प्राप्स्यति तत्र हेतवो निष्किल्बिष इत्यादयः ॥ १० ॥

अनन्तस्य प्रियो योऽहं स वा प्रियो यस्य तस्य मम भक्त्या एतां प्रदक्षिणीकृत्य ॥ ११ ॥

इहोष्यतामित्याहेति शेषः ॥ १२ ॥

अन्ति समीपे ॥ १३ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

अन्तर्वत्नी गर्भिणी इच्छया भर्तुरागमनानन्तरं प्रसूतये प्रसवाय स्वगर्भस्य क्षेमाय ॥ १४ ॥

तस्याः शोकशान्त्यै धर्मस्य तत्त्वं भक्तिलक्षणम् ज्ञानमात्मानात्मविवेकस्तदुभयं प्रादात् ईश्वरः समर्थः ॥ १५ ॥ १६ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

इत्युक्त आहेन्द्रः-आस्त इति। अस्याः जठरे कुलिशाविपह्यस्समासिः सौकुमारकं सुरद्विषो हिरण्यकशिपोः वीर्यं गर्भरूपेण वर्द्धमानमास्ते तिष्ठत्यतोऽनया प्रसवपर्यन्तमास्यताम् मत्समीपे स्थीयतां ततस्तस्य पत्नीं मार्गे गतस्सन् मोक्ष्ये जातं पुत्रं हत्वा एतां त्यजामीत्यर्थः ॥ ९ ॥

एवमुक्तो देवर्षिराह-अयमिति। सोयं गर्भस्थः शिशुस्त्वया हन्तुं संस्थां मरणं न प्राप्स्यते. तत्र हेतुं वदन् तमिमं विशिनष्टि, निष्किल्बिषः सत्याशिविनिवृत्तप्राचीनकिल्बिषरहितः. तत्कुतः? महाभागवतः भगवद्भक्तत्वेन ध्वस्तकिल्बिष इति भावः। महान् गुणैः श्रेष्ठः अनन्तस्य भगवतोऽनुचरः बली महाबलसम्पन्नः यद्यपि गर्भस्थस्यास्य स्वानुग्रहात्पूर्वं न भागवतत्वादयो धर्मास्तथापि तदनन्तरमेव स्वेनानुग्रहीष्यमाणस्य पुनर्जन्मकाले "कर्माणि हि कुर्वन्नपि" इत्युक्तरीत्या भगवतोऽस्यानुग्रहस्य उक्तधर्मात्मा स्यादिति तेषु निष्किल्बिषत्वादीनि विशेषणान्युक्तानि। ननु, इन्द्रेण मुक्तायां स्त्रियां ओदरस्थो जाते तद्गर्भस्थस्योक्तधर्मवत्त्वोक्तिः तत्र तद्धर्मवत्त्वं हि तद्धेतुकत्वस्याग इतीतरेतराश्रयत्वमिति कथं देवर्षिणैवमुक्तमिति चेन्नैवं गर्भस्थं नितरामीश्वरकटाक्षविदयमत एव——

"ईश्वरस्य च सौहार्दं यदृच्छा सुकृतं तथा ।
विष्णोः कटाक्षमद्वेष आनुकूल्यं च सात्त्विके ॥
संभाषणं षडेतानि ह्याचार्यप्राप्तिहेतवः." ।

इत्युक्तहेतुषट्कसम्पन्नं दैवज्ञो देवर्षिरालक्ष्य त्वयैतस्यामनुकम्पमानायामस्यहमुक्तधर्मयुक्तं नूनं करवाणीयतोऽयं त्वया संस्थां न प्राप्स्यतीत्युक्तवानिति नेतरेतराश्रय. ॥ १० ॥

इत्येवमुक्त इन्द्रो देवर्षेर्नारदस्य वचो मानयन् गौरवादभ्युपगच्छन् तां राजमहिषीं विहाय अनन्तस्य भगवतः प्रियो योऽहं तस्य मम भक्त्या एनां मन्मातरं परिक्रम्य प्रदक्षिणीकृत्य दिवं प्रति ययौ ॥ ११ ॥

ततः ऋषिर्नारदः मम मातरं स्वाश्रमंप्रति समानीय सत्यगिरा सान्त्वनेन उज्जीव समाश्वास्य सांत्वयित्वा हे वत्से, बाले! तव भर्तुर्यावदागमः तावत्पर्यन्तं त्वया इहास्मिन्मदाश्रमे उष्यतां स्थीयतामित्युवाचेति शेष' ॥ १२ ॥

, तत्तथेत्यङ्गीकृत्य सा मन्माता देवर्षेरन्तिके समीपे नास्ति कुतोऽपि भयं यस्यास्तादृशी अवात्सीदुषितवती ॥ दैत्यपतिरुग्रात्तपसो यावन्न्यवर्तत तावत्सती मन्माता अन्तर्वत्नी गर्भिणी स्वगर्भस्य क्षेमाय स्वकीयेच्छया स्वभर्तुरागमनानन्तरं प्रसूतये च परमया भक्त्या ऋषिं नारदं पर्यचरत् शुश्रूषितवती ॥ १३ ॥ १४ ॥

ततस्तां देवर्षिरनुजग्राहेत्याह-ऋषिरिति। ईश्वरः समर्थ ऋषिः तस्या. परिचरन्त्याः मन्मातुर्मामप्युद्दिश्य निर्मलं धर्मस्य तत्त्वं ज्ञानञ्चोभयं प्रादात् धर्मो भगवद्भक्तियोगलक्षण. तस्य तत्त्वं याथात्म्यं तदङ्गभूतं ज्ञानं देहादिविविक्तप्रत्यगात्मयाथात्म्यज्ञानं च प्रादात् उपदिष्टवान् इत्यर्थः ॥ १५ ॥

तदुपायायामुपदिष्टं तदुभयं मम मातुः स्त्रीत्वात् कालस्य दीर्घत्वाच्च तिरोदधे, विस्मृतमभूदित्यर्थः। ऋषिणा भगवता नारदेनाऽनुगृहीतं मां तु सा स्मृतिस्तदुपदेशजनितं स्मृत्यात्मकं ज्ञानमधुनापि नाजहात् न तत्याज ॥ १६ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

सुरद्विषो हिरण्यकशिपोर्वीर्यं रेतोलक्षणम् अस्या यावत्प्रसवः तावन्मम वशे आस्यतां पश्चादहं मोक्ष्ये तत पूर्वं कस्मान्मुञ्चसीति तत्राह, अयंपदवीमिति ॥ ९ ॥

अनया प्रसूत. पुत्रो हन्तुं त्वया न शक्यत इत्याह, न त्वयेति। संस्था मरणं कुतोऽत्राह, अनन्तेति ॥ १० ॥

अनन्तप्रियः श्रीनारायणो अस्य भक्त्या अनन्तस्य हरेः प्रिया बहुमानलक्षणा भक्तिरनन्तप्रिया भक्तिस्तया वा ॥ ११ ॥

तावदत्रोष्यतामित्याह—यावदिति ॥ १२ ॥

अन्त्यान्तिके ॥ १३ ॥

अन्तर्वत्नी गर्भिणी ॥ १४ ॥

गर्भक्षेममिच्छाप्रसवक्षेत्युभयम्. ईश्वरो वरप्रदानसमर्थः नारदात्कृतमित्यनेन नारदस्य यद्गुरुत्वमभिप्रेतमेवं विवक्षमित्याह-धर्मस्येति। धर्मस्य हरेर्भागवतसंज्ञस्य वा तत्त्वं तदुभयविधज्ञानं च यद्गर्भस्थं मामुद्दिश्य मात्रे उपदिष्टम् ॥ १५ ॥

तदुभयं तयोः कालस्यातिक्रान्तत्वात् स्त्रीत्वात् बाल्यादिनिपतितत्वाच्च मातुस्तिरोहितमभूदित्यन्वयः "अशुरेपधर्मः" इति श्रुतिः। धर्मो हरिस्ततस्तत्र किमभूदिति तत्राह, ऋषिणेति ॥१६॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

अनन्तानुचर इति । तस्य पूर्वत एव भक्तिसंस्कारो दर्शितः ॥ १०—१४ ॥

ऋषिरिति। शोकमात्रशान्त्यै धर्मस्य तत्त्वं साधारणस्वरूपं ज्ञानञ्चात्मविषयं प्रादात् तत्रैव मामप्युद्दिश्य निर्मलं यद्धर्मस्यैतस्य तत्त्वं भागवताख्यम् "न शोभते ज्ञानमलं निरञ्जनम्" इति न्यायेन ज्ञानञ्च यत्तदात्मकं तत प्रादात् तत्कथने तत्तदपि प्रतिपादितवान्। किन्तु सा गृहीतुं न शशाकेति भावः ॥ १५ ॥

भवतामपि भूयान्मे यदि श्रद्दधते वचः।
वैशारदी धीः श्रद्धातः स्त्रीबालानां च मे यथा ॥ १७ ॥
जन्माद्याः षडिमे भावा दृष्टा देहस्य नात्मनः।
फलानामिव वृक्षस्य कालेनेश्वरमूर्तिना ॥ १८ ॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

तस्त्विति तदपीत्यर्थः। तेनैव स्वनाम्नि श्रीनारदस्य सम्यगनुग्रहो नाभूदिति व्यञ्जितम् ॥ १६—१७ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

आस्यतां मत्कारागार एव प्रसवपर्य्यन्तमनया स्थीयतां प्रसवपर्यवसानं स्वार्थमार्गं गतः प्राप्तस्तत्र मोक्ष्ये जातं पुत्रं हत्वा इमां मोक्ष्यामीत्यर्थः ॥ ९ ॥

त्वया हेतुभूतेन संस्थां मृत्युम् ॥ १० ॥

अनन्तप्रिये मयि या भक्तिस्तया हेतुना परिक्रम्य एतद्गर्भस्थाय हरेर्भक्ताय नम इति प्रणम्य च ॥ ११ ॥ १२ ॥

अन्ति अन्तिके ॥ १३ ॥

भर्तुरागमनानन्तरमेव वा इच्छया प्रसूतिर्भवत्वे ॥ १४ ॥

उभयं गर्भस्थं स्वेच्छाप्रसवं च निर्मलमिति विशेषणात् धर्मस्य तत्त्वं भक्तियोगं भागवतलक्षणं ज्ञानञ्च मातापित्रादिकारेण मन्मातरमपि ॥ १५ ॥

नहि मातुस्ते भक्तिः कथं न दृश्यत इत्यत आह—तत्त्विति। तथापि बालत्वात् कालदैर्घ्याच्च कथं न निरोदधे तत्राह, स्त्रीत्वेति। तेन मन्मातुस्तत्रनुगृहीतत्वाभावात् स्त्रीत्वकालदैर्घ्ये तत्र प्राभूतामिति भावः ॥ १६ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

सुरद्विषो हिरण्यकशिपोः। अविषह्यं दुस्सहं वीर्यमस्याः जठरे आस्ते अतः अनया यावत्प्रसवपर्यन्तं ततश्चार्थपदवीं गतस्तमविषह्यं हत्वा एनां मोक्ष्ये ॥ ९ ॥

यतोऽयमनन्तानुचरः अतो महान्बली साक्षान्महाभागवतः अतस्त्वया संस्थां न प्राप्स्यते ॥ १० ॥

अनन्तप्रियस्य मम भक्त्या एनां परिक्रम्य तां तथाभूतां सत्कृतां विहाय ययौ ॥ ११ ॥

इहाश्रमे आश्रमे त्वयाऽपत्यां स्थीयताम् ॥ १२ ॥

नास्ति कुतोऽपि भयं यस्याः सा अन्ति निकटे ॥ १३ ॥

इच्छया स्वच्छन्देन प्रसूतये तत्रापि गर्भस्य क्षेमाय ॥ १४ ॥

धर्मस्य हरिभक्तेस्तत्त्वं याथात्म्यं तत्साधनं हरिज्ञानञ्चेत्युभयं मामप्युद्दिश्य तस्याः प्रादात् ॥ १५ ॥

तत्तु तदुभयं तिरोदधे सूक्ष्मतां जातम् ॥ १६ ॥

---

भाषा टीका।

इन्द्र उवाच ॥

इन्द्र बोला, कि—इसके जठर मे सुरद्वेषी हिरण्यकशिपु का असह्य वीर्य है, इस लिये जब तक इसके संतान पैदा होगी तब तक रहने दीजिये पीछे उत्पन्न हुए पुत्र को मार कर इसे छोड दूंगा ॥ ९ ॥

नारद उवाच ॥

नारदजी बोले, कि—इसके गर्भ मे जो बालक है वह निष्पाप है और साक्षात् महा भागवत है वह तेरे से नहीं मरेगा, क्योंकि ? वह अनन्त भगवान का अनुचर है और बली है ॥ १० ॥

ऐसे जब कहा तब देवर्षि का वाक्य मान कर मेरी मा को छोडकर मुझे अनंत प्रियजान मेरी भक्ति से माता की परिक्रमा कर स्वर्ग को चला गया ॥ ११ ॥

तत्पश्चात् ऋषि मेरी माता को अपने आश्रम में लाकर आश्वासन कर बोले, कि—हे वत्से! जबतक तुमारा पति न आवे तब तक यहा निवास करो ॥ १२ ॥

ठीकहै, ऐसा कहकर मेरी माताभी जबतक दैत्यपति घोरतप से नहीं निवृत्त हुआ तबतक ऋषिके आश्रममे निर्भय होकर रही ॥ १३ ॥

उस आश्रम में गर्भवती सती मेरी माता अपने भर्ता के आगमन के अनंतर प्रसव की इच्छा से ऋषि की परिचर्या करने लगी ॥ १४ ॥

परम दयालु समर्थ ऋषि श्रीनारदजी ने उसकी शोक शांति के लिये मेरे उद्देश्य करके भक्ति और ज्ञान दोनो दिये ॥ १५ ॥

बहुत कालहोने से वह स्त्री के कारण मेरी माता को भूलगया ऋषि के अनुग्रह से मुझ को अबपर्यंत भी नहीं भूला ॥ १६ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका।

भूयाद्भवेत् वैशारदी स्वार्थे तद्धितः देहाद्यहङ्कारच्छेदनिपुणेत्यर्थः ॥ १७ ॥

आत्मा नित्योऽव्ययः शुद्ध एकः क्षेत्रज्ञ आश्रयः ।
अविक्रियः[1] स्वदृग्घेतुर्व्यापकोऽसङ्ग्यनावृतः ॥ १९ ॥
एतैर्द्वादशभिर्विद्वानात्मनो लक्षणैः परैः ।
अहम्ममेत्यसद्भावं देहादौ मोहजं त्यजेत् ॥ २० ॥
स्वर्णं यथा ग्रावसु हेमकारः क्षेत्रेषु योगैस्तदभिज्ञ आप्नुयात् ।
क्षेत्रेषु देहेषु तथात्मयोगैरध्यात्मविद्ब्रह्मगतिं लभेत ॥ २१ ॥
अष्टौ प्रकृतयः प्रोक्तास्त्रय एव हि तद्गुणाः ।
विकाराः षोडशाचार्यैः पुमानेकः समन्वयात् ॥ २२ ॥
देहस्तु सर्वसङ्घातो जगत्तस्थुरिति द्विधा ।
अत्रैव मृग्यः पुरुषो नेति नेतीत्यतत्त्यजन् ॥ २३ ॥
अन्वयव्यतिरेकेण विवेकेनोशताऽऽत्मना ।
सर्गस्थानसमाम्नायैर्विमृशद्भिरसत्वरैः ॥ २४ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

काऽसौ वैशारदी धीरित्यपेक्षायां नारदोक्तमेव देहात्मविवेकप्रकारमाह—जन्मेति द्वाभ्याम् । जन्माद्या जायते अस्ति वर्धते विपरिणमतेऽपक्षीयते नश्यतीत्येवंभूता इमे षड्भावविकारा वृक्षे सत्येव यथा फलानां दृश्यन्ते तद्वदात्मनि तथैव स्थिते देहस्य दृष्टा इत्यर्थः. ईश्वरी विकारसमर्था मूर्तिर्यस्य तेन ॥ १८ ॥

तदेवं देहधर्मैस्तद्वैलक्षण्येनात्मनो देहाद्भेदो दर्शित इदानीमात्मधर्मैरेव भेदं स्फुटयंस्तदहङ्कारादिकं त्याजयति—आत्मेति । आत्मा नित्यः "अविनाशी वारेऽयमात्मा" इति श्रुतेः, अव्ययोऽपक्षयशून्यः "ऋचो अक्षरे परमे व्योमन्" इति श्रुतेः, शुद्धः "निरवद्यं निरञ्जनम्" इतिश्रुतेः, एकः "एकमेवाद्वितीयम्" इति श्रुतेः, क्षेत्रज्ञः "विज्ञातारमरे केन विजानीयात्" इति श्रुतेः, आश्रयः "यस्मिन्द्यौः पृथिवी चान्तरिक्षम्" इतिश्रुतेः, अविक्रियः "निष्कलं निष्क्रियं शान्तम्" इतिश्रुतेः, स्वदृक् "आत्मज्योतिः सम्राडिति होवाच" इति श्रुतेः, हेतुः "स इमाँल्लोकानसृजत" इतिश्रुतेः, व्यापकः "सत्यं ज्ञानमनन्तम्" इतिश्रुतेः, असङ्गी "असङ्गो ह्ययं पुरुषः" इति श्रुतेः, अनावृतः "पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते" इति श्रुतेः ॥ १९ ॥

एतैर्द्वादशभिरात्मनो लक्षणैः परैः श्रेष्ठैर्विवेकसमर्थैर्देहादिभेदं विद्वानसद्भावं मिथ्याबुद्धिं त्यजेत् ॥ २० ॥

नन्वेवं विविक्तात्मज्ञानिनोऽप्यपरोक्षानुभवेन ब्रह्मताप्राप्तिः कथं कथं वाऽतोऽहङ्कारादिकं त्यजेदित्यपेक्षायां तत्प्राप्तिप्रकारं सदृष्टान्तमाह—स्वर्णाकरक्षेत्रेषु स्फुरत्स्वर्णकणेषु ग्रावसु योगैर्धमाद्युपायैस्तदभिज्ञ उपायाऽभिज्ञो हेमकारो यथा स्वर्णं प्राप्नुयात् । आत्मयोगैरात्मप्राप्त्युपायैः ब्रह्मगतिं ब्रह्मताम् अध्यात्मविदात्माधिकृतकार्यकारणसंघातज्ञाता ॥ २१ ॥

अध्यात्मविवेकमात्मप्राप्त्युपायमाह—अष्टाविति त्रिभिः । मूलप्रकृतिर्महदहङ्कारौ पञ्चतन्मात्राणि चेत्यष्टौ, त्रयः सत्त्वादयस्ते च प्रकृतिगुणा एव, न तु भिन्नाः, एकादशेन्द्रियाणि पञ्च महाभूतानि चेति षोडश पुमानात्मा एकः प्रोक्तः कपिलादिभिराचार्यैः । एकत्वे हेतुः, एषु साक्षित्वेनान्वयात्. तदुक्तम् "मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयः सप्त । षोडशकस्तु विकारो न प्रकृतिर्न विकृतिः पुरुषः" इति ॥ २२ ॥

जगज्जङ्गमम् तस्थु स्थावरम् अत्रैव सर्वसङ्घातात्मके देह एव पुरुषो मृग्योऽन्वेष्टव्यः सुशकश्चेत्याह, नेतिनेतीत्यन्यापोहे क्रियमाणे स्वयमेवातत्त्यजन् अनात्मवर्गात्पृथगुपलभ्यमान इत्यर्थः ॥ २३ ॥

मणिषु सूत्रमिव सर्वत्रानुस्यूतत्वेनान्वयः अत एव मणिभ्यः सूत्रस्येवैकव्यतिरेकश्च तयोर्द्वैविध्यम्, तेन यो विवेकः पूर्वोक्तो वा तेन उशता शुद्धेनात्मना मनसा सर्गस्थानसमाम्नायैः सृष्टिस्थिति संहारैः "यतो वा इमानि भूतानि जायन्ते" इत्यादिश्रुत्युक्तसर्गाद्यनुसन्धानेनेत्यर्थः । विमृशद्भिर्विचारयद्भिः असत्वरैरव्यग्रैर्मृग्य इति पूर्वेणान्वयः ॥ २४ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तदेवम् "प्रह्लाद त्वम्" इत्यादिना यद्दैत्यकुमारैः पृष्टं तस्योत्तरमुक्तम्, अथैतत्सत्संप्रदायागतधर्मस्वरूपज्ञानजिघृक्षा वर्तते चेद्भवतां मदनुग्रहेण तदुभयं सम्पत्स्यत इत्याह—भवतामिति । यदि भवन्तो मद्वचः श्रद्दधते मदुक्तार्थग्रहणतद्दृढीकारविषयं त्वरायुक्ताश्चेद्भवतामपि तदुभयं भूयात् श्रद्धामन्तरेणोपदिष्टमपि तत्त्वम्,

(१) स्वदृग्घेतुः इति विजयध्वजपाठः ।

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

अव्यक्तविधिभिः पुंभिरात्मा मृग्य इतिपूर्वेणान्वयः "सन्मूलाः सोम्येमाः सर्वाः प्रजाः" इत्यादि सर्गस्थानादिसमाम्नायार्थानुसन्धानैरित्युक्तेभ्योऽन्वेद्धात्मविज्ञानोपायाः परमात्मशेषत्वतच्छरीरत्वाद्योऽवगता भवन्तीत्यभिप्रायेण सर्गस्थानसमाम्नायैरित्युक्तम् ॥ २४ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

ततोऽस्माकं किं प्रयोजनमिति तत्राह—भवतामपीति । यथा मे वैशारदी धीः भगवद्विषयज्ञानमभूत्तथा तर्हि भवतामपि भूयादित्यन्वयः । न केवलं युष्माकमेव, स्त्रीणां बालानाञ्च श्रद्धातस्तत्स्यादित्याह—श्रद्धात इति । यदि स्त्रीबालानां श्रद्धास्यादतस्तर्हि तेषामिति ॥ १७ ॥

प्रह्लादस्तेषां स्ववचसि श्रद्धामुत्पाद्य नारदोक्तं ज्ञानमुपदिशति—जन्माद्या इति । "जातः कंसवधार्थाय भूभारहरणाय च" "जनितो तद्विष्णोः" इत्यादिषु हरेर्जन्मादिकं प्रतीयते तत्र जन्मादिमतो हरेरिवदद्दृष्टतशरीरस्य तच्छरीरयोग्यभोगप्राप्त्या व्याकुलचित्तस्य सर्वमन्तर्यामितया फलदानं कथं घटत इत्यादि शङ्कां दैत्यपुत्रचित्तस्थां परिहर्तुमिच्छतो वाह—जन्माद्या इति । इमे षड्भावा जन्मास्तिवृद्धिपरिणामापक्षयविनाशाख्यविकारा देहस्य दृष्टाः प्रत्यक्षेण प्रमिता आत्मनः परमात्मनो न सन्तीत्यन्वयः "षड्विकाराः शरीरस्य न विष्णोस्तद्वतस्य तु" इत्यनेन निरस्तत्वात् । दृष्टा इत्युक्तं स्पष्टयति, फलानामिति । वनस्पत्यादीनाम् विशेषेण कालेन वृक्षस्य चूतादिफलानां जन्मादिकं दृश्यते यथा वृक्षस्य कालाधीनत्वं तथा देहस्येश्वराधीनत्वमिति ज्ञापनायेश्वरमूर्तिरित्युक्तं देवदत्तस्य सर्वमिदमस्मदधीनमिति मिथ्याज्ञाननिरासायोक्तमिदं मत्स्वमिति ज्ञातव्यं तदुक्तम् "तदधीनं शरीरं च ज्ञात्वा तन्ममतां त्यजेत्" इति ॥ १८ ॥

"क्षेत्रज्ञः पुरुषो ह्यात्मा संसारी चेतनो मतः" इत्युक्तेरात्मा जीवः किं तस्यादिन्यतमत्वान्नैकलक्षणमाह—आत्मेति । परैरव्याप्त्यादिदोषरहितैरैद्वादशभिरात्मनो हरेर्लक्षणैः स्वरूपभूतैरुपेत इति, विद्वानहं ममेत्यन्याभमतत्वं मोहजमज्ञानजं देहादौ त्यजेदित्यन्वयः । नित्यः स्वरूपतो विनाशरहितः अव्ययः अद्वितीयो नास्तीत्यन्वयः प्रकृतिनिर्मितशरीरत्वेनाविद्यारागादिदोषविधुरत्वाच्छुद्धः एको मुख्यः मुख्यत्वं हरेरेव स्वरूपज्ञानेन क्षेत्राख्यशरीरज्ञातृत्वात् स क्षेत्रज्ञः आश्रय उपजीव्यः अविक्रियः स्वतः परतो वा परिणामरहितः स्वात्मानं स्वयमेव पश्यतीति स्वदृक् "तद्ब्रह्मवेदाहंब्रह्मास्मि" इतिश्रुतिबलयोऽपराधीनः स्वतन्त्र इति यावत् वशं यापयति सर्वमितिवा व्यापकोऽन्तर्बहिरितिशेषः "आकाशो नीलिमोदे" तिश्रुतेः भूताकाशस्य परिच्छिन्नत्वादव्याकृतस्य चित्प्रकृत्यात्मकत्वेन भगवदनुगृहीतत्वेन तस्याव्यापकत्वमुपचरितमनेनेति मन्तव्येव व्यापकः अप्राकृतत्वादसङ्गी "असङ्गोह्ययं पुरुषः" इति श्रुतेः । अनावृतो ज्ञानावरणरहितः एवंविधलक्षणोपेतस्य विष्णोः सर्वहेतुत्वाच्छरीरस्य तदधीनत्वेन तस्मिन्देहे ममतां त्यजेदित्यर्थः ॥ १९—२० ॥

हरेर्देहादिभ्यो विविक्तत्वेन ज्ञानोत्पत्तिप्रकारं वक्ति—हेममिति । यथा हेमकारो ग्रावसु क्षेत्रेषु निकषाश्मसु स्थानेषु हेमकारः क्षेत्रेषु हेमवत्सु पाषाणेषु वा योगैर्हेमावाप्त्युपायैः कषणाध्मानादिपरीक्षाचन्द्रौ हेमप्राप्नुयादित्यन्वयः न सर्वस्य सुशकमित्यतउक्तं तद्भिज्ञ इति तथा मुमुक्षुः पुरुष आत्मयोगैरौत्पत्तिकभक्त्याद्युपायैः देहेषु क्षेत्रेषु सम्यगालोच्य विविच्य ब्रह्मगतिं लभेत देहादिभ्यो वैलक्षण्येन ब्रह्मविषयज्ञानमाप्नोतीत्यन्वयः कोसावधिकारीत्यत उक्तम् अध्यात्मविदिति । "तरति शोकमात्मवित्" इति श्रुतेः । आत्मानमधिकृत्य वर्तमानं वेदान्तशास्त्रमध्यात्मं तद्वेत्ति सम्यग्जानातीति सात्त्विकादिस्वभावोऽध्यात्मं तद्वेत्तीति वा महाभूतादिर्वाऽध्यात्मं तद्वेत्तीति अध्यात्मवित् ॥ २१ ॥

कानि महाभूतादीनीति तत्राह—अष्टाविति । मूलप्रकृतिर्महदादयः * सप्तैवमष्टौ प्रकृतयः सत्त्वादिगुणानां प्रकृतावन्तर्भावसम्भवेनाष्टत्वं युक्तमितिभावेनाह, त्रय एवेति । तस्याः प्रकृतेर्गुणास्तद्गुणाः प्रकृतिजत्वाद्विकाराश्च तद्ग्रहणेन गृहीता इति नाष्टत्वासम्भव इत्याशयेनाह, विकारा इति । मनसा श्रोत्रादशेन्द्रियाणि शब्दादिविषयाश्चेति विकाराः षोडशेति पूर्वाचार्यैः, उक्ता इति शेषः । शरीरेष्वनुगतत्वेन विकारत्वसम्भवाद्दैतैः सह किं न पठित इति तत्राह, पुमानिति । समन्वयादिति स्पष्टोऽयं समन्वयमनुगतं प्रत्येकः पुमान्नारायण एव केवलं शुद्धत्वतो विकारेषु न पठित इत्यर्थः । अत्रेदं तात्पर्यमनुसन्धेयं यथाहि, अभिमन्यमानजडापेक्षया पुमान् जीवः एकोनिरोधिरामत्वविपक्षया विष्णुः षड्विंश इति सम्यग्ज्ञेयो हरिः स्मृतः जडत्वेन अनुगतिज्ञातव्येव इति तदुक्तम्—

"अभिमान्यपेक्षया विष्णुः षड्विंश इति स्मृतः ।
जडव्यपेक्षया जीवः सम्यग्ज्ञेयो हरिः स्मृतः" ॥ इति

अष्टा आकाशादिपञ्चभूतानि सत्त्वादित्रयोगुणा इत्यष्टौ प्रकृतयः तत्र मूलप्रकृतिमहदहङ्काराणामाकाशादिष्वनुगतत्वे पृथग्ग्रहणं न क्रियते गुणानां तदात्मकत्वेन गुणग्रहणेन तद्ग्रहणोपपत्तेः शेषंपूर्ववत् ॥ २२ ॥

तत्त्वसंख्याकथनेन प्रकृते किमायातमिति तत्राह—देहस्त्विति । सर्वेषां प्रकृतितत्कार्याणां सङ्घातः समूहः समन्वितः इत्यागः तत्त्वेभ्योऽधरदभिमानिभ्यो विविच्य परमात्मा ज्ञातव्य इत्यभिप्रायेण तत्त्वसंख्यानं कृतमिति भावः अर्थं दर्शयति, तुशब्देन देहशब्देन प्रपञ्चो विवक्षित इति कृत्वा तं द्वेधा विभजति, जगदिति । जगच्छब्दो द्विरावृत्त्या व्याख्येयः तथाहि जगत्समस्तं जगज्जङ्गमं तस्थु स्थावरमिति द्विधा विभक्तं कि चान इत्यत आह—अत्रेति । ततत्वाद्यद्वा तत्र भवतीत्यतः प्रकृत्यादिकं त्यजन् हित्वा स्वतः सर्वदा भिन्न इत्यर्थः । पुरुषः पूर्णः षड्गुणोऽत्रैव देहलक्षणे प्रपञ्चे मृग्योऽन्वेषणीयो विचार्यो ज्ञातव्य इति यावत् । शतृप्रत्ययेन सदा प्रकृत्यादित्यागो न कादाचित्क इति च सूचयति, तत्र किं प्रमाणमिति तत्राह—नेति । "स एष नेतिनेतीत्यात्मा" इति श्रुतिः प्रमाणमित्यर्थः । योऽतत्त्वजस्तद्वपुस्तत्त्वजस्तेनेति वा अतत्त्वजतीत्यतत्त्वकृत् तेनातत्त्वजेति वा पाठः ॥ २३ ॥

---

* महत्तत्त्वाहङ्कारतत्त्वपञ्चमहाभूतानि ।

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

कया युक्त्या मृग्यत इति तत्राह–अन्वयेति । अन्वययुक्तव्यतिरेकेण यत्र यत्र जगत्तत्र तत्र ब्रह्मेत्यन्वयः यत्र यत्र ब्रह्म न तत्र तत्र जगदपरिच्छिन्नत्वादिव्यतिरेकलक्षणयुक्त्याऽऽकाशवत् जगदन्वितत्वेन यदेतदसम्मलक्षणापृथक्त्वेन वेति युक्त्या निश्चितेन विवेकेनागमेन युक्तेनात्मना मनसा, ननु, व्याप्तिग्राहकप्रमाणाभावेनाभासत्वान्नव्याप्तिनिर्णयो न स्यादिति तत्राह—सर्गेति । अत्र सर्गस्थानाभ्यां संहारादिकमुपलक्ष्यते न सहिता स्वरा उच्यते असत्स्वरास्तैः "सर्वेस्वरा घोषवन्तो बलवन्तो वक्तव्या इन्द्रो बलं ददातीति सर्वे ऊष्माणो अग्रस्ता अनिरस्ता विवृता वक्तव्याः प्रजापतेरात्मानं परिददानीति सर्वे स्पर्शा लेशेनानभिनिहिता वक्तव्या मृत्योरात्मानं परिहराणीति" इति श्रुतेः विमृशद्भिः विचारं कुर्वद्भिः "को न आत्मा किं ब्रह्म" इत्यादि श्रुतेः सर्गस्थानादिविषयैः समाम्नायैः निर्दोषगुणोपेतैर्वेदैः "यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति" इत्यादिलक्षणैः "अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः" इत्यादिकैश्चाऽनुगृहीतया ॥ २४ ॥

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

तत्र देहाद्यध्यासपरित्यागार्थं स्वमातृगतिपक्षनात्मज्ञानमात्रमुपदिशन्नाह–जन्माद्या इत्यादिभिः ॥ १८ ॥

एको न तु देहेन्द्रियादिसंघातरूपः । क्षेत्रज्ञो ज्ञातृत्वादिधर्मकः एतिद्वपादीनामाश्रयः स्वाभाविकजन्मादिरहितः निर्विकारः स्वदृक् स्वरूपे स्वयंप्रकाशः हेतुः सर्गादिनिमित्तम्, तदुक्तं श्रीसूते "हेतुर्जीवोऽस्य सर्गादेरविद्याकर्मकारकः" इति, व्यापको व्याप्तशीलः असङ्गी अनावृतश्च स्वतः स्वप्रकाशरूपत्वात् ॥ १९ ॥

मोहजं त्यजेदिति । देहाद्यभिमानरूपमोहजस्यैव त्यागो न तु स्वरूपभूतस्येत्यहमर्थस्य इति वक्ष्यते तदेवं जीवस्य तदंशत्वात् सूक्ष्मज्योतीरूप इत्युक्तं । तथैव हि कौस्तुभांशत्वेन व्यञ्जितम्, तथाच स्कान्दे प्रभासखण्डे जीवनिरूपणे "नैतस्य रूपं वर्णो वा प्रमाणं दृश्यते क्वचित् । न शक्यं कथितुं वापि सूक्ष्मत्वात्प्रत्यविग्रहः ॥ बालाग्रशतभागस्य शतधा कल्पितस्य च । तस्यापि सूक्ष्मतरो देवः स चानन्त्याय कल्पते ॥ आदित्यवर्णं सूक्ष्माभं बिन्दुमिव पुष्करे । नक्षत्रमिव पश्यन्ति योगिनो ज्ञानचक्षुषा" इति ॥ २० ॥

तत्पदार्थज्ञानमप्याह—स्वर्णमिति ॥ २१—२८ ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

भूयादित्याशीर्वादेन यस्मिन् वर्तमानं श्रीमदनुग्रहं लेभिरे भक्तिकारणत्वेनाशास्ते, यदि भवन्तः श्रद्दध्युः तदा वैशारदी विशारदो भगवांस्तद्विषया श्रद्धा इति मदनुग्रहात् श्रद्धा जाता भक्तिः भक्तेः प्रेमेत्यग्रिमग्रन्थ इवगन्तव्यम् ॥ १७ ॥

केषांचित् मुमुक्षुभक्तानां तु ज्ञानमपेक्षितमिति तदाह–जन्माद्या इति दशभिः । जायते अस्ति वर्द्धते विपरिणमते अपक्षीयते नश्यतीत्येवंभावाः षड्विकाराः सदा स्थितस्य वृक्षस्य प्रतिवर्षं फलानामेव यथा न तु वृक्षस्य तथैव नित्यस्थितस्यैवाऽऽत्मनो देहस्यैव षडिमे दृष्टाः न त्वात्मनः ईश्वरस्य मूर्तिः समष्टिव्यष्ट्यात्मकं शरीरं यतो भवति तेन ॥ १८ ॥

जीवात्मनि षड्विकाराभावभावना त्वं पदार्थशुद्धिः सा च तत्पदार्थस्य परमात्मनश्चिन्तनरूपया भक्त्यैव स्यादित्यतः परमात्मस्वरूपमाह–आत्मेति द्वाभ्याम् । आत्मा परमात्मा नित्यः "अविनाशी वा अरेऽयमात्मा" इति श्रुतेः, अव्ययः अपक्षयशून्यः "ऋचो अक्षरे परमे व्योमन्" इति श्रुतेः । शुद्धः "निरवद्यं निरञ्जनम्" इति श्रुतेः एकः "एकमेवाद्वितीयम्" इति श्रुतेः । क्षेत्रज्ञः "विज्ञातारमरे केन जानीयात्" इति श्रुतेः । आश्रयः "यस्मिन् द्यौः पृथिवी चान्तरीक्षम्" इति श्रुतेः । अविक्रियः "निष्कलं निष्क्रियं शान्तम्" इति श्रुतेः । स्वदृक् "आत्मज्योतिः सम्राडिति होवाच" इति श्रुतेः । हेतुः "स इमान् लोकानसृजत" इति श्रुतेः । व्यापकः "सत्यं ज्ञानमनन्तम्" इति श्रुतेः । असङ्गी "असङ्गो ह्ययं पुरुषः" इति श्रुतेः । अनावृतः "पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते" इति श्रुतेः ॥ १९ ॥

आत्मनः परमात्मनः परैर्जीवात्मलक्षणेभ्योऽप्युत्कृष्टैः नित्यं चिन्तितैरिति शेषः देहादौ देहे दैहिकेषु च असद्वास्तवभावस्परमात्मचिन्तनं विना सत्यपि विवेके दिग्भ्रम इव मोहो न निवर्तत इति भावः ॥ २० ॥

नन्वेवंभूतः परमात्मा क वर्तते ? इति चेत् स्वदेहेऽपीति तदुपलब्धिप्रकारं सदृष्टान्तमाह—स्वर्णमिति । अश्मसु स्वर्णक्षेत्रेषु स्वर्णाकरस्थानेषु योगैर्धमनादिभिर्गुरुवक्ष्यमाणैरुपायैः तदुपायाभिज्ञो हेमकारो यथा स्वर्णमाप्नुयात् तथैव देहरूपक्षेत्रेषु आत्मयोगैरात्मप्राप्त्युपायैश्चिन्तनाद्यैः ब्रह्मगतिं ब्रह्मणः परमात्मनो गतिमुपलब्धिम् ॥ २१ ॥

अध्यात्मविदित्युक्तमतोऽध्यात्मवस्तून्याह–अष्टाविति सार्द्धेन । मूलप्रकृतिर्महदहङ्कारौ पञ्चतन्मात्राणि चेत्यष्टौ । त्रयः सत्त्वादयो विकाराः एकादशेन्द्रियाणि पञ्च महाभूतानि चेति षोडश आचार्यैः कपिलादिभिः प्रोक्ताः पुमानात्मा एकः समन्वयात्, एषु सर्वेष्वन्वयं सम्बन्धं प्राप्य वर्तमानः यद्वा समन्वयं स्वसम्बन्धं अतति सततं प्राप्नोति "अत सातत्यगमने" क्विबन्तः ॥ २२ ॥

सर्वमङ्गानः उक्तलक्षणसर्ववस्तुसमूहरूपः जगत् जङ्गमो मनुष्यादिः तस्थुः स्थावरो वृक्षादिः तत्रैव देह एव पुरुषः परमात्मा मृग्यः । अन्वेषणप्रकारमाह—नेतिनेतीत्यतद् तद्भिन्नं वस्तु त्यजन् त्यजद्भिरित्यर्थः ॥ २३ ॥

ननु, तर्हि तन्मय एव अतत्त्यागे शून्यमेवाऽवशिष्यते इत्यत आह––अन्वयेति । देहे परमात्मनोऽन्वयः परमात्मनो देहव्यतिरेको यः नास्तित्वेन जडानामपि बुद्ध्यादीनां यदन्वयेनैव प्रवृत्तिः बुद्ध्यादिव्यतिरिक्तश्च यः परमात्मा देहस्थ इति यो विवेकस्तेन तथा उशता शुद्धेनात्मना मनसा सर्गस्थानसमाम्नायैः सृष्टिस्थितिसंहारैः परामृष्टैरिति शेषः "यतो वा इमानि

बुद्धेर्जागरणं स्वप्नः सुषुप्तिरिति वृत्तयः ।
ता येनैवाऽनुभूयन्ते सोऽध्यक्षः पुरुषः परः ॥ २५ ॥
एभिस्त्रिवर्णैः पर्यस्तैर्बुद्धिभेदैः क्रियोद्भवैः ।
स्वरूपमात्मनो बुद्ध्येद्गन्धैर्वायुमिवान्वयात् ॥ २६ ॥
एतद्द्वारो हि संसारो गुणकर्मनिबन्धनः ।
अज्ञानमूलोऽपार्थोऽपि पुंसः स्वप्न इवेष्यते ॥ २७ ॥
* (मनोमयत्वात्सर्वार्थाः स्वप्नजागरयोः समाः ।
दृष्टानर्थानपि ध्यातुः शोकमोहभयप्रदाः ॥ ० ॥
परस्य निर्गुणस्यापि गुणसङ्गाजनिर्मृतिः ।
व्यक्तं जन्माप्ययप्रोक्तं शयानस्येव न स्वतः ।
हरिसाश्रिन्तथा सर्वे प्रयान्ति परमम्पदम् ॥ ० ॥ )
तस्माद्भवद्भिः कर्तव्यं कर्मणां त्रिगुणात्मनाम् ।
बीजनिर्हरणं योगः प्रवाहोपरमो धियः ॥ २८ ॥
तत्रोपायसहस्राणामयं भगवतोदितः ।
यदीश्वरे भगवति यथा यैरञ्जसा रतिः ॥ २९ ॥
गुरुशुश्रूषया भक्त्या सर्वलब्धार्पणेन च ।
सङ्गेन साधुभक्तानामीश्वराराधनेन च ॥ ३० ॥
श्रद्धया तत्कथायां च कीर्तनैर्गुणकर्मणाम् ।
तत्पादाम्बुरुहध्यानात्तल्लिङ्गेक्षाऽर्हणादिभिः ॥ ३१ ॥
हरिः सर्वेषु भूतेषु भगवानास्त ईश्वरः ।
इति भूतानि मनसा कामैस्तैः साधु मानयेत् ॥ ३२ ॥

भाषाटीका ।

में मोह से उत्पन्न जो मैं मेरा यह असद्भाव तिसको छोड दे ॥ २० ॥

जैसे अभिज्ञ सुवर्णकार क्षेत्र ( खेत ) में सुनहले पाषाण में से उपायों से स्वर्ण को प्राप्तहोता है, ऐसेही अध्यात्मवेत्ता आत्म योग से देह में ब्रह्मगति को प्राप्त होता है ॥ २१ ॥

आचार्यों ने अष्ट प्रकृति कहीं हैं और उनके गुण तीन कहे हैं तथा प्रकृति के विकार षोडश हैं और इन में साक्षित्वेन अन्वित होने वाला पुरुष एक है ॥ २२ ॥

सर्व संघात रूप देह स्थावर जंगम भेद से दो प्रकारका है इसी देह में अनात्म वस्तु के लक्षणों से भिन्न आत्मा को ढूँढना चाहिये ॥ २३ ॥

अन्वय व्यतिरेक से हुआ जो विवेक तिससे और शुद्ध मनसे तथा सृष्टि स्थिति संहार के अनुसंधान द्वारा विचार करने वाले अव्यग्रपुरुषों से ढूँढने के योग्य है ॥ २४ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

विमर्शप्रकारमाह–बुद्धेरिति द्वाभ्याम् । अध्यक्षः साक्षी ॥ २५ ॥ अत एभिर्बुद्धिभेदैः परिणामैः पर्यस्तैः परितः क्षिप्तैरनात्मधर्मत्वेन निरस्तैः बुद्धिधर्मत्वे हेतुः त्रिवर्णैस्त्रिगुणात्मकैः क्रियोद्भवैः

* * श्लोकाविमौ विजयध्वजरीत्याऽधिकौ पठ्येते ॥

### श्रीधरस्वामिकृतभावार्थदीपिका ।

कर्मजन्यैः बुद्धेरेव त्रिगुणात्मकत्वात् कर्मकर्तृत्वाच्च तस्या एवैता अवस्थाः आत्मा तु बुद्ध्यन्वयात्तदवस्थावानिवाभाति न तत्त्वत इत्यनात्मनः स्वरूपं बुध्येज्जानीयादित्यर्थः । अत्र दृष्टान्तः कुसुमधर्मैर्गन्धैस्तदाश्रयं वायुमिव ॥ २६ ॥

ननु तर्हि यथा कुसुमोपाधिकोऽपि वायोर्गन्धो विवेकज्ञानेन निवर्त्तते एवमात्मनः संसारो न निवर्त्तत इत्याशङ्क्याऽऽह, एतद्द्वारो बुद्धिद्वारकस्तदवस्थाद्वारको वा संसारो न स्वतः हि यस्मात् बुद्धेर्ये गुणाः कर्माणि च तैर्निबध्यत इति तथा स चाज्ञानमूलोऽतोऽपार्थो मिथ्याभूतोऽपि स्वप्न इवेष्यते वायोस्तु गन्धद्रव्यसम्बन्धस्य वास्तवत्वाद्विषमो दृष्टान्तः ॥ २७ ॥

यस्मादेवं निवृत्तिर्घटते तस्माद्बीजमज्ञानं तस्य निर्हरणं दहनम् किं तत् योगः कथम्भूतः धियः प्रवाहं जाग्रदादिरूपमुपरमयतीति तथा ॥ २८ ॥

तदेव ज्ञानप्रकारमुक्त्वा तत्साधनं धर्मस्य तत्त्वं नारदोक्तमेवाऽऽह—तत्रेति. पञ्चभि । यैर्धर्मैर्यथा यथावदनुष्ठितैर्वा भगवति श्रीनारायणे रतिरिति. यदयमुपायो भगवतोक्त । तथा च गीतासूक्तम्—

" यत्करोषि यदश्नासि यज्जुहोषि ददासि यत् ।
यत्तपस्यसि कौन्तेय तत्कुरुष्व मदर्पणम् " ॥

इति "भक्त्या मामभिजानाति यावान्यश्चास्मि तत्त्वतः" इत्यादि च ॥ २९ ॥

तत्रैवान्तरङ्गान्धर्मानाऽऽह, गुरोः शुश्रूषया भक्त्या प्रेम्णा सर्वेषां लब्धानामर्पणेन च ॥ ३० ॥

तस्य लिङ्गानां मूर्तीनामीक्षणमर्हणमादिर्येषां वन्दनादीनां तैश्च ॥ ३१ ॥ ३२ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

अन्यानपि तद्विमर्शनोपायान् वदंस्तैः प्रत्यगात्मस्वरूपं देहविलक्षणमवगच्छेदित्याह—बुद्धेरिति । जागरणं स्वप्नः सुषुप्तिरिति एतास्तिस्रो बुद्धेर्वृत्तयः व्यापाराः ता वृत्तयो येनैवाऽनुभूयन्ते स एव परः देहेन्द्रियबुद्ध्यादिभ्योऽन्यः अध्यक्षो देहादीनां द्रष्टा धारको वा पुरुषः प्रत्यगात्मा जागरणं नाम बाह्येन्द्रियव्यापारानुविद्धा बुद्धिवृत्तिः स्वप्नस्तदननुविद्धा सुषुप्तिर्बुद्धिवृत्त्युपरमः तदुपरमोऽपि तत्सम्बन्ध्येवेति बुद्धेर्वृत्तय इत्युक्तम् एतद्वृत्तित्रयज्ञानाश्रयत्वेन यः प्रतीयते स प्रत्यगात्मेति भावः ॥ २५ ॥

एतदेव सदृष्टान्तं विशदयन्नेवमादिभिरुपायैरात्मस्वरूपं बुद्ध्येदित्याह—एभिरिति । एभिस्त्रिवर्णैस्त्रिविधैः सत्त्वादिगुणत्रयमूलकैर्वा पर्यस्तैरस्थिरैः क्रियोद्भवैः पुण्यपापात्मककर्मनिमित्तैर्बुद्धिभेदैर्बुद्धिवृत्तिभेदैर्जागरादिभिरुपलक्षितमात्मनः स्वरूपं विद्यात् यथा गन्धैः कुसुमादिगतैरुपलक्षितं तदाश्रयं वायुं बुध्यति तद्वत् कुतः? अन्वयाज्जागरणाद्यवस्थात्रयेऽन्वयादनुवृत्तेः यथा पवनात्मककर्मणा तत्तत्पङ्कजादिकुसुमादिगतं गन्धमानीय तदाश्रयतया तदन्वितं प्रवहन्तं वायुं ततः पृथग्भूतमुपलक्षयते पार्थिवकुसुमादिगतस्य गन्धस्य न वायुराश्रयस्तदन्वयाच्च वायोः तदाश्रयत्वम् अत एव तदन्वयापाये केवलस्पर्शगुणस्य वायोरुपलम्भः ततो गन्धात्पृथगेव वायुः स्वाभाविकस्पर्शगुण इति तं यथोपलक्षते तथा बुद्धिभेदो न स्वभावत आत्मगता तेषां स्वाभाविकत्वेऽन्यतमबुद्धिभेदेऽन्यतमस्योपलम्भप्रसङ्ग किन्तु कर्मायत्तबुद्धिसम्बन्धप्रयुक्ततद्वृत्त्यन्वयात्तदनुभवोपलम्भः स्वभावस्त्वात्मा तद्वृत्त्यनन्वित एव ततः पृथग्भूत इत्येवं तं बुद्ध्येदित्यर्थः ॥ २६ ॥

तदेवं देहादावसद्भावत्यागप्रकारो देहविलक्षणत्वेनात्मविमर्शनप्रकारश्चोक्तः अथैवंभूतस्य प्रत्यगात्मनः कुतस्तद्देहादिसम्बन्धरूपः संसारो यस्मिन् न सद्भाव इत्याशङ्कायां त्रिवर्णैः क्रियोद्भवैरिति परिहारः सूचितः । तमेव विशदयितु स्वरूपयाथात्म्याज्ञानमूलकदेहात्मभ्रमादिरूपाऽनादिमोहनिमित्तगुणकर्मसम्बन्धप्रयुक्तः संसारस्तत एवात्मनः स्वरूपप्रयुक्तत्वाभावादपुरुषार्थोऽप्यौपाधिकत्वाद्यावदुपाधिबुद्धिसंबन्धद्वाराऽनुवर्त्तत इत्याह—एतादिति । एष बुद्धिसम्बन्ध एव द्वारं यस्य स संसारः स्वप्न इवाल्पाधिस्थिरत्वात्स्वप्नतुल्योऽतएवापार्थः अपुरुषार्थोऽपि पुंसः प्रत्यगात्मनोऽर्थ्यते प्राप्यते कर्तुः पुंसः शेषत्वाविवक्षया षष्ठी पुंसां संसारः प्राप्यत इत्यर्थः । बुद्धिसम्बन्धे हेतुं तद्द्वसंसारं विशिनष्टि—अज्ञानमूल इति । अज्ञानं मूलं कारणं यस्याज्ञानमूलः स्वपरयाथात्म्याज्ञानमूलकबुद्धीन्द्रियसम्बन्धनिमित्तो देहतदनुबन्धिरूपः संसार इत्यर्थः । कथमुक्तविधस्यात्मनो ज्ञानसम्बन्ध इति शङ्कां निराकुर्वन् संसारमेव विशिनष्टि. गुणकर्मनिबन्धन इति । गुणकर्माधीनः सत्त्वादिगुणपरिणामानुगुणकर्मपरिपाकाधीन इत्यर्थः । अयं भावः । स्वभावतः सर्वे प्रत्यगात्मानः "आत्मा नित्योऽव्ययः" इत्याद्युक्तविधा अप्यनादिकर्मणा सत्त्वादिप्राकृतगुणसंसृष्टास्तत्र तत्तत्कर्मपरिपाकवशाद्गुणपरिणामस्ततः स्वपरयाथात्म्याज्ञानं ततो गुणकर्मानुरूपं परमात्मसृष्टबुद्धीन्द्रियसम्बन्धः ततो देहतदनुबन्धिसम्बन्धरूपः संसारस्ततो देहात्माभिमानस्ततः पुनः कर्म ततः पुनर्गुणपरिणामादिरित्येवं परिवृत्तिर्यावत्कर्मोपाध्यनुवर्त्तत इति ॥ २७ ॥

यतोऽयमुक्तविधस्याप्यात्मनो देहात्मभ्रमादिरूपाऽज्ञानमूलककर्मनिमित्तः संसारस्तस्माद्भवद्भिः कर्मनिवर्त्तणोपायोऽनुष्ठेय इत्याह, तस्मादिति । तस्मात्संसारस्याज्ञानमूलगुणकर्माधीनत्वात् त्रिगुणात्मनां सत्त्वादिगुणत्रयपरिणामहेतूनां कर्मणां यद्बीजं मूलं देहात्मभ्रमादिरूपं तस्य निर्हरणं निर्हरणोपायात्मको यो योगो वक्ष्यमाणः स च धियः प्रवाहं शब्दादिविषयकं ज्ञानं तस्योपरतिरूपो भवद्भिः कर्त्तव्यः ॥ २८ ॥

वक्ष्यमाणभगवद्भक्तियोगस्यैव बीजनिर्हरणोत्तमोपायत्वमाह, तत्रेति । तत्रावश्यं बीजनिर्हरणोपाये कर्तव्ये सति उपायसहस्राणां मध्येऽयमेवोत्तम उपायः कथितो भगवता, कोऽसौ ? यैः साधनैः भगवतीश्वरे रतिरनुरागः प्रीतिरञ्जसा सुखेन यथा स्यादित्येव, स्वसाधनैरनुगृहीता भगवति रतिरित्येष एव उत्तम उपाय इति—

"नाहं वेदैर्न तपसा न दानेन न चेज्यया ।
भक्त्या त्वनन्यया शक्य अहमेवं विधोऽर्जुन!" ॥ इति.

"न मे भक्तः प्रणश्यति" इत्यादिना तत्र तत्र भगवता प्रोक्तइत्यर्थः

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

रतिरित्यनेन निरतिशयप्रीतिरूपापन्ना भक्तिरुच्यते तस्या एवम्भूताद्भगवत्प्राप्तिहेतुत्वं संसारनिवर्त्तकत्वञ्च सूच्यते ॥ २९ ॥

सा च कैः साधनैर्निष्पद्यते इत्यपेक्षायां साधनानि वदंस्तैरुपकृतेन ध्यानयोगेन निष्पद्यते इत्याह—गुरुशुश्रूषयेत्यादिभिश्चतुर्भिः । गुरुशुश्रूषया गुरूणां परिचर्यया गुरुभ्यस्तत्त्वश्रवणेच्छया वा भक्त्या गुरूणां भक्त्या उपासनेन सर्वेषां गुर्वपेक्षितानां मध्ये लाभः लभ्यते इति लाभः स्वस्य सुलभं यत्तस्य समर्पणेन, यथाशक्ति तदपेक्षितसमर्पणेनेत्यर्थः । साधु यथा भवति तथा भगवद्भक्तानां सङ्गेन साधवः क्रोधमात्सर्यलोभाशुभमतिराहित्यरूपसाधुलक्षणलक्षिता भक्तास्तेषां सङ्गेन वा ईश्वराराधनेनार्चाविग्रहाराधनेन हृदयकमलस्थस्य मानसोपचारैराराधनेन वा. श्रवणादिभिरित्यर्चाराधनस्य वक्ष्यमाणत्वात् ॥ ३० ॥

तत्कथायामीश्वरकथायां श्रद्धया श्रवणासक्त्या ईश्वरस्य गुणानां कर्मणां कीर्तनैस्तस्येश्वरस्य पादाम्बुजयोर्ध्यानात्तल्लिङ्गस्यार्चाविग्रहस्येक्षणार्हणादिभिर्दर्शनपूजादिभिः आदिशब्देन प्रणामपरिक्रमादिसंग्रहः ॥ ३१ ॥

किञ्च भगवानीश्वरः सर्वभूतेष्वन्तरात्मतया वर्ततेऽतः सर्वाणि भूतानि भगवदात्मकानीति बुद्ध्या यथाशक्ति यथायोग्यं तद्भूतान्यपेक्षितैः कामैः साधु मानयेत्सम्मानयेदित्यनेन च ॥३२॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

निस्पृश्य निर्णयप्रकारं दर्शयति, बुद्धेरिति । सत्त्वबुद्ध्यादिशब्दैस्तु जीवोऽपि क्वचिदीर्यते इति वचनाद्बुद्धेर्जीवस्य जागरणाद्यावृत्तयोऽवस्थास्ता येन परमात्मना प्रेरितेन जीवेनानुभूयन्ते "जाग्रदाद्याः कर्म चैव सुखदुःखे च तस्य हि" इति वचनात् । स परः पुरुषोऽध्यक्षः "जाग्रदादेः परो द्रष्टा सुखानित्यो हरिः स्मृतः" इति वचनात् । सोऽध्यक्षो जाग्रदादिनाधिगतेन्द्रियसुखदुःखपरो जीवः परो विश्वादिविग्रहाद्धरेरन्य इत्युत्तरार्द्धस्यार्थभेदो ज्ञातव्यः एव शब्देन कालादिकं व्यावर्तयति ॥ २५ ॥

"कार्यकारणबद्धौ ताविष्येते विश्वतैजसौ । प्राज्ञः कारणबद्धस्तु" इति वचनाद्विश्वादिविग्रहान्नारायणादन्यत्वं जीवस्य कथं जीवधर्माक्रान्तत्वात्तस्येति तत्राह, एभिरिति । बुद्धीनां जीवानां भेदस्तारतम्यलक्षणो येर्ज्ञाप्यते तैर्जीवतारतम्यज्ञापकैरत एव पर्यस्तैरेकत्र समस्तैरेभिस्त्रिवर्णैस्त्रिधावर्णैर्वर्णन येषां ते तथा तैर्जाग्रदादिभिस्त्रयो वर्णाः शुक्लकृष्णपीतलक्षणा येषां ते तैः सत्त्वादिगुणैर्वा स परमात्माऽज्ञजनदृष्ट्यात्मनो जीवस्य स्वरूपं रूपधासमानरूपं कार्यादिबद्धं वस्त इति दृश्यते न तु प्राज्ञजनदृष्ट्या तद्दृष्ट्या ज्ञानानन्दादिसमानं रूपं धृत्वा तत्स्वरूपं धत्त इति "स जीवेन सहस्थानात्तत्स्वरूपः प्रदृश्यते" इति स्मृतेः । अन्वयाद्व्यतिरेकाद्यादिष्वनुगतत्वात्कीदृशैः क्रियोद्भवैः क्रियया उद्भवो येषां ते तथा तैः कर्मजनितैः यद्वा क्रियाया उद्भवो येभ्यो गुणेभ्यस्ते तथा, तैः शुक्लसत्त्वजन्यं जागरणं पीतरजोजन्यं स्वप्नं कृष्णतमोजन्या सुप्तिः कर्माण्येवंविधानि "अजामेकां लोहितशुक्लकृष्णाम्" इति श्रुतेः । कुत्रायं व्यवहारो दृष्ट इति तत्राह, गन्धैरिति । यथा गन्धैरन्वयात् सौरभ्यादिगन्धसम्पर्कात् सुगन्धो दुर्गन्धो मिश्रगन्धो वायुरिति व्यवह्रियते न तावता तादात्म्यं वायोस्तथात्वे सर्वदा तथा स्यात् न चैवं तस्माद्भिन्न एव वायुस्तथाहरिरपि "यथा गन्धयुतोऽनिलः" इति च "तत्सृष्ट्वा तदेवानुप्राविशत् तदनुप्रविश्य सच्च त्यच्चाभवत्" इति श्रुतेः । देहाख्यप्रपञ्चसम्पर्कोऽस्त्येव हरेरिति भावः ॥ २६ ॥

अभेददर्शने बाधकमाह, एतद्द्वार इति । इदमभेददर्शनं द्वारं यस्य संसारस्य स तथा पुंसः संसारः प्राप्यते हि यस्मात् "अदृष्टेर्जीवपरयोर्भेदस्याप्नोति संसृतिम्" इति वचनात् । अभेददर्शने कारणमाह, गुणेति । अभेददर्शनजनकत्वेन गुणकर्मणां संसारनिमित्तत्वमाह, तस्येति । विशेषकर्मणां कारणमज्ञानं तद्द्वारा संसार इत्याशयेनाह, अज्ञानेति । अज्ञाननिमित्तकर्मपरम्परया मुग्धमनसः पुंसोऽभेदनिश्चयाद्नन्ततत्त्वमेव कारणमित्याशयेनाह अपार्थ इति । अपगतनिवृत्तिस्तमस इति शेषः

"अर्थः स्यात्क्रियये मोक्षे शब्दवाच्ये प्रयोजने ।
व्यवहारे धने शास्त्रे वस्तुहेतुनिवृत्तिषु" ।

इत्यभिधानात्, मशकार्थो धूम इति प्रयोगाच्च "अभेदनिश्चयान्नान्ति तमो नान्यत्र संशयः" इति स्मृतेः । अपिशब्देन नित्यदुःखभूयिष्ठतमःप्राप्तिं सूचयति, "दुःखरूपोऽपि संसारो बुद्धिपूर्वमवाप्यते" इति संसारस्तमः इन्द्रियार्थसन्निकर्षादर्थोपलब्धिर्जाग्रत् जाग्रदनुभवसंस्कारोपस्थापितविषयाभासोपलब्धिः स्वप्नः उपरतसर्ववृत्तीन्द्रियविषयज्ञानं सुप्तिः तत्र जाग्रद्दृष्टश्रुतपदार्थसंस्कारकृतः स्वप्नः स्वशिरश्छेदनादिलक्षणो दुःखादिहेतुर्यथा, तथा जाग्रदपि राजाऽहमिति अनर्थपरम्परा दृष्टिवज्जीवपरयोरभेदं जानतः पुंस इहामुत्र दुःखबाहुल्यहेतुरित्यर्थः । "यथा स्वप्ने शिरश्छेदं स्वयं कृत्वात्मनोऽवशः । ततो दुःखमवाप्येत तथा जागरितेऽपि तु ॥ जानन्नप्यात्मनो दुःखमवशस्तु प्रवर्तते" इति स्मृतौ दर्शनात् ॥ २७ ॥

अर्थक्रियाकारित्वात् न स्वप्नादेर्मिथ्यात्वमित्याह—मनोमयत्वादिति । मनसा निर्मितकर्मनिमित्तत्वादनित्यत्वाभिप्रायेण स्वप्नजाग्रत्साम्यम् अन्यथा शोकमोहभयप्रदा इत्येतदसम्बद्धं स्यात् न च शुक्तिरजतादिकं वलयकरणादियोग्यम् ॥ ०॥०॥

विपक्षे बाधकमुक्त्वा निपर्यये पर्यवसानफलेन संसारबीजनिर्हरणोपायमाह — तस्मादिति । यस्मात्पुंसो गुणकर्मनिर्मिताभेददर्शनद्वारः संसारस्तस्माद्भेदनिमित्तत्रिगुणमयकर्मबीजभर्जनोपायो भवद्भिः कर्तव्यः नन्वग्निष्टोमादिकमन्तरेण कर्मणां बीजभूतस्य लिङ्गशरीरस्य हननोपायः । कोऽसौ ? यमनियमादिलक्षणश्चेतस्योभयत्र साधारणत्वेनानन्तरङ्गत्वात् अत आपाकनिक्षिप्तामघटदहनयोग इवाहत्य तत्साधनं वक्तव्यमिति तत्राह, प्रवाह इति । धियः प्रवाहस्य सजातीयप्रत्ययानन्तरितत्वया विषयीकरणनिपुणोपासनालक्षणस्य उरुद्वं पाति रक्षतीत्युपः "उपोधिके" इति सूत्रादुपः सर्वाधिको वा परमेश्वरस्तस्मिन् रमणं निरन्तरश्रीनारायणचरणारविन्दसञ्चिन्तनलक्षणोपासनात् स एवेत्यभिप्रायः ॥ २८ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

धियः प्रवाहस्यान्तरङ्गसाधनमाह, तत्रेति । भगवतेत्यनेन आत्मनि आप्तमूलत्वं दर्शयति—अन्यथा बाधकमाह—नेति ॥ २९ ॥

भक्त्या गुरुशुश्रूषया "यस्य देवे पराभक्तिर्यथा देवे तथा गुरौ" इति श्रुतेः सर्वलाभार्पणेन इत्यत्रेतिशेषः "ब्रह्मार्पणं ब्रह्म हविः" इत्यादि साधु भक्तानाम् "नाऽऽश्चर्यमेतद्यदसत्सु सर्वदा महद्विनिन्दा कुणपात्मवादिषु" इत्यादिर्निश्चितभगवद्भक्तानां सेवालक्षणप्रसङ्गेन "महत्सेवां द्वारमाहुर्विमुक्तेः" इत्यादि ईश्वराराधनेन पञ्चरात्रोक्तेन पञ्चकालिकभगवत्पूजया पञ्चकालपरायणां पञ्चकालैकमनसामित्याह ॥ ३० ॥

तत्कथायां श्रद्धया "पानेन ते देवकथासुधायाः" इत्यादेः गुणकर्मणां सङ्कीर्तने "कलौ सङ्कीर्त्य केशवम्" इत्यादेः विषयविसर्जनार्थं तत्पदाम्बुरुहध्यानादिति "मच्चित्तयज्ञनखनक्षत्रसारविन्दम्" इत्यादेः तस्य हरेर्लिङ्ग प्रतिमा तत्क्षेत्रादर्शने अर्हणां पूजनम् अहिंसादिकं महान्तिप्रमाणद् गृह्णीते "बर्हायिते ते नयने नराणाम्" इत्यादेः ॥ ३१ ॥

"हरिः सर्वेषु भूतेषु" इत्यादिना हरिस्थिरपूज्यो न तु भूतानि योग्यतानिरीक्षणमिति कथ्यते "ईश्वरो जीवकलया प्रविष्ट" इत्यादेर्वा ॥ ३२ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

अथ ध्यानशक्तिं प्रतिपादयति—तत्रोपायेत्यादिभिः । तत्र पूर्वोक्ते त्रिगुणात्मककर्मणां बीजनिर्हरणेऽपि उपायसहस्रेषु सिद्धानां मध्ये अयमेव उपायो भगवता श्रीनारदेन मां प्रत्युपदिष्टः । यैरुपायसहस्रैः सिद्धात् यदस्मादुपायात् यथा यथावत् ईश्वरे भगवति अञ्जसा व्यवधानान्तरं विनैव रतिः प्रीतिर्भवति । अतः कर्मबीजनिर्हरणमपि तस्यानुषङ्गिकमेव फलमिति भावः । यद्वा तत्र बीजनिर्हरणे निमित्ते यान्युपायसहस्राणि तेषामप्ययमेवोपायो भगवता श्रीनारदेनोदितः । अनेनैवोपायेन कृतकृत्यानि भवन्तीत्यर्थः । कोऽसौ ? तत्राह—यैरुपायैः सिद्धात् यदस्मादुपायादीश्वरे भगवति यथा यथावदञ्जसा उपायान्तरव्यवधानं विना रतिर्भवतीति ॥ २९ ॥

गुरुशुश्रूषयेति त्रिकम् ॥ ३०–३२ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

विमर्शप्रकारमाह, बुद्धेरिति द्वाभ्याम् । यदन्वितताया एव बुद्धेस्तिस्रोऽवस्था उद्भवन्ति सः परः पुरुषः परमात्मा ॥ २५ ॥

यस्त्वेतद्बुद्ध्यवस्थात्रयवानाभाति स जीवात्मेत्याह—एभिः बुद्धेर्भेदैः परिणामैः जागरादिभिः त्रिवर्णैः त्रिगुणात्मकैः क्रियोद्भवैः कर्मजन्यैः पर्यस्तैः अनात्मधर्मत्वेन निरस्तैरपि एभिरेव आत्मनोऽशुद्धजीवस्य स्वरूपं बुद्ध्येत जानीयात् यथा अन्वयात् स्वस्वन्धमात्रादेव गन्धैः पुष्पादिगन्धैर्वायुं गन्धवन्तं जानीयात् यदन्विता बुद्धिः प्रवर्त्तते स परमात्मा यो बुद्ध्यान्वितः स जीवात्मेति भेदः ॥ २६ ॥

एषा बुद्धिरेव द्वारं यस्य सः अत एव गुणकर्मभ्यां तदीशाभ्यां नितरां बन्धनं यत्र सः किञ्चन ज्ञानं यस्य तथाभूतं मूलं यस्य स, यस्य मूलं न ज्ञायत इत्यर्थः । अपार्थः अवस्तुभूतोऽपि जीवस्य संसारो देहाध्यासरूपः स्वप्न इव अर्प्यते इति तस्मिन् पुंसि परमेश्वरशक्त्यैवेत्यर्थः ॥ २७ ॥

तस्मात्तन्निवृत्तये यतितव्यमित्याह, तस्मादिति । बीजं प्राकृती बुद्धिः तस्य निर्हरणं दहनं दहनमेव किं तदाह, धियो बुद्धेः प्रवाहाणां जागराद्यवस्थानां उपरमः स एव योगः फलम् "योगोऽपूर्वार्थसम्प्राप्तौ सङ्गतिध्यानयुक्तिषु" इति मेदिनी ॥ २८ ॥

तत्र बीजनिर्हरणे विषये उपायसहस्राणां मध्ये अयमुपायो भगवता उदितः अन्ये त्वन्यैर्मुनिभिरुदितत्वादस्मात्ते निकृष्टा एवेति भावः । अत्रोपायस्य फलत्वमाह, यदिति । यैर्गुरुशुश्रूषणाद्यैरुपायैः यत् यस्माद्भक्तियोगाद्रतिर्भवति अयं भक्तियोग एवोपाय इत्यन्वयः । अत्र पञ्चम्यन्तयत्पदात् अञ्जसा शीघ्रमेव रतिरेव भक्तियोगस्य मुख्यं फलं बीजनिर्हरणं त्वानुषङ्गिकमयत्नत एव शुद्धभक्तानां भवेत् । यदुक्तम्, "जरयत्याशु या कोषं निगीर्णमनलो यथा" इति ॥ २९ ॥

धर्मस्य तत्त्वं ज्ञानञ्चेति द्वयमुपदेष्टव्यत्वेन यत् प्रक्रान्तं तत्र ज्ञानमुक्त्वा धर्मे तत्त्वं भक्तियोग एवेति सोऽयत् पूर्वोक्तयत्पदवाच्यानि तदङ्गान्याह—गुर्विति त्रिभिः । गुरोः शुश्रूषया स्नपनसम्वाहनादिकया तथा सर्वेषां लब्धानां वस्तूनां तदर्पणेन च तदर्पणं भक्त्यैव न तु प्रतिष्ठादिना हेतुना साधवः सदाचारा ये भक्तास्तेषां सङ्गेनेति गुरावाप्तभक्ता सेव्या वन्द्या दर्शनीयाश्च न तु सङ्गार्थमुपादेया इति भावः ॥ ३० ॥

एवमेतत्प्रकारकया भक्त्यैव निर्जितः षण्णां कामादीनामिन्द्रियाणां वा वर्गो यैस्तैर्गुरुशुश्रूषाद्यैरङ्गैर्भक्तिरिति पूर्वोक्तं बुद्धिप्रवाहोपरमरूपमानुषङ्गिकं फलमुक्तं भक्तेर्मुख्यं फलमाह, यथेति । रतिं प्रेमाणम् ॥ ३१–३३ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

जागरणाद्यवस्थानुवृत्त्येव जीवात्मानं बुद्ध्येदित्याह, बुद्धेरिति द्वाभ्याम्, बुद्धेर्जागरणाद्याः वृत्तयो येन ज्ञानस्वरूपेणानुभूयन्ते सोऽध्यक्षः बुद्ध्यादिस्वामी परो बुद्ध्याद्यचेतनवर्गविलक्षणः ॥२५॥

एभिस्त्रिवर्णैः सत्त्वादिगुणत्रयमयैः पर्यस्तैरनित्यैः अनित्यत्वे हेतुं दर्शयितुं विशेषणं क्रियोद्भवैरिति क्रिया जीवकर्म तदनुसारेण जातैः यस्य जीवस्य शुभं कर्म तेन जीवेन स्वकर्मजन्या बुद्धिवृत्तयः सुखप्रदा अनुभूयन्ते अशुभकारिणो दुःखप्रदा अनुभूयन्ते यन्मते तु बुद्धेरेव कर्मत्वं तन्मतमुपेक्षणीयं सद्भिः "विज्ञानं यज्ञं तनुते, "कर्त्ता शास्त्रार्थवत्त्वात्" इत्यादिश्रुतिसूत्रविरोधात् करणभूतायाः अचेतनायाः कर्तृत्वसम्भवाच्च तद्वत्प्रकृतेरपि जगत्कर्तृत्वप्रसङ्गाच्च एवंभूतैर्बुद्धिभेदैः बुद्धिवृत्तिभिः गन्धैस्तद्वारकं वायुमिव आत्मनः स्वरूपं बुद्ध्येत् अन्वयादुक्तावस्थासु तद्वृत्तिसाक्षिणो जीवस्यैवानुवृत्तेः ॥ २६ ॥

एवं निर्जितषड्वर्गैः क्रियते भक्तिरीश्वरे ।
वासुदेवे भगवति यया संलभते रतिम् ॥ ३३ ॥
निशम्य कर्माणि गुणानतुल्यान्वीर्याणि लीलातनुभिः कृतानि ।
यदाऽतिहर्षोत्पुलकाश्रुगद्गदं प्रोत्कण्ठ उद्गायति रौति नृत्यति ॥ ३४ ॥
यदा ग्रहग्रस्त इव क्वचिद्धसत्याक्रन्दते ध्यायति वन्दते जनम् ।
मुहुः श्वसन् वक्ति हरे ! जगत्पते ! नारायणेत्यात्ममतिर्गतत्रपः ॥ ३५ ॥
तदा पुमान्मुक्तसमस्तबन्धनस्तद्भावभावानुकृताऽऽशयाकृतिः ।
निर्दग्धबीजाऽनुशयो महीयसा भक्तिप्रयोगेण समेत्यधोक्षजम् ॥ ३६ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

एवं बुद्धिरेव द्वारं यस्य मनो बुद्धिगुणनिमित्तानि यानि जीवकर्तृकानि कर्माणि तैर्निरन्तरं बन्धनं यस्मिन् अज्ञानं तत्त्वबोधाभावो मूलं यस्य अपगमोऽर्थः आत्मा परमात्मबोधरूपः पुरुषार्थो यस्मात् एवंभूतः संसारः जन्मजरामरणप्रवाहलक्षणः पुंसः पुंसि अर्पितः, कर्मफलरूपेणेति शेषः । परन्तु स्वभावाश्रयतानातिशीघ्रमेव नश्यति, स्वप्न इवेति । स्वप्नो यथा तात्कालिककर्मफलदेन दुःस्वप्नितेनैव निराक्रियते तद्वत्स्वाराधितेन भगवतैव संसारो निवर्त्तत इत्यर्थः ॥ २७ ॥

तन्निवृत्त्युपायः कर्त्तव्य इत्याह—तस्मादिति। यस्मादेवं तस्मात्कर्मणां बीजनिर्हरणं पूर्वोक्तस्य संसारमूलस्याज्ञानस्य निर्हरणं दहनं तद्दहनार्थं तत्त्वज्ञानसंपादनं कर्त्तव्यं किंतो बुद्धेः कारणभूतायाः यानि कर्माणि तेषां फलभूतस्य प्रवाहस्य जन्ममरणप्रवाहभूतस्य संसारस्योपरमो यस्मात् स योगः संसारतरणोपायश्च कर्त्तव्य इत्यन्वयः ॥ २८ ॥

तत्र तत्त्वज्ञानसंपादने संसारतरणे येर्धर्मैः यथा यथावत् अञ्जसा भगवति रतिरिति यत् अयमेवोपायसहस्राणां मध्ये मुख्य उपायः भगवतोदित "भक्त्या मामभिजानाति यावान् यश्चास्मि तत्त्वतः" इति "मां च योऽव्यभिचारेण भक्तियोगेन सेवते । स गुणान्समतीत्यैतान् ब्रह्मभूयाय कल्पते" ॥ इति ॥ २९ ॥

तस्याः परभक्तिरूपाया रतेः साधनरूपान् धर्मानाह—गुरुशुश्रूषयेति चतुर्भिः । गुरुशुश्रूषारूपया भक्त्या सर्वेषां लब्धानां प्रियपदार्थानां भगवति अर्पणेन च ॥ ३० ॥

तस्य भगवतः कथायां श्रद्धया गुणानां सर्वज्ञत्वादीनां कर्मणां विश्वसर्जनादीनां कीर्त्तनैः तल्लिङ्गानां तस्य मूर्त्तीनाम् ईक्षणैर्महणाश्चार्दिवैषां वन्दनप्रणामादीनां तैश्च ॥ ३१ ॥

सर्वेषु भूतेषु हरिः आस्ते इति हेतोस्तैस्तद्धितैः कामैर्भूतानि साधु यथा भवति तथा मानयेत् ॥ ३२ ॥

---

भाषा टीका ।

जागरण स्वप्न सुषुप्ति, बुद्धि की इन तीनों दशाओं का जो अनुभव करता है और बुद्धि से पर है वही अध्यक्ष पुरुष है ॥ २५ ॥

क्रिया से उत्पन्न होने वाले त्रिगुणात्मक विरुद्ध बुद्धि के परिणामों से आत्मा के स्वरूप को जाने, जैसे पुष्प के गंध से उनके आश्रय वायु को जानना है ॥ २६ ॥

गुण कर्म निर्बंधन यह संसार बुद्धि की दशा द्वारक ही है और अज्ञान मूलक और अपार्थ भी है, और पुरुष को स्वप्न के तरह अनित्य है ॥ २७ ॥

तस्मात् तुम लोग त्रिगुणात्मक कर्मों के बीज की हानि के लिये, बुद्धि के प्रवाह के उपराम करने वाले योग का साधन करो ॥ २८ ॥

यहां पर हजारों उपायों के मध्य में यह उपाय भगवान ने कहा है, कि जैसे जिन धर्मों से साक्षात् भगवान् में रति होवे ॥ २९ ॥

वही भगवान् में रति जिन अन्तरंग धर्मों से होती है उनको कहते हैं कि गुरु की शुश्रूषा, भक्ति, जो प्राप्त हो तिस सर्वका अर्पण, साधु और भक्तों का संग, ईश्वर का आराधन, ॥ हरिकथा में श्रद्धा, हरि के गुण कर्मों का कीर्त्तन उनके चरणकमल का ध्यान और भगवत्प्रतिमाओं [ मूर्तियों ] का दर्शन पूजनादि, इन सबों से ॥ ३० ॥ ३१ ॥

और सर्व भूत प्राणियों में हमारे ईश्वर भगवान् विराजमान हैं इस प्रकार के मनसे प्राणियों को सम्यक् प्रकार से तत्तत् कामों से मानें ॥ ३२ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

निर्जितः षण्णां कामक्रोधलोभमोहमदमत्सराणामिन्द्रियाणां वा वर्गो यैः ॥ ३३॥

भगवद्भक्तेर्लिङ्गान्याह, निशम्येति त्रिभिः। गुणान्भक्तवात्सल्यादीन् अतिहर्षेणोद्गताः पुलका अश्रूणि च तैर्गद्गदं यथा भवत्येवं प्रोत्कण्ठो मुक्तकण्ठ उद्गायति ॥ ३४ ॥ ३५ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

तस्य भावश्चेष्टादिस्तस्य भावो भावना तेनानुकृते आशयाकृती मनःशरीरे यस्य निर्दग्धं बीजमज्ञानमनुशयो वासना च यस्य सः स्वरूपमेति प्राप्नोति ॥ ३६ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

इत्येवं साधनैर्जितैः षड्वर्गैः कामक्रोधलोभमोहमदमात्सर्याख्यैः भगवतीश्वरे भक्तिः क्रियते कर्तव्येत्यर्थं भक्तिरहरहर्ध्यानन् एवमहरहः क्रियमाणया(१)ध्यानात्मिकयोत्तरोत्तरसाक्षात्कारेच्छात्मिकया भक्तिपरंपरया यथा वासुदेवे ध्यानात्मिकाया भक्तेः प्रीत्यात्मिकां भक्तिं लभते इत्याह—वासुदेवे इति । यथाऽहरहः क्रियमाणया गुरुशुश्रूषादिसाधनानुगृहीतया अनुध्यानात्मिकया उत्तरोत्तरस्मात्साक्षात्कारेच्छात्मकपरभक्त्यपरपर्यायया वासुदेवे भगवति रतिं परभक्त्यपरपर्यायभूतां निरन्तरानुबुभूषात्मिकां तत्प्रीतिरूपां लभत इत्यर्थः ॥ ३३ ॥

एवं निष्ठभक्तियोगनिष्पत्तिलिङ्गानि वदंस्तेन परिनिष्पन्नेन भगवद्भक्तियोगेन परमात्मानं प्राप्नोतीत्याह—निशम्येति त्रिभिः । यदा भगवतो गुणान् [illegible] । तथा लीलातनुभिः स्वेच्छोपात्ताप्राकृतदिव्याकारविग्रहैः रामकृष्णादिभिः कृतानि कर्माणि चरितानि निशम्य श्रुत्वा अतिहर्षेणोत्पुलका उद्भिन्नाः पुलकाः रोमाणि अश्रूणि आनन्दबाष्पबिन्दवश्च तैर्गद्गदं यथा भवत्येवं प्रोत्कण्ठः मुक्तकण्ठं उद्गायति अत्युच्चैर्गायति रौति ध्वनति नृत्यति च ॥ ३४ ॥

सर्वेषाम् ग्रहग्रस्त इव हसति क्वचिदाक्रन्दते रोदिति क्वचिद्ध्यायति क्वचिच्च जनं भगवदात्मकं वन्दते नमस्करोति क्वचिच्च पुनः पुनः श्वसन् श्वासं मुञ्चन् गतत्रपो निर्लज्जः हे नारायण ! जगत्पते ! हरे ! इतीत्थं वक्ति वदति तदेत्युत्तरेणान्वयः इयमेव भक्तियोगस्य निष्पत्त्यवस्थेति भावः ॥ ३५ ॥

तदा एव परिनिष्पन्नभक्तियोगावस्थायां पुमानुक्तविधभक्तियोगनिष्ठः महीयसा सर्वोत्तमेन भक्तियोगरूपेणोपायेन प्रारब्धावसाने मुक्तः समस्तबन्धनं भगवत्प्राप्तिविरोधिपूर्वोत्तरपुण्यपापात्मकाघरूपं यस्मात्तादृशो निर्दग्धो नितरां दग्धो बीजाऽनुशयः संसृतिमूलभूतकर्मवासनात्मको यस्य तस्य भगवतो भावः प्रकारः आकृतिरित्यर्थः । तस्य भावो भावनानुऽध्यानं तेनाऽनुकृतः आशयोऽन्तःकरणम् आकृतिर्विग्रहश्च यस्य भगवता समानरूप इत्यर्थः । अधोक्षजं भगवन्तमुपैति प्राप्नोति ॥ ३६ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

यया भक्त्या हरौ रतिमुपासनां लभते तया स्वरूपानन्दाऽनुभवलक्षणां रतिं लभत इति परम्परया योज्यम् ॥ ३३ ॥

(१) ध्यानात्मिकया भक्त्या प्रीत्यात्मकां प्रकृष्टां भावनां लभते इत्यान्ध्राक्षरमुद्रित पुस्तके ।

नृत्यादीनि कर्माणि कंसवधादीनि वीर्याणि उद्गानादिकं न सर्वभक्तसाधारणं तदुक्तम्—

"केचिद्भक्ताः प्रनृत्यन्ति गायन्ति च यथेप्सितम् ।
केचित्तूष्णीं भजन्त्येव केचिच्चोभयकारिणः" ॥

इति ॥ ३४ ॥ ३५ ॥

एतदेवाह— तद्भावेति । तस्य भावे यथा स्वरूपे भावोक्तिस्तस्यानुकृतेऽनुकूलत्वेन प्रकटिते आशयाकृती अन्तःकरणाकारौ यस्य स तथा कश्चिदुद्गानेनान्तरां भक्तिं प्रकटयति, कश्चिद्रोदनाश्रुपातकरणेन कश्चिन्नर्तनेन कश्चित्तूष्णीं भजनेनेति तस्य ब्रह्मणो भावो लीला तत्र यो भावो भक्तिस्तया रञ्जिताभिप्रायाकार इति वा स्थानाभिप्राय आशय इति वा निर्दग्धं कर्मबीजं यस्य स तथा स चानुशयोऽन्तःकरणं यस्य स तथा अनुशयः संसारो वा ॥ ३६ ॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

अथ तस्यैवोपायस्यैवाङ्गान्युक्त्वान्याह—एवमिति । एवं पूर्वोक्तगुरुशुश्रूषादिप्रकारेणैव न तु तदर्थपृथक्प्रयत्नेन निर्जितकर्मबीजलक्षणकामादिभिर्जनैः पुनरपि भक्तिः क्रियत एव ॥ ३३ ॥

निशम्येति त्रिकम् ॥ ३४—३६ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

रतेश्चिह्नान्याह, निशम्येति । कर्माणि दधिपयश्चौर्यादीनि गुणान् भक्तवात्सल्यादीन् वीर्याणि गोवर्द्धनोद्धरणकंसवधादीनि ॥ ३४ ॥

हरे ! जगत्पते ! नारायणेति वाचा वक्ति आत्मना मनसा च [illegible] तस्मिन् भावा दास्यसख्यादयस्तेषां भावना दासोऽहं सखाहमित्याद्यात्मनो मननं तेन अनुकृते अनुरूपीकृते आशयाऽऽकृती मनःशरीरे येन सः न च शरीरस्तद्भाव एव सम्भव आशङ्क्य इत्याह, निर्दग्धं पूर्वमेवाविनष्टं बीजं प्राकृती बुद्धिः अनुशयो विषयवासना च यस्य सः महीयसा अनुरागमार्गवता [illegible] अधोक्षजसंयोगं प्राप्नोति ॥ ३५—३६ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

एवं यया गुरुशुश्रूषणादिबह्वङ्गया वासुदेवे रतिं परां भक्तिं लभते मुमुक्षुः सापि निर्जितः षण्णामिन्द्रियाणां वर्गो यैस्तैरेव क्रियते न त्वजितेन्द्रियैरित्यन्वयः ॥ ३३ ॥

रतिशब्दोक्ताया परभक्तेर्लिङ्गानि वदन् तया सर्वबन्धविनिर्मुक्तो भवतीत्याह—निशम्येति त्रिभिः । वासुदेवस्य अतुल्यान् सर्वेश्वरत्वसर्ववेदैकवेद्यत्वसर्वशक्तित्वसर्वात्मत्वादीन् अनुपमान् गुणान् लीलातनुभिः स्वेच्छोपात्ताप्राकृतविग्रहावतारैः कृतानि कर्माणि वीर्याणि प्रभावांश्च निशम्य श्रुत्वा अतिहर्षेणोद्गताः पुलका अश्रूणि वा तैर्गद्गदं यथा भवत्येवं प्रोत्कण्ठः प्रकृष्टा उत्कण्ठा यस्य सः तथाभूतः यदा उद्गायति उच्चैर्गायति रौति जयकृष्णेत्यादीन् पुरुषान् शब्दान् करोति नृत्यति च ॥ ३४ ॥

आत्मनि परमात्मनि मतिर्यस्य यदा च ग्रहग्रस्त इव कश्चित्

अधोक्षजालम्भमिहाशुभात्मनः शरीरिणः संसृतिचक्रशातनम् ।
तद्ब्रह्म निर्वाणसुखं विदुर्बुधास्ततो भजध्वं हृदये हृदीश्वरम् ॥ ३७ ॥
कोऽतिप्रयासोऽसुरबालका ! हरेरुपासने स्वे हृदि छिद्रवत्सतः ।
स्वस्यात्मनः सख्युरशेषदेहिनां सामान्यतः किं विषयोपपादनैः ॥ ३८ ॥
रायः कलत्रं पशवः सुतादयो गृहा मही कुञ्जरकोशभूतयः ।
सर्वेऽर्थकामाः क्षणभङ्गुरायुषः कुर्वन्ति मर्त्यस्य कियत्प्रियं चलाः ॥ ३९ ॥
एवं हि लोकाः क्रतुभिः कृता अमी क्षयिष्णवः साऽतिशया न निर्मलाः ।
तस्माददृष्टश्रुतदूषणं परं भक्त्यैकयेशं भजतात्मलब्धये ॥ ४० ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

आत्मानं भगवद्दासत्वेन कृतार्थं मत्वा हसति क्वचिच्च भगवन्तं दुर्दर्शं मत्वा स्वकृतसाधनानां तत्कृपां विनाऽकिञ्चित्करत्वं च मत्वा आक्रन्दते रोदिति क्वचिच्च भक्तवत्सलत्वदीनबन्धुत्वशरण्यत्वपतितपावनत्वादीन् भगवद्गुणान् स्मृत्वा तेनैव भजनं दृढविश्वासेन ध्यायति क्वचिच्च गता भगवन्नामोच्चारणादिकृत्वोच्चारी अमङ्गला अपगता लज्जा यस्य सः हे हरे ! इत्यादि वक्ति ॥ ३५ ॥

तदा प्रारब्धक्षये मुक्तानि समस्तानि बन्धनानि यस्य सः निर्दग्धबीजकः संसृतिहेतुः अनुशयः समारम्भः अनाद्यविद्यकस्य स तस्य भगवतो भावः कार्यकारणविभिन्नप्राकृतविलक्षणस्वरूपगुणविग्रहवत्त्व तस्य भावो ध्यानं तेन अनुकृतोऽनुयोजितः आशयोऽन्तःकरणं तदुपलक्षितप्राकृतत्वम्... आकृ- निरप्राकृतविग्रहश्च यस्य सः भक्तिप्रयोगेण भक्तिरेव प्रकृष्टयोगेन अधोक्षजं भगवन्तं प्राप्नोति "निरञ्जनः परमं साम्यमुपैति" "इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः । सर्गेऽपि नोपजायन्ते प्रलये न व्यथन्ति च" ॥ इति श्रुतिस्मृतिप्रसिद्धं भगवत्साधर्म्यलक्षणं मोक्षं प्राप्नोतीत्यर्थः ॥ ३६ ॥

भाषा टीका ।

इस प्रकार जितेन्द्रिय होकर जगन्नियन्ता भगवान वासुदेव के विषय भक्ति करे, कि जिससे रति को प्राप्त हो ॥ ३३ ॥

भगवान में रति प्राप्त होने पर, भगवान ने लीला-शरीर को धारण कर जो कर्म किये, उन कर्म वीर्य और गुणों को सुनकर जब अति हर्ष से पुलकित गात्र और अश्रुओं से गद्गद कण्ठ होजाता है तब मुक्त कंठ होकर उच्चस्वर से गान करता है रोता है, और नाचता है ॥ ३४ ॥

जब ग्रहग्रस्त सरीखा हो जाता है तब कभी हँसता है कभी आक्रोश करता है, किसी समय ध्यान करता है, किसी समय मनुष्यों को दण्डवत करता है, कभी बड़ी श्वास लेता हुआ परमात्मा में मन लगा कर, हे हरे ! हे जगत्पते ! हे नारायण ! इस प्रकार निर्लज्ज होकर नाम सङ्कीर्तन करता है ॥ ३५ ॥

पुरुष जब ऐसा हो जाता है तब समस्त बन्धनों से छूटकर भगवान की चेष्टाकी भावनासे भावित हुआ अन्तःकरण और शरीर जिसका ऐसा, और महान् भक्ति के प्रयोगसे निर्दग्ध हो गया वासना रूप संसार का बीज जिसका ऐसा हो कर अधोक्षज श्रीहरिको प्राप्त होजाता है ॥ ३६ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

ननु किमत आह—अधोक्षजस्यालम्भः मनसा स्पर्शस्तु पादान्तरे तस्याऽऽश्रयणम् अशुभात्मनः अशुभो रागादियुक्त आत्मा मनो यस्य संसृतिचक्रशातनं तन्निवर्तकं बुधा विदुस्तदेव ब्रह्मणि निर्वाणं लयो मोक्षस्तदात्मकं सुखं विदुः हृदीश्वरमन्तर्यामिणम् ॥ ३७ ॥

भक्तिरायासेनेति च न मन्तव्यमित्याह—क इति । छिद्रवदाकाशवद्धृदि तिष्ठतः विषयाणामुपपादनैरर्जनैः किम् । तत्र हेतुः सर्वदेहिनां सामान्यतः विषयनिष्ठत्वे सूकरादिसाधारण्यापत्तेरित्यर्थः न चैवमादौ पौनरुक्त्यदोषः नारदोक्तानुवादरूपत्वादस्य प्रकरणस्य ॥ ३८ ॥

अनर्थकं विषयार्जनमित्याह—राय इति । अर्थाः क्षणभङ्गुरमायुर्यस्य तस्यैते कियत्प्रियं कुर्वन्ति तदुक्तमितिहासेषु "धनं हि पुरुषो लोके पुरुषं धनमेव वा । अवश्यमेकं त्यजति तस्मात्किं धनतृष्णया" इति ॥ ३९ ॥

"यन्न दुःखेन सम्भिन्नं न च ग्रस्तमनन्तरम् । अभिलाषोपनीतं च सुखं स्वर्गपदास्पदम्" इत्येवंभूताः स्वर्गादिभोगा अपि न सेव्या इत्याह, एवं हीति । क्षयिष्णुत्वे हेतुः क्रतुभिः कृता इति "तद्यथेह कर्मचितो लोकः क्षीयत एवमेवामुत्र पुण्यचितो लोकः क्षीयते" इति श्रुतेः । अत एव

श्रीमद्वल्लभाचार्यकृतभावार्थदीपिका ।

पुण्यतारतम्येन सातिशयाः न च निर्मलाः स्पर्धादिमत्त्वात् न विद्यते दृष्टं श्रुतञ्च दूषणं यस्मिन् ॥ ४० ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

उपैतु तत्' किमत आह—अधोक्षजेति । इह लोकेऽशुभात्मनस्तापत्रयदुःखितमनसः शारीरिणः संसृतिचक्रं चक्रवत्परिवर्त्तमानानिष्टरूपा संसृतिस्तस्याः शातनं निवर्त्तकमधोक्षजस्यालम्भः स्पर्शः प्राप्तिरित्यावत् एवं भगवत्प्राप्तेरनिष्टनिवर्त्तकत्वमुक्तम्. अथेष्टप्रापकत्वमाह—तदधोक्षजालम्भनमेव ब्रह्मनिर्वाणसुखं ब्रह्मसम्बन्धि यन्निर्वाणं निर्वाणं मोक्षस्तद्दशायामनुभूयमानमित्यर्थः । तत्सुखं यस्मिंस्तादृशं, यद्वा, निर्वाणं निरतिशयानन्दो ब्रह्मरूपं यन्निर्वाणं तस्य सुखमनुभवरूपं यस्मिंस्तादृशं बुधाः ब्रह्मविदो विदुः यतोऽनिष्टनिवर्त्तनेष्टप्रापणरूपभगवत्प्राप्तिसाधनभूतस्तद्भक्तियोगस्ततो यूयं हृदये हृद्गे "गय गतौ" हृदयस्थानगते जीवे इत्यर्थः । "हृदिह्ययमात्मा प्रतिष्ठितः" इति श्रुतेः । तस्मिन्नीश्वरं नियन्तृतयावस्थितं हृदयपुण्डरीके भगवन्तं भजध्वम् अनेन "तमात्मस्थं येऽनुपश्यन्ति धीरास्तेषां सुखं शाश्वतं नेतरेषाम्" इति श्रुत्यर्थः. प्रत्यभिज्ञाप्यते ॥ ३७ ॥

नन्वेवं निरतिशयानन्दस्थिरफलभगवत्प्राप्तिसाधनधर्मानुष्ठानस्य दुःसाध्यत्वकृच्छ्रत्वेन "न ह्यच्युतं प्रीणयतो बह्वायासः" इत्युपक्रम्य तद्भजनद्नुष्ठानप्रकारकथनेन तदाशङ्कां निरस्याथैवमस्मिन् सुकरे भगवद्धर्मानुष्ठाने न कोऽपि प्रयास इत्युपसंहरन् वैराग्यजननाय स्वर्गादिलोकाद्याचार्याधीनपुरुषार्थस्य सातिशयात्वास्थिरत्वं वक्तुं तावद्दृष्टान्ततया ऐहिकस्यैहिकलौकिकसुखस्य तुच्छत्वमाह—क इति द्वाभ्याम् । हे असुरबालकाः ! स्वे स्वकीये हृत्पद्मे छिद्रवदाकाशवत् ततो वर्त्तमानस्य सत्यस्य सत्यकामत्वादिनिखिलविभूतिगुणाश्रयस्य आत्मनः परमात्मनः अशेषदेहिनां सामान्यतः साधारणतया सख्युः "द्वा सुपर्णा" इत्यादिश्रुत्युक्तसख्युस्तस्य हरेरुपासनेन कोऽयं नाम प्रयासः न कोऽपीत्यर्थः । विषयाणां शब्दादीनामुपपादनैरर्जनैः किम् ? न किमपि तेऽतितुच्छा इति भावः । छिद्रवत्खम् इत्यनेन "यावान्वा अयमाकाशस्तावानेषोऽन्तर्हृदय आकाशः" इति दहरविद्योदितभूताकाशदृष्टान्तोऽभिमतः तत्र हि भूताकाशस्येवाग्निवायुसूर्याचन्द्रमोविद्युन्नक्षत्रादिकृत्स्नजगदाधारत्वं हृत्पुण्डरीकस्थस्य दहराकाशस्य प्रतिपादितम् "उभावग्निश्च वायुश्च सूर्याचन्द्रमसौ विद्युन्नक्षत्राणि यच्चास्येहास्ति यच्च नास्ति सर्वं तदस्मिन् समाहितम्" इति. एवं हृत्पुण्डरीके दहराकाशरूपेण वर्त्तमानस्यापहतपाप्मत्वादिगुणाष्टकयुक्तस्य हरेरुपासनं सुशकमित्यभिप्रायः ॥ ३८ ॥

"किं विषयोपपादनैः" इत्यनेन सूचितं विषयाणामल्पास्थिरत्वसातिशयत्वरूपं तुच्छत्वमुपपादयति—राय इति । रायो धनानि सुतादय इत्यादिशब्देनान्ये पित्रादयो देहानुबन्धिनो विवक्षिताः मही क्षेत्रम् आजीविकारूपं विषयो वा कुञ्जरा गजास्तेषां कोशः शाला धनकोशस्य राय इत्यनेनोक्तत्वात् भूतय. भोग्यभोगोपकरणादिसमृद्धयः सर्वे च एते अर्थकामाः काम्यमाना अर्थाः क्षणेनाल्पकालेन क्षणभङ्गुरमायुरवस्थानं येषां ते अत एव चञ्चला अस्थिराः मर्त्यस्य मरणशीलस्य पुंसः कियत्प्रियं सुखं कुर्वन्ति जनयन्ति न कियदपि, सातिशयमस्थिरमल्पमेव सुखं जनयन्ति न तु निरतिशयमनन्तं स्थिरञ्चेत्यर्थः ॥ ३९ ॥

अथैतद्दृष्टान्तेन स्वर्गादेरपि सातिशयाल्पास्थिरत्वान्याह—एवं हीति । यथा रैप्रभृतिजन्यानि सुखानि तुच्छानि एवं क्रतुभिर्यागादिकर्मभिः कृताः सञ्चिता अमी स्वर्गादयो लोका अपि क्षयिष्णवो नश्वराः सातिशयाः न निर्मला अनिर्मला दुःखमिश्राश्चेत्यर्थः । अत्र "तद्यथेह कर्मचितो लोकः क्षीयते एवमेवामुत्र पुण्यचितो लोकः क्षीयते, प्लवा ह्येते अदृढा यज्ञरूपाः, परीक्ष्य लोकान् कर्मचितान्" इत्यादि श्रुत्यर्थोऽभिप्रेतः । यत एवं तस्माददृष्टश्रुतदूषणं न विद्यते दृष्टं श्रुतं वा दूषणं यस्य श्रुतिस्मृतिभ्यामदूषितम्, किन्तु प्रशस्तमित्यर्थः । तं भक्त्यैवोपायेन लभ्यं परं परमपुरुषमात्मलब्धये भजत आत्मलाभाय आत्मलब्धये आत्मनः सत्तायै भजत । अन्यथा सत्यपि आत्मनोऽस्ततः स्थावरत्वादिप्राप्त्या असत्प्रायतैव स्यात् इति भावः ॥ ४० ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

भगवत्कथा निर्वाणसुखजननीत्याह, अधोक्षजेति । अधोक्षजालम्भं संसृतिचक्रशातनं नाशनं तद्धरिविषयकथाकथनं ब्रह्मनिर्वाणसुखं ब्रह्मणोऽनुग्रहात्प्राप्य मुक्तिसुखं विदुरिति यतो हृदयस्थितं जीववत् हृदि स्थितमीश्वरं भजध्वमित्यन्वयः "योऽयं बहिर्धा पुरुषादाकाशो यो वै स बोधमयो यमन्तः पुरुष आकाशो यो वै सोऽन्तः पुरुष आकाशो यं वा वसगो यमन्तर्हृदय [illegible]" इति श्रुतेः । हृदीश्वरं मनः प्रेरकत्वेन तत्स्वामिनं "स हि सर्वमनोवृत्तिप्रेरकः समुदाहृतः" इति वाक्याद्वा ॥ ३७ ॥

भगवदुपासनं दवीयस्त्वेन बहुपायसाध्यत्वेन भागीरथीस्नानवत् दुःसाधनं किं नेत्याह, कोऽतिप्रयास इति । अस्यात्मनो जीवस्य स्वे स्वाधीने हृदि छिद्रवदाकाशवत्ततः स्थितस्य हरेरुपासने कोऽतिप्रयासः न कोऽपि सर्वगतत्वेन समीपस्थत्वात् "तद्दूरे तद्वन्तिके" इति श्रुतेः । अशेषदेहिनां सामान्यतः साधारणत्वेन हृदिस्थितत्वेन सख्युः तस्माद्विषयोपपादनैः किम् ? श्लाघ्यैरिति शेषः ॥ ३८ ॥

भक्तेरन्तरङ्गसाधनं वैराग्यमेवेत्याशयेनाह, राय इति ॥ ३९ ॥

विहितयज्ञसाध्यत्वेन स्वर्गादेर्नित्यत्वं सम्भाव्यमिति, नेत्याह, एवमिति । एवं मर्त्यलोकवदनिर्मला' प्राकृतत्वात् न दृष्टं श्रुतं दूषणं यस्य स तथा तं सहचरीभूतवैराग्येणैकया मुख्यया आत्मलब्धये स्वरूपानन्दानुभवलक्षणमुक्तिप्राप्त्यर्थमात्मनो देहादेर्विविच्य स्वरूपज्ञानलक्षणलाभाय वा ॥ ४० ॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

नन्वधोक्षजालम्भे सति संसारो विद्यते न वा तत्राह—अधोक्षजेति । शातनमिति शीलार्थे ल्युट् । तत्स्वभावतः स्वत एव सोऽपि यातीति भावः ॥ ३७ ॥

सामान्यतः सख्युः "सयुजौ सखायौ" इत्युक्तेः ॥ ३८—३९ ॥

आत्मलब्धये आत्मनः स्वस्यैवेशस्य लब्धये । यद्वा आत्मनो लब्धये भजत । अन्यथात्मानं नाशयिष्यथ इति भावः ॥ ४०—४७॥

———

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

ननु, ब्रह्मनिर्वाणसुखमेव पुरुषार्थस्तत्र इति प्रसिद्धिः । सत्यं तदपि अधोक्षजसंयोगसुख एवान्तर्भवतीत्याह, अधोक्षजस्यालम्भ मनसा ईषत् स्पर्शं साक्षात् प्राप्तिं वा संसृतिचक्रस्य शातनं निवर्त्तकं विदुर्जानन्ति तदेव ब्रह्मनिर्वाणसुखं च अधोक्षजस्यैव ब्रह्मत्वात् तच्चरणमाधुर्यानुभवस्यैव परमानन्दरूपत्वेन निर्वाणसुखस्वरूपत्वात् तत्र शान्त्यादिभावत्वेन [illegible] तु सुखमधिकमपारमेव यथा [illegible] स्वाभाविक आनन्दस्तस्मात् [illegible] आनन्द [illegible] सर्वजनदुर्भगोपि ममनोरथः [illegible] ब्रह्मनिर्वाणरूपोऽप्येव परमानन्दावधित्वेन [illegible] तदा किं वक्तव्यमानन्दपारावारपरस्सहस्र[illegible]गोत्कर्षमहामहत्वम् अतएवोक्तम् "त्वत्साक्षात्करणाह्लाद" इत्याद्यन्यत्र च "ब्रह्मानन्दो भवेदेष चेत् परार्द्धगुणीकृतः । नैति भक्तिसुखाम्भोधेः परमाणुतुलामपि" इति अधोक्षजालम्भमिति पाठे [illegible] विषयालम्बनो यत्र तम् [illegible] हृदीश्वरं हृदयनायकमिति दास्यादिभावविशिष्टा भक्तिर्व्यञ्जिता ॥ ३७ ॥

सर्वश्रेष्ठाया अपि भक्तेः सुखसाध्यत्वमाह, कोऽतीति । छिद्रवत् आकाशवत् आत्मनो जीवस्य सख्युः "सयुजौ सखायौ" इति श्रुतेः न हि सख्युरुपासने किञ्चित् कष्टमिति भावः । उपास्यस्य स्वतो विद्यमानत्वात् प्रियत्वाच्च उपासनस्य च श्रवणादिरूपत्वात् तत्साधनानां श्रवणादीनाञ्च स्वत एव विद्यमानत्वात् नहि कुतश्चन काचन तत्सामग्री आनेतव्येति भावः । वरं नरकसाधनेऽपि धर्मोऽस्तीति व्यञ्जयन् वैषयिकसुखप्रवृत्तिं निन्दति, विषयाणां स्रक्चन्दनवनितादीनाम् उपपादनैर्द्रव्यादिनोपार्जनैः किम् ? तत्र हेतुः सर्वदेहिनां सामान्यतः विषयनिष्ठत्वे सूकरादिसाधारण्यापत्तेरिति भावः ॥ ३८ ॥

न च कामिनां वैषयिकं सुखमपि वस्तुतोऽस्तीत्याह, रायो धनानि अर्थाश्च कामाश्च ॥ ३९ ॥

स्वर्गादिभोगा अपि न सेवार्हा इत्याह, एवं हीति । सातिशयाः "सयथेह कर्मचितो लोकः क्षीयते एवमेवामुत्र पुण्यचितो लोकः क्षीयते" इति श्रुतेः पुण्यतारतम्येन सातिशयाः स्पर्द्धादिमयत्वाच्च न निर्मलाः आत्मलब्धये आत्मकर्तृकहरिप्राप्तये परमात्मप्राप्तये वा यद्वा आत्मरूपरत्नस्य प्राप्त्यै अन्यथा तत्स्वर्गनरकादिकर्द्दमे क्षिप्तं नष्टमेव जानीतेति भावः ॥ ४० ॥

———

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

यतः अधोक्षजस्य आलम्भम्भजनीयतया ग्रहणं अशुभे संसारे आत्मा यस्य तस्य बद्धजीवस्य संसृतिचक्रशातनं जन्ममरणप्रवाहनिवर्त्तकम् । तत्तस्मादधोक्षजालम्भात् शरीरिणां ब्रह्मणाऽधोक्षजेन सह निर्वाणं निर्गता वाणाः उपद्रवा यस्मात्तथाविधं सुखं मुक्त्यानन्दं बुधा विदुः अतः हृदये हृदीश्वरमधोक्षजं भजध्वम् ॥ ३७ ॥

अधोक्षजस्य सुकरत्वमाह, हे असुरबालकाः ! अशेषदेहिनां हृदि [illegible] सतो विद्यमानस्यापि स्वे हृदि तु स्वकीये अन्तर्हृत् [illegible] तु छिद्रवत् छिद्रे इव स्वतः [illegible] यथा महता यत्नेन [illegible] प्रविष्टो भवति [illegible] [illegible] हरेः आत्मनस्तीव्रभक्त्यावेशादौ स्वैरव्याप्तिः [illegible] कृत्य[illegible] उपासने को ऽतिप्रयासः [illegible] विषयाणामर्जनैस्तदुपासनविरोधिभिः किं प्रयोजनम् ? [illegible] दीत्यर्थः ॥ ३८ ॥

[illegible] निष्प्रयोजनत्वं दर्शयति—राय इति । [illegible] रायो धनानि [illegible] सर्वे अर्थाश्च कामाश्च [illegible] क्षणभंगुराः किमर्थं कुर्वन्ति ? न किमपीत्यर्थः । तथा[illegible] "सर्वे क्षयान्ता निचयाः पतनान्ताः समुच्छ्रयाः । संयोगा विप्रयोगान्ताः मरणान्तं हि जीवितम्" इति भगवतोक्तं "ये हि संस्पर्शजा भोगा दुःखयोनय एव ते । आद्यन्तवन्तः कौन्तेय ! न तेषु रमते बुधः" इति ॥ ३९ ॥

यथा ऐहिकाः धनादिपदार्थाः चलाः एवं अमी स्वर्गादयः क्रतुभिः कृता निर्मिताः लोकास्तेऽपि चला एव सातिशयाः क्रतुतारतम्यतोऽतिशयेन युक्ताः हर्षशोकप्रदा इत्यर्थः । न निर्मलाः मलिनाश्च यस्मादेवं तस्मात् परं निरतिशयानन्दनिधिं न विद्यते दृष्टं श्रुतं च दूषणं यस्मिंस्तम् ईशं सर्वनियन्तारम् आत्मलब्धये तत्प्राप्त्यर्थम् एकया सर्वेभ्यः साधनेभ्यः श्रेष्ठया भक्त्या भजत ॥ ४० ॥

———

भाषा टीका ।

रागादियुक्त मनवालों के संसार चक्र का नाश करने वाला केवल भगवानही का ध्यान है । उसी को बुध लोग निर्वाण ब्रह्म सुख जानते हैं, तिसी कारणसे अपने हृदयमें हृदीश्वर (अन्तर्यामी) श्रीहरि को भजो ॥ ३७ ॥

हे असुर बालको ! आकाशवत् हृदयमें रहने वाले हरिके उपासनमें कौनसा प्रयासहै । क्योंकि वह सामान्यसे समस्त

यदध्यर्थेह कर्माणि विद्वन्मान्यसकृन्नरः ।
करोत्यतो विपर्यासममोघं विन्दते फलम् ॥ ४१ ॥
सुखाय दुःखमोक्षाय सङ्कल्प इह कर्मिणः ।
सदाप्नोतीहया दुःखमनीहायाः सुखावृतः ॥ ४२ ॥
कामान्कामयते काम्यैर्यदर्थमिह पूरुषः ।
स वै देहस्तु पारक्यो भङ्गुरो यात्युपैति च ॥ ४३ ॥
किमु व्यवहितापत्यदारागारधनादयः ।
राज्यं कोशगजामात्यभृत्याप्ता ममतास्पदाः ॥ ४४ ॥
किमेतैरात्मनस्तुच्छैः सह देहेन नश्वरैः ।
अनर्थैरर्थसङ्काशैर्नित्यानन्दमहोदधेः ॥ ४५ ॥
निरूप्यतामिह स्वार्थः कियान्देहभृतोऽसुराः ! ।
निषेकादिष्ववस्थासु क्लिश्यमानस्य कर्मभिः ॥ ४६ ॥
कर्माण्यारभते देही देहेनात्मानुवर्तिना ।
कर्मभिस्तनुते देहमुभयं त्वविवेकतः ॥ ४७ ॥
तस्मादर्थाश्च कामाश्च धर्माश्च यदपाश्रयाः ।
भजतानीहयात्मानमनीहं हरिमीश्वरम् ॥ ४८ ॥

भाषा टीका ।

देहियों का सखा और आत्मा है, उसीका उपासन करो, और विषयों के उपपादनसे क्या प्रयोजन है ॥ ३८ ॥

द्रव्य स्त्री पशु पुत्रादि गृह पृथ्वी हाथी खजाना संपदा ये, और सब चीजें, च्छु भगुर आयुवाले इस प्राणी का कितना प्रिय करते हैं ? क्योंकि आप भी चल है ॥ ३९ ॥

जैसे इस लोक के पदार्थ नाशमान है ऐसे ही परलोक में यज्ञ यागादि से संपादित जो लोक है वे भी सब नाशमान और सातिशय है ( अर्थात् ऐसे तरतम भाव वाले है कि जिसमे एक दूसरे के वैभव को देख कर जला करें ) तस्मात् जिसका दोष कभी देखने सुनने में नहीं आया अपने आत्म लाभ के लिये उसी परमात्मा को भक्ति से भजो ॥ ४० ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

किञ्च यदध्यर्थं यत्सङ्कल्प्य अतः सङ्कल्पिताद्विपर्यासम् विपरीतं फलममोघमवश्यं प्राप्नोति ॥ ४१ ॥

तदेव दर्शयति, सुखायेति । ईहया इच्छया क्रियया वा यः पूर्वमनीहाया हेतोः सुखेनावृतो व्याप्त आसीत्स ईहया दुःखमाप्नोत्येव ॥ ४२ ॥

किञ्च कामान् भोगान् काम्यैर्विषयैः कर्मभिर्वा पारक्यः श्वादिभोग्यो न त्वात्मीयो भंगुरश्च ॥ ४३ ॥

किमु देहाद्व्यवहिता अपत्यादयो ममताविषयाः पारक्या इति वक्तव्यम् ॥ ४४ ॥

किञ्च स्वयं पुरुषार्थरूपस्य किमेतैरतितुच्छैरित्याह, किमेतैरिति ॥ ४५ ॥

भोगावसराभावाच्चैतैः क उपयोग इत्याह, निरूप्यतामिति । प्राचीनैः कर्मभिः क्लिश्यमानस्य कर्मभिः कियान्स्वार्थ इति वाऽन्वयः ॥ ४६ ॥

ननु, कर्मसु समाप्तेषु भोगावसरः स्यात्तत्राऽऽह—कर्माणीति । न चेदं कर्म तस्य फलं देहादिकञ्च परमार्थ इत्याह, उभयं कर्म च देहं च अविवेकतोऽज्ञानेनैव तनुते ॥ ४७ ॥

अर्थादयो यदपाश्रया यदधीनाः ॥ ४८ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

संसारस्य प्रवाहरूपेण नित्यत्वान्महदेर्ज्ञानमन्तरेण निवृत्तिः कथमित्याशयेनाह, कर्माणीति । आत्मानुवर्तिना परमात्माधीनेन कर्मदेहश्चेत्युभयमविवेकतोऽज्ञानात् ॥ ४७ ॥

नन्वीश्वरसेवायां भक्तिरेव प्रयोजिका चेत्तार्थादिना प्रयोजनमित्याशङ्कां परिहरन्नुपसंहरति, तस्मादिति । अर्थादेहरि-विषयत्वे साफल्यं भवतीत्यर्थः । ननु, अनीहं चेष्टारहितमित्यनीह-शब्दार्थं परित्यज्यान्यार्थकल्पने किं प्रमाणम् उक्तं हि प्रमाणमिति चेन्न, तस्य बह्वर्थत्वाच्चिन्त्येन स्वाभिप्रेतार्थत्वस्वेहात् "करणं कारणं कार्यं साधनेऽनुष्ठानादिषु" इत्युक्तोऽपीति तत्राह, अनीहमिति. असाध्यक्रियारहितमित्यनीहमित्यस्योक्तयर्थं (१) अप्रयत्नेनेति विशेषणाच्च असाध्यक्रियारहितमेवोच्यते—

"स्पृहायुदारसत्त्वेऽपि ध्यानपद्मासनादिषु ।
अनवन्धे नास्त्यनेके शीलने कर्मणीहिते" ॥

इत्युत्तरवाक्ये कार्येऽपि प्रयोगाच्च ॥ ४८ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

अनीहया निरुपाधिकया अनीहं नैव निरुपाधिकृपाकरम् । "अहं त्वकामस्त्वद्भक्तस्त्वं च स्वाम्यनपाश्रयः" इति वक्ष्यमाणात् ॥ ४८—५० ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

यदर्थं सत्सङ्कल्पय अत' सङ्कल्पितात् विपर्यासं विपरीत फलममोघमवश्यं प्राप्नोति ॥ ४१ ॥

अनीहाया हेतो. सुखावृत: सुखपरिपूर्ण: स्यात् ॥ ४२ ॥

काम्यै: कर्मभि: अपैति नश्यति उपैति पुनरपि दु:खदानार्थम् उत्पद्यमानानि ॥ ४३—४४ ॥

आत्मन: स्वस्य नित्यो भजनरूप आनन्दरसोदधिर्यस्य तस्य भक्तजनस्य ॥ ४५ ॥

क्लिश्यमानस्येति भोगेऽवसर एव नास्तीति भाव: ॥ ४६ ॥

देहेन मानुषशरीरेण कर्मसाधकेन देहं स्वर्गिशरीरम् उभयं तद्देहद्वयं अविवेकतः तदुभयस्य अहं कर्म कुर्वे इति. अहं कर्मफलं स्वर्गसुखमश्ने, इत्यभिमानमूलत्वात् तदभिमानस्याऽविवेकमूलत्वात् आत्मनश्च देहद्वयातिरिक्तत्वात् ॥ ४७ ॥

नहि विवेक एव कस्तत्राह, तस्मादिति । यदपाश्रया यदधीनाः अनडुहां वृषाणां कर्तृत्वभोक्तृत्वादयः स्वाम्यधीना इवेत्यर्थः अनीहया कामनाराहित्येन अनीहं निरपेक्षम् ॥ ४८ ॥

(१) तात्पर्योक्तमिदम् ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

भगवद्भजनातिरिक्तकर्मगतिमाह, यदर्थं इति । ययोः सुख-दुःखमोक्षयोरर्थं कर्माणि असकृत्करोति अतः विपर्यासं विपरीतं फलममोघं विन्दते ॥ ४१ ॥

एतदेव प्रपञ्चयन् कर्मफलेहा दुःखदा कर्मफलानीह सुखदेत्याह—सुखायेति । ईहया कर्मफलेच्छया दुःखमाप्नोति, न सुखम्. अतोऽनीहाया. कर्मफलानीहात: सुखावृत. सुखव्याप्तो भवति॥४२॥

पुरुषो यदर्थं कामान् भोगान् काम्यैः कर्मभिः कामयते स देहस्तु पारक्यः परेषां पितृभ्रातृप्रदादिममताविषयः भङ्गुरोऽनित्यश्च यतो याति जायते उपैति नाशं प्राप्नोति च ॥ ४३ ॥

यद्यव्यवहितोऽहन्तास्पदो देहः पारक्यादि दोषवान् तदा व्यवहिता: ममतास्पदा अपत्यादयः पारक्यादिदोषवन्त इति किन्तु वक्तव्यम् ॥ ४४ ॥

किञ्च अनर्थैरपुरुषार्थरूपै: अर्थसंकाशै: पुरुषार्थवदाभासमानै: पतैरपत्यदारादिभि' देहेन सह नश्वरैरनित्यै: नित्यानन्दमहोदधे: अपरिच्छिन्नपरमानन्दनिधे: श्रीभगवत: स्वरूपस्थित: अंशभूतस्य आत्मन. प्रत्यगात्मन. किम् ? न किमपि प्रयोजनमित्यर्थः ॥ ४५ ॥

प्राचीनै: कर्मभि: निषेकादिष्ववस्थासु क्लिश्यमानस्य देहभृतो जीवस्य इह संसारे कियान् स्वार्थः तन्निरूप्यताम् ॥ ४६ ॥

देहेन कर्माणि आरभते देह तु कर्मभिरारभते एवमुभयं कर्मदेहयुग्मं अविवेकतो हेयोपादेयबोधाभावतस्तनुते न तु भगवद्भक्त्या युक्तो भवतीति भाव: ॥ ४७ ॥

अर्थादयो यदपाश्रया यदधीन' अनीहया ऐहिकामुष्मिकपदार्थ-वासनात्यागेन आत्मानमन्तर्यामिणम् "एषत आत्मान्तर्यामी" इति वेदप्रसिद्धम् अनीहं स्वतोऽवाप्तसमस्तकामत्वात् भोगेच्छारहितं भजत ॥ ४८ ॥

---

भाषा टीका ।

पंडित मानी मनुष्य जिस संकल्प से वार वार कर्म करता है उस सकल्पित पदार्थ को न प्राप्त होकर विपरीत फल को ही अवश्य प्राप्त होना है ॥ ४१ ॥

इस संसार में कर्म करने वाले पुरुष को सुख की प्राप्ति और दुःख छूटने का ही संकल्प रहता है परंच जब तक चेष्टा नहीं करता तब तक सुख में रहता है, और सुख के लिये चेष्टा करने से सदा दुःख ही को प्राप्त होता है ॥ ४२ ॥

पुरुष जिस देह के पोषण के लिये विषयों के द्वारा नाना प्रकार के भोगों की इच्छा करता है, वह देह तो पराया है अर्थात् श्वशृगालादिकों का भोग्य है, क्षण भंगुर है और आगमापायी है ॥ ४३ ॥

जब साक्षात् शरीर की यह दशा है फिर जो शरीर के संबंधि ममतास्पद हैं जैसे कि पुत्र स्त्री गृह धन राज्य कोश ( खजाना ) हस्ती अमात्य नौकर चाकर इत्यादि इन तुच्छों से आत्मा का क्या प्रयोजन होने वाला है, क्योंकि ? आत्मा तो

सर्वेषामपि भूतानां हरिरात्मेश्वरः प्रियः ।
भूतैर्महद्भिः स्वकृतैः कृतानां जीवसंज्ञितः ॥ ४९ ॥
देवोऽसुरो मनुष्यो वा यक्षो गन्धर्व एव च ।
भजन्मुकन्दचरणं स्वस्तिमान्स्याद्यथा वयम् ॥ ५० ॥
नालं द्विजत्वं देवत्वमृषित्वं वाऽसुरात्मजाः ! ।
प्रीणनाय मुकुन्दस्य न वृत्तं न बहुज्ञता ॥ ५१ ॥
न दानं न तपो नेज्या न शौचं न व्रतानि च ।
प्रीयतेऽमलया भक्त्या हरिरन्यद्विडम्बनम् ॥ ५२ ॥
ततो हरौ भगवति भक्तिं कुरुत दानवाः ! ।
आत्मौपम्येन सर्वत्र सर्वभूतात्मनीश्वरे ॥ ५३ ॥
दैतेया यक्षरक्षांसि स्त्रियः शूद्रा व्रजौकसः ।
खगा मृगाः पापजीवाः सन्ति ह्यच्युततां गताः ॥ ५४ ॥
एतावानेव लोकेऽस्मिन्पुंसः स्वार्थः परः स्मृतः ।
एकान्तभक्तिर्गोविन्दे यत्सर्वत्र तदीक्षणम् ॥ ५५ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां
वैयासिक्यां सप्तमस्कन्धे दैत्यपुत्रानुशासनं नाम
सप्तमोऽध्यायः ॥ ७ ॥

भाषा टीका ।

नित्याऽऽनन्द का महासागर है, और ये सब अर्थ सदा जान पड़ते हैं, और है अनर्थ तथा देह के साथ नष्ट होने वाले है, ॥ ४४—४५ ॥

प्रह्लाद कहते है कि–हे असुर पुत्रहो ! तुमही बतलाओ कि इस संसार में निषेक आदि संपूर्ण अवस्थाओं में कर्मों से क्लेशित इस देहधारी का कितना स्वार्थ है ॥ ४६ ॥

देही ( जीव ) स्वाधीन देह से कर्म करता है, तथा कर्मों से देह को प्राप्त होता है तथा देह और कर्म दोनों अविवेक से अर्थात् हेयोपादेय के अज्ञान से होते है ॥ ४७ ॥

तस्मात् अर्थ काम और धर्म ये सब जिसके अधीन हैं कर्मो की चेष्टा न कर के अपने आत्मा उस हरि ईश्वर को भजो ॥४८॥

———

श्रीधरस्वामिकृतभावार्थदीपिका ।

भूतानां प्राणिनाम् जीवसंज्ञितोऽन्तर्यामी ॥ ४९ ॥

असुराणामस्माकमत्राऽनधिकार इत्यपि न वाच्यमित्याह, देव इति पञ्चभिः ॥ ५० ॥ ५१ ॥

अमलया निष्कामया अन्यद्विडम्बनं नटनमात्रम् ॥ ५२ ॥ ५३ ॥

अच्युततामच्युतानन्दम् ॥ ५४ ॥

अध्यायद्वयोक्तमुपसंहरति, एतावानिति । तदीक्षणं गोविन्ददृष्ट्या सम्माननम् ॥ ५५ ॥

इति श्रीमद्भागवते महापुराणे सप्तमस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिकायाम्
सप्तमोऽध्यायः ॥ ७ ॥

———

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

अथ दैत्यकुमाराणां सर्वेषामात्मनां भगवद्भजनेऽनधिकार-शङ्कां निराकुर्वन्नमीषया भजनामेवानिष्टनिवृत्तिरिष्टप्राप्तिश्चेति सदृष्टान्तेनाह—सर्वेषामपीति द्वाभ्याम् । स्वकृतैः स्वसृष्टैर्महद्भिः

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

भूतैः पृथिव्यादिभिः कृतानां सृष्टानां भूतानां देवादीनां सर्वेषां भगवान् बीजसंज्ञित आदिकारणभूतः आत्मा अत एव निरतिशयप्रिय ईश्वरोऽन्तःप्रविश्य नियन्ता तावद्भगवान् सर्वेषां साधारण इति भावः ॥ ४९ ॥

अतो देवादिजातिविभागमन्तरेण यः कश्चिन्मुकुन्दचरणं भजन् स्वस्तिमानित्याह ऽनिष्टः प्रागेव स्यादेव यथा वयमिति वयमसुरा अपि भगवन्तं भजन्तः स्वस्तिमन्तो ऽभूम, तथेतरेऽपीत्यर्थः । यथा वयमिति दृष्टान्तस्वारस्याद्भगवतः सर्वभूतसाधारणत्वप्रतिपादनस्वारस्याच्च निरुपाधिकोऽकाविधात्मत्वादिसम्बन्धज्ञानपूर्वकमनन्यप्रयोजनेन भजन्तः स्वस्तिमन्तो भवेयुरन्यथा तु समीहितमाप्नुवन्ति इति सूचितम्. तथा च श्रुतिः "नान्यः पन्था अयनाय विद्यते" इत्यादिका ॥ ५० ॥

तदेतदुपपादयति–नालमिति द्वाभ्याम् । हे असुरात्मजाः ! द्विजत्वादयो मुकुन्दस्य प्रीणनाय प्रीतिजननाय नालं न प्रभवः किं त्वमलया अनन्यप्रयोजनया भक्त्यैव हरिः प्रीयते अन्यदुपायान्तरन्तु विडम्बनं नटनमात्रम् द्विजत्वमिति वर्णाधिक्योपलक्षणम् देवत्वमिति जात्याधिक्यस्य ऋषित्वमित्यतीन्द्रियद्रष्टृत्वादिरूपज्ञानाधिक्योपलक्षणम् बहुज्ञतेति तु शास्त्रजन्यज्ञानाधिक्यस्य वृत्तं पित्रादि परंपरागता सद्वृत्तिः ॥ ५१ ॥

दानं पात्रे वित्तत्यागः तपः कृच्छ्रादि इज्या यागः शौचं स्नानादिकृतं शुचित्वं व्रतानि प्राजापत्यादीनि ॥ ५२ ॥

यतो भक्त्यैव भगवान्प्रीयते नोपायान्तरेणातो हे दानवाः ! यूयमप्यात्मनः संसारबन्धहानिरिति सर्वभूतात्मन्यात्मनि भगवति ईश्वरे भक्तिमनन्यप्रयोजनां कुरुत कथंभूताः सर्वत्रात्मौपम्येन स्वात्मानुकूलत्ववदृष्ट्या स्वस्मिन्निवेश्वरशरीरभूतेषु सर्वेषु दययोपलक्षिताः भगवद्भक्तिं कुरुतेत्यर्थः ॥ ५३ ॥

किमेवं भजन्त केऽपि मुक्ता बभूवुरित्यपेक्षायां पापजातयोऽपि केनचिद्भगवत्सम्बन्धविशेषेण मुक्ताः किं पुनरेवं भजन्तो मुच्यन्ते इति वक्तव्यमित्याशयेनाह—दैतेया इति । रक्षांसि बककेश्यादयः स्त्रियः पूतनादयो व्रजौकसो नन्दादयः शूद्राश्चाण्डालादयः खगाः जटायुप्रभृतयः मृगाः मायामृगादयः एवंविधाः पापजीवा अच्युततां भगवत्साधर्म्यं इङ्गताः प्राप्नाः सन्ति हीति प्रसिद्धौ. त्रिकालज्ञत्वाद्भगवता प्रह्लादेनेदमुक्तम् ॥ ५४ ॥

अध्यायद्वयोक्तार्थं निष्कर्षेणोपसंहरति–एतावानिति । अस्मिँल्लोके पुंसां पर उत्कृष्टः स्वार्थः पुरुषार्थः एतावानेव कियान् यत् गोविन्दे भगवत्येकान्तभक्तिरनन्यप्रयोजना भक्तिर्यच्च सर्वेषु भूतेषु तदीक्षणं गोविन्देक्षणं भगवदात्मत्वदर्शनमित्येतावानेव निरतिशयपुरुषार्थसाधनभूत इत्यर्थः ॥ ५५ ॥

इति श्रीमद्भागवते महापुराणे सप्तमस्कन्धे
श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायाम्
सप्तमोऽध्यायः ॥ ७ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

हरेरेव भजने कारणमाह, सर्वेषामिति । व्यंजकत्वाद्बीजकृत इति शेषः "व्यञ्जनाज्जगतो विष्णुर्बीजं न परिणामतः." इति वचनाच्च बीजशब्दस्य विकारोर्थः अप्रयत्नेनेति "अविक्रियः स्वदृग्वश्य." इति श्लोकेः ॥ ४९—५० ॥

भूतानामुत्पत्त्यादिना भक्त्यभावे जातिविशेषो वृत्तादिविशेषोऽप्यकिञ्चित्कर इत्याह, नालमिति । वृत्तमाचारः "वृत्तं स्वरूपे चरिते" इति यादवः ॥ ५१—५२ ॥

आत्मौपम्येनात्मस्नेहवत्स्नेहेन ॥ ५३ ॥

वेदान्तादिशास्त्रानधिकारित्वेन पापजीवत्वं न तु पापकरणात् अच्युततां च्युतिवर्जनं मोक्षं गताः सन्ति हि यस्मात्तस्मात् मुकुन्दभक्तिरेव सम्पाद्या ॥ ५४ ॥

तात्पर्यात्पुनरेतदेव हि करणं श्रेय इत्याह, एतावानिति । तस्य हरेः सर्वसत्ताप्रदत्वेनावस्थितेरीक्षणं दर्शनं ज्ञानमिति यदीयं भक्तिरिति ॥ ५५ ॥

इति श्रीमद्भागवते महापुराणे सप्तमस्कन्धे
श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम्
सप्तमोऽध्यायः ॥ ७ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

नालमिति युग्मकम् ॥ ५१—५२ ॥

तत् इति सर्वत्र सर्वस्मिन् देशे काले च आत्मौपम्येन आत्मनि यथा आनुकूल्येन कायमनोवचनवृत्तिरूपं भजनं कुरुत तद्वदपि कुरुतेति ॥ ५३ ॥

व्रजौकसोऽत्र नीचसहपाठात् "किरातहूणान्ध्रपुलिन्द पुल्कसा आभीरकङ्का यवनाः खसादयः" इत्यादाविव गोपजीवना नीचजातिविशेषा एव आभीरा ज्ञेयाः । न तु "कृषिवाणिज्यगोरक्षाः कुसीदं तुर्यमुच्यते । वार्ता चतुर्विधा तत्र वयं गोवृत्तयोऽनिशम्" इतिवद्वैश्यभेदा इति विशेषः प्रतिपत्तव्यः ॥ ५४ ॥

तस्य भागवत एव ईक्षणं स्फूर्तिः "सर्वभूतेषु यः पश्येत्" इत्यादेः ॥ ५५ ॥

इति श्रीमद्भागवते महापुराणे सप्तमस्कन्धीये
श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे
सप्तमोऽध्यायः ॥ ७ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

यतः सर्वेषां देहस्य जीवस्य परमात्मा च प्रियश्च वस्तुतो हरिरेव तस्मात्तं भजतेत्याह, सर्वेषां देवतिर्यगादीनामपि आत्मा परमात्मा स एवेश्वरः स्वेनैव कृतैः कृतानामिति देहोपि तत्कारणकत्वात् स एव जीवसंज्ञा सञ्जाता यस्य सः जीवस्य तदीयतटस्थशक्तिरूपत्वात् । यद्वा सर्वेषां प्रियत्वादपि तमेव भजतेत्याह, सर्वेषां भूतानां यो जीवसंज्ञः जीवनामा ततोपि प्रियः ॥ ४९ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी।

यस्मादेवं तस्मात्सर्व एव भक्तिं कुर्युरित्याह, देव इति ॥५०॥

प्रीणनाय न अलं न समर्थमित्यर्थः। विडम्बनं पुनः प्रत्युत तिरस्कारकारणमित्यर्थः ॥ ५१ ॥ ५२ ॥

आत्मौपम्येनेत्यत्र सुखदुःखादिदृष्ट्येति शेषः ॥ ५३ ॥

नच भक्तिः सज्जात्यादिकमपेक्षत इत्याह, दैतेया इति। अच्युततां चिन्मयशरीरत्वेन अच्युनतुल्यत्वम् अच्युतता अच्युतिं गता कर्मिण इव न च्युता भवन्तीत्यर्थः। यदुक्तं काशीखण्डे—

नच्यवन्ते च यद्भक्ता महत्यां प्रलयापदि।
अतोऽच्युतोऽखिले लोके विद्वद्भिः परिगीयते॥

इति ॥ ५४ ॥

एकान्तभक्तिरनन्यभक्तिः यत् यस्यां भक्तौ सत्यां सर्वत्रैव स्थावरजङ्गमवस्तुषु तदीक्षणं भगवतो भावना परिपाकेन भगवदीक्षणं यदुक्तम्—

"नारायणमयं धीराः पश्यन्ति परमार्थिनः।
जगद्धनमयं लुब्धाः कामुकाः कामिनीमयम्"॥ इति.

यथायं प्रह्लादश्च स्तम्भेपि भगवन्तमपश्यत् ॥ ५५ ॥

इति सारार्थदर्शिन्याम् हर्षिण्याम् भक्तचेतसाम्।
सप्तमे सप्तमोऽध्यायः सङ्गतः सङ्गतः सताम् ॥ ७ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

स्वकृतैः स्वसृष्टैः महद्भिर्भूतैः पृथिव्यादिभिः कृतानां सर्वेषां सुरादीनाम् आत्मा अन्तर्यामी प्रियो हितकृच्चासौ ईश्वरो नियन्ता हरिरेव अतो जीवसंज्ञितः सः कश्चिदपि जन्मिपदार्थः देवादिनामको मुकुन्दचरणं भजन् स्वस्तिमान् स्यादित्युत्तरेणान्वयः ॥ ४९ ॥ ५० ॥

वृत्तं वर्णाश्रमक्रियात्मकम् ॥ ५१ ॥

व्रतानि नानातिथ्युपलक्षिततीर्थस्नानादीनि ॥ ५२ ॥

यथा मयि स्वांशभूते दासे भगवानन्तर्यामिरूपेण वर्त्तते तथा सर्वेषु भूतेष्वपि एवमात्मौपम्येन सर्वत्र वर्त्तमाने सर्वभूतानामात्मनि अन्तर्यामिणि भगवति भक्तिं कुरुत भूतद्रोहो नकार्यः किन्तु सर्वत्र हरिदृष्ट्या यथाशक्ति यथायोग्यमानुकूल्यं कुरुतेत्यर्थः ॥ ५३ ॥

यतो यस्यैव दैतेयादयः अच्युततां भगवद्भावापत्तिलक्षणां मोक्षं गताः सन्ति ॥ ५४ ॥

अध्यायद्वयोक्तार्थमुपसंहरति, एतावानिति। गोविन्दे भक्तिः सर्वत्र तदीक्षणं तदात्मकत्वदर्शनमित्येतावानेव स्वार्थः ॥ ५५ ॥

इति श्रीमद्भागवते महापुराणे सप्तमस्कन्धीये
श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे
सप्तमाध्यायार्थप्रकाशः ॥ ७ ॥

---

भाषा टीका।

अपने रचे हुए महाभूतों से निर्मित सर्व भूतों का आत्मा और प्रिय नियन्ता श्रीहरि है और अंतर्यामी भी वोही है ॥ ४९ ॥

देव हो असुर हो वा मनुष्य हो यक्ष हो अथवा गन्धर्व हो वा कोई भी हो, श्रीमुकुन्द के चरणारविन्द के भजन से स्वस्तिमान् होता है जैसे कि ? हम ॥ ५० ॥

हे असुरात्मजहो ! श्रीमुकुन्द की प्रसन्नता के लिये ब्राह्मणपना देवतापना अथवा ऋषिपना नहीं चाहिये तथा न वृत्त न बहुश्रुता न दान न तप न इज्या न शौच न बहुत से व्रत ये कुछ भी न चाहिये, क्योंकि ? हरि तौ केवल निर्मल भक्ति मात्र से प्रसन्न होते है, और तौ सब विडंबन ही है ॥ ५१-५२ ॥

हे दानव हो ! आत्मा की उपमा से सर्वत्र सर्व भूतात्मक ईश्वर ही है, तिसी हेतु से भगवान श्रीहरि में भक्ति करो ॥ ५३ ॥

दैत्य यक्ष राक्षस स्त्री शूद्र व्रजवासी खग मृग और बहुत से पापी जीव भी हरि भक्त होकर अमृतत्व को प्राप्त हो गये ॥ ५४ ॥

इस लोक में इतना ही पुरुषों का परम स्वार्थ है कि गोविंद में एकांत भक्ति वाला होकर सर्व जगत को गोविन्द दृष्टि से देखे ॥ ५५ ॥

इति श्रीमद्भागवत महापुराण सप्तमस्कन्ध, सप्तम अध्याय
की भागवताचार्यकृत भाषा टीका
समाप्त ॥ ७ ॥

---

इति श्रीमद्भागवते महापुराणे सप्तमस्कन्धे सप्तमोऽध्यायः ॥ ७ ॥

## ॥ अष्टमोऽध्यायः ॥

नारद उवाच ।

अथदैत्यसुताः सर्वे श्रुत्वा तदनुवर्णितम् ।
जगृहुर्निरवद्यत्वान्नैव गुर्वनुशिक्षितम् ॥ १ ॥
अथाचार्यसुतस्तेषां बुद्धिमेकान्तसंस्थिताम् ।
आलक्ष्य भीतस्त्वरितो राज्ञ आवेदयद्यथा ॥ २ ॥
श्रुत्वा तदप्रियं दैत्यो दुस्सहं तनयाऽनयम् ।
कोपावेशचलद्गात्रः पुत्रं हन्तुं मनो दधे ॥ ३ ॥
क्षिप्त्वा परुषया वाचा प्रह्लादमतदर्हणम् ।
आहेक्षमाणः पापेन तिरश्चीनेन चक्षुषा ॥ ४ ॥
प्रश्रयावनतं दान्तं बद्धाञ्जलिमवस्थितम् ।
सर्पः पदाऽऽहत इव श्वसन् प्रकृतिदारुणः ॥ ५ ॥

हिरण्यकशिपुरुवाच ।

हे दुर्विनीत ! मन्दात्मन् ! (१) कुलभेदकराधम ! ।
स्तब्धं मच्छासनोद्धूतं नेष्ये त्वाऽद्य यमक्षयम् ॥ ६ ॥
क्रुद्धस्य यस्य कम्पन्ते त्रयो लोकाः सहेश्वराः ।
तस्य मेऽभीतवन्मूढ ! शासनं किम्बलोऽत्यगाः ॥ ७ ॥

प्रह्लाद उवाच ।

न केवलं मे भवतश्च राजन्स वै बलं बलिनां चापरेषाम् ।
परेऽवरेऽमी स्थिरजङ्गमा ये ब्रह्मादयो येन वशं प्रणीताः ॥ ८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

अष्टमेऽतिरुषा सूनुं निघ्नन् दैत्यो हतः स्वयम् ।
आविर्भूय नृसिंहेन स च ब्रह्मादिभिः स्तुतः ॥ १ ॥
अन्तः कृपासुधापूर्णो बहिःक्रोधो नृकेसरी ।
दैत्येन्द्रमरिभावेन भजन्तं समभावयत् ॥ २ ॥

एकान्तसंस्थितां प्रत्यङ्निष्ठाम् यथा यथावत् ॥ १ ॥ २ ॥

स च पुत्रं हन्तुं मनोदधे कथम्भूतः कोपस्यावेशेनोद्रेकेण चलद्गात्रं वपुर्यस्य सः ॥ ३ ॥

क्षिप्त्वा तिरस्कृत्य पापेन सरोषेण तिरश्चीनेन वक्रेण

हेमन्दात्मन्नल्पबुद्धे ! मदाज्ञाऽनिलङ्घिनं त्वामद्य यमालयं नेष्यामि ॥ ६ ॥

अभीतवत् किं बलं यस्य सः किम्बलः ॥ ७ ॥ ८ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

एवं भगवता प्रह्लादेनोपदिष्टतत्त्वत्रययाथात्म्यहेयोपादेयभगवद्धर्मतदनुष्ठानोद्योगान् दैत्यकुमारानालक्ष्याचार्यसुतो दैत्येन्द्राय

---

( १ ) कुलच्छेद इतिपाठः—वीर० ।

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

न्यवेदयदित्याह देवर्षिः—अथेति । भगवद्धर्मोपदेशानन्तरं तेन प्रह्लादेनानुवर्णितमाकर्ण्य निर्दुष्टत्वात्प्रह्लादोक्तमेव जगृहुर्दैत्यकुमाराः नतु गुर्वनुशिक्षितमसुरोपाध्यायानुशिक्षितम् जगृहुः ॥ १ ॥

अथ तेषां दैत्यपुत्राणामेकान्तसंस्थितामव्यभिचारिणीं भगवद्धर्मविषयां बुद्धिमालक्ष्य लिङ्गैर्ज्ञात्वा भीतस्त्वरितः सञ्जातत्वरः यथावद्राज्ञे हिरण्यकशिपवे आवेदयद्विज्ञापितवान् ॥ २ ॥

ततो दैत्यो हिरण्यकशिपुर्गुरुणोक्तं सुतस्यानयमनीतिं स्वमार्गाऽननुवर्तनम् अत एवाऽप्रियं तच्छ्रुत्वा कोपावेशेन क्रोधव्याप्त्या चलत्कम्पमानं गात्रं शरीरं यस्य तादृशः पुत्रं प्रह्लादं हन्तु मनोदधे मनोरथं कृतवान् ॥ ३ ॥

कठोरया गिरा अतदर्हणां तिरस्कारानर्हं प्रह्लादं क्षिप्त्वा तिरस्कृत्य क्रोधेन तिरश्चीनेन वक्रेण चक्षुषेक्षमाणः आह उवाच ॥ ४ ॥

कथम्भूतं विनयेन नितरां नम्रं दान्तं तिरस्कारादिभिरलञ्जातक्रोधं बद्धो अञ्जलिर्येन तं स्वस्यसमुपसमीपे स्थितं कथम्भूतः पादेनाहतस्ताडितः सर्प इव श्वसन् श्वास मुञ्चन् स्वभावेनैव क्रूरः ॥ ५ ॥

वक्ति गेलाह—हे दुर्विनीत इति द्वाभ्याम् । हे दुर्विनीत ! मन्दात्मन्कुलभेदकृत् ! मदाज्ञातिलङ्घिनं त्वामद्युना यमालयं नेष्यामि ॥ ६ ॥

यस्य मे क्रुद्धस्य सतः सपालास्त्रयो लोकाः परितः कम्पन्ते तस्य मे मम शासनमभीतवद्भयरहितवत्वमसो भयरहितः कोऽपि नास्तीत्यभिप्रायेण वतिः प्रयुक्तः अत्यगाः अतिवर्तसे उल्लङ्घितवान् भवान् किंबलः को बलं यस्य तादृशः ॥ ७ ॥

एवमुक्त आह भगवान्प्रह्लादः—न केवलमिति चतुर्भिः । तावद्युक्तं किंबल इति तत्रोत्तरमाह, द्वाभ्याम् । हे राजन् ! स न केवलं ममैव बलं किन्तु भवतोऽन्येषाञ्च बलिनां बलम्, कोऽसौ ? येन ब्रह्मादयः चतुर्मुखप्रभृतयः उच्चावचाश्चराचरात्मकाः सर्वे लोकाः वशं स्ववशं प्रणीताः प्रापिताः ॥ ८ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

वैराग्याद्यङ्गोपाङ्गरुचिरभक्तिसुन्दरीसुन्दरावगवसन्निवेशलक्षणपरमपुरुषार्थकरणं यदुत्तरचरितमित्येतन्निदर्शयितुं नरसिंहावतारो निरूप्यतेऽस्मिन्नध्याये, तत्र दैत्यसुतैः प्रह्लादवर्णितं श्रुत्वा किं कृतमिति युधिष्ठिरस्य मानसीं शङ्कां परिहरति, अथेति । निरवद्यत्वान्निर्दोषत्वात् ॥ १ ॥

एकान्ते हरौ सम्यक् स्थितामैकध्येस्थितामभिन्नविषयामिति वा यथा यथावत्साकल्येन यथा तैस्तेनोक्तं गृहीतं तथेति वा ॥ २ ॥

तनयस्यानयं स्वसिद्धान्तविरुद्धसिद्धान्तम् ॥ ३ ॥

पापेन पापसाधनेन ॥ ४—५ ॥

यमक्षयं यमगृहम् ॥ ६ ॥

कस्य बलं यस्य स किम्बलः मद्बलमनादृत्य तव बलभूतः क इत्यर्थः ॥ ७ ॥

किम्बलमित्यस्योत्तरमाह, न केवलमिति । बेत्यनेन "बलमानन्द ओजश्च सहो ज्ञानमनाकुलम्" इति श्रुतिं सूचयति, पराश्चावराश्च परावरे एतदेव विशदयति, स्थिरजङ्गमा इत्यादिना ॥ ८ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

टीका पद्ये अरिभावेन भजन्तमिति तदाज्ञाकृतत्वाद्बहिरङ्गेनैव तेन भजन्तं स्वं प्रति अभावयत् प्रापयत्. श्रुत्वेति पद्यार्द्धं गौडमिथिलयोर्नास्ति स्वाम्यसम्मतश्च । सचेत्यध्याहारस्य वैयर्थ्यात् ॥ १—१३ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

अष्टमे स्वसुतं हन्तुमिच्छन्तं सभाऽसुरः ।
स्तम्भोत्थस्त्वमहन् साक्षान्नृसिंहो वैष्णवः ॥

एको गुरुश्च त्वावन्तः सर्वेषां चेत्कान्ता [illegible]र्णुर्भक्तियोगो वा तत्र संस्थिताम् ॥ २ ॥ ३ ॥ ४ ॥

दुर्विनीतेति वस्त्वर्थश्चायं दुष्टेष्वपि विशिष्टं नीतं कृपालक्षणं यस्य परदुःखासहिष्णुत्वात् मन्दानामप्यात्मा यतो यत्र सर्वेषां कार्यैककत्वात् कुलभेदकराः कुला [illegible]शेषस्रष्टारः प्रजापतयोऽप्यधमा यस्मात् महाविभूतिमत्त्वात् स्तब्धम् असुरेषु पूज्यबुद्धित्वाभावात् मच्छासनोद्भूतं मदाज्ञालङ्घिनं यमक्षयं यमालयं पक्षे [illegible]णांगयोगानां क्षयं निवासभूतं त्वां नेष्ये स्वनायकत्वेनाङ्गीकरिष्यामीत्यर्थः ॥ ५ ॥ ६ ॥

अभीतवत् किं बलं यस्य सः ॥ ७—९ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

अष्टमे प्रह्लादं हन्तुं प्रवृत्तो हिरण्यकशिपुर्नृहरिणा हतः स च ब्रह्मादिभिस्तुत इति वर्ण्यते—अथेति । निरवद्यत्वान्निर्दोषत्वात्तेन प्रह्लादेन वर्णितं जगृहुः ॥ १ ॥

एकस्मिन्भगवति अन्तःसमावेशो यस्य तेन प्रह्लादवाक्येन संस्थितां बुद्धिमालक्ष्य ज्ञात्वा ॥ २ ॥

तनयस्याऽनयं पत्न्याश्चरणं तत्तादृशमप्रियं श्रुत्वा कोपस्यावेशेनोद्रेकेन चलत्कम्पनं गात्रं यस्य सः ॥ ३ ॥

क्षिप्त्वा भर्त्सयित्वा पापेन दुष्टेन तिरश्चीनेन वक्रेण ॥४-५॥

मच्छासनान्मदादेशादुद्धूतं बहिर्भूतम् त्वा त्वाम् ॥ ६ ॥

किं किञ्चिन्मात्रं विश्वावाच्यं बलं यस्य सः किंबलः अभीतवत् मच्छासनम् अत्यगाः अतिक्रान्तवानसि ॥ ७ ॥

स ईश्वरः काल उरुक्रमोऽसावोजः सहः सत्त्वबलेन्द्रियात्मा ।
स एव विश्वं परमः स्वशक्तिभिः सृजत्यवत्यत्ति गुणत्रयेशः ॥ ९ ॥
जह्यासुरं भावमिमं त्वमात्मनः समं मनोधत्स्व न सन्ति विद्विषः ।
ऋतेऽजितादात्मन उत्पथस्थितात्तद्धि ह्यनन्तस्य महत्समर्हणम् ॥ १० ॥
दस्यून् पुरा षण्ण विजित्य लुम्पतो मन्यन्त एके स्वजिता दिशो दश ।
जितात्मनो ज्ञस्य समस्य देहिनां साधोः स्वमोहप्रभवाः कुतः परे ॥ ११ ॥

हिरण्यकशिपुरुवाच ।

व्यक्तं त्वं मर्तुकामोऽसि योऽतिमात्रं विकत्थसे ।
मुमूर्षूणां हि मन्दात्मन्ननु स्युर्विप्लवा गिरः ॥ १२ ॥
यस्त्वया मन्दभाग्योक्तो मदन्यो जगदीश्वरः ।
क्वासौ यदि स सर्वत्र कस्मात् स्तम्भे न दृश्यते ॥ १३ ॥
सोऽहं विकत्थमानस्य शिरः कायाद्धरामि ते ।
गोपायेत हरिस्त्वाऽद्य यस्ते शरणमीप्सितम् ॥ १४ ॥

एवं दुरुक्तैर्मुहुरर्दयन् रुषा सुतं महाभागवतं महासुरः ।
खड्गं प्रगृह्योत्पतितो वरासनात् स्तम्भं तताडातिबलः स्वमुष्टिना ॥ १५ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

यदुक्तं किंबलइति तत्र बलमाह, हेराजन् मे ममैव स बलं नास्ति किन्तु भवदादीनां सर्वेषां बलम् ॥ ८ ॥

---

भाषाटीका ।

श्रीरुक्मिणीपतये नमः ॥

॥ नारद उवाच ॥

नारदजी बोले, कि-तदनन्तर सब दैत्यपुत्रो ने प्रह्लाद का कथन सुनकर, शुद्ध होनेके कारण उसीको ग्रहण किया और गुरु का सिखाया हुआ नहीं ग्रहण किया ॥ १ ॥

अनंतर आचार्य पुत्र ने उन सबों की बुद्धि परमात्मनिष्ठ देख कर, भय भीत होकर उसी समय राजा से सब समाचार निवेदन किया ॥ २ ॥

दैत्य ( हिरण्यकशिपु ) ने भी उस दुःसह अप्रिय पुत्र की अनीति को सुनकर, कोप के आवेश से चलायमान गात्रवाला होकर पुत्र के मारने का मन किया ॥ ३ ॥

नम्रता से अवनत दान्त और हाथ जोड योग्य प्रह्लादको कोप के आवेश से चलायमान गात्र जिसका प्रकृति से दारुण, पादताडित सर्प के नाई स्वास लेता हुआ और रोषयुक्त तिरछी दृष्टि से देखता हुआ हिरण्यकशिपु यों बोला ॥ ४--५ ॥

हिरण्यकशिपु बोला, कि—हे दुर्विनीत ! हे मन्दबुद्धे ! अरे कुल भेदक ! अरे अधम ! मेरी आज्ञा को उलंघन करने वाले स्तब्ध तुझ को अबही यमराज के घर पहुंचाता हूं ॥ ६ ॥

जब मैं कुपित होताहू तब लोकपालों सहित तीनो लोक कांपने लगने है, हे मूढ ! तिस मेरी आज्ञा को निडर के नाई किस के बल से तूने उलंघन किया ॥ ७ ॥

प्रह्लाद उवाच ।

प्रह्लाद बोले, कि—हे राजन् ! न केवल हमारा किंतु तुमारा और ससार में अन्य जितने बली लोग है उन सबो का वह परमात्माही बल है, कि जिसने पर अवर ( वडे छोटे ) स्थावर जंगम जो ब्रह्मादिक जीव है सब को वश में कर के रखे है ॥ ८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

वशं प्रणीता इत्यत्र हेतुः—स ईश्वर इति । उरवः क्रमाः पादविक्षेपा यस्य बहुपराक्रम इति वा ओज आदिरूपः सत्त्वं धैर्यं बुद्धिर्वा ॥ ९ ॥

ननु, मच्छत्रुरसौ कथं ममापि सएव बलं स्यादतआह, जहीति । आत्मनः स्वस्य भावं स्वभावं त्यज यतोऽजितादात्मनो मनस ऋते

**तदैव तस्मिन्निनदोऽतिभीषणो बभूव येनाण्डकटाहमस्फुटत् ।**
**यं वै स्वधिष्ण्योपगतं त्वजादयः श्रुत्वा स्वधामाप्ययमङ्ग ! मेनिरे ॥ १६ ॥**

### श्रीधरस्वामिकृतभावार्थदीपिकायाम्

विनाऽन्ये विद्विषो न सन्ति किञ्च तद्धि तदेव हि साम्येन मनसो-धारणमेव समर्हणमाराधनम् ॥ १० ॥

ननु, मया दिग्विजये सर्वे रिपवो जिता अतः साम्प्रत विद्विषो न सन्तीतिचेत्सत्यं तत्राऽऽह—दस्यूनिति । एके भवादृशा मन्दाः पुरा आदौ लुम्पतः सर्वस्वहरतः षडिन्द्रियलक्षणान् शत्रून विजित्याऽजित्वा दश दिशः स्वयञ्जिता मन्यन्ते साधोस्तु जित-चित्तस्य देहिनां समस्य ज्ञस्य विदुषः स्वाज्ञानकल्पिताः परे शत्रवः कुतः स्यु. ॥ ११ ॥

व्यक्तं निश्चितम् विप्लवा अनन्विता इत्यर्थः ॥ १२ ॥

हे मन्दभाग्य ! मदन्यो जगदीश्वरो यद्यस्ति,तर्ह्यसौ क्वास्ति?प्रह्लाद-आह, स सर्वत्रास्ति, हिरण्यकशिपुराह,तर्हि कस्मात्स्तम्भे नास्ति प्रह्लादस्तु तं स्तम्भं निरीक्षमाणो नमस्यन्नाह, दृश्यते इति ॥१३ ॥

हिरण्यकशिपुस्तु तत्र तमपश्यन्नाह, सोऽहमिति । विकत्थ-मानस्य विपरीतं ब्रुवाणस्य ते शिरः कायाद्धरामि पृथक्-करोमि ॥ १४ ॥

प्रह्लादेन मूर्ध्नि बद्धाञ्जलिना निरीक्ष्यमाणं स्तम्भं मुष्टिना ताडि-तवान् ॥ १५ ॥ १६ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

कोऽसौ तस्य नाम कथयेत्यत्राह—स इति । स सर्वेषां बला-धायकः ईश्वर ,कोऽसावीश्वरः? उरुक्रमः उरव लोकत्रयसंग्राहका: क्रमाः पादविक्षेपा यस्य सः त्रिविक्रम इत्यर्थः। "सर्वं पदं हस्ति पदे निमग्नम्" इति न्यायेन पादत्रयेणैव लोकत्रयाक्रमणरूपमहा महिमशालिनस्तस्य सन्निधौ त्वद्बलं कियदेतदित्यभिप्रायः न केवलमुरुक्रमः सर्वेषाञ्च बलाधायक एव, किन्त्वसावोज आ-दीनामात्मा आश्रयो धारक इति यावत् । ओज इन्द्रियशक्तिः सहः मनोबलं सत्त्वं धैर्यं बलं देहबलम् इन्द्रियाणि च तेषाम-प्याश्रय इत्यर्थः । किञ्च स एवोरुक्रमः परमः निस्समाभ्यधिकः स्वशक्तिभिः स्वांशभूताभिः प्रकृतिपुरुषकालात्मिकाभिः शक्तिभिः कृत्स्नं विश्वं सृजति अवति रक्षति अत्ति संहरति च स्वयं गुणत्रयेशः सत्त्वादीनां त्रयाणां गुणानामीशो नियन्ताऽगुण-वश्यो न कर्मवश्यश्चेति भावः ॥ ९ ॥

ननु, शत्रुरसौ कथं ममापि बलं स्यादत आह—जहीति । त्वमिममात्मनः स्वस्याऽऽसुर भावं जहि त्यज समं मित्रामित्रानु-सन्धानरहितं यथा भवति तथा मनो धत्स्व धारय, तथा मनः शिक्षयेत्यर्थः । एवं चेत्कोऽपि विद्विषो न सन्ति, किञ्च "आत्मैव ह्यात्मनो बन्धुरात्मैव रिपुरात्मनः" इत्युक्तरीत्या आत्मैव रिपुर्न-तदन्यः कोपि रिपुरस्तीत्याह—ऋते इति । अजितादविधेयादन एव उत्पथे दुर्विषये स्थिताद्धावमानादात्मनोऽन्तःकरणादृते न सन्ति विद्विष इति पूर्वेणान्वयः तद्धि मनसः साम्यमेव ह्यन-न्तस्य त्रिविधपरिच्छेदरहितस्य परमात्मनः समर्हणं सम्यगारा-धनम् ॥ १० ॥

किञ्च सर्वदिशां जयिनोऽप्यजितेन्द्रियस्य भवादृशस्य केवल जयशालित्वाभिमानमात्रमेव न वस्तुतो जयित्वमस्तीत्याह—दस्यू-निति । पुरा तावल्लुम्पत आत्मनोऽपहतपाप्मत्वादिगुणाष्टक-रूपमैश्वर्यमपहरतः षडिन्द्रियरूपान् दस्यून् दुष्टजन्तुतुल्यान् श-त्रून् न विजित्याऽजित्वा एके त्वादृशाः दश दिशः स्वजिताः स्वेनैव जिता इति मन्यन्ते अभिमानमात्रमेतदित्यर्थं । जितात्मनो जितेन्द्रियस्य तु ज्ञस्य स्वात्मपरमात्मयाथात्म्यवेदिनो देहिनां समस्य सर्वाणि भूतानि परमात्मशरीरत्वेन समं पश्यतः साधोः महाभागवतस्य स्वमोहप्रभवाः देहात्मभ्रमस्वतन्त्रात्मभ्रमनिमित्ताः परे शत्रव. कुतो भवन्ति न सन्त्येवेति भावः ॥ ११ ॥

एव ब्रुवन्तमाह हिरण्यकशिपु —व्यक्तमिति । हे अल्प-बुद्धे । त्वं व्यक्तं नूनं मर्तुकामोऽसि मर्तुमिच्छसि यस्त्वम् अत्यन्तं विकत्थसे अथैवं विकत्थन तव न स्यादिति भावः । हि तथाहि मुमूर्षुनां मर्तुमिच्छूनां विप्लवा अनन्विता वाचो न नश्युर्भवे-युरेव ॥ १२ ॥

हे मन्दभाग्य ! यस्त्वया मत्तोऽन्यो जगत ईश्वरः उक्त असौ क्वास्ते ? यदि स भवदभिमतो जगदीश्वर. सर्वत्रान्तरात्मतया व-र्त्तते तर्हि कस्माद्धेतोः स्तम्भे पुरोवर्त्तिनि न दृश्यते मदन्यो जगदीश्वरः क्वासावस्तीति दैत्यः प्राह ईशः सर्वत्रास्तीति प्र-ह्लाद. ईशो यदि सर्वत्रास्ते तर्हि स्तम्भे नास्तीति हिरण्यकशिपुः प्रह्लादः स्तम्भे पश्यन्नाह, न दृश्यतेऽपितु दृश्यत एवेति व्या-ख्यान्तरम् ॥ १३ ॥

सोऽहं सर्वेषामीश्वरोऽहमेवं विकत्थमानस्य ते तव देहा-च्छिरो हरामि छिनद्मि यो हरिस्तव शरणम् रक्षकः ईप्सितः सोऽधुना त्वां गोपायेत स रक्षिता चेदधुना त्वां रक्षिष्यतीति अन्यथा तु तदेव मिथ्येति भावः ॥ १४ ॥

एवमित्थं रुषा क्रोधेन दुरुक्तैः मुहुर्मुहुर्महाभागवतं सुतं प्रह्लाद-मर्दयन् महासुरो हिरण्यकशिपुः खड्गं प्रगृह्य वरासनात्सिंहासना-दुत्पतित उत्थितोऽत्यन्तं बलं यस्य तेन स्वमुष्टिना स्तम्भं तताड ताडितवान् बभञ्ज ॥ १५ ॥

तदैव ताडनान्तरमेव तस्मिन्स्तम्भेऽतिभीषणो निनदो ध्वनि-र्बभूव, निनदं विशिनष्टि, येन निनदेनाण्डकटाहं ब्रह्माण्डकटाह-मस्फुटद्भिन्नमभूत् अङ्ग हे युधिष्ठिर ! यञ्च निनदं श्रुत्वा स्वस्थानगता अजादयो ब्रह्मादयः स्वधिष्ण्यानां व्ययं नाशं मे-निरे प्रलयकालममन्यन्तेत्यर्थः ॥ १६ ॥

---

स विक्रमन् पुत्रवधेप्सुरोजसा निशम्य निर्ह्रादमपूर्वमद्भुतम् ।
अन्तःसभायां न ददर्श तत्पदं वितत्रसुर्येन सुरारियूथपाः ॥ १७ ॥
सत्यं विधातुं निजभृत्यभाषितं व्याप्तिं च भूतेष्वखिलेषु चात्मनः ।
अदृश्यतात्यद्भुतरूपमुद्वहन् स्तम्भे सभायां न मृगं न मानुषम् ॥ १८ ॥
स सत्त्वमेनं परितोपि पश्यन् स्तम्भस्य मध्यादनुनिर्जिहानम् ।
नायं मृगो नापि नरो विचित्रमहो किमेतन्नृमृगेन्द्ररूपम् ॥ १९ ॥
मीमांसमानस्य समुत्थितोऽग्रतो नृसिंहरूपस्तदलं भयानकम् ।
प्रतप्तचामीकरचण्डलोचनं स्फुरत्सटाकेसरजृम्भिताननम् ॥ २० ॥
करालदंष्ट्रं करवालचञ्चलक्षुरान्तजिह्वं भ्रुकुटीमुखोल्बणम् ।
स्तब्धोर्ध्वकर्णं गिरिकन्दराद्भुतव्यात्तास्यनासं हनुभेदभीषणम् ॥ २१ ॥
दिविस्पृशत्कायमदीर्घपीवरग्रीवोरुवक्षःस्थलमल्पमध्यमम् ।
चन्द्रांशुगौरैश्छुरितं तनूरुहैर्विष्वग्भुजानीकशतं नखायुधम् ॥ २२ ॥
दुरासदं सर्वनिजेतरायुधप्रवेकविद्रावितदैत्यदानवम् ।
प्रायेण मेऽयं हरिणोरुमायिना वधः स्मृतोऽनेन समुद्यतेन किम् ॥ २३ ॥

भाषा टीका ।

क्योंकि ? बड़े पराक्रम वाला वही ईश्वर काल ओज सह सत्व बल इन्द्रिय और मनोरूप है, और वही परमेश्वर गुणत्रय का ईश इस विश्व की सृष्टि स्थिति और संहार करता है ॥ ९ ॥

आप भी इस अपने आसुर भाव को छोड दीजिये और मन को शांत कीजिये, उत्पथ में स्थित और अनिर्जित [ नहीं जीताहुआ ] अपने मन के सिवाय संसार में कोई भी वैरी नहीं है, और मन को समता में लाना यही एक परमात्मा का भी बडा आराधन है ॥ १० ॥

कितने एक प्रथम अपने देह में स्थिति षडिन्द्रिय रूप वैरियों न जीत कर हमने दश दिशाओं को जीत लिया, ऐसा मानते हैं, ॥ जितेन्द्रिय और सर्व प्राणियों को साधु विद्वान को स्वाज्ञान से बने हुए शत्रु ही कहाँ ॥ ११ ॥

हिरण्यकशिपुरुवाच ।

हिरण्य कशिपु बोला, कि-अब निश्चित ही तूं मरने की इच्छा करता है क्यों कि ? अब तू बहुत विकत्थन [ बकवाद ] करता है । हे मन्दात्मन् ! मरने वालों की ऐसी ही विपरीत वाणी होती है ॥ १२ ॥

और हे मन्द भाग्य ! जो तूने मेरे से दूसरा जगदीश्वर बताया, तो फिर वह कहां पर है, यदि वह सर्वत्र है तो स्तम्भमें क्यों नहीं देख पडता है ॥ १३ ॥

सो मैं अब तेरे बकवाद करने वाले के शरीर से शिर को हरलेता हूं, जिसको तू ने रक्षक समुझा है वह हरि अब तेरी रक्षा करै ॥ १४ ॥

वह महा असुर ऐसी दुरुक्तियो से कोप के मारे महाभागवत पुत्र को पीडा करता हुआ खड्ग को हाथ में लेकर सिंहासन से उत्तर कर बडे जोर से अपनी मुष्टि से स्तम्भ को ताडन करता हुआ ॥ १५ ॥

बस उसी समय उस स्तम्भ में से अति भयङ्कर बडा नाद हुआ, कि जिसके मारे ब्रह्माण्ड फूटने लगा और वह शब्द इतनी दूरतक पहुंचा कि जिसको सुनकर ब्रह्मादि कभी अपने २ धाम का अप्यय ( नाश ) मानने लगे ॥ १६ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

तत्पदं तस्य ध्वनेराश्रयम् येन नादेन ॥ १७ ॥

भगवांस्तदा स्तम्भं विदार्याऽदृश्यत दृश्यो बभूव किमर्थम् निजभृत्येन प्रह्लादेन यद्भाषितं दृश्यत इति तत्सत्यं विधातुं कर्तुम् तथाऽखिलेषु भूतेष्वात्मनोव्याप्तिश्च सत्यां कर्तुं स्तम्भेऽदृश्यत तत्किमर्थम् "भौतिकेषु च भावेषु भूतेष्वथ महत्सु च" भगवानास्ते इति तेनैव भृत्येन यद्भाषितं तत्सत्यं कर्तुम् तथाऽत्यद्भुतं दैत्यघातकमतिघोरं रूपमुद्वहन् दधत् तत्किमर्थम् ? निजभृत्यैः सनकादिभिः शापानन्तरमनुतप्तैर्भाषितं यत् त्रिभिर्जन्मभिः शापमोक्षो भवत्विति

**एवं ब्रुवंस्त्वभ्यपतद्गदायुधो नदन्नृसिंहंप्रति दैत्यकुञ्जरः।**
**अलक्षितोऽग्नौ पतितः पतङ्गमो यथा नृसिंहौजसि सोऽसुरस्तदा ॥ २४ ॥**

### श्रीधरस्वामिकृतभावार्थदीपिका।

तत्सत्यं कर्तुम् तथाऽत्यद्भुतं रूपं ब्रह्मसृष्टावदृष्टमश्रुतञ्च रूपमुद्वहन् तच्च न मृगाकारं न मनुष्याकारमुद्वहन् सभायां मध्येऽदृश्यत. तत्किमर्थम् ? निजभृत्येन हिरण्यकशिपुना ब्रह्माणम्प्रति यद्भाषितम् "भूतेभ्यस्त्वद्विसृष्टेभ्यो मृत्युर्माभून्मम प्रभो" इति तथा नान्तर्न बहिरिति न नरैर्न मृगैरपीति च ब्रह्मणा च निजभृत्येन तथास्त्विति यद्भाषितम् तदुभयोर्वाक्यं सत्यं कर्तुम् नहि तद्ब्रह्मसृष्टं भूतं नच नरोवा मृगोवा नच सभागृहस्यान्तः नच प्राङ्गणाद्बहिः एवं ताभ्यां यद्भाषितम् तत्सत्यं कृतम् यच्च हिरण्यकशिपुना भाषितम्, "नूनमेतद्विरोधेन मृत्युर्मे भविता" इति अकुतश्चिद्भयोऽमर इतिच, यच्चनारदेन निजभृत्येन भाषितमिन्द्रंप्रति "अयं महात्मवशा संस्थां न प्राप्स्यति अनन्तानुचरः" इत्यनेन स्वभक्तपक्षपातित्वं च यद्भाषितं तच्च सत्यं कर्तुं तथा अदृश्यत चकारान्निजभाषितञ्च. किं?तत् "कौन्तेय प्रतिजानीहि न मे भक्तः प्रणश्यति" इति. तथा "तेषामहं समुद्धर्ता मृत्युसंसारसागरात्" इत्यादि तच्च सत्यं कर्तुमदृश्यतेति द्रष्टव्यम् अलमतिविस्तरेण ॥ १८ ॥

स दैत्य एवमद्भुतं ध्वनिं श्रुत्वा तदाश्चर्यं सत्त्वं प्राणिविशेषं सर्वतो विलोकयन्स्तम्भमध्यान्निर्गच्छन् नृमृगेन्द्रयोर्मिश्र रूपमहो किमेतदिति मीमांसितवानिति शेषः ॥ १९ ॥

तस्यैवमलं भयानकं तन्नृसिंहरूपं मीमांसमानस्याग्रतो नृसिंहरूपो हरिः समुत्थितः, भयानकत्वमेव दर्शयंस्तद्रूपमलङ्करोति, प्रतप्तेत्यादिना,विद्रावितदैत्यदानवमित्यन्तेन।प्रतप्तं चामीकरं सुवर्णं तद्वत्पिङ्गानि चण्डानि लोचनानि यस्मिन् सटा जटाः केसराः कण्ठरोमाणि स्फुरद्भिः सटाकेसरैर्जृम्भितं साटोपमाननं यस्मिन् ॥ २० ॥

करालास्तुङ्गा दंष्ट्रा यस्मिन् करवालः खड्गस्तद्वच्चञ्चला क्षुरान्तवत्तीक्ष्णा च जिह्वा यस्मिन् भ्रुकुटीयुक्तेन मुखेनोल्बणम् स्तब्धावुन्नतौ शङ्कुवदूर्ध्वौ कर्णौ यस्मिन् गिरिकन्दरवदद्भुतं व्यात्तं प्रसृतमास्यं नासे च यस्मिन् हनू कपोलप्रान्तौ तयोर्भेदेन विदारणेन भीषणम् कर्णान्तमुखविस्तारमित्यर्थः ॥ २१ ॥

दिविस्पृशन् कायो यस्मिन् अत्युच्चमानः अदीर्घा ह्रस्वा पीवरा च स्थूला ग्रीवा यस्मिन् उरु विशालं वक्षःस्थलं यस्मिंस्तच्च तच्च अल्पं मध्यममुदरं यस्मिन् चन्द्रांशुवद्गौरैस्तनूरुहैर्लोमभिश्छुरितं व्याप्तम् विष्वञ्चः सर्वतः प्रसृता भुजास्तेषामनीकानि स्तोमास्तेषां शतानि यस्मिन् नखान्येवायुधानि यस्मिन् ॥ २२ ॥

दुरासदं प्राप्तुमशक्यम् सर्वाणि च निजानि चक्रादीनीतराणि वज्रादीनि त एवायुधप्रवेकाः शस्त्रोत्तमास्तैर्विद्रावित दैत्यदानवा येन तद्रूपं मीमांसमानस्याग्रतः समुत्थित इति पूर्वेणान्वय', तदाविर्भावप्रयोजनविमर्शपूर्वकं तेन सह दैत्यस्य युद्धमाह—सप्तभिः। प्रायेण महामायिना हरिणामेऽयमेवंभूतो वधो मृत्युहेतुः स्मृतश्चिन्तितस्तथाऽप्यनेन समुद्यतेन किं न किञ्चित्स्यादित्येवं ब्रुवन्नभ्यपतदित्यन्वयः ॥ २३ ॥

तदा सोऽसुरो नृसिंहस्यौजसि दीप्तौ पतितः सन्नलक्षितोऽदृष्टोऽभूत् ॥ २४ ॥

---

### श्रीमद्वीरराघवाचार्य्यकृतभागवतचन्द्रचन्द्रिका।

ततः किं जातं तदाह, स विक्रमन्निति। ओजसा बलेन पुत्रवधेप्सुः पुत्रवधं कर्तुमिच्छुस्तदर्थं विक्रमन् पराक्रमं कुर्वन् स दैत्येन्द्रो यं निह्रादं ध्वनिम् अपूर्वं कदाचिदपि न श्रुतम् अत एवाद्भुतमाश्चर्यजनकं निशम्य श्रुत्वा तस्य निनादस्य पदमाश्रयमन्तःसभायां सभामध्ये न ददर्श येन निनादेन सुरारियूथपाः दानवश्रेष्ठाः वित्रसुर्विशेषेण तत्रसुः त्रासं प्रापुरित्यर्थः ॥ १७ ॥

तदा भगवान्निजभृत्यस्य प्रह्लादादेर्भाषितं कृत्स्नजगदन्तरात्मत्वादिभाषणं सर्वेषु चराचरात्मकेषु भूतेषु आत्मनः स्वस्य व्याप्तिञ्च सत्यं यथा भवति तथा कर्तुमत्यद्भुतरूपमुद्वहन् बिभ्रत् सभायां यस्तम्भस्तस्मिन्नदृश्यत तद्दृष्टो बभूव कथम्भूतं रूपं न मृगं नापि मानुषं रूपमपितूभयमिश्रमित्यर्थः निजभृत्यभाषितमित्यत्र बहुवचनान्तेन निजभृत्यशब्देन समासस्तदयमर्थः, यत्तावत्प्रह्लादस्य निजभृत्यस्य भाषितम् "भौतिकेष्वथ भावेषु भूतेषु च महत्सु च। भगवानास्ते" इति तत्सत्यं कर्तुं, तथाऽत्यद्भुतदैत्यघातकमतिघोरं रूपमुद्वहन्निति तथा निजभृत्यैः सनकादिभिर्यद्भाषितं त्रिभिर्जन्मभिः शापमोक्षो भवत्विति तत्सत्यं कर्तुम्, तथा ब्रह्मसृष्टावदृष्टमश्रुतञ्चात्यद्भुतं रूपमुद्वहन् सभायां मध्येऽदृश्यत तत्किमर्थं निजभृत्येन हिरण्यकशिपुना ब्रह्माणं प्रति यद्भाषितम् "भूतेभ्यस्त्वद्विसृष्टेभ्यो मृत्युर्माभून्मम प्रभो" इति तथा नान्तर्बहिरिति न नरैरिति न मृगैरिति च ब्रह्मणा निजभृत्येन यद्भाषितं तथास्त्विति तत्सर्वं सत्यं कर्तुं न च तद्ब्रह्मसृष्टं रूपं न च नरो न मृगो वा न च सभागृहस्यान्तः न च प्राङ्गणाद्बहिः एवं ताभ्यां भाषितं सत्यं कर्तुं यच्च हिरण्यकशिपुना भाषितं "नूनमेतद्विरोधेन मृत्युर्मे भविता" इति तथा "अकुतश्चिद्भयोऽमरः" इति यच्च नारदेन स्वभृत्येनेन्द्रंप्रति भाषितम् "अयं महान् संस्थां न प्राप्स्यते" इति अनन्तानुचर इत्यनेन स्वभक्तपक्षपातित्वं च यद्भाषितं तच्च सत्यं कर्तुमदृश्यत चकारान्निजभाषितं च यत् "कौन्तेय प्रतिजानीहि न मे भक्तः प्रणश्यति। तेषामहं समुद्धर्ता" इति तच्च सत्यं कर्तुमदृश्यतेति ॥ १८ ॥

स दैत्येन्द्र एवं ध्वनिं श्रुत्वा तदा सत्त्वं प्राणिविशेषं सर्वतो विलोकयन् स्तम्भस्य मध्यान्निर्गच्छन्तं नायं मृगो नापि

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

नरः किन्तु नृमृगेन्द्रयोरुभयोरपि रूपमहो किमेतदिति मीमांसितवानिति शेषः ॥ १९ ॥

तस्यैव महाभयानकं तन्नृसिंहरूपं मीमांसमानस्य दैत्येन्द्रस्याऽग्रतः स नृसिंहरूपो हरिः समुत्थितः भयानकत्वमेव दर्शयन्स्तद्रूपमनुवर्णयात, त्रिभिः। प्रतप्तेति। प्रतप्तं चामीकरं स्वर्णं तद्वत्पिशङ्गे चण्डे उग्रे लोचने यस्मिन् स्फुरन्त्यः सटाः जटाः केसराः स्कन्धलोमानि च तैर्जृम्भितं साटोपमाननं मुखं यस्मिन् ॥ २० ॥

कराला उग्रा दंष्ट्रा यस्मिन् करवालः खड्गस्तद्वत् चञ्चला क्षुरांतवत्तीक्ष्णा च जिह्वा यस्मिन् भृकुटी युक्तेन मुखेनोल्बणं स्तब्धावुदञ्चितावूर्ध्वौ कर्णौ यस्मिन् गिरिकन्दरवदद्भुतं व्यात्तं प्रसृतमास्यं नासे च यस्मिन् हनू कपोलप्रान्तौ तयोर्भेदेन विदारणेन भीषणम् ॥ २१ ॥

दिवि स्पृशन् कायो यस्मिन् अलुक्समासः अदीर्घा ह्रस्वा पीवरा स्थूला च ग्रीवा उरु विशालं वक्षःस्थलं च यस्मिन् अल्पं मध्यम उदरं यस्मिन् चन्द्रांशुवद्गौरैस्तनूरुहैर्लोमभिश्छुरितं व्याप्तं विष्वञ्चः सर्वतः प्रसृताः भुजास्तेषामनीकानि स्तोमास्तेषां शतानि यस्मिन् भुजा एवानीक सेना तच्छतं यस्मिन्निति वा सेनानीकेन मर्दितमिति प्रयोगात् नखा एवायुधानि यस्मिन् ॥ २२ ॥

दुरासदं आप्तुमशक्यं सर्वाणि निजानि चक्रादीनीतराणि च वज्रादीनि त एवायुधप्रवेकाः शस्त्रस्तोमास्तैर्विद्राविता दैत्या दानवाश्च येन तद्रूपं मीमांसमानस्याऽग्रतः समुत्थितमिति पूर्वेणान्वयः ॥ २३ ॥

तथा आविर्भावे प्रयोजनविमर्शनपूर्वकं तेन सह दैत्यस्य युद्धमाह सप्तभिः—प्रायेणेति। प्रायेण महामायाविना हरिणा मे मम अयमेवंभूतो वधः वधोपायः स्मृतश्चिन्तितस्तत्तथाप्यनेन समुद्यमेन किं न किंचित्कर्यादित्येवं ब्रुवन् गदेव आयुधं यस्य स दैत्य एव कुञ्जरो गजो नदन् जगत् नृसिंहं प्रत्यभ्यपतत् अभिमुखमागतवान् तदा सोऽसुरो नृसिंहस्यौजसि दीप्तौ पतितः सन्नलक्षितो ऽदृष्टो ऽभूद्यथा पतितः पतङ्गः शलभस्तद्वत् ॥ २४ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

तदा हिरण्यकशिपुः किंकृतवानिति तदवस्थामाह, अभिक्रमन्निति। पुनरभिक्रमन् पादविक्षेपं कुर्वन् तस्य निर्ह्रादस्य पदं विषयं कर्तृभूतं न ददर्शेत्यन्वयः येन नादेन अनेन हिरण्यकशिपोर्दृश्यनाशातिशयो दर्शित इति ज्ञायते ॥ १७ ॥

आकाशविशेषगुणस्य शब्दस्य चेतनाश्रयत्वेन दर्शनात् किमिदमिति मीमांसमानेषु सत्सु तदाश्रयोऽप्यदर्शि इत्याह, सत्यं विधातुमिति। रूपं बिभ्रदिति, न मृगमिति नाभावान्यविरोधेत्वित्ति वचनात् न मृगं केवलं मृगस्य विद्यमानं न भवति न मानुषं मानुषस्य विद्यमानं न किन्तु तयोः समाहारलक्षणम् ॥ १८ ॥

एवम्विधं सत्वं प्राणविशिष्टं रूपमुद्वहंस्तस्याग्रतोऽग्रे समुत्थितोऽदृश्यतेत्यन्वयः। किंविशिष्टस्य स्तम्भस्य मध्यान्निर्जिहानमुत्तिष्ठमानमेतन्नृमृगेन्द्ररूपं किमितिमीमांसमानस्य विचारं कुर्वतो हिरण्यकशिपोः तद्रूपं विशिनष्टि, तदक्षमित्यादिना। चामीकरं सुवर्णं सटाकेसरैः कर्णागतरोमविशेषलक्षणान्तर्दंष्ट्रैर्जृम्भितं विकसितमाननं यस्य स तथा ॥ १९—२० ॥

करालाः क्रूरदंष्ट्रा यस्य स तथा करवालवत् चन्द्रहासवच्चञ्चलं क्षुरान्तः क्षुरधारा तद्वत्स्थिता जिह्वा यस्य तत्तथा भृकुट्या मुखेन पूर्वभागेनोल्बणं क्रूरं स्तब्धौ दृढौ ऊर्ध्वीकृतौ च कर्णौ यस्य तत्तथा तद्गिरिकन्दरवत् अद्भुतं व्यात्तमास्यं नासापुटं च यस्य तत्तथा तत् हनुभेदेन विदीर्णकपोलेन भीषणं भयजनकम् ॥ २१ ॥

ग्रीवा चोरू च वक्षःस्थलं च तानि तथा अदीर्घाणि पीवराणि ग्रीवोरुवक्षःस्थलानि यस्य तत्तथा तत् "चन्द्रो हिमांशौ ना चन्द्रकं रोचिषेऽपि च"इत्यभिधानात् चन्द्रांशुवर्णवद्गौरैररुणैस्तनूरुहैः छुरितं व्याप्तम् "पीतेऽरुणे सिते गौरे"इत्यभिधानं विष्वक् व्याप्तैर्भुजानीकशतैर्युक्तं बहुत्वापेक्षयानीकेत्युक्तम् ॥ २२ ॥

"निजमात्मीयनित्ययोः" इत्यमरः निजान्यात्मीयानि नखापेक्षयेतराणि चक्रादीनि यानि तैरायुधप्रवेकैरायुधमुख्यैर्विद्राविता दैत्यदानवा येन तत्तथोक्तं तत् यद्वा निजं सहजं नखलक्षणमायुधम् इतराणि पृथक्स्थितानि चक्रादीनीति मे औत्पातिकत्वा निसर्गशत्रुणा हरिणा अनेन रूपेण प्रायेण समाये वधः स्मृतो निरूपितः किं स्मृतो वधोऽयं किमितिवा कीदृशस्य मे पुत्रवधे समुद्यतस्य पुत्रहन्तुर्योऽयं वधः स्यादेतु स्मृतो विहितः सोऽयमद्य प्राप्तः किन्नेति ॥ २३ ॥

एवं विमृशन् नखाक्रिमृतः किमेत्याह, एवमिति। कश्यपसुतदिव्यतनवं नृसिंहंप्रतीति। दैत्यकुञ्जरो दैत्येन्द्रः निदर्शनमाह, अलक्षितः इति। साहसिकः पतङ्गः शलभः ॥ २४ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

मीमांसेति सार्द्धमिके तत्र मीमांसेत्यर्द्धकम् ॥ २०—२१ ॥

चन्द्रेति। भुजा एवानीकानि सेना. ॥ २२—४० ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी।

तस्य ध्वनेः पदमाश्रयम् ॥ १७ ॥

निजभृत्यस्य प्रह्लादस्य भाषितं दृश्यत इति वचनं सत्यं विधातुं सत्यमेव तल्लोकेऽपि सत्यत्वेन प्रकटीकर्तुमित्यर्थः। तथैवाखिलेषु भूतेषु आत्मनो नृसिंहाद्याकारस्य व्याप्तिं च सत्यां कर्तुं स्तंभे अदृश्यत दृष्टो बभूव, कीदृशः ? न मृगं न मृगसर्वाङ्गं नापि मानुषं रूपं सभायामुद्वहन् अत्रापिहेतुः, सत्यमिति. निजभृत्यस्य हिरण्यकशिपोर्भाषितम् "भूतेभ्यस्त्वद्विसृष्टेभ्यो मृत्युर्माभून्मम प्रभो" इति तथान्तर्न बहिरिति न नरैर्न मृगैरिति प्रार्थितं सत्यं

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

कर्तुं यतो न हि तद्ब्रह्मरूपं भूतं न च नरोवा मृगोवा न च सभागृहस्यान्तः नापि प्रांगणावद्बहिरिति एवञ्चकोचित निजस्य भृत्यानां नारदादीनामपि भाषितं सत्यं विधातुमिति व्याचक्षते तथाहि "कौन्तेय प्रतिजानीहि न मे भक्त प्रणश्यति" इतिनिजोक्तम् "अयंमहान् सत्थां न प्राप्स्यतीतीन्द्रं प्रति नारदोक्तं "नूनमेतद्विरोधेन मृत्युर्मे भविता" इति हिरण्यकशिपुना नीयमाने वरे तथास्त्विति ब्रह्मोक्तं च ॥ १८ ॥

स दैत्यः एवंभूतं प्राणिविशेषं स्तम्भमध्यान्निर्गच्छन्तं परितः स्तम्भस्य चतुर्दिक्षु विपश्यन् किमेतदिति मिमांसितवानितिशेषः ॥ १९ ॥

तदद्भुतमतिशयेन भयानकं नृमृगेन्द्ररूपं मीमांस्यमानस्य तस्याग्रत एव नृसिंहरूपः समुत्थित इत्यन्वयः. भयानकत्व विवृण्वन् रूपं विशिनष्टि त्रिभिः, प्रतप्तेति । चामीकरं सूवर्णं सटाः जटाकेसराः कण्ठरोमाणि ॥ २० ॥

करवाल खड्गः । भ्रुकुटीमुखेन मुखेन उल्बणं हनू कपोलप्रान्तौ तयोर्भेदेन विदारणेन भीषणम् ॥ २१ ॥

अदीर्घा पीवरा च ग्रीवा यस्मिन् उरु विशालं वक्षःस्थलं यस्मिन् तत् अल्पमध्यं क्षीणमध्यदेशं चन्द्रांशुवद्गौरैः श्वेतैः विष्वक् सर्वदिक्षु स्थितानां भुजानीकानां शतानि यस्मिंस्तत् । नखान्यायुधानुल्यानि यस्मिन् तत् ॥ २२ ॥

सर्वाणि निजानि चक्रादीनि इतराणि वज्रादीनि । नान्येवायुधप्रवेकाः शस्त्रोत्तमास्तैर्विद्रावितो दैत्यदानवा यत्र तत् तदद्भुतं दृष्ट्वा तस्य मानसं चाञ्चिकञ्च व्यवहारमाह—प्रायेणेति । वधः स्मृत इति प्राक् त्रिकीर्षित एवासीत् । स्मरति संस्मृतिविपर्यीकृत इत्यर्थः । तदप्यन्येन हरिणा समुद्यतेन तदर्थं कृतोद्यमेनापि किं न किञ्चदपीत्यर्थः । मद्बलस्यानेन दुष्पारत्वादिति भावः ॥ २३ ॥

स नृसिंहस्यौजसि दीप्तौ पतितस्स्वबलत्विलोऽदृष्टोऽभूत् । सत्वधामनि शुद्धसत्वप्रकाशे हरौ तत् तस्य तमोमयस्यादर्शनं न विचित्रम् । यतः पुरा सृष्ट्यादौ प्रलयकालीनं तमोऽपियत् महत्तत्त्वमधिष्ठायैव नाशयामास । सम्प्रति तावत् स्वरूपभूतस्तेन किमुतेति भावः ततस्तस्मात् पृथग्भूय अभिपद्य अभिमुखमागत्य ॥ २४—२५ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

तस्य निर्ह्रादस्य पदमुद्भवस्थानम् ॥ १७ ॥

निजभृत्यभाषितम् निजभृत्यान्प्रति श्रीमुखेन भाषितं "न मे भक्तः प्रणश्यति" इति सन्दादिना यच्च भृत्येन प्रह्लादेन भाषितं दृश्यते इति तथात्मनोव्याप्तिं प्रति निजभृत्येन प्रह्लादेन भाषितं सत्सर्वत्रेति तथा निजभृत्येन हिरण्यकशिपुना भाषितम् कुतश्चिद्भयोऽमरः एतद्विरोधेन मे मृत्युर्भवितेति तथा हिरण्यकशिपुना "यदि दास्यस्यभिमतान्वरान्मे वरदोत्तम । भूतेभ्यस्त्वद्विसृष्टेभ्योमृत्युर्माभून्मम प्रभो" इत्यादिवरे प्रार्थिते सति यद्ब्रह्मणा निजभृत्येन भाषितं "तातेमे दुर्लभाः पुंसोयान् वृणीषे वरान्मम तथापि वितराम्यङ्ग" इति तथा निजभृत्यैः सनकादिभिः शापान्तरमनुतप्तैः त्रिभिर्जन्मभिः शापमोक्षोभवत्विति भाषितं तत्सर्वं सत्यं विधातुं कर्तुम् अद्भुतं रूपमुद्वहन् दधत् स्तम्भे अदृश्यत दृश्योबभूव, भगवानिति शेषः ॥ १८ ॥

हिरण्यकशिपुः एवं ध्वनिरूपं कार्यं यथा ज्ञातवान्तद्वत् तत्कर्तृ सत्त्वं प्राणिविशेषमपि ज्ञातुं परितः विपश्यन् विलोकयन् अनु अनन्तरं स्तम्भस्य मध्यान्निर्जिहानं निर्गच्छन्तं नृमृगेन्द्ररूपम् विपश्यन् अहो अयं न मृगः नापि नरः एतद्विचित्रं किमिति मीमांसितवानिति शेषः ॥ १९ ॥

एवमत्यं भयानकं न मृगेन्द्ररूपं मीमांस मानस्य अग्रत नृसिंहरूपोभगवान् समुत्थितोऽभूत्. तद्रूपमग्रे वर्णयति प्रतप्तेत्यादि त्रिभिः । प्रतप्तं यच्चामीकरं स्वर्णं तद्वत् चण्डे उग्रे लोचने यस्मिन् स्फुरन्त्यः सटाः जटाः केसराः कण्ठरोमाणि च यस्मिन् तत् स्फुरत्सटाकेसरं जृम्भितमाननं यस्मिन्तज्जृम्भितानन्तं तच्च तच्च तत् ॥ २० ॥

कराला उग्रा दंष्ट्रा यस्मिन् करवालः खड्गः भ्रमत्करवालवत् चञ्चला क्षुरान्तवत्तीक्ष्णा च जिह्वा यस्मिन् भ्रुकुटीमुखेन मुखेनोल्बणं स्तब्धौ ऊर्ध्वौ कर्णौ यस्मिन् गिरिकन्दरवत् अद्भुतं व्यात्तं प्रसृतमास्यं नासे च यस्मिन् हन्वोः कपोलप्रान्तयो र्भेदेन प्रसारणेन भीषणम् ॥ २१ ॥

दिविस्पृशत्स्पृशत्कायः कायोयस्मिन् अलुक्समासः अदीर्घा पीवरा पुष्टा च ग्रीवा यस्मिन् उरु विशालं बहु विस्तीर्णं वक्षःस्थलं यस्मिन् तच्च तच्च तत् अल्पं मध्यमुदरं यस्मिन् चन्द्रांशुवद्गौरैः तनूरुहैः विष्वक् परितः स्फुरित व्याप्तम् भुजाएवोभयतोनीकशतं यस्मिन् नखान्येवायुधानि यस्मिन् ॥ २२ ॥

दुरासदं आसादितुमशक्यम् सर्वाणि च निजानि सुदर्शनादीनि इतराणि वज्रादीनि एवायुधप्रवेकाः शस्त्रश्रेष्ठास्तैः विद्राविताः दैत्या दानवाश्च येन एवंभूतं रूपं मीमांसत समुत्थितइति पूर्वेणान्वयः प्रायः उरुमायिना अत्यद्भुतशक्तिमता हरिणा विष्णुना मे ममायं सङ्ग्रामे श्लाघ्यत्वेन प्रसिद्धोवधः स्मृतश्चिन्तितस्तथाप्यनेन समुद्यतेन किं स्यात् ॥ २३ ॥

स दैत्यकुञ्जरएवं ब्रुवन् गदायुधः नदन् नृसिंहं प्रत्यभ्यपतदपि तु पुनर्नृसिंहौजसि पतितः सन् अग्नौ पतङ्गो यथा तद्वदलक्षितोऽभवत् ॥ २४ ॥

---

### भाषा टीका ।

वह पुत्र वध की इच्छा करने वाला बड़े शरीर के बल से पराक्रम करता हुआ अद्भुत और अपूर्व शब्द को

न तद्विचित्रं खलु सत्त्वधामनि स्वतेजसा यो नु पुराऽपिबत्तमः ।
ततोऽभिपद्याभ्यहनन्महाऽसुरो रुषा नृसिंहं गदयोरुवेगया ॥ २५ ॥
तं विक्रमन्तं सगदं गदाधरो महोरगं तार्क्ष्यसुतो यथाऽग्रहीत् ।
स तस्य हस्तोत्कलितस्तदाऽसुरो विक्रीडतो यद्वदहिर्गरुत्मतः ॥ २६ ॥
असाध्वमन्यन्त हृतौकसोऽमरा घनच्छदा भारत ! सर्वधिष्ण्यपाः ।
पुनस्तमासज्जत खड्गचर्मणी प्रगृह्य वेगेन जितश्रमो मृधे ॥ २७ ॥
तं श्येनवेगं[1] शतचन्द्रवर्त्मभिश्चरन्तमच्छिद्रमुपर्यधो हरिः ।
कृत्वाऽट्टहासं[2] खरमुत्स्वनोल्वणं निमीलिताक्षं जगृहे महाजवः ॥ २८ ॥
विष्वक्स्फुरन्तं ग्रहणातुरं हरिर्व्यालो यथाऽऽखुं कुलिशाक्षतत्वचम् ।
द्वार्यूर आपात्य ददार लीलया नखैर्यथाऽहिं गरुडो महाविषम् ॥ २९ ॥
संरम्भदुष्प्रेक्ष्यकरालल्लोचनो व्यात्ताननान्तं विलिहन्स्वजिह्वया ।
असृग्लवाक्तारुणकेसराननो यथाऽन्त्रमाली द्विपहत्यया हरिः ॥ ३० ॥

भाषा टीका ।

सुनकर, उस सभा के भीतर उस शब्द के आश्रय को न देखता भया कि जिस शब्द से दैत्य यूथप लोग त्रास को प्राप्त हुए ॥ १७ ॥

प्रभु ने भी अपने निजदास के भाषण को सत्य करने के लिये और प्रह्लादोक्त निखिल भूतों में अपनी व्याप्ति को सत्य करने के लिये ऐसा अति अद्भुत रूप धारण करके दर्शन दिया कि उस सभा मे उसस्तम्भ के मध्य से आप का रूप न सिंह का मालूम पड़ता और न मनुष्य का ॥१८॥

हिरण्यकशिपु भी उस शब्द के कारण को चारो तरफ देखता हुआ, उस स्तम्भ के मध्य से निकलते हुए श्रीनृसिंह देवरूप एक अपूर्व प्राणि विशेष को देखता हुआ, और देखकर बोला, कि यह न मृग है न नर है अहो अति आश्चर्य है यह मिलकर नरसिंह रूप क्या है ॥ १९ ॥

हिरण्यकशिपु ऐसा विचार करता रहा इतने में अग्रभाग मे बड़े भयानक नृसिंह रूपसे भगवान उठ खड़े हुए वह नृसिंहरूप कैसा है कि प्रतप्त सुवर्ण के सदृश पीले लोचन हैं जिसमें और स्फुरायमाण होरहे जटा और कंठ रोम जिसमें॥ २०॥

बडी ऊंची २ डाढे जिसमें खड्ग छुरीकी चंचल और छुरा सरीकी तीक्ष्ण जिह्वा, शंकु सदृश ऊंचे खड़े हुए कर्ण गिरि गुहा के सदृश अद्भुत पसरा हुआ है मुख और नासिका जिसमें, और हनु ( ठोडी ) के विदारण करने से बडा भयानक ॥ २१ ॥

शरीर आकाश में स्पर्श कररहा जिसमें, बडी पुष्ट ग्रीवा वाला भारी वक्षःस्थल वाला अल्प मध्य भाग वाला और चन्द्रकिरण वत् गौर लोम समूह से व्याप्त चारो तरफ फैली हुई सैकडों भुजाये जिसमें और नख ही आयुध जिसमे ॥ २२ ॥

और बडा दुरासद, कि जिसको देखकर समीप न जासके और निज तथा इतर जो चक्र वज्रादि आयुध तिनो से विद्रावित किये है दैत्यदानव जिसने ऐसे रूपको हिरण्यकशिपु देखकर विचारने लगा, कि प्राय करके बड़ा मायावी इस हरि ने मेरे वधका विचार किया है तौ भी इसके उद्योग से क्या होना है ॥ २३ ॥

उस समय वह दैत्यकुंजर हिरण्यकशिपु ऐसे कहता हुआ हाथ मे गदा लेकर श्रीनृसिंह देव के ऊपर चला जैसे अग्नि पतंग गिरने से अलक्षित होजाता है ऐसेही वह असुर भी नरहरि के तेज में अलक्षित होगया ॥ २४ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

सत्त्वधामनि सत्त्वप्रकाशे हरौ पतितस्य तमोमयस्यादर्शनं तद्विचित्रं न भवति तत्र हेतुः यो हरिः पुरा सृष्ट्यादौ प्रलयकालीनं तमः नु अहो अपिबत्तस्मिन् ॥ २५ ॥

विक्रमन्तं ततस्ततः प्रहरन्तम् हस्तादुत्कलितो निःसृतः ॥२६॥

तदा अमरा देवाः सर्वे धिष्ण्यपा असाध्वमन्यन्त हृतान्योकांसि स्थानानि येषां ते तद्भिया घनच्छदा मेघान्तरिताः सन्तः यस्य हस्तात्स्वयं मुक्तस्तं नृहरिं स्ववीर्योन्मुक्तं मन्यमानः खड्गचर्मणी प्रगृह्य पुनस्तमासज्जताऽभ्यपद्यतेत्यन्वयः ॥ २७ ॥

श्येनस्येव वेगो यस्य तम् शतचन्द्रवर्त्मभिः खड्गचर्ममार्गैः

(१) शतचन्द्रवर्मभिरिति-विज० ॥ (२) खरनिस्वनोल्वणः इति, श्री-वीर० ।

नखाङ्कुरोत्पाटितहृत्सरोरुहं विसृज्य तस्यानुचरानुदायुधान् ।
अहन्समन्तान्नखशस्त्र * पार्ष्णिभिर्दोर्दण्डयूथोऽनुपथान्सहस्रशः ॥ ३१ ॥
सटाऽवधूता जलदाः परापतन् ग्रहाश्च तद्दृष्टिविमुष्टरोचिषः ।
अम्भोधयः श्वासहता विचुक्षुभुर्निर्ह्रादभीता दिगिभा विचुक्रुशुः ॥ ३२ ॥

## श्रीधरस्वामिकृतभावार्थदीपिका ।

अच्छिद्रं यथा भवत्येवमुपर्यधश्चरन्तम् अट्टहासमेवाऽऽह, खरं तीव्रम् उत्स्वनेन महाशब्देनोल्बणं भयङ्करम् तद्भयेन हरेस्तेजसा च निमीलिते अक्षिणी यस्य ॥ २८ ॥

ग्रहणे दृष्टान्तः व्यालो यथा आखुं मूषकम् विदारणे दृष्टान्तः अहिं गरुड इवेति विष्वक् सर्वतः स्फुरन्तं निःसरन्तम् ग्रहणेनातुरं विवशम् इन्द्रेण सह युद्धे तत्प्रयुक्तेन कुलिशेन न क्षता त्वगपि यस्य द्वारि सभायां नान्तर्नबहिः ऊरौ ऊरौ निपात्य न भूमौ न चाम्बरे नखैः व्यसुभिरसुमद्भिर्वा एवं दिवानक्तपरिहाराय सन्ध्यायामिति द्रष्टव्यम् ॥ २९ ॥

दैत्यवधमुक्त्वा तद्भृत्यवधमाह, द्वाभ्याम् । संरम्भेण दुष्प्रेक्ष्याणि करालानि लोचनानि यस्य असृजो रक्तस्य लवैर्बिन्दुभी रक्ताः सिक्ता अत एवारुणाः केसरा आननं च यस्य सः क इव द्विपहत्यया गजवधेन हरिः सिंहो यथा एवंभूतस्तस्यानुचरानहन्नित्युत्तरेणान्वयः आन्त्राणां माला कण्ठे विद्यते यस्य॥ ३० ॥

नखांकुरैरुत्पाटितं हृत्सरोरुहं यस्य तम् दोर्दण्डानां यूथानि समूहा यस्य सः तं दैत्येन्द्रमनुपन्था येषां तान् अन्यानपि तत्पक्षपातिन इत्यर्थः ॥ ३१ ॥

दैत्यवधव्यग्रस्य नृहरेराटोपमाह द्वाभ्याम् । सटाभिरवधूताः प्रक्षिप्ता जलदा मेघाः परापतन् व्यशीर्यन्त अनेन ये मेघान्तरिताः देवास्ते स्पष्टं पश्यन्त्वित्याशां दत्तवानित्यर्थः । तस्य दृष्ट्या विमुष्टं रोचिर्येषां ग्रहाणां ते तिरस्कृतप्रभा अभवन्निति शेषः । दिगिभा दिग्गजाः ॥ ३२ ॥

---

## श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

सत्त्वधामनि शुद्धसत्त्वाश्रये हरौ पतितस्तमोमयस्य दैत्यस्याऽदर्शनं यत्किञ्चिच्च न भवति तत्र हेतुर्यो हरिः पुरा सृष्ट्यादौ प्रलयकालिकं तमः स्वतेजसा अपिबत् ततो महासुरोऽभिपत्याभिमुखमागत्य रुषा क्रोधेन उरुवेगया आत्तमालया गदया नृसिंहमभ्यहनत्ताडितुमुद्युक्त इत्यर्थः । सगदमग्रहीदित्युत्तरस्यार्स्यादिति भावः ॥ २५ ॥

विक्रमन्तं कथञ्चित्प्रहर्तुमुद्यतवन्तं तं दैत्येन्द्रं गदाधरो नृसिंहः सगदमग्रहीत् यथा तार्क्ष्यसुतो गरुत्मान् महासर्पं तद्वदित्यर्थः । स गृहीतोऽसुरस्तदा विक्रीडतस्तस्य नृसिंहस्य हस्तादुत्कलितो विसृष्टो यद्वद्यथा विक्रीडतो गरुत्मतोऽहिर्गलितो भवति तद्वत् भगवतस्तत्क्रीडनं तद्विसर्जनरूपमजानन्तो लोकपालाः सर्वे इन्द्रादयः सुराः हृतं दैत्येन्द्रेणापहृतम् ओकः स्थानं येषां ते अतएव तद्भयेन घनच्छदा मेघेषु छन्नाः सन्तः असाध्वमन्यन्त अहो भगवतोऽप्ययं बलीयाऽननैव तस्य किं स्यादित्येवममन्यन्तेत्यर्थः यस्य हस्तात्स्वयं मुक्तस्सन् नृहरिं स्ववीर्याच्छङ्कितं मन्यमानोऽत एव महामना अहमेव बलीयानित्याभिमानयुक्तोऽसुरो मृधे युद्धे जितश्रमः श्रमरहितः खड्गचर्मणी खड्गखेटे प्रगृह्य पुनस्तं नृसिंहं पुरा असज्जत अभ्यपतत् ॥ २६ ॥ २७ ॥

श्येनस्येव वेगो यस्य शतचन्द्रवर्त्मभिः शतचन्द्रश्चर्म तस्य वर्त्मभिः खड्गचर्ममार्गैरच्छिद्रं यथा भवति एवमुपर्यधश्च चरन्तं दैत्यं हरिरट्टहासं कृत्वा खरेण कठिनेन निस्वनेन ध्वनिना उल्बणो भीषणो महावेगो निमीलिते ऽट्टहासखरनिस्वनाभ्यां निमीलिते ऽक्षिणी यस्य तं जग्राह, खरनिस्वनोल्बणमिति द्वितीयान्तपाठे तु खरेण निस्वनेन महाशब्देनोल्बणं भयंकरमट्टहासं कृत्वा तद्भयेन हरेस्तेजसा च निमीलिताक्षमग्रहीत् इत्यर्थः ॥ २८ ॥

ततः विष्वक् सर्वतः स्फुरन्तं सर्वावयवान् प्रचालयन्तमित्यर्थः । ग्रहणेन हेतुना आतुरं विवशमिन्द्रेण सह युद्धे तत्प्रयुक्तेन कुलिशेन अक्षता त्वगपि यस्य तं दैत्यं द्वारि सभायाः नान्तर्बहिः ऊरावङ्के निपात्य न भूमौ न चाम्बरे नखैर्न तु व्यसुभिरसुमद्भिर्वा एवं दिवानक्तं विहाय संध्यायामिति द्रष्टव्यं लीलया क्रीडया ददार विदारितवान्, तत्र ग्रहणे दृष्टान्तः यथा व्यालः सर्पः आखुं मूषकमिति विदारणे दृष्टान्तः महाविषमहिं सर्पं गरुड इवेति॥ २९॥

एव दैत्येन्द्रवधमुक्त्वा तद्दशायामवस्थितं नृसिंहमनुवर्णयन् दैत्येन्द्रभृत्यवधमाह संरम्भेणेति द्वाभ्याम् । अहिते संरम्भेण क्रोधेन दुष्प्रेक्ष्ये दुर्निरीक्ष्ये करालेे लोचने यस्य व्यात्तं विकासितं यदाननं मुखं तत्पर्यन्तं स्वजिह्वया विलिहन्सन् असृजो रक्तस्य लवैः बिन्दुभिः अक्तासिक्ता अतएवारुणाः केसरा आननञ्च यस्य आन्त्रमालाधरः क इव द्विपहत्यया गजवधेन हरिः सिंहो यथा तद्वत् ॥ ३० ॥

एवंभूतो नखांकुरैः उत्पाटितं हृदयसरोजं यस्य तद्दैत्यशरीरं विसृज्य तस्य दैत्येन्द्रस्यानुचरान् कथम्भूतान् उदायुधान् उद्यतायुधानि येषां तमनुपन्थाः अनुवृत्तिर्येषां तान् दोर्दण्डानां यूथानि यस्य सः नखा एव शस्त्रपाणयस्तैः समन्तात्सहस्रशो न्यहनत् हतवान् ॥ ३१ ॥

* पाणिभिरिति पाठः श्रीवीर० विज० ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

दैत्यवधव्यग्रस्य नृहरेराटोपमाह—सटेति द्वाभ्याम् । सटाभिरवधूताः प्रकम्पिताः जलदाः मेघाः परापतन् व्यशीर्यन्त तस्य नृहरेर्दृष्ट्या विमुष्टमपहृतं शोचिः येषां तादृशाः ग्रहाः सूर्यादयोऽभूवन् श्वासेन हताः पीडिता अम्भोधयः समुद्राः चुक्षुभुः सचेलुः निर्ह्रादेन भीताः दिगिभा दिग्गजाः मुदं हर्षं जहुः तत्यजुः ॥ ३२ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

द्विसप्तलोकैकारेः केवलं तुच्छीकरणं भगवद्भक्तिवैशद्याच्च तत्त्वत इति नेत्याह—ततदिति । सत्त्वधामनि बलज्ञानसमाहारमूर्तौ पराक्रममूर्तौ वा जगदादौ तमः पानं पुरुषरूपेण अनेन जगदावरकं तमःपानरतो हरेरसुरभस्मीकरणं किमिति दर्शितम्, अथो लोकं विडम्बयतो हरेरसुरेण सह समरप्रकारं वर्णयति, तत इति ॥ २५ ॥

तस्य गदाभिघातलाघवं वक्ति, स तस्येति । हस्तोत्कलितः हस्ताद्गलित उत्प्लुतो वा ॥ २६ ॥

तस्य हरेर्विडम्बनम् अजानताममराणां निरूपणप्रकारं वक्ति, असाध्विति । हतौजसः भ्रष्टावष्टम्भा इव घनेन च्छद्मा च्छादनं येषां ते तथा मेघच्छायायां विलीना इव लुप्तोपमेयं सर्वधिष्ण्यपाः सर्वनक्षत्रपतयः चन्द्रादयोऽमराः तदसाध्वमन्यन्तेत्यन्वयः । तत्र हेतुः तं मन्यमान इति, नृहरेर्हस्तमुक्तोऽसुरः तं नृहरिं निजवीर्य आत्मपराक्रमे शङ्कितं मन्यमानोऽभूदिति यत्तदिति हरेर्हस्तमुक्तोऽसुरः पराद्रवत् उताभ्यपतत् ? इति शङ्कायां माभूदित्याह, पुनस्तमिति । आसज्जत सक्तोऽभूद्युद्धाय सन्नद्धोऽभूदित्यर्थः । शतचन्द्रवर्त्मभिः शतचन्द्रवर्मभ्यां खड्गचर्मणीति प्रकृतत्वात् "भद्रं कर्णेभिः शृणुयाम देवा" इत्यादिश्रुतेः छान्दसाभिप्रायेणायं प्रयोगः । सम्भाव्यते च परिभ्रमणे शिक्षाप्रकर्षद्रष्टॄणां द्वे एव बहूनीव दृश्यन्त इत्यतो वा बहुवचनं युज्यते अच्छिद्रं निरवकाशमिति क्रियाविशेषणेनैतदेव सूचयति, असुरवीर्यमाशङ्कमानो हरिः किमकरोदिति तत्राह, हरिरिति ॥ २७–२८ ॥

विष्वक् परितः स्फुरन्तं भ्रमन्तमित्यनेनापि शिक्षोत्कर्षं ध्वनयति, हरिः पुनर्ग्रहणेनातुरमकरोदिति शेषः । अनेनातुरत्वं लक्षयति, तत्र दृष्टान्तमाह, व्याल इति । व्यालः सर्पः खननशीलत्वादाखुः अप्रवरत्वेणार्थमाह, द्वारीति । द्वार्यवस्थितस्योरुद्वारेण स्थित्वा उरावङ्के उत्तानतयाऽऽपात्य अत्रापि ह्रस्वत्वं छान्दसं संरम्भेण द्वेषादात्यन्तिककोपेन दुष्प्रेक्ष्ये कराले लोचने यस्य व्यात्ताननान्तं विवृतवदनस्याधरोष्ठम् असृक्लवसया रुधिरबिन्दुनाक्ते कषिते अत एवारुणकेसराननं यस्य स तथोक्तः स हरिः सिंहः ॥ २९—३० ॥

न केवलमेनमेव हतवान् किन्तु तदनुचरानासुरानित्याह, नखाङ्कुरेति । अहन् हतवान् नखशस्त्रपाणिभिर्नखैः शस्त्रैः पाणिभिश्च हरेर्दोर्दण्डानां यूथानुपथान् निकरानुकूलान् ॥ ३१ ॥

तदवसरविक्रमं वक्ति, सटावधूता इति । दिगिभा दिग्गजा मदं जहुस्त्यक्तवन्तः प्रोत्सर्पत प्रोदसर्पत उद्गतेत्यर्थः ॥ ३२—३३ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

हस्तादुत्कलितः निःसृतः । घनच्छदा मद्धर्मते बिद्रक्षन्त इति दैत्यकोपभयान्मेघान्तरिताः हृतौकसोऽसाध्वमन्यन्तेति लोकांस्यपहृतवानेव सम्प्रति यद्ययं जीविष्यति तदस्माकमवशिष्टान् प्राणानपि हरिष्यतीति भावः । निजवीर्याच्छङ्कितं मन्यमानः यद्यस्मात् हस्तान्मुक्तः ॥ २६—२७ ॥

शतचन्द्रवर्त्मभिः खड्गचर्ममार्गैः अट्टहासशब्दोत्थभयेन निमीलिते अक्षिणी येन तम् ॥ २८ ॥

व्यालो यथा मूषिकमिति ग्रहणे दृष्टान्तः गरुडो यथाहिमिति, विदारणे कुलिशेनाक्षता त्वगपि यस्य तम् लीलयाऽवहेलयैव ददार द्वारि सभायां नान्तर्न बहिः ऊरे ऊरौ निपात्य न भूमौ नाम्बरे नखैर्न व्यसुभिरसुमद्भिर्वा एवं दिवानक्तं परिहाय सन्ध्यायामिति ज्ञेयम् ॥ २९ ॥

असृजो रक्तस्य लवैर्बिन्दुभिराक्ताः सिक्ताः अत एवारुणाः केसरा आननञ्च यस्य आन्त्रमाली मालारूपेणान्त्रं दधान इत्यर्थः । द्विपहत्यया हस्तिवधेनान्वितो हरिः सिंह इव नखाङ्कुरैरुत्पाटितं हृत्सरोरुहं यस्येति यत्राहमेव प्रतिक्षणं सुखमवसं तत्र स्वप्रत्ययं मन्दभाग्यः क्रोधमत्सरादिकं तामसं कथं वासयति स्मेति द्रष्टुमिवेत्युत्प्रेक्षा सरोरुहरूपकेण व्यज्यते । अत एवाङ्कुररूपक सरोरुहशङ्काभावायैव बुध्यते दोर्दण्डानां यूथानि यस्य सः अनुपथान् अनुवर्तिनः ॥ ३०–३१ ॥

तत् प्रतापानाह, सटेत्यादि ॥ ३२ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

सत्त्वस्याप्राकृतस्य तेजसो धामनि आश्रये भगवति पतितस्य तमोमयस्य दैत्यस्य यददर्शनं तच्चित्रं न भवति यः पुरा सृष्ट्यादौ प्रलयकालीनं तमः तु अहोऽपिबत संक्षेपेणोक्तं पतनादर्शनप्रकारं विस्तरेण वर्णयति ततइत्यादिना ॥ २५ ॥

विक्रमन्तं ततस्ततः प्रहरन्तं तार्क्ष्यसुतो गरुडो महोरगं यथाऽग्रहीत् तथा विक्रीडतोऽहिर्यद्वदुत्कलितो भवेत् तद्वत् सोऽसुरः तस्य हस्तादुत्कलितो मुक्तः ॥ २६ ॥

तेन हृतौकसोऽमराः देवाः सर्वे धिष्ण्यपाः दिक्पालाः घनच्छदाः मेघान्तरिताः तदुत्कलनमसाध्वमन्यन्त महासुरः यस्य हस्तान्मुक्तस्तं नृहरिं निजवीर्यशङ्कितं मन्यमानः खड्गचर्मणी प्रगृह्य मृधे जितश्रमः श्रमशून्यः वेगेन पुनस्तमासज्जत् ॥ २७ ॥

तं खरं खल हिरण्यकशिपुं श्येनस्येव वेगो यस्य स तथा तम्, शतचन्द्रवर्त्मभिः खड्गचर्मभ्रमणमार्गैः अच्छिद्रं यथा स्यात्तथोपर्यधश्चरन्तं महाजवो हरिः उत्स्वनेनोन्नादेनोल्बणं भयङ्करं

द्यौस्तत्सटोत्क्षिप्तविमानसङ्कुला प्रोत्सर्पत क्ष्मा च पदातिपीडिता ।
शैलाः समुत्पेतुरमुष्य रंहसा तत्तेजसा खं ककुभो न रेजिरे ॥ ३३ ॥
ततः सभायामुपविष्टमुत्तमे नृपासने संहततेजसं विभुम् ।
अलक्षितद्वैरथमत्यमर्षणं प्रचण्डवक्त्रं न बभाज कश्चन ॥ ३४ ॥
निशम्य लोकत्रयमस्तकज्वरं तमादिदैत्यं हरिणा हतं मृधे ।
प्रहर्षवेगोत्कलितानना मुहुः प्रसूनवर्षैर्ववृषुः सुरस्त्रियः ॥ ३५ ॥

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

अट्टहासमुच्चैर्हासं कृत्वा जगृहे कथंभूतमट्टहासेन निमीलिते अक्षिणी यस्य तम् ॥ २८ ॥

विष्वक् सर्वतः स्फुरन्तं निस्सरन्तं ग्रहणेनातुरम् इन्द्रेण सह युद्धे कुलिशेनापि न क्षता त्वक् यस्य तम् यथा आखुं मूषकं व्यालः सर्पोविदारयेद्दन्तैरिति शेषः "व्यालो दुष्टगजे सर्पे" इति कोशात् यथा गरुडो महाविषमहिं नखैर्विदारयेत् तथा द्वारि नान्तर्न बहिः ऊरू ऊरौ निपात्य न भूमौ न व्योम्नि नखैरेव नतु व्यसुभिरसुमद्भिर्वा लीलया ददार दिवानक्ता-भावाय संध्यायामिति शेषः ॥ २९ ॥

हिरण्यकशिपुवधमुक्त्वा तदनुचरवधमाह–संरम्भेति द्वाभ्याम् । संरम्भेण कोपेन दुष्प्रेक्ष्ये द्रष्टुमशक्ये कराले लोचने यस्य स्वजिह्वया व्यात्ताननान्तं विलिहन् छिपक्ष्म हत्यया वधेन हरिः सिंहइव असृक्लवैरक्तबिन्दुभिः आक्ता अतएव अरुणाः केसराः आननं च यस्य आन्त्राणां माला यस्य स हरिः ॥३०॥

नखांकुरैरुत्पाटितहृत्सरोरुहं तं विसृज्य तस्य सहस्रशः अनुच-रान् भृत्यान् अनुपथान् तमनुपन्था जीवनमार्गो येषान्तान् दोर्दण्ड-यूथानि यस्य स नखादिभिः अहन् हतवान् ॥ ३१ ॥

तस्य निरतिशयं प्रतापमाह, सटेति द्वाभ्याम्। सटाभिरवधूताः अपनीताः पराप्तन् दूरमगमन् ॥ ३२ ॥

---

### भाषा टीका ।

जिस हरि ने सृष्टि काल में प्रलयकाल के तम को पान किया उस हरि मे दैत्य का अलक्षित होना कुछ विचित्र नहीं ॥ तदनन्तर महाअसुर ने समीप में जाकर रोप से नर हरि के ऊपर बडे वेग वाली गदा चलाई ॥ २५ ॥

जहां तहां प्रहार करने वाले गदा सहित उस असुर को पकडा जैसे भारी सर्प को गरुड का बालक पकडे इतने ही में वह असुर भगवान के हस्त से सटकगया जैसे कि गरुड के खेलने में हस्त हे सर्प निकलजावे ॥ २६ ॥

हे भरत ! उस समय जिनों के घर द्वार छुडाये गये वो सब लोकपाल मेघों में छिपे हुए अच्छा नहीं मानते हुए हिरण्यकशिपु भी जिनके हाथ से छूठा है उन श्री नर हरि को अपने वीर्य से शंकित मानकर, श्रम को न मानकर फिर भी खड्ग चर्म ( तरवार ढाल ) को लेकर संग्राम के निमित्त वेग से प्रभु के समीप पहुंचा ॥ २७ ॥

श्येन सरीके वेग वाले और नीचे ऊपर सब के चालों से निश्छिद्र विचरते हुए और उच्च स्वर से भयंकर तीक्ष्ण किया जो अट्टहास तिससे निमीलित ( बंद ) हुए नेत्र जिसके एसे उस दैत्य को भगवान ने पकड लिया ॥ २८ ॥

इन्द्र के वज्र से जिसके त्वचा में खरोट भी नहीं आई सर्प के ग्रहण करने से मूषक जैसे ऐसे ग्रहण करने से आतुर चारो तरफ छटपटाते हुए उस दैत्य को द्वार में अपने जघन पर पटक कर, महा विष हरे सर्प को गरुड जैसे ऐसे लीलाई से नखों से विदारण करडाला ॥ २९ ॥

संरम्भ से दुर्निरीक्ष्य ( देखे न जासकें ) और कराल भयानक नेत्र जिनके, फाडे हुए मुख की दोनो बगलों को जिह्वासे चाटते हुए रुधिर कणों से लिप्त हुआ है मुख और केसर ( बाल ) जिनके हिरण्यकशिपु की आंतो की माला पहिने हुए ऐसे नर हरि हाथी की हिंसा से सिंह जैसे, ऐसे शोभित हुए ॥३०॥

नखों से फाडडाला हृदय कमल जिसका एसे हिरण्यक-शिपु को फेंककर चारों तरफ शस्त्रों लिये खडे हुए जो हजारों दैत्यानुचरों को भुजा रूप दंडों का समूह विद्यमान जिनके एसे नर हरि नख रूप शस्त्रो से मारते हुए ॥ ३१ ॥

उस समय आपका रूप कैसा है कि जिनके शिरके बालों टक्कर के से मेघ तितर बितर होगये और जिनकी दृष्टि से ग्रह और नक्षत्रों की कांति फीकी पडगई, और जिनकी श्वास से ताडित हुए २ समुद्र क्षुभित होगये, और जिनके शब्द से त्रस्त होकर दिग्गज भी चिल्लाने लगे ॥ ३२ ॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका ।

तस्य सटाभिरुत्क्षिप्तानि विमानानि तैः सङ्कुला व्याप्तासती प्रोत्सर्पत स्वस्थानात्प्रकर्षेणोत्सर्पच्चलिता ॥ ३३ ॥

श्वभृत्यैश्वर्यमिव मत्वा कौतूहलेन तस्याऽऽसने उपविष्टं भया-त्कोऽपि न बभाज नासेवत न लक्षितो द्वैरथः प्रतियोद्धा येन ॥ ३४ ॥

तदा विमानावलिभिर्नभस्तलं दिदृक्षतां सङ्कुलमास नाकिनाम् ।
सुरानका दुन्दुभयोऽथ जघ्निरे गन्धर्वमुख्या ननृतुर्जगुः स्त्रियः ॥ ३६ ॥

तत्रोपव्रज्य विबुधा ब्रह्मेन्द्रगिरिशादयः ।
ऋषयः पितरः सिद्धा विद्याधरमहोरगाः ॥ ३७ ॥

(१)मनवः प्रजानां पतयो गन्धर्वाप्सरचारणाः ।
यक्षाः किम्पुरुषास्तात ! वेतालाः सिद्धकिन्नराः ॥ ३८ ॥

ते विष्णुपार्षदाः सर्वे सुनन्दकुमुदादयः ।
मूर्ध्नि बद्धाञ्जलिपुटा आसीनं तीव्रतेजसम् ।
ईडिरे नरशार्दूलं नातिदूरचराः पृथक् ॥ ३९ ॥

ब्रह्मोवाच ।

नतोऽस्म्यनन्ताय दुरन्तशक्तये विचित्रवीर्याय पवित्रकर्मणे ।
विश्वस्य सर्गस्थितिसंयमान्गुणैः स्वलीलया सन्दधते ऽव्ययात्मने ॥ ४० ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

लोकत्रयस्य मस्तकज्वरं शिरोव्यथेव दुःसहम् प्रहर्षस्य वेगेनोत्कलितानि विकसितान्याननानि यासां ताः सुरस्त्रियः पुष्पवर्षैः नृहरिं ववृषुः ॥ ३५ ॥

नाकिनां देवानां विमानावलिभिर्नभस्तलं सङ्कीर्णमास सुराणामानकाः पटहास्तैर्जघ्निरे वादिताः स्त्रियो अप्सरसो ननृतुर्गन्धर्वाः जगुः ॥ ३६ ॥ ३७ ॥

गन्धर्वाप्सरसश्चारणाश्चेत्यर्थः ॥ ३८ ॥

नरशार्दूलं पुरुषोत्तमम् ॥ ३९ ॥

ब्रह्मादयो नृसिंहस्य शङ्कयाकुलचेतसः ।
आराद्देवास्तुवन् सप्तदशश्लोकैः पृथक् पृथक् ॥——

अनन्तायानन्तं त्वां प्रसादयितुं नतोऽस्मि अनन्तत्वे हेतुः दुरन्ताः अनन्ताः शक्तयो यस्य, तत्कुतः ? विचित्राणि वीर्याणि प्रभावा यस्य, तत्किमर्थम् ? पवित्राणि श्रवणमात्रेण शोधकानि कर्माणि यस्य, वीर्यत्वमेवाह, विश्वस्येति। सन्दधते सम्यक्कुर्वते एवमप्यव्ययात्मने अप्रच्युतस्वरूपाय ॥ ४० ॥

———

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तस्य नृहरेः सटाभिरुत्क्षिप्तानि विमानानि तैः सङ्कुला व्याप्ता द्यौः प्रोत्सर्पत्तत्स्ततश्चालितेवाभूत्. नृहरेः पद्भ्यामतीव पीडिता क्ष्मा भूमिरभूत् अत एव तस्यासह्येन रंहसा वेगेन बलेन वा शैलाः समुत्पेतुः उत्पलुत्य पतितवन्तः तस्य नृहरेः तेजसा खमाकाशं ककुभो दिशश्च न रेजिरे ॥ ३३ ॥

ततोऽहमेव सर्वेश्वर इति लोकस्य प्रदर्शयितुं सभायामुत्तमे नृपासने उपविष्टं संभृतं संपूर्णं तेजो यस्य अलक्षित. न लक्षितो द्वैरथः प्रतियोद्धा येन प्रचण्डमुग्रं वक्त्रं यस्य तं विभुं नृसिंहं कश्चन कोऽपि न बभाज नासेवत कोऽपि समीपं गन्तुं नाशक्नोदित्यर्थः ॥ ३४ ॥

लोकत्रयस्य मस्तकज्वरं शिरोव्यथावद्दुस्सहं तमादिदैत्यं हिरण्यकशिपुं हरिणा नृसिंहेन युद्धे हतं निशाम्य दृष्ट्वा प्रहर्षवेगेन उत्कलितानि विकसितान्याननानि यासां ताः सुराणां स्त्रियः पुष्पवर्षैः पुन पुनर्नृहरिं ववृषुः ॥ ३५ ॥

तदा दिदृक्षतां द्रष्टुमिच्छतां दर्शनार्थमागतानामित्यर्थः । नाकिनां देवानां विमानपंक्तिभिर्नभस्तलं सङ्कुलं संमर्दं बभूव सुराणामानकाः पटहास्तैर्दुन्दुभयो जघ्निरे ताडिताः गन्धर्वश्रेष्ठाः ननृतुः स्त्रियः अप्सरसो जगुः ॥ ३६ ॥

तत्रोपव्रज्य किञ्चित्समीपमागत्य ब्रह्मरुद्रप्रभृतयो देवादयः हे तात ! मूर्ध्नि बद्धाञ्जलिपुटानि यैस्ते आसीनमुपविष्टं तीव्रं दुस्सहं तेजो यस्य तं श्रीनृसिंहं नातिदूरवर्तिनः पृथगेकैकश ईडिरे तुष्टुवुः ॥ ३७-३८—३९ ॥

तावदपारविविधविचित्रशक्तिवीर्यमकर्मायत्तजगद्व्यापारं जगत्कारणं स्तुत्यमस्करोति ब्रह्मा--नतोस्म्यहमिति। अनन्ताय स्वरूपतस्त्रिविधपरिच्छेदरहिताय दुरन्तशक्तये अपारशक्तये अचिन्त्यशक्तये वा शक्तिः स्वेतरसर्वसामर्थ्यनिर्वाहिका. "जगत् प्रकृतिभावो मे यः सा शक्तिरुदीरिता" इत्यादिषूक्ता. यद्वा यदन्यैरशक्तत्वाद्घटितमिव विभाति तद्घटनसामर्थ्यरूपा. यतस्त्वमुक्तविधदुरन्तशक्तिरनन्तशक्तिरत एव मद्वरेण सर्वतोऽघटितमरणं दैत्यं हतवानसीति भावः। यतस्त्वमनन्तोऽत एवाऽचेतने स्तम्भेऽप्याविर्भूतोऽसीत्यभिप्रायः

(१) मनुः प्रजानामिति. वीररा० पाठः ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

अनन्तपदेन हि सर्वव्यापित्वाद्देशपरिच्छेदराहित्यम्, सर्वकालवर्तित्वात्कालपरिच्छेदराहित्यम्, साक्षात्परम्परया सर्वप्रकारत्वेन सर्ववस्तुसामानाधिकरण्यार्हत्वाद्वस्तुपरिच्छेदराहित्यम् विवक्षितम्, येन केनापि प्राशस्त्येन स्वस्मादुत्कृष्टैः कैश्चिद्वस्तुभिरनधिकत्वाभावरूपं वा वस्तुपरिच्छेदराहित्यम्, इति त्रिविधपरिच्छेदराहित्यं विवक्षितम् । नन्वनन्तत्वेव स्वरूप कृत्स्नजगदुदयविभवलयलीलस्य किमेतदेतदित्यहननमित्यभिप्रयन्, तावज्जगत्कारणत्वप्रयुक्तं विकार निराह, निचित्रवीर्यायेति । वीर्यं नाम सर्वोपादानत्वे सर्वसाधारणे सर्वनियमने विकाररहितत्वम्, यथोक्तम्, "विकारविरहो वीर्यं प्रकृतित्वेऽपि मे सदा" इत्यादि विचित्रशब्देनैवाविधस्य वीर्यस्यातितरसाधारण्यमुच्यते. पवित्रकर्मणे अकर्मायत्तजगद्व्यापाराय स्वद्व्यापारं शृण्वतां दुरितनिवर्त्तनक्षमव्यापारायेतिवा गुणैः सर्वज्ञत्वसर्वशक्तित्वादिभिर्जगन्निमित्तनदुपादानत्वोपयुक्तैः स्वनियाम्यसत्त्वादिप्राकृतगुणैर्वा कृत्स्नस्य विश्वस्य सर्गादीन् स्वलीलयैव न तु कर्मणा सन्दधत विदधते अव्ययात्मने एवमप्यव्ययः विकाररहित. आत्मा स्वभावो यस्य. स्वभावतोऽपि विकाररहितायेत्यर्थः स्वरूपतोऽपि विकारराहित्यस्योक्तत्वात् ॥ ४० ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

सभायामुत्तमे नृपासने इत्याह, तत इति । सम्भृततेजसं राशीकृततेजसं अलक्षित न केनापि दृष्टम् ॥ ३४ ॥

नन्वयं जयः केनापि न लक्षितः तद्कुरव्यक्त्यदर्शनादित्याशङ्क्य, पुरुषकोपोपशमनं स्त्रीणामेव सुशकमिति भावेन सुरस्त्रीपुष्पवर्षप्रकारमाह, निशम्येति । लोकत्रयस्य मस्तकज्वरं शिरोरोगायमाणं प्रहर्षातिरेकेणोत्फुल्लितं विकसितमाननं यासां तास्तथा ता. ॥ ३५ ॥

सुरस्त्रीवृष्टपुष्पसौरभ्याघ्राणेन किञ्चिच्छान्तकोपत्वादस्माकमप्ययमवसर इति मत्वा नानादेवानां नभसि विमानावलिसाङ्कुल्यप्रकारं वक्ति, ननेति । सुराणामानका दुन्दुभय ॥ ३६ ॥

चण्डस्तुःखानाञ्चित्ताह्लादकरी स्तुतिरेषेति भावेन ब्रह्मादीनामुपक्रममाह, उदुपव्रज्येति । ये पूर्वमुपगन्तुं त्रत्रास ते ब्रह्मादयस्तं पृथगीडिर इत्यन्वयः ॥ ३७ ॥

नातिदूरचराः किञ्चित्समीपवर्तिनः ॥ ३८-३९ ॥

तत्र पृथक्पृथक् मतिलक्षणं स्तुतिप्रकारं ब्रूते, नतोऽस्मीति । गुणैः सत्त्वादिभिः स्वलीलया स्वरूपभूतलीलया अव्ययात्मने नित्यदेहाय ॥ ४० ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

सटाभिरूर्ध्वं क्षिप्तैश्चालितैर्विमानैः सङ्कुला व्याप्ता क्षमा च प्रोत्सर्पत महाग्रमाभावलक्षणापौ । तिर्यगूर्ध्वाधो भावेनातिष्ठत् ॥ ३३ ॥

नृपासने उपविष्टमिति येन यः पराभूयते तेन तदधिकारः स्वीक्रियते इति राजनीतिं प्रदर्शयन्तमिव । यद्वा । शापग्रस्तेऽपि स्वभृत्ये स्वाभिमानत्यागाभावो व्यञ्जितः । यः किल ऋषिभिरपि समर्पितानन्यानुपहृतान्मन्त्रपूतानप्यासनाद्युपहारान् स्वाचाङ्गीकरोति स एव भगवान् स्वभक्तेनासुरभावग्रस्तेन शापभ्रंष्टेनाप्यवदत्तमपि तदुपभुक्तमपि सिंहासनं यत् स्वयमेवास्त तद्भक्तसौभाग्यमेव सर्वान् दर्शयामासेति तत्त्वं । सम्भृततेजसं सम्पूर्णप्रकाशं न लक्षितो द्वैरथः प्रतियोद्धा येन न न बभाज भयाद्राजनादिना भक्तापि कोपि नासेवत ॥ ३४ ॥

निशम्य हृष्टा मस्तकस्य ज्वरमिव दुःसहम् ॥ ३५ ॥

नाकिनां स्वर्गिणां आस बभूव ॥ ३६—३७ ॥

अप्सरश्चारणा इत्यार्षम् ॥ ३८ ॥

सनकादीन् कोपयसि स्वभक्तौ भ्रंशयसि मया वरान् दापयसि दैत्यगृहे भक्तराजमाविर्भावयसि । दैत्य प्रेरणे भक्तं लिखां सयसि भक्तरक्षार्थं स्वयमेवमाविर्भवसीति तव विचित्रलीलासित न कोऽपि वेत्तीत्याह—नतोऽस्मीति । अनन्ताय गन्तुं शक्योऽन्तो यस्य तस्मै अनन्तं त्वां प्रसादयितुं दुरन्तशक्तये दुर्ज्ञेयोऽन्तो यासां तथाभूता शक्तयो यस्य तस्मै विचित्रवीर्याय क्षणमात्रेण सवाञ्जयदैत्यनिहन्त्रे क्रोधक्षेपितत्वेऽपि शुद्ध सत्त्वमयत्वात् पवित्र कर्म यस्य तस्मै सन्दधते कुर्वते ॥ ३९—४० ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीप. ।

द्यौस्तस्य सटाभिः क्षिप्तैरुत्क्षिप्तैर्विमानैः सङ्कुला व्याप्ता जाता यदा मतिपीडिता क्षमा प्रोत्सर्पत मनुष्यचलत् अनुष्य रंहसा वेगेन तस्य तेजसा ख नभः ककुभो दिशश्च न रेजिरे ॥ ३३ ॥

ततस्तदनन्तर सभायामुत्तमे नृपासने प्रह्लादार्थं तत्प्रसादीकर्तुमुपविष्टं सम्भृत सम्यक् स्वभावत एव भृतं पूर्णं तेजो यस्य तं न लक्षितो द्वैरथः प्रतियोद्धा येन तत् अत्यमर्षणं प्रचण्डवक्त्र भीत्या कश्चन कोपि न बभाज नासेवत ॥ ३४ ॥

सुराणां स्त्रियः लोकत्रयस्य मस्तकज्वरं दुःसहशिरःपीडामिव तमादिदैत्यं हरिणा दुःखनाशकेन मृधे हतं निशम्य प्रहर्षवेगेनोत्फुल्लितान्याननानि यासां ताः प्रसूनवर्षैर्ववृषुः ॥ ३५ ॥

तदा तस्मिन्नवसरे दिदृक्षतां द्रष्टुमिच्छतां नाकिनां दिवौकसां विमानावलिभिर्नभस्तल सङ्कुलमासीत् बभूव सुराणामानकाः दुन्दुभयश्च जघ्निरे तैर्वादिताः गन्धर्वमुख्याः जगुः स्त्रियश्च ननृतुः ॥ ३६-३७ ॥

गन्धर्वाश्च अप्सरसश्च चारणाश्चेति द्वन्द्वे अप्सर, इत्यत्र सकारा-भावः आर्षत्वात् ॥ ३८—३९ ॥

दुरन्तशक्तये नित्यशक्तये स्वलीलया स्वाधीनविहारेण हेतुना गुणैः स्वशक्तिगुणैः रजआदिभिः विश्वस्य सर्गादीन् विदधते अतएवाऽव्ययात्मने निर्विकारस्वरूपाय नतोऽस्मि ॥ ४० ॥

रुद्र उवाच ।

कोपकालो युगान्तस्ते हतो ऽयमसुरो ऽल्पकः ।
तत्सुतं पाह्युपसृतं भक्तं ते भक्तवत्सल ! ॥ ४१ ॥

इन्द्र उवाच ।

प्रत्यानीताः परम ! भवता त्रायता नः स्वभागा दैत्याक्रान्तं हृदयकमलं त्वद्गृहं प्रत्यबोधि ।
कालग्रस्तं कियदिदमहो नाथ ! शुश्रूषतां ते मुक्तिस्तेषां न हि बहुमता नारसिंहाऽपरैः किम् ॥ ४२ ॥

ऋषय ऊचुः ।

त्वं नस्तपः परममात्थ यदात्मतेजो येनेदमादिपुरुषाऽऽत्मगतं ससर्ज ।
तद्विप्रलुप्तममुना ऽद्य शरण्यपाल रक्षागृहीतवपुषा पुनरन्वमंस्थाः ॥ ४३ ॥

पितर ऊचुः ।

श्राद्धानि नोऽधिबुभुजे प्रसभं तनूजैर्दत्तानि तीर्थसमयेऽप्यपिबत्तिलाम्बु ।
तस्योदरान्नखविदीर्णवपाद्य आर्च्छत्तस्मै नमो नृहरयेऽखिलधर्मगोप्त्रे ॥ ४४ ॥

भाषा टीका ।

खडे हुए जिनके शिरके केशों से उल्लिप्त ( चालित , जो विमान तिनसे व्याप्त भया स्वर्ग लोक भी चलायमान होगया तथा चरणों से पीडित पृथिवी भी प्रचालित होगई, और वेगसे पर्वत उखड गये तेज से आकाश और दिशा शोभित न होने लगी ॥ ३३ ॥

तदनन्तर सभा में उत्तम नृपासन के ऊपर बैठे हुए प्रकाशन्त तेज वाले और नहीं देखा गया शत्रु जिन का ऐसे प्रचण्ड वदन वाले असह्य रूप विभु श्रीनरहरि के समीप कोईभी न जा सका ॥ ३४ ॥

तीन लोकों के मस्तक का ज्वर रूप उस आदि दैत्य-को प्रभुके हाथ से मरा हुआ देखकर, हर्षके वेग से प्रसन्न मुख वाली देवाङ्गना पुष्पों की वर्षा करने लगी ॥ ३५ ॥

उस समय देखने वाले देवताओं के विमानों की पंक्तियों से आकाश व्याप्त होगया, और देवताओं के आनकदुन्दुभि बाजे बाजने लगे, और गन्धर्व प्रभृति गाने लगे और अप्सराये नाचने लगीं ॥ ३६ ॥

उस समय वहां पर ब्रह्मा महादेव प्रभृति देवता, ऋषि पितर सिद्ध विद्याधर महोरग मनु प्रजापति गन्धर्व अप्सरा चारण यक्ष किंपुरुष वेताल सिद्धेश किन्नर और सुनन्द कुमुदादिक सब विष्णु पार्षद मस्तकपर अञ्जलि बांधकर समीप जाकर अति दूरस्थित न होकर तीव्र तेज वाले श्री नरहरिको पृथक २ स्तुति करने लगे ॥ ३७—३९ ॥

ब्रह्मो वाच ।

ब्रह्माजी बोले, कि—अन्त शून्य दुरन्त शक्तिवाले विचित्र वीर्यवाले और पवित्र कर्मा जो आप है तिनको नमस्कार हो, और अपने गुण और लीलासे अव्ययात्मा को नमस्कार हो ॥ ४० ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

रुद्रस्तु तत्कोपकालाभिज्ञो नायं कोपावसर इति तं प्रार्थयते, कोपेति। सहस्रयुगान्तस्तव कोपस्य कालः कोपायोग्यश्चायमित्याह, अल्पकोऽल्पदः अतः कोपात्रिवृत्य प्रह्लादं मा हिंसीरित्याह, तत्सुतमिति। यद्वा अकालेप्येवं कोपोऽन्य भक्तस्य रक्षणार्थमितिचेत्तर्हीदानीं कोपं त्यक्त्वेमं पाहीत्यर्थः ॥ ४१ ॥

इन्द्रस्तु नास्माकं हविर्भागादिलाभः पुरुषार्थः, किन्तु त्वत्परिचर्यैव भवता पुनरनेन संरम्भेण स्वकार्यमेव साधितं तस्य च सिद्धत्वादुपसंहरैन कोपमित्याशयेनाऽऽह,हे परम!नो अस्मांस्त्रायता रक्षता भवता स्वीया एव भागा दैत्यात्प्रत्याहृताः अन्तर्यामिणस्तवैव यज्ञेषु भोक्तृत्वात् अस्मदीयं हृदयकमलं त्वद्गृहमेवैतावत्पर्यन्तं भयहेतुत्वेनास्मत्स्मृतिपथे नित्यं स्थितेन दैत्येनाक्रान्तं व्याप्तं सत्प्रत्यबोधि भयापाकरणेन विकासं नीतम्। ननु, तव त्रैलोक्यैश्वर्यसाधनार्थमयमुद्यम इति चेत्तत्राऽऽह—कालग्रस्तमिति। ते त्वाम् हे नारसिंह नरस्य सिंहस्य चाकाराभ्यामाविर्भूत ! अपरैः स्वर्गादिभिः किम् ॥ ४२ ॥

ऋषयस्तु तपःप्रवर्तनेनास्माकं महाननुग्रहः कृत इत्याहुः,

सिद्धा ऊचुः ।

यो नो गतिं योगसिद्धामसाधुरहार्षीद्योगतपोबलेन ।
नानादर्पं तं नखैर्निर्ददार तस्मै तुभ्यं प्रणताः स्मो नृसिंह ! ॥ ४५ ॥

विद्याधरा ऊचुः ।

विद्यां पृथग्धारणयाऽनुराद्धां न्यषेधदज्ञो बलवीर्यदृप्तः ।
स येन संख्ये पशुवद्धतस्तं मायानृसिंहं प्रणताः स्म नित्यम् ॥ ४६ ॥

नागा ऊचुः ।

येन पापेन रत्नानि स्त्रीरत्नानि हृतानि नः ।
तद्वक्षःपाटनेनासां दत्तानन्द ! नमोऽस्तु ते ॥ ४७ ॥

मनव ऊचुः ।

मनवो वयं तव निदेशकारिणो दितिजेन देव ! परिभूतसेतवः ।
भवता खलः स उपसंहृतः प्रभो ! करवाम ते किमनुशाधि किङ्करान् ॥ ४८ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

त्वं नो यदात्थ परमं ध्यानलक्षणं तपः परमत्वे हेतुः आत्मनस्तव तेजः प्रभावरूपं तदेवाहुः येन तपसाऽऽत्मनि लीनमिदं विश्वं ससर्ज सृष्टवानसि तदमुना दैत्येन विप्रलुप्तं कुण्ठितं सत् हे शरण्यपाल ! अद्य रक्षाऽर्थं गृहीतेनानेन वपुषा पुनरपि तपः कुर्वित्यनुज्ञातवानसि तस्मै ते नम इत्युत्तरश्लोकचतुर्थपादस्यानुषङ्गः ॥ ४३ ॥

पितरस्तु श्राद्धोद्धरणेन परमोपकारिणं श्रीनृसिंहं प्रणमन्ति—श्राद्धानि श्रद्धायुक्तानि पिण्डादीनि नोऽस्माकं पुत्रैः दत्तानि प्रसभं बलाद्यः स्वयमधिकृत्य बुभुजे किञ्च तीर्थस्नानसमये दत्तं तिलोदकमप्यपिबत् तानि च तस्योदराद्य आच्छिदाहृतवान् कथंभूतात् नखैर्विदीर्णा वपा यस्य तस्मात् वपाविदारणस्य तद्गतपिण्डोद्धरणमेव फलमिति भावः ॥ ४४ ॥

योगसिद्धां गतिमणिमादिसिद्धिम् नाना अनेके दर्पा यस्य तम्, तस्मै तुभ्यं तं त्वामुद्दिश्य ॥ ४५ ॥

विद्यामन्तर्धानादिलक्षणाम् अनुराद्धां संप्राप्तां संख्ये युद्धे ॥ ४६ ॥

रत्नानि फणासु स्थितानि तथा स्त्रीरत्नानि चोत्तमाः स्त्रियः आसां स्त्रीणां दत्त आनन्दो येन तत्सम्बोधनं पाठान्तरेऽस्माकं दत्त आनन्दो येनेति ॥ ४७ ॥

नृसिंहेनावलोकिताः सन्तो मूर्ध्नि बद्धाञ्जलयो मनवः प्रोचुः मनवो वयं धर्मपालकाः परिभूताः सेतवो वर्णाश्रमधर्ममर्यादाः येषां ते अनुशाध्यनुशिक्षय ॥ ४८ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

यद्ब्रह्मणोऽभिप्रेतं कृत्स्नजगत्सर्गादिकर्तुस्तव कियदेतदिति तदेव विशदयन्त्वात्मनस्तत्प्रयुक्तं स्तौति, रुद्रः—कोपकालइति. तव कोपकालो युगान्तः द्विपरार्द्धावसानं कोपकाल इत्यनेन मदन्तर्यामितया मन्मुखेन संहर्ता त्वमेवेत्युक्तं भवति. अयन्तु कोपाविषय इत्याह, अयमल्पकोऽल्पबलो हतोऽतः कोपनिवृत्त्या हे भक्तवत्सल ! तत भक्तं तत्सुतं तस्य दैत्येन्द्रस्य सुतं उपसृतं तव समीपमागमिष्यन्तं पाहि संरक्ष ॥ ४१ ॥

इन्द्रस्तु स्वदुःखमावेदयन्सर्वरक्षकं सर्वान्तरात्मानं समस्तपुरुषार्थदं स्तौति–प्रत्यानीता इति । हे परम सर्वोत्कृष्ट ! नोऽस्मान् त्रायता त्रात्रा भवता दैत्येनाक्रान्ताः प्रसह्य गृहीताः स्वभागाः स्वकीया यज्ञीयभागा अस्मदादिमुखेन त्वमेवयज्ञभोक्तेत्यभिप्रायेण स्वशब्दः प्रयुक्तः प्रत्याहृताः दैत्याक्रान्तमिति द्वितीयान्तपाठे तु दैत्यभयाकुलमिति हृदयविशेषणम्. एवं दैत्यवधेन स्वभागप्रत्यानयनेन च त्वद्गृहं त्वदावासभूतम् अत एवाऽमलमस्माकं हृदयं प्रत्यबोधि भयेन पूर्वं मुकुलितमिदानीं तदपाकरणेन विकासितं भवतीत्यनुषङ्गः । त्वां सेवतामस्माकं त्वत्तो लौकिकपुरुषार्थप्राप्तिरस्त्येतत्कियदित्याह. हे नाथ स्वामिन् ! ते शुश्रूषतां परिचर्यापराणामिदं लौकिकं पुरुषार्थजातं कालेन नंक्ष्यमाणं कियत् यत्किञ्चिदेतदित्यर्थः । तदेवाह, तेषां त्वां परिचरतां मुक्तिरपि न बहुमता त्वत्सेवासुखासक्तानां मुक्तिरपि न परमं प्रयोजनम्. अतः हे नारसिंह ! अपरैरर्वाचीनैः पुरुषार्थैः किम् ? न किमपि तेषामतितुच्छमर्वाचीनपुरुषार्थजातमिति भावः ॥ ४२ ॥

ऋषयस्तु सर्वगुरुं साधुपरित्रातारं दुष्कृद्विनाशकञ्च तुष्टुवुः

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

त्वमिति । परममुत्कृष्टं तपस्त्वद्ध्यानरूपं नोऽस्माकं त्वमात्थ उपदिष्टवानसि. तपो विशिषन्ति, यत्तप आत्मनस्तव तेजः प्रकाशकम् अस्माकं त्वत्स्वरूपावेदकमित्यर्थः । येन च तपसा आदिपुरुषश्चतुर्मुखः इदं जगदात्मगतं परमात्मना त्वया गतमन्तरात्मतया व्याप्तं ससर्ज. आदिपुरुषात्मगतमित्यत्र "गूढोत्मा न प्रकाशते" इतिवत्सन्धिरार्षः आदिपुरुषात्मेति पाठे आदिपुरुषेति लुप्तप्रथमान्तं पृथक्पदम्. यद्वा हे आदिपुरुष ! इति सम्बोधनं ससर्ज ब्रह्मेति शेषः । तत् तपोऽमुना दैत्येन्द्रेण विप्रलुप्तं विशेषेण प्रलोपितमासीत् तदेवाधुना हे शरण्य ! शरणमर्हतीति शरण्य. तथाभूत ! हे पालक ! रक्षागृहीतवपुषा साधुपरित्राणार्थं गृहीतेन नरसिंहशरीरेण पुनरन्वमंस्थाः अनुज्ञापितवान्. वः शत्रुर्मया विनाशितोऽतः पुनर्निर्भय तपः कुरुतेति नोऽनुज्ञापितवानसीत्यर्थः ॥ ४३ ॥

पितरस्तु स्वदुःखमावेदयन्तोऽखिलधर्मगोप्तारं हितकारिणं स्तुवन्तो नमस्कुर्वन्ति—श्राद्धानीति । अस्माकं तनूजैः पुत्रादिभिरस्मदुद्देशेन दत्तानि श्राद्धानि श्राद्धसम्बन्धीनि पिण्डानि यो दैत्य. प्रसभं बलात्स्वयमभिबुभुजेऽभुक्तवान् । तथा तीर्थसमये पुण्यतीर्थस्नानसमये अस्मत्तनूजैः अद्दत्त तिलोदकं तदप्यपिबत् तस्य दैत्यस्य उदराच्छ्राद्धानि तिलाम्बु च यः पुनरार्च्छदाहृत्यास्माकं दत्तवान् कथम्भूतादुदरात् नखैर्विदारिता वपा यस्य तस्य तस्मात्. वपाविदारणस्य तद्गतपिण्डोद्धरणमेव फलमिति भावः । तस्मै समस्तधर्माणां गोप्त्रे रक्षित्रे नृहरये ते नमः तिलाऽम्बवसभ्य्या इत्यपि पाठः । तदाऽसभ्य इति दैत्येन्द्रविशेषणम्. तिलाम्बु तिलोदकमसभ्यः सभाऽनर्हो यो दैत्येन्द्रोऽभिबुभुजे पीतवानित्यर्थ. ॥ ४४ ॥

सिद्धा अपि स्वयोगगत्यपहारकदैत्येन्द्रवधद्वारा स्वयोगगत्यापकं परमसुहृदं वर्णयन्तो नेमुः—य इति । योऽसावसुरात्मा दैत्यो नोऽस्माकं योगसिद्धां गतिं भक्तियोगप्राप्तां गतिम् अणिमादिरूपां स्वयोगेन तपोबलेन अहार्षीदपहृतवान्. तम् नानादर्पं नानाऽनेकाः दर्पा यस्य तं नखैर्यो विददार विदारितवान्. तस्मै तुभ्यं हे नृसिंह ! वयं प्रणताः स्मो नमस्कुर्मः ॥ ४५ ॥

विद्याधरा अपि तेनापहृतविद्याप्रत्यादानेन हितकारिणं स्तुवन्तो नमन्ति—विद्यामिति । धारणया मनोधारणयाऽनुराद्धां संसिद्धां विद्यामस्मत्सम्बन्धिनीमन्तर्धानादिलक्षणां योऽज्ञो मूढो बलवीर्याभ्यां गर्वितो दैत्येन्द्रो न्यषेधन्निषेधितवान् बलं देहबलं वीर्यं पराभिभवसामर्थ्यम्. स दैत्यो येन संख्ये युद्धे पशुवद्धतस्तं त्वां मायानृसिंहमात्मीयसङ्कल्पोपात्तनृसिंहतनुं नित्यं प्रणताः स्मः कर्तरि क्तः नमस्कृतवन्तः स्मेत्यर्थः ॥ ४६ ॥

नागास्त्वेवं तदपहृतरत्नप्रदानेनानन्दकरं स्तुवन्तो नेमुः—येनेति । येन पापात्मना नोऽस्माकं रत्नानि स्त्रीरत्नानि नागकन्यारूपाणि रत्नानि चापहृतानि तस्य वक्षोविदारणेनास्मां स्त्रीणां दत्त आनन्दो येन तस्य सम्बोधनं ते तुभ्यं नमोऽस्तु ॥ ४७ ॥

तवाज्ञापरिपालनरूपकैङ्कर्यविरोधिनिरसनेन कैङ्कर्याधापनरूपहितकारिणं स्तुवन्तस्तदेव प्रार्थयन्ते मनवः—मनव इति । वयं तव निदेशकारिणः कैङ्कर्यकारिणो मनव इति प्रसिद्धाः ते वयमेतावन्तं कालं येन दितिजेन दैत्येन परिभूताः परिहापिताः सेतवः त्वत्कृताः वर्णाश्रममर्यादा येषां तादृशा बभूविम अधुना स खलो दितिजस्त्वया उपसंहृतो हतः हे प्रभो ! निवृत्तकैङ्कर्यविरोधिनो वयं किं कैङ्कर्यं ते तुभ्यं करवाम तथा किङ्करानस्मान् अनुशाधि विविच्याऽऽज्ञापयेत्यर्थः ॥ ४८ ॥

———

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

येनायमसुरो हतः स कोपकालो युगान्तो युगावसानोचितो नेदानीमल्पासुरहनने तस्मात्कोपं संहृत्याऽनुसृतं शरणं प्राप्तं तस्य सुतं प्रह्लाद रक्षेत्यन्वयः ॥ ४१ ॥

हे परम ! नस्त्रायता रक्षता भवता दैत्यहृता यज्ञेषु स्वभागा अस्मद्योग्यहविर्भागाः प्रत्यानीता इत्यन्वयः । तपोबलेन दैत्येनाक्रान्तं निमीलितं च तव गृहं तव वासयोग्यं हृदम्बुजमलं प्रत्यबोधि विकसितमस्माकं भवतेति शेषः । किलकिलतिशब्दमेव कर्तुं योग्यो नान्येनेत्याशयेनाह, कालेति । नाथ ! नृहिद् स्वर्गादिस्थानं कालग्रस्तं किमल्पसुखजनकम् ? नकिमपीति मत्वा भजति. ते शुश्रूषतां त्वां सेवमानानां तेषां कारणात् मुक्तिरपि बहुमता न हि यस्मात्तस्मात् हे नारसिंह ! तेषां भक्तानां आशीर्भोगैः प्राप्तैः किम् ? इत्यन्वयः ॥ ४२ ॥

हे आदिपुरुष ! त्वं यदात्मतेज आत्मनो हरेर्लोकत्रयं तेजस्तपो- नोऽस्माकं परमश्रेष्ठं आत्थ येन तपसा आलोचनरूपेण आदिरुतेदं समस्तमात्मगतं व्याप्तं हे शरण्यपाल ! अमुना दैत्येन विप्रलुप्तं नष्टं तत्तपो जगद्रक्षार्थं गृहीतवपुषा नरसिंहात्मना पुनरप्यस्मान्प्रति कृपाकृतानुकम्पया उज्जीवितमिति शेषः । "तप आलोचने" इति धातोः "यस्य ज्ञानमयं तपः" इति श्रुतेश्च. जगदुदानसादृश्यादधात्मतेज इत्यभेदवचनं पुंसो विष्णोः परिलोपानं न स्वरूपनाशः ॥ ४३ ॥

यो भवानखिलैर्दीर्घैरपालक्षितावन्तात् तत्र दैत्योदराद्व्यवहृत्य "क्रुञ्जगतौ" इति धातोः आक्रान्तवान् [illegible]दित्यन्वयः ॥ ४४ ॥

योगसिद्धामणिमाद्यैश्वर्यलक्षणां गतिं योगः पवनविजयः तपः कायक्लेशलक्षणं तयोर्वेगेन नानाविधा दर्पा यस्य स तथा ॥४५॥

पृथक् जगद्विलक्षणस्य हरेर्धारणयाऽपडोपासनयानुरुद्धां लब्धां विद्यामन्तर्धानलक्षणाम् ॥ ४६ ॥

आसां स्त्रीणामपि दत्तानन्द ! ॥ ४७ ॥

निदेशकारिणः आज्ञाकारिणः ॥ ४८ ॥

———

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

॥ ४१ ॥

इन्द्रस्तु स्वोपकारविशेषानुमोदनेन तं प्रसादयति—प्रत्येति । स्वभागा अस्मद्रूपसेवकवर्गाः प्रत्यानीताः पुनर्निकट एव प्रापिताः तथा दैत्याक्रान्तमिति तावेनासेव परमोपकारो त्रैलोक्यराज्यदानन्तु यत्किञ्चिदेवेत्याह—कालेति ॥ ४२—४३ ॥

समयेष्यपिबत्तिलाम्बु इति पाठः स्वामिसम्मतः । मायानृसिंहमिति कृपाप्रधानं नृसिंहमित्यर्थः ॥ ४४—४७ ॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

मनवोऽत्र वर्तमानमनुसहितास्तपःस्थिताः अतीता इत्यर्थः ते च भाविनोऽप्यात्मानमेवं मत्वा निवेदयन्ति स्मेति मनव ऊचुरित्युक्तम् ॥ ४८—५० ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

तव घोरस्वरूपमालक्ष्य प्रलयशङ्कया सर्वे बिभ्यति नत्वहमित्याह—कोपेति । युगान्तः प्रलयः तव कोपस्य कालः प्रलयस्तत्र संहारे कर्मणि अहमेव त्वदंशोऽवसर एवेति भावः । भक्तवात्सल्यार्थमयं कोप इति चेत् अल्पकः त्वदपेक्षया अल्पतरोऽयमसुरो हत एव । अतस्तत्सुतं भक्तम् उपसृतमनुगतम् ॥ ४१ ॥

एतावद्दिनपर्यन्तं त्वच्चरणस्मरणाधिसुखं पवाह वयं इत्याह-हे अज ! नोऽस्माकमागता दत्ता भवता स्वीया एव भागाः दैत्यात् अत्यानीताः प्रत्याहृताः इन्द्रादीनां त्वद्दासानामस्माकं वस्तुतु परन्तु अभोक्तृत्वेन स्वांशोऽभिन्नात् किञ्चास्माकं हृदयं खलु कमलं तव भवनत्वेन ध्यातव्यास्तद्गृहं । तच्च कमलं यथा शीते रात्रौ तमसाक्रान्तं मलिनं निद्रितं भवेत् तथैव दैत्यभयरूपे एतावद्दिनपर्यन्तं भयादैत्यवदेव ध्यानहीनाक्रान्तं सङ्कुचति तव नृसिंहसूर्यस्योदये सति अत्यबोधि स्वस्वरूपाक्रान्तं सङ्कुचत्वादित्यर्थः । यद्वा, त्वद्गृहं वैकुण्ठं प्रति प्रबोधि त्वत्स्वरूपसेवार्थं बुद्धिं प्रापेत्यर्थः । ननु, भक्ताभिमानिनिन्द्रस्त्वं गृहाणेति तत्र सत्यमहं सकामो भक्तिशून्यो गृहीष्यामीत्याह, सर्वनिष्कामभक्तानान्तु कालग्रस्तमिति इममिन्द्रपदं अपरैः योगैश्वर्यादिभिः ॥ ४२ ॥

एतावद्दिनपर्यन्तमस्माभिर्न तपस्तप्तमित्याहुः । त्वं नोऽस्माकं परमं गुणगुह्यात्मयं यत्परन्तत् आत्मनः स्वस्य तेजः आरब्धमस्मासु तपःप्रवर्तनार्थमिति भावः । येन तेजसा तपो रूपेण आत्मनि लीनमिदं विश्वं ससर्ज असाक्षीः । ससर्जेत्यपि पाठः "सृजामि तपसैवेदम्" इति स्वयुक्तेः । तत्तपः अमुना दैत्येन सौरं तेजो राहुणेव विप्रलुप्तं । तत् स्वरूपति रक्षार्थं गृहीतेनानेन वपुषा नृसिंहाकारेण अन्वमस्थाः पुनरप्यस्मत्कर्त्तव्यत्वेन अनुमतं स्वगतमकरोः ॥ ४३ ॥

वयमेतावद्दिनपर्यन्तमुपवासपरा एवाभूमेत्याहुः । श्राद्धानि श्राद्धपिण्डादीनि तीर्थस्नानसमये तिलाम्बु तिलतर्पणोदकं तानि नश्च । तस्य उरात् आच्छेत् आहृतवान् । कथम्भूतात् नखैर्निर्भिन्ना वपा मेदो यस्य तस्मात् "वपा विवरमेदसोः" इति मेदिनी । वपाः निःसार्य पिण्डतिलोदकादीन्येवास्मान् दर्शयामासेत्यर्थः ॥४४॥

योगैश्वर्यसम्पत्तिहीना रङ्का एव वयमेतं कालं प्रतीक्षामहे इत्याहुः, यो नो गतिमणिमादिसिद्धिं नानादर्पमनेकदर्पवन्तं तमसुरम् ॥ ४५ ॥

वयमप्येतावद्दिनपर्यन्तं विद्या रहिता एवास्मेत्याहुः । विद्या अन्तर्धानादिलक्षणां राद्धां सिद्धां संख्ये युद्धे । मायानृसिंहं कृपाप्रधानं नृसिंहम् ॥ ४६ ॥

हृतधना हृतस्त्रीका एव वयमेतावद्दिनपर्यन्तं सन्तप्ता एवेत्याहुः-येनेति । नखक्षतः पाटनेन विदारणेन आसां स्त्रीणां हे दत्तानन्द ॥ ! ४७ ॥

नृसिंहेनाकस्मादवलोक्यमाना मनवो मूर्ध्नि बद्धाञ्जलयो वयं त्वदाज्ञाकारिणो मनवो भवामेत्याहुः-एवमग्रेप्यवतारिकाः ज्ञेया मनव इति । सेतवो वर्णाश्रमधर्ममर्यादाः ॥ ४८ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

रुद्रोऽपि भगवन्तं प्रणम्याहेति योज्यम् एवमग्रेऽपि यत्र नातिर्नास्ति तत्र योज्यम् ते तव कोपस्य कालः युगान्तः प्रलयः इदानीमपि स्वभक्तरूपस्य तव यद्गात कोपः स तु अल्पकोऽसुरो हतः अतः कोपं त्यक्त्वा तत्सुतं ते भक्तमुपसृतं त्वां शरणं गतं पाहि ॥ ४१ ॥

हे परम ! नोऽस्माकं आयता यज्ञानां स्वभागाः "अहं हि सर्वयज्ञानां भोक्ता च" इति स्मृतेः स्वीया एव भागाः दैत्यात्प्रत्याहृताः "ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति" इति अस्मदादिहृदयकमलं त्वद्गृहमेव तच्चैतावत्पर्यन्तं दैत्याक्रान्तम्. तद्भयात्त्वाद्विस्मृते स्वत्स्मृतेश्च तेन रुद्धम् इदानीं प्रत्यबोधि त्वत्स्वरूपगुणस्मरणं कुरुत् स्वर्गादिसुखं दुःखोदर्कं ज्ञात्वा हरिभक्तानां सुख निरपेक्षं कामयमान आह, हे नाथ ! हुताश ! हे भक्तिरसप्रद ! हे नारसिंह ! कालेऽत्रस्तमिदं दैवैश्वर्यं कियत् ते त्वां शुश्रूषतां मुक्तिरपि न बहुमता अपरैः पुरुषार्थैः किम् ? त्वद्भजनसुख तात्रदनुपमं त्वद्भक्तापत्तिलक्षणस्य त्वद्भजनफलस्य मोक्षस्य निरतिशयत्वं को वर्णयेदिति भावः ॥ ४२ ॥

हे आदिपुरुष विश्वहेतो ! येनेदं विश्वं आत्मगतं सूक्ष्मरूपेण त्वमपि वसन्तं ससर्ज स्थूलतया प्रकटितवान् नोऽस्मभ्यं प्रदाय उपदिष्टवानसि कथम्भूतं परमं सर्वैश्वर्यप्रदम् आत्मनो विभूतिरूपम् "तपो ब्रह्म" इति श्रुतेः तदमुना दैत्येन विप्रलुप्तं पुनस्त्वं रक्षार्थं गृहीतेन वपुषा नरहरिरूपेणान्वमंस्थाः तपःकुरुतेत्यस्मदनुज्ञातवानसि ॥ ४३ ॥

योऽस्मभ्यो विहूतसमानैः श्राद्धानि श्राद्धनिमित्तानि पिण्डादीनि तिलाम्बु च तनूजैर्नोऽस्मभ्यं तीर्थस्नानसमये तिथिपात्रादियोगकाले दत्तानि प्रसभं बलात् स्वयमधिबुभुजे तस्योदरान्नखैर्विदीर्णा वपा यस्य तस्मात् य आच्छेत् आहृतवान् तस्मै नमः ॥४४॥

योऽसाधुः नोऽस्माकं योगसिद्धां तपश्चित्तैकाग्र्यरूपयोगेन साधितां गतिमणिमादिसिद्धिमहार्षीत् अपहृतवान् तं नानादर्पमनेकाभिमानवन्तं यो नखैर्विददार विदारितवान् तस्मै तुभ्यं प्रणताः स्मः ॥ ४५ ॥

योऽज्ञः विद्यां अन्तर्धानादिलक्षणां पृथग्धारणया तत्सिद्ध्यर्थमनोधारणयाऽनुरुद्धां सम्पादितां न्यषेधत् स येन संरब्धे संग्रामे पशुवद्धतः तं मायया वयुनेन सङ्कल्पेन नृसिंहरूपेणाविर्भूतं नित्यं प्रणताः स्मः ॥ ४६ ॥

रत्नानि मण्यादीनि स्त्रीरत्नानि च आसां भवत्प्रजानां नखतद्भक्षःपाटनेन दत्त आनन्दो येन तत्सम्बुद्धौ हे दत्तानन्द ! ते तुभ्यं नमः ॥४७॥

प्रजापतय ऊचुः ।

प्रजेशा वयं ते परेशाभिसृष्टा न येन प्रजा वै सृजामो निषिद्धाः ।
स एष त्वया भिन्नवक्षा नु शेते जगन्मङ्गलं सत्त्वमूर्तेऽवतारः ॥ ४९ ॥

गन्धर्वा ऊचुः ।

वयं विभो ! ते नटनाट्यगायका येनात्मसाद्वीर्यबलौजसा कृताः ।
स एष नीतो भवता दशामिमां किमुत्पथस्थः कुशलाय कल्पते ॥ ५० ॥

चारणा ऊचुः ।

हरे तवाङ्घ्रिपङ्कजं भवापवर्गमाश्रिताः ।
यदेष साधुहृच्छयस्त्वयाऽसुरः समापितः ॥ ५१ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

निदेशकारिणः आज्ञाकारिणः येन परिभूताः निराकृताः सेतवो वर्णाश्रममर्यादा येषां ते स उपसंहृतो हतः अतः अनुशाधि अनुशिक्षय ॥ ४८ ॥

भाषा टीका ।

रुद्र उवाच ।

श्रीमहादेवजी बोले, कि आपके कोपका समय तो युगान्त अर्थात् प्रलय है यह तो आपने अभी छोटे से असुर को मारा है ॥ तस्मात् हे भक्तवत्सल ! शरणागत आपके भक्त, उस के पुत्र प्रह्लाद की रक्षा करो ॥ ४१ ॥

इन्द्र उवाच ।

इन्द्र बोले, कि–हे नाथ ! हे परमेश्वर ! हे नरहरे ! आपने बडे प्रचण्ड दैत्य का वधकर के हमारे भाग हम को दिवायें, और आपका निवासस्थान जो हमारा हृदय कमल उसको आपने निर्भय करके प्रफुल्लित किया, और काल ग्रस्त यह ऐश्वर्य तो क्या है, पर आप के चरण की शुश्रूषा करने वाले तो मुक्ति का भी बहुमान नहीं करते फिर औरों से क्या है ॥ ४२ ॥

ऋषय ऊचुः ।

ऋषिलोग बोले, कि हे परमेश्वर ! हे शरणपाल ! जिस तपो बल से अपने में लीन इस जगत् को रचा और जो आत्मा का तेज रूप है उसी तप की हम लोगों आज्ञा आपने दी है, आज हमारे उस तप का इस दैत्यने लोप कर दिया, फिर जिन आपने रक्षार्थ वपु को धारण कर उसी तप की अनुमति दी तिन आप को नमस्कार हो ॥ ४३ ॥

पितर ऊचुः ।

पितृलोग बोले, कि—हमारे पुत्रों ने श्राद्ध में जो हमको पिण्ड समर्पण किये इसने उनको बलात्कार से भोगा, और स्नान काल में जो तिलांजलि हम को पुत्रों ने दी उसको भी यही पी गया, जिन आपने उस के उदर से अपने नखों से नख को विदीर्ण कर खाये हुए सबरे पिण्ड निकाल दिये, अखिल धर्म की रक्षा करने वाले नृसिंह देव आपको नमस्कार हो ॥ ४४ ॥

सिद्धा ऊचुः ।

सिद्धलोग बोले, कि जिस दुष्टने अपने योग और तपोबल से हमारी योग सिद्ध गति को चुराली उस नानादर्प वाले दैत्य को आप ने नखों से विदारण किया । हे नृसिंह ! ऐसे आपको हम लोग प्रणत हैं ॥ ४५ ॥

विद्याधरा ऊचुः ।

विद्याधरलोग बोले, कि बल और वीर्य के दर्पसे जिस मूढ ने हमारी पृथक् धारणा से सिद्ध करी हुई विद्या का निषेध किया उसको जिन आपने संग्राम में पशु के तरह मार दिया ऐसे मायानृसिंह रूप आप को हम नित्य प्रणाम करते हैं ॥ ४६ ॥

नागा ऊचुः ॥

नाग लोग बोले, कि जिस पापी ने हमारे रत्न और स्त्रीरत्न दोनो छुडा लिये, उस के वक्षस्थल के फाडने से दिया है आनन्द जिन ने ऐसे आप को नमस्कार हो ॥ ४७ ॥

मनव ऊचुः ॥

मनु लोग बोले, कि हम आपके आज्ञाकारी मनु लोग हैं । हे देव ! इस दैत्य ने हमारे मर्यादा सेतु तोडदिये परन्तु आपने उसी दुष्ट का उपसंहार किया । प्रभो ! हम आपके किंकर क्या करें, आप हमको आज्ञा दीजिये ॥ ४८ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

प्रजापतयोऽपि तदवलोकिता प्रोचुः, हे परेश ! ते त्वया अभिसृष्टाः वयं प्रजेशा येन निषिद्धाः सन्तः प्रजा न सृजामः स एषः भिन्नं वक्षो यस्य सः नु निश्चितं मृतः शेते अतःपरं

यक्षा ऊचुः ।

वयमनुचरमुख्याः कर्मभिस्ते मनोज्ञैस्त इह दितिसुतेन प्रापिता वाहकत्वम् ।
स तु जनपरितापं तत्कृतं जानता ते नरहर ! उपनीतः पञ्चतां पञ्चविंश ! ॥ ५२ ॥

किम्पुरुषा ऊचुः ।

वयं किम्पुरुषास्त्वं तु महापुरुष ईश्वरः ।
अयं कुपुरुषो नष्टो धिक्कृतः साधुभिर्यदा ॥ ५३ ॥

वैतालिका ऊचुः ।

सभासु सत्रेषु तवाऽमलं यशो गीत्वा सपर्यां महतीं लभामहे ।
यस्तां व्यनैषीद्भृशमेष दुर्जनो दिष्ट्या हतस्ते भगवन्यथाऽऽमयः ॥ ५४ ॥

किन्नरा ऊचुः ।

वयमीश ! किन्नरगणास्तवानुगा दितिजेन विष्टिममुनाऽनुकारिताः ।
भवता हरे ! स वृजिनोऽवसादितो नरसिंह ! नाथ ! विभवाय नो भव ॥ ५५ ॥

विष्णुपार्षदा ऊचुः ।

अद्यैतद्धरिनर रूपमद्भुतं ते दृष्टं नः शरणद ! सर्वलोकशर्म ।
सोऽयं ते विधिकर ईश विप्रशप्तस्तस्येदं निधनमनुग्रहाय विद्मः ॥ ५६ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायाम् वैयासिक्यां
सप्तमस्कन्धे प्रह्लादानुचरिते दैत्यराजवधे नृसिंहस्तवो नाम
अष्टमोऽध्यायः ॥ ८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

प्रजाः सृजाम इति हृष्यन्तः प्राहुः, हे सत्त्वमूर्ते ! तवायमवतारो जगतो मङ्गलाय ॥ ४९ ॥

गन्धर्वा अपि तदवलोकिताः प्रोचुः, हे प्रभो ! वयं ते त्वदीया नटा नर्त्तका नाट्ये नृत्ये गायकाश्च येन स्वाधीनाः कृताः कथम्भूतेन वीर्य्यं शौर्य्यं बलं शक्तिः ओजः प्रभावो यस्य तेन स एष भवता इमां दशां मृतिम् नीतः उचितश्चैतदित्याहुः किमिति ॥ ५० ॥

भवापवर्गं संसारनिवर्त्तकम् । आश्रयणो हेतुः यद्यस्मात् साधूनां हृदि भयजनकत्वेन शेते तिष्ठतीति तथा स एषोऽसुरः त्वया समापितः अन्तं नीतः ॥ ५१ ॥

मनोज्ञैः कर्मभिः तवानुचरेषु मुख्यास्ते वयं दितिसुतेन शिबिकावाहकत्वं प्रापिताः पञ्चतां मृत्युं हे पञ्चविंश ! चतुर्विंशतितत्त्वानियामक ॥ ५२ ॥

किम्पुरुषास्तु त्वां स्तोतुं के वयं वराका इत्याहुः,—वयमिति । वयं किम्पुरुषास्तुच्छशालिनः त्वन्तु महान् अद्भुतप्रभावः पुरुषः नन्वयं महान् दैत्यो हत इति किं न वर्ण्यते इत्याशङ्क्य कियदेतदित्याहुः अयमिति यदा साधुभिर्भगवद्भक्तैस्तिरस्कृतस्तदैव नष्टः ॥ ५३ ॥

सत्रेषु यज्ञेषु ते त्वया हतः एतद्दिष्ट्या भद्रं कृतम् ॥ ५४ ॥

अमुना दितिजेन विष्टिं निर्मूल्यं कर्म अनु निरन्तरं कारिताः अतःपरं नो विभवाय समृद्धये भव ॥ ५५ ॥

नोऽस्माकं भक्तानां शरणद ! आश्रय प्रद ! सर्वेषां लोकानां शर्म मङ्गलमेतदद्भुतम् । रूपमद्यैव दृष्टं ननु पूर्वं विधिकरः किङ्करः ॥ ५६ ॥

इति श्रीमद्भागवते महापुराणे सप्तमस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिकायाम्
अष्टमोऽध्यायः ॥ ८ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

सहारकतद्व्यापाररूपजगत्सर्गात्मकास्मद्व्यापारविरोधिनिरसनेन तदधिकाराधायकां सर्वेषां शुभाधायकमूर्तिं तुष्टुवुः प्रजापतयः-प्रजेशाइति । हे परेश ! परेषां ब्रह्मादीनामपीश ते त्वया अभिसृष्टा व्यष्टिसर्गार्थं त्वया सृष्टाः प्रजेशाः प्रजापतय इति प्रसिद्धाः ते वयमेतत्पर्यन्तं येन दैत्येन्द्रेण निषिद्धास्सन्तः प्रजाः न वै सृजामः न सृष्टवन्तः स एव दैत्यस्त्वया भिन्नं विदीर्णं वक्षो यस्य तादृशोऽनु शेते अतःपरं प्रजाः सृक्ष्यामः इति हृष्यन्त आहुः हे सत्त्वमूर्ते अप्राकृतशुद्धसत्त्वविग्रह ! ते तवावतारो जगन्मङ्गलं जगतो मङ्गलावहः ॥ ४९ ॥

तन्मुखोल्लासार्थं नाट्यादिकैङ्कर्यविरोधिनिरसनेन तदाधायकं सुहृदं तुष्टुवुर्गन्धर्वाः—वयमिति । हे विभो ! ते तव नटनाट्यगायका नटाः नर्तकाः नाट्ये कर्मणि गायकाश्च वयं येनैतावत्पर्यन्तमात्मसात्कृताः स्वाधीनाः कृताः कथम्भूतेन वीर्यं शौर्यं बलं शक्तिः ताभ्यामोजः प्रभावो यस्य तादृशेन स एष दैत्यो भवता निरतिशयकृपायुक्तेन इमां दशां मरणमित्यर्थः नीतः प्रापितः तथाहि उत्पथस्थः उत्पथे कुमार्गे पापकर्मणि तिष्ठतीति तथा कुशलाय क्षेमाय कल्पते किम् ? क्षेमयुक्तो भवति किम् ? न कल्पत एवेत्यर्थः ॥ ५० ॥

तत्पादपङ्कजपरिचर्याविरोधिनिरसनेन पुनस्तदाधायकं हितकरन्तुष्टुवुश्चारणाः,हरे इति । हे हरे-आश्रितार्तिहर ! अपवर्गमैहिकामुष्मिकसुखहेतुं तवाङ्घ्रिपङ्कजमाश्रिताः परिचरन्तो वयमनेन निषिद्धा इति शेषः स एषोऽसुरः साधूनां प्रपन्नानां हृच्छयः हृदयरोगरूपस्त्वया समापितः उपसंहृतो हत इत्यर्थः ॥ ५१ ॥

स्वदुःखमावेदयन्तस्तन्निवर्त्तकं सुखाधायकं वर्णयन्ति यक्षाः, वयमिति । मनोज्ञैः कर्मभिर्वयं तवानुचरश्रेष्ठाः ते वयमिह तावद्दितिजेन वाहकत्वं यानादिवाहकत्वं भारवाह—कत्वं वा प्रापिताः हे नरहरे ! तेन दितिजेन कृतं तव नतजनानां भक्तजनानां परितापं जानता ते त्वया पञ्चविंशो दैत्येन्द्राख्यो जीवः पञ्चतां मृत्युम् उपनीतः प्रापितः "विज्ञानघन एवैतेभ्यो भूतेभ्यः समुत्थाय तान्येवाऽनुविनश्यति" इति वत्पञ्चविंशस्य शरीरद्वारका पञ्चताप्राप्तिरत्र विवक्षिता पञ्चविंशेति पाठे, हे जीवशरीरकेति सम्बोधनम्, स तु जनपरितापमिति पाठे । येन दितिसुतेन वाहकत्वं नीताः स तु पञ्चविंश इत्यन्वयः ॥ ५२ ॥

स्वनैच्यानुसन्धानपूर्वकमनितरसाधारणप्रभावं तुष्टुवुः किंपुरुषाः-वयमिति । वयं किंपुरुषाः कुत्सिताः पुरुषास्त्वं तु महापुरुषः अनितरसाधारणगुणपूर्णः ईश्वरः सर्वान्तरात्मा च अयं महान् दैत्यो हतस्त्वयेति किं न वर्ण्यते इत्याशङ्क्य कियदेतदित्याहु', "अयमिति. कापुरुषः ईषत्पुरुषः अस्मदपेक्षया बलीयांस्त्वत्तोऽधम इति भावः । ईषदर्थं विभाषा पुरुषे" इति सूत्रेण कुशब्दस्य कादेशः यदा साधुभिर्धिक्कृतस्तिरस्कृतस्तदैव नष्टो नष्टप्रायः अतः किंवेतत्त्वयेति भावः ॥ ५३ ॥

अस्मत्सम्मानावहत्वद्गुणगानविरोधिनिरसनेन त्वयैव वयं बहुमता इत्याहुर्वैतालिकाः—सभास्विति । तवामलं यशः सभासु सत्रेषु च गीत्वा वयं महतीं सपर्यां पूजां पूर्वं लभामहे तानस्मान्यो दुर्जनो दैत्यः स्ववशं यथा भवति तथाऽनैषीत् स एष दुर्जनः, हे भगवन् ते त्वया हतः एतद्दिष्ट्या भद्रं जातं दिष्ट्या दैवेन त्वयेति वान्वयः । यथा आमयः यथा शिरोव्यथारूपो रोगः पीडकारकः तद्वदयमासीत्किलेति शेषः ॥ ५४ ॥

स्वदुःखमावेदयन्तः सर्वसुखाधायकं लोकार्तिहरं तुष्टुवुः किन्नराः-वयमिति । हे ईश ! वयं किन्नरगणा इति प्रसिद्धास्तवानुगाः अनुचरास्ते वयमेतावदमुना दितिजेन विष्टिमनुकारिताः मूल्यरहितं कर्म विष्टिस्तामनुनिरन्तरं कारिताः, हे हरे अनुचरार्तिहर ! स वृजिनः पापात्मा दैत्यो भवता उत्सादित उपसंहृतः हे नरसिंह ! हे नाथ ! नोऽस्माकं विभवाय सुखसमृद्धये त्वं भव ॥ ५५ ॥

स्वामिन्नदृष्टपूर्वं रूपं द्विषतामप्यनुग्राहकं धृतवानसीत्याहुः विष्णुपार्षदाः-अद्येति । नोऽस्माकं भक्तानां हे शरणद आश्रयप्रद ! निरतिशयपुरुषार्थसाधनभूतोपायप्रद! इति वा, सर्वेषां लोकानां शर्म सुखावहमेतदद्भुतं रूपमद्यैव दृष्टं न तु पूर्वं हे ईश ! स्वामिन् ! सोऽयं दैत्यस्तव विधिकरः निदेशकारी किङ्करः स च विप्रैः सनकादिभिः शप्तः मध्ये कैङ्कर्यविरोधी जात इति भावः । तस्य दैत्यस्येदं निधनं त्वत्कृतमनुग्रहाय पुनः कैङ्कर्यलाभरूपतदनुग्रहार्थमेवेति वयं जानीमः ॥ ५६ ॥

इति श्रीमद्भागवते महापुराणे सप्तमस्कन्धे

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायाम्

अष्टमोऽध्यायः ॥ ८ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

हे परेश ! त्वयाभिसृष्टा येन दैत्येन निषिद्धा वयं प्रजाः न सृजामो वै सदैत्यस्त्वयैव तु इदानीं भिन्नवक्षाः शेते तथाऽयमवतारो जगन्मङ्गलं जगति शुभसारभूतः जगतो मङ्गलमुद्दिश्य गृहीतो वा ॥ ४९ ॥

नटो नटनं कथाबन्धवचनं नाट्यं शृङ्गारादिभावदर्शनम् एतयोर्गायकाः । एतदुक्तम् "नटनं तु कथाबन्धं नाट्यकं भावदर्शनम्" इति वीर्यबलौजसा येनात्मसात् आत्माधीनाः कृताः कल्पते समर्थो भवति ॥ ५० ॥

साधून् हरन्तीति साधुहृतः सज्जनास्तेषां श्रय आश्रयः साधूनां हृदयं श्यति तापदत्वेनेति वा समापितो विनाशं गमितः भवस्यापवर्गस्य त्यागो यस्मात्तथा तद्वचात्संसारान्मोक्षो यस्मात्तथेति वा ॥ ५१ ॥

पञ्चतां विनाशं हे पञ्चविंश ! चतुर्विंशानां मध्य इति शेषः ॥ ५२ ॥

किंपुरुषाः पुरुषाभासाः ॥ ५३ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

सवेषु सभासु सत्रकारिणः दिष्ट्या सुखं कर्तुम् ॥ ५४ ॥

येननहीनतया क्रियमाणं कर्म विष्टि वृजिनं दुःखं करोतीति वृजिनः कर्मर्थः प्रत्ययः सः अपसादितोऽपहृत्य नाशितः विभवाय संसारान्मुक्तये ॥ ५५ ॥

हरिनरयोः मिहलरयोरूपं विधिकरो भृत्यः किं विप्रशापात् * असुरयोनिमासस्य ॥ ५६ ॥

इति श्रीमद्भागवते महापुराणे श्रीमद्विजयध्वजतीर्थकृत पदरत्नावल्याम्

अष्टमोऽध्यायः ॥ ८ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

हरे इति पूर्वस्ताभयत्वे हेतुः साधुहृच्छय इति । सम्प्रत्याश्रये हेतुः स्वमापित इति ॥ ५१ ॥

हे नरहरे ! ते तव मनोज्ञैः कर्मभिरनुचरा ये शिवकुबेरादयः ते मुख्याः स्वामिनो येषां ते वयम् ॥ ५२—५५ ॥

एते विष्णुपार्षदाः श्रीविकुण्ठानन्दनसर्वान्धिनो ज्ञेयाः श्रीनृसिंहदेवेनैकीभूय तस्यावतरणात् ॥ ५६ ॥

इति श्रीमद्भागवते महापुराणे सप्तमस्कन्धे

श्रीजीवगोस्वामिकृतक्रमसन्दर्भे

अष्टमोऽध्यायः समाप्तः ॥ ८ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी।

हे परेश परमेश्वर ! निषिद्धाः अरे मा प्रजाः सृजतेत्याज्ञप्ताः । हे सत्त्वमूर्त्ते तवावतारो जगन्मङ्गलम् ॥ ४९ ॥

येन दैत्येनात्मसात्कृतास्सन्तः स्तस्यैव नटा नाट्ये गायकाश्चाभूमेत्यर्थः ॥ ५० ॥

साधूनां हृदि तच्छय्यायामपि शेते इति सः । अत एव तदसहिष्णुनेव त्वया समापितः अन्तं नीतः । अत एवाद्यारभ्य तेषां हृदि त्वमेव शेष्वेति भावः ॥ ५१ ॥

ते तव मनोज्ञैः कर्मभिरनुचरेषु मुख्याः । यद्वा । अनुचरास्त्वद्भक्ता एव मुख्या येषां ते वयमपि शिबिकावाहकत्वं प्रापिताः । तेन दितिसुतेन कृतं जनपरितापं जानता त्वया पञ्चतां मृत्युं हे पञ्चविंश चतुर्विंशतितत्त्वनियामक ॥ ५२—५३ ॥

ताम् अस्मत्संप्रदानकसपर्य्यां वयं स्वाधीनतां विशेषेण अनैषीत् नीतवान् ॥ ५४ ॥

विष्टिं निर्मूल्यं कर्म अनु निरन्तरं कारिताः । वृजिनो दुःखदः ॥ ५५ ॥

सोऽयं हिरण्यकशिपुस्ते विधिकरो दासएव विप्रैः सनकादिभिः शप्तः ॥ ५६ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् ।
सप्तमस्याष्टमोऽध्यायः सङ्गतः सङ्गतस्सताम् ॥ ८ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

हे परेश "सत्त्वं स्वातन्त्र्यमुद्दिष्टं तच्च कृष्णेन चापरे" इति वचनात्सत्त्वेन स्वातन्त्र्येण मूर्तिर्यस्य तत्सम्बुद्धौ हे सत्त्वमूर्त्ते ! ते त्वया अभिसृष्टाः प्रजेशा वयं येन निषिद्धाः प्रजाः न सृजामः स एष त्वया भिन्नवक्षाः भिन्नं विदारितं वक्षो यस्य स तथा शेते तस्मात्क्षेममङ्गलस्यैकस्य का कथा ते तवावतारो नु निश्चितं जगन्मङ्गलम् ॥ ४९ ॥

हे विभो ! ते त्वदीयाः नटाश्च नाट्यगायकाः नाट्येषु तत्तदनुरूपगानकर्तारश्च वयं वीर्यबलौजसा धैर्यबलाभ्यां शूरत्वसामर्थ्येनौजः प्रभावो यस्य स तथा एवंभूतेन येन आत्मसात्कृताः स्ववशगाः कृताः स एष भवता इमां दशां नीतः उत्पथस्य किं कुशलाय कल्पते नैव कुशलयोग्यो भवतीत्यर्थः ॥ ५० ॥

हे हरे क्लेशहर ! यस्मादेव साधूनां हृदि भयदत्वेन शेते निष्ठतीति तथाभूतः त्वया समापितो हतः अतो निर्भया वय मनस्य संसारस्यापवर्गो निवृत्तिर्यस्मात्तस्य सर्वाङ्घ्रिपङ्कजमाश्रिताः ॥ ५१ ॥

हे पञ्चविंश ! प्रकृतिर्महत्तत्त्वमहंकारश्चेति त्रितयम् पञ्च तन्मात्राणि पञ्च महाभूतानि एकादशेन्द्रियाणि चेति चतुर्विंशतिप्राकृतपदार्थनियन्तः हे नरहरे ! ते त्वदीयाः मनोज्ञैः कर्मभिरनुचरेषु मुख्याः वयं येन दितिसुतेन वाहकत्वं प्रापिताः स नु तत्कृतं जनपरितापं जानता त्वया पञ्चतां मृत्युमुपनीतः अथ निर्भयाः मनोज्ञैः कर्मभिस्त्वां भजाम इति भावः ॥ ५२ ॥

वयं किंपुरुषाः दीनाः त्वं महापुरुषो दीनबन्धुः अयं कुपुरुषः न दीनो न दीनबन्धुः अतः साधुभिर्धिक्कृतः अतो नष्टः ॥ ५३ ॥

सपर्यां पूजां पुरा लभामहे यस्तां त्वनैषीत् स एष त्वया यथाऽऽमयो रोगस्तद्वद्धतः एतद्दिष्ट्या भद्रं जातम् ॥ ५४ ॥

हे ईश ! दितिजेनामुना विष्टिं निर्मूल्यसेवाम् अनु निरन्तरं कारिताः स वृजिनो दुःखदः हे हरे ! भवता अवसादितः उपसंहृतः हे नरसिंह ! हे नाथ ! नोऽस्माकमभवाय मोक्षाय भव ॥ ५५ ॥

हे शरण्य ! सर्वेषां लोकानां शर्म मङ्गलं तेऽद्भुतमेतद्धरिनररूपमद्य नोऽस्माभिर्दृष्टम् हे ईश ! सोऽयं विप्रशप्तस्ते विधिकरः किंकरोऽत एव तस्येदं निधनम् अनुग्रहाय विद्मो जानीमः ॥ ५६ ॥

इति श्रीमद्भागवते महापुराणे सप्तमस्कन्धीये

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे

अष्टमाध्यायार्थप्रकाशः ॥ ८ ॥

---

* अध्याहृतं पदम् ॥

भाषाटीका।

प्रजापतय ऊचुः।

प्रजापति लोग बोले, कि—हेपरेश ! हम आप के रचे हुए प्रजेश हैं जिस्के निषेध के मारे हम प्रजा को सृजते रहे, सो आपकी कृपा से विदीर्ण वक्षःस्थल वाला सोरहा है हे सत्त्वमूर्त्ते ! जगत के मङ्गल के लिये आप का अवतार है॥ ४९॥

गंधर्वा ऊचुः।

गंधर्व लोग बोले, कि—हे विभो ! हमतो आप के नाचने गानेवाले हैं इसने बलसे जबरजस्ती हम लोगों को अपने वश में कर लिये, तिस्को अपने इस दशाको प्राप्त किया, भलो कुमार्गगामी का कब भला हो सक्ता है॥ ५०॥

चारणा ऊचुः।

चारण लोग बोले कि। हेहरे ! संसार से पार लगाने वाले आपके चरणकमल का हमलोगो ने आश्रय लिया है, क्योंकि ? यह साधुओ के हृदय में खटकने वाला असुर आपने समाप्त कर डाला॥ ५१॥

यक्षा ऊचुः।

यक्ष लोग बोले, कि-हम लोग आपके मनोज्ञ कर्मो से अनुचरों मे मुख्य है तिन हम को इस दैत्य पुत्र हिरण्य कशिपुने पालकी उठाने वाले और बोझा उठाने वाले बना लिये हे नर हरे ! तब अपने जनो के दुःख जानने वाले आपने उसको पञ्चता को प्राप्त किया आप कैसे हो कि पचीसवां तत्त्व रूप है॥ ५२॥

किंपुरुषा ऊचुः।

किंपुरुष लोग बोले, कि—प्रभो हम लोग तो किंपुरुष ( खोटे पुरुष ) है और आप महा पुरुष ईश्वर हो, और जब साधु जनों ने धिक्कार कर दिया तब यह कुपुरुष नष्ट होगया॥ ५३॥

वैतालिका ऊचुः।

वैतालिक लोग बोले, कि—हे भगवन् ! सभा और यज्ञ यागादिकों में हम लोग आप के निर्मल यश का गान करके बडी पूजा को प्राप्त होते हैं, जिस दुर्जनने हमारी उस पूजा को उडाली इस दुर्जन को रोगके नाई आपने ठंडा किया हे भगवन् ! यह बडा मङ्गल भया॥ ५४॥

किन्नरा ऊचुः।

किन्नर लोग बोले कि हे ईश ! हम लोग आपके अनुग किन्नर गण हैं इस दैत्य ने हम लोगोंको सदा के वेगारी बना लिये हैं हे हरे ! हे नरसिंह ! आपने इस पाप का नाश किया हे नाथ आप हमारी के अर्थ होवे॥ ५५॥

विष्णुपार्षदा ऊचुः।

विष्णुपार्षद लोग बोले, कि—इस समय यह अद्भुत नरहरि रूप आप का देखा हे आश्चर्य प्रद ! कैसा आपका यह रूप है कि सर्व लोक के सुख देने वाला है हे ईश सो यह विप्र शाप को प्राप्त हुआ आप का किंकर है इसका यह निधन ( मरण ) इसी के अनुग्रह के लिये है॥५६॥

इति श्रीमद्भागवत महापुराण सप्तमस्कन्ध, अष्टम अध्याय की भागवताचार्यकृत भाषा टीका समाप्त॥ ८॥

---

इति श्रीमद्भागवते महापुराणे सप्तमस्कन्धे अष्टमोऽध्यायः॥ ८॥

## ॥ नवमोऽध्यायः ॥

नारद उवाच ।

एवं सुरादयः सर्वे ब्रह्मरुद्रपुरस्सराः ।
नोपैतुमशकन्मन्युसंरम्भं सुदुरासदम् ॥ १ ॥
साक्षाच्छ्रीः प्रेषिता देवैर्दृष्ट्वा तन्महदद्भुतम् ।
अदृष्टाश्रुतपूर्वत्वात्सा नोपेयाय शङ्किता ॥ २ ॥
प्रह्लादं प्रेषयामास ब्रह्माऽवस्थितमन्तिके ।
तात ! प्रशमयोपेहि स्वपित्रे कुपितं प्रभुम् ॥ ३ ॥
तथेति शनकै राजन्महाभागवतोऽर्भकः ।
उपेत्य भुवि कायेन ननाम विधृताञ्जलिः ॥ ४ ॥
स्वपादमूले पतितं तमर्भकं विलोक्य देवः कृपया परिप्लुतः ।
उत्थाप्य तच्छीर्ष्ण्यदधात्कराम्बुजं कालाहिवित्रस्तधियां कृताभयम् ॥ ५ ॥
स तत्करस्पर्शधुताखिलाशुभः सपद्यभिव्यक्तपरात्मदर्शनः ।
तत्पादपद्मं हृदि निर्वृतो दधौ हृष्यत्तनुः क्लिन्नहृदश्रुलोचनः ॥ ६ ॥
अस्तौषीद्धरिमेकाग्रमनसा सुसमाहितः ।
प्रेमगद्गदया वाचा तन्न्यस्तहृदयेक्षणः ॥ ७ ॥

प्रह्लाद उवाच ।

ब्रह्मादयः सुरगणा मुनयोऽथ सिद्धाः सत्त्वैकतानमतयो वचसां प्रवाहैः ।
नाराधितुं पुरुगुणैरधुनापि पिप्रुः किं तोष्टुमर्हति स मे हरिरुग्रजातेः ॥ ८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

नवमे ब्रह्मणा भीत्या चोदितोऽसुरबालकः ।
कोपं प्रशमयन्नस्तौन्नृसिंहमतिभीषणम् ॥ १ ॥
"उग्रोऽप्यनुग्र एवायं स्वभक्तानां नृकेसरी ।
केसरीव स्वपोतानामन्येषामुग्रविग्रहः"—

इत्याद्यागमोक्तां भक्तानुकम्पितामाह—एवमिति सप्तभिः । एवं दूरत एव स्थित्वा स्तुवन्तः मन्युना संरंभ आवेशो यस्य तं उप समीपे गन्तुं नाशक्नुवन् ॥ १ ॥

श्रीर्लक्ष्मीर्देवैः प्रेषिताऽपि महदद्भुतं तद्रूपं दृष्ट्वा शंकिता सती तं नोपजगाम अद्भुतत्वे हेतुः अदृष्टेति ॥ २ ॥

उपेह्युपगच्छ ॥ ३ ॥ ४ ॥

कालएवाहिस्तस्माद्वित्रस्ता धीर्येषां तेषां कृतमभयं येन तत्कराम्बुजम् ॥ ५ ॥

तस्य श्रीनृसिंहस्य करस्पर्शेन धुतं निरस्तमखिलमशुभं यस्य सपदि तत्क्षणमेवाभिव्यक्तमपरोक्षीभूतं परात्मदर्शनं ब्रह्मज्ञानं यस्य निर्वृतस्सन् हृदि दधौ हृष्यन्ती रोमाञ्चिता तनुर्यस्य क्लिन्नं प्रेमार्द्रं हृदयस्य अश्रूणि लोचनयोर्यस्य परमपुरुषार्थतया दधौ न साधनत्वेनेत्यर्थः ॥ ६ ॥

सुसमाधिमेवाऽऽह—तस्मिन्नेव न्यस्तं हृदयमीक्षणञ्च येनेति ॥ ७ ॥

### श्रीधरस्वामिकृतभावार्थदीपिका ।

स्वस्मिन्निव समस्तेषु तत्कृपाऽमृतदृष्टये ।
प्रह्लादस्तौति सप्तपद्यैर्द्विचत्वारिंशता हरिम् ॥

तत्र तावदात्मनो भगवत्स्तुतावनधिकारमिवाशङ्कयाधिकारं सम्भावयन्नाह—ब्रह्मादय इति पञ्चभिः । मुनयो मननशीलाः सिद्धाः ज्ञानिनोऽपि कथम्भूताः सत्त्व एवैकान्तिमत्तानो विस्तारो यस्याः सा मतिर्येषां तथाविधा अपि वचसां प्रवाहैरपि तथा बहुभिर्वक्ष्यमाणैर्गुणैरपि यमाराधयितुं न विप्रुर्न पूर्णा न शक्ता इत्यर्थः स हरिर्मे मम कथं तोषं प्राप्तुमर्हति तत्र हेतुः उग्रजातेः उग्रा घोरा आसुरी जातिर्यस्य ॥ ८ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

एवं प्रत्येकं ब्रह्मादिभिः संस्तुतमप्यशान्तसंरम्भम् इतरैर्दुरासदं श्रीनृसिंहं चतुर्मुखप्रेषितः प्रह्लादः प्रसादयामासेत्याह देवर्षिः—एवं प्रत्येकम् इत्थं स्तुवन्तोऽपि ब्रह्मादयः सर्वे देवाः मन्युना संरम्भ आवेशो यस्यात एव दुरासदं दुष्प्रापं भगवन्तमुपैतुं समीपं गन्तुं नाशक्नुवन् समर्था न बभूवुः ॥ १ ॥

किं पुनर्नित्यनिरवद्यप्रिया साक्षात्प्रसिद्धा श्रीर्लक्ष्मीरपि देवैर्ब्रह्मादिभिः प्रेषिता पतिसमीपमेहीति प्रार्थिताऽप्यद्भुतं महानृसिंहरूपं दृष्ट्वा पूर्वमदृष्टमश्रुतञ्च यदादृष्टाश्रुतपूर्वं तस्य भावस्तत्त्वं तस्माद्धेतोः शङ्किता सती नोपेयाय न समीपमगात् ॥ २ ॥

एवं स्थिते ब्रह्मा चतुर्मुखोऽन्तिके समीपेऽवस्थितं प्रह्लादं प्रेषयामास, प्रेषणप्रकारमेवाहतातेत्यर्धेन । तात हे वत्स ! स्वपित्रे कुपितं क्रुद्धं प्रभुं श्रीभगवन्तं प्रशमय प्रसन्नं कुरु उपेहि समीपं गच्छेति ॥ ३ ॥

हे राजन् युधिष्ठिर ! तथेत्यभ्युपगम्य भागवतश्रेष्ठोऽर्भकः प्रह्लादः शनकैः समीपमेत्य प्राप्य विधृतो बद्धोऽञ्जलिर्येन तादृशो भुवि देहेन दण्डवन्ननाम नमस्कृतवान् ॥ ४ ॥

ततः स्वस्य पादयोः मूले पतितं तमर्भकं प्रह्लादं विलोक्य देवः श्रीनृसिंहः कृपया परिप्लुतः परितः प्लुतो व्याप्तः समुत्थाप्य तस्य प्रह्लादस्य शिरसि स्वकराम्बुजमदधात् निहितवान् कथंभूतं कालाहिः सर्पस्तस्माद्वित्रस्ता भीता धीर्येषां तेषां कृतमभयमभयप्रदानं येन तादृशं संसृतिभीरूणां कृताभयप्रदानमित्यर्थः ॥ ५ ॥

स प्रह्लादस्तस्य भगवतः करस्य स्पर्शेन धुतं निरस्तमखिलमशुभं यस्य तादृशः सद्य एवाभिव्यक्तौ प्रत्यक्चितौ परात्मानौ स्वात्मपरमात्मानौ तयोर्दर्शनं याथात्म्यसाक्षात्कारात्मकं यस्य पूर्वं प्रत्यक्षतापन्नरूपभगवद्विषयज्ञानयुक्तः तत्करस्पर्शेन तु "ज्ञातुं द्रष्टुं च तत्त्वेन" इत्युक्तविधपरमात्मदर्शनयुक्त इत्यर्थः । अत एव निर्वृतः सुखितोऽतएव हृष्यत्तनुरुदश्रीतरामेयुक्ततनुः क्लिन्नं प्रेमार्द्रं हृत् हृदयं यस्य अश्रूण्यानन्दजानि लोचनयोर्यस्य तादृशस्तस्य भगवतः पादाब्जं हृदि दधौ धृतवान्निरतिशयपुरुषार्थत्वेनानुसंहितवानित्यर्थः ॥ ६ ॥

ततः प्रेमगद्गदया वाचा एकाग्रमनसा श्रीभगवदेकविषयेण मनसा हरिमस्तौषीच्च कथम्भूतः सुसमाहितः सुसमाधिमेवाह, तस्मिन्नेव न्यस्तं हृदयम् ईक्षणञ्च येनेति "हृदा मनीषा मनसाभिक्लृप्तः" इति चक्षुर्बुद्धिवृत्तीनाम् एकविषयत्वाभिप्रायेणैकाग्रमनसा तन्न्यस्तहृदयेक्षण इति चोक्तम् ॥ ७ ॥

स्तुतिमेवाह—ब्रह्मादय इत्यादिद्विचत्वारिंशच्छ्लोकैः । तावद्भगवत्स्तुतावात्मनोऽनधिकारमाशङ्कते—ब्रह्मादय इति । चतुर्मुखप्रभृतयो देवगणाः सत्त्वैकतानमतयः सत्त्वस्यैकतानाः मुख्याश्रयभूता मतिर्येषां ते केवलसत्त्वप्रधानमतय इत्यर्थः । अनेनात्र "तत्र सत्त्वं निर्मलत्वात्प्रकाशकमनामयम्" इत्युक्तरीत्याऽनीद्रिमाद्यैर्दर्शनयोग्यत्वं सूचितम् एवंविधा अपि मुनयः सिद्धाश्च स्तवचसां प्रवाहैः स्तोत्रैः तथा वक्ष्यमाणैर्बहुभिर्गुणैरपि यमाराधितुं स्तुत्यादिरूपाराधनद्वारा स्वस्य तोषमुत्पादयितुं मधुनापि न विप्रुः आराधयितुं न पर्याप्ता न समर्था इत्यर्थः । स हरिः उग्रा आसुरी जातिर्यस्य तस्य मे अनेन च वक्ष्यमाणगुणादिसमुच्चयः । ईदृशस्य मे मम किं कथं तोष्टुं तोषं प्राप्तुमर्हति, स्वाङ्गस्याऽपरिच्छेद्यस्वरूपरूपगुणस्वभावविभूत्यादिको भगवान् विपुलबुद्धिभिर्ब्रह्मादिभिरपि स्तोतुमशक्यः कथमल्पबुद्धेरासुरजन्मनस्तस्य मम स्तुत्या कथं तुष्यादित्यर्थः ॥ ८ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

अत्रापि भक्तमाहात्म्यमेव प्रथयति, ब्रह्मादिदेवनास्तुत्यनन्तरं कथं कथाप्रसङ्ग इति श्रोतुराशङ्कां परिहर्तुमाह—एवमिति । एवं स्तुवन्तोऽपि उपेतुं समीपं गन्तुं मन्युसंरम्भं कोपसारभूतं "मन-अवबोधने" इति धातुः "ज्ञानसारं प्रबोधसारम्" इति श्रुतेः । ज्ञानिविवक्षयैतत् । ननु, तर्हि कथं समीपं गन्तुं नाशक्नुवन्नित्युच्यते ? इति चेदज्ञेयत्वज्ञापनार्थेति तात्पर्यम् । "न तत्र चक्षुर्गच्छति न वाग्गच्छति, तेभ्यो ह प्रादुर्बभूव तन्न व्यजानत" इत्यादिश्रुतेरेतदेव दर्शयति, सुदुरासदमिति । सुखेन विषयीकर्तुमशक्यम् ॥ १ ॥

एतदेव विवृणोति, साक्षादिति । सर्वकालादिव्याप्त्यर्थं साक्षादिति अदृष्टाश्रुतपूर्वत्वादन्यैः साधारणैर्जनैरिति शेषः । द्वावेतौ नित्यमुक्तावित्यादेः । तर्हि नोपेयाय शङ्कितेत्येतत्कथं घटतीति चेत् मयापीश्वरः परिच्छेद्यो न भवति किमन्यैरिति ज्ञापनायासुरजनमोहनार्थेति वा "अदृष्टाश्रुतपूर्वत्वादन्यैः साधारणैर्जनैः ॥ नृसिंहं शङ्कितेव श्रीर्लोकमोहाय नाययौ" इति वाक्यनिरुक्तम् ॥ २ ॥

ममेदानीं प्रह्लादे वात्सल्यातिशयोऽस्ति भक्तानां मत्सेवानिशयफलाधिकार्थमिति भगवन्मनोज्ञापनाय ब्रह्मणा प्रह्लादः प्रेषित इत्याशयेनाह, प्रह्लादमिति । अयमपि लक्ष्मीकान्तसमीपागमनहेतुरन्यथा प्रह्लादे वात्सल्यातिशयो न प्रकटितः स्यात् तदुक्तम् "प्रह्लादे चैव वात्सल्यं दर्शनाय हरेरपि ॥ ज्ञात्वा मनस्तदा ब्रह्मा प्रह्लादं प्रेषयत्तदा" इति प्रकृष्टो ह्लादो निर्वृतिर्यस्य स तथा इत्यनेन प्रह्लादशब्दनिरुक्तिः सूचिता लक्ष्म्यादिवत्सलतां हित्वा प्रह्लादे तत्करणाद्धरेर्वैषम्यबुद्धिर्नाशङ्कनीया असुरजनमोहनार्थोपपत्तेरुक्तंच "एकत्रैकस्य वात्सल्यं विशेषाद्दर्शयेद्धरिः ॥ अवरस्यापि मोहाय'

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

इति भक्त्यादिदानं नैव करोति किन्तु वात्सल्यानुसारेणेत्य-भिप्रायेण दर्शितं क्लेशैश्चापि वत्सल इत्युक्तं उपेहि उपेत्य ॥ ३-४ ॥

नृहरेः प्रह्लादे वात्सल्यातिशयं दर्शयति—स्वपादमूले इति । ब्रह्मादिकराम्बुजेभ्योऽहरेः कराम्बुजं विशिनष्टि,कालाहीति । कालाख्याहिना निर्दिष्टा ग्रस्ता धीर्येषां ते तथा तेषाम् ॥ ५ ॥

इतरकरस्पर्शवैशिष्ट्यदर्शनविशेषकरस्पर्शफलाभिव्यक्तिं वक्ति । स्वतत्कर इति । स भगवत्करस्पर्शविधूतसमस्तपापत्वात्सद्य एव सम्यगंकुरितपरमात्मज्ञानः अभिव्यक्तं परस्य हरेरात्मनः संसारिणश्च दर्शनं स्वरूपविषयज्ञानं यस्य स तथेति वा किंवहद्भक्तिलक्षणामृतजलेनार्द्रीकृतान्तःकरणोऽश्रुणा युक्ते लोचने यस्य स तथा ॥ ६ ॥

तत्त्वज्ञानमस्योत्पन्नमित्यस्य किञ्चिल्लिङ्गमित्यतस्तत्स्तुत्या व्यज्यत इति भावेन दर्शयति, अस्तौपीदिति ॥ ७ ॥

सत्त्वे नित्यनिर्भूतबलज्ञानसमाहार एक एव नान्य इति वितानमतिर्विस्तृतबुद्धिर्येषां ते सत्त्वैकतानमतयः यद्वा सत्त्वे हराविव नियतबुद्धय. अधुना परत परस्य यस्यान्तं नापि नैव यान्ति स हरिरुग्रजातेरसुरजातेर्मे तोष्टुं स्तोतुमर्हति किमित्यन्वयः "न ते विष्णो" इति श्रुतेः ॥ ८ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

॥ १ ॥

साक्षात् श्रीरिति साऽपि तस्यैव प्रेयसी अदृष्टाश्रुतपूर्वत्वात्वादिति । अत्रादृष्टाश्रुतपूर्वत्वं संभ्रमादेव जातमिवेत्यूह्यम् ॥ २-५ ॥

अथ प्रह्लादस्य श्रीभगवत्साक्षात्कारकृतसर्वाघधूननपूर्वकं ब्रह्मसाक्षात्कारानन्तरं भगवत्साक्षात्कारविशेषात्मकनिर्वृतिं परमाभीष्टत्वेनाह, स तदिति ॥ ६—७ ॥

तत्र तावन्निजायोग्यतायां कैमुत्यं व्यञ्जयति—ब्रह्मादय इति । वचसां कर्मयोगज्ञानप्रधानानां शब्दानां प्रवाहैर्निरन्तराभ्यासैः ॥ ८ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

सर्वेविबुधस्तदागन्तुमन्तिकं नवमे हरेः ।
प्रह्लादो ब्रह्मणाऽऽदिष्टस्तुष्टुवे सन्निधिं गत ॥
रमापि यत्र न प्राभूदन्येषां तत्र का कथा ।
वात्सल्यं मूर्त्तिमत् किन्तु प्राह्लदोऽनुबभूव तम् । ० ।

ननु, स्वस्वदुःखमावेदयन्तो दूरत एव स्तुवाना देवादयः किमिति समीपमेत्य नोपासते स्म तत्राह—एवमिति । मन्युना संरम्भ आवेशो यस्य तम् ॥ १ ॥

अदृष्टाश्रुतपूर्वत्वादिति नृसिंहरूपस्य पूर्वकल्पदृष्टत्वेपि नृसिंहस्य वैकुण्ठे सदैव दृष्टत्वेपि तदानीमदृष्टाश्रुतत्वप्रतीतिर्लीलाशक्त्यैव कारिता । अद्भुतरसास्वादप्रापणार्थमित्याहुः ॥ २—४ ॥

कृतमभयं येन तत् ॥ ५ ॥

असुरजातित्वात्तदीयस्पर्शादिप्राप्त्यसंभावनालक्षणमशुभं यत् पूर्वमासीत् तत् धुतं निरस्तं यस्य सः । तत्करस्पर्शप्रभावात् अभिव्यक्तं पूर्वसिद्धमेव तदानीं सर्वतोभावेन व्यक्तीभूतं परात्मदर्शनं परमात्मानुभवो यस्य सः ॥ ६ ॥

सुखसमाधिमाह——अस्मिन्नेव न्यस्तं हृदयमीक्षणञ्च येन सः ॥ ७ ॥

भो दुरवगमाश्चर्य प्रभो ! मयि किं गुणमालम्ब्य कृपयसीत्याह, ब्रह्मादय इति । सात्त्विकत्वमपि न ते कृपायाः कारणं किं पुनस्तामसत्वमित्याह. सत्त्वेषु धर्मज्ञानतपःस्वेव एकताना अनन्यवर्तिनी मतिर्येषां ते । किं पुनरधर्माज्ञानविषयभोगैकतानमतयो वयमिति भावः । "एकतानोऽनन्यवृत्तिः" इत्यमरः । नच केवलं स्तुतिवादानामेव त्वत्प्रसादकत्वमित्याह, वचसां प्रवाहैः पुरुगुणैर्ध्वनिगुणालंकारयुक्तैः प्रवाहपक्षे स्वच्छत्वशैत्यमाधुर्यपावित्र्याद्यैः । आराधितुं देवषु सन्तोषयितुमित्यर्थः । न पिप्रुः नाशक्नुवन्नित्यर्थः । मे मयीत्यर्थः । उग्रजातेर्महातामसजातेः ॥ ८ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

नवमे प्रह्लादस्तोत्रेण विगतकोपोऽभूद्धरिरिति वर्ण्यते—मन्युना संरम्भः आवेशो यस्य तमुपेतुमासादितुं नाशकन् ॥ १ ॥

देवैः तद्रूपस्य अदृष्टाश्रुतपूर्वत्वाद्धेतोः साक्षादनेकावतारचरितज्ञा श्रीः प्रेषितापि तन्नृहरिरूपं महदद्भुतं दृष्ट्वा शङ्किता इदानीं समीपगमने आनुकूल्यं प्रातिकूल्यं वा स्यादित्येवं जातशङ्का सा नोपेयाय समीपं नैवाऽगात् ॥ २ ॥

हे तात वत्स ! स्वपित्रे कुपितं हरिं प्रशमय तदर्थमुपेहि शरणं व्रजेत्युक्त्वा प्रह्लादं प्रेषयामास ॥ ३ ॥

उपेत्य समीपं गत्वा शिरसि विधृताञ्जलिः कायेन भुवि ननाम ॥ ४ ॥

स्वपादमूले स्वचरणसमीपे कृपया परिप्लुतो व्याप्तः उत्थाप्य काल एवाऽहिस्तस्माद्विग्नस्ता धीर्येषां तेषां कृतमभयं येन तत्कराम्बुजं शीर्ष्ण्यदधात् ॥ ५ ॥

स प्रह्लादः तस्य भगवतः करस्पर्शेन धुतानि निरस्तान्यखिलान्यशुभानि यस्य सपदि त्वरितमेवाभिव्यक्तं प्रोद्भूतं परस्योपास्यस्य व्यापकस्वरूपस्य आत्मन उपासकस्याणुस्वरूपस्य स च दर्शनं यस्य विग्रहदर्शनानन्तरं स्वरूपानुभवोजात इत्यर्थः । हृष्यन्ती आनन्दिता तनुर्यस्य क्लिन्नं प्रेमार्द्रं हृदयस्य अश्रूणि लोचनयोर्यस्य सः निर्वृतः सुखितः तत्पादपद्मं कार्यकारणप्रकृतिसम्बन्धनिवृत्तिपूर्वकतत्साधर्म्यप्राप्तिलक्षणमोक्षार्थं हृदि दधौ ॥ ६ ॥

मन्ये धनाभिजनरूपतपःश्रुतौजस्तेजःप्रभावबलपौरुषबुद्धियोगाः ।
नाराधनाय हि भवन्ति परस्य पुंसो भक्त्या तुतोष भगवान् गजयूथपाय ॥ ९ ॥
विप्राद्द्विषड्गुणयुतादरविन्दनाभपादारविन्दविमुखाच्छ्वपचं वरिष्ठम् ।
मन्ये तदर्पितमनोवचनेहितार्थप्राणं पुनाति स कुलं न तु भूरिमानः ॥ १० ॥
नैवात्मनः प्रभुरयं निजलाभपूर्णो मानं जनादविदुषः करुणो वृणीते ।
यद्यज्जनो भगवते विदधीत मानं तच्चात्मने प्रतिमुखस्य यथा मुखश्रीः ॥ ११ ॥
तस्मादहं विगतविक्लव ईश्वरस्य सर्वात्मना महि गृणामि यथामनीषम् ।
नीचोऽजया गुणविसर्गमनुप्रविष्टः पूयेत येन हि पुमाननुवर्णितेन ॥ १२ ॥
सर्वे ह्यमी विधिकरास्तव सत्त्वधाम्नो ब्रह्मादयो वयमिवेश ![1] न चोद्विजन्तः ।
क्षेमाय भूतय उतात्मसुखाय चास्य विक्रीडितं भगवतो रुचिरावतारैः ॥ १३ ॥
तद्यच्छ मन्युमसुरश्च हतस्त्वयाऽद्य मोदेत साधुरपि वृश्चिकसर्पहत्या ।
लोकाश्च निर्वृतिमिताः प्रतियन्ति सर्वे रूपं नृसिंह ! विभयाय जनाः स्मरन्ति ॥ १४ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

एवं कृतध्यानः स्वपद्येव तस्मिन् भगवति न्यस्तं समर्पित हृदयं मन ईक्षणञ्च येन सः एकाग्रेण हरिमस्तौषीत् ॥ ७ ॥

"सत्त्वं स्वातंत्र्यमुद्दिष्टं तच्च कृष्णो न चापरे" इत्येवंभूते भगवत्स्वातंत्र्ये एकस्मिन् तानो विस्तारो यस्याः सा मतिर्येषां ते भगवदुत्कर्षाभिज्ञा इत्यर्थः । ब्रह्मादयः प्रजास्रष्टारो राजसाः सुरगणाः प्रजापलकाः सात्त्विकाः "सत्त्वरजसः सुर गुणा रजसः-प्रजेशाः" इति वक्ष्यमाणात् किं बहुना मुनयो मननशीलाः पराशरादयः सिद्धाः कपिलादयः गुणानीनाञ्च वचसां प्रवाहैर्वैदैः पुरुगुणैः सृष्टिपालनमननध्यानैः यमाराधयितुं न पिप्रुर्न पूर्णाः स हरिः उग्रजातेः उग्रा दैत्यत्वात्तामसी जातिर्यस्य तस्य मे किं कथं तोष्टुमर्हति ॥ ८ ॥

भाषा टीका ।

श्रीरुक्मिणीपतये नमः ॥

॥ नारद उवाच ॥

नारदजीबोले, कि—इस प्रकार ब्रह्मा महादेव प्रभृति सम्पूर्ण देवता लोग कोपावेश युक्त, और अत्यन्त दुरासद, श्री नृसिंह देवके समीप जाने को समर्थ न हुए ॥ १ ॥

तब देवताओं ने साक्षात् श्री लक्ष्मीजी को भेजा, लक्ष्मी जी ने भी आप का ऐसा स्वरूप कभी न देखा सुना अत एव वो भी शंकित होकर समीप में नहीं गई ॥ २ ॥

तब समीप मे स्थित प्रह्लाद को ब्रह्मा जी ने ऐसे कहकर भेजा, कि-हे तात ! अपने पिता पर कुपित प्रभु को समीप जाकर शान्त करो ॥ ३ ॥

तब तौ हे राजन् महा भागवत अर्भक [ छोटासा लडका ] प्रह्लाद 'जो आज्ञा' ऐसा धीरे से कह कर प्रभु के समीप में-जाकर हाथ जोडकर शरीर से पृथिवीमें दण्डवत करता हुआ ४ ॥

तब प्रभु भी अपने चरणों में पडे हुए उस अर्भक [ लडके ] को देखकर कृपा मे डूबगये, और उसको उठाकर काल रूप सर्प से त्रस्त बुद्धि वालो को अभय देने वाले अपने कर-कमल को, प्रह्लाद के मस्तक पर धारण करते हुए ॥ ५ ॥

प्रह्लाद का भी नरहरि के कर स्पर्श से सम्पूर्ण अशुभ नष्ट हुआ, और तत्काल में पर ब्रह्म के स्वरूप रूप गुण विभूति का-ज्ञान वाला होकर पुलकितांग आर्द्र हृदय अश्रु लोचन और आनन्दित होकर हरि के चरणों को हृदय मे धारण करता हुआ ॥ ६ ॥

और एकाग्र मन से समाहित होकर प्रभु में हृदय और दृष्टि को लगाकर प्रेमपूर्वक गद्गद वाणी से स्तुति करने लगा ॥ ७ ॥

प्रह्लाद उवाच ।

प्रह्लाद बोले, कि— सत्त्व गुण के एक विस्तार वालीबुद्धि-वाले ब्रह्मादिक देवता और मुनि सिद्ध लोग बहु गुणयुक्त वाणीके प्रवाहो से जिस हरि के आराधन करने को अबतक भी न समर्थ हुए वो हरि क्या मेरे सदृश उग्रजाति के स्तुति करनेके योग्य है ? ॥ ८ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

एवं हरितोषणे स्वस्यायोग्यतामाशङ्क्य योग्यतां सम्भावयति, मन्य इति द्वाभ्याम् । अभिजनः सत्कुले जन्म रूपं सौन्दर्यं श्रुतं पाण्डित्यं ओज इन्द्रियनैपुणम् तेजः कान्तिः प्रभावः प्रतापः पौरुषमुद्यमः बुद्धिः प्रज्ञा योगोऽष्टाङ्गः एते धनादयो द्वादशाऽपि गुणाः परस्य पुंस आराधनाय न भवन्ति हि यतः केवलया भक्त्यैव गजेन्द्राय तुष्टोऽभवत् ॥ ९ ॥

[1] तवोद्विजन्त इति वीर० ।

नाहं बिभेम्यजित ! तेऽतिभयानकास्यजिह्वार्कनेत्रभ्रुकुटीरभसोग्रदंष्ट्रात् ।
आन्त्रस्रजः क्षतजकेसरशङ्कुकर्णान्निर्ह्रादभीतदिगिभादरिभिन्नखाग्रात् ॥ १५ ॥
त्रस्तोऽस्म्यहं कृपणवत्सल ! दुःसहोग्रसंसारचक्रकदनाद्ग्रसतां प्रणीतः ।
बद्धः स्वकर्मभिरुशत्तम तेऽङ्घ्रिमूलं प्रीतोऽपवर्गशरणं ह्वयसे कदा नु ॥ १६ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

एवं भक्त्यैव केवलया हरेस्तोषः सम्भवतीत्युक्तमिदानीं भक्तिविना नान्यत्किञ्चित्तत्तोषहेतुरित्याह—विप्रादिति । पूर्वोक्ता धनादयो द्विषट् द्वादशगुणास्तैर्युक्ताद्विप्रादपि श्वपचं वरिष्ठं मन्ये यद्वा सनत्सुजातोक्ता द्वादशधर्मादयो गुणा द्रष्टव्याः । तदुक्तम्

"धर्मश्च सत्यञ्च दमस्तपश्च अमात्सर्यं ह्रीस्तितिक्षाऽनसूया ।
यज्ञश्च दानं च धृतिः श्रुतं च व्रतानि वै द्वादश ब्राह्मणस्य" ॥

इति यद्वा—

"शमो दमस्तपः शौचं क्षान्त्यार्जवविरक्तताः ।
ज्ञानविज्ञानसन्तोषाः सत्यास्तिक्ये द्विषड्गुणाः" ॥—

इति कथम्भूताद्विप्रात् अरविन्दनाभस्य पादारविन्दाद्विमुखात् कथम्भूतं श्वपचं तस्मिन्नरविन्दनाभेऽर्पिता मनआदयो येन तं ईहितं कर्म वरिष्ठत्वे हेतुः । स एवंभूतः श्वपचः स्वीयं कुलं पुनाति भूरिमानो गर्वो यस्य स तु विप्र आत्मानमपि न पुनाति कुतः कुलम्, यतो भक्तिहीनस्यैते गुणा गर्वायैव भवन्ति न तु शुद्धयेऽतो हीन इति भावः ॥ १० ॥

तर्हि किं धनाद्यर्पणेन संमानं प्राकृत इव भगवानपेक्षते ? नेत्याह—नैवेति । अयं प्रभुरीश्वरोऽविदुषोऽल्पकाज्जनात्स्वात्मनः पूजामात्मनोऽर्थं न वृणीते नेच्छति यतो निजलाभेन पूर्णः तर्हि पूजां नेच्छत्येव तत्राह, करुणः कृपालुरतो वृणीते च तत्र हेतुः यद्यदिति । यं यं मानं यद्वा यद्यस्माद्यदैव धनादिना भगवते मानं विदधीत तदेवाऽऽत्मने भवति नान्यत् यथा मुखे कृतैव तिलकादिश्रीः शोभा प्रतिबिम्बस्य भवति नतु साक्षात्तस्यैव कर्तुं शक्यते तद्वत् ॥ ११ ॥

यस्मादेवं भगवान्भक्त्यैव तुष्यति तस्मादहं नीचोऽपि विगतविक्लवोऽगतशंकः सर्वोऽश्वरस्य महि महिमानं सर्वात्मनैव स्वमनीषानुसारेणाऽनुवर्णयामि अजानतोऽपि स्तुतिकरणे हेतुमाह—येनैव महिम्नाऽनुवर्णितेनाऽविद्यया संसारमनुप्रविष्टः पुमान्पूयेत शुध्येत तन्महि अन्यस्य तथा शोधकत्वाभावादित्यर्थः ॥ १२ ॥

तदेवमात्मनः स्तुतावनधिकारं परिहृत्येदानीं तं स्तुवन् कोपोपसंहारं प्रार्थयते—सर्वेहीति द्वाभ्याम् । भो ईश ! अमी उद्विजन्तोऽबिभ्यतः सर्वे ब्रह्मादयः सत्त्वमूर्तयस्तव विधिकरास्त्वन्नियोगकर्तारो भक्ता एव नान्ये नच वयमसुरा इव वैरभावेनैते भक्ताः किन्तु अद्धैव तव रुचिरैरवतारैर्विविधं क्रीडनमस्य विश्वस्य क्षेमादिप्रयोजनाय न तु भयोत्पादनाय ॥ १३ ॥

तत्तस्मादेषां भयपरिहाराय मन्युं यच्छोपसंहर यदर्थमयं मन्युः स चासुरः साधूनां सन्तोषार्थमद्य हतः । अतःपरं क्रोधेन कार्याभावात्तं नियच्छ, नन्वन्येषां वधेन साधुः किं मोदेत ? तत्राह—वृश्चिकादेः परोपद्रवकारिणोऽन्यतो जातया हत्या वधेन तस्यैव तद्भद्रं जातमिति साधुरपि मोदेतैव तर्हि बहूनां सुखावहत्वादिमं क्रोधं न त्यजामीति चेत्तत्राह—लोकाश्च निर्वृतिमिताः प्राप्ताः सन्तः प्रतियन्ति क्रोधोपसंहारं प्रतीक्षन्ते तर्हि जनानां पुनर्भयाभावाय मन्युं धारयामीति चेत्तत्राह—रूपमिति । विभयाय भयनिवृत्त्यै एतद्रूपस्मरणादेव भयनिवृत्तेर्न मन्युधारणेन कृत्यमस्तीत्यर्थः ॥ १४ ॥

त्वं चेदिमंपि तर्हि त्यजामीति चेत्तत्राह—नाहमिति । भो अजित ! तेऽस्माद्रूपादहं न बिभेमि कथंभूतात् आस्यं च जिह्वा चार्कसदृशनेत्राणि च भ्रुकुटीनां रभसः आटोपश्च उग्रादंष्ट्राश्च एतान्यतिभयानकानि यस्मिंस्तस्मात् आन्त्रमय्यः स्रजो यस्मिंस्तत्तथाभूतं तस्मात् क्षतजाक्ताः केसरा यस्मिन् शंकुवदुन्नतौ स्तब्धौ कर्णौ यस्मिन् तच्च तच्च तस्मात्, निर्ह्रादेन भीता दिगिभा यस्मात् अरीन् भिन्दन्तीत्यरिभिन्दि तानि नखाग्राणि यस्मिन् एवंभूतादपि ते रूपादहं न बिभेमि ॥ १५ ॥

सहन्ययं त्वन्यदस्तीत्याह—त्रस्तोऽस्मीति । दुःसहं यदुग्रं संसारचक्रे कदनं दुःखं तस्मादहं त्रस्तोऽस्मि तत्र च ग्रसतां हिंस्राणां मध्ये स्वकर्मभिर्बद्धः सन्प्रणीतो निक्षिप्तोऽस्मि हे कृपणवत्सल ! हे उशत्तम ! कदा नु त्वं प्रीतः सन्नपवर्गभूतं शरणं तवाङ्घ्रिमूलंप्रति ह्वयसे मामाह्वयसि ॥ १६ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

एवमनधिकारमात्मन आशङ्क्य पुनरधिकारं सम्भावयितुं तावद्भगवतो जातिगुणवृत्त्यादिनाऽतस्यानादरेण भक्त्यैकतोष्यत्वमाह—मन्य इति द्वाभ्याम् । धनादयः परमपुरुषस्याराधनाय सन्तोषनिमित्ताराधनाय न भवन्ति इति मन्ये किन्तु भक्तिरेव परमपुरुषसन्तोषाराधनाय भवतीति मन्य इत्यर्थः । कुतः हि यस्माद्भगवान् गजयूथपाय धनादिविरहिताय गजेन्द्राय भक्त्यैव तुतोष. तत्र धनं वित्तम्, अभिजनः सत्कुले जन्म, रूपं सौन्दर्यं तपः स्वधर्मः कृच्छ्रादिरूपं वाऽनशनरूपं वा श्रुतं पाण्डित्यम् ओज इन्द्रियबलं तेजः कायकान्तिः प्रभावः प्रतापः बलं शारीरं पौरुषमुद्यमः बुद्धिः प्रज्ञा योगः प्राणजयः ॥ ९ ॥

एवं धनाद्यभावेऽपि केवलभक्तेरेव श्रीभगवत्तोषहेतुत्वं निदर्शितम्. यतो भक्तेरेव श्रीभगवत्तोषहेतुत्वमत एतेतरगुणसंपत्त्यपेक्षया श्रीभगवद्भक्तिसम्पत्तिरेव श्रेयसीत्याह—विप्रादिति. द्विषड्गुणाः द्वादश गुणास्ते च—

"धर्मश्च सत्यं च दमः श्रुतश्च अमात्सर्यं ह्रीस्तितिक्षाऽनसूया ।
दानं च यज्ञश्च धृतिः शमश्च व्रतानि वै द्वादश ब्राह्मणस्य ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

इतिसनत्सुजातोक्ताः श्रीमहाभारते । एतैर्युक्तादरविन्दनाभस्य पादारविन्दविमुखद्ब्राह्मणाच्छ्वपचं श्वपाकं वरिष्ठं श्रेष्ठं मन्येश्वपचं विशिनष्टि. तदर्पितेति तस्मिन्नरविन्दनाभे अर्पितास्समर्पिता मन आदयो येन तं तत्रेहितं कर्म तस्य श्रेष्ठत्वे तनो विप्रस्याऽवमत्वे च हेतू आह, स एवंभूत. श्वपचः कुलं स्वकुलमपि पुनाति भूरिमानो गर्वो द्विषड्गुणप्रयुक्तो यस्य स तु विप्रः नत्वात्मानमपि पुनातीत्यर्थः । यद्यप्युक्ता एव गुणाः भगवद्भक्त्यनुग्राहका भक्तिश्च वेदान्तविहितब्रह्मोपासनात्मिका तत्र चाधिकारस्त्रैवर्णिकस्यैव. ननु शूद्रस्य एनञ्च शारीरकाऽपशूद्राधिकरणन्यायसिद्धम. एवं च तत्र सुतरां श्वपाकस्याधिकारो न सम्भवतीति उक्तगुणयुक्तात् द्विजाद्भक्तियुक्तस्य श्वपाकस्य परत्ववर्णनमनुचितम् तथाप्यत्र प्रकरणे भक्तिशब्देन भक्तिः प्रपत्तिश्चोच्यते प्रपत्तौ च सर्वेषामधिकारो बहुप्रमाणप्रतिपन्नः अतएव हि—

> "दैतेया यक्षरक्षांसि स्त्रियः शूद्राव्रजौकसः ।
> खगामृगाः पापजीवा सन्ति ह्यच्युततांगताः" ॥ इति

स्त्रीशूद्रादीनामपि भगवति भक्त्या तत्साधर्म्यापत्तिरुक्तोपपन्ना भवति "वनङ्गतो यद्धरिमाश्रयेत, उपेत नारायणमादिदेवम, ॥ मन्येतदेतदखिलं परमस्य पुंसः, स्वात्मार्पणं स्वसुहृदः परमस्य पुंसः, इति प्रपत्तिरपि कर्त्तव्यत्वेन पूर्वमुक्ताचेत्यतो नविरोधः । उपपादितश्चैतत्पुरस्तान्मन आदीनां भगवति समर्पणं नाम तच्छेषत्वेन तदायत्तसत्तादिमत्त्वेन चानुसन्धानरूपाध्यवसायात्मकज्ञानं प्राणशब्दः प्राणाश्रयप्रत्यगात्मस्वरूपस्याप्युपलक्षक एवञ्चात्मसमीयादिसमर्पणेन भगवति न्यस्तरक्षाभरः श्वपाकोऽपि श्रीभगवच्छेषत्वादुक्तविधाद्विप्राच्छ्रेयानिति भावः । तदुक्तम श्रीभगवता—

> "अपिचेत्सुदुराचारो भजते मामनन्यभाक् ।
> साधुरेव स मन्तव्यः सम्यग्व्यवसितो हि सः ॥
> प्रियो हि ज्ञानिनोऽत्यर्थमहं च मम प्रियः" ।

इत्यादि—

> अपिपापेष्वभिरता मद्भक्ताः पाण्डुनन्दन ! ।
> मुच्यन्ते पातकैः सर्वैः पद्मपत्रमिवाम्भसा ॥ इति ॥१०॥

ननु, परिपूर्णस्य भगवतो जातिगुणविद्यादिविहीनश्वपाकसमर्पितमनआदिभिः किं प्रयोजनम ? कथं वा ततस्तस्य तोषः ? कथंचैतदेवंविधोपि मामनन्यभावेन भजन्नितरां मत्प्रिय इति श्रीभगवतोक्तम?इत्यत्राह-नैवेति । प्रभुरीश्वरो निजलाभपूर्णः निजेन स्वाभाविकेन लाभेन समस्तकामावाप्त्या पूर्णः अत एव मानं स्वाराधनरूपं कर्म नैव जगाद आत्मने इत्यपकृष्यते आत्मने आत्मार्थं स्वप्रयोजनाय न जगादेत्यर्थः । किन्तु करुणो वृणीते करुणः करुणावान् "गुणवचनेभ्यो मतुपो लुग्वक्तव्यः" इति लुप्तमतुबन्तं पदं लुप्तलुगिति टापो लुक् हेतुगर्भमिदं दयालुत्वाद्विदुषो वृणीते प्रबुद्धजनान्स्वाराधनविधानेनांगीकरोतीत्यर्थः । करुणयाऽऽराधकोज्जीवनार्थमेवाराधनं स्वीकारोतीति भावः । तदेव विशदयति, यद्यदाराधनं भगवते जनो विदधीत करोति तच्चात्मने स्वार्थमेव भवति "यस्तुवन्द्यतयात्मेति वन्द्यमानश्च वन्द्यताम" इति न्यायाद्भगवत्पूजनेन स्वयमपि पूज्या भवन्तीत्यर्थः । कथमन्यस्य पूजनेन अन्यस्य पूज्यतेत्यपेक्षायां, तदधीनसत्तादिमतो वस्तुनस्तत्सत्कारेण तत्साम्यावाप्तौ दृष्टान्तमाह, यथा मुखश्रीः प्रतिमुखस्येति । यथा साक्षादलङ्कारादिजन्या मुखस्य शोभा तदर्श,नच्छायामुखस्य भवत्येवं भगवतः पूज्यता तदाराधकानां तथैव भवतीत्यर्थः । "तद्यथामातातरुणवत्सं वत्सो वा मातरम, छाया सत्त्वमनुगच्छेत् तथाप्रकारः" इति श्रुतिर्हि जीवस्यच्छायावदीश्वरपारतन्त्र्यमवगमयति जनादविदुष इतिपाठे । अविदुषः किञ्चिज्ज्ञादपि जनान्मानमात्मार्थेन वृणीत इत्यर्थः ॥ ११ ॥

एवं भगवतो भक्त्यैकतोष्यत्वं तत्तोषस्य च भक्तोज्जीवनार्थत्वं चोक्तं तदेवं स्वस्योग्रजातेरपि तद्भक्तस्य तत्तोषकस्तुतावनधिकारः सम्भावितः यत एवंभूतो अहमतो यथामति स्तोष्यामीत्याह-तस्मादिति । यस्माद्भगवान्भक्त्यैकस्तोष्यस्तस्मान्नीचोप्यहं तद्भक्तियुक्तोहमतएव विगतविक्लवः गतशङ्कस्सन् सर्वात्मना करणत्रयैक्येनेश्वरस्य भगवतो महि महिमानं यथामति स्तौमि गृणामि किमीश्वरस्य स्तुत्या प्रयोजनमिति शङ्कां निराकुर्वंस्तन्महिमानुवर्णनं विशिनष्टि, येनेश्वरगुणानुवर्णनेन अनुवर्णितेनेति भावेक्तः अजया प्रकृत्या गुणविसर्गं गुणकार्यं शारीरमनुप्रविष्टः पुमान्पूयेत शुद्ध्येत स्तुत्या न तस्य कोप्यतिशयः किन्तु स्तुवतएवात्मविशुद्धिरूपोतिशयइतिभावः ॥ १२ ॥

एवमात्मनः स्तुतावनधिकारं परिहृत्य तत् स्तुतिं प्रतिज्ञाय तं तुष्टूषुस्तावत्कोपोपशमं प्रार्थयते—सर्वे हीति द्वाभ्याम । हे ईश वयमिव यथा वयं तव किंकरास्तथा अमी सर्वे ब्रह्मादयोपि सत्त्वधाम्नस्तव विधिकराः किंकराएव अस्त्वेवं ततः किमत आह उद्विजन्तः त्वत्कोपादुद्विजतो वर्त्तन्ते ततो मन्युं यच्छेत्युत्तरेणान्वयः सत्त्वधाम्न इत्यनेन शुद्धसत्त्वैकतानस्य तव कोपः स्वाभाविको न भवति किन्तु लोकरक्षणोचितकृतस्य तव तद्रक्षणरूपक्रीडार्थमाहित इत्यभिप्रेतं तदेव व्यनक्ति क्षेमायेति अस्य जगतः क्षेमाय लब्धपरिरक्षणाय भूतयेयोगायालब्धलाभायात्मसुखाय ब्रह्मात्मकज्ञातमानंदानुभवजसुखाय च भगवतस्तव रुचिरैः सुन्दरैरवतारैर्नृसिंहादि[illegible]र्विक्रीडितं भावेक्तः विविधाक्रीडा इत्यर्थः इयं दुष्[illegible] वक्रोधादिरूपा तव क्रीडा लोकक्षेमाद्यर्थमिति भावः । [illegible]क्रीडया हि दुष्टोद्धनाशद्वाराश्रितपरिपालनमपूर्वश्रेयःप्राप्तिःश्रवणादिना क्रीडामनुभवतो लोकस्य निःशेषबन्धककर्मक्षयरूपमोक्षद्वारात्मसुखानुभूतिश्च भवेदित्येतदर्थं तव विक्रीडितमितिभावः ॥ १३ ॥

यतस्तव विक्रीडितं लोकस्य क्षेमाद्यर्थं तत्तस्माद्धेतोः हे नृसिंह मन्युं यच्छ उपसंहर इतःपरं न मन्युना प्रयोजनमस्तीत्याह—अधुनाऽसुरो भवता त्वया हतः लोकाः निर्वृतिं सुखमिताः प्राप्ताश्च ननु लोका निर्वृतिं यान्तुनाम लोकान्तर्गतःसाधुजनस्तु मत्कृतामिमां भूतहिंसां नानुमोदेत अत आह साधुरपि लोकोपद्रवकारिवृश्चिकसर्पादिहत्या मोदेत वृश्चिकसर्पादितुल्यस्य मस्तितुर्हत्या साधुजनोपि मोदेतैवेत्यर्थः इति शब्दः किन्तेतः सर्वे ब्रह्मादयो निर्भयाः प्रतियान्तु स्वस्थानानि प्रतिगच्छन्तु इतःपरमिदं त्वद्रूपमभयाय जनाः स्मरन्ति ॥ १४ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

ननु, ब्रह्मादय उद्विजन्त इति विशेषेण ब्रह्मादीनामेव क्रोधयुक्तान्मदुग्ररूपाद्भयं ब्रूषे त्वन्तु न बिभेषि किमतआह-नेति । हेऽजित ! तवास्माद्रूपादिति विशेषणाध्याहारः अहं न बिभेमि कथंभूतादास्यं च जिह्वा चार्कसदृशे नेत्रे च भ्रुकुटीनां रभस आटोपश्च उग्रा दंष्ट्राश्चैतान्यतिभयानकानि यस्मिन् अन्त्रमय्यः स्रजो यस्मिन् क्षतजाः रुधिराक्ताः केसरा यस्मिन् तत् क्षतजकेसरं शंकुवदुन्नतौ स्तब्धौ कर्णौ यस्मिंस्तच्छंकुकर्णौ द्वयोर्बहुव्रीह्योः कर्मधारयः क्षतजकेसरशंकुकर्णनिर्ह्रादेन भीता दिगिभा दिग्गजा यस्मात् तत्पूर्वेण पुनः कर्मधारयः क्षतजकेसरशंकुकर्णनिर्ह्रादभीतदिगिभं तस्मादरीन् भिन्दन्तीत्यरिभिन्दि तानि नखाग्राणि यस्मिंस्तेवं भूताद्रूपादहं न बिभेमीत्यर्थः ॥ १५ ॥

तर्हि कुतो बिभेषि इत्यपेक्षायां तद्भीति इतो बिभेमीत्याह-त्रस्तोस्मीति । हे कृपणवत्सल ! दुस्सहं यदुग्रं संसारचक्रे कदनं तस्मादहं त्रस्तः भीतोऽस्मि कथंभूतोहं ग्रसतांप्रणीत. ग्रसतामिति कर्मारिपद्भी ग्रसद्भिः स्वच्छेषभूतं मत्स्वरूपं तिरोधापयद्भिर्देहात्माभिमानस्वतन्त्रात्माभिमानममकारादिभिः तत्र संसारे प्रणीतः प्रापितस्तन्मूलभूतैः कर्मभिश्च बद्धः निगलितः हे उरुक्रम कमनीयतम ! उक्तविधं मां प्रीतः मद्विषयकानतिशयप्रीतियुक्तस्त्वं ते तवाङ्घ्रिमूलंप्रति कथंभूतमङ्घ्रिमूलमपवर्गशरणमपवर्गोपायभूतं कदानु हवन्ते आहूयसे कदा मां त्वदङ्घ्रिमूलं प्रापयिष्यसि तावन्मामनुवर्तते भयमिति भावः ॥ १६ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

भक्त्या ननु भक्त्यैव यूथपाय गजेन्द्राय "सेनानेतरि नागेन्द्रे यूथनाथः प्रकीर्तितः" इत्यभिधानम् अनेन धनादिकमपि भक्त्युपबृंहितं सफलमित्युक्तं भवति ॥ ९ ॥

इतोपि भक्तिरेव हरेः प्रसादे प्रधानसाधनमित्याह, विप्रादिति । द्विषड्गुणा द्वादशगुणाः एतैर्युक्तात् "ज्ञानं च सत्यं च दमः शमश्च अमात्सर्यं ह्रीस्तितिक्षानसूया । दानं च यज्ञश्च तपः श्रुतं च महाव्रतं द्वादश ब्राह्मणस्य ॥" एतेभ्यः प्रवरो द्वादशेभ्यः सर्वामपीमां पृथिवीं प्रशिष्यात् त्रिभिर्द्वाभ्यामेकतोवा विशिष्टो नास्य समोऽस्तीतिवेदितव्य इत्येते भक्तिमत एव सम्भवन्ति नान्यस्य कश्चित्सम्भवेयुस्ततो न तेभ्योऽर्थः स्यात् " अनेवंविन्महत्पुण्यं कर्म करोति तद्धास्यान्ततः क्षीयतएव" इति श्रुतेः । तस्माद्भक्तिरेव प्रयोजिकेति तात्पर्यम्. सकलं मनआदिकं पुनाति विषयोपरक्तं मलं निरस्य दर्पणवत्स्वच्छं करोति जगत्पुनातीति वा "यस्तु विज्ञानवान्भवति युक्तेन मनसा सदा तस्येन्द्रियाणि वश्यानि सदश्वा इव सारथेः" इति श्रुतेः । अन्यत्र बाधकमाह-नत्विति । भूरिमानोऽहङ्कृतेत्यभिमन्ता नैव पुनातीत्यन्वयः "समर्थं मन्यसे यच्च कुन्तीपुत्रं वृकोदरं । तन्मिथ्या हि न मे कृत्स्नं प्रभावं वेत्थ भारत ॥ मत्समो हि गदायुद्धे पृथिव्यां नास्ति भारत । नासीत्कश्चिदतिक्रान्तो भविता वा न कश्चन" इत्यादि भारते दुर्योधनोक्ताहङ्कारप्रतीतेरेवंविधो भूरिमान इत्यर्थः। "नाविरतो दुश्चरितान्नाशान्तो नासमाहितः । नाशान्तमानसो वापि प्रज्ञानेनैवमाप्नुयात्" इति श्रुतेः "शमोदमस्तपः शौचं क्षान्त्यार्जवविरक्तता। ज्ञानविज्ञानसन्तोषाः सत्याज्येऽपि द्विषड्गुणाः" इति केचित्. "सत्यं दमस्तपः शौचं सन्तोषो ह्रीः क्षमार्जवम्॥ ज्ञानं शमो दया ध्यानं विप्रस्यैते द्विषड्गुणाः" इति केचित् असम्प्रदायज्ञैरुक्तत्वादत्र न ग्राह्यमेतन्मतद्वयमिति ॥ १० ॥

ननु, श्वपचं वरिष्ठमितीदमप्रमाणमिति वर्णहीनत्वेन तत्कृतसपर्यास्वीकारानुपपत्तेः " नाहं तथाद्मि यजमानहविर्विताने: " इत्यादावन्यथाकथनाच्चेति तत्राह, नैवेति । अयं प्रभुरविदुषो ज्ञानोपदेशानधिकारिणः पूर्वचीर्णपुण्यनिचयात्तज्ज्ञानेन यथार्थतत्त्वज्ञानिनो वर्णहीनाज्जनात्मानं पूजां वृणीते स्वीकरोति इति यत्तदात्मनोऽर्थे [illegible] । कुत इत्यत उक्तं निजेति निजलाभेन नित्यानन्देन पूर्ण इति [illegible] " को ह्येवान्यात् " " यदेषआकाश आनन्दो न स्यात् " इत्यादि श्रुतेः । ननु, स्वार्थाभावे सपर्यास्वीकारे किं [illegible] तत्राह—करुण इति । करुणवतीति करुण. " देवस्यैव [illegible] यमेवैष वृणुते " इत्यादि श्रुतेः कर्मणः क्षणभङ्गुरत्वात् कृपया तत्फलप्रदानाय तत्स्वीकारोपचार इति तात्पर्यं निहिंसिः [illegible] स्वार्थमपि किन्न स्यादित्याशङ्क्य विशेषमाह, यदिति । [illegible] समानो जन. भगवते महात्मानं [illegible] स्वप्रयोजनायैवेत्युपगन्तव्यम् [illegible]-प्रतिमुखस्येति । तथाह्युक्तमुखश्रीर्दर्पणादौ प्रतिफलितस्य प्रतिबिम्बस्य [illegible] साक्षात्कारमन्तरेण श्रीर्जायते तथा स्वबिम्बभूतपरमात्मनो निर्दोषगुणराशिध्यानलक्षणमानेन तत्प्रतिबिम्बभूतात्मन्यपि निर्दोषसुखजलक्षणा श्रीर्निश्यतइत्यर्थः अनेन ब्रह्मादिजीवाभिरत्यंतनुच्छीभूतइति सूचितं "श्वपचादपि कष्टत्वं [illegible] " इत्यादेः अयं तु नरसिंहमात्मनएव न प्रभुः किन्तु सर्वस्याप्यतोऽस्यपडैश्वर्यत्वात् चक्रवर्तीकरमिवाविदुषोजनान्मानं वृणीते अनेन [illegible] व्याख्यातः स्वतः सिद्धत्वात्. ननु, जनपदादर्थादानादिना राज्ञः स्वप्रयोजनोपलब्धिवदीश्वरस्यापि तथा स्यात्किमत्र आह, निजेति. ननून्मत्तः किमीश्वरइति तत्राह,करुणइति. कस्यार्थे मानकरणमिति तत्राह, यद्यदिति. कथमिव यथा मुखस्य मुख्यस्य स्वामिनोराज्ञो मानलक्षणा श्रीः प्रतिमुखस्य राजमुखमनुवर्तमानस्य जनपदस्य परोपद्रवराहित्येन धनधान्यादिसमृद्धिलक्षणा श्रीर्भवति तथा हरिविषया क्रियमाणा मानश्रीरनुरक्तजनस्य संसारश्रृङ्खलान्मोचलक्षणा श्रीर्भवतीत्यर्थः ॥ यत्नमानन्दमाजस्येत्यादेः ननु, हरेर्जन्मादिमत्त्वेन विशेषमाहात्म्यायोगात् देवदत्तवदतोयुक्तं विप्रादीतरजनपरिगृहीतत्वमिति तत्राह-नैवेति. अयं नृसिंहआत्मनोदेहात्प्रभुः प्रभूतउत्पन्नोनैव किन्तु स्तम्भात् दृष्टत्वादिति शेषः अदेहस्य जननायोगात् जननवतएव विषयसुखानुभवोपपत्तेरतः कथं हरेर्विषयानुभूतिरिति तत्राह निजेति स्वत्वं परतन्त्रप्राणिनोर्यं तथा निजो लाभो यस्य स तथा स्वतःसिद्धानुभवश्च पूर्णोव्याप्तश्च नहि व्याप्तस्य परिच्छिन्नगर्भवासादिकं युज्यते "प्रादेशमात्रं पुरुषम्" इत्यादौ परिच्छेदप्रतीतेरितिचेत् "तस्यान्ते सुषिरं सूक्ष्मम्"

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

इति श्रुतेराकाशवदुपपत्तेरुपाधिकल्पनायामनवस्थादिदोषापत्तेरतः स्वभृत्यभाषितं सत्यं कर्तुं स्वस्य सर्वत्र व्याप्तिं दर्शयितुमितरत्र जातवद्दर्शनमसुरजनमोहार्थमित्यादि ज्ञातव्यं स्वभृत्यभाषितस्य सत्यकरणायेत्येतत्कथमवगतमिति तत्राह- -मानमिति। अविदुषः स्वरूपाज्ञानिनोऽस्माज्जनान्मानं वृणीते न केवलमस्माज्जनात्किन्तु सर्वस्मादपि योग्यादित्याशयेनाह—यद्यदिति । शेषं पूर्ववत्. श्वपचोपि भक्तएव वरीयान्नाभक्तस्तस्य द्वेषित्वेन दम्भार्थत्वेन विहितपूजाया अस्वीकारादित्यतोवाह, मेति. अयं हरिरविदुषोनित्याज्ञानिनोसुरजनादात्मनः स्वस्य मानं लोके दम्भाभिप्रायेण कृतपूजां नैव वृणीते प्रत्युतानर्थं च करोतीत्याह करुण इति "कृ विक्षेपे" इति धातोः असुरजननिरसनशीलत्वादन्धं तमएव प्रापयतीत्यर्थः "परा पूर्वेषाम्" इति श्रुतेः तस्मादसुरजनकृतसपर्यानर्थजननीत्याशयेनाह यद्यदिति आत्मने अनर्थायेति शेषः यथा मुखश्रीः प्रधानभटयोग्यश्रीः प्रतिमुखस्यापरस्य प्रतिभटस्यानर्थाय मरणलक्षणाय स्यादिति शेषः ॥ ११ ॥

तस्माद्भक्तिरेव प्रयोजिकेत्याह—तस्मादिति । यस्मादविन्त्यमहिमत्वात्सर्वात्मनेश्वरस्य स्वरूपं स्तोतुं न शक्नोमि तस्माद्विगतविक्लवोनिर्धूनचापल्योहं यथामनीषं भक्त्या गृणामीत्यन्वयः स्तुतेः फलमाह, नीचइति अजया प्रकृत्या नीचगुणविसर्गं संसारमनुप्रविष्टः पुमान्येनानुवर्णितेन गुणसङ्कीर्तनेन पूयेत शुद्धोभवति हि यस्मात्तेन संसारमोक्षोभवतीत्यर्थः ॥ १२ ॥

यथामनीषं गृणामीत्युक्तं विवृणोति--सर्वइति । अमी वयं ब्रह्मादयश्च सर्वे सत्त्वधाम्नस्तत्र विधिकराहि "विष्णोस्तिष्ठन्ति प्रदिशाविधर्मणि"इति श्रुतेः तत्र विशेषोस्ति यथा वयं उद्विजन्तस्तथा ब्रह्मादयोनैवोद्विजन्तः प्रधानभक्तत्वात्कुतएततद्वयं विज्ञापयतइति तत्राह क्षेमायेति अस्य हरेरुचिरावतारैः विक्रीडितम् अस्य जगतः क्षेमाद्यनेकप्रयोजनाय स्यादिति यदनेनास्मन्निधनेनास्माकमुद्वेगोब्रह्मादिरक्षणेन तेषामनुद्वेगश्च ज्ञायतइत्यर्थः ॥१३॥

अथैवंकर्तव्यमित्याह—तद्यच्छेति । अद्य त्वया असुरो हतश्च यस्मात्तस्मान्मथ्नाति कलुषीकरोति ज्ञानमिति मन्युः कोपः इतरेषामेवाभिवधोहरेस्तु खेदाधरस्फुरणादिविडम्बनलक्षणादिस्तं यच्छ संहर, प्रसन्नभावं दर्शयेत्यर्थः । मन्युश्च त्वद्विषयं ज्ञानं च यच्छानुगृहाणेत्यर्थः ।"मन अवबोधने" इति धातोरिति वा त्वद्विषयं पूजालक्षणं यज्ञमिति वा "मन्युः कोपे क्रतौ युद्धे" इत्यभिधानम्. सज्जनानन्दाकांक्षापि भगवत्प्रसादकरीत्याशयेनाह मोदेतेति वृश्चिकसर्पलक्षणासुरहननेन साधुः सज्जनोपि मोदेत साधुरपि मोदेतेति वा योगविभागः, वृश्चिकसर्पलक्षणासुरहत्या निर्वृतिमानन्दमिताः प्राप्ताः सर्वे लोकाः प्रतियान्तु स्वगृहमिति शेषः गत्वा किङ्कुर्वंतीति तत्राह रूपमिति । हे नृसिंह ! जनाः तव नृसिंहाकारं रूपं दुरितनिवृत्तिलक्षणाय विभवाय स्मरन्तीत्यन्वयः साधुरहिंसापरोपि वृश्चिकादिहत्या मोदेत किम्पुनः सर्वलोकोपद्रवकृत् असुरहत्यातोवाह मोदेतेति हत्यामिति पाठे साधुः शास्त्रतत्त्वज्ञोदुष्टवृश्चिकादिहत्यां यथा मोदेत तथाहमपि भगवद्द्वेषित्वेन दुष्टत्वात्पितृहत्यां मोदइत्यभिप्रेत्यातोवाह मोदेतेति. नृसिंहेति सम्बोधनं नामकरणाभिप्रायेणेति ज्ञातव्यम् ॥ १४ ॥

पूर्वमज्ञातनामत्वादिति तव कोपाकुलरूपदर्शनाद्भीत्या लोकस्य स्मरणं न सम्भाव्यतइति चेत्तच्छमनं कर्तव्यमित्युक्तं तन्मम ज्ञाततत्त्वस्य विषयो न भवति मम भयं संसारचक्रादित्याह, नाहमिति. भयानकस्य ते तव रूपान्नबिभेमीत्यन्वयः कीदृशात् जिह्वे वक्रे अग्नियुक्ते नेत्रे यस्य तत्तथा जिह्वया भ्रुकुट्या रभसौ यस्य तत्तथा उग्रे दंष्ट्रे यस्य तत्तथा जिह्वाग्निनेत्रं च जिह्वा भ्रुकुटी रभसं च उग्रदंष्ट्रं च तत्तथा तस्मादान्त्रमेव स्रक् माला यस्य तत्तथा तस्मात्क्षतजेन रुधिरेण सिक्ताः केसराः यस्य तत्तथा शङ्कुवत्स्थूणावत्तव्यौ कर्णौ यस्य तत्तथा क्षतजकेसरं च शङ्कुकर्णं च तत्तथा तस्मात् निर्ह्रादेन भीता दिगिभा दिग्गजा यस्य तत्तथा तस्मात् अरिभिन्दि नखाग्राणि यस्य तत्तथा तस्मात् अरीन् भिन्दन्तीत्यरिभिन्दि नखानामग्राणि दुःसहं चोग्रं च संसारचक्रं च यत्तेन सह कदनात् हिंसालक्षणाद्दुद्धादुरुत्तम सत्यकाम, भीतानां अपवर्गं भीतिजनकसंसारनाशनमरणं शरणं समियां यामि ॥ १५—१६ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

तस्मादेवं दृष्टत्वादेवं निर्णय इत्याह—मन्य इति । धरणत्रयेण धनादयस्तत्तच्छास्त्राभ्यासफलरूपास्तेपि नाराधनाय न परितोषाय । तर्हि केन तोषः स्यादित्यपेक्षायां दृष्टान्तद्वारैव तद्दर्शयति, भक्त्येति । ब्रह्मादिषु ब्रह्मादिजातिपर्यानां भक्तत्वेपि तेन तेन तु तेषामपि स परितुष्टो न भवतीति विपक्षयोक्तम् ॥ ९ ॥

ननु, भक्तिव्यतिरिक्ता अपि केचित्ते वरिष्ठतयोद्घुष्यन्ते तत्रासहमान आह, विप्रादिति ॥ १० ॥

भक्तास्तु श्रीभगवतोपि स्वत एव परमाभीष्टरूपाः भक्तिरेवच भक्तानां सुखरूपेति भक्त्या तुतोषेत्येवोत्कर्षयन् स्वकर्तव्यत्वेन मामेव निगमयितुमाह—नैवात्मन इति । अयं प्रभुरात्मनो मानं पूजां जनात् निजभक्तात् न वृणीते नेच्छति। तत्र हेतुः । निजस्य भक्तस्य लाभेनैव पूर्णः परमसन्तुष्टः । हेत्वन्तरं करुणः पूजार्थतत्प्रयासादावसहिष्णुः कथंभूतात् जनात् अविदुषः । पितुरग्रे बालकवत्तस्याग्रे न किञ्चिदपि जानतः एषा स्वस्य जनैकवर्गत्वेन दैन्योक्तिः । यद्वा तदावेशेनान्यत् किञ्चिदपि न जानत इत्यर्थः । उभयत्र पक्षेऽपि तस्य तस्य कारुण्यं हेतुरिति भावः । तर्हि किं जनस्तस्य मानं न कुरुत एवेत्याशङ्क्याह—यदिति । सच जनोयत् यं यं मानं भगवते विदधीत सम्पादयति स सर्वोऽप्यात्मार्थमेव तत्सम्मानमात्रेणैव स्वसम्मानाभिमननात् सुखं मन्यमानस्तन्मानं करोत्येवेत्यर्थः तत्सम्मानमात्रेण स्वसम्मानश्च तदेकजीवनस्य जनस्य युक्त एवेति दृष्टान्तमाह—यथा मुखे या शोभा क्रियते तन्मात्रमेव प्रतिमुखस्य शोभायैव भवति नान्यादिति ॥ ११ ॥

निगमयति तस्मादिति ॥ १२ ॥

नन्वेवं ब्रह्माद्याः भक्ता न भवन्ति भवानेव तु भक्त इत्याशङ्क्यासुरकुलजन्मत्वात् दैन्येनात्मानमपि तत्स्वभावत्वेन

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

निर्दिशन् ब्रह्मादीन् प्रसादविषयीकारयितुं व्यतिरेकदृष्टान्तेन तेषां भक्तत्वमेव दृढयति—सर्वे इति । नच ननु वयमिवासुरा इवोद्विजन्तः त्वदसमोर्द्ध्वैश्वर्यदर्शनेनोद्वेगमीर्ष्यादिभावं प्राप्नुवन्तो भवन्ति । भवांस्तु सर्वमङ्गलचरित एवेत्याह, क्षेमायेति ॥ १३ ॥

ननु, परमसाधोस्तव हिंसकोयमिति महाप्राणिनोऽप्यस्य यथा हननं साधवोऽप्येतत्तत्त्वानभिज्ञा एते ब्रह्ममरीच्यादयो न सहेरन् । अत एवैतेष्वपि प्रसादो न युक्त इत्याशङ्क्याह—मोदेतेति । अहं को वराकः किन्तु वृश्चिकादेरिव सर्वहिंसकस्यास्य हननं साधुजनोऽप्यनुमोदेत किमुतैत इत्यर्थः । किं वक्तव्यं त एव मोदं लब्धा इति । यतो लोकाश्चेति अतो निश्चसुखदत्वात् साध्वेवानुष्ठितमिति । प्रसादस्यावसरोयं नतु मन्योरिति भावः । किञ्च । रूपमिति ॥ १४—१५ ॥

दुस्सहेति तद्बहिर्मुखनामयत्वादिति भावः । तत्रापि प्रसतां त्वद्भक्तेः सर्वङ्गिलानामसुराणां मध्ये ततो हे उत्तम ! ते तवांघ्रिमूल चरणारविन्दयोः नित्याधिष्ठानं श्रीवैकुण्ठप्रति कदानुह्वयसे ॥ १६ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

नच बहुधन प्रदानादिभिस्त्वं तुष्यसीत्याह—मन्य इति । अभिजनं सत्कुले जन्म ओज इन्द्रियनैपुण्यं तेजः कान्तिः प्रभावः प्रतापः पौरुषमुद्यमः योगोऽष्टाङ्गः कर्मयोगो ज्ञानयोगश्च नाराधनाय न सन्तोषणाय तर्हि केनाह सन्तुष्यामीत्यत आह भक्त्येति तुतोषेति भूतनिर्देशेन नात्र काप्यन्या युक्तिरन्वेष्टव्या किन्तु भवतस्स्वभाव एवायं भक्तेर्वा काप्यद्भुता शक्तिरिति द्योतते । तेन च त्वत्सन्तोषान्यथानुपपत्त्या मय्यपि श्रीनारदकृपाद्भूतो भक्तिगन्धो वर्त्तत इति व्यञ्जितम् ॥ ९ ॥

किमन्यद्वक्तव्यं भक्त्यभावसद्भावाभ्यामेवं विविच्यत इत्याह, भक्तिहीनात् विप्रादपि श्वपचं वरिष्ठं मन्ये किमुत क्षत्रियादिभ्यः तत्रापि द्विषड् पूर्वोक्ताधनादयो द्वादशगुणास्तैर्युक्तात् किमुत सप्ताष्टत्रिचतुरादि गुणयुक्तात् किमुततरां तत्तद्गुणहीनात् तत्रापि वरिष्ठमतिशयेनाधिकमेव सनत्सुजातोक्ता द्वादश वा गुणा द्रष्टव्याः तदुक्तं "ज्ञानञ्च सत्यञ्च दमः श्रुतञ्च ह्यमात्सर्यं ह्रीस्तितिक्षानसूया । यज्ञश्च दानञ्च धृतिः शमश्च महाव्रता द्वादश ब्राह्मणस्य" इति अरविन्देति तेन ज्ञानयोगादि सत्त्वे विप्रो भगवद्विमुखोनोच्यते इति मतं परास्तं श्वपचं कीदृशं तस्मिन्नरविन्दनाभे अर्पिता मन आदयो येन तम् ईहितं कर्म अर्थोधनं विप्राद्वरिष्ठत्वे हेतुः स श्वपचः कुलं स्वीयं सर्वमेव पुनाति भूरिमानो लोकेष्वादरो यस्य तथाभूतोपि सतु विप्रः आत्मानमपि न पुनाति कुतः कुलमिति भावः । भक्तिहीनस्यैते गुणाः गर्वायैव भवन्ति नतु शुद्धये इति श्रीस्वामिचरणाः ॥ १० ॥

ननु, तर्हि श्रवणकीर्त्तनार्हणादिभिर्मत्सम्माननं हि भक्तिस्तयैव तुष्यामि नतु तपःश्रुतादिभिः पुनिष्ठैर्गुणैरिति चेन्मम स्वार्थपरत्वं प्रसक्तं तत्र नहि नहीत्याह—नैवेति । अयं प्रभुरीश्वरो भवान् आत्मनः स्वस्य मानं संमानन जनात् जनमात्रात् न वृणीते कीदृशात् अविदुषः तदपेक्षया ब्रह्मादिस्तम्बपर्यन्तः सर्व एव जनो ह्यविद्वानेवेत्यर्थः । नहि शास्त्रादिविद्याज्ञानशून्यजनकृतं सम्माननं शक्यः कश्चिद्वृणातीति मानाग्रहणे जननिष्ठोऽज्ञानलक्षणो धर्मोहेतुरुक्तः तत्र त्वन्निष्ठो धर्मोऽपि हेतुरस्तीत्याह निजलाभेन पूर्णः किन्तु करुणः कृपालुः सन् वृणीते च यत् कुतश्चिद्वृणीते इति दृश्यते तत्तदनुग्रहार्थमेवेति मानग्रहणेपि करुणात्वलक्षणस्त्वन्निष्ठो धर्म एवहेतुरस्तीति भावः । न च प्राकृतजनकृतेन मानेन तव कश्चिदुत्कर्षोभवेदपितु मानप्रदातुरेवेत्याह यद्यत् यं यं मानं पूजां भगवते विदधीत कुर्यात् तत्संमानः आत्मने स्वस्मै स्वोत्कर्षायैव भवेत् यथा मुखश्रीः मुखेकृता तिलकादिशोभा प्रतिमुखस्य प्रतिबिम्बस्य भवेत् नतु प्रतिबिम्बे कृता प्रतिबिम्बस्येत्यर्थः ॥ ११ ॥

यस्मादेव भवान् भक्त्यैव तुष्यति नतु ब्रह्मण्यादिभिः यस्माच्च त्वत्संमाननं स्वस्यात्मने एव फलति तस्मादहं नीचोपि महि महिमानं गृणामि स्तौमि येन त्वन्महिम्ना अनुवर्णितेन गुणविसर्गे संसारव्याधिमनुप्रविष्टो जनः पूयेत तस्मान्मुच्यते इत्यर्थः ॥ १२ ॥

वयमसुरा एवास्मिन् जगत्यभक्ता मन्दभाग्याः अन्येतु सर्वे तव भक्ता भूरिभागा एवेत्याह सर्वेविधिकरास्त्वन्नियोगकर्त्तारो दासा एव नच वयमसुरा इव वैरभाववत्त्वादुद्विजन्तः स्वतो भीता अतोऽस्य स्वभक्तरूपस्य विश्वस्य क्षेमाय भूतये संपत्त्यै च उत आत्मनः स्वस्यच सुखार्थं तवेदमसुरवधादिविक्रीडितं भवेत् ॥ १३ ॥

यस्माद्विश्वस्य क्षेमायभूत् तस्मान्मन्युं यच्छ दूरीकुरु ननु पर[illegible]न सुखित्वात् कथमस्य विश्वस्य साधुत्वं तत्राह साधु[illegible] परोद्वेजकवृश्चिकसर्पादीनां हत्या हिंसयाऽभ्यकृतया मोदेतेति विधेर्नासाधुत्वमित्यर्थः । प्रति[illegible] तव दुष्टनिग्रहशिष्टपालन कर्तृत्वे प्रतीतिं प्राप्नुवन्ति न चातःपरं नैवैतादृशावतारापेक्षापीत्याह हे नृसिंह ! तव रूपमेवेदं विभयाय भयाभावाय स्मरन्ति तदैव तद्रूपस्मरणेनैवातःपरं भीताः असुरा नश्यन्तीतिभावः ॥ १४ ॥

असुरजातित्वेऽप्यन्येषामसुराणामिव त्वत्तो न मे भयमित्याह नाहमिति । ते अस्माद्रूपादहं न बिभेमि कीदृशात् अतिभयानकं आस्यं जिह्वा अर्कतुल्यनेत्राणि भ्रुकुट्यारम्भस आटोपः उग्रा दंष्ट्रा च यत्र तस्मात् अन्त्रमय्यः स्रजो यत्र तदान्त्रस्रक् तस्मात् क्षतजाक्ता केसरा यस्मिन् शंकुवदुन्नतौ स्तब्धौ कर्णौ यस्मिन् तच्च तस्मात् निर्ह्रादेन भीता दिगिभा यस्मात् अरीन् भिन्दन्तीत्यरिभिन्दि तानि नखाग्राणि यस्मिन् तस्मात् ॥ १५ ॥

किन्तु त्वद्विमुखप्रदायकदुःसङ्गादिभ्य एव भीतोस्मीत्याह त्रस्तोस्मीति । दुस्सहं यत्त्वन्निन्दा द्वेषादिमयत्वादुग्रं संसारचक्रकदनं तस्मादेव त्रस्तोस्मि नतु साधारणसंसारादिति प्रह्लादा-

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

भिप्रायां व्याख्येयः "नैवोद्विजे परदुरत्ययवैतरण्यास्त्वद्वीर्य-गायनमहामृतमग्नचित्त." इत्यग्रिमतदुक्तेः यतः ग्रसतां त्वद्भक्त मां भक्षितुमिवेच्छतामसुराणां मध्ये प्रणीतो निक्षिप्तः ननु त्व किं मया निक्षिप्तस्तत्र नहि नहीत्याह बद्धः सन् स्वकर्मभिरेव तस्मात् कदानु प्रीतस्सन् अपवर्गभूतं शरणं तवाङ्घ्रिकमलं प्रति ह्वयसे पादसम्वाहनार्थं मामाह्वास्यसि ॥ १६ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

किञ्च धनादिभिरपि भगवान्न तुष्यति किन्तु भक्त्या तुष्यतीत्याह, मन्ये इति । धनादयः परस्याराधनाय न भवन्ति यतस्तद्धितनाय गजयूथपाय भगवान् भक्त्यैव तुतोष अभिजन. सत्कुले उद्भवः रूपं सौन्दर्यम् तपः कृच्छ्रादि श्रुतं शास्त्रश्रवणम् ओजः इन्द्रियपाटवम् तेजः प्रकाश. प्रभावः प्रभुत्वम् बलं देवान्तरोपासनादिजम् पौरुषं कार्यक्षमत्वम् बुद्धिरर्थ आख्याशक्तिः किंबहुना भक्तिविरुद्धाः युज्यन्ते इति योगाः सर्वे उपाया इत्यर्थः ॥ ९ ॥

अथ हरिभक्तप्रशंसार्थं तद्बहिर्मुखनिन्दार्थञ्च सर्वेभ्योऽधमस्यापि श्वपचस्य हरिभक्तत्वे सति सर्वश्रेष्ठत्वं सर्वेभ्य. श्रेष्ठस्यापि विप्रस्य हरिविमुखत्वे सति सर्वेभ्योऽधमत्वञ्चाह, विप्रादिति । अरविन्दनाभपादारविन्दविमुखात्तु पूर्वोक्तधनादिद्विषड्गुणयुतात् यद्वा "धर्मश्च सत्यं च दमस्तपश्च अमात्सर्यं ह्रीस्तितिक्षाऽनसूया । यज्ञश्च दानं च धृतिः श्रुतं च व्रतानि वै द्वादश ब्राह्मणस्य ॥" इत्युद्योगपर्वणि धृतराष्ट्रं प्रति सनत्सुजातोक्तैर्द्वादशगुणैर्युक्ताद्विप्रादपि तदर्पितमनोवचनेहितार्थं तस्मिन्नरविन्दनाभे अर्पिताः मनआदयो येन तं श्वपचमपि वरिष्ठं मन्ये यतः स उक्तलक्षणः श्वपचः प्राणं प्राणोपलक्षितमात्मान सकुलं पुनाति. न तु भूरिमान' उक्तद्विषड्गुणाभिमानी हरिपादारविन्दविमुखो विप्रः कुलमात्मानं च पुनाति ॥ १० ॥

मनोवचनाद्यर्पणादिना पूजां स्वानन्यभक्तहितायैव भगवान् स्वीकरोति नत्वन्यथेत्याह, निजलाभपूर्णः "एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति" इति स्वाभाविकेन निजानन्दलाभेनैव पूर्णः अविदुषः "ज्ञाज्ञौ द्वावजावीशानीशौ" इति श्रुतिप्रोक्तस्वाभिन्नाज्जीवात् स्वानन्योपासकादित्यर्थः । मानं पूजां करुणः कृपालुः आत्मनः सुखार्थं न वृणीते नेच्छति किन्तु यद्यन्मानं पूजां जन उपासको भगवते विदधीत कुर्यात्तत्तद् आत्मने स्वस्यैव स्यात् यथा मुखश्रीः मुखो मुख्यः राजादिः तदर्पिता प्रतिमुखेनाऽऽमात्यादिना श्रीः धनविद्याविनयादिरूपा लक्ष्मीः प्रतिमुखस्यामात्यादेरेव सुखदा भवति तद्वदित्यर्थः । यद्वा आश्रयगतं वस्तु आश्रितेपि गच्छतीति दृष्टान्तेनाह मुखे स्थिता श्रीः प्रतिमुखस्य दर्पणादिस्थस्यापि भवतीत्यर्थः । अनेन दृष्टान्तेन जीवो भगवदंशभूतः स्वरूपतोऽपि स्वायत्तस्थितिप्रवृत्तिमान्न भवति यदा तदा केन पदार्थेन भगवत उपकारं कुर्यादिति द्योतितम् अनेन दृष्टांतेन ब्रह्मप्रतिबिम्बो जीव इति शङ्का न कार्या व्यापकस्य प्रतिबिंबासम्भवात् न चाकाशस्य जले प्रतिबिंबो दृश्यते इति वाच्यम् आकाशगतस्य परिच्छिन्नस्य मेघादिद्रव्यस्य तथा दृश्यमानत्वात् विस्तरस्तु अध्यासगिरिवज्राादौ द्रष्टव्यः ॥ ११ ॥

यस्माद्भगवान् भक्त्यैव तुष्यति तस्मात् अहं नीचोऽसुरजोऽपि विगतविक्लवो निःशङ्क ईश्वरस्य महि महिमानं यथामनीषं यथामति सर्वात्मना सम्पूर्णेन मनसा गृणामि वर्णयामि येन महिम्नाऽनुवर्णितेन अजया प्रकृत्या गुणविसर्गे संसारमनुप्रविष्टः पुमान् पूयेत शुद्ध्येत ॥ १२ ॥

ब्रह्मादिषु कृपावलोकनं कुरु मन्युं चोपसंहरेति प्रार्थयते, सर्वे इति द्वाभ्याम् । हे ईश ! सत्त्वधाम्नः प्रकृतिसम्बन्धवर्जितं स्वाभाविकं यत्सत्त्वं गुणविशेषस्तदाश्रयस्येत्यर्थः । अमी ब्रह्मादयः उद्विजन्तः बिभ्यतः, भवदीयगौरवयन्त्रिता इत्यर्थः । न च वयमिवाधुनैव त्वां शरणं गताः किन्तु प्राञ्चः कृपावलोकार्हा इति फलितोऽर्थः किंच तव रुचिरैरवतारैः विविधं क्रीडितं अस्याधिकारिजनस्य क्षेमाय रक्षणाय भूतये ऐश्वर्याय आत्मसुखाय मोक्षाय च न तु भयोत्पादनाय ॥ १३ ॥

तत्तस्मात् हे नृसिंह ! मन्युं नियच्छोपसंहर यदर्थोऽयं मन्युः सोऽसुरस्त्वया अद्य हतः यथा वृश्चिकसर्पहत्या परोद्वेजकस्य वृश्चिकस्य सर्पस्य च वधेन साधुरहिंसकोऽपि जनो मोदेत एकवधेन बहूनां भयनिवृत्तेः तथा असुरवधेन लोका निर्वृतिं सुखमिताः प्राप्ताः सन्तः प्रतियन्ति भवत्प्रसादं प्रतीक्षन्ते जना मुमुक्षवः तवैतद्रूपं अभयाय मोक्षाय स्मरन्ति ॥ १४ ॥

किं त्वमस्मद्रूपाद्बिभेषि ? नेत्याह—नाहमिति । हे अजित ! अतिभयानकमास्यं च जिह्वा च अर्कवन्नेत्रे च भ्रुकुटीरभसश्च उग्रा दंष्ट्राश्च यस्मिन् तस्मात् आंत्रमय्यः स्रजो यस्मिन् क्षतजा रुधिराक्ताः केसराः शङ्कुवदुन्नतौ कर्णौ च यस्मिन्निर्ह्रादेन भीता दिगिभा यस्मात् अरीन् भिदन्तीति अरिभिदानि नखाग्राणि यस्मिन् तस्मात् रूपादहं न बिभेमि रूपादित्यध्याहारः ॥ १५ ॥

तर्हि कुतस्तव भयमित्यत्राह, हे कृपणवत्सल ! दुःसहमुग्रं च संसारचक्रे कदनं दुःख तस्मादहं त्रस्तोस्मि ग्रसतां आत्मपरमात्मस्मृतिघ्नानामिन्द्रियाणां अन्योन्यघातिनां बद्धजीवानां वा मध्ये स्वकर्मभिर्बद्धः "बन्धको भवपाशेन भवपाशाच्च मोचकः" इति स्मृतेर्भवतैव प्रणीतो निक्षिप्तो ऽस्मि हे उरुक्रम ! अपवर्गशरणं मोक्षाश्रयं ते ऽङ्घ्रिमूलंप्रति प्रीतः सन्मां कदा ह्वयसे आह्वास्यसि ॥ १६ ॥

---

भाषा टीका ।

परन्तु मै जानताहूं कि-धन अच्छे कुलमें जन्म रूप तप पाण्डित्य और तेज प्रभाव बल पौरुष बुद्धि इत्यादि सब भी परम पुरुष श्रीगोविन्द की प्रसन्नता के हेतु नहीं हो सक्ते हैं क्योंकि गजेन्द्र के ऊपर भगवान् केवल भक्ति मात्र से प्रसन्न हुए ॥ ९ ॥

यस्मात्प्रियाप्रियवियोगसयोगजन्मशोकाऽग्निना सकलयोनिषु दह्यमानः ।
दुःखौषधं तदपि दुःखमतद्धियाऽहं भूमन् ! भ्रमामि वद मे तव दास्ययोगम् ॥ १७ ॥
सोऽहं प्रियस्य सुहृदः परदेवताया लीलाकथास्तव नृसिंह ! विरिञ्चिगीताः ।
अञ्जस्तितर्म्यनुगृणन्गुणविप्रमुक्तो दुर्गाणि ते पदयुगालयहंससङ्गः ॥ १८ ॥
बालस्य नेह शरणं पितरौ नृसिंह ! नार्तस्य चागदमुदन्वति मज्जतो नौः ।
तप्तस्य तत्प्रतिविधिर्य इहाञ्जसेष्टस्तावद्विभो ! तनुभृतां त्वदुपेक्षितानाम् ॥ १९ ॥
यस्मिन्यतो यर्हि येन च यस्य यस्माद्यस्मै यथा यदुत यस्त्वपरः परो वा ।
भावः करोति विकरोति पृथक्स्वभावः सञ्चोदितस्तदखिलं भवतः स्वरूपम् ॥ २० ॥

भाषा टीका ।

पद्मनाभ श्रीहरि के पादारविन्द से विमुख द्वादश गुण विशिष्ट ब्राह्मण से मै श्वपच ( चांडाल ) को श्रेष्ठ मानता हू वह चांडाल कैसा हो कि श्रीहरि में अर्पण किया है मन वाणी चेष्टा अर्थ ( द्रव्यादि ) प्राण पर्यन्त जिसने, वह चांडाल कुल को पवित्र करता है, और अभक्त, गर्व वाला ब्राह्मण अपने आत्मा को भी पवित्र नहीं कर सका है ॥ १० ॥

और हमारे प्रभु श्रीहरि तो निज लाभसो पूर्ण हैं दयालु है अत एव अज्ञजन से मान की इच्छा नहीं करते परंच यह जन जो कुछ श्रीहरिके अर्थ मान ( पूजोप हारादि ) करता है वह अपने ही लिये होता है जैसे साक्षात् मुख का अलंकार प्रतिबिंब मे होता है ॥ ११ ॥

तस्मात् सर्व प्रकार से विगत शंका वाला मै भी यथा मति ईश्वर के महिमा को वर्णन करता हू यद्यपि मे माया के गुणों से रचित संसार मे प्रविष्ट और नीच असुर जाति हूं तौभी गुण वर्णन से पवित्र हो जाऊंगा क्योंकि ? जिसके गुण वर्णन करने से पुरुष पवित्र होजाता है ॥ १२ ॥

हे ईश ! ये सब ब्रह्मादिक सत्व धामा आप के किङ्कर है, और सब आप से डरते है, और हमारे असुर लोगो के सदृश वैर भाव से भक्त नहीं किंतु श्रद्धापूर्वक है, और आपके रुचिरावतार धारण करके जो विक्रीडित है वह इस जगत के क्षेम और वृद्धि के अर्थ है तथा आत्म सुख के लिये भी है ॥ १३ ॥

तस्मात् कोप को शांत कीजिये और इस असुर को आपने अच्छा मारा क्योंकि साधु जन भी वृश्चिक ( विच्छु ) सर्प की हिंसा से सुख ही पाते हैं और संपूर्ण लोक भी सुखित होकर आप के क्रोध शांति की प्रतीक्षा कर रहे है हे नृसिंह ! और आप के इस रूप को मनुष्य भय निवृत्ति के लिये स्मरण करते हैं ॥ १४ ॥

हे अजित ! अनंत भयानक मुख, जिह्वा, और सूर्य सदृश नेत्र, और भृकुटियों का आटोप और उग्रडाढे जिसमें, और आंतों की माला, रुधिर की केसर, शंकु सदृश खड कर्ण जिसमें, शब्द से डरे है दिग्गज जिसके, वैरी को भेदन करने वाले नखाग्र है जिसमे ऐसे आप के इस रूप से मै नहीं डरता हूं ॥ १५ ॥

किन्तु हे कृपावत्सल ! इस संसार के दुःसह दुःख से मै बडा दुखी हूं क्योंकि ? अपने कर्मों के बंधन में बँधा हुआ मै इन हिंसक जीवो मे पडा हूं अत एव संसार के दुःखों मे डरता हूं हे अति कमनीय ! मेरे ऊपर प्रसन्न हो मोक्ष के गृह रूप आप के चरणारविन्दों में कब बुलाओं गे ॥ १६ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

दास्ये सति मत्प्रीर्तिरिति चेत्सर्हि नानायोनिषु क्लिश्यमानस्य मम दास्यज्ञानाभावात्त्वमेव तदुपदिशेति प्रार्थयते, यस्मात्प्रियैरप्रियैश्च यथासख्यं वियोगसंयोगाभ्यां जन्म यस्य तेन शोकाग्निना सकलयोनिषु दह्यमानोऽस्मि दुःखस्य प्रतीकारः कार्यइति चेत्तत्राऽऽह दुःखस्यौषधं प्रतीकारस्तदपि दुःखमेव एवमप्यतद्धिया देहाद्यभिमानेन मुह्यामि अतो हे भूमन्विभो ! मे तव दास्यरूपं योगं निस्तारोपायं वद ॥ १७ ॥

ननु, दास्ययोगेन प्रवृत्तस्यापि तदन्तरायभूतानां पूर्वोक्तनानादुःखानां कुतः परिहारस्तत्राह—सोऽहं त्वद्दासः सन् भो नृसिंह ! तव लीलाकथा अनुगृणन्दुर्गाणि महादुःखान्यञ्जसा नितर्मि तरामि तरणायिष्यामीत्यर्थः । तत्र हेतुः गुणै रागादिभिर्विशेषेण प्रमुक्तः सन् तत्कुतः ते पदयुगमेवालयो येषां भक्तानां तएव हंसाः ज्ञानिनस्तैः सङ्गो यस्य मम सोऽहम् कथंभूतस्य कथास्तत्राऽऽह प्रियस्येत्यादि कुतो ज्ञाताः विरिञ्चेन गीतास्तत्सम्प्रदायप्रवृत्ताः तथाचाथर्वणी श्रुतिः "देवाह वै प्रजापतिमब्रुवन्" इत्यादि दास्ये प्रवृत्तस्य भवदनुग्रहेण सत्सङ्गस्ततोवीतरागतया भगवद्गुणानुवर्णनं ततश्च न दुःखाभिभवः स्यादिति वाक्यार्थः ॥ १८ ॥

### श्रीधरस्वामिकृतभावार्थदीपिका ।

ननु,दुःखैस्तप्तस्यैतत्प्रतीकारो लोके प्रसिद्ध एव किं मद्दास्यादिना, तत्राऽऽह–बालस्येति । भो नृसिंह ! तप्तस्य तत्प्रतिविधिर्दुःखप्रतीकार इह लोके योऽञ्जसेष्टः स त्वयोपेक्षितानां तावदेव क्षणमात्रमेव नत्वात्यन्तिकः तदेवाऽऽह बालस्य पितरौ शरणं रक्षकाविह न भवतः ताभ्यां पाल्यमानस्यापि तस्य दुःखदर्शनात् कचिद्जीगर्तादिषु ताभ्यामेव तद्वधदर्शनाच्च, न चार्तस्य रोगिणोऽगदमौषधं शरणम् कृतेऽप्यौषधे मृत्युदर्शनात् न चोदन्वति समुद्रे मज्जतः पुंसो नौः शरणं तया सह मज्जनदर्शनात् अतस्त्वमेव शरणमित्यर्थः । अथवैवं काका व्याख्येयं तप्तस्य तत्प्रतिविधिर्य इह तावत्प्रसिद्धः स त्वदुपेक्षितानां किमञ्जसेष्टोऽपितु नेष्टएव यद्वा यस्तावदिह प्रतिविधिरिष्ट स किमञ्जसा नैवाञ्जसेत्यादि योज्यम् बालस्येत्यादि पूर्ववदेव ॥ १९ ॥

ननु, कचित्कुतश्चित्केनचित्कदाचित्कश्चिद्रक्षकोपि दृश्यतएवेत्याशङ्क्य तत्रापि तत्तद्रूपेण त्वमेव रक्षक इत्यङ्गीकृत्य तस्यैव सर्वात्मतामाह–यस्मिन्निति । अपरोऽर्वाचीनः पित्रादिः परो ब्रह्मादिर्वा भावः कर्ता तत्तत्कारकैर्यद्यत्करोति तत्सर्वं भवतएव स्वरूप नतु पृथक् यस्मिन्नधिकरणे यतोनिमित्तात् यर्हि यस्मिन्काले येन करणेन येन हेतुकर्त्रा सञ्चोदितश्च यस्य सम्बन्धि यस्मादपादानाद्यस्मै सम्प्रदानाय यदीप्सिततमं यः कर्तेत्येवं सप्तविभक्त्यर्थाः यथा येन प्रकारेणेति क्रियाविशेषणभूतानामव्ययानामर्थः पृथक्स्वभावः सत्त्वादिप्रकृतिः करोत्युत्पादयति विकरोति रूपान्तरं नयतीति ॥ २० ॥

———

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

ननु, भयंचेत्तद्दुःखदर्शनजं किन्तत्संसारचक्रं दुःखमित्यपेक्षायां तद्दर्शयन्नात्मानं विशिनष्टि—तस्मादित्यर्द्धेन । येन कर्मणाऽहं बद्धः तस्मात्कर्मणो निमित्तात्प्रियैरप्रियैश्च विषयैर्यथासंख्यं वियोगसंयोगौ ताभ्यां जन्म उत्पत्तिर्यस्य तेन शोकाग्निना सकलयोनिषु दह्यमानोतीव दुःखितोऽहमित्यर्थः भ्रमामीत्यन्वयः तर्हि दुःखनिमित्तकर्मनिवृत्त्युपायमनुतिष्ठत्यपेक्षायामन्तरेण भवद्दास्यमन्यन्निःशेषदुःखनिवृत्त्युपायभूत नास्त्यैव कथंचित्सदपि दुःखात्मकमेवेत्याह दुःखौषधमिति यद्दुःखस्यौषधं प्रतीकारात्मकं तदपि दुःख दुःखात्मकमित्यर्थः दुःखस्य प्रतीकारो हि दुःखनिमित्तदुरितनिरसनेन भवति निःशेषदुरितनिवर्त्तकंच न किञ्चिदन्यदस्ति प्रतिपदोक्तप्रायश्चित्तादिकं न विशेषदुरितनिवर्त्तकं पत्युत दुःखात्मकं चेत्यर्थः अतो हे भूमन् मतद्धिताय तज्जनहिताय न भवति मतद्धियाहमिति पाठे अहं देहात्माभिमानेन भ्रमामि अतस्तव दास्ययोगं दिश तव नित्यदास्यसम्बन्धं देहि वदेति पाठे उपदिश नित्यप्रबुद्धत्वद्दास्यसम्बन्धवान्यथा भवेयं तथा मामनुगृहाणेत्यर्थः ॥ १७ ॥

एवं कोपोपशमः प्रार्थितः भगवद्दास्यमेव दुःखौषधमिति चोक्तम् "पूयेत येन हि पुमाननुवर्णितेन" इति भगवद्वर्णनमात्मविशुद्धिफलकमित्युक्तम् अथ त्वदनुग्रहेण प्रबुद्धनित्यभवद्दास्यसम्बन्धोऽहं यथामति त्वां स्तुवन् दुःखनिमित्तकर्मभिर्विमुक्तः सर्वाणि दुःखानि यथा तरेयं तथा अनुगृहाणेत्याह—सोहमिति । सोहं त्वदनुग्रहेण प्रबुद्धनित्यभवद्दास्यसंबन्धोहं सुहृदो हितैषिणः प्रियस्य मम निरतिशयप्रीतिविषयस्य परदेवतायास्तव ब्रह्मादिभिर्गीताः लीलारूपव्यापारविषयाः कथाः अनुगृणन् गुणविप्रयुक्तः सत्त्वादिगुणमूलककर्मबन्धैः रागादिभिर्वा विमुक्तः ते तव पदयुगलमेवालयमाश्रयो येषां ते भक्तास्तएव हंसाः परिशुद्धा जनास्तैः सङ्गो यस्य तादृशः अञ्जस्तितर्मि सुखेन तितर्मि अतितरामि तथानुगृहाणेत्यभिप्रायः अत्रायं क्रमः तावत्त्वदनुग्रहेण सत्सङ्गस्ततोभगवद्गुणवर्णनं ततोविरागः तस्त्वद्भक्त्या दुःखनिमित्तकर्मक्षयद्वारा संसृतेस्तरणमिति ॥ १८ ॥

एतत्सर्वं त्वदनुग्रहेणैव भाव्यम् नतूपायान्तरेणेति कैमुत्यन्यायेन वक्तुं तावत्त्वदुपेक्षितानां न दुःखप्रतिक्रियास्तीत्याह–बालस्येति ! हे नृसिंह ! इह लोके बालस्य त्वदुपेक्षितस्य पितरौ मातापितरौ न शरणं न रक्षकौ एवमार्तस्य रोगपीडितस्य त्वदुपेक्षितस्यागदमौषधं न शरणं तथोदन्वति समुद्रे मज्जतस्त्वदुपेक्षितस्य नौर्न शरणं पित्रादिषु सत्स्वपि बालादीनां विनाशदर्शनादिति भावः । अतो हे विभो नृसिंह ! इह लोके तप्तस्य दुःखितस्य तत्प्रतिविधिस्तापप्रतीकारोपायः तावत्प्रसिद्धः स त्वदुपेक्षितानां त्वामनाश्रितानां तनुभृतां शरीरमेव पोषणपराणां किमञ्जसेष्टः अपितु नेष्ट एव बालादिदुःखोपशमने एव पित्रादयो न प्रभवः किंपुनर्निःशेषदुःखोपशमने न प्रभवइत्यतस्त्वदनुग्रहेणैव निःशेष दुःखात्मकसंसृतिनिवृत्तिरिति संसृतिचक्रादुत्तारकस्त्वमेवेति भावः ॥ १९ ॥

यतस्त्वमेवभूतोऽतः संसृतिचक्रपतित त्वत्प्रपन्नं मामुत्तारयेति विज्ञापयिष्यन् त्वत्प्रपत्तिमन्तरेण न कोप्यात्मानं तारयितु प्रभुरिति वक्तुंतावदाचार्यादिमुखेन कारितमपि त्वच्छरणवरणं त्वत्कारितमेव यतस्तत्तत्क्रियाश्रयकर्त्रादिकारकषट्कसम्बन्धिशरीरकत्वेन च कालशरीरकत्वेन च त्वमेवावस्थित इत्याह—यस्मिन्निति । यस्मिन्नित्यधिकरणकारकनिर्देशः यत इति हेतुत्वशक्त्याश्रयं निर्दिश्यते यर्हीत्यनेन कालः येनेति करणत्वशक्त्याश्रयं यस्येति सम्बन्धी यस्मादित्यपादानत्वशक्त्याश्रयं यस्मै इति संप्रदानत्वशक्त्याश्रयं यथेत्यनेनोक्ताधिकरणादितः प्रकारः यदिति कर्मत्वशक्त्याश्रयं उतापिच य इत्यनेन प्रयोजककर्त्ता सञ्चोदिति इत्यनेन प्रयोज्यकर्त्ता तावेवापरः परश्च यद्वा पर उत्कृष्टः अपरोऽवमः भावः पदार्थः सप्रकारकारकषट्करूपः सम्बन्धिरूपः कालरूपश्च यो यः पदार्थ पृथक्स्वभावप्रविभक्तः स्वभावो यस्य सः पृथक्स्वभावः कर्तृकर्मद्वारा तन्निष्ठक्रियाश्रयत्वमधिकरणत्वद्रव्यगुणक्रियान्वितमनिरूपितत्वैतत्कारणत्वे च सति सव्यापारनिर्व्यापारनिष्ठत्वं हेतुत्वं धातूपात्तव्यापारजन्यफलाव्यवहितपूर्वव्यापाराश्रयत्वं करणत्वं सम्बन्धसामन्याश्रयत्वं सम्बन्धित्वम् प्रकृतधातूपात्तव्यापारानाविष्टत्वे सति तज्जन्यविभागाश्रयत्वमपादानत्वं दानस्य कर्मणा क्रियया वा सम्बध्यमानत्वं सम्प्रदानत्वं धातूपात्तव्यापारव्यधिकरणतज्जन्यफलाश्रयत्वं कर्तृत्वं प्रकृतधातूपात्तव्यापारानुकूलव्यापाराश्रयत्वं प्रयोजककर्त्वं धातूपात्त-

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

व्यापाराश्रयत्वं कर्तृत्वमित्येवं सप्तविभक्त्यर्थानां प्रविक्तस्वभावः कालस्यस्वात्मव्यतिरिक्तपरिच्छेदकत्वं स्वभावः एवं पृथक्स्वभावः उच्चावचं रूपः करोति उत्पादयति विकरोति विनाशयति उत्पादनाश्रयो विनाशनाश्रयोवा भवति तदखिलं कारकषट्कादिरूपं वस्तु भवतः स्वाभाविकं रूपं शरीरमित्यर्थः एवंच सर्वभावान्तरात्मतया तच्छरीरकतयावस्थितस्य तवैव सर्वे निग्रहानुग्रहादयः सद्वारकव्यापारा इतिभावः ॥ २० ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

देवादियोनौ सुखसम्भवात्तस्मात्संसारचक्रात्कथ बिभेषीति तत्राह—यस्मादिति । देवादिसकलयोनिषु प्रियस्य वियोगोऽप्रियस्य संयोगः तयोर्जन्म यस्य स तथा स च शोकाग्निस्तेन प्रियादिवियोगादिना जन्मना च य शोकाग्निस्तेन वा दह्यमानोह यत् दुःखपरिहारलक्षणं कर्म तदपि दुःखरूपमिति मत्वा अतद्धिया तद्धीरतद्धीस्तया दुःखपरिहारौषधज्ञानेन भ्रमामि कुत्रगतेन केनौषधेन वा मे सुखं स्यादित्यनवस्थिति प्राप्तोस्मीति यस्मात्तस्मादिदमेव संसारनाशनमिति मत्वा भवन्त प्रार्थये किं तत्राह वदेति तव दास्यलक्षणं योगमौषधं वदानुगृहाणेत्यन्वयः ॥ १७ ॥

त्वदुपासनादुपायमन्तरेण दास्यमात्रेण नन्वं किं स्यादित्याशङ्क्य बहुप्रयत्नसाध्यामुपासनामन्तरेणोपायोऽस्तीत्याह । सोहमिति । गुणमयसंसाराद्विप्रमुक्तः पादयुगलमेवाशयपदश्रयोयेषां ते तथा ते च हंसाः निरलङ्काः परमहंसाःतेषां सङ्गः सेवालक्षणो यस्य स तथा दुर्गाणि कलत्रादीनि नरकाणि वा ॥ १८ ॥

नृसिंह ध्यानरूपेत्यनेन सम्बुद्धिकरणेन दृष्टान्तदार्ष्टान्तिकयोर्मद्भेदलक्षणयमस्तीति ज्ञापनायाज्ञानजनदुःखवत्तारायं चेति ज्ञातव्यं निदाघतप्तस्य जलादिना तपशान्तिविदाध्यायनलक्षणपरिहारः ज्वराभिभूतस्य ज्वरादिपरिहारप्रकारोयत् इष्टः इष्टसाधनञ्च ॥ १९ ॥

ब्रह्माद्यन्यतमइष्टः किं न स्यादित्याशङ्क्य कर्तृत्वाद्यभिमतस्य ब्रह्मादेः सत्ताद्यपि यदा यदधीनत्वं प्रमाणिकं तदा सर्वेश्वरेश्वरेरित्वं किं वक्तव्यमितिभावेनाह—यस्मिन्निति । अपरः कालादिर्वा परो ब्रह्मादिर्वा यस्मिन्नधिष्ठाने स्थित्वा यतोमृदादेर्यैर्हि यस्मिन्काले येन चक्रसलिलादिना यदपादृष्टादेः सहायेन यस्मै जलाहरणाद्यर्थं यथाविधिना । यं भावं घटादिपदार्थं करोति विकरोति सामान्यतोविशेषतोवा कीदृशः पृथक् स्वभावः कार्यान्वितगुणस्वरूपः सत्त्वोद्रिक्तस्वाहरणेन पुरुषेण प्रेरितः तदखिलं कार्यकारणलक्षणं सर्वं भवतः स्वरूपञ्च त्वदधीनसत्तात्मकमित्यन्वयः "कर्तृकर्मक्रियादीनां सत्तावृत्तिस्तथैवच । विष्णवधीनं यतः सर्वं सर्वरूपस्ततुच्यते" इति वचनाद्भेदोस्तीति बोद्धव्यम् ॥ २० ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

ननु, यावदाह्वयामि तावत पैतृकं राज्यसुखमनुभवेति चेदुःखमेव तत् तावच्च प्रार्थनीयस्त्वेष एवेत्याह—यस्मादिति दास्य दासस्य कर्म तच्च श्रीभगवत्प्रतिमापरिचर्या तदेव योगस्त्वत्संयोगरूपस्त्वम् ॥ १७ ॥

तत्तदुपद्रवहानिस्तु तत्र स्वतःसिद्धप्रकारान्तरेण भवत् स्फूर्तिविशेषादेव स्यादित्याह—सोहमिति ॥ १८ ॥

नान्यत इत्याह—बालस्येति । तर्हि कथं शास्त्रान्तरे तत्तत् प्रतीकार इष्यते तत्राह—तप्तस्येति च त्वदुपेक्षितानां सज्ञानत्वाद्विषयोपेक्षाणां त्वद्बहिर्मुखानामित्यर्थः । तेषामर्थे साक्षादुपदेशेन यः प्रतिविधिः तत्रतत्रेष्टः स तावदेव आपातधैर्यार्थमेवेत्यर्थः । तेषामतस्तत्रापि सर्वभक्ताश्रयपरमशक्तिना तयैव रक्षणमितिभाव. ॥ १९ ॥

तस्य तादृशत्वमेव दर्शयति—यस्मिन्निति । टीकायां योऽपरोऽर्वाचीन इति यद्यत् कारकैरिति च पाठोऽवगन्तव्यः । स्वरूपमिति स्वोपादान कार्यभूतमित्यर्थः ॥ २० ॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

ननु. मदङ्घ्रिसेवया किं करिष्यसि पैतृकं त्रिजगदैश्वर्यसुखं तावद्भुंक्ष्वेत्यत आह । यस्मात् प्रियैरप्रियैश्च यथा सख्यं वियोगसंयोगाभ्यां जन्म यस्य तेन शोकाग्निनासकलयोनिष्विति राजदेहेऽपि तादृशशोकाग्निदाहस्य नासद्भाव इतिभावः ननु शोकाग्नेः प्रतीकारा अपि बहवो वर्त्तन्त इत्यत आह दुःखस्यौषधं प्रतीकारास्तदपि दुःखमेव तदपि अतद्धिया अदुःखबुद्ध्यैव सूकरादियोनावप्यहं सुखीति बुद्ध्यैव भ्रमामि अतस्तव दास्यस्य योगमुपायं वद केनोपायेन तव दास्यं प्राप्नुयाम् तत्त्वमेवोपदिश त्वद्दास्यवत्वे सति नानायोनिगतस्यापि न मे किमपि दुःखमिति भावः ॥ १७ ॥

ननु मद्दास्ये वर्त्तमानेपि त्वया प्रस्तुत संसारिकदुःखस्यौषधमन्यदप्यन्वेष्टव्यमेवेति तत्र साटोपं स प्रगल्भास्फोटश्चाह सोहं त्वदनन्यभक्तः श्रीनारदभृत्यत्वेन प्रसिद्धः प्रह्लादोहम् अन्य इव न ज्ञानकर्मादिकं स्वप्नेप्यङ्गीकरोतीति भावः । तव लीलाकथाभृणान् कीर्त्तयन्नेव गुणान् कीर्त्तयन्नेव गुणविप्रमुक्तो गुणातीत इति यद्यहं गुणातीतोऽभवं तदा मे कुतः प्रस्तुतदुःखं दुःखौषधं वेति भावः । ननु गुणातीतस्य भक्तस्यापि दुःखानि दृश्यन्ते तत्राह दुर्गाणि त्वद्विरहसन्तापान् अञ्जः शीघ्रं तितर्मि अनिश्चयेन तरामीति त्वत्साक्षात्सेवाप्राप्तावपि त्वत्कीर्तनप्रसादान्मे नाति विलम्बो भावीति भावः त्वत्पदयुगस्य कमलत्वात् तदालयैर्हंसैस्त्वत्पार्षदैर्मां नेतुमागच्छद्भिः सहसङ्गो यस्य सः विरञ्चगीतानि कथानां प्रामाण्यं नच त्वत्कथाकीर्तने केषामपि श्रम इत्याह सुहृदः सखा भक्तानां सख्युः परदेवतायाः दास्यभक्तानां मद्विधानां प्रभो ॥ १८ ॥

**माया मनः सृजति कर्ममयं बलीयः कालेन चोदितगुणाऽनुमतेन पुंसः।**
**छन्दोमयं यदजयाऽर्पितषोडशारं संसारचक्रमज ! कोऽतितरेत्त्वदन्यः ॥ २१ ॥**

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

नच दुःखस्य प्रतीकारा अपि त्वां विनाफलन्तीत्याह–बालस्य पितरौ शरणं रक्षकाविह न भवतः ताभ्यां पाल्यमानस्यापि तस्य दुःखदर्शनात् क्वचिद्जीर्णतादिषु तद्वधदर्शनाच्च नचार्तस्य रोगिणः अगदमौषधं शरणं कुत्रेप्यौषधे मृत्युदर्शनात् न च उदन्वति समुद्रे मज्जतः पुंसो नौः शरणं तयाम्हैव मज्जनदर्शनात् अतस्तस्य दुःखितस्तत्प्रतिविधिर्दुःखप्रतीकारो य इह इष्टः स त्वदुपेक्षितानां त्वदिच्छाया अविषयीभूतानां जनानां नेति पूर्वेणान्वयः तावदिति वाक्यालङ्कारे ॥ १९ ॥

केषाञ्चित् यः पित्रादिको रक्षको दृश्यते सोऽपि त्वद्रूप एवेत्याह–यस्मिन्निति। अपरोऽर्वाचीनजनः परः प्राचीनो ब्रह्मादिर्वाभावः कर्ता कारकैर्यत् यत् करोति तत् सर्वं भवतो मायाशक्तियुक्तस्य स्वरूपं स्वीय रूपमित्यर्थः। यस्मिन्नधिकरणे यतो निमित्तात् यर्हि यस्मिन् काले येन करणेन येन हेतुकर्त्रा सख्योदितश्च यस्य सम्बन्धि यस्मादुपादानात् यस्मै संप्रदानाय यदीप्सिततमं यः कर्त्तेत्येवं सप्तविभक्त्यर्थः यथा येन प्रकारेणेति क्रियाविशेषणभूतानामव्ययानामर्थाः त्वत्तो निर्गुणात् पृथक्स्वभावः सत्त्वादि प्रकृतिः करोति उत्पादयति विकरोति रूपान्तरं नयति ॥ २० ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

चरणप्राप्त्युपायः भगवत्प्रसाद एवेति प्रीत इत्यनेनोक्तमथ त्वत्प्रसादकारणं त्वद्दास्यमेव तत्त्वमेवोपदिशेति प्रार्थयते–यस्मादिति। यस्मात् तद्ब्रह्म न तदतत्संस्मारस्तद्धिया संसाराभिनिवेशेन प्रियाप्रियाभ्यां वियोगसंयोगौ विजोसंयोगौ च जन्म च तैयः शोकाग्निस्तेन सकलयोनिषु दह्यमानः तात्यमानो भ्रमाम अस्य दुःखस्य त्वद्दास्यव्यतिरिक्तं यदौषधं तदपि दुःखमेव अतो हे भूमन् तव दास्ययोगं सर्वदुःखघ्नं मे मह्यं वद ॥ १७ ॥

हे नृसिंह ! सोऽहं भवद्दासस्सन् ते पादपद्मयुगे आलयो निष्ठा येषां परमहंसानां सारग्राहिणां भागवतानां संगो यस्य सः अत एव गुणैः रागादिभिः विशेषेण प्रमुक्तः तव लीलाकथाः अनुगृणन् दुर्गाणि अञ्जः अनायासेन तितर्मि तरामि ॥ १८ ॥

हे नृसिंह ! हे विभो ! तावत्त्वदुपेक्षितानां त्वत्तोऽप्राप्तत्वद्दास्यानां मध्ये इह संसारे बालस्य शरणं दुःखहरं पितरौ न आर्त्तस्य रोगार्दितस्यागदमौषधं शरणं न उदन्वति समुद्रे मज्जतो नौः न तप्तस्य च यस्तत्प्रतिविधिरिहाऽसेव्यस्तच्छरणं न किन्तु त्वमेव सर्वेषां शरणमिति भावः ॥ १९ ॥

"सर्वं खल्विदं ब्रह्म, तत्त्वमसि" "क्षेत्रज्ञं चापि मां विद्धि" "आत्मेति तूपगच्छन्ति ग्राहयन्ति च" इति श्रुतिस्मृतिसूत्रसाधितं स्वात्मनः त्वदात्मकत्वानुसन्धानं विना संसारचक्र कोऽतितरेदित्याह–यस्मिन्निति द्वाभ्याम्। यस्मिन्नधिकरणे यतो निमित्तात् यर्हि यस्मिन् काले येन करणेन येन हेतुकर्त्रा सख्यादिनश्च यस्य सम्बन्धि यस्मादुपादानात् यस्मै संप्रदानाय यदीप्सिततमं यश्च स्वयंकर्त्ता यथा येन प्रकारेण पृथक् स्वभावः करोति उत्पादयति विकरोति रूपान्तरं नयति भावः अन्योन्ययुक्तः पदार्थः अपरः प्राकृतः परोऽप्राकृतः तदखिलं भवतः स्वरूपं भवदात्मकमित्यर्थः "एतदात्म्यमिदं सर्वम्" इति श्रुतेः ॥ २० ॥

---

भाषा टीका।

हेभूमन् ! इसप्रिय अप्रिय पदार्थों के संयोग वियोग से उत्पन्न हुआ जो अग्नि तिस्से सर्व योनियों में जलता हुआ दुःख की शान्ती के लिये जो औषध करताहूं वहभी दुःख रूपही है परन्तु उससमय मेरी उसमे दुःख की बुद्धि नहीं रहती है इस तरह से इस संसार मे भटक रहाहूं इसलिये अब आप अपना दास्य कैंकर्य रूप सिद्ध महौषधि बताइये कि जिस्से फिर न भटकूं ॥ १७ ॥

हे नृसिंह देव ! अब मैं परमप्रिय और सुहृद तथा परात्पर देव जो आप तिनकी ब्रह्मादिको की गाई हुई जो आपकी कथा ये तिनको गाताहुआ बिन प्रयास गुणों से छूटकर दुःखों को तर जाऊंगा केवल इतना अपेक्षित है कि आपके चरण कमल घर है जिनके एसे हंसो का सङ्ग मुझे हो ॥ १८ ॥

हे विभो ! हे नृसिंह ! आपने जिनोकी उपेक्षा की है उन पुरुषों का कोई रक्षक नहीं, जैसे कि, इस संसारमें आपकी उपेक्षा होने से बालक के माता पिता रक्षक नहीं हो सक्ते रोगी की औषध अच्छानहीं करसक्ती, समुद्रमे डूबते हुये को नौका नहीं बचासक्ती इसी प्रकारी तप्तकी शान्तिके लिये जो कुछ कहा उससे उस्की शान्ति नहीं हो सक्ती जबतक आपकी कृपा नहीं ॥ १९ ॥

ब्रह्मा से लेकर अपने पिता पितामह प्रभृति जो हुए हैं करते है विकार को प्राप्त होते हैं जिस अधिकरण मे जिसकाल में जिस कारण से जिसके लिये जिस हेतु से जैसे जो कुछ कार्य जाता है वह सब आपकाही स्वरूप है ॥ २० ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका।

अतोऽन्यस्य रक्षकस्याभावादसंसारित्वाच्च नित्यमुक्तस्त्वमेव मां शरणागतं रक्षेति प्रार्थयते—मायेति द्वाभ्यां। त्वदंशस्य पुंसोऽनुमतेनेक्षणरूपेणानुग्रहेण मनो मनः प्रधानं लिङ्गं माया सृजति

स त्वं निहत्य विजितात्मगुणः स्वधाम्ना कालो वशीकृतविसृज्य विसर्गशक्तिः ।
चक्रे विसृष्टमजयेश्वर ! षोडशारे निष्पीड्यमानमुपकर्ष विभो ! प्रपन्नम् ॥ २२ ॥
दृष्टा मया दिवि विभोऽखिलधिष्ण्यपानामायुः श्रियो विभव इच्छति यान् जनोऽयम् ।
येऽस्मत्पितुः कुपितहासविजृम्भितभ्रूविस्फूर्जितेन लुलिताः स तु ते निरस्तः ॥ २३ ॥
तस्मादमूस्तनुभृतामहमाशिषोऽज्ञ आयुः श्रियं विभवमैन्द्रियमाविरिञ्चात् ।
नेच्छामि ते विलुलितानुरुविक्रमेण कालात्मनोऽपनय मां निजभृत्यपार्श्वम् ॥ २४ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

कथंभूता कालेन चोदिताः क्षोभिता गुणा यस्याः कथम्भूतं मनः कर्ममयं कुर्वद्रूपम् बलीयो दुर्जयम् छन्दोमयं वेदोक्तकर्मप्रधानञ्च अजया जीवस्याविद्यया तद्भोगार्थमर्पिता. षोडश अरा विकारा यस्मिन् यदेवंभूतं संसारचक्रात्मकं मनस्तत् कोऽतितरेत्,भो अज ! त्वदन्यः त्वत्तः पृथक् स्थितः त्वामभजन्नित्यर्थः ॥ २१ ॥

ननु,ममापि मायासम्बन्धात्कर्तृत्वाद्यविशेषाच्च त्वत्तः कोविशेष इत्याह–स इति । स्वधाम्ना चिच्छक्त्या नित्यं विजिता आत्मनोबुद्धेर्गुणा येन स हि त्वम् यतः कालो मायाप्रेरकः अतएव वशीकृता विसृज्यानां कार्याणां विसर्गाणां साधनानाञ्च शक्तयो येन अत इक्षुदण्डवन्निष्पीड्यमानं मामुपकर्ष स्वसमीपं नय ॥ २२ ॥

ननु, लोकपालानां भोगान्भुंक्ष्व पित्र्यं वा राज्यमिदं दास्यामि किमिति संसारादुद्विजसे तत्राह–दृष्टा इति त्रिभिः । श्रियः सम्पदः विभव उद्भवः आयुरादयो दृष्टाहानि काका तुच्छत्वमुक्तम्. तदेवाऽऽह येऽस्मत्पितुः कोपहासविक्षुब्धभ्रूभङ्गमात्रेण विध्वस्ताः सच त्वया निरस्तः ॥ २३ ॥

यस्मादेवं तस्मादाशिषो भोगान् अस्तनत्परिपाकं विद्वानहमैन्द्रियमिन्द्रियैर्भोग्यं ब्रह्मणोभोगमभिव्याप्य किमपि नेच्छामि ते कालात्मन उरुविक्रमेण विलुलितान्विध्वस्तानणिमादीनपि ॥ २४ ॥

---

श्रीमद्वीरराघवाचार्य्यकृतभागवतचन्द्रचन्द्रिका ।

अथ त्वत्प्रपदनमन्तरेण कः पुमानतितरेत्संसारचक्रमित्याह— मायामनइति । त्वदन्यः त्वत्समाश्रयणाविमुखः कः पुमान्संसारचक्रमातितरेत्,न कोपीत्यर्थः । संसारचक्रं चक्रवत्परिवर्त्तमानं संसारं चक्रशब्देन तत्र पतितस्य दृढतरावलम्बनमन्तरेण न यथा ततो निष्क्रमणं सम्भवति तथा संसारे पतितस्यालम्बनभूतं श्रीभगवन्तं भवन्तमन्तरेण न तस्मादतितरणं सम्भवतीत्यभिप्रेतम्. संसारं चक्रत्वेन रूपयन् तं विशिनष्टि, यद्यस्मिन्मनसि नाभिरूपे पुंसः परमपुरुषस्य अजया भगवन्मायया हेतुभूतया अर्पिताः षोडश ज्ञानकर्मोभयेन्द्रियव्यापाराः दश प्राणापानादिरूपाः पञ्च प्राणवृत्तयः मनोवृत्तिश्चेति षोडश एत एव अराणि यस्य तत्र तत्तज्ज्ञानकर्मोभयेन्द्रियव्यापाराणां मनोव्यापाराद्विना त्वस्वाभाव्यात् तद्व्यापारपूर्वकत्वाच्च तदायत्तत्वेन तदर्पितत्वं मनोवृत्तेस्तु साक्षान्मनस एवाश्रयत्वात्तदर्पितत्वं यद्यपि मनःपर्यन्तानामिन्द्रियाणां प्राणायत्तस्थितित्वेन प्राणव्यापारपूर्वकत्वेन च प्राणवृत्तीनां साक्षात्परंपरया वा न मन आश्रयः तथापि मनोव्यापाराभावदशायां विद्यमानापि प्राणवृत्तिरज्ञाता अतएवासत्प्रायेति, तद्वृत्तिसत्ताज्ञानस्य मनोव्यापारपूर्वकत्वात्तस्यास्तदर्पितत्वमवगन्तव्यम्. यद्वा अजया हेतुभूतयार्पिताः षोडशैकादशेन्द्रियाणि पञ्च भूतानीति षोडश विकारा एवाराणि यस्य यदेतत्संसृतिचक्रमित्यन्वयः । संसारस्य सर्वेन्द्रियव्यापारपूर्वकत्वात्तद्रूपत्वमवगन्तव्यम्. अस्मिन् पक्षे नाभित्वेन न किञ्चिदपि रूपितं यद्वा अजया नाभिरूपया हेतुभूतया चार्पिताः षोडशैकादशेन्द्रियपञ्चभूतात्मकानि अराणि यस्येत्यर्थः संसारचक्रस्यार्पितषोडशारत्वेऽजाया हेतुत्वमुक्तम्. सा किं साक्षादेव हेतुः ? नेत्याह, मायेति । मनःसृष्टिद्वाराहेतुरिति भावः । किं तर्हि तस्याः सहकारिकारणमतआह, कालेनेति । कालेन सह माया मनस्सृजति कालसहकृता प्रकृतिर्मनः सृजतीत्यर्थः । कालोपि न स्वरूपेण प्रकृतेर्मनः सर्गे सहकार्यपितु गुणक्षोभद्वारेति वदन् कालं विशिनष्टि, चोदितगुणानुमतेनेति चोदिताः कालेन क्षुभिताः सत्त्वादयः गुणास्तैरनुमतेन सह कृतेन स्वचोदितगुणत्रयसन्निवेन कालेन सहकृता भगवतो माया मनःसृजति संसारचक्रस्य दुस्तरत्वं भगवदाभिमुख्येतु सुतरत्वञ्चाविष्कर्तुं मनो विशिनष्टि, कर्ममयमिति । त्रिगुणात्मकप्रकृतिपरिणामरूपत्वेन स्वयमपि त्रिगुणात्मकत्वाद्रजोमयतया पुण्यपापरूपकर्मविषयप्रवृत्तिप्रचुरं बलीयः अनतिवर्त्यदोषं छन्दोमयं सत्त्वानुयानाच्छास्त्रावगतिसाधनप्रचुरम् इच्छामयमित्यर्थस्त्वनुपपन्नः छन्दशब्दः इच्छावाची न तु छन्दशब्दः अनेन सत्त्वप्राचुर्ये सति श्रीभगवदाभिमुख्येन संसृतिचक्रं सुतार्यमित्यभिप्रेतम्. एवंभूतं मनः सृजतीत्यन्वयः । तदेवं मनोदोषात्संसारानतिवृत्तिस्त्वत्समाश्रयणविमुखस्येत्युक्तं भवति त्वदन्यः कः संसारचक्रमतितरेत् इत्यनेन त्वदनन्यस्त्वतितरेदेवेति सूचितम् ॥ २१ ॥

तदेवाविष्कुर्वन् त्वदनन्यं मां संसारचक्रान्निर्गमयेति प्रार्थयते—स त्वं हीति । यः स्वमाया मनःसर्गद्वारा संसृतिचक्रे जीवलोकं पातयति स त्वमजया स्वकीयया मायया षोडशारे चक्रे संसारात्मके विसृष्टमत एव नितरां पीड्यमानमधुना

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

त्वां प्रपन्नं मां हे विभो ! अपकर्ष संसृतिचक्राद्बहिर्निर्गमय "य एव बन्धकः स एव मोचक" इति न्यायेन त्वमेव ततो निर्गमयितुं समर्थइति भावः । सामर्थ्यमेव दर्शयंस्तं विशिनष्टि, नित्येत्यादिना । आत्मगुणाः स्वशरीरभूतप्रकृतिगुणा नित्यं निर्जिता आत्मगुणा येन नित्यास्पृष्टदेहधर्मेण स्वधाम्ना स्वस्वरूपेणैव यद्वा विजितात्मगुणो यः स आत्मा तस्य धाम्ना प्रकाशेनैव वशीकृतविसृज्यविसर्गशक्तिः विविधं सृज्या विसृज्याः जीवास्तेषां विसर्गे शक्तिर्यस्याः सा प्रकृतिः शक्तिर्वशीकृता येन स तथोक्तः कालशरीरकश्च वशीकृतसंसृतिनिमित्तप्रकृतित्वान्मोचयितु त्वमेव प्रभुरिति भावः । नित्यविजितात्मेत्यादिना विसृज्यजीववर्गाद्ब्रह्मादिस्तम्बपर्यन्ताद्वैलक्षण्यमुक्तम् । अतः संसारिजीववर्गे न कोपि तन्मोचने दक्षः नहि स्वयं कारागृहबद्धोऽन्यं तादृशं मोचयितुं प्रभुरित्युक्तं भवति ॥ २२ ॥

ननु, त्वं बालस्सन्नेव किं संसारान्निर्विद्यसे भुंक्ष्व भोगानित्यत्राह–दृष्टा इति त्रिभिः । हे विभो ! अय संसारिजनो यानिच्छति कामयते ते अखिलधिष्ण्यपानां इन्द्रादीनामायुरादयो मया विविच्य दृष्टाः श्रियः भोग्यभोगोपकरणादिसमृद्धयः विभवास्त्रिलोकाधिपत्यरूपमैश्वर्यम् आयुरादयो दृष्टा इति काका तुच्छत्वमुक्तं तदेवाह, येइति । येऽस्मत्पितुः कोपहासविकृतभ्रूभङ्गमात्रेण विलुलिताःध्वस्ताः स तु मत्पिता त्वया हतो निरस्तः ॥ २३ ॥

यस्मादायुरादयो मत्पितृदृष्टान्तेन तुच्छत्वेन दृष्टा तस्मात्तनुभृतां देहिनाम् अमूः अयुरादिरूपाः आशिषस्तत्परिपाकं विद्वान् अज्ञइति च्छेदे,अज्ञस्सन्नहम् ऐन्द्रियम् इन्द्रियैरनुभाव्य मन्यदपि सुखमाविरिञ्चाद्ब्रह्मणोनुभाव्यमभिव्याप्यापि तथा कालात्मना कालरूपेण उरुविक्रमेण विपुलपराक्रमेण विपुलपादविक्षेपेण वा विलुलितान्विध्वस्तानणिमादीनपि न इच्छामि अतो निजभृत्यानां स्वपार्षदानां पार्श्वं समीपमेव मां प्रापय ॥ २४ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

संसारचक्रं भक्त्या जनितश्रीहरिप्रसादं विना दुस्तरं, प्रसादश्चानिगृहीतमनसां दुःसाध्यो मनोमयत्वात्संसारचक्रस्यातः स एव सम्पाद्य इत्याशयेन संसारस्वरूपं निरूपयति—मायेति । चित्प्रकृत्याभिमतमायाप्रकृतिरुदितगुणानुमतेनोद्भूतरजआदिगुणानुसारिणा कालेन प्रेरितेनादृष्टेन च सहकारिणा पुंसो जीवस्य कर्ममयं नानाविकारकोशमतएव बलीयो निगृहीतुमशक्यं छन्दोमयं सङ्कल्पविकल्पलक्षणेच्छात्मकं यन्मनः सृजति हे अज ! तन्मनोमूलं संसारचक्रं त्वदन्यस्त्वदनुग्रहरहितः पुरुषः कोतितरेत्, न कोपीत्यन्वयः । केवलात्परिकरोपेतस्य बलाधिक्यं स्यादित्यभिप्रायेणाह अजयेति, अजया प्रकृत्याऽर्पिताः कल्पिता भिन्नवर्तिना मनसा सह षोडशेन्द्रियाणि पञ्च प्राणा एवारा दलस्थानीया यस्य तत्तथा तत् ॥ २१ ॥

"मनएव मनुष्याणां कारणं बन्धमोक्षयोः" इति श्रुतेः सम्यक् नियुक्तं मुक्तिनिमित्तं च त्वदनुग्रहेण स्यादित्याशयेनाह–सत्वमिति यस्त्वं स्वधाम्ना नित्यं विजिता आत्मनो देहस्य गुणा जननादिलक्षणा धर्मा जीवस्य वा दुःखादिलक्षणा येन स तथा यश्च कलयति जानाति सर्वमिति कालो वशीकृता स्वसमवेता विसृज्यस्य सुरनरादिनानाविधस्य जगतो विसर्गशक्तिर्विविधसृष्टिर्यास्मिन्स तथा हे ईश्वर ! स त्वं षोडशारे संसारचक्रे लिङ्गशरीरे वा अजया विसृष्टमुत्पन्नमतएव दुःखेन निष्पीड्यमानं तत्परिहाराय शरणं प्रपन्नं मां ततोऽपकर्ष उत्तर विभो ! समुद्धरणसमर्थ ॥२२॥

त्वया कस्मात्स्वर्गाद्यैश्वर्यं नेष्यत इत्याशंक्य तस्य नश्वरत्वादित्याशयेनाह–दृष्टाइति । अखिलानां धिष्ण्यपानामिन्द्रादीनां विभवो हिरण्यलक्षणोर्थः अस्मत्पितुर्हिरण्यकशिपोः कुपितहासो दुर्हासस्तेन विजृंभितयोः स्फुरितलक्षणयोर्भ्रुवोर्विस्फूर्जितेन विकासविशेषेण लुलिता विनाशिताः स तु हिरण्यकशिपुरपि ते त्वया ॥ २३ ॥

यस्मात्क्षणभंगुरास्तस्मात् ज्ञ अनित्या इति जानन्नैन्द्रियं श्रोत्रादीन्द्रियभोगयोग्यमिन्द्रियस्य विद्यमानं वा आविरिञ्चात् विरिञ्चपर्यन्तं निजभृत्यानां मुक्तानां पार्श्वम् ॥ २४ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

सर्वस्यच तदधीनत्वं दर्शयंस्तदेकरक्ष्यत्वं स्थापयति–मायेति । मायातावत् कर्म मायादिरूप मनःसृजति तस्मात् तस्य दुर्बलत्वात् छन्दोमयादिरूपं संसारचक्रं त्वत्कृपामप्राप्तः कोऽतितरेन्न कोपीत्यर्थः ॥ २१ ॥

पुनस्तदेव विशेषतो दर्शयन् स्वाभीष्टं निवेदयति——स त्वमिति ॥ २२ ॥

पुनरपि स्वदुःखदर्शनया कृपयन् स्वाभीष्टं प्रार्थयते—दृष्टा इति द्वाभ्याम् । एकैव निजपरमाभीष्टरूपा तत्सेवकचरणानुगत्या साक्षाच्चरणारविन्दप्रेमसेवादैन्यभङ्ग्याच्छाद्य बहुविधं प्रार्थ्यत इति ज्ञेयं पूर्वत्र परत्र च ॥ २३ ॥ २४ ॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

ननु, यद्यहमेव सर्वरूपस्तर्हि संसारोप्यहमेव कुतो मद्रूपात् संसारादस्माद्विमोक्तुमिच्छसीत्यतआह द्वाभ्यां । माया त्वदीयबहिरङ्गा शक्तिर्मनोमहदाद्यात्मकं लिङ्गदेहं जीवस्योपाधि सृजति कर्माणि लौकिकवैदिकव्यापारास्तन्मयं बलीयो दुर्जयं पुंसस्त्वदंशस्य अनुमतेन ईक्षणरूपेण चोदिताः क्षोभिता गुणाः यस्याः सा छन्दोमयं वासनामयं "छन्दः पद्येभिलाषेच" इत्यमरः यदेव चक्रं खलु संसारचक्रं भवेत् कीदृशम् अजया अविद्यया अर्पितं वस्तुतो निःसङ्गेभ्योऽपि जीवेभ्यो बलात् समर्पितं च षोडष अरा विकारा यस्मिंस्तच्च तत् कोऽतितरेत् त्वदन्यः त्वत्तः पृथक्भूतः त्वामभजन्नित्यर्थः । त्वदनन्यभक्तस्तु तरेदेवेत्यर्थः ॥ २१ ॥

अतो मायायास्त्वच्छक्तित्वात्तन्मयं संसारचक्रं यद्यपि त्वद्रूपं तदपि त्वं स्वरूपशक्त्या तस्मात् पृथग्भूतोऽत एवाहमपि

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

तस्माद्विमोक्तुमिच्छामि मां स्वचरणान्तिकं नयेत्याह—स त्वमिति। यन्माया हि गुणमय जीवोपाधिं सृजति स त्वं स्वधाम्ना स्वरूपशक्त्या विजिता आत्मगुणा बुद्धिगुणा येन सः यो गुणान् क्षोभयति स कालोऽपि त्वम् अत एव वशीकृता विसृज्या मायाकार्यभूता उपाधयस्तेषु विसर्गो निक्षेपः शक्तिरविद्या च येन स अत इक्षुदण्डवन्निष्पीड्यमानं प्रपन्न जनमुपकर्ष समीपं नय ॥ २२ ॥

न च त्वां विनाऽन्यं कमप्यैश्वर्यवन्तं पश्यामि यमहं प्रपद्ये यो मां संसारादुद्धरिष्यतीत्याह–दृष्टा इति । दिविस्थानामखिललोकपालानामायुरादयो दृष्टाः श्रियो धनसम्पदः विभव ऐश्वर्यं ये धिष्ण्यपाः अस्मत्पितुः कोपहासविकृतभ्रूभङ्गमात्रेणैव विध्वस्ताः स च त्वया निरस्तः इत्यसाधारणप्रभावादपि त्वमेव परमेश्वर इति जानामीति भावः ॥ २३ ॥

एवञ्चेत् मत्तः परमेश्वरतः किमत आह—तस्मादिति । यस्मान्मत्पिता तादृशैश्वर्यसम्पत्तिमानपि निरस्तस्तस्मादहं आशिषो भोगान् ज्ञस्तत्परिपाक विद्वान् ऐन्द्रियम् इन्द्रियैर्भोग्यं आविरिञ्च्यात् ब्रह्मणो भोग्यमप्यभिव्याप्य किमपि नेच्छामि ते कालरूपेण विलुलितान् विध्वस्तान् अणिमादीनपि निजभृत्यपार्श्वमिति तदेव सर्वोत्तमं जानामीति भावः ॥ २४ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

एवंभूतस्य सर्वात्मनः पुंसः "पुरुष एवेदं सर्वम्" इत्यादिश्रुतिप्रसिद्धस्य श्रीभगवतस्तत्र माया प्रकृत्याख्या शक्तिः संसारचक्रं सृष्टिसंहारप्रवाहम् सृजति पुंसो भवत एवानुमतेन शक्तिभूतेन कालेन चोदिता सृष्ट्यर्थविस्ताराय संसारार्थसंकोचाय च प्रेरिताः गुणाः यस्याः सा यद्यस्मिन् अजया नित्यरूपया भवच्छक्त्या तयैव मायया आर्पिताः एकादशेन्द्रियाणि पञ्च तन्मात्राणि चेति षोडश आराः अवयवा अस्मिन् बलीयः दृढतरं जीवबन्धनं मनस्तत्प्रधानं लिङ्गशरीरं भवति कथंभूतं कर्ममयं मायामोहितजीवकर्मफलभूतम् छन्दोमयं मायामोहितजीवाभिलाषजन्यं च "छन्दः पद्येऽभिलाषे च" इति कोशात् हे अज! तत्संसारचक्रं त्वदन्यः अंशस्य स्वरूपेण भिन्नत्वेपि अंश्यभिन्नस्थितिप्रवृत्त्याद्यभावात् य आत्मानं त्वदन्तर्गतं जानाति सत्वदनन्यः यस्तु "एष परमांशः" तत्त्वमसि "ममैवांशो जीवलोके जीवभूतः सनातनः" "क्षेत्रज्ञं चापि मां विद्धि" "अंशो नानाव्यपदेशादन्यथाचापि दाशकितवादित्वमधीयत एके" इति श्रुतिस्मृतिसूत्रोक्तरीत्यात्मनो भवदंशभूतस्य भवदन्यत्वं न जानाति स त्वदन्यः जीवब्रह्मणोऽत्यन्ततो पवेति भ्रान्तिमोहितः कोऽनितरेत् न कोपीत्यर्थः त्वदनन्यस्तु तरेदेवेति भावः ॥ २१ ॥

हे ईश्वर ! सर्वात्मा सर्वशक्तिस्त्वं चक्रे संसारचक्रे तत्रापि षोडशारे लिङ्गदेहे अजया मायाख्यया भवच्छक्त्या विसृष्टं निष्पीड्यमानं च मां प्रपन्नं त्वां शरणं गतं हे विभो ! उपकर्ष संसारचक्रात् निस्सारय यतस्त्वं बहुबन्धनयोः जीवमाययोः स्वामीत्याह, वशीकृते विसृज्य विसर्गशक्ती विसृज्यते देवमनुष्यादियोनिषु पात्यते माययाभिभूयते इति विसृज्यो जीवः विसर्गो देवमनुष्यादिजीवयोनिजननं शक्तिर्यस्याः सा माया एवभूते जीवमाये येन सः "प्रधानक्षेत्रज्ञपतिः" इति श्रुतेः कथम्भूतः कालः स्वशक्तिभूतो यः कालस्तस्यापि क्षोभको नियन्तृभूतः काल इत्यर्थः "ज्ञः कालकाल." इति श्रुतेः ननु, अन्ये अन्यान् ब्रह्मरुद्रादीनपीश्वरान्मन्यन्ते ते एव भवतापि कुतः संसारचक्रान्निर्गमनार्थं न प्रार्थ्यन्ते इत्यत्राह हि निश्चितं स्वधाम्ना स्वामाधारेण स्वरूपेण नित्यं सर्वदा विजिताः स्ववशे कृताः आत्मानः सर्वे ब्रह्मादयो जीवाः गुणास्तत्तद्गुणाश्च येन सः एष सर्वेश्वरः "एष सर्वाधिपतिः" इति श्रुते ॥ २२ ॥

ननु, संसारचक्रेऽपि भोगाः सन्ति तान् भुंक्ष्व किं मोक्षेणेत्यत आह—दृष्टा इति त्रिभिः । हे विभो ! यानयं बुभुक्षुजनः इच्छति ते दिवि अखिलधिष्ण्यपानां आयुः श्रियः सम्पदः विभवः उद्भवः एते सर्वे मया दृष्टाः येऽस्मत्पितुः कुपितहासाभ्यां कोपहासाभ्यां विजृम्भितेन विकृतेन भ्रूविस्फूर्जितेन लुलिता निरस्ताः स तु ते त्वया निरस्तो हतः ॥ २३ ॥

तस्माद्धेतोः "ज्ञाज्ञौ द्वावजावीशानीशौ" इति श्रुतिप्रसिद्धः अज्ञोऽल्पज्ञो जीवोऽहं भवदीयदास अभूः तनुभृतामाशिषो भोगान् आयुरादिक ऐन्द्रियैर्भोग्यं आविरिञ्च्यात् किमपि नेच्छामि ते त्वया कालात्मनोरुविक्रमेण लुलितान् विध्वस्तानणिमादिपदार्थानपि नेच्छामि अतो मां निजभृत्यानां पार्श्वमुपनय ॥ २४ ॥

---

### भाषा टीका ।

पुरुष की अनुमति से काल करके क्षुभित हुए गुण जिसके ऐसी माया कर्म प्रधान दुर्जन मनको सृजती है, हे अज ! अजा ( अविद्या ) ने अर्पित किये सोलह विकार रूप आरा जिसके ऐसे ससार चक्र वाले वेद मय मनको आपको बिना भजन किये.कौन तरसक्ता है ॥ २१ ॥

हे ईश्वर ! सो आप मुझे आपना ज्ञान देकर इस षोडश आरे वाले चक्र मे माया से पडा हुआ निष्पीड्यमान अर्थात् ऊख के तर पिर रहा जो मैं तिसको हे विभो ! हे समर्थ ! आप खेंचलो ॥ क्योंकि आपने इस माया के गुणों को अपने तेज ( चैतन्यशक्तिरूप ) से जीता है और आप काल रूप अर्थात् माया के प्रेरक हो और कार्य कारण शक्ति को आप ने वश में किया है ॥ २२ ॥

हे विभो ! मैंने स्वर्गसे आदि लेकर अनेक लोकपालों के आयु श्री और वैभव देख लिये, जिनके लिये यह मनुष्य सदा इच्छा करता रहता है. उनके वैभव कैसे हैं कि मेरे पिता के कोप युक्त हास से विकराल भृकुटी के भंग मात्र से नष्ट

कुत्राशिषः श्रुतिसुखा मृगतृष्णिरूपाः क्वेदं कलेवरमशेषरुजां विरोहः ।
निर्विद्यते न तु जनो यदपीति विद्वान्कामानलं मधुलवैः शमयन्दुरापैः ॥ २५ ॥
क्वाहं रजःप्रभव ईश ! तमोऽधिकेऽस्मिन् जातः सुरेतरकुले क्व तवानुकम्पा ।
न ब्रह्मणो न तु भवस्य न वै रमाया यन्मेऽर्पितः शिरसि पद्मकरः प्रसादः ॥ २६ ॥
नैषा परावरमतिर्भवतो ननु स्याज्जन्तोर्यथात्मसुहृदो जगतस्तथाऽपि ।
संसेवया सुरतरोरिव ते प्रसादः सेवाऽनुरूपमुदयो न परावरत्वम् ॥ २७ ॥
एवं जनं निपतितं प्रभवाहिकूपे कामाभिकाममनु यः प्रपतन्प्रसङ्गात् ।
कृत्वाऽऽत्मसात्सुरर्षिणा भगवन्गृहीतः सोऽहं कथं नु विसृजे तव भृत्यसेवाम् ॥ २८ ॥

भाषाटीका ।

होगये उस मेरे पिता को तौ आपने सहज ही निरस्त कर-दिया ॥ २३ ॥

इसी कारण से मैं आप का अज्ञ दास ब्रह्मादिक पर्यन्त के वैभव आयु लक्ष्मी इन्द्रिय सुख इत्यादिकों की इच्छा नहीं करता हूं, क्योंकि ? ये सब तौ काल स्वरूप आपके महान् पराक्रम से नष्ट प्राय है तस्मात् आप केवल मुझको अपने दासों के समीप में पहुंचा दीजिये ॥ २४ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

किञ्च वर्तमानकालेऽपि न भोगार्हा इत्याह--कुत्रेति । श्रुतिः श्रवणं तदेव सुखं यासु ताः मृगतृष्णिकावन्मिथ्याभूताश्चाशिषः क्व अशेषाणां रुजां रोगाणां विरोह उद्भवस्थानं क्वेदं कलेवरम्. एवं चेत्सर्वोऽपि जनः किं न विरज्यते ? तत्राऽह—यदपि यद्यपि इति एवं विद्वानयं जनस्तथापि न निर्विद्यते विरक्तो न भवति कुतः काम एवानलस्तं मधुतुल्यैः सुखलवैर्दुःसाध्यैरपि शमयन्, कामाग्निशमनव्यग्रस्य निर्वेदावकाशो नास्तीत्यर्थः । यद्वा, अचिन्त्यमिदं त्वन्मायाचेष्टितमिति भावः ॥ २५ ॥

तर्हि त्वं कथं निर्विण्णोऽसि अनर्हेऽपि मयि प्रवृत्तया त्वत्कृपयैवेत्याशयेनाह--क्वेति । रजसैव प्रभवो जन्म यस्य सः सप्तम्यन्तं वा कुलविशेषणं तमोऽधिकं यस्मिंस्तस्मिन्नसुराणां कुले जातोऽहं क, क्व च तवानुकम्पा, तामेवाह ब्रह्मादीनां शिरसि यो नैवार्पितः स पद्मवत्सकलसन्तापहरः करः प्रसादः पुरुषार्थरूपो मे शिरस्यर्पित इति यत् यद्वयाऽनुकम्पयेति वा ॥ २६ ॥

न च त्वयीदमतिचित्रमित्याह--नैषेति । एते ब्रह्मादय उत्तमाः अयमसुरो नीच इत्येषा परावरमतिर्जन्तोः प्राकृतस्य यथा, तथा भवतो नैव स्यात् अत्र हेतुः जगत आत्मनः सुहृदश्च तर्हि सर्वत्र मत्प्रसाद एवंरूपश्च किं न स्यात्तत्राह संसेवया तव प्रसादो भवति तत्र च सेवानुरूपं तत्तादिच्छानुसारेण धर्मादीनामुदयो भवति एवं सत्यपि वैषम्याभावे दृष्टान्तः सुरतरुर्यथा सेवकस्यैव सङ्कल्पानुसारेण फलं ददाति न च विषमस्तद्वत् न परावरत्वमत्र कारणमिति शेषः ॥ २७ ॥

एतच्च त्वद्भृत्यकृपया मया प्राप्तमिति त्वद्भृत्यपार्श्वमेव मां नयेत्याशयेनाह--एवमिति । यथा त्वया अनुकम्पितोऽस्म्येवं नारदेनात्मसात्कृत्वा पूर्वमनुगृहीतः सोऽहं कथन्नु त्वद्भृत्यसेवां विसृजामि कथम्भूतोऽनुगृहीतोऽस्मि प्रभव एवाहियुक्तः कूपस्तस्मिन्कामानभितः कामयमानं जनं निपतितमनुतत्प्रसङ्गात्प्रपतन्योऽहम् तदेवं त्वद्भृत्यस्य नारदस्यानुग्रहेण त्वयात्यन्तमनुकम्पितोऽस्म्यतएव च मम परमोऽनुग्रहो न पुनरिदमतितुच्छं मत्प्राणरक्षणादि ॥ २८ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

किञ्च श्रुतिः श्रवणं तदेव सुखं यासु ताः अत एव मृगतृष्णिरूपाः मरीचिकावदवस्थिताः आशिषः कुत्र पुरुषार्थाभासा आशिषः केत्यर्थः । अशेषाणां रुजां रोगाणां विरोहः उद्भवस्थानं क्वेदं कलेवरं दुर्घटमेतदिति भावः । एवं चेत्सर्वोऽपि जनः किमिति संसारान्न निर्विद्यते तत्राह-निर्विद्यत इति । यद्वैषयिकं सुखम् इतीत्थं मृगतृष्णिकातुल्यं विद्वान् जानन्नपि न निर्विद्यते विद्वानपीत्यपिशब्देनाविदुषो नितरां निर्वेदाभावः सूचितः विदुषोऽप्यनिर्वेदे हेतुं वदन् विद्वांसं विशिनष्टि—दुरापैर्दुःखेनापि लब्धुमशक्यैर्मधुलवैर्वैषयिकसुखलेशैः काम एवानलस्तमुपशमयन्विषयासक्तस्सन् विद्वानपि न निर्विद्यत इत्यर्थः । विषयासक्तस्य निर्वेदस्यावकाशोनास्ति इति भावः ॥ २५ ॥

एवं तत्प्राप्तये तदनुग्रहं संप्रार्थ्य स्वशिरसि दुर्लभेन तत्करपल्लवनिधानेनात्मनः कृतार्थतामाविष्करोति—क्वेति । हे ईश ! तमोधिके तमःप्रचुरे रजःप्रभवे रजस उत्पत्तिस्थाने रजस्तमःकार्यकामक्रोधलोभादिमोहप्रचुरे सुरेतरकुले, असुरकुले जातोऽहं क्व क्व च तवानुकंपा दुर्घटमेतदित्यर्थः । किं तदित्यत्राह ब्रह्मादीनां शिरसि यो नैवार्पितस्तेषामपि दुर्लभ इति भावः । सः प्रसादः

### श्रीमद्वीरराघवाचार्य्यकृतभागवतचन्द्रचन्द्रिका ।

प्रसादसूचकः पद्ममिव तापहरः करः मम शिरस्यर्पित इति यदेतत् दुर्घटमिति भावः । अतोहमलभ्यलाभेन कृतार्थोऽस्मीति तात्पर्य्यम् ॥ २६ ॥

नैतावना तव वैषम्यादि दोषप्रसङ्ग इत्याह—नैषेति । यथा या जन्तोः प्राकृतस्य परावरमतिरुत्कृष्टापकृष्टबुद्धिर्विषमाबुद्धिरिति यावत् सैषा बुद्धिर्भवतो नैव स्यात् ननु तदभावे हेतुं वदंस्तं विशिनष्टि, जगत आत्मसुहृदः आत्मनोऽन्तरात्मनः सुहृदो हितैषिणश्च आत्मन इत्यनेन जगतः शरीरत्वमवगम्यते नहि कस्मिंश्चिच्छरीरे आत्मनः प्रीतिरन्यस्मिन्नप्रीतिरिति भावः । सर्वस्यापि जगतः स्वाभाविकसुहृद इति वार्थः । तर्हि सर्वेष्वेकरूपो मत्प्रसादः किमस्यात्तत्राह—यद्यप्येवंभूतस्त्वं तथापि वैषम्यरहितस्यापि तव संसेवया प्रसादो भवति तत्र सेवानुरूपं तत्तदपेक्षानुसारेण धर्मादिपुरुषार्थानामुदयो भवत्यपेक्षानुरूपफलदत्वे दृष्टान्तः सुरतरोरिवेति. यथा सुरतरोः कल्पद्रुमस्य तत्तत्सेवकापेक्षानुसारेण फलप्रदत्वं न च तावता तस्य वैषम्यं तद्वन्न परावरत्वं सर्वेष्वेकरूपप्रसादाभावे परावरत्वं वैषम्यं न कारणमित्यर्थः ॥ २७ ॥

एवमात्मनस्तत्प्रसादेन कृतार्थतामाविष्कृत्याथ न केवलमधुनैव त्वत्प्रसादविषयोऽहं जातः किन्तु यदा मातृगर्भस्थं मामनुजिघृक्षता त्वया सर्वांदितेन सुरर्षिणानुगृहीतस्तदैव त्वदनुग्रहविषयोऽभवम् अतो जन्मन आरभ्य त्वयानुगृहीतोऽहं त्वद्भृत्यपार्श्वं न विसृज इत्याह—एवमिति । हे भगवन् ! यः सुरर्षिणा नारदेनात्मसात्कृत्वा आत्माधीनंकृत्वा "तदधीनवचने च" इति सातिप्रत्ययः पूर्वं विषयपरवशत्वेन तदधीनं मां स्वाधीनं कृत्वेत्यर्थः । यद्वा,"अभिविधौ सम्पदा च"इति सातिः अभिविधिश्च किञ्चिदन्यथात्वं पूर्वं भगवत्प्रातिकूल्येन स्थितं मां किञ्चित्त्वदनुकूलं कृत्वेत्यर्थः । गृहीतस्तत्त्वत्रयोपदेशेनानुगृहीतः सोऽहं इदानीं तव भृत्यसेवां दासानुदास्यं कथं नु विसृजे न कथं चिदपित्यक्ष्यामीत्यर्थः कथम्भूतोऽनुगृहीतोऽस्मि प्रभवः संसार एवाहिकूपः सर्प्पेर्युक्तः कूपस्तस्मिन्कामाभिकामं काम्यन्त इति कामाः विषयाः शब्दादयस्तान् कामयमानं जनं निपतितमन्वनुसृत्य तत्सङ्गात्तस्य तत्र निपतितजनस्य यः प्रकृष्टः सङ्गस्तस्माद्धेतोः प्रपतन्नहं विषयासक्तचित्तजनसङ्गात्प्रभवाहिकूपे पतन्नहमित्यर्थः ॥ २८ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

इतोपि संसारसुखं हेयमित्याह—कुत्रेति । श्रुतिं कर्णौ सुखयन्तीति श्रुतिसुखा मृगतृष्णारूपा ऊष्मोदकसदृशाः अशेषाणां रुजां रोगाणां विशेषेण रोहो यस्मात्तत्तथा दुरापैर्मधुलवैरुदबिन्दुकल्पैः सुखलेशैः कामाग्निं शमयन् शान्तिं कर्तुमिच्छन् यदपि पर्यायेण कलेवरं विषयसुखं चेत्युभयं नश्वरं विद्वानयं जनः इहोभयस्मिन्नपि ननु निर्विद्यते निर्वेदं नैव प्राप्नोतीत्यन्वयः ॥ २५ ॥

हरेर्भक्तवात्सल्यं प्रकटयन् प्रह्लादस्तत्त्वज्ञानविधुर इवायोग्यजनमोहायाह—क्वाहमिति । हे ईश्वर ! तमोगुणप्रचुरे रजोगुणोत्पत्तिहेतौ अस्मिन् सुरेतरकुले असुरकुले जातोऽहं क अकारणानुग्रहलक्षणा तवानुकम्पा क मिथो विरुद्धस्वभावत्वात् किञ्चोद्यमत्रेति तत्राह न ब्रह्मण इति निरन्तरसेवा मे दूरत्वेनेतरस्मादधिकोदगोऽपीदानीं रमादीनां शिरसि नार्पितो मम शिरसि तव पद्मकरः पद्मोदरप्रभावत्पाणिनिधानलक्षणः प्रसादोऽर्पित इति यत्तस्माच्चित्रं तव चरितमित्यर्थः । "श्रीर्ब्रह्म ब्राह्मीवींद्राहिचिक्रं तत्स्त्रीपुरुहूताः तदन्ये च क्रमात्सर्वे सदा मुक्तौ सृतावपि । हरिभक्तौ च तज्ज्ञाने सुखेन नियमेन तु । परतः स्वतः कर्मतो वा न कथं चित्तदन्यथा" इति वचनादुक्त एवार्थ इति ॥ २६ ॥

सेवाधिक्यमेव फलाधिक्ये कारणं न त्वाभिजात्यादिकमित्यभिप्रेत्याह—नैषेति । यथा जन्तोर्या परावरमतिस्तथैषा भवतो न स्यात्तु कुत आत्मसुहृदः "तदेतत्प्रेय." इति श्रुतेः लोके यद्यप्याभिजात्यादिकं परावरत्वे निमित्तं तथापि लोकविलक्षणमहिमत्वात् भवतः प्रसादः जगतः संसेवया सेवानुगुणः फलाधिक्योदयः स्यात् "यावत्सेवा परे तत्त्वे तावत्सुखविशेषता" इतिस्मृतेः परावरत्वं च सेवानिमित्तं "शुचीनां श्रीमतां गेहे योगभ्रष्टोभिजायते" इतिवचनात् ॥ २७ ॥

नन्वेवं सेवानुरूपफलोदये शास्त्रीये सिद्धे त्वं किङ्करोषीति तत्राह—एवमिति । फलोदयस्य सेवानुविधायित्वात् सोऽहं तव भृत्यसेवां कथं नु विसृजे मम हितरूपत्वादित्यतस्त्वदत्यागे कारणमाह । जनमिति । प्रभवाहिकूपे जन्माख्यसर्पविषकलिलसंसारगर्ते पतितं कामाः विषयास्तानभिकामयत इति कामाभिकामस्तं जनमनु तस्य जनस्य प्रकर्षेण सङ्गः जन्मलक्षणस्तस्मात्प्रपतन् आत्मसात्कृत्वात्मीयेष्वेक इति बुद्धिं कृत्वा सुरर्षिणा गृहीतोनुगृहीतोऽयः सोहमिति यस्मात्तस्मादिति शेषः ॥ २८ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

पुनः स्वस्यातिदैन्यं दर्शयितुं सामान्यतो जीवानां दैन्यं दर्शयति—कुत्रेति । मधुरूपकं तेनाग्नेः प्रत्युत वृद्धेः ॥ २५ ॥

अथ स्वस्यापि दैन्यं दर्शयन् तत्कृपया निरुपाधित्वं प्राबल्यञ्च दर्शयति—क्वाहमिति । नच ब्रह्मण इति तदानींतन वृत्तान्तापेक्षया ॥ २६ ॥

यत्तु भवान् भक्ताननुगृह्णाति तच्च यद्यपि चित्रं तथापि दृष्टान्तसद्भावात् नातिचित्रं मय्यनुग्रहस्तु तदभावादतीव चित्रमिव पूर्वार्थमेवोत्कर्षयितुमाह—नैषेति ॥ २७ ॥

अथैतादृश्याः कृपायाः कारणं स्मरन्नपि तदेवाभीष्टं प्रार्थयते एवमिति । एवं त्वत्कृपायोग्यं यथास्यात्तथा अनुगृहीतो यः सोऽहं इष्टभगवद्भृत्यकृपातिशयत्वात् कथं विसृजे त्यक्तुं शक्नोमि नैवेत्यर्थः ॥ २८ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

तर्हि किमिति भोगैश्वर्य्यं सर्व एव लोको वांछतीति चेत्सर्वोऽप्यनभिज्ञ एवेत्याह—कुत्रेति । मृगतृष्णिरूपाः मृगतृष्णा यथा दृष्टिसुखरूपास्तथैवाशिषो राज्याद्या अपि श्रुतिसुखमात्र्यः स्पर्द्धाऽसूया रागद्वेषापायचिन्तादिभिर्वस्तुतः सुखलेशस्याप्यभावात् अस्तु वा सुखं तस्य भोगाऽसामर्थ्यात् महदेव दुःखमित्याह कदमिति. यद्यतो विद्वानपि जन इति विचार्य्यापि न निर्विद्यते ततो मूर्खः किमुनेति भावः कीदृशः कामरूपमनलं मधुलवैः सुखलेशैः शमयन्निति नहि मधुलवैरनलः शाम्यति प्रत्युत दीप्यते एव दुरापैरिति ते च सुखलेशा दुःखैरेवोपार्ज्यते ॥ २५ ॥

किञ्च यद्यपि मादृशो नास्तिकोऽप्यधमस्तदपि त्वं मां सर्वोत्तममकरोस्तत्ते कृपामाहात्म्यं किं वर्णयामीत्याह—काहमिति । यत् यः पद्मकरः मम शिरस्यर्पितः सन् ब्रह्मण इत्यादि ॥ २६ ॥

न च त्वं स्वकृपया उत्तमाधमौ गणयसीत्याह—नैषेति । एते ब्रह्मादय उत्तमाः अयमसुरो नीच इत्येषपरावरमतिर्जितोः प्राकृतस्य यथा तथा भवतो नैव स्यात् तत्र हेतुः जगत आत्मनः सुहृदश्च तर्हि सर्वत्रैव सम एव मत्प्रसादोऽस्तु तत्राह संसेवया यथा सुरतरुराश्रितस्यैव सङ्कल्पानुसारेण फलं ददद‌पि न विषमस्तथैव त्वमपि तत्रापि सेवानुरूपम् उदयः सेवातारतम्येनैव कृपाया उदयतारतम्यं नतु परावरत्वं उत्कृष्टनिकृष्टत्वमेव कृपोदयतारतम्यस्य कारणमित्यर्थः ॥ २७ ॥

ननु, मत्संसेवया त्वयि मम सम्यक् प्रसाद इत्यत्र सुरतरुदृष्टान्तेन अवैषम्यं पर्य्यवहार्षीः किंतु संसेवया क कारण तद्ब्रूहीति तत्राह एवम् उत्कृष्टनिकृष्टाभावेन जनं सर्वमेव कामानभिकामयमानं अन्धवत्‌ एवाऽहियुक्तः कूपस्तत्र निपतितम् अनु तत् प्रसङ्गात् प्रयत्नेनैवाहं सुरर्षिणा श्रीनारदेन आत्मसात्कृत्वा अयं जीवो मदीयो भवत्विति माय स्वस्वत्वमारोप्य गृहीतः बलात् स्वपाणिनैव गृहीत्वा ततः सकाशात् स्वांतिकं नीत्वा तन्मंत्रगजमुपदिश्य स्वसेवकीकृत इति भावः सोऽहं संसारकूपपतित एव संनम्यहं प्रह्लादस्त्वद्भक्तो यत्प्रसादादभवं तस्य तव भृत्यस्य श्रीगुरुतोःसेवां कथं विसृजामि त्यजामि यथा कर्मज्ञानियोगिनः फलप्राप्तौ साधनं त्यजन्ति, तथेत्यर्थः । भक्तिमार्गे हि साधनस्यापि फलीभावात् भगवन्तं प्राप्तानामपि ध्रुवादीनां साधुसङ्गादिसाधनस्पृहा यथा भक्तिं मुहुः प्रवहतां त्वयि मे प्रसङ्गो भूयादनन्तमहतामचलाशयानामिति ध्यायंश्चराम्यानुगृहाण यथास्मृतिः स्यादिति चातएव विचार्य्यैव मया प्रार्थितं नय मां निजभृत्यपार्श्वमिति ॥ २८ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

ननु, स्वत एव भवान् कुतो न गच्छति अत्राह—कुत्रात मृगतृष्णिरूपाः मृगतृट् मृगतृष्णा यथा जलाभासरूपा तथा पुरुषार्थाभासाः श्रुतिः श्रवणं तदेव सुखं यासु ताः आशिषः कुत्र अशेषरुजां विरोहो जन्मस्थानमिदं सकलेवरं च क इत्थेवं यद्यपि जनो विद्वान् तथापि दुरापैर्दुःखलभ्यैर्मधुलवैर्विषयसुखलेशैर्दुष्पूरं कामानलं शमयन् आस्ते नतु विरज्यते त्वद्भृत्यपार्श्वे न गच्छतीति भावः ॥ २५ ॥

आत्मनो लब्धभगवत्प्रसादत्वमाह—का हमिति । रजसः प्रभवो यस्मिन् तस्मिन् तमोधिकं यत्र तस्मिन् सुरेतरकुले जातोऽहं क क च तवानुकम्पा यत् यया प्रसादः प्रसादद्योतकः पद्मकरः पद्मवत् सुखदः करः मे शिरसि अर्पितः नतु ब्रह्मणो न भवस्य नतु रमायाः शिरसि आर्पितः यद्वा एवंविधः पद्मकरो ब्रह्मणो न भवस्य रमाया अपि नेति योज्यम् ॥ २६ ॥

ननु, अहो अयं परः उत्तमः अयमपरो ऽधमः एषा मतिर्जितोः प्राकृतस्य जीवस्य यथा भवति तथा जगतः आत्मनः परमसखस्वरूपस्य सुखदः हितकारिणो भवतो नैव स्यात् तथापि सुरतरोः कल्पद्रुमात् सेवानुरूपमुदयो वांछितार्थलाभः इव संसेवया ते प्रसादो भवति एवमयं पर उत्कृष्टः मम प्रसादार्हः न त्ववर इति तव प्रसादे परावरत्वं कारणं न भवति ॥ २७ ॥

प्रकर्षेण भवन्तीति प्रभवाः कामक्रोधलोभादयस्ते एवाहयस्तद्युक्ते कूपे कूपवद्दुस्तरे संसारे नितरां पतितं कामान् विषयानभिकामयतीति कामाभिकामस्तं जनं कलत्रापत्यादिरूपमनुअनुसृत्य प्रसङ्गात् तस्मिन् जने प्रकृष्टो यः सङ्गस्तस्मात्प्रपतन् योऽहं देवर्षिणाऽऽत्मसात्कृत्वा गृहीतो अनुकम्पितः सोऽहं तव भृत्यसेवां कथं विसृजे अतस्तव भृत्यपार्श्वे मां नयेति भावः ॥ २८ ॥

---

भाषा टीका ।

श्रवण रमणीय और मृग तृष्णा रूप आशिष ( ऐहिक पारत्र्य सुख सामग्रीं ) तो कहां, और अनंत रोगों के जन्मने की भूमि यह कलेवर कहां। ऐसा यह पुरुष जानता है तो भी वैराग्य को नहीं प्राप्त होता, क्योंकि ? बड़े दुष्प्राप्य काम सुख के बिंदुओं से काम रूप अग्नि के शमन करने में व्यग्र होरहा है ॥ २५ ॥

हे ईश ! कहां रजोगुण से उत्पन्न होने वाले तमोगुण प्रधान इस असुर कुल में, मैं उत्पन्न हुआ, और आपकी निर्हेतुक कृपा कहां, क्योंकि यह प्रसाद तो ब्रह्मा को भी नहीं मिला शिवको भी नहीं प्राप्त हुआ, और निश्चय करके रमा ( श्रीलक्ष्मीजी ) को भी नहीं मिला जोकि ? मेरे असुर बालक के मस्तक पर आपने अपना करकमल अर्पित किया ॥ २६ ॥

ये ब्रह्मादिक उत्कृष्ट हैं और यह असुर नीच है इस प्रकार की पर अवर मति जगत के आत्मा और सुहृद ऐसे आप की कभी नहीं होती, तथापि कल्प वृक्ष के तरह आपकी प्रसन्नता है, जैसे कल्प वृक्ष समीप जाने से और इच्छा करने से फल देता है, ऐसे ही आप भी शरण आने से इच्छा के अनुकूल फल देते हैं ॥ २७ ॥

मत्प्राणरक्षणमनन्त ! पितुर्वधश्च मन्ये स्वभृत्यऋषिवाक्यमृतं विधातुम् ।
खड्गं प्रगृह्य यदवोचदसद्विधित्सुस्त्वामीश्वरो मदपरोऽवतु कं हरामि ॥ २९ ॥
एकस्त्वमेव जगदेतदमुष्य यत्त्वमाद्यन्तयोःपृथगवस्यसि मध्यतश्च ।
सृष्ट्वा गुणव्यतिकरं निजमाययेदं नानेव तैरवसितस्तदनुप्रविष्टः ॥ ३० ॥
त्वं वा इदं सदसदीश ! भवांस्ततोऽन्यो माया यदात्मपरबुद्धिरियं ह्यपार्था ।
यद्यस्य जन्म निधनं स्थितिरीक्षणं च तद्वै तदेव वसुकालवदष्टितर्वोः ॥ ३१ ॥
न्यस्येदमात्मनि जगद्विलयाम्बुमध्ये शेषेऽऽत्मना निजसुखानुभवो निरीहः ।
योगेन मीलितदृगात्मनिपीतनिद्रस्तुर्ये स्थितो न तु तमो न गुणांश्च युङ्क्षे ॥ ३२ ॥

भाषा टीका ।

संसार रूप सर्प विशिष्ट कूप में पडे हुए जनों के प्रसङ्ग से मैं भी उसी कूप में गिरता हुआ वर्त्तमान था, श्रीनारदजी ने अपना करके मुझे ग्रहण किया हे भगवान् ! सो मैं आप के दासों की सेवा को कैसा भूल सकता हूं ॥ २८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

न चेदं त्वया मदनुग्रहार्थं कृतं किन्त्वन्यार्थमित्याह—भो अनन्त ! यदेतन्मत्प्राणरक्षणं मां हन्तुमुद्यतस्य मत्पितुर्वधश्च तदुभयं स्वभृत्यऋषिवाक्यमृतं सत्यं विधातुमित्यहं मन्ये कुतः यद्यस्मादसद्युक्तं विधित्सुः खड्गं प्रगृह्यावोचत् किं मदपरो मद्व्यतिरिक्तश्चेदीश्वरोऽस्ति तर्हि त्वामिदानीमवतु तव कं शिरोऽहं हरामीति पाठान्तरेऽप्ययमेवार्थः । यद्यदाऽवोचत्तदा मत्प्राणरक्षणमिति वाऽन्वयः एतच्च सत्यं विधातुं निजभृत्यभाषितमित्यत्रैव बहुधा व्याख्यातम् ॥ २९ ॥

न चेदं पक्षपातेन रक्षणं दैत्यहननञ्च त्वयि स्वाभाविकं किन्तु मायागुणोपाधिकं सर्वात्मके त्वयि स्वतस्तदयोगादित्याह एकइति । एतच्च जगत् त्वमेवैकः यद्यतः अमुष्यादावन्ते च पृथगवस्यसि विरामं करोषि सन्मात्रतया कारणत्वेनावधित्वेन च वर्तसइत्यर्थः । अतोमध्यतश्च त्वमेव कुतस्तर्हि भेदप्रतीतिरतत्राह, निजमायया गुणपरिणामात्मकमिदं जगत्सृष्ट्वा तदनुप्रविष्टस्त्वन्तैर्गुणैर्हेतुभूतैर्नानेव रक्षकइव हन्तेव चावसितः प्रतीतः तदुक्तं स्कन्धोपक्रमे "निर्गुणोऽपि ह्यजोऽव्यक्तोभगवान्प्रकृतेः परः । स्वमायागुणमाविश्य बाध्यबाधकतां गतः ॥" इत्यादिना ॥ ३० ॥

ननु, यद्येतज्जगदहमेव तर्हि जगतो वैषम्येण मम वैषम्यमपि किं न स्यादित्यतआह । त्वं वै त्वमेवेदं सदसत्कार्यकारणात्मकं जगत्तु त्वत्तः पृथक् भवांस्तु ततोऽन्यः आद्यन्तयोः पृथगवस्थानात् यद्यस्मादेवमतोऽयमात्मीयोऽयं परइति या बुद्धिः साऽपार्था मायैव कार्यकारणाभेदं दृष्टान्तेन साधयति—यद्यतो यस्य जन्म ईक्षणं प्रकाशश्च यस्मिन्निधनञ्च स्थितिश्च तद्वै तदेव अष्टिर्बीजं कारणं तरुः कार्यं तयोर्यथा वसुकालमात्रत्वम् अयमर्थः कालशब्देन नीलत्वाद्यसाधारणगुणयोगात्पृथ्वी वसुशब्देन वस्तुमात्रं भूतसूक्ष्मं तत्र तरोर्यथा पृथिवीमयबीजमात्रत्वं तस्य च यथा भूतसूक्ष्ममात्रत्वमेवं सर्वमपि कार्यकारणात्मकं जगत्परमकारणात्मकमेवेति तथाच पारमर्षं सूत्रं "तदनन्यत्वमारम्भणशब्दादिभ्यः" इति. श्रुतिश्च "वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्"इति ॥ ३१ ॥

तत्र तावदन्ते पृथगवस्थानं दर्शयति–न्यस्येदमिति । इदं जगदात्मन्येवात्मनि निक्षिप्य स्वसुखमेवानुभवन्निष्क्रियः सन्प्रलयोदकमध्ये शयनं करोषि, तर्हि किं जीवस्येव ममापि तमोवृत्तिरूपा निद्राऽस्ति ? नहि नहि. योग एव तु बहिर्वृत्त्यभावसाम्यान्निद्रोच्यत इत्याह–योगेन मीलिते दृशौ येन आत्मना स्वरूपप्रकाशेन निपीता निद्रा येन यतस्तुर्येऽवस्थात्रयातीते स्वरूपे स्थितस्त्वं नतु सुप्तइवाऽऽत्मना तमोयुङ्क्षे योजयसि न पश्यसि न जाग्रत्स्वप्नयोरिव गुणान्विषयांश्चेत्यर्थः ॥ ३२ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

यो नारदमुखेन मयि कृतः स एव परमोऽनुग्रहः न चेदमतितुच्छं मत्प्राणरक्षादिरूपं न चेदं त्वया मदनुग्रहार्थं कृतं किन्त्वन्यार्थमित्याह–मत्प्राणरक्षणमिति । हे अनन्त ! यदेतन्मत्प्राणरक्षणं मत्पितुर्वधश्चेति तदुभयं स्वभृत्य ऋषिवाक्यम् ऋतं सत्यं यथा भवति तथा विधातुं कर्तुं कृतमित्यहं मन्ये स्वभृत्यऋषिवाक्यमित्यत्र निजभृत्यभाषितम् इत्यत्रेवार्थो द्रष्टव्यः किञ्च यदस्मत्पिता विधित्सुर्मद्वधमिति शेषः । मां जिघांसुरित्यर्थः । खड्गं प्रगृह्य मत्तोऽन्यश्चेदीश्वरस्त्वद्रक्षकोऽस्ति तर्हि स त्वामिदानीमवतु रक्षतु तव कं शिरोहरामीति यदवोचदुक्तवान् तदीश्वरान्तरराहित्य वचः असदसत्यं च विधातुं मत्प्राणरक्षादिकं त्वया कृतमित्यहं मन्ये इत्यर्थः ॥ २९ ॥

एवं कोपोपशमनप्रार्थनानुकूलोक्तं स्वाभिप्रेतं तदास्ययोगं

श्रीमद्वीरराघवाचार्य्यकृतभागवतचन्द्रचन्द्रिका ।

संप्रार्थ्य इदानीं कृत्स्नचिदचिदात्मकजगदन्तरात्मानं तच्छरीरकं तदुत्पत्तिस्थितिलयकारणं तदनन्यं स्तौति-एक इति । एतत्परिदृश्यमानं जगच्चिदचिदात्मकं कृत्स्नं जगदेकस्त्वमेव, एतदित्यनेन विभक्तनामरूपं चिदचिदात्मकं जगन्निर्दिश्य तस्य त्वंशब्दवाच्यब्रह्मणोऽनन्यत्वं साध्यते "तदनन्यत्वमारम्भणशब्दादिभ्यः" इत्यत्र यथैक इत्यनेनाविभक्तनामरूपचिदचिच्छरीरकत्वं कारणावस्थावस्थितमुच्यते यथै कमेवाद्वितीया मित्यत्रैक शब्देन तत्र हि वक्ष्यमाणनामरूपविभागनिबन्धनबहुत्व प्रति सम्बन्धैक्यं एकदचिच्छरीकत्वं कारणावस्थावस्थितमुच्यते, यथा "एकमेवाद्वितीयाम्" इत्यत्रैकशब्देन तत्रहि वक्ष्यमाणनामरूपविभागनिबन्धनबहुत्वप्रतिसम्बन्धैक्यम् ह्येकशब्दार्थः । अत्राप्येतच्छब्देन प्रसिद्धपरामर्शिना यदभिप्रेतं नामरूपविभागप्रयुक्तं बहुत्वं तत्प्रतिसम्बध्येकत्वं तद्विभागाभावनिबन्धनमुच्यते, तदयमर्थः । यथा कारणावस्थायां घटशरावादिनामरूपविभागरहित एकत्वेनावस्थितो मृत्पिण्डः पश्चाद्घटादिरूपेण परिणमन्नामरूपविभागविभक्तस्तेभ्योऽनन्य एव, एवं त्वमपि कारणावस्थायां नामरूपविभागानर्हचिदचिच्छरीरकतयैकत्वेनावस्थितो देवादिनामरूपविभागार्हस्थूलचिदचिच्छरीरकत्वेन परिणमंस्ततोऽभिन्न इति कार्यकारणयोरनन्यद्रव्यत्वात्त्वत्कार्यभूतजगदनन्यस्त्वं कार्यत्वकारणत्वयोरसतोर्द्रव्यस्यावस्था विशेषरूपत्वेन सर्वावस्थास्वनुस्यूतं द्रव्यमेकमेवेति भावः । तदेव सहेतुकमुपपादयति, यत् यस्मात्त्वममुष्य जगत आद्यन्तयोरवस्थयोः पृथगवस्थस्यात्मानमिति-शेषः । पृथक् मध्यावस्थारहितमात्मानम् अवस्यसि पर्यवसितं करोषि जगत आदौ सृष्टेः पूर्वं तस्यान्ते प्रलये चात्मानं पर्यवशेषयसि ततो मध्यतः मध्यावस्थायाञ्च त्वमेव, तथाहि कटकमकुटादिकारणतया कटकाद्यवस्थातः पूर्वमवस्थितः स्वर्णपिण्डः कटकाद्यवस्थायाःपर्यवशेषितो मध्यतः कटकाद्यवस्थायास्तदवस्थावतोद्रव्यान्नभिद्यते तद्वदिति भावः एवं जगतो भिन्नत्वोपपादनेन जगदुपादानत्वमुक्तम् अथ तन्निमित्तकारणत्वं तदनुपादानत्वप्रयुक्तविकारित्वादिदोषपरिहारं ———— सूचयन् कार्यावस्थायां नानात्वेनावस्थानञ्चाह सृष्ट्वेति गुणव्यतिकरं सत्त्वादिप्राकृतगुणपरिणामात्मकम् इदं जगत् निजमायया आत्मीयसङ्कल्परूपज्ञानेन सृष्ट्वा तत्सृष्टं जगदनुप्रविष्टोऽन्तरात्मतयानुप्रविष्टः "तत्सृष्ट्वा तदेवा[illegible]प्राविशत्" इति श्रुत्युक्तरीत्या तावत्स्वानुप्रवेशेनैव सृष्टं जगच्चिदचिदात्मकं पुनः संरक्षणोपयुक्तसङ्कल्परूपज्ञानद्वारान्तरात्मतयानुप्रविष्टस्तैः स्वशरीरभूतैश्चिदचिदात्मकैः देवादिकैः शरीरैर्नानेव भिन्न इवावसितः प्रतीतः अतो देवमनुष्यादिभेदभिन्नं जगत्त्वमेवेति भावः । सृष्ट्वानुप्रविष्ट इति सृष्ट्यनुप्रवेशयोरेककर्तृकत्वकथनेन जगन्निमित्तकारणत्वं तच्च निष्कृष्टविशेष्यांशभूतस्वरूपस्यैवेति च फलितं येनाकारेणानुप्रवेशस्तेनैवाकारेण स्रष्टृत्वमपि, एतच्च विशिष्टाकारेणानुप्रवेशस्तेनैवाकारेण स्रष्टृत्वं हि क्त्वाप्रत्ययस्वारस्यादवगम्यते अनुप्रवेशश्च विशेष्याकारेणेति तेनैवाकारेण स्रष्टृत्वमपि एवं च विशिष्टाकारेणोपादानत्वं विशेष्याकारेण तु निमित्तकारणत्वमित्युक्तं भवति, अत एव चेदं सृष्ट्वेतीदं शब्दनिर्दिष्टं सृष्टिप्रति कर्मभूतं जगत् चिदचिदुभयात्मकमेव साक्षादुत्पत्त्याद्यवस्थाश्रयमित्यवगम्यते, अनुप्रविष्ट इत्यनेन तत्तदवस्थानिर्वोढृतयान्तरात्मतयानुप्रवेशकथनेन स्वविशेषणीभूतचिदचिद्द्वारा तद्गतोत्पत्त्याद्यवस्थाश्रयत्वमवगम्यते अनुप्रविष्ट इत्यनेनात्मत्वकथनेन साक्षाद्देहगतविकारास्पर्शश्चोक्तः अत एवोपादानत्वप्रयुक्तविकारित्वादिदोषश्च परिहृतः जगतः शरीरत्वकथनेन शरीरशब्दबुद्धीनामाकृत्य अधिकरणन्यायेनात्मपर्यन्तत्वलाभोऽपि तस्य जगदनन्यत्वे हेतुरित्युक्तं भवति ॥ ३० ॥

ननु, त्वत्पित्रादयश्चतुर्मुखादिकमेवेश्वरं मन्यमानाः कृत्स्नं जगत्तत्कारणकं तदनन्यमभ्यधुत त्वन्तु मदेककारणकं मदभिन्नं च जगन्मन्यसे तदेतद्विरुद्धमित्याशङ्कायां देहात्मबुद्धिवज्जीवेश्वरबुद्धेर्भ्रान्तिरूपतां वदन्नुक्तमेव कार्यकारणयोरनन्यत्वं दृष्टान्तमुखेन दर्शयति–त्वमिति । हे ईश ! सदसदात्मकं चिदचिदात्मकम् इदं जगत्त्वमेव चिदचिदात्मकजगत्कारणभूतस्तदनन्यश्चेश्वरस्त्वमेव, नान्य ईश्वर इत्यर्थः । ईशेति सम्बोधनस्वारस्यादिदं जगत्कारणभूतस्तदनन्यश्चेत्त्वमेवेत्यर्थः । आत्मनि जीवात्मनि परबुद्धिर्या ईश्वरबुद्धिः सा अपार्था अर्थशून्या मायाऽविद्याकार्यभूता अज्ञानमूला भ्रान्तिरूपेति यावत् देहात्मवादवज्जीवेश्वरवादोऽपि भ्रममूल एवेत्यर्थः । यद्यत एवं ततस्तस्माज्जीवादन्य एव भवानीश्वरः कर्मवश्यस्य जीवस्यैवंविधजगन्निमित्तोपादानकारणत्वासंभवान्मुक्तस्य जगद्व्यापारवर्जनाच्चेति भावः । अतश्चिदचिदात्मकं जगत्त्वमेव, ननु, मत्कारणकत्वमात्रेण कथं मदनन्यं जगत्तत्राह—यदिति । जन्म उत्पत्तिर्निधनं नाशः स्थितिः पालनम् ईक्षणं प्रकाशः जन्मादिशब्दैस्तद्धेतुर्लक्ष्यते यस्योत्पत्तिस्थितिविनाशप्रकाशानां यद्धेतुभूतं तद्वैतदेव तत्कार्यं स्वोपादानकारणादव्यतिरिक्तम्, यद्वा, यद्यतः यस्य जन्मादयस्तत्तदेव तत्र दृष्टान्तद्वयमाह—वसुकालवदृष्टितर्वोरिति । वसु शब्दो वसुमतीं पृथ्वीं लक्षयति यथा भानु भानुमन्तं लक्षयति प्रतिपादयति तद्वत् उष्टिः प्रभातक[illegible] तरुर्वृक्षस्तयोर्जन्मादिहेतुभूतकालवद्वसुमतीवदिति व्युत्क्रमेणा[illegible]न्वयः । यथा प्रभातादिकालावयवाः स्वोपादानभूतमहाकालादनतिरिक्ताः यथा च वृक्षः पृथिव्या अनतिरिक्तस्तद्वदित्यर्थः । खलु कालवदुष्टितर्वोरिति पाठे, तस्यैवं योजना ईश्वरो जगदुपादानं निमित्तं चातस्तद्द्वन्द्वे दृष्टान्तः कालः प्रभातादिकालावयवानां कालत्वमुपादानं वृक्षादीनां तु निमित्तं यथा प्रभातादिः कालाव्यतिरिक्तः यथा वृक्षश्चाभूदस्ति भविष्यतीति कालाविनाभूतः प्रतीयते तद्वन्निमित्तोपादानभूतादीश्वराज्जगदव्यतिरिक्तमित्यर्थः । अष्टितर्वोरित्यपि पाठः तत्रैवं व्याचक्षते अष्टिर्बीजं कारणं तरुः कार्यं तयोर्यथा वसुकालात्मकत्वम्, अयमर्थः कालशब्देन नीलत्वादि साधारणगुणयोगात् पृथ्वी लक्ष्यते वसुशब्देन वस्तुमात्रं भूतसूक्ष्मं तत्र तरोर्यथा पृथ्वीमयबीजपरिणामात्मकत्वेन ततो भेदः तस्य च यथाभूतसूक्ष्मात्मकत्वम् एवं सर्वस्य जगतः परमकारणभूतपरमात्मात्मकत्वमेवेति ॥ ३१ ॥

एवं जगतस्तदनन्यत्वं तदेकेश्वरत्वं तदेककारणत्वं चोक्तम् अथ चतुर्मुखस्य तत्कार्यत्वं तदाहितसृष्ट्युपयुक्त ज्ञानशक्त्यादिमत्त्वञ्च विवक्षुस्तावद्यदुक्तं विश्वस्याद्यन्तयोः पृथगवस्थानं

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तत्रान्ते पृथगवस्थितिप्रकारमाह—न्यस्येति । इदं परिदृश्यमानं चिदचिदात्मकं जगत् आत्मनि न्यस्योपसंहृत्य शेषे शयानोसि शेषात्मनेति पाठे, शेषस्य कारणात्मनावशिष्टस्य चिदचिद्द्रव्य स्यान्तरात्मना स्वरूपेणात्मनि स्वस्मिन्नेनावस्थित इत्यन्वयः। कथंभूतः स्वतो निरुपाधिकं निजसुखस्यानुभवो यस्यातएव निरीहः निष्क्रियः योगेन निजसुखानुभवरूपयोगेन मीलितदृक् निवृत्तसंकल्परूपज्ञानः मीलितदृशेति पाठे मीलितदृशा योगेन निवृत्तसङ्कल्परूपज्ञानावस्थानयोगेन विशिष्ट इति शेषः । मीलितदृगित्यनेन प्रसक्तं निद्राप्रसङ्गं निराह, वीतनिद्र इति आधारान्तरनैरपेक्ष्यमाह आत्मनि स्थितः इति कथम्भूते तुर्ये जाग्रदाद्यवस्थात्रयातीते प्रथमान्तपाठोपि दृश्यते तत्राप्युक्त एवार्थं । तमः सूक्ष्मावस्था प्रकृतिः "अक्षरं तमसि लीयते" "आसीदिदं तमोभूतम्" इति श्रौतस्मार्त्तप्रयोगात् तमस्तद्गुणान् सत्त्वादींश्च न युङ्क्षे न सम्बध्नासि प्रकृतितद्गुणास्पृष्टो भवसीत्यर्थः ॥ ३२ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

स्वभृत्यभाषितमृतं कर्तुं स्तम्भादभूदिति यत्सूचितं पूर्वत्र तदिदानीं स्पष्टमाह—मत्प्राणेति । मत्प्राणरक्षणं मम पितुर्वध च स्वभृत्यनारदऋषिवाक्यं च असङ्किधित्सु. खड्गं प्रगृह्य हिरण्यकशिपुर्यदि मदपर ईश्वरोऽस्ति स त्वामवतु तस्य तव कं शिरो हरामीति यदवोचत् तच्च ऋत विधातुं अयमवतारइति मन्य इत्यन्वयः ॥ २९ ॥

भ्रूविजृंभणाविभ्रंशितेन्द्राद्यैश्वर्यस्य मत्पितुर्हननमस्माकं चित्रं चेदपि न तव चित्रं तस्य जगत्येकत्वात् जगच्च त्वत्सृष्टं त्वत्प्रविष्टं त्वदधीनसत्ताकमतः स्तम्भादाविर्भावोऽपि युक्त इत्याह—एक इति । अयमर्थः एतज्जगत्त्वमेव नान्यः कुतः एकः प्रधानः प्राधान्यं च कुतोऽवगम्यत इति तत्राह—अमुष्य इति । अमुष्य जगत आद्यन्तयोरुत्पत्तेः पूर्वं विनाशादूर्ध्वं च मध्यतः स्थितिकाले च त्वमेवावस्यसि सन्निति निर्णीतोऽसि शाश्वत इति यस्मात् ननु जगतस्त्वद्विकारत्वेन तद्विवर्तत्वेन वा त्वदवसानं युक्तमत्राह—पृथगिति । भिन्नत्वेनेत्यर्थः। पुनः सृष्टिकाले निजमायया स्वसामर्थ्येन स्वाधीनया चिदचित्प्रकृत्या चेदं गुणव्यतिकरं जगत्सृष्ट्वा तदनुप्रविष्टस्त्वं तैर्भिन्नैः पदार्थैर्निर्मितैः नानेव भिन्न इव नतु भिन्न इत्यवसितोऽसीति यत्तस्माच्च । प्रतिदृशमिव नैकधार्कमेकमिति स्वोक्तेः "इन्द्रो मायाभिः पुरुरूप ईयत" इति श्रुतेश्च "नेह नानास्ति किञ्चन" इत्यादि श्रुत्या नानात्वस्य निषिद्धत्वात् नानेवानुविधावतीत्यादिनानर्थहेतुत्वाच्च भेददृष्टेः ॥ ३० ॥

हरेर्जगदन्यत्वस्य स्पष्टमप्रतीतेः तदर्थं पूर्वपद्योक्तं विशदयति त्वं वाइति । हे ईश ! इदं सदसच्चराचरलक्षणं जगत्रयं सत्ताया अपि त्वदधीनत्वादयं व्यपदेशो न तादात्म्यात् तत्त्वतस्तदात्मत्वं किं न स्यादिति तत्राह—भवानिति । ततो जगतो भवानन्योऽपि स्वतोभिन्नोपीत्यर्थः मत्स्वातन्त्र्यवज्जगत्स्वातन्त्र्यमपि किंन स्यादुभयोर्भेदोऽपि दृढतरः स्यादिति तत्राह—मायेति । आत्मेत्युपलक्षणम आत्मानात्मलक्षणस्य प्रपञ्चस्य परत्वबुद्धिः स्वातन्त्र्यज्ञानं यत्सेयं मायाऽविद्यमाना कुतइति तत्राह—अपार्थेति । श्रीनारायणस्य तव स्वातन्त्र्यज्ञानं यथा पुरुषार्थसाधनं तथान्यस्य स्वातन्त्र्यज्ञानमनर्थहेतुरिति उभयं हिशब्देनासिद्धमिति दर्शयति स्वतन्त्रजीवात्मकत्वात्स्वतन्त्रं जगदित्यतोवाह—मायेति आत्मनो जीवस्य परत्वबुद्धिः जीवस्य परमैक्ये परमात्मना यज्जन्मादिकं क्रियते तदनेनापि कर्तव्यम् । तदनुभवविरुद्धमतो यद्यदधीनं जन्मादिकं तद्वस्तु तदेवेति प्राधान्यविवक्षया अभेदव्यपदेशापपत्तेरिति प्रकारान्तरेण तद्धानिमाह—यद्यस्येति । अयमर्थः । यस्य जगतो जन्मादिकं यद्यदधीनं तज्जगत्तदेवेत्युच्यते इति यस्तस्माज्जगत्त्वमेवेत्यर्थः । अस्मिन्नर्थे दृष्टान्तमाह—स्वलित्विति । उष्टितयोः वृक्षदाहवृक्षयोः कालवत् कालाधीनत्ववत् एतदेवाचार्यः सम्यग्विवृतं यथा वृक्षश्च वृक्षदाहकश्च दैवकालाधीनत्वाद्दैवं कालश्चेत्युच्यते एवञ्च त्वदधीनत्वात्सर्वस्य सर्वमित्युच्यते स्वतस्तद्भिन्नोऽपीति । "उष दाहे" इति धातु अत्र खलु शब्दः साक्षादैक्यनिषेधे वर्तते "अलंखल्वोः प्रतिषेधयोः प्राचां क्त्वा" इति सूत्रात् अलमैक्यकथानिष्टत्वमित्यर्थः । "यएष आदित्ये पुरुषो दृश्यते सोहमस्मि सएवाहमस्मि यएषचन्द्रमसि पुरुषोदृश्यते सोहस्मि" इत्यादि श्रुतौ स्वस्यान्यस्य परमात्मत्वोपदेशः प्रतीयते अतः कथं भेदः कथ्यते इत्यतोवाह—मायेति । आत्माहं च परोन्यश्च परश्च परमेश्वरएवेति याबुद्धिरियमपार्था मायाभ्रान्तिस्तस्मात्तदधीनत्वात्तदन्तर्यामित्वेन स्थितत्वाच्च सोहमस्मीत्युच्यते नतु तद्रूपत्वादेतदव्याचार्यैरुक्तम् अहं चान्यश्च परमेश्वरएवेत्यपार्थाभ्रान्तिस्तदधीनत्वात्तइत्युच्यते न स्वरूपत्वादित्यर्थः । इति ईक्षणं ज्ञानम् ॥ ३१ ॥

सत्त्वमाद्यन्तयोरित्यत्रांते श्रीहरिरवशिष्यते इत्युक्तं तं प्रकारं दर्शयति—न्यस्येति । विलयांबुमध्ये इदं जगदात्मनि स्वोदरे न्यस्य शेषासनोभूत्वा तुर्यस्थितोजाग्रदाद्यवस्थाप्रवृत्तिशून्यमूर्तौ स्थितस्त्वं तमः प्रकृतिं गुणान्सत्त्वादींश्चात्मनि युंक्षे नतु "प्रकृतिं पुरुषं चैव प्रविश्य पुरुषोत्तमः क्षोभयामास" इत्यादौ प्रतीतप्ररस्ताज्ञानः ॥ ३२ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

मत्प्राणरक्षणादिकञ्च तथैवेत्याह—मत्प्राणेति ॥ २९ ॥

अथ रसान्तरेण तत्क्रोधशमनं तथाहि कथमयं वराकस्तव क्रोधविषयो यत एक इत्यादि तथापि पूर्वेण सङ्गतिर्दृश्यते तथाहि—तदेवं भक्तानुग्रहसम्बन्धेन साक्षादेवावतीर्यास्मद्विधरक्षणं करोषीति स्थिते सर्वमन्तर्यामितया सामान्यतो विश्वरक्षणं तच्च त्वयैव क्रियमाणमपि न साक्षात् किन्त्वन्यद्वारैवेति दर्शयंस्तदनुसङ्गतः सृष्ट्यादि लीलामाह—एक इति॥ ३० ॥

तत्र तस्य वैलक्षण्यं स्थापयति त्वम्वा इति॥ ३१ ॥

प्रसङ्गेन महाभक्तविरञ्च्याद्यनुग्रहतः सृष्ट्यादिमयीं साक्षाल्लीलामेव विशेषतो वर्णयति—न्यस्येदमिति सप्तभिः। आत्मनि

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

गर्भोदकशायिरूपे जगत् त्रैलोक्यं योगमाह तुर्ये स्वतुरीयतत्त्वे श्रीवासुदेवाख्ये स्थितः । तन्मात्रत्वेनात्मन्युररीकृत स्फूर्तिः इत्यर्थः ॥ ३२ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

अतस्तव भक्तवश्यत्वाद्भक्तकृपानुगामिन्येव लोकेषु तव कृपा दृष्टा नतु त्व स्वभक्तमनाश्रितान् कांश्चिदपि कृपयसीति नते क्वापि वैषम्यं मय्यपि तव स्वभक्तानुरोधेनैव सर्वं एवानुग्रह इत्याह–मदिति । स्वभृत्यः ऋषिर्नारदस्तस्य वाक्यं सत्यं कर्त्तुमित्यह मन्ये मन्मात्रा मदर्थं प्रार्थितेन श्रीनारदेन त्वत्पुत्रस्य विद्वेषकनाशाद्विना कल्याणं भविष्यतीति वरदानात् यदुक्तम् "ऋषिं पर्यचरत्तत्र भक्त्या परमयासती । अन्तर्वत्नी स्वगर्भस्य क्षेमायेच्छा प्रसूनये ऋषिः कारुणिकस्तस्याः प्रादादुभयमीश्वरः" इति यद्यस्मादस्मत् मद्विसनं विधित्सुः कं शिरो हरामीति तथाहि दिग्गजादिभ्यो यथा मद्रक्षणं तथा तद्धस्तान्नसम्भवतीति तद्वधश्च त्वया कृत इति एवं भगवतः सर्वत्र साम्येपि भक्तवश्यत्वं विशिष्यत इति प्रह्लादेन ज्ञापितम् ॥ २९ ॥

एवं गुणातीतानां मादृशभक्तानां गुणातीतेन त्वया भक्तवत्सलेन पालन गुणातीतमेव गुणमयस्य जगतस्तु सृष्टिपालनसंहारा उदासीनेनैव त्वया गुणमया एवेति वदंस्तस्य जगतस्तत्कारणकत्वात् त्वन्मयत्वमेवेत्याह–एक इति । यद्यस्मादमुष्य आदौ अन्ते मध्येच अमुष्मात् पृथग्भूतोऽपि त्वमेव अवस्यासि अवसीयसे विवेकिभिः प्रतीयसे इत्यर्थः कुतस्तर्हि तथा न प्रतीतिस्तत्राह निजमायया गुणपरिणामात्मकमिदं जगत्सृष्ट्वेति निर्गुणस्य तव शक्तेः स्वरूपशक्तित्वाभावादितिभावः । तदनुप्रविष्टस्त्वं नैर्गुण्यैर्हेतुभूतैर्नानेव हंतेवपालक इव उत्पादक इव अवसितः वस्तुतस्तु तमोगुण एव हन्ता सत्त्वगुणएव पालकः रजो गुण एव स्रष्टा तेष्वौदासीन्येन त्वत्प्रवेशादेव त्वं हन्तेत्यादि व्यपदेशः ॥ ३० ॥

ननु, जगतोमायिकत्वेपि मायाया मच्छक्तित्वाज्जगतो वैषम्ये ममापिवैषम्य किं नस्यादित्यत आह त्वं वै इदं सदसत् कार्यकारणात्मक जगत्प्राधानिकत्वात् सत्यमेव न तु त्वत्तः पृथक् । ततोऽस्माज्जगतस्तु भवानन्यः पृथगेव आद्यन्तयोः पृथगवस्थानात् यद्यत्तु तस्मिन्नेव जगति आत्मा अयं ममात्मीयः परः अयं ममशत्रुरिति बुद्धिः सा माया अविद्या जीवस्याविद्या कल्पितैवेत्यर्थः । अपार्था सातु मिथ्याभूतैवेत्यर्थः । कार्यस्य कारणाभेदमपि साधयन् दृष्टान्तेन परमकारणस्य भगवतो वैषम्यमपि निराकरोति यद्यतः यस्य जन्मईक्षणञ्च प्रकाशश्च यस्मिन्निधनं स्थितिश्च तद्वैतदेव अष्टि बीजं कारणं तरुः कार्यं तयोर्वसुकालवत् वसुत्वकालत्वे यथेत्यर्थः वसुशब्देन वस्तुमात्रं भूतसूक्ष्ममुच्यते कालशब्देन नीलत्वासाधारणगुणयोगात् पृथ्वी कालशब्दोऽत्र नीलगुणवाची ततश्चकारणकार्यात्मकयोरष्टि तर्वोद्वयोरेव यथा पृथिवीत्व गन्धत्वञ्च तथैव कारणकार्यात्मकस्य जगतः प्रधानत्वं परमेश्वरत्वं च अयमर्थः यथा वसुमात्रत्वकालस्य कालमात्रमष्टेः अष्टिमात्रत्वं प्रधानस्य प्रधानमात्रत्वं महदादीनां महदादिमात्रत्वं देवतिर्य्यगादिमयं जगतः, एवं च तर्वादि सर्वकार्य्यकारणात्मक यथा भूतसूक्ष्ममेको गन्धएव तथा देवतिर्य्यगादिसर्वकार्यकारणात्मक एको भवानेव तथा च पारमर्षं सूत्र "तदनन्यत्वमारंभणशब्दादिभ्यः" इति. श्रुतिश्च "वाचारम्भणं विकारोनामधेयं मृत्तिके त्येव सत्यम्" इति तेन पार्थिवपदार्थानां काष्ठपाषाणादीनां वैषम्येपि तत्परमकारणस्य गन्धस्य यथा न वैषम्यं तथैव जगतो वैषम्येपि न भगवत इति ॥ ३१ ॥

आद्यन्तमध्यावस्थानेनोक्तं जगत्कारणत्वं प्रपञ्चयति—न्यस्येति पञ्चभि । इदं जगत् आत्मन्येव न्यस्य विलयानि विगतलयान्यनश्वराणि अंशूनि यस्य तस्य कारणार्णवस्य मध्ये शेषे स्वपिषि आत्मना आत्मस्वरूपशक्त्यैव निजसुखस्यानुभवो यस्य सः निरीह मायिकलीलामनिच्छुः तर्हि किं जीवस्येव ममापितमोरूपा निद्रास्ति नहि नहि बहिः वृत्त्यभावसाम्यान्निद्रोच्यते इत्याह योगेन मीलितदृशौ येन आत्मना स्वरूपप्रकाशेन निपीता निद्रा येन यतस्तुरीये अवस्थात्रयातिरिक्ते स्वरूपे स्थित एव नतु तमः सुषुप्तइव गुंक्षे जीववत् स्वीकरोषि नापि जाग्रत् स्वप्नयोरिव गुणान् विषयान् ॥ ३२ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

श्रीनारदेनोक्तमिन्द्रं प्रति अनन्तानुचर इति तदृषिवाक्यं स्वानुचरत्वसूचकेन मद्रक्षणेन सत्यं कृतमित्याह--मदिति । यत् यदा मम दयुक्तं पुत्रं वधं विधातु खड्गं प्रगृह्य मदपरः मद्यतिरिक्तश्चेदीश्वरोऽस्ति तर्हि त्वामिदानीमवतु तव कं शिरो हरामीत्यवोचत् मम पितेति शेषः तदा यत् मत्प्राणरक्षणं तदथ मत्पितुर्वधश्च तत् हे अनन्त ! स्वभृत्यो य ऋषिस्तस्य अनन्तानुचर इति वाक्यमृतं यथा भवति तथा विधातुमिति अहं मन्ये ॥ २९ ॥

एवं सर्वत्र समेनापि भगवता स्वभक्तपक्षपातित्वेनासुरं हत्वा मद्रक्षणं कृतमित्युक्तमथैवं सर्वहेतुत्वेन सर्वात्मनापि त्वया बहूनां ब्रह्मादीनां बहून् मधुकैटभादीन् हत्वा रक्षा कृता इत्येवं भगवन्तं स्तौति । एकस्त्वमित्यादिभिर्नवभिः । एतच्चिदचिदात्मकं जगत् त्वमेव "सर्वं खल्विदं ब्रह्म" इति श्रुतेः एकः सर्वकारणभूतः "स कारणं करणाधिपाधिपः" इति श्रुतेः कुत एतदहमस्मीत्यत आह अमुष्यकार्यभूतस्य यस्त्वम् आद्यन्तयोर्मध्यतो मध्ये च औषध्यादेर्भूमिरिव त्वमसि हेतुतया वर्त्तसे इत्यर्थः ननु तर्हि संसारित्वजडत्वादयो दोषाः मयि स्युरित्यत्राह पृथक् चासि चेतनाचेतनरूपात्स्वकार्यभूताज्जगतः स्वरूपतो भिन्न एवासि चिदचिदात्मकजगद्भिन्नोसीत्यर्थः तथाह भगवान्सूत्रकारः "उभयव्यपदेशात्त्वहिकुण्डलवत्" इति सूत्रार्थस्तु वेदान्तकौस्तुभे द्रष्टव्यः । यतः गुणव्यतिकरं स्वशक्तिगुणपरिणामरूपं स्वांशभूतजीवभोगार्थं अपरिणामस्वस्वरूपमेवेदं जगत् मायया वयुनेन सङ्कल्पेनेत्यर्थः ततः पृथक् स्वरूप एव सृष्ट्वा तत्सृष्टं जगदनुप्रविष्टः यैर्गुणैरावृतान् जीवानालक्ष्य निग्रहानुग्रहादिकं करोषि तैर्गुणैर्नानेव निग्रहादिकर्त्तेव

तस्यैव ते वपुरिदं निजकालशक्त्या सञ्चोदितप्रकृतिधर्मण आत्मगूढम् ।
अम्भस्यनन्तशयनाद्विरमत्समाधेर्नाभेरभूत्स्वकणिकावटवन्महाऽब्जम् ॥ ३३ ॥
तत्सम्भवः कविरतोऽन्यदपश्यमानस्त्वां बीजमात्मनि ततं स्वबहिर्विचिन्त्य ।
नाविन्ददब्दशतमप्सु निमज्जमानो जातेऽङ्कुरे कथमुहोपलभेत बीजम् ॥ ३४ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

अवसितः तमोगुणावृत्तेन जीवेन पापकर्मफलदत्वेन निग्रहकर्ता रजोगुणावृत्तेन ऐहिकपुण्यकर्मफलदत्वेनानुग्रहकर्ता सत्गुणावृत्तेन जीवेन पारलौकिकसुखदत्वेनानुग्रहकर्त्ता निश्चितः सन् इद-मवसि ॥ ३० ॥

इमं कार्यकारणयोर्जगद्ब्रह्मणो भेदाभेदसम्बन्धं दृष्टान्तेनोपपाद-यति, त्वमिति । यद्यतो यस्य जन्मोत्पत्तिः निधनं समाप्तिः स्थितिः पालनमीक्षणं दर्शनम् तद्भिन्नमपि तदेव तदभिन्नमेव वसुकालवत् वसुकालयोरिव वसुकालवत् एको वै शब्द इवार्थे तस्य अष्टितर्वो-रित्यन्वयः वसुशब्देन वसुधा गृह्यते तथा च वसुतः वसुधातः उत्पत्तिरौषध्यादेः तद्वसुधातो भिन्नमप्यभिन्नमेव कालतः समाप्ति-तृणादेस्तच्च ततो भिन्नत्वेप्यभिन्नम् अष्टितोऽन्नात्पालनं शरीरस्य तच्च ततो भिन्नत्वेऽप्यभिन्नम् ऋतुतो दर्शनं हरितादेस्तच्चापि ततो भिन्नम् एवं हे ईश ! यद्यपि भवान् स्वासाधारणरूपेण ततो जगतो ऽन्यो पि तथापि इदं चिदचिदात्मक सदसत्स्थूलसूक्ष्मरूप जगत् वै निश्चतं त्वमेव त्वत्तो भिन्नमप्यभिन्नमेव तथा च श्रुतिः "सर्वं ख-ल्विदं ब्रह्म तज्जलानिति" इति यत् या आत्मनि विश्वात्मनि त्वयि पर बुद्धिः मत्तः सर्वथान्योयमिति केवलभेदबुद्धिः सा माया दम्भरूपा अपार्था च "अन्यो सावन्योऽहमस्मि न स वेद यथा पशुः" इति श्रुतेः ॥ ३१ ॥

अथ भगवतः महाप्रलयान्ते परे वैकुण्ठे शयनं तदनन्तरं ब्रह्माण्डो-त्पादनं ब्रह्मोत्पादनं तद्रक्षणादिकं च चेष्टितं जीवहितायैवेति वर्ण-यति—यस्मेत्यादिना । निरीहः स्वकलोकक्रीडेच्छः अत एव निजसुख-स्याऽनुभवो यस्य सः त्मना आत्मना आत्मनि कारणरूपे कार्यरूपमिदं जगत् न्यस्य विलयानि विगतलयानि नित्यानि अप्राकृतानि अम्बूनि यस्मिन् तत्परमं धाम तन्मध्ये योगेन निजानन्दयोगेन निमीलितदृक् आकृतनिद्राप्रसङ्गं निवारयति आत्मनिपीतनिद्र इति आत्मना परा-नंदस्वरूपप्रकाशेन निपीता निद्रा येन सः शेषे शयनं करोषि तस्य लोकस्य प्रकृतितद्गुणवर्जितत्वमाह, तुर्ये प्रकृता ये लोकाः ऊर्द्ध्वाधो मध्यभेदात् त्रिविधाः तदपेक्षया चतुर्थे—

"ऊर्द्धं गच्छन्ति सत्त्वस्था मध्ये तिष्ठन्ति राजसाः ।
जघन्यगुणवृत्तिस्था अधो गच्छन्ति तामसाः" ॥

इत्येवं त्रिविधजीवागम्ये इत्यर्थः । तत्र स्थितः तमः प्रकृतिं तदीयान् गुणांश्च न युंक्षे न योजयसि तत्र प्रकृतितद्गुणतत्कार्यव्यवहारं नैव कुर्वत्यसीत्यर्थः ॥ ३२ ॥

भाषा टीका ।

हे अनंत ! आपने मेरे प्राणों की रक्षा और पिता को वध ये दोनों जो किये सो मैं जानता हूं कि अपने दास और ऋषि लोगों के वाक्य सत्य करने के वास्ते किये, जो मेरा पिता हाथ में खड्ग लेकर बोला कि मेरे से दूसरा यदि ईश्वर है तब तेरी रक्षा करे मैं तेरा मस्तक हरण करताहूं ॥ इतने पर आपने रक्षा करी ॥ २९ ॥

यह संपूर्ण जगत् एक आपही का स्वरूप है इस जगत् के आदि अंत में आपही विराम करते हैं अर्थात् वर्त्तमान रहते है अत एव मध्य में भी आपही हैं आप अपनी निज मायासे गुणों के परिणामात्मक इस जगत् को रचकर उसमें प्रविष्ट होकर नाना सरीके मालूम पडते हो ॥ ३० ॥

हे ईश ! यह कार्य कारणात्मक जगत् आपसे पृथक् नहा है आप तो जगत से भिन्न हो क्योंकि ? आदि तथा अंत में स्थूल चेतनाचेतन युत जगत नहीं रहता और आप तौ स्थित रहते हो, और यह जो बुद्धि है कि "यह मेरा और यह पराया, सो अपार्थ माया ही है जिस परमात्मा से इस जगत् का जन्म नाश स्थिति औ प्रकाश है उसी स्वरूप यह है, जैसे बीज और वृक्ष कार्य कारण मात्र अवस्था से भिन्न हैं ॥ जो जिससे आरब्ध होता है वह भी तत्स्वरूप ही है जैसे मृत्तिका से हुआ घट मृत स्वरूपही है ॥ ३१ ॥

प्रलय काल के जल मध्य में आप अपने में इस जगत् को लीन कर, निज सुख मात्र के अनुभव वाले निश्चेष्ट होकर सोते हैं उस समय में आप योग से निमीलित दृष्टि वाले होकर आत्मा में निपीन की निद्रा जिसने एसे चतुर्थ अवस्था में स्थित होकर तम और गुणों का योग नहीं करते हैं ॥ ३२ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

इदानीं कारणत्वेनाऽद्यावपि पृथगवस्थानं दर्शयन्मध्यतश्च त्वमे-वेत्येतत्प्रपञ्चयति चतुर्भिः । यस्त्वमम्भसि शेषे तस्यैव ते इदं जग-द्वपुः स्वरूपं नान्यस्य यतस्त्वं मध्यतोऽपि तस्य कथम्भूतस्य निजया कालशक्त्या सञ्चोदिताः प्रकृतेर्धर्माः सत्त्वादयो येन स्वरूपत्वे हेतुः अनन्तशयनाच्छेषपर्यङ्काद्विरमत्समाधिर्यस्य तस्य तव नाभेः सकाशात् एकार्णवोदके महाब्जं लोकपद्ममभूत् कथम्भूतं आत्मनि त्वय्येव गूढं सत् स्वकणिकातः सूक्ष्माद्वटबीजान्महावट इव ॥ ३३ ॥

स त्वात्मयोनिरतिविस्मित आस्थितोऽब्जं कालेन तीव्रतपसा परिशुद्धभावः ।
त्वामात्मनीश भुवि गन्धमिवातिसूक्ष्मं भूतेन्द्रियाशयमये विततं ददर्श ॥ ३५ ॥
एवं सहस्रवदनाङ्घ्रिशिरःकरोरुनासास्यकर्णनयनाभरणायुधाढ्यम् ।
मायामयं सदुपलक्षितसन्निवेशं दृष्ट्वा महापुरुषमाप मुदं विरिञ्चिः ॥ ३६ ॥
तस्मै भवान्हयशिर[1]स्तनुवं च बिभ्रद्वेदद्रुहावतिबलौ मधुकैटभाख्यौ ।
हत्वाऽनयच्छ्रुतिगणांस्तु रजस्तमश्च सत्त्वं तव प्रियतमां तनुमामनन्ति ॥ ३७ ॥
इत्थं नृतिर्यगृषिदेवझषावतारैर्लोकान्विभावयसि हंसि जगत्प्रतीपान् ।
धर्मं महापुरुष पासि युगानुवृत्तं छन्नः कलौ यदभवस्त्रियुगोऽथ स त्वम् ॥ ३८ ॥
नैतन्मनस्तव कथासु विकुण्ठनाथ ! सम्प्रीयते दुरितदुष्टमसाधु तीव्रम् ।
कामातुरं हर्षशोकभयैषणार्त्तं तस्मिन्कथं तव गतिं विमृशामि दीनः ॥ ३९ ॥
जिह्वैकतोऽच्युत ! विकर्षति मा वितृप्ता शिश्नोऽन्यतस्त्वगुदरं श्रवणं कुतश्चित् ।
घ्राणोऽन्यतश्चपलदृक्क च कर्मशक्तिर्बह्व्यः सपत्न्य इव गेहपतिं लुनन्ति ॥ ४० ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

नन्वेवं कारणत्वेनानुगतः सन्मध्यतश्च त्वमेव वर्तस इत्युक्तम् एतदेव शुद्धसत्त्वस्य ब्रह्मणोऽनुभवेन स्फुटयितुं तस्य प्राक्तनीमवस्थामाह—तस्मिन्नब्जे सम्भवो यस्य कविर्ब्रह्मा अतः पश्चादन्यदपश्यन् बीजमुपादानकारणभूतं त्वां स्वस्मिन्व्याप्तं सन्तमपि नाविन्दत् युक्तं चैतत् उह अहो अङ्कुरे जाते सति बीजं तदनुगतं कारणं पृथक्कथं नाम पुमान्पश्येत् ॥ ३४ ॥

भवदुपासनया तु स्वस्मिन्नेव दृष्टवानित्याह—सत्त्विति। परावृत्त्याऽब्जमास्थितः सन् तीव्रेण तपसा ध्यानेन अनेन सन्मात्ररूपेणोपादानतया दर्शनमुक्तम् ॥ ३५ ॥

ईश्वरत्वेन च दृष्ट्वा कृतार्थोऽभवदित्याह—एवमनेन प्रकारेण सहस्रमपरिमितानि यानि वदनादीनि तैराढ्यं समृद्धम् मायामयं मायाप्रधानं सता प्रपञ्चेनोपलक्षितः सन्निवेशः पादादिरचना यस्य ॥ ३६ ॥

तदा च भवांस्तस्यानुग्रहं कृतवानित्याह—तस्माइति। हयग्रीवमूर्तिं बिभ्रत्सन् रजस्तमोरूपौ मधुकैटभाख्यौ हत्वा तस्मै श्रुतिगणान्समर्पितवान् तत्र हेतुः सत्त्वमिति ॥ ३७ ॥

एकस्त्वमेवेत्यादिभिरष्टभिः श्लोकैर्यदुक्तं पक्षपातेन रक्षणं तद्विपक्षवधश्च सत्त्वोपाधिको ननु खलइति तदुपसंहरति—इत्थमिति। विभावयसि पालयसि हंसि घातयसि कलौ तु तन्न करोषि यतस्तदा त्वं छन्नोऽभवः अतस्त्रिष्वपि युगेष्वाविर्भावात्स एवंभूतस्त्वं त्रियुग इति प्रसिद्धः ॥ ३८ ॥

तदेवं भगवतस्तत्त्वं निरूप्य स्वस्य च तद्विचारायोग्यतां निवेदयन्प्रार्थयते—नैतदितित्रिभिः। असाधुवहिर्मुखम् तीव्रं दुर्धरम् हर्षशोकभयैरेषणात्रयेण चार्तं दुःखितमपि त्वत्कथासु न संप्रीयते तस्मिन्नेवम्भूते मनसि सति कथं तव तत्त्वं विचारयामि ॥ ३९ ॥

किञ्च जिह्वा अवितृप्ता सती भो अच्युत! मा मां यतो मधुरादिरसस्तत आकर्षति उदरं तु क्षुधासन्तप्तं सत्तद्य एव यत्किञ्चिदाहारमात्रंप्रति चपला दृक् चक्षु कर्मशक्तिः कर्मेन्द्रियाणि लुनन्ति त्रोटयन्ति ॥ ४० ॥

———

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

एवमुपसंहृतजगतः कारणतयावस्थितात्जगत उत्पत्तिप्रकारं मध्यतस्तदनन्यत्वप्रदर्शनायाह—तस्यैवेति। तस्योक्तविधमवस्थितस्य तव नाभेर्वपुस्त्वच्छरीरभूतं जगदाकारं महाब्जमभूदुद्भूतं कथंभूतस्य तव निजकालशक्त्या स्वांशभूतया कालाख्यया शक्त्या सञ्चोदिता क्षुभितगुणा प्रकृतिरेव धर्मः अपृथक्सिद्धविशेषणं यस्य तस्य अम्भसि अनन्तशयनादिति ल्यब्लोपे पञ्चमी शेषपर्यङ्कादुत्थाय विरमन्समाधिः जगद्व्यापारवैमुख्येनावस्थानरूपो यस्य सिसृक्षोरिति फलितोर्थः, एवंभूतस्य तव नाभेः त्वच्छरीरभूतं जगदात्मकमात्मनि त्वयि निगूढं सूक्ष्मावस्थापन्नं महाब्जं स्वकर्णिकात्स्वबीजाद्वटवदभूदित्यर्थः ॥ ३३ ॥

तत्संभवस्तन्महाब्जसंभवः कविर्ब्रह्मा अतः पश्चादन्यदपश्यमानः स्वात्मन्यन्तरात्मतया ततं व्याप्तं बीजं पद्मस्य कारणभूतं त्वां स्वस्माद्बहिस्तया अब्दशतं वर्षशतमप्सु निमज्जमानो विचिन्वन्नन्वेषयन्नाविन्दत नोपलब्धवान् अहो तथाहि. अङ्कुरे जाते बीजं कथमुपलभेत नोपलभेतैवेत्यर्थः। यथाऽङ्कुरे जाते सति ततः पृथक्स्थितं बीजं नोपलभते लोकस्तथा मत्कार्य-

(१) तनुतामिति पाठः वीर०।

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

भूतं जगदात्मकं पद्मं मदभिन्नमिति दर्शयितुं भवान्बहुधा विचिन्वतापि ब्रह्मणा नोपलब्धइति भावः ॥ ३४ ॥

ततो भगवदुपासनया स्वस्मिन्नेव दृष्टवानित्याह—सत्विति। स तु विचिन्वन्नात्मयोनिर्ब्रह्मा अतिविस्मितः अब्दशतपर्यन्तान्वेषणेनापि अनुपलम्भप्रयुक्तविस्मययुक्तः परावृत्त्याब्जमाश्रितस्सन् लीविश्य तपसा ध्यानेन परिशुद्धभावः परिशुद्धमनाः निरस्तत्वद्दर्शनविरोधिकर्मा हे ईश । त्वामात्मन्येव विततं व्याप्तं ददर्श कथंभूतं भुवि गन्धमिवातिसूक्ष्मं स्वात्मनः पृथग्विभागानर्हम् अति सूक्ष्मभूतेति समस्तपाठे भुवि गन्धमिवात्मनि विततं ददर्श भुवि गन्धमिवेत्यवस्थानमात्रे दृष्टान्तः अति सूक्ष्माणि विभागानर्हाणि कारणात्मतामापन्नानि भूतान्याकाशादीनि इन्द्रियाण्याशयोन्तःकरणञ्च तन्मयं तत्प्रचुरमेवभूतं तावद्ददर्श ॥ ३५ ॥

ततः सहस्रमपरिमितानि यानि वदनादीनि तैराढ्य समृद्धमतएव आयामयमाश्चर्यरूपं सदुपलक्षणसन्निवेशं सतासत्त्वेनानित्यत्वनोपलक्षणीयः सन्निवेशः वदनाद्यवयवसंस्थानं यस्य तं सता सूक्ष्मरूपेण सता प्रपञ्चेनोपलक्षितः सन्निवेशो वदनादिविन्यासो यस्य तमितिवा एवभूतं महापुरुषं दृष्टा विरिञ्चो ब्रह्मा मुदं हर्षमाप प्राप्तवान् ॥३६॥

तदा च तं भवाननुगृहीतवान् इत्याह—तस्मा इति। तस्मै तीव्रतपसा परिशुद्धभावयोक्तविधं त्वां दृष्टवते विरिञ्चाय भवान् हयशिरस्तनुतां हयग्रीवरूपं बिभ्रत्श्रुतिगणान्सृष्ट्युपायावेदकान् वेदगणान् आनीय समर्पितवान् किं कृत्वा आनयत् रजस्तमश्च रजस्तमोरूपौ वेदद्रुहौ वेदापहारिणावतिबलौ मधुकैटभाख्यातिबलावसुरौ हत्वा समर्पितवान् यतस्समर्पितवानत एव तव प्रियतमां तनुं हयशिरस्तनुं सत्त्व शुद्धसत्त्वात्मिकाम् आमनन्ति धर्मस्थापनायोपात्तां तनुं शुद्धसत्त्वमयीमामनंति जानन्ति अवतारयाथात्म्यविद इति शेषः ॥ ३७ ॥

एव जगतउत्पत्तिप्रकार उक्तः अथ रक्षाप्रकारमाह, इत्थमुचितकालेषु तैस्तैः स्वेच्छोपात्तैः शुद्धसत्त्वमयैः नृतिर्यगृषिदेवझषावतारैः रामकृष्णवराहपरशुरामोपेन्द्रमत्स्यावतारैः अवतारान्तराणामपीदमुपलक्षणं लोकान् विभावयसि पालयसि जगद्विरोधिनो रावणादीन्हंसि च हे महापुरुष! युगानुवृत्तं कृतादियुगेष्वनुवृत्तं धर्मं वर्णाश्रममर्यादादिरूपं जगत्प्रतीपनिरसनेन पासि पालयसि यतस्त्वं कलौ युगे छन्नोऽभवः आसी. अथ ततः त्रियुगशब्दप्रवृत्तिनिमित्ताश्रयोसि कृतत्रेताद्वापरेष्वेवावतारमुखेनाविर्भावात् त्रियुग इत्यभिधीयत इत्यर्थः ॥ ३८ ॥

एवमखिलजगदुदयविभवलयैककारणं तदन्तरात्मानं तच्छरीरकं संस्तुत्य यथावत्स्वरूपरूपादिविमर्शने मन्मनो न समर्थमिति वदन् किञ्चित्प्रार्थयते नैतदिति त्रिभिः। हे विकुण्ठनाथ! दुरितैर्दुष्टमतएवासाधुवृत्ति कामातुरं विषयप्रवणं हर्षेणाभिमतविषयलाभे हर्षेण तद्विपरीतविषयलाभे तु शोकेनेषणया पुत्रदारधनैषणया चार्त्तं मदीयं मनः तव कथास्वेव न सम्यक् प्रीयते, नासक्तं भवतीत्यर्थः । तस्मिन्मनस्येवं स्थिते सति दीनः विषयपारवश्येन दुःखितोऽहं तव गतिं याथात्म्यं कथं विमृशामि ॥ ३९ ॥

न केवलं मन एव ममैवं जातं किन्त्विन्द्रियान्तराण्यपीत्याह-जिह्वेति । हे अच्युत ! जिह्वा मा अवितृप्ता अतृप्तासती एकतो मधुरादिरसान् प्रति मां विकर्षति तथा शिश्नोऽप्यतृप्तः त्वगादयश्च कुतश्चिद्विकर्षन्ति तत्तद्विषयभोगाय कर्षन्ति चपलदृक् चञ्चला दृष्टिः क्वचाभिमतरूपदर्शनाय विकर्षति उदरशब्दः प्राणोपलक्षकः तथा कर्मशक्तिः क्रियाशक्तिः पाणिपादादिरपि विकर्षति क्वचिद्गृहपतिं गृहस्थ बह्वयः सपत्न्य इव देहपतिम् इन्द्रियाणि लुनन्ति विकर्षन्तीत्यर्थः ॥ ४० ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

सृष्टेः प्रागित्युक्त दर्शयति—तस्येति । तस्य तुरीयस्यास्य जगत्कारणस्य च कश्चिद्विशेषोनास्तीति द्योतनायैवकारः आत्मनि देहे जठरे गूढं निलीनमिदं जगज्जगदात्मकं महाब्जं यस्य तव नाभेरभूत्तदब्जं तस्यैव ते वपुः सन्निधानविषयत्वात् प्रतिमास्थानीयम् । कीदृशं स्वरूपं भूतसृष्टिकालशक्त्या संचोदितं सृष्ट्यै प्रेरितं कटाक्षीकृतं कादृशस्यास्य प्रकृतिधर्मिणः प्रकृतिप्रेरकधर्मवतः प्रलयोदकेऽनंताख्यशयनादुत्थाय विरमन् समाप्तिं कुर्वन् समाधियोगनिद्रालक्षणो यस्य स तथा तस्य कथमिव वटवत् वटलक्षणोंकुरोयथा स्वकणिकात् उत्पत्स्यमानकणिकात् कणिकाख्यवटबीजादित्यर्थः । नन्वयंविषमोदृष्टान्तस्तथाहि, कणिकानाम । वटबीजविकारोहि वटाख्यांकुरः न चाय प्रकृते सम्भवति. "निर्विकारोक्षरः शुद्ध."इति वचनादुच्यते स्वकणिकादितिलिङ्गव्यत्ययेन कश्चिद्विशेषोविज्ञायते कोयमिति चेदुच्यते कणिकानामादृश्या देवता सर्वस्थावरबीजानामभिमानिन्यपि वटाश्वत्थबीजयोर्विशेषतः संनिहिता अतस्तत्तद्बीजेभ्यस्तदंकुरव्यंजनात्तत्प्रागपि तत्र स्थित्वा जातेत्युच्यते यथा, तथा श्रीहरेरपि प्रकृत्यादिस्वामित्वेन च तत्सन्निहितत्वेन च स्थितस्तत्कार्येष्वनुविष्टत्वेन जातइत्युच्यते "आत्मन आकाशः सम्भूतः" इत्यादौ श्रुतत्वात् तत्रापि वटबीजाद्वटांकुरस्य साक्षादुत्पत्तिर्वटवृत्तिणश्चेतनस्य चेतनाभिमानादुत्पत्तिः उभयाभिमानिन्या देवताया अभिव्यंजकत्वेनाऽभिव्यक्तिस्तथा यथायोग्यं सत्त्वतमोभिश्चरजोगुणान् जगदात्मनः पद्मस्य साक्षादुद्भवः पद्मिनो हिरण्यगर्भस्याभिमानजननं हरेः पुरुषांतरेणाविर्भावइत्यादिकमिति, "स्थावराणां तु सर्वेषां देवतायाभिमानिनी । विशेषाद्वटबीजे च अश्वत्थे च व्यवस्थिता ॥ अदृश्या कणिका नाम सा वृक्षाद्व्यंजयत्यपि । अतोबीजमिति प्रोक्ता सा जातेत्यंकुरे स्थिता ॥ एवं हरिः कारणेषु स्थितः कार्यजनेरनु । कार्याण्यनुप्रविष्टः सन् प्रथमं तत्र दृश्यते" इत्यनेनोक्तविशेषोविज्ञायतइति न कापि शंका कार्येति, तस्माद्दृष्टांतदार्ष्टांतिकयोरुपपत्तिरस्तीति युक्तएव दृष्टान्तः ॥ ३३ ॥

तत्र विरिञ्चस्य लोकपद्मलक्षणादेहाभिमानोत्पत्तिपूर्वकं हरेर्वटबीजाभिमानिदेवतावददृश्यत्वं प्रकटयंस्तस्य मीमांसामाह—तत्सम्भवइति । पद्मस्य प्रकृत्यात्मकत्वेन तस्मात्पद्मात् सम्भवो जननं यस्य स तथा लोकात्मकत्वेन तस्मिन्देहस्थानीयेऽभिमानसम्भवो यस्य स तथा उभयोरप्यत्र विवक्षितत्वात् अतः

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

अब्जादन्यद्वस्तु न पश्यन्नप्सु निमज्जमानोनिमज्य मूलं विचिन्वन्. लोके बीजादङ्कुरे जाते नष्टं बीजमिव पृथिव्यां कथमुपलभेत पुरुषइति तच्चिन्तां दर्शयन्नेवं विभुःकविर्ब्रह्माऽऽत्मनि स्वस्मिन्नेव अब्जांतस्तस्माद्बहिश्च विततं व्यञ्जकत्वाद्बीजदेवतावत् बीजसंज्ञत्वान्नाविदन्नोपलब्धवानित्यन्वयः ॥ ३४ ॥

आत्मा परमात्मा योनिः कारणं यस्य स तथा तुशब्देनैकस्य हरेर्बहुधाजन्मास्तीति विशेषं दर्शयति सएव ब्रह्मा अब्दशतसंज्ञितेन कालेन विचित्य विविधपृथिव्याद्याधाराणामनुत्पन्नत्वादस्य केनचिदाधारेण भवितव्यं लौकिके बीजनाशवत् नाशायोगात् सन्नपि न दृश्यते कुतूहलमेतदिति अतिविस्मितोऽब्जमाश्रितस्तपेतिद्व्यक्षरं श्रुतवान् तपसाहं द्रष्टुं शक्तइत्यनेनोक्तमभिजानन् तीव्रेण तपसा परिशुद्धांतःकरणोभूतेन्द्रियाशये जगति विततं त्वामात्मनि स्वस्मिन् स्थितं ददर्शेत्यन्वयः कथमिव भुवि व्याप्तमतिसूक्ष्मं गन्धाख्यदेवतास्वरूपं यथा पश्यति योगी तथेत्यर्थः गन्धाख्या देवता यद्वत्पृथिव्यां व्याप्य तिष्ठति एवं व्याप्तं जगद्विष्णुं ब्रह्मात्मस्थं ददर्शेतिवाक्यं गन्धशब्देन देवताकथनं युक्तमिति भाव. ॥ ३५ ॥

यथा सूक्ष्मरूपं दृष्ट्वा मुमुदे तथा विराड्रूपमपि तयोरीषदपि विशेषाभावादित्याह—एवमिति । अनेन ब्रह्माण्डशरीरी ब्रह्मा "पातालमेतस्य हि पादमूलम्"इत्याद्युक्तं यद्रूपमपश्यत्तदेव पद्मजोपीति ज्ञातव्यम्. आत्मयोनिरिति विशेषणान्मायामय ज्ञान रूपम्. अनिर्वाच्याविद्यामायानामेति–किंनस्यादित्यत्राह सदिति । आनन्दादिलक्षणसमुदायरूपम्. अथ कस्मादुच्यते सदिति "सन्नो ह्यस्मिन्नानन्दश्चोजोबलम्"इति स्पष्टश्रुतेः ।"सन्निवेशश्च यः स्तोमः समुदायोगणः स्मृत."इत्यभिधानम् आनन्दादिलक्षणानां सन्निवेशो यस्मिन् स तथा तं गुणगुणिनोरभेदात्स्वरूपत्व सिध्यति "विज्ञानमानन्दं ब्रह्म"इति श्रुते., लक्षणत्वज्ञापनायादिशब्देन ज्ञानग्रहणम् ॥ ३६ ॥

रजस्तमःस्वभावावतिबलौ वेदद्रुहौ मधुकैटभाख्यौ हत्वा श्रुतिगणानानयत् आनीयास्मै विरिञ्चायावोचदिति शेषेणान्वयः अनेनैतत्सिद्धमभूदित्याह—सत्वमिति ॥ ३७ ॥

चतुष्पद्धर्मं पासि यस्त्वं कलौ छन्नोऽभवइति यस्मात्तस्मात्स त्वं त्रियुगइति ख्यातः ॥ ३८ ॥

एवं हरेर्भक्तवात्सल्यं विज्ञाप्य स्वाशक्तिं विज्ञापयति—नैतदिति । यदेतन्मनस्तव कथासु न रमते तस्मिन्मनसि तव गतिं कथ विमृशामीत्यन्वयः ईषणा वित्तादीनामिति शेषः ॥ ३९ ॥

मनःसमाधानाभावादन्येन्द्रियाण्यपि मत्पुरुषार्थविरुद्धानीत्याह जिह्वेति । स्पर्द्धाभाषणशीलत्वाज्जिह्वा दुःसंगेन पुण्यश्लथनशीलत्वात् शिश्नः"त्वच संपर्के"इति धातोः दुःसंपर्कशीलत्वात्त्वक् उदरात्कुत्वं नमयतीत्युदरं कर्मशक्तिरित्यनेन कर्मेन्द्रियाणि वागादीनि लक्षयति गेहपति देहस्वामिनं अन्यत्र गृहपतिम् ॥ ४० ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

जातमात्रेप्यंकुरेऽधिकरणे स्वांशेन वर्त्तमानमपि बीजं कथमुपलभते ? नैवेत्यर्थः । किन्तु तत्तल एवोपलभते तत्तु तस्यागम्यमेवासीदिति भावः ॥ ३३ ॥ ३४ ॥

ततश्च समाधिना प्रथमं तावत् तत्रैव ब्रह्माख्य सन्मात्रत्वेन तमनुभूतवानित्याह—सत्विति ॥ ३५ ॥

ततश्च सच्चिदानन्दरूपं तस्य विग्रहमपि दृष्टवानित्याह–एवमिति । ननु, कथं तलस्थबीजस्थानीयस्य तस्य तत्रैव दर्शनं तत्राह एवं समाधौ विततत्वानुभवप्रकारेणैवेति तद्विग्रहस्य मध्यमपरिमाणतया दृश्यमानत्वेपि विष्णुत्वानुभवादिति भावः मायामयं प्रचुरतच्छक्तिमिति प्रपञ्चाधिष्ठातृत्वात् ॥ ३६ ॥ ३७ ॥

तत्रतत्र साक्षादवतीर्य तत्पालनत्वेनोपसंहरति—इत्थमिति ॥ ३८ ॥

तदेवं तत्कथामनूद्य पूर्वपूर्वजन्मस्वभावमनुस्मृत्य तच्च दैन्येनास्मिन् जन्मन्यारोप्य तस्यामप्यतितृष्णया तामसेवमानमिव मत्वा स्वमनस्तिरस्करोति–नैतन्मन इति ॥ ३९ ॥

तदेव दुःखसाहस्येन जनदुःखमनुस्मृत्य कृपापरवशः स्वदुःखमप्यनादृत्य तदर्थमेव निवेदयति–जिह्वैकत इति द्वाभ्याम् ॥ ४० ॥ ४१ ॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

ततश्च तस्यैव तव पुनः सृष्ट्यारंभे निजकालशक्त्या सञ्चोदिताः प्रकृतेर्धर्माः सत्त्वाद्या येन तस्य आत्मनि स्वस्मिन् गूढमेव इदं ब्रह्माण्डरूपं वपुः प्रकृतेः सकाशात् प्रकटमभूत् ततश्च अम्भसि तदण्डगर्भोदे शयानस्य तव अनन्तशयनात् विरमन् समाधिर्यस्य तस्य नाभेः सकाशात् महाब्जम् अभूत् स्वकणिकातः सूक्ष्माद्वटबीजान्महावट इव ॥ ३३ ॥

तत्संभवः तदब्जजातः कविर्ब्रह्मा अतोऽब्जादन्यदपश्यन् तद्बीजं स्वशक्त्यैवोपादानकारणं त्वाम् आत्मनि स्वस्मिन् विततं व्याप्त्या सन्तमपि स्वबहिरेव वर्त्तमानं विचार्य अब्दशतं व्याप्यान्विष्यअपि ना विदत् युक्तं चैतत् उ अहो अंकुरे जाते तत्र स्वांशेन वर्त्तमानमपि बीजं तत्रांकुरेऽधिकरणे कथं उपलभेत किन्तु तत्तले एव उपलभ्येतेत्यर्थः । कमलशूरणादीनां अंकुरेषूत्पद्योत्पद्य नष्टेष्वपि बीजनाशादृष्टेः तत्तलंतु तदानीं ब्रह्मणोऽगम्यमेवासीदिति भावः ॥ ३४ ॥

आस्थित अन्वेषणान्निवृत्य अब्जमेवाश्रितस्सन् तीव्रतपसा त्वदीयध्यानेन आत्मनि स्वदेहे एव भुवि कार्यभूतायां स्थितं कारणं गन्धमिव त्वां ददर्श ॥ ३५ ॥

एवमनेन प्रकारेण सहस्रमपरिमितानि यानि वदनादीनि तैराढ्यं महापुरुषं चिदानन्दं विग्रहयतो मायामयं स्वरूपभूतया नित्यशक्त्या मायाख्यया युतः "अतो मायामयं विष्णुं प्रवदन्ति मनीषिणः" इति श्रुतिः यद्वा मायाया जीवस्याविद्यया मामयं

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

रोगमिव विनाशकं सन् समुचितत्वेनोत्तमः उप आधिक्येन लक्षितः सामुद्रकलक्षणाङ्कितः सन्निवेशोनयनग्रीवादिविन्यासो यस्य तं यद्वा तमेव कारणकार्ययोरैक्यात् सता प्रपञ्चेन पातालादिना उपलक्षितः संनिवेशः पादादिरचना यस्य तथाभूतं वैराजं मायामयं दृष्ट्वेति सम्बन्धः ॥ ३६ ॥

स्वभक्त तत्र पुनःपुनरवतीर्य त्वमरक्षीरित्याह–तस्मादिति । हयग्रीवमूर्तिं दधत् श्रुतिगणान् अनयत् तस्मै समर्पयामास मधुकैटभाख्यौ कीदृशौ रजस्तमस्स्वभावावित्यर्थः तयोर्हननेहेतु', सत्त्वामिति. यद्यपि गुणमात्र एवोदासीनस्य हरेः सत्त्वगुणेन प्रियः तदपि तत्स्वरूपभूते शुद्धसत्त्वे सत्त्वगुणस्य प्राति-कूल्याभावदर्शनादेव प्रियतमत्वमुत्प्रेक्षितं नतु वस्तुत.प्रियतमत्वमपि किंतु सात्त्विकलोकपक्षपातित्वमेव तव तादृशोत्प्रेक्षायां हेतुः शिष्टपालनार्थमेव तव दुष्टनिग्रहो यत्तत् खलु गुणानामेव स्वभावो न तु वस्तुतस्त्वयि वैषम्यमिति भावः ॥ ३७ ॥

यथा विरिञ्चस्य कृते हयग्रीवाननारस्तथैवान्येषामपि भक्तानां कृते अन्येप्यवतारा इत्याह—इत्थमिति । विभावयसि पालयसि हंसि घातयसि युगेयुगे अनुरूपं वृत्तं चरित्रं यस्य सः यत् यस्मात् त्वं कलौ छन्नः अन्यदीयरूपभावाङ्गर्थां बहिराच्छन्नः अतः स एव त्वं त्रियुग इति प्रसिद्धः सत्त्वादियुगत्रय एव स्वस्य प्रख्यापनात् नतु कलावित्यर्थः अत एवाग्रे तत्प्रमाणवचनमप्य-र्थान्तराच्छन्नतयैव वक्ष्यते"नानातंत्रविधानेन कलावपि तथा शृणु । कृष्णवर्णं त्विषा कृष्णं सांगोपांगास्त्रपार्षदम् । यज्ञैः सङ्कीर्तनप्रायैर्य-जन्ति हि सुमेधसः" इति ॥ ३८ ॥

तदेवं मुहुरप्यवतीर्य त्वं स्वीयरूपगुणलीलामृतं वर्षसि तदप्यस्माकं पापिष्ठ मनस्तत्र न प्रीणाति दुर्विषयविषगर्त एव मुहुः पतति किं कुर्म इत्याह–नैतदिति त्रिभिः । तव रूप-गुणलीलादीनां कथासु नन्वतिसाध्वीष्वपि कथासु किमिति न प्रीयते तत्राह दुरितदुष्टं यथा पित्तदुष्टा रसना सितामित्यर्थः तीव्रं दुर्वारम् ईषणाधनादिवासना तस्मिन् मनसि तव गतिं तत्त्वं कथं विमृशामि यद्यपि महाभागवतस्य प्रह्लादस्य मनो न प्राकृ-तमेतादृशं त्वद्वीर्यगायनमहामृतमग्नचित्त इत्यस्यैवाग्रिमोक्ते-स्तदपि प्रेम्णो विचित्रविधतरंगवत्त्वेनातिदैन्योदयादेव प्रेमिलो-कस्यैव मुक्तिर्न विरुद्ध्यते ॥ ३९ ॥

मनसो दुष्टत्वेऽपि मत्कीर्त्तनादिना जनः कृतार्थो भवतीति चेत्तत्राह—जिह्वा वागिन्द्रियरसनेन्द्रियञ्च अवितृप्ता सती भो अच्युत मामाकर्षति ग्राम्यकटुमिथ्यादिप्रलापंप्रति मधुरादि-रसंप्रतिचेति भावः । अन्यतस्ततोप्यन्यत्र कामिनीषु कर्मणि धनोपार्जनादावन्यताडनादौ वा शक्तिः सामर्थ्यं लुनन्ति त्रोटयं-स्यतस्त्वत्कीर्त्तनादाववकाशमेव न प्राप्नोमीति भावः ॥ ४० ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

तदनन्तरं यः परमधाममध्येशयनं करोति तस्यैव तु पुनः सृष्टिवेलायां निजकालशक्त्या सञ्चोदिताः प्रकृतेः स्वशक्तेर्धर्माः सत्त्वादयो येन तथाभूतस्य आत्मनि स्वस्मिन् गूढं सूक्ष्मरूपेण संस्थितमिदं ब्रह्माण्डाख्यं वपुरभूत् स्वस्मात् स्थूलतयोत्पा-दितमित्यर्थः । तदनंतरं नारायणरूपेण अम्भसि ब्रह्माण्डान्तर्गते जले शयानस्य अनन्तशयनाद्विरमत्समाधिर्यस्य तस्य ते नाभेः सकासात् महाब्जमभूत् स्वकर्णिकातः स्वबीजादूट इव ॥ ३३ ॥

तस्मिन् सम्यग्भवोजन्म यस्य सः कविर्बहुज्ञोब्रह्मा अतोऽ-ब्जादन्यदपश्यमानः त्वां बीजं स्वात्मनि स्वबहिश्च विततं वर्त-मानमपि जातेऽङ्कुरे बीजं कथमुपलभेतेति विचिंत्यापि तदन्वेषणा-र्थमब्दशतमप्सु निमज्जमानोपि नाविन्दत् ॥ ३४ ॥

हे ईश ! आत्मा भावन् योनिः कारणं यस्य सः परावृत्त्या ब्जमास्थितस्सन् तीव्रेण तपसा ध्यानेन परिशुद्धभावः आत्मनि चेतने ततो बहिरपि भूतेन्द्रियाशयमयेऽचेतनवर्गे च भुवि-गन्धमिव अतिसूक्ष्मं विततं त्वां ददर्श ज्ञातवानित्यन्वयः ॥ ३५ ॥

चेतनाचेतनविलक्षणभगवत्स्वरूपज्ञानं निर्दिश्याथप्राकृत-विग्रहमपि दृष्टवानित्याह–एवमिति । यथा स्वरूपं ददर्श तथा महा-पुरुषं महाविग्रहयुक्तमपि दृष्ट्वा विरिञ्चो मुदमापेत्यन्वय. । कथं-भूतं सहस्रायपरिमितानि यानि वदनादीनि तैराढ्यं मम्रृद्ध मायामयं माया कृपा तत्प्रधानं कृपयाविष्कृतमित्यर्थ. । सदुपल-क्षितसन्निवेशम् सता वेदेन हिरण्यश्मश्रुः हिरण्यकेशः "आप्र-नखात्सुवर्णः" इत्यादिनोपलक्षितसन्निवेशः अवयवविन्यासो यस्य तम् ॥ ३६ ॥

भवान् हयशिरस्तनुं हयग्रीवमूर्त्तिं बिभ्रत् वेदद्रुहौ रजस्त-मश्च रजस्तमःस्वभावौ मधुकैटभौ ब्रह्मणो वेदान् गृहीत्वा तद्धाय प्रवृत्तौ हत्वा तस्मै श्रुतिगणान् अनयत् दत्तवान् यतः सत्त्वं सत्त्व-स्वभावं जनं तव प्रियतमां तनुं वासस्थानमामनन्ति सत्त्वस्वभाव-जनहितार्थमसुरवधब्रह्मरक्षणवेदानयनानि कृतवानित्यर्थः ॥ ३७ ॥

ब्रह्मणि कृतमनुग्रहमन्यत्रादिशति—इत्थमिति । यथा ब्रह्माणं पालितवान् एव नृतिर्यगादिषु कृतैरवतारैः लोकान् धार्मिकान् जनान् विभावयसि पालयसि जगत्प्रतीपान् अधार्मिकान् हंसि घातयसि युगे अनुवृत्तं धर्मं पासि कथंभूतो यो धर्मः कलौ छन्नः कथंभुतस्त्वमभवः भवोपलक्षितसर्वविकारशून्यदेहवानि-त्यर्थः । यद्यतस्त्वं त्रियुगः त्रीणि युगानि युगलानि षड्भगलक्ष-णानि यस्य सः भगवानित्यर्थः कलौ त्वं छन्नो ऽभवः इत्यन्वये प्राय इत्यध्याहारो बोध्यस्तत्रापि बुद्धाद्यवतारप्रसिद्धेः ॥ ३८ ॥

अथ स्वदैन्यनिवेदनपूर्वकं मां पालयेति प्रार्थयते–नैतदिति त्रिभिः । हे विकुण्ठनाथ ! एतत् दुरितैर्दुष्टम् अत एव कामातुरं विषयासक्तं तीव्र दुर्द्धरम् हर्षशोकभयैषणाभिरार्तं मनःतव कथासु न सम्प्रीयते अतस्तस्मिन् मनसि सति दीनोहं तव गतिं त्वत्प्रा-प्तिसाधनं विमृशामि ॥ ३९ ॥

किञ्च हे अच्युत ! मा मां जिह्वा रसनेन्द्रियमवितृप्ता सती एकतो रसंप्रति तथा अवितृप्तेति पदं लिङ्गव्यत्ययेन सर्वत्र योज्यम् शिश्नो अन्यतो मैथुनानन्दंप्रति त्वक् अन्यतः स्पर्शं प्रति उदरं क्षुधासन्तप्तं अन्यत आहारं प्रति श्रवणं कचित् शब्दं प्रति घ्राणो अन्यतः गन्धंप्रति चपला दृक् दृष्टिं कच रूपं प्रति

एवं स्वकर्मपतितं भववैतरण्यामन्योऽन्यजन्ममरणाशनभीतभीतम् ।
पश्यन् जनं स्वपरविग्रहवैरमैत्रं हन्तेति पारचर ! (१) पीपृहि मूढमद्य ॥ ४१ ॥
कोन्वत्र तेऽखिलगुरो ! भगवन्प्रयास उत्तारणेऽस्य भवसम्भवलोपहेतोः ।
मूढेषु वै महदनुग्रह आर्तबन्धो ! किं तेन ते प्रियजनाननुसेवतां नः ॥ ४२ ॥
नैवोद्विजे परदुरत्ययवैतरण्या(२) स्त्वद्वीर्यगायनमहाऽमृतमग्नचित्तः ।
शोचे ततो विमुखचेतस इन्द्रियार्थमायासुखाय भरमुद्वहतो विमूढान् ॥ ४३ ॥
प्रायेण देवमुनयः स्वविमुक्तिकामा मौनं चरन्ति विजने न परार्थनिष्ठाः ।
नैतान्विहाय कृपणान्विमुमुक्ष एको नान्यं त्वदस्य शरणं भ्रमतोऽनुपश्ये ॥ ४४ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

तथा कर्मशक्तिः वाक्पाण्यादिकर्मेन्द्रियशक्तिः क्व वचनदानादिकं प्रति विकर्षति सर्वाणीन्द्रियाणि संसारप्रापकस्वस्वविषयगर्तेपातनेन मां त्वद्विमुखं कुर्वन्तीत्यर्थः । बह्व्यः सपत्न्यः गेहपतिं स्वस्वामिनं लुनन्तीव त्रोटयन्ति यथा स्वस्वार्थनिर्बन्धेन तदिष्टार्थान् विमुखं कुर्वन्ति यथेत्यर्थः ॥ ४० ॥

---

भाषा टीका ।

यह जगत् आपही का शरीर है, क्योंकि ? जब आप की प्रलय काल के जलमें शेषजी के शयन से समाधि विराम को प्राप्त हुई तब आपने अपनी काल शक्ति से प्रकृति के धर्मों को प्रेरणा की, उस समय आपके विषे गूढ रहा जो जगत् वही, वटके बीज से जैसे महावट उत्पन्न होता है, उसी तरह आपकी नाभि से ( चतुर्दशभुवनात्मक ) महाकमलरूप से उत्पन्न हो गया ॥ ३३ ॥

उस नाभि कमल से उत्पन्न हुआ जो ब्रह्मा वह उस कमल के सिवाय और कुछ नहीं देखता हुआ, आत्मा के विषै व्याप्त, उस कमल के बीज रूप आपको अपने से बाहर ढूंढता हुआ, उन प्रलय के जलों में डूबता हुआ, सौवर्ष तक मूल कारण को नहीं प्राप्त हुआ, यह भी तो ठीकही है क्योंकि ? जब अंकुर उत्पन्न होचुका तब अंकुर से पृथक् बीज कैसे उपलब्ध होवे ॥ ३४ ॥

फिर वही ब्रह्मा अत्यंत विस्मित होकर उसी कमल पर बैठ गया और बहुत काल में तीव्रतप करने से शुद्ध भाव वाला होकर, हे ईश ! जैसे पृथिवी में गन्ध इसी प्रकार भूत इन्द्रिय अन्तःकरणमय अपने आत्मा ही में अति सूक्ष्म रूप से आप को देखता भया ॥ ३५ ॥

इसी प्रकार फिर आप को हजारों वदन चरण शिर हस्त ऊरु नासा मुख कर्ण मन और आभरणों से युक्त, माया मय, ( कृपा प्रधान ) और समीचीन उपलक्षित है विग्रह संनिवेश जिनका, ऐसे महापुरुषरूप को देख कर ब्रह्मा परम आनन्द को प्राप्त हुआ ॥ ३६ ॥

तिस ब्रह्मा के अर्थ आपने हयग्रीव स्वरूप को धारण कर, वेदके द्रोही अतिबलिष्ठ मधु कैटभ दैत्यों को मारकर, फिर वेद समर्पण किये, इसी से बुध लोग रज तम और सत्व इनको आपकी प्रिय तनु कहते है ॥ ३७ ॥

हे महापुरुष ! इसी प्रकार आप मनुष्यों में ( रामकृष्णादि ) तिर्यकों में ( वराहादि ) ऋषियों में ( कपिलादि ) देवताओं में ( वामनादि ) अवतारों को धारण करके, लोकों को पालन करते हो, जगत् के दुःख देने वालों का नाश करते हो, और युगानुगुण धर्म को पालन करते हो, और जिस कारण कलि में आप छन्न ( आवृत ) होकर रहते है, और तीन युगों में धर्म का रक्षण करते इसी से आपका नाम त्रियुग है ॥ ३८ ॥

हे विकुण्ठ नाथ ! यह मेरा मन दुरितदुःख असाधु तीव्र कामातुर हर्ष शोक भय इच्छाओं से आतुर है विकुण्ठनाथ ! यह मेरा मन पाप कर्मों से दुष्ट होरहा है, असाधु तीव्र और कामातुर, हर्ष शोक भय इच्छाओं से आर्त है इसी से आपकी कथा में प्रीत नहीं होता है, मैं अति दीन हूं इस मन में आपकी गति को कैसे विचारूँ ॥ ३९ ॥

हे अच्युत ! अवितृप्त मेरी जिव्हा मुझे एक ओर खींचती है, शिश्न एक ओर, त्वचा और ओर को, उदर और श्रवण किसी ओर को, घाण और ओर को, चपल दृष्टि किसी ओर को, कर्म शक्तियें कहीं को खीचती हैं । जैसे बहुत सी पत्नी किसी के हों और वे अपने पति की खैंचातानी करती है वह दशा मेरी होरही है ॥ ४० ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

न केवलमहमेक एवैवं कष्टां दशामापन्नः किन्तु महाजनोऽप्येवमेव क्लिश्यत्यतः सर्वं जनं पालयेति प्रार्थयते, एव-

---

( १ ) पारमति पीपृहि मूढसत्वम् इति विजय० । पिपृहि इति वीर० पा० ।　　त्वद्वीर्यमिति पाठः विज० ।

### श्रीधरस्वामिकृतभावार्थदीपिका ।

भव संसार एव वैतरणी यमद्वारनदी तस्याम् अन्योऽन्यतो यानि जन्मादीनि तेभ्योऽतिभीतं स्वेषां परेषां च विग्रहेषु यथायथ वैरं मैत्रं च यस्य एवं मूढं जनं पश्यंस्त्वं हे पारचर! तस्याः पारे स्थितनित्यमुक्त हन्तेति अहो कष्टमित्येवमनुकम्पया पीपृहि वैतरणीमुत्तार्य पालय ॥ ४१ ॥

एकेन मया कथं सर्वो जनस्तारणीय इतिचेत्तत्राऽऽह कोन्विति। को नु ते अत्र सर्वजनोत्तारणे प्रयासो न कोऽपि कुतः अस्य विश्वस्य भवसम्भवलोपानामुत्पत्तिस्थितिसंहाराणां हेतोः ततोऽपि किमेतद्दुष्करमिति भावः। उचितं चैतदित्याह, मूढेष्विति। त्वां च त्वदीयांश्च तारयिष्यामीमं दुराग्रहं मा कृथा इतिचेत्तत्राऽऽह तव ये प्रियजनाः भक्तास्ताननुसेवमानानां नोऽस्माकं तेनोत्तारणेन किम्। "कोऽति प्रयासोऽसुरबालका हरेः कोऽन्वत्र तेऽखिलगुरो भगवान् प्रयासः। प्रह्लाद इत्थमुपमन्त्र्य मिथो नराणामीशेन सख्यमकरोद्दपनीय मायाम्" ॥४२ ॥

वत्स प्रह्लाद! त्वां तावत्तारयिष्यामि तावतैव कृतार्थः स्याः किमनेन निर्बन्धेनेत्यत आह—नैवेति। हे पर! सर्वोत्तम त्वद्वीर्यगायनमेव महामृतं तस्मिन्मग्नं चित्तं यस्य सोऽहं भववैतरण्या नैवोद्विजे किन्तु विमूढान् शोचामि, तानेवाह. ततो महामृतात्विमुखं चेतो येषाम् प्रत्युतेन्द्रियार्थानिमित्तं यन्मायासुखं तदर्थं भरं कुटुम्बादिभारमुद्वहतः ॥ ४३ ॥

त्वं तावन्मुक्तिं गृहाण—तांस्तु सर्वज्ञा मुनय उपदेक्ष्यन्तीतिचेत्तत्राह, प्रायेणेति. न विमुमुक्षे विमुक्तिं नेच्छामि तर्ह्यन्यं कमपि प्रार्थय मामेव किमिति निर्बध्नासीतिचेदत आह त्वत्तोऽन्यमस्य जनस्य शरणं न पश्यामि ॥ ४४ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

न केवलमहमेवेदृशीं दशां प्राप्तः किन्तु मदीयो जनोऽप्येवमेव क्लिश्यत्यत. सर्वं मदीयं जनं संसारान्मोचयेति प्रार्थयते, एवमिति। भव एव वैतरणी दुःखप्रदा यमलोकनदी तस्यां स्वकर्मभिः पुण्यपापात्मकैः पतितमन्योन्यं यानि मरणादीनि शत्रूणां पुत्रादिजन्मना स्वस्य भयं स्वस्य पुत्रादिजन्मना परेषां शत्रुभ्यःस्वस्य भयं स्वस्माच्छत्रूणाम् एवं परैः स्वद्रव्यभक्षणेन स्वस्य भयं स्वेन परद्रव्यभक्षणे स्वस्मात्परेषामिति यथा सम्भवमूह्यम्। तेभ्यो जन्मजरामरणाशनेभ्यो भीतभीतं भीतादपि भीतं स्वेषां परेषां च विग्रहेषु देहेषु यथायथं वैरं मैत्रञ्च यस्य तमेवमद्यापि मूढमज्ञं जनं पश्यन् त्वं हे पारचर! भववैतरणीपारे चरतीति तथा तस्य सम्बोधनम्. अति पिपृहि "पृपालनपूरणयोः" इति धातुः अतीव पालयेत्यर्थः। यद्वा अतिपीपृहि हन्तेति अहो कष्टमित्यनुकम्प्य भववैतरण्या अतिपारय पारं नय संसारान्मोचयेत्यर्थः ॥ ४१ ॥

ननु, त्वदीयसर्वजनोत्तारणे मम महान्प्रयासो भवेदित्याह—कोन्विति। हे अखिलानां गुरो हितोपदेष्टः! हे भगवन् ज्ञानशक्त्यादिषाड्गुण्यपूर्ण! अस्मिन् मदीयजनस्योत्तारणे तव को नुप्रयासः? न कोपीत्यर्थः। प्रयासाभावे हेतुं वदन् भगवन्तं विशिनष्टि, अस्य कृत्स्नस्य चिदचिदात्मकप्रपञ्चस्य भवसंभवलोपहेतोरुत्पत्तिस्थितिलयकारणस्य कृत्स्नजगदुदयविभवलयलीलस्य मदीयजनोत्तारणे न कोऽपि प्रयास इति भावः। युक्तं चैतत्तवेत्याह, मूढेष्वज्ञेषु विशेषेण महतामनुग्रहो भवतीति. ननु, मम सेवामन्तरेणाहं नाऽति पारयामि, अन्यथा सर्वमुक्तिप्रसङ्गः तत्राह, हे आर्तबन्धो! किन्तेनार्तबन्धुस्त्वमिति यत्तेन नोऽस्माकं किं त्वत्सेवया स्वार्त्तबार्त्तबन्धुत्वनिर्वाहार्थं त्वत्सेवायामप्यशक्ता वयमार्त्तानुकम्प्या इति भावः। सर्वमुक्तिप्रसङ्गं निराकुर्वन्नात्मनो विशिनष्टि, ते तव ये प्रिया भक्तजनास्ताननुसेवतां त्वद्दासानुदास्यं कुर्वतामस्माकमित्यर्थः। तावन्मात्रमपेक्ष्य मज्जनोत्तारणोपपत्तेर्न सर्वमुक्तिप्रसङ्गश्चेति भावः। मामनुगृहीतवता त्वया मदीयजनस्य भवद्दासानुदास्यमपि संपाद्यमिति तात्पर्यम् ॥ ४२ ॥

इदमेव मया प्रार्थनीयमित्यभिप्रायवानहं भववैतरण्या बिभेमि किन्तु तत्रस्थं पतिष्यमाणान्मज्जनानवलोक्य दुःखयामीत्याह, नैवेति। हे परम! दुरतिक्रमणीयो भवः संसार स एव वैतरणी ततो नैवाहमुद्विजे बिभेमि उद्वेगाभावे हेतुं वदन्नात्मानं विशिनष्टि—त्वद्वीर्येति. त्वद्वीर्यगायन त्वद्वीर्यसूचकगुणानामगायनमेव महदमृत तस्मिन् मग्न चित्त यस्य सोऽहमतो न मदर्थं शोचे किन्तु विमोषणा मूढान्मदीयानेव शोचे तदर्थं शोच इत्यर्थः। तत्र हेतु वदंस्तान्विशिनष्टि, ततस्त्वद्वीर्यगायनाद्विमुखं चेतो येषाम्. इन्द्रियार्थाः शब्दादयो विषयास्तेषां मायासुखाय तदनुभवजन्यप्राकृतसुखाय तदर्थंभरं कुटुम्बादिभारम् उद्वहन्तीति तथा तान् ॥ ४३ ॥

ननु, यथा श्रीनारदानुग्रहात्त्वं मुमुक्षुस्तथा त्वदीया अपि महतामनुग्रहात् मुमुक्षवश्चेत्तान् मोक्षयिष्याम्यतस्त्वमेव मुक्तिमिच्छेत्यत आह—प्रायेणेति। हे देव! प्रायशो मुनय आत्मनामेव मुक्तिं कामयमाना विजने निर्जने अरण्यादिदेशे मौनं शुभाश्रयसंशीलनं कुर्वन्ति, नतु परार्थम् अन्येषां प्रयोजने निष्ठा येषां ते भवन्ति अतस्तदनुग्रहो मदीयजनस्य दुर्लभ इति भावः। तस एतान् कृपणान्विहाय अहमेको न मुमुक्षे न संसृतिबन्धं मोक्तुमिच्छामि तर्ह्यन्यं कमपि प्रार्थय मामेव किमिति निबध्नासीति चेत् तत्राह, भ्रमतः संसृतौ भ्राम्यतोऽस्य जनस्य त्वत् त्वत्तोऽन्यं शरणं रक्षणोपायभूतञ्च नानुपश्यामि ॥ ४४ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

स्वैः परैश्च सह विग्रहलक्षणं वैरं विरुद्धाचरणं मैत्रं च यस्य तथा तं जनं पश्यन्नतस्तमसो भवस्य पारमतिपीपृहि अतिपारं गमय मूढसत्त्वं मूढप्राणिनमसुरजातित्वात् तिर्यग्जातित्वात्तामसमिव स्थितं गजेन्द्रं पारं नीत्वा यथाऽपालयस्तथा पारं च प्रापय्य मां पालयेति वा ॥ ४१ ॥

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

मम संसारपारनेतृत्वं तव दुःशकं नेत्याह–क इति। हे अत्र! अन्यपातृरहित, भगवन्! मम संसारोत्तारणे ते तव कोनु प्रयासो न कोपि अत्र जीवराशौ वा कुतो न प्रयासइति तत्राह अस्येति। अस्य जगतो भवो जन्मसंभवः स्थापनेन संभावनं लोपः संहारोयेषां हेतोः करणस्यास्य जगत उत्तारणे तव प्रयासो नास्ति ममोत्तारणे कोन्विति वा, कुत इति तत्राह, भवेति भवस्य संसारस्य संभव उत्पत्तिस्तस्य नाशहेतोस्तव किं प्रकृतइत्याशक्याऽस्मद्वारत्सल्य-मन्तरेण न किमपि प्रयोजनं तवेत्याह—मूढेष्विति। गजेन्द्रकल्पार्त जनवन्धो मूढेष्वस्मासु यो महदनुग्रहस्तेन तव किं प्रयोजनम् नकिम-पीत्यर्थः। ननु, प्रयोजनाभावे किमर्थं तथाकरणमित्याशंक्य स्वभाव इत्याशयेनाह–प्रियेति। प्रियजनाननुसेवमानस्त्वमिति यत् स तव स्वभाव इति शेषः॥ ४२॥

संसारभीरूणां संसारवैतरण्युत्तरणोपायः क इत्याशंक्य निरन्तर-वेदान्तशास्त्रश्रवणमननादिर्येषामस्ति तेषां तद्भयं नास्ति अन्यथा न कदापि तत उत्तरणमित्याशयेनाह—नैवेति. त्वत्तीर्थे त्वद्विषयं वेदान्तशास्त्रं तस्य गायन श्रुत्वा मत्वा व्याख्यानं व्याख्यापन च तदेव महामृतं यत्तेन मत्तं हृष्टं विवशं वा चित्तं यस्य स तथा एवंविधोहं संसारवैतरण्या नैवोद्विजे। न बिभेमि एव शब्देन त्वत्तोर्थसेवाभावे संसारकर्दनादूबिभेमि तत्सम्भवेनेत्ययोग-व्यवच्छेदः क्रियते अनेनासंगतं प्रह्लादस्तवनमित्येतदपि परिहृत "मत्तमन्यत्र नतोदया" इति वचनात् इदं च भक्तिलक्षणमिति प्रकट यत्राह–शोच इति। ते त्वत्त इन्द्रियार्थेभ्यो विषयेभ्यो मायासुखं प्राकृतमस्वरूपं सुखं यत्तदर्थं भरं कुटुंबभारम्॥ ४३॥

स्वेतरेषु क्रियमाणा कृपा स्वाश्रितेष्वेव कर्तव्या देवादिभि क्रियमाणत्वादित्यभिप्रेत्याह–प्रायेणेति। देवा मुनयश्च विजनैकान्त-स्थलेन साधनेन सहिताः काष्ठमौनादिव्रतं चरन्ति कीदृशाः स्वकीयानां जनानां विमुक्तिः स्यादिति स्वविमुक्तिकामाः स म-भूनां स्वभावइत्याह–परेति। परप्रयोजनतात्पर्योपेता देवेषु तात्त्विकै विशेषतो मुनिषु कैश्चिदेवेति विशेषप्रकाशनाय प्रायेणेति तदुक्तं 'आश्रितेषु कृपा कार्या विशेषात्तात्त्विकैः सुरैः॥ मुनिभिश्च तथा कैश्चित्कैश्चित्कार्याखिलेष्वपि॥ तथापि तात्त्विकसुराः कृपाविषयतां गताः॥ एत एव विमुच्यन्ते तदन्ये न कथंचन" इति यतो देवादयोऽप्या श्रितेषु कृपां कुर्वन्ति अतोहमप्याश्रितानेतान्कृपणान् कृपाविष-यान् विहाय एको न विमुमुक्षे त्वमेको मत्प्रसादेन मुक्तो भव अन्ये न्येन वर्त्मना ... न्त्विति तत्राह–नान्यमिति। स्वकर्मणा नाना योनिषु भ्रमतो मामाश्रितजनस्यानुकूलं त्वदन्य शरणं नानुपश्ये इत्यन्वयः॥ ४४॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

तत्र स्वस्मिंस्तदतिकृपणीयत्वाभिमानेन सप्रणयोपालम्भ-मिवापि निवेदयति, कोन्विति॥ ४२॥

ननु, मत्प्रियजनसेविनामपि भवादनुत्तीर्णानां तदुद्वेगः स्यादेवेत्याशङ्क्य नहि नहीति स्वं दृष्टान्तयति—नैवेति। त्वद्वी-र्याणां ये गायकास्तत्प्रियजनाः तत्सम्बन्धि यन्महामृतं तद्गान-रूपमेव तत्र मग्नं चित्तं यस्य सोऽहं नैवोद्विजे अत्र पूर्वं त्रस्तो-स्म्यहमित्यादिकं यदुक्तं तत् खलु स्वस्य तदूबहिर्मुख साङ्कारोचकत्वेन। सम्प्रति नैवोद्विज इत्यादिकं तत्कथामृत माधुर्याविष्टत्वेन मध्ये च नैतन्मन इत्यादिकमतितृष्णयेति विवेचनीयम्। भावानां विचित्रगतित्वात्॥ ४३॥

यथा श्रीभगवन्तं कोन्वत्र इत्यादिकमुवाच तथैव मुनीनपि गत्याह—प्रायेणेति॥ ४४—४७॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी।

न केवलमहमेक एव, अपि तु सांसारिकः सर्व एव जनः क्लिश्यतीति तदुद्धारं प्रार्थयते—एवमिति। भव एववैतरणी यमद्वारनदी तस्यां स्वेषां परेषां च विग्रहे यथायथं वैरं मैत्रं च यस्य तं हे पारचर! एवंभूतवैतरण्याः पार एव विरचित क्रीड इति हेतोर्हन्त कृपया पीपृहि वैतरणीमुत्तार्य पालय॥ ४१॥

एकेन मया कथं सर्वोजनस्तारणीयः? इति चेत्तत्राह-कोन्विति अखिलगुरो! गुरुरूपधारिणा एकेनापि त्वया परः परार्धेनापि भवितुं समर्थेन सर्व एव जनो निस्तार्यतामिति भावः। न चैतावत् सामर्थ्यं मे नास्तीति वाच्यमित्याह–अस्य विश्वस्य जन्मस्थिति-संहारकारणस्य यदि जन्मादे' कारणमभूस्तदा उद्धारस्यापि कारणं भवितुमर्हस्येवेति भावः। उचितमेवैतदित्याह–मूढेष्विति। त्वां च त्वदीयांश्चतारयिष्यामि इममतिदुराग्रहं माकृथा इति चेत् तत्राह, तव ये प्रियजना भक्तास्ताननुसेवमानानां नोऽस्माकं तेन त्वत्कर्तृकोत्तारणेन किं त्वद्भक्तसेवाप्रभावात्स्वयमेव वयं तरिष्याम इति भावः॥ ४२॥

किञ्चाहं स्वार्थं तु संसारतारणं नैवार्थय इत्याह—नैवेति। हे पर सर्वश्रेष्ठ! वैतरण्याः सकाशान्नोद्विजे तत्र हेतुः त्वद्वीर्येति किन्तु विमूढान् शोचामि इन्द्रियार्थहेतुकं यन्मायामयं सुखं तदर्थंभरं कुटुम्बभरणादिभारमुद्वहतः॥ ४३॥

स्व तावन्मुक्ति गृहाण तांस्तु तत्त्वज्ञा,मुनयो मुक्तिसाधनमुपदे-क्ष्यन्तीति चेत्तत्राह—प्रायेणेति। अहं तु न तथा बुभूषामित्याह, नैतानिति। त्वत्तोऽन्यमस्य जनस्य शरणं न पश्यामि॥ ४४॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

एवमन्येऽपि संसारनद्यां निमग्ना अतः सर्वानस्मादादीन् पालयेति प्रार्थयते–एवमिति। एवं स्वकर्मभिः भवो जन्ममरणप्रवाहलक्षणः संसारः स एव वैतरणी नरकपरिखाभूता नदी तस्यां पतितम् अन्योन्यतो यानि जन्मादीनि तेभ्यो भीतादपि भीतवत् स्वेषां परेषां च विग्रहेषु कलहेषु देहेषु वा स्वप्रयोजनानुसारेण वैरमैत्रं च यस्य तम् मूढं स्वपुरुषार्थानभिज्ञं जनं मादृशम् त्वं पश्यन् प्राक्

यन्मैथुनादि गृहमेधिसुखं हि तुच्छं कण्डूयनेन करयोरिव दुःखदुःखम् ।
तृप्यन्ति नेह कृपणा बहुदुःखभाजः कण्डूतिवन्मनसिजं विषहेत धीरः ॥ ४५ ॥
मौनव्रतश्रुततपोऽध्ययनस्वधर्मव्याख्यारहोजपसमाधय आपवर्ग्याः ।
प्रायः परं पुरुष ! ते त्वजितेन्द्रियाणां वार्ता भवन्त्युत न वात्र तु दाम्भिकानाम् ॥ ४६ ॥
रूपे इमे सदसती तव वेदसृष्टे बीजाङ्कुराविव न चान्यदरूपकस्य ।
युक्ताः समक्षमुभयत्र विचिन्वते त्वां योगेन वह्निमिव दारुषु नान्यतः स्यात् ॥ ४७ ॥
त्वं वायुरग्निरवनिर्वियदम्बुमात्राः प्राणेन्द्रियाणि हृदयं चिदनुग्रहश्च ।
सर्वं त्वमेव सगुणो विगुणश्च भूमन्नान्यत्त्वदस्त्यपि मनोवचसा निरुक्तम् ॥ ४८ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

भववैतरण्यविषये चरतीति तथा तस्य सम्बोधनं हे पारचर! हन्त अहो कष्टमित्येवमनुकम्प्य अद्याधुना पीपृहि वैतरणीमुत्तार्य पालय ॥ ४१ ॥

दीनजनोत्तारणे विश्वसृष्ट्यादिकर्तुस्तव श्रमो नास्ति अहं तु त्वद्दासचरणसेवयैव कृतार्थ इति प्रार्थयते, कोन्वत्रेति । हे अखिल-गुरो ! अस्य विश्वस्य भवसम्भवलोपानां सृष्टिस्थितिसंहाराणां हेतोः ते तु निश्चितम् अत्र दीनस्य जनस्य तारणे कः प्रयासः ? न कोपीत्यर्थः । ननु, निमितजनोत्तारणे सर्वमोक्षप्रसङ्गः स्यादत्राह, मूढेषु हे दीनबन्धो ! महतां त्वद्दासानां त्वद्भजनोपदेशरूपो अनुग्रहो भवत्कृपया भवतु इति शेषः । नन्वात्मतरणं कुतो न प्रार्थयसे ? अत्राह, हे भगवन् ! ते प्रियजनान् भागवतान् सेवतां नोऽस्माकं तेन भवनदीतरणेन किम् ? त्वत्प्रियजनसेवयैव कृतार्था इत्यर्थः ॥ ४२ ॥

एतदेवाह-नैवेति । हे पर पूर्ण ! त्वद्वीर्यगायनं भवत्प्रियसेवाल-ब्धत्वदीयपराक्रमगानमेव महाऽमृतं तत्र मग्नं लब्धरुचि चित्तं यस्य सोऽहं दुरत्ययवैतरण्या नैवोद्विजे किन्तु ततस्त्वद्वीर्यगायन-महामृतात् महदनुग्रहाभावेन विमुखं चेतो येषां तान् इन्द्रियार्थ-मिन्द्रियनिमित्तं यन्मायासुखं प्राकृतमानन्दं तदर्थं नानादुःखदं गृहकुटुम्बादिभरमुद्वहतोऽहं शोचामि अतस्तान् भववैतरण्याः उत्तार्य पालयेति भावः ॥ ४३ ॥

त्वं मद्भजनेन मुक्तो भव एतान् मुनयस्तदर्थमुपदेक्ष्यन्तीत्यत्राह, हे देव ! यतः प्रायेण स्वमुक्तिकामा नतु परार्थनिष्ठाः मुनयो विजने मौनं स्वधर्मं चरन्ति, अतः त्वत् त्वत्तः अन्यं शरणं नानुपश्ये त्वं तान् प्रेरय इति भावः । अहं तु एतान् कृपणान् विहाय एकः न विमुमुक्षे विमुक्तिमिच्छामि ॥ ४४ ॥

---

भाषाटीका ।

मेरी ही यह दशा नहीं है—यह सब जने अपने कर्मों से इस भव वैतरणी में पड़े हैं। परस्पर जन्म मरण अशन और भय से भीत है अपने पराये के बैर और भिन्नता में लिप्त है हे पार चर ! ( आप इस वैतरणी के पार पर हो ) कृपाकर इन मूढ़ों को दुखित देखकर आज इसके पार उतार कर पालन कीजिये ॥ ४१ ॥

हे भगवन् ! हे अखिल गुरो ! आप इस जगत के जन्म स्थिति प्रलय के हेतु है इनको संसार वैतरणी से उतारने में आपको क्या प्रयास है ? । हे आर्तबन्धो ! मूढो पर अनुग्रह करना महा पुरुषों को उचित ही है । ( भगवान् यह न कहें कि तुम क्यो जगत् के निमित्त दुराग्रह करते हो तुमको और तुम्हारे सबों को उद्धार करूँगा ) यह विचार कर प्रह्लाद कहने लगे प्रभो ! आपके प्रियजनों के सेवन करने वाले हमको उससे (तरनेसे) क्या है ? हमतो आपके भक्तों के अनुग्रह से ही तर जांयगे ॥ ४२ ॥

हे पर ! ( सर्वोत्तम ! ) तुम्हारे लीला पराक्रमगान महा अमृत में मग्न मन, मै इस दुरत्यय भव वैतरणी से उद्विग्न नहीं हू, मै केवल उन मूढ पुरुषों का सोच करता हूं जो आप की लीला गान से विमुखचित्त है । और इन्द्रियार्थ माया सुख के निमित्त भार वहन कर रहे हैं ॥ ४३ ॥

हे देव ! प्रायः बड़े २ मुनिजन अपनी विमुक्ति की कामना कर विजन वन में मौनधारण करते हैं किन्तु वे भी स्वार्थ रत हैं परार्थ निष्ठ नहीं है मैं इन कृपण जीवों को छोडकर अकेला नहीं मुक्त होना चाहता हू क्योंकि इस भ्रमते जीव समूह का शरण तुम से अन्य मै नहीं देखता हूं । जो आप इनका उद्धार न करेंगे तौ कौन करेगा ? ॥ ४४ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

नन्वेते स्त्रीसम्भोगादिना सुखिन एव न कृपणास्तत्राह—यदिति । करयोः कण्डूयनेन सङ्घर्षणेनेव दुःखमनु दुःखं यस्मिन् तर्हि दुःखत्वादेव ततो निर्विद्य मुच्येरंस्तत्राह—कृपणाः कामुका बहुदुःखभाजोऽपीह गृहमेधिसुखे न तृप्यन्त्यलमिति न मन्यन्ते कण्डूतिवत्कामस्य दुःसहत्वात्, ननु, केचित्कण्डूति-

श्रीधरस्वामिकृतभावार्थदीपिका ।

अपि महन्ते कामं चेत्यत्राह—त्वत्पादात् कश्चिद्धीर एव मनसिजं कामं विषहेत न तु सर्वे अत्रापि कण्डूतिवदिति दृष्टान्तः ॥ ४५ ॥

ननु, मौनादिभिर्मोक्षसाधनैः सुलभैव तेषामपि मुक्तिस्तत्राह, मौनेति । हे पुरुष ! अन्तर्यामिन् ! ये मौनादयो दश आपवर्ग्याः अपवर्गहेतव प्रसिद्धाः रहो विविक्तवास. ते तु प्रायशोऽजितेन्द्रियाणामिन्द्रियभोगाद्यार्थो विक्रीणानां वार्त्ता जीवनोपाया भवन्ति दाम्भिकानां तु वार्त्ता अपि भवन्ति वा न वा दम्भस्यानियतफलत्वात् ॥ ४६ ॥

त्वज्ज्ञानं भक्तिं विना सकामैर्मौनादिभिर्न भवत्येवेत्याह—रूपे इति, त्रिभिः । बीजाङ्कुरावेव प्रवाहापन्ने इमे सदसती कार्यकारणे एव न रूपे उपलक्षणभूते वेदेन सृष्टे प्रकाशिते नचान्यत् स्वमननं गौरत्वादिकमिव देवदत्तादेः कुतः अरूपकस्य प्राकृतरूपादिशून्यस्य अतो युक्ताः संयता एव भक्तियोगेन अन्यत्र त्वामुभयत्र कार्ये कारणे चानुगत पश्यन्ति मथनेन दारुषु वह्निमिव नान्यतः स्यात्त्वज्ज्ञानमिति शेषः । यद्वा ज्ञानप्रकारमेवाह—एतदुभयमन्यतः प्रधानपरमाणवादेर्न स्यात् "स ऐक्षत" इत्यादि श्रुतेः । अतस्त्वमेव कारणत्वात्सर्वत्रानुस्यूत इति ॥ ४७ ॥

तदेवाऽऽह—त्वं वायुरिति । हृदयं मनः चित्तिस्त्वम् अनुग्रहोऽहङ्कारो देवतावर्गो वा सगुणः स्थूलः निर्गुणः सूक्ष्मः मनश्च वचश्च मनोवचस्तेन निरुक्तं प्रकाशितं किमपि त्वत्तोऽन्यन्नास्ति ॥ ४८ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

ननु, त्वदीया जना न दैन्यं प्राप्ताः किन्तु विषयानुभवेन हृताः एतादृशेषां दैन्यापादनेन त्वं किमितीत्थं प्रार्थयसे तत्राह—यदिति । यन्मैथुनादिकं गृहमेधिनो गृहस्थस्य सुखं तत्करयोः पाण्योर्हृदयोर्वा कण्डूयनेन कण्डूकेनेव तज्जन्यदुःखवद्दुःखं खलु यामतीव तु तावत् दुःखानुपरिदुःख तु दोर्दण्डेनेति वार्थः । अत एव तुच्छं तदिदं तस्य दुःखत्वादेव ततो निर्विण्णमुमुक्षुरुत्याह—कृपणाः कामिनः बहुदुःखभाजोऽपीदं गृहमेधिसुखं न तृप्यन्त्यलमिति न मन्यन्ते कण्डूतिवत्कामस्य दुःसहत्वादतस्ते स्वानर्थमेव न जानन्तीति भावः । ननु, केचित्कण्डूतिमपि महन्ते कामं चेत्यत्राह—सत्वं, धीरश्चेत्त्वदनुग्रहाज्जितेन्द्रियश्चेन्मनसिजं कामं सहेत तन्मध्ये जितेन्द्रिय इति भावः ॥ ४५ ॥

तर्हि केचिन्मौनादिभिरुपायैरिन्द्रियाणि जयन्तिरपवर्गं साधयन्तत्राह—मौनेति । हे पुरुष परमपुरुष ! मौनादय आपवर्ग्याः जितेन्द्रियाणामपवर्गोपाया एवेति सत्यमेव अजितेन्द्रियाणां तु वार्त्ता जीवनोपाया भवन्ति 'अयं मौनं, दिसम्पन्नस्ततोऽस्मै देयम्' इति मन्यमानेभ्यः परेभ्यः लब्धवित्तो भवतीति जीवनोपाया भवन्ति सतीन्द्रियजये मौनादय आपवर्ग्याः ननु तस्मिन् असति भवदनुग्रहाच्च विषयवैतृष्ण्येन भवितव्यमिति भावः । अपवर्गार्थतयाऽनुष्ठिता अपि मौनादयोऽजितेन्द्रियाणां वार्त्ता एव न त्वापवर्ग्याः किंपुनर्दम्भार्थं कृता आपवर्ग्याः न भवन्तीत्याह—उतेति दाम्भिकानां मौनादयो वार्त्ता अपि भवन्त्युत । न वा किंपुनरापवर्ग्या न भवन्तीति. दाम्भिकानां दाम्भिकत्वे प्रकटे सति जीवनहेतवोऽपि न भवन्तीत्युत न वा शब्दार्थः, तत्र मौनं वाङ्नियमः व्रतमनशनादिरूपं श्रुतमध्ययनं तपः कृच्छ्रादि अध्ययनमध्यापनं पाण्डित्यं स्वधर्मः स्ववर्णाश्रमोचितो धर्मः व्याख्याऽध्यापनं रहो निर्जनदेशवसतिः जपो मन्त्रजपः समाधिर्ध्यानं मनसिजं विषहेत धीर इतीन्द्रियजयमूलकः कामजय इत्युक्तं तथाऽजितेन्द्रियाणां वार्त्ता भवन्तीत्यनेन जितेन्द्रियाणां त्वापवर्ग्या भवन्तीति सूचितम् ॥ ४६ ॥

तर्हीन्द्रियजयः कथं स्यादित्यपेक्षायां सर्वात्मकनिरतिशयानन्दरूपब्रह्मोपासननिष्ठस्यार्थादेवेन्द्रियजयः स्यादिति वक्तुं तावत्तदुपासनाप्रकारं विवक्षुश्चेतनाचेतनयोः परमात्मशरीरत्वमाह—रूपे इति । इमे सदसती चिदचिद्द्रव्यरूपे बीजाङ्कुराविव स्थिते अरूपकस्य कर्माधीनदेहरहितस्य तव वेददृष्टे वेदबोधिते रूपे शरीरे "य आत्मनि तिष्ठन्नात्मनोऽन्तरो यमात्मा न वेद यस्यात्मा शरीरं यः पृथिव्यां तिष्ठन् पृथिवीमन्तरो यं पृथिवी न वेद यस्य पृथिवी शरीरं यस्याक्षरं शरीरं यस्याव्यक्तं शरीरम्" इत्यादिवेदबोधितशरीरे इत्यर्थः । बीजाङ्कुरौ इत्यनेन कदाचित्कारणावस्थया कदाचित्कार्यावस्थया चोभयथावस्थिते उभे अपि चिदचिद्द्रव्ये तव शरीरभूते इत्युक्तं भवति । अरूपकस्य रूपे इत्यनेन तच्छरीरकत्वं न तव कर्माद्युपाधिप्रयुक्तमपितु निरुपाधिकमित्युक्तं यत उभयावस्थावस्थितयोश्चिदचितोस्त्वच्छरीरत्वमत एव न चान्यत. अन्यत्त्वदनात्मकं किञ्चिदपि वस्तु नास्त्येतमुभयत्र त्वच्छरीरभूतयोश्चिदचितोस्त्वां योगेनोपासनात्मकेन युक्ताः सन्तो मुनयो विचक्षते पश्यन्ति । तत्र दृष्टान्तः, वह्निमिव दारुषु यथा दारुषु मथनाद्युपायेन वह्निं विचक्षते तद्वत्. अन्यतो योगादन्यत उपायान्तरात्स्यात् साक्षात्कार इति शेषः उपायान्तरेण साक्षात्कारो न स्यादित्यर्थः ॥ ४७ ॥

न चान्यदित्यनेनान्यत् त्वदात्मकं नास्तीत्यु[illegible]न्यतः स्यादित्यनेनोपायान्तराद्ध्यत्वश्च तदेतदुभयं प्रपञ्चयन् सर्वात्मकब्रह्मसाक्षात्कारादेव नि शेषमिन्द्रियजय इत्याह—त्वमिति, द्वाभ्याम् । त्वत्तस्सर्वात्मकत्वं प्रपञ्चयति, त्वमिति । त्वमेव वाय्वादिरूपेणावस्थितः तच्छरीरकत्वेनावस्थित इत्यर्थः । पूर्वं "तव रूपे" इति व्यतिरेकनिर्देशादत्राभेदनिर्देशाच्चेदं तादात्म्यं शरीरात्मभावनिबन्धनमित्यवगम्यते तत्र मात्राः शब्दादयस्तन्मात्राः प्राणाश्चेन्द्रियाणि हृदयं मनः चिदनुग्रहं ज्ञानोत्पत्त्यनुग्राहकं हृदयविशेषणं चिदनुग्रहश्चेति पाठे ज्ञानोत्पत्त्यनुग्राहको महान् बुद्धितत्त्वात्मक उच्यते किं बहुना सगुणः सत्त्वादिगुणयुक्तः प्रकृतिपरिणामात्मकः सर्वः पदार्थः निर्गुणः सत्त्वादिगुणरहितस्तद्परिणामात्मको जीववर्गश्च मनश्च वचश्च तयोः समाहारो मनोवचस्तेन निरुक्तं विषयीकृतं तदेतत्सर्वं त्वमेव त्वच्छरीरभूतमेव ॥ ४८ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

सुखानुभवार्थं हि मोक्षाकांक्षा तच्छब्दादिविषयेभ्योऽपि स्यादतोऽनागतस्तन्नाधितमोक्षसुखाय को वा प्रेक्षावान् महाप्रयत्नं कुर्यादुन्मत्तमन्तरेणेति तत्राह—यन्मैथुनादीति । मैथुनादिगृहस्थसुखं यत् तल्लब्ध्वा देहकृपणा देहमात्रपोषणपरायणास्तृप्यन्ति नान्ये प्रेक्षावन्त इति शेषः । तदपि न सुखमित्याह, बहुदुःखेति, तत्र बुद्धिमतैवं कार्यमित्याह—कण्डूनिवादिति । मनसिजं कामम् ॥ ४५ ॥

मुमुक्षुभिः प्रथमत इन्द्रियजय एव समर्थनीयोऽन्यथा मुक्तिसाधनानामपि मौनादीनां लोके जीवनोपायमात्रत्वं भवतीत्याह, मौनेति । आपवर्ग्या मुक्तिहेतवः प्रायः सम्यग्भक्त्यानुष्ठिता इति शेषः । हे पुरुष ! परं न चेत् त एवाजितेन्द्रियाणां पुंसां वार्तास्तत्कालजीवनमात्रोपाया भवन्त्युत अपि संभावनामात्र नतु मुख्यत इत्यर्थः । लोकमोहनार्थं मौनादिकमनुतिष्ठतां दांभिकानां तदपि न सेत्स्यतीत्याह, अत्र जीवलोके वा यथा अजितेन्द्रियाणां जीवनमात्रोपाया न तथा दांभिकानां भवन्तीति "वा विकल्पोपमानयोः" इत्यभिधानं नवा भवन्तीत्येकं वाक्यमिति वा ॥ ४६ ॥

मौनादीनां क्लेशसाध्यत्वेनासर्वाधिकारिकत्वात् सर्वाधिकारिकोपासनाविषयं निरूपयति, रूपे इति । इमे सदसती कार्यकारणे तव रूपे त्वदधीनत्वात्त्वत्सान्निधानयोग्ये अत्रप्रमाणमाह, वेदेति । "द्वावेव ब्रह्मणो रूपे" इत्यादौ कार्यकारणत्वं किं विकारभावेन निमित्तनैमित्तिकभावेन वेत्याशंक्य यथायोग्यमित्यूहनीयमित्यत्र दृष्टान्तमाह—बीजेति । व्याख्यातमेतत् "विज्ञानमानन्दं ब्रह्म" इतिवत् वेददृष्टे चेत् किं साक्षाद् रूपे इति ? नेत्याह—नचेति । अन्यद्विलक्षणं ज्ञानानन्दादिलक्षणं नैव कुतोऽत्राह—अरूपकत्वेति । प्राकृतरूपाभावादित्यर्थः । महतां प्रत्यक्षं चात्रप्रमाणमित्याह, युक्ता इति । भक्तियोगेनोभयत्र रूपद्वये युक्ता उपासनालक्षणध्यानेनेति शेषः । युक्ता योगिनः उभयत्र सन्निहितं त्वां पश्यन्तीति वा दर्शनप्रकारमाह—वह्निमिति । योगेन यथनाद्युपायेन अन्ययोगं निवारयति—नान्यत इति । भक्तियोगादन्यतोऽन्येनेति । साक्षात्स्वरूपादन्यत् प्राकृतं रूपं नैव "अरूपमक्षरं ब्रह्म" इति श्रुतेः । अतो न साक्षाद्रूपे इति वा योजना, साक्षात्स्वरूपापेक्षया स्वरूपादन्यद्रूपं नेत्याचार्यविवरणमत्र प्रमाणम् ॥ ४७ ॥

के ते कार्यकारणे इत्यतस्तन्नामनिर्देशः तत्सत्ताप्रदत्वेन तद्वशत्वे तद्रूपत्वाभिप्राय इत्याशयेनाह—त्वमिति । चिदनुग्रहश्चेतनस्तन्मनसा वचसा निरुक्तं न त्वदन्यत् त्वां विना प्रवृत्तिमन्नास्ति सगुणः संसारी शौक्ल्यादिगुणयुक्तो वा. विगुणो मुक्त उत्पन्नानन्तरक्षणविशिष्टपदार्थो वा ॥ ४८ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

त्वमिति। इदयमन्तरिन्द्रियं मनोबुद्ध्यहङ्कारचित्तात्मकं । चित् शुद्धो जीवः अनुग्रहः स्वसन्मुखीकरणशक्तिः किं बहुना सगुणो मायिकः विगुणश्चामायिकः सर्वार्थस्त्वमेवेति ॥४८॥४९॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

नन्वेते स्त्रीसम्भोगादिभि. सुखिन एव न कृपणास्तत्राह—यदिति । करयोः कण्डूयनेन सङ्घर्षणेनैव दुःखमनुदुःखं यत्र तत् तर्हि दुःखत्वादेव ततो निर्विद्य मुच्येरंस्तत्राह—कृपणाः कामुकाः बहुदुःखभाजोऽपि इह गृहमेधिसुखे दुःखरूपेऽपि न तृप्यन्ति भवतामिति न मन्यन्ते कण्डूतिवत् कण्डूतायिवेत्यर्थः । ननु, कश्चित् कश्चित्ततो निर्विण्णोऽपि दृश्यते सत्यं त्वत्प्रसादाद्धीर एव मनसिजं कामं दुःखस्वरूपमेव विषहते न तु सर्वे ॥ ४५ ॥

ननु, ब्राह्मणानां तावन्मौनादिभिर्मोक्षसाधनैः स्वत एव सिद्धैर्मोक्षोऽपि स्वत एव सिद्धस्तत्राह, मौनेति । हे पुरुष ! अन्तर्यामिन् ! त्वां किं विज्ञापयामीति भावः । ये मौनादयो दश आपवर्ग्या अपवर्गहेतवः प्रसिद्धाः रहः विविक्तवासः ते तु प्रायशः अजितेन्द्रियाणां विषयभोगार्थमेव तान् विक्रीणानां वार्त्ता जीवनोपाया एव भवन्ति दांभिकानां तु वार्त्ता अपि भवन्ति न वा दम्भस्या निश्चफलत्वात् ॥ ४६ ॥

त्वत्प्राप्तिस्तु भक्तियोगं विना मौनादिभिर्नैव भवतीत्याह—रूपे इति । इमे सदसती कार्य्यकारणे बीजाङ्कुराविव प्रवाहापन्ने समष्टिव्यष्टी तवैव रूपे न च अन्यत्समष्टिव्यष्ट्यात्मकं विश्वमिदं त्वत्तो भिन्नं न भवति अरूपकस्य प्राकृतरूपरहितस्य तव अतो युक्ता विवेकिनः त्वाम् उभयत्र समष्टौ व्यष्टौ च विचिन्वन्ते प्राप्तुमन्विष्यन्ति यतस्त्वं कारणत्वेनोभयत्र वर्त्तसे इति भावः । योगेन उपायेन भक्तियोगेनैव न चान्यतो ज्ञानादिना "भक्त्याहमेकया ग्राह्यः" इति त्वदुक्तेरिति भावः । वह्निपक्षे योगेन मन्थनेन अत एव भक्त्येत्यस्य स्पष्टशब्दस्याप्रयोगः ॥ ४७ ॥

उक्तमर्थं विवृणोति—त्वमिति । इदयं मनः चित् चित्तं अनुग्रहोऽनुग्राहको देवतावर्गः सगुणः स्थूलः विगुणः सूक्ष्मः मनश्च वचश्च मनोवचस्तेन निरुक्तं प्रकाशितं किमपि त्वत्तो नास्ति ॥४८॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

ननु, एते कृपणाः विषयसुखात्तद्दोषदर्शनेन विरक्ताः सन्तो मज्जिज्ञासया मुक्ता भविष्यन्तीत्यत्र त्वदनुग्रहं विना दुःखोदर्कात् विषयसुखादपि जनानां विरागो न भवतीत्याशयेनाह, यदिति । यन्मैथुनादिगृहमेधिसुखं यद्यपि तुच्छं क्षणभङ्गुरादिदोषग्रस्तं कण्डूयनेन सङ्घर्षणेन दुःखं यस्मिन् तत्तथाविधं च तथापीह कृपणा बहुदुःखभाजो न तृप्यन्ति कश्चित्त्वत्कृपापात्रो धीर एवं कण्डूतिवन्मनसिजं कामं विषहेत ॥ ४५ ॥

किञ्च मौनादयः आपवर्ग्याः मुक्त्युपायाः ते तु तथा भूता अपि हे पुरुष ! अत्र लोके त्वजितेन्द्रियाणां बुभुक्षूणां परं केवलं वार्त्ता जीवनोपाया न वा भवन्ति उत अपि च दाम्भिकानान्तु वार्त्ता जीवनोपाया वा न भवन्ति दम्भेन तत्फलनाशात् इत्यर्थः । तत्र मौनं वृथा वचनत्यागः व्रतानि एकादश्युपवासादीनि श्रुतं शास्त्रश्रवणम् तप आलोचनं ज्ञानम् अध्ययनं

नैते गुणा न गुणिनो महदादयो ये सर्वे मनःप्रभृतयः सहदेवमर्त्याः।
आद्यन्तवन्त उरुगाय! विदन्ति हि त्वामेवं विमृश्य सुधियो विरमन्ति शब्दात्॥ ४९॥
तत्ते ऽर्हत्तम! (१) नमःस्तुतिकर्मपूजाः कर्म स्मृतिश्चरणयोः श्रवणं कथायाम्।
संसेवया त्वयि विनेति षडङ्गया किं भक्तिं जनः परमहंसगतौ लभेत॥ ५०॥

नारद उवाच।

एतावद्वर्णितगुणो भक्त्या भक्तेन निर्गुणः।
प्रह्लादं प्रणतं प्रीतो यतमन्युरभाषत॥ ५१॥

श्रीभगवानुवाच।

प्रह्लाद! भद्र! भद्रं ते प्रीतो ऽहं ते ऽसुरोत्तम!।
वरं वृणीष्वाभिमतं कामपूरो ऽस्म्यहं नृणाम्॥ ५२॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

विधिवद्वेदाध्ययनम् स्वधर्मः वर्णाश्रमधर्मः व्याख्या अध्यापनम् रह एकान्तवासः जपो मन्त्रजपः समाधिर्देवप्रावण्यम् एवं त्वदनुग्रहं विना अचैतरयथाः तरणं त्वत्पदप्राप्तिश्च कस्याप्यधिकारिणः केनाप्युपायेन न सम्भवतीति फलितोर्थः॥ ४६॥

अथ त्वदनुग्रहलब्धया सर्वत्र त्वद्दर्शनपूर्वकया त्वद्भक्त्यैव मुक्तिर्जनस्य स्यादित्याह—रूपे इति चतुर्भिः। वेदसृष्टे वेदेन प्रकाशिते इमे सदसती स्थूलसूक्ष्मे बीजाङ्कुराविव कार्यकारणे कारणं प्रधानं कार्यं ब्रह्माण्डं चेत्यर्थः। अरूपकस्य कर्मजन्यरूपरहितस्य तवैव नान्यत् त्वदन्यत् किमपि न "पुरुष एवेदं सर्वम्" इति श्रुतेः। अत एव युक्ताः त्वदनुग्रहयुक्ता उभयत्र रूपद्वये समत्वं यथा भवति तथा दारुषु वह्निमिव योगेन त्वदनुग्रहलब्धबुद्धियोगेन त्वां विचिन्वते प्राप्तुमन्विष्यन्ति नान्यतः स्यात् एवमन्वेषणम् अन्यतः अधिकारिसामर्थ्यात् साधनसामर्थ्याच्च न स्यात् किन्तु त्वदनुग्रहत एव स्यादित्यर्थः "ददामि बुद्धियोगं तं येन मामुपयान्ति ते" इति श्रीमुखवचनात् रूपे इमे इत्यनेन चराचरयोर्ग्रहणं न भवति बीजाङ्कुराविवेति निर्देशात् अत एव द्वितीये "अतः परं यदव्यक्तम्" इत्यत्र प्रधानस्यैव ग्रहणं न जीवस्य॥ ४७॥

सर्वं त्वदात्मकमेवेत्याह—वायुरादिस्त्वमेव मात्राः शब्दादयः इन्द्रियमन्तःकरणम् चिच्चेतनवर्गः अनुग्रहोऽनुग्राहको देवतावर्गः सगुणः सर्वोपि प्राकृतपदार्थः विगुणः प्रकृतिगुणरहितः कालः अप्राकृतलोकश्च किं बहुना मनश्च वचश्च तयोः समाहारस्तेन निरुक्तं विषयीकृतं त्वत्त्वत्तः अन्यत् नास्ति सर्वस्य त्वच्चेतनाचेतनशक्तिमयत्वात्॥ ४८॥

भाषा टीका।

यह जो सांसारिक गृह मेधीय सुख हैं अति तुच्छ है जैसा हाथों के खुजाने से फिर दुःख होता है ऐसाही यह भी दुःख दुःख है कृपणजन बहुत दुःख भोगने पर भी इससे तृप्त नहीं होते है। धीर पुरुष को उचित है कंडूति ( खुजाल ) के समान मनसिज ( काम ) को सहन करे॥ ४५॥

मौन, व्रत, श्रुत, तप, वेदाध्ययन, स्वधर्म, व्याख्या, एकान्त निवास, जप, समाधि, ये दशों मुक्ति के साधन हैं, किन्तु हे पुरुष! ये ही सब अजितेन्द्रियों की वार्ता ( जीविका ) होजाते है वे इन्हीं से धन उपार्जन कर कुटुंब पालन करते हैं। और दांभिकों की तो वार्ता भी नहीं होसकते हैं। दंभार्थ व्यर्थ परिश्रम होता है॥ ४६॥

( हे भगवन् ) ये स्थूल सूक्ष्म कार्य कारण दोनो आप के रूप हैं वेदने प्रकाश किये है, बीजांकुर के समान स्थित हैं आपसे पृथक् नही है। युक्त जन योग से इन दोनों मै आप को प्रत्यक्ष ढूंढ लेते है। जैसे काष्ठों में अग्नि को, आपके विना इस जगत् की सृष्टि नही होसकती है॥ ४७॥

हे भूमन्! वायु अग्नि पृथिवी आकाश जल और पञ्चतन्मात्रा प्राण इन्द्रियें मन चित्त अहङ्कार सर्व आप ही हो, स्थूल सूक्ष्म जो कुछ मन और वाणी से प्रकाशित है वह आप से अलग कुछ भी नहीं है॥ ४८॥

श्रीधरस्वामिकृतभावार्थदीपिका।

अभक्तास्तु स्वस्मिन्ननुगतमपि त्वां न जानन्तीत्याह—नैत इति। एते गुणाद्यभिमानिनो देवा आद्यन्तवन्तो जडोपाधित्वादनाद्यन्तं निरुपाधिं त्वां न विदन्ति हि यस्मात् सुधियो विद्वांस एवं विचार्य

(१) तत्ते महत्तम! इति वीर० पा०

श्रीधरस्वामिकृतभावार्थदीपिका ।

शब्दादध्ययनादिव्यापाराद्वुपरमन्ति त्वामेव समाधिनोपासत इत्यर्थः । तथाच श्रुतिः "किमर्था वयमध्येष्यामहे किमर्था वयं यक्ष्यामहे" इति "नानुध्यायेद्बहून् शब्दान्वाचो विग्लापनं हि तत्" इति स्मृतिश्च—

"यदा ते मोहकलिलं बुद्धिर्व्यतितरिष्यति ।
तदा गन्तासि निर्वेदं श्रोतव्यस्य श्रुतस्य च" ॥

इत्यादिः ॥ ४९ ॥

उपसंहरति-तदिति । हे अर्हत्तम ! नमःस्तुतिकर्मपूजाः प्रणिपातस्तुति सर्वकर्मार्पणानि कर्म च परिचर्या चरणयोः स्मृतिश्च कथायाः श्रवणं चेत्येवं षडङ्गया सपर्यया तया विना परमहंसानां गतौ प्राप्ये त्वयि जनः कथं भक्तिं लभेत? यस्मादेवं भक्तिं विना न मोक्षो न च भक्तिः संसेवया विनाऽतः प्राक् प्रार्थितं त्वद्दास्ययोगमेव देहीति प्रकरणार्थः ॥ ५० ॥

एतावन्तो वर्णिता गुणा यस्य यतमन्युरुपसंहृतकोपः ॥ ५१ ॥

कामान्पूरयतीति तथा यद्वा पुरुषार्थप्रवाहो ऽस्मीत्यर्थः ॥ ५२ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

नैत इति, गुणाः सत्त्वादय. गुणिनः प्राकृतगुणपरिणामात्मकाः महदादयः आदिशब्देनाहङ्कारतन्मात्राकाशादिभूतानि विवक्षितानि सह देवमर्त्याः देवमर्त्यादिभिः सहिताः मनःप्रभृतयश्च करणानि करणिनश्च ये इत्यर्थः । न एते सर्वे त्वां न विदन्ति गुणाः न विदन्ति गुणिनोऽपि न विदन्तीति प्रत्येकान्वयाभिप्रायेण नञ्द्वयोपादानं सकरणाः सर्वे देवमनुष्यादयः स्वान्तरात्मतयावस्थन्तमपि न त्वामुपायान्तरेण विदन्तीत्यर्थः । तत्र हेतुं वदंस्तान् विशिनष्टि, आद्यन्तवन्त इति । कर्मायत्तोत्पत्तिविनाशिनः कर्मणा संकुचितज्ञानत्वान्न विन्दन्तीति भावः । मुनयः सर्वान्तरात्मभूतत्वत्स्वरूपमननशीलास्तु । हे उरुगाय ! त्वामेव सर्वात्मकब्रह्मानुसन्धानरूपयोगेन तत्स्वाप्त्यान्तरविरोधिकर्मनिरसनेन विमृश्य विमर्शनपूर्वकं साक्षात्कृत्य शब्दात् शब्दादिविषयाद्विरमन्ति एतेन हि निःशेषनिवृत्तिरुक्ता इति भावः ॥ ४९ ॥

एवमुपासनात्मकभक्त्येकवेद्यत्वं निरतिशयानन्दरूपत्वत्स्वरूपविषयभक्तियोगगतकथार्थादेव शब्दादिविषयेभ्यो विरामश्चोक्तः सा च भक्तिर्वक्ष्यमाणषडङ्गसेवया विना दुर्लभेति वदन्नुपसंहरति-तदिति । हे अर्हत्तम ! तव नमस्तुतिकर्म नमस्क्रिया नमस्कारः स्तुतिक्रिया च. पूजा अर्घ्यपाद्यादिनिवेदनात्मिका कर्म परिचर्यात्मकम्. यद्वा, प्रथमकर्मशब्देन पादसेवनादिपरिचर्यात्मकं कर्म उच्यते पूजाकर्म पूजात्मकं कर्म-चरणयोः स्मृतिः स्मरणं कथायां विषयभूतायां श्रवणं कथाविषयकश्रवणं चेतीत्थं षडङ्गया सेवया विना परमहंसानां प्राप्ये त्वयि भक्तिं जनो लभेत किम् ? नैव लभेतेत्यर्थः ॥ ५० ॥

तदेवं प्रह्लादेन संस्तुतो नृसिंहस्तमुवाचेत्याह देवर्षिः—एतावदिति । भक्तेन प्रह्लादेन भक्त्या एतावदेतावन्मात्रं वर्णिता गुणा यस्य एतावच्छब्देन गुणानामानन्त्यं सूचयति-- निर्गुणो हेयगुणरहितः श्रीनृसिंहः यतमन्युरुपसंहृतक्रोधः प्रीतः स्तुत्या हृष्टः "स महात्मा सुदुर्लभः" इत्युक्तरीत्या दुर्लभस्वभक्तलाभेन वा प्रीतः प्रणतं तं प्रह्लादमभाषतोवाच ॥ ५१ ॥

तदेवाह-प्रह्लादेति, त्रिभिः । हे प्रह्लाद वत्स ! ते भद्रमनिष्टनिवृत्तिरिष्टप्राप्तिश्च भवेत् कुतः हे असुरोत्तम ! यतो ऽहं ते त्वया प्रीतः प्रीतिं प्रापितः अत एवाभिलषितं वरं वृणीष्व वरय अहं नृणामर्थिनां कामपूरः काम्यन्त इति कामाः धर्मादयस्तान् पूरयति ददातीति तथा ऽहमस्मि ॥५२ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

पृथिव्यादिमहत्तत्त्वान्तं पदार्थजातं कार्यकारणात्मना छित्वेन कोडीकृतं भगवद्रूपं ततोभिन्नमित्युक्तम् इदानीं तदवस्थितपरमात्मानं तदभिमानिनो देवा अपि साकल्येन न जानन्तीत्येव. विश्वाऽनन्तमाहात्म्यामृतराशिरिति निश्चित्य, तमुपासते सन्त इत्याह, नेति । गुणाः सत्त्वादिगुणाभिमानिनः गुणिनो गुणविकाराः सहदेवमर्त्या इत्यत्र देवशब्देन पृथग्ग्रहवन्त इन्द्रादयो गृह्यन्ते सुधियो निश्चितशास्त्रार्थाः शब्दाद्वदादिशब्दराशिप्रमाणादेते आद्यन्तवन्तस्त्वां न विदन्तीत्येवं विमृश्य विचार्योपास्य तत्प्रसादेन संदृश्य विरमन्ति संसारादिति शेषः । "यद्वाचानभ्युदितम्" इत्यादि श्रुतेः शब्दाद्विरमन्तीत्यत्र शब्दत्यागो नार्थः किंतु वेदेन निर्णीततत्त्वस्य तत्त्वे निरन्तरस्यन्दमानबुद्धिजलराशेः पुंसो हरिगुणानुस्मरणायासो नास्तीति वा ॥ ४९ ॥

श्रीनारायणप्रसाद एव पुरुषार्थसाधनमित्युक्तं तस्य भक्तिज्ञाने तयोश्च षडङ्गोपासनासाध्यं ध्यानं विना नान्यदन्यथा न स्यादित्याशयेनाह—तत्त्व इति । हिशब्देनान्यथाशीत्युक्त इत्याह—अपि अङ्घ्री पादौ तव कृपानुगमनेनियोज्याविनिग्राह्यं एवं षडङ्गया सेवया विना जनो मुमुक्षुः परमहंसानां गत्याश्रय, हे त्वयि भक्तिं ज्ञानं च लभेत किम् ? साधनान्तराभावान्नाप्तो निश्चयः । भक्तिज्ञानयोर्हेतुहेतुमद्भावादेकग्रहणेन द्वयोर्ग्रहणं युज्यत इति भावः । "परा पूर्वेषां सङ्ख्या वृणक्ति" इति श्रुतेः ॥ ५० ॥

हरेर्गुणेषु प्रक्षेपाशयात्प्रह्लादस्यापि तज्जातित्वेन तत्स्तुत्या कोपोपशमः स्यात्किम् ? प्रत्युताक्षेपकरत्वेनाग्नौ शुष्केन्धनप्रक्षेपण प्रज्वलनाय स्यादिति तत्राह, एतावदिति । योग्यतानुकूल्येन भक्त्या भक्तेनेति विशेषणद्वयेन शङ्कानिरस्तेति ज्ञातव्यं जातित्वमप्रयोजकं भक्तिरेवेति सूचनेन दुष्टत्ववत्तुन्मत्तो न भवति भगवानिति सिद्धम् ॥ ५१ ॥

मन्युशान्तेः किं गमकमिति तत्राह—प्रह्लादेति । वरदानसामर्थ्ये हेतुमाह—कामपूर इति । नृणां भक्तानामिति शेषः ॥ ५२ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

कर्म पूजापरिचर्या कर्मस्मृतिर्लीलास्मरणं चरणयोरिति सर्वत्रान्वितम्, भक्तिव्यञ्जकं तस्मात् सर्वकृतार्थतामूलत्वत्-प्रेमभक्तिसम्पादनीं षडङ्गां संसेवामेव सर्वेभ्योपि देहि. मद्भ्रस्त्वद्भक्तकृपया साक्षाद्दङ्घ्रिमूलप्राप्तौ त्वदसाक्षाद्दास्ययोगादौ वा कृतार्थतामापन्नोऽपि तेनैव कृतार्थतां मन्ये इति. ब्रह्मादिषु प्रसादो यः प्रथमं प्रार्थितःतस्यापि कैमुत्येन गमितत्वात् सर्वप्रार्थना वाक्यैकवाक्यत्वे सिद्धे तदनुगतानामन्येषामपि वाक्यानां तत स्वतःसिद्धम् ॥ ५० ॥

गुणाः कारुण्यादयः तत्तदानादिक्रियाशक्ति रूपाश्च ॥ ५१ ॥

तदेवं श्रीमत्प्रह्लादस्य सर्वजीवगतां कृपामनुमोदमानः तस्याश्च पूरकं च एतत् कीर्त्तयेदिति पर्यन्तमाशंमनं करिष्यन्-श्रीष्टान्तरमर्थयितुमुत्साहयति—अभिमतमन्यमन्यमपि वरम् ॥५२॥५३

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

त्वज्ज्ञानं त्वद्भक्त्यैव भवेत् नतु शास्त्राध्ययनबुद्धिकौशलादिभिरित्याह—नेति। यद्येन त्वां न विदन्ति तर्हीतैरेव मनोबुद्ध्यादिभिः शास्त्राण्यध्ययनाध्यापनादिभिर्विचार्य जीवाः कथं ज्ञास्यन्ति विमृश्य,शब्दाद्ध्ययनादिव्यापारादुपरमन्ति तथा च श्रुतिः"किमर्था वय यक्ष्यामः" इति "नानुध्यायेद्बहून् शब्दान् वाचो विग्लापनं हि तत्"इति स्मृतिश्च "यदा ते मोहकलिलं बुद्धिर्व्यतितरिष्यति। तदा गन्तासि निर्वेदं श्रोतव्यस्य श्रुतस्य च" इत्यादि ॥ ४६ ॥

स्तुतिमुपसंहरति—तदिति। यस्मादध्ययनादिभिस्त्वज्ज्ञानं भवेत्तस्मात् त्वज्ज्ञानार्थमाग्रहं परित्यज्य सर्वपुरुषार्थसारस्य त्वत्प्रेम्णः साधनार्थमेव यतेतेत्याह, हे अर्हत्तम! नमो नमस्कारश्च स्तुतिकर्म स्तव करणञ्च पूजा अर्चनञ्च ताः कर्मपरिचर्य्या चरणयोः स्मृतिश्च कथायां श्रवणं चेत्येवं षडङ्गया सेवया भक्त्या विना त्वयि किं भक्तिं प्रेमाणं लभेत? नैव लभेतेत्यर्थः। परमहंसानां ज्ञानिनां गतिर्मुक्तिर्यस्मात्तस्मिन्नपि कथंचिद्भक्तिमिश्रज्ञानेन मुक्तिमेव लभेतेति भाव.। तस्मात्सर्वकृतार्थता—मूलत्वत्प्रेमभक्तिसम्पादनीं षडङ्गां संसेवामेव सर्वेभ्योऽपि देहि सा दुर्लभा चेत् मुक्तिमेव दत्वा संसारदुःखात्तत्सर्वांस्त्रायस्व अहन्तु त्वद्भक्तसेवयैव कृतार्थीकृत एव वर्त्ते इति न काचिच्चिन्तेति भावः ॥ ५० ॥

गुणाः कारुण्यादयः निर्गुणः प्राकृतगुणरहितः यतमन्युः मद्भक्ताय प्रह्लादायापि द्रुह्यतीति यो दुर्वारो मन्युरभूत् स प्रह्लादस्यानन्ददर्शनादुपशान्त इत्यर्थः ॥ ५१ ॥

अभिमतं वृणीष्वेति मयिभृत्यवत्सले परमोदारचूडामणौ कः संकोच इति भावः। येषां कृते त्वं मां प्रार्थयसे तेषामपि नृणामहं कामपूरोऽस्मि पुरुषार्थप्रवाहरूप एव वर्त्ते. किं पुनरेकां मुक्तिमेव ददे इति भावः। तेन प्रह्लादबुद्धिविषयीकृतास्तात्कालिका जीवा निस्तीर्णा एव जीवानामानन्त्याच्चदन्यैरेव जीवैः तदनन्तरं ब्रह्माण्डमपूरीति ज्ञेयम् ॥ ५२ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

एते गुणाः सत्वादयो जडत्वात् त्वां न विदन्ति गुणिनो महदादयो गुणकार्यभूता ये च मनःप्रभृतयस्ते सर्वे आद्यन्तवन्तः जडाश्च अतो न विदन्ति। हे उरुगाय! सह देवमर्त्याः देवैर्मर्त्यैश्च सहिताः सुधियः साधवस्तु "एवं युक्ताः समक्षमुभयत्र विचिन्वते त्वां योगेन वह्निमिवदारुषु" इत्युक्तप्रकारेण त्वां विमृश्य शब्दात् ज्ञानोपायबोधकात् शास्त्राद्विरमन्ति फलं प्राप्याध्यापनाध्ययनश्रमं विहाय त्वां ध्यायन्तीत्यर्थः ॥ ४६ ॥

हे अर्हत्तम! यस्मात्त्वमेव सर्वात्मा तस्मात्ते सेवया साधनरूपया भक्त्या विना परमहंसानां गतौ प्राप्ये त्वयि जनः भक्तिं परां भक्तिं किं लभेत? नैव लभेतेत्यर्थः। अतः सेवां देहि, यया परा भक्तिर्यया जनस्य मुक्तिरिति फलितोर्थ.। कथंभूतया नमो नतिश्च स्तुतिकर्म स्तुतिकरणं च पूजा ऽर्चनञ्च कर्म परिचर्या च चरणयोः स्मृतिः कथायां श्रवणं चेति षडङ्गया ॥ ५० ॥

निर्गुणो हेयगुणरहितः भक्त्या प्रह्लादेन एतावत् एतावन्मात्रं वर्णिताः गुणाः कल्याणरूपा यस्य सः जित उपसंहृतो मन्युर्येन सः प्रह्लादमभाषत ॥ ५१ ॥

कामान् पूरयतीति कामपूरः ॥ ५२ ॥

---

### भाषा टीका।

न ये गुण और न गुणी जो मनः प्रभृति हैं और म हदादिक है देवता और मनुष्यों सहित वे सवी आदि अन्त वाले है हे उरुगाय! ( वेदपुराणादिकों मे आप बहुत गाये गये हो ) इसी कारण से ये सब आपको नहीं जान सक्ते है ऐसा विचार कर ही सुधीजन शब्द अर्थात् बहुत पठन पाठन की [illegible] से विराम को प्राप्त हो जाते है ॥ ४६ ॥

हे अर्ह[illegible]! हे पूज्यतम! आप को न[illegible]स्कार स्तुति और सर्व कर्मार्पण परिचर्या चरणस्मृति कथाश्रवण, इन छै अङ्गो सहित आप की सेवा के विना मनुष्यक्या परमहंसों के प्राप्य आप में भक्ति को पासक्ता है? नहीं, किन्तु आप की सेवा ही से सिद्धा भक्ति मिलती है ॥ ५० ॥

नारद उवाच ॥

नारदजी बोले, कि—आप स्वयं निर्गुण है अर्थात् प्राकृत गुण शून्य हैं, तौ भी अपने भक्त प्रह्लाद ने भक्ति से आप के गुण वर्णन किये, तब प्रभुने कोप शान्त कर प्रसन्न हो पश्चात् भक्त प्रह्लाद से भाषण किया ॥ ५१ ॥

श्रीभगवानुवाच।

श्री भगवान अर्थात् श्री नरसिंह देव बोले, कि—हे भद्र! हे प्रह्लाद! हे असुरोत्तम! हम तुम्हारे ऊपर प्रसन्न है तुम अपने अभीष्ट वर मांगलो मैं मनुष्यों का कामनाओं का पूर्ण करने वाला हू ॥ ५२ ॥

---

मामप्रीणत आयुष्मन् ! दर्शनं दुर्लभं हि मे ।
दृष्ट्वा मां न पुनर्जन्तुरात्मानं तप्तुमर्हति ॥ ५३ ॥
प्रीणन्ति ह्यथ मां धीराः सर्वभावेन साधवः ।
श्रेयस्कामा महाभागाः सर्वासामाशिषां पतिम् ॥ ५४ ॥
एवं प्रलोभ्यमानोऽपि वरैर्लोकप्रलोभनैः ।
एकान्तित्वाद्भगवति नैच्छत्तानसुरोत्तमः ॥ ५५ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायाम् वैयासिक्यां
सप्तमस्कन्धे प्रह्लादाऽनुचरिते दैत्यराजवधे नृसिंहस्तवो नाम
नवमोऽध्यायः ॥ ९ ॥

### श्रीधरस्वामिकृतभावार्थदीपिका ।

अप्रीणतः अप्रीणयतः तप्तुमपूर्णकामत्वेन शोचितुम् ॥ ५३ ॥
प्रीणन्ति तोषयन्ति ॥ ५४ ॥
एकान्तित्वान्निरुपाधिभक्तत्वात् ॥ ५५ ॥

इति श्रीमद्भागवते महापुराणे सप्तमस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिकायाम्
नवमोऽध्यायः ॥ ८ ॥

---

### श्रीमद्वीरराघवाचार्य्यकृतभागवतचन्द्रचन्द्रिका ।

हे आयुष्मन् ! मामप्रीणतः प्रीतमकुर्वतः पुंसो दुर्लभं हि मम दर्शनं मां दृष्ट्वा जन्तुर्देही पुनरात्मानं तप्तुमपूर्णकामत्वेन शोचितुं नार्हति ॥ ५३ ॥

अथातो धीरा जितेन्द्रियाः श्रेयस्कामयमाना महाभागा विवेकिनः साधवः सर्वासामाशिषां पुरुषार्थानां पतिं दातारं मां सर्वभावेन करणत्रयैक्येन प्रीणन्ति तोषयन्ति हि खलु ॥ ५४ ॥

एवं वराय चोदितोपि नैच्छदसुरोत्तम इत्याह, नारदः एवमिति । लोकानां विषयातुराणां प्रलोभनैर्विमोहकैर्वरैरेवमित्थं प्रलोभ्यमानोऽप्यसुरोत्तमः प्रह्लाद एकान्तभक्तत्वादनन्यप्रयोजनभगवद्भक्तियुक्तत्वात्तान् धर्मादीन्वरान्नैच्छन्नैयेष ॥ ५५ ॥

इति श्रीमद्भागवते महापुराणे सप्तमस्कन्धे
श्रीमद्वीरराघवाचार्य्यकृतभागवतचन्द्रचन्द्रिकायाम्
नवमोऽध्यायः ॥ ९ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

मत्प्रसाद एव दर्शने कारणमित्याह—मामिति । मामप्रीणतोऽप्रीणयतः मद्दर्शनफलं च पान्यदर्शनवदित्याह, दृष्ट्वेति ॥ ५३ ॥

यतो न तथाऽन्यथा तस्माद्धीरा माधवं मां प्रीणन्ति प्रीणयन्ति केन सर्वभावेन पूर्णभक्त्या माधव इत्यस्यार्थो मङ्गलदेवतापतिरित्यभिप्रायेणाह—सर्वेषामिति । सर्वेषामविशेषेण या या अभिलषिता आशिषस्तासां तासामाशिषां पतिं पातृत्वेन दातारमित्यर्थः ॥ ५४ ॥

प्रह्लादोपि सामान्यभक्तो न भवति किंतु भक्तोत्तम इति प्रकटनाय भगवता विप्रलुब्धोऽपि तान्वरान्नैच्छदित्याह, एवमिति । एकान्तित्वान्नैसर्गिकभक्तत्वात् ॥ ५५ ॥

इति श्रीमद्भागवते महापुराणे सप्तमस्कन्धे श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम्
नवमोऽध्यायः ॥ ९ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

अथ अत एव अभिमत वरेच्छात एव ॥ ५४ ॥
एवं पूर्वोक्त प्रकारेण वरैः स्वयमेव निर्दिष्टैः ॥ ५५ ॥

इति श्रीमद्भागवते महापुराणे सप्तमस्कन्धीये
श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे
नवमोऽध्यायः समाप्तः ॥ ९ ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

अप्रीणतः अप्रीणयतः तप्तुम् अपूर्णकामत्वेन शोचितुम् ॥ ५३ ॥
प्रीणन्ति प्रीणयति मां प्रति तुष्यन्तीति वा सर्वभावेन दास्यसख्यादिना ॥ ५४ ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

एकान्तित्वात् "एकान्तिनो यस्य न कञ्चनार्थं वाञ्छन्ति" इति तल्लक्षणात् ॥ ५५ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् ।
सप्तमेनवमोऽध्यायः सङ्गतः सङ्गतस्सताम् ॥ ८ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

मामप्रीणतोऽप्रीणयतः जनस्य मे दर्शनं दुर्लभम् भक्त्या प्रसन्नं मां दृष्ट्वा तु आत्मानं तप्तुमपूर्णकामत्वेन सन्तापयितुं नार्हति ॥५३॥
सर्वभावेनाखण्डया भक्त्या प्रीणन्ति तोषयन्ति ॥ ५४ ॥
एकान्तित्वान्निष्कामभक्तत्वात् ॥ ५५ ॥

इति श्रीमद्भागवते महापुराणे सप्तमस्कन्धीये
श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे
नवमाऽध्यायार्थ प्रकाशः ॥ ९ ॥

---

### भाषा टीका ।

हे आयुष्मन् ! मुझे प्रसन्न न करके मेरा दर्शन दुर्लभ है वस मेरा दर्शन पाकर जन्तु सन्ताप को प्राप्त नहीं होसकता है ॥५३॥

साधुजन धीर पुरुष सर्व भाव से मुझे प्रसन्न करते हैं जो कि श्रेय की कामना वाले महाभाग हैं, मैं भी कैसा हूं कि सर्व संपत्ति और अभीष्ट पुरुषार्थों का देने वाला हूँ ॥ ५४ ॥

इस प्रकार बहुत लुभाने वाले वरों से प्रह्लाद को लोभ दिखाया परंतु असुरोत्तम श्रीप्रह्लाद जी ने भगवान् के एकांति भक्त होने से उनवरों की इच्छा नहीं की ॥ ५५ ॥

इति श्रीमद्भागवत महापुराण सप्तम स्कन्ध में
श्रीप्रह्लाद चरित मे श्रीनरहरि स्तुति नामक
नवम अध्याय की भागवताचार्य कृत
भाषा टीका समाप्त ॥ ९ ॥

---

इति श्रीमद्भागवते महापुराणे सप्तमस्कन्धे नवमोऽध्यायः ॥ ९ ॥



## ॥ दशमोऽध्यायः ॥

नारद उवाच ।

भक्तियोगस्य तत्सर्वमन्तरायतयाऽर्भकः ।
मन्यमानो हृषीकेशं स्मयमान उवाच ह ॥ १ ॥

प्रह्लाद उवाच ।

मा मां प्रलोभयोत्पत्त्याऽऽसक्तं कामेषु तैर्वरैः ।
तत्सङ्गभीतो निर्विण्णो मुमुक्षुस्त्वामुपाश्रितः ॥ २ ॥
भृत्यलक्षणजिज्ञासुर्भक्तं कामेष्वचोदयत् ।
भवान्संसारबीजेषु हृदयग्रन्थिषु प्रभो ! ॥ ३ ॥
नान्यथा तेऽखिलगुरो ! घटेत करुणात्मनः ।
यस्त आशिष आशास्ते न स भृत्यः स वै वणिक् ॥ ४ ॥
आशासानो न वै भृत्यः स्वामिन्याशिष आत्मनः ।
न स्वामी भृत्यतः स्वाम्यमिच्छन्यो राति चाशिषः ॥ ५ ॥
अहं त्वका[illegible]स्त्वद्भक्तस्त्वं च स्वाम्यनपाश्रयः ।
नान्यथेहावयोरर्थो राजसेवकयोरिव ॥ ६ ॥
यदि रासीश ! मे कामान्वरांस्त्वं वरदर्षभ ! ।
कामानां हृद्यसंरोहं भवतस्तु वृणे वरं ॥ ७ ॥
इन्द्रियाणि मनः प्राण आत्मा धर्मो धृतिर्मतिः ।
ह्रीः श्रीस्तेजः स्मृतिः सत्यं यस्य नश्यन्ति जन्मना ॥ ८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

दशमे त्वनुग्रह्यामुं भक्तमन्तर्हिते हरौ ।
प्रसङ्गाद्धरिणा रुद्रे कृतो ऽनुग्रह ईर्यते ॥ १ ॥

तत्सर्वं वरजातम् ॥ १ ॥

उत्पत्त्या स्वभावेनैवासक्तं माम् तेषां कामानां सङ्गाद्भीतः ॥२॥

ननु, किमहं भक्तं प्रलोभयामि? नहि,किन्तु वरं वृणीष्वेति वदतस्तवाभिप्रायोऽन्य एवेत्याह-भृत्यलक्षणेति । हृदयस्य ग्रन्थिवद्-बन्धकेषु ॥ ३ ॥

अन्यथा ऽनर्थसाधने प्रवर्त्तनं न घटेतेत्यर्थः कथमेवं भृत्यलक्षणज्ञानं स्यात्तत्राह-य इति। ते त्वत्तः ॥ ४ ॥

ननु, कामनयाऽपि सेव्यसेवकयोः स्वामिभृत्यभावः प्रसिद्धः सत्यम्, सोपाधिको ऽसौ नतु तात्त्विक इत्याह—स्वामिन्यात्मन आशिषो ऽपेक्षमाणो नैव भृत्यः भृत्यहेतुकमात्मनः स्वाम्यमिच्छन्यो भृत्याय ददाति स च नैव स्वामी ॥ ५ ॥

आवयोस्तु तात्त्विकोऽसावित्याह-अहं त्विति। अनपाश्रयो निरभिसन्धिः अन्यथा कामाद्यभिसन्धिनाऽर्थः प्रयोजनं नास्ति ॥ ६ ॥

ननु, तथाऽपि परमोदारस्य मम सन्तोषार्थं किमपि वृणीष्वेति

श्रीधरस्वामिकृतभावार्थदीपिका ।

चेदत आह—यदीति । कामाङ्कुराणामसंरोहमनुत्पत्तिम् भवतः सकाशात् ॥ ७ ॥

ननु, कामोत्पत्तौ सत्यां को दोषस्तत्राह—इन्द्रियादीनि यस्य जन्मना नश्यन्ति आत्मा देहः ॥ ८ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

वराऽनिच्छायां हेतुं वदन् तं विशिंषन्भगवन्तं प्रह्लादः प्राहेत्याह—देवर्षिः, भक्तियोगस्येति । तद्भगवता चोदितं धर्मादिवरजातं सर्वमनन्यप्रयोजनभक्तियोगस्यान्तरायतया विघ्नरूपतया मन्यमानः स्मयमानः अहो मदभिप्रायज्ञो मदन्तरात्मा सन्मामेवं प्रलोभयतीति स्मयमानो हृषीकेशं भगवन्तमुवाच ॥ १ ॥

तदेवाह—दशभिः, मेति । उत्पत्त्या स्वभावेनैव कामेषु सक्तमासक्तमिति वा छेदः उत्पत्तिप्रभृतिकामेष्वासक्तं मान्तैःकामरूपैर्वरैर्मां प्रलोभय प्रलुब्धं मा कुरु यतोऽहं तत्सङ्गेन कामासक्त्याऽनर्थावहया भीतस्तत्र कामेषु निर्विण्णः संसृतिबन्धान्मोक्तुमिच्छुस्त्वामुपाश्रितः शरणं गतः ॥ २ ॥

वरं वृणीष्वेति वराय चोदयतस्तव चोदनाद्वारा याचमानाय मह्यं न वरप्रदानेऽभिप्रायः किन्तु भृत्यस्य मम मनःपरीक्षाभित्याह—भृत्येति । कामेषु भृत्यं मां चोदयन् भवान् भृत्यस्यानन्यप्रयोजनत्वरूपं लक्षणं जिज्ञासुः सर्वज्ञोपि भवान् सन्मुखेन मन्मनः परिजिज्ञासुरेव भृत्यं मां मन्मनः परीक्षार्थमेव मां भृत्यं कामेषु भवान् चोदितवानित्यर्थः । अचोदयदिति पाठः सुगमः अन्यथा वरयाञ्चायै चोदना कारुण्यजलधेर्हितोपदेष्टुर्भक्तानुग्राहकस्यानर्थावहेषु कामेषु भृत्यं प्रति चोदना न घटत इत्याह—अन्यथैवं चोदयतस्तव भृत्यलक्षणजिज्ञासुत्वाभावे तव करुणात्मनः कारुण्यमूर्तेरखिललोकहितोपदेष्टुरहितरूपेषु दुःखरूपगर्भजन्ममरणादिरूपसंसारस्य बीजभूतेषु हृदयग्रन्थिवदुर्मोच्येषु न घटेत चोदनेति शेषः । अतो भृत्यलक्षणजिज्ञासुः सन्नेव कामेषु मामचोदयदित्यर्थः । अत्र घटेत करुणात्मन इत्यस्यानन्तरं क्वचित् "नष्टदृष्टेस्तमस्यन्धे त्वमेकः पारदर्शनः" इति पठ्यते. तत्रायमर्थः । इतोपि न कामेषु चोदना भवतो घटत इत्याह—नष्टदृष्टेरिति । अन्धेनमसि संसारात्मके नरके नष्टदृष्टेः स्वात्मपरमात्मयाथात्म्यज्ञानरहितस्यान्धतमस्तरणोपायानभिज्ञस्य वा पुंसः त्वमेवैकः पारदर्शनोऽन्धतमसः पारभूतमात्मानं दर्शयतीति तादृशः यत एवंभूतस्त्वं ततस्तव न घटत इति ॥ ३ ॥

नन्वाशिषः कामयमानोऽपि भृत्यो मम दृश्यत एवेत्यत आह—न इति । ते त्वत्तः निरतिशयपुरुषार्थस्वरूपाद्यः पुमानाशिषः कामानाशास्ते त्वत्सेवापूर्वकं प्रार्थयते. स तव न भृत्यः न भृत्यलक्षणलक्षितः किं तर्हि स तु वणिक्तुल्यः यथा वणिग्यावत्स्वप्रयोजनमन्यमनु वर्तते तद्वत्सोपाधिकानुवृत्तिमानित्यर्थः ॥ ४ ॥

एवं भृत्यात्किञ्चित्प्रयोजनमपेक्ष्य तस्मै कामान्ददतः स्वामित्वमपि निरुपाधिकं नास्तीत्याह—आशासान इति । आत्मनः स्वस्य स्वामिन्याशिषः कामानाशासानः कामयमानः न वै भृत्यः भृत्यो न भवति. इदं दृष्टान्तार्थम् अस्यार्थस्य पूर्वमुक्तत्वाद्यथायं भृत्यो न भवतीत्यर्थः । तथा भृत्यात्स्वाम्यं स्वामिनः प्रयोजनं स्वाम्यं तदिच्छन्कामयमानो यो भृत्यायाशिषो राति ददाति सत्रै न स्वामी स्वामिशब्दवाच्य एव न भवति नित्यं निरुपाधिकं स्वमस्यास्तीति स्वामीति नित्ययोगार्थमत्वर्थीयप्रत्ययान्तस्वामीशब्दवाच्य एव न भवति तस्य सोपाधिकस्वामित्वादितिभावः । अत्र "राति चाशिषः" इत्यस्यानन्तरम् "स वै स्वामी स वै भृत्यो गुणलुब्धौ न कामुकौ" इति क्वचित् पठ्यते. तत्रायमर्थः कौ तर्हि स्वामिभृत्यौ इत्यत आह—स वा इति । यौ गुणलुब्धौ परस्परानुरागजनकसद्गुणमात्रमोहितौ न कामुकौ परस्परं प्रयोजनान्तरमनपेक्षमाणावनुवर्तेते स एव भृत्यः स एव स्वामीति ॥ ५ ॥

आवयोस्तु भृत्यस्वामिभावः स्वाभाविक इत्याह—अहमिति । अहन्तु, कीदृशो वा भवतु लोके भृत्यः अहं त्वकामोऽनन्यप्रयोजनः त्वद्भृत्य इति तु शब्दार्थः । त्वमनपाश्रयः स्वामीति त्वद्भक्तोऽहमकामोऽनन्यप्रयोजनः ।

"स्वत्वमात्मनि सञ्जातं स्वामित्वं ब्रह्मणि स्थितम् ।
नान्यथा लक्षणं तेषां बन्धे मोक्षे तथैव च" ॥

इत्युक्तरीत्या प्रवृत्तनित्यनिरुपाधिकत्वद्दास्योऽहं त्वं तु निरुपाधिकस्वामीत्यध्यवसायपूर्वकं नित्यं स्वस्य स्वाम्यनुवर्तेन स्वस्वरूपानुबन्धीत्यध्यवसायेन परिहृतान्यप्रयोजनस्त्वद्भक्तोऽस्मीत्यर्थः । अतोऽन्यथा प्रकारान्तरेणावयोरिह स्वस्वामिभावेऽर्थः प्रयोजनं नास्ति राजसेवकयोरिवेति व्यतिरेकदृष्टान्तः. यथा राजसेवकयोः प्रयोजनान्तरमूलकः स्वस्वामिभावः; तथा नावयोरिति तदेतत्सर्वज्ञस्त्वं जानास्येवेति भावः ॥ ६ ॥

अहो सर्वज्ञस्यापि किमेतद्वरयाञ्चायै चोदयतः सत्यसङ्कल्पस्य मम वचनः प्रत्याख्यानं तव शोभते इति भगवदभिप्रायमभिप्रेत्य यदि भवतो मह्यं वरप्रदानेऽभिलाषस्तर्हीदं वरय इत्याह—यदीति । हे ईश ! वरदश्रेष्ठस्त्वं मे मह्यं कामानिष्टान्वरान् रासि ददासि तर्हि भवतस्त्वत्तोऽहं मद्धृदये कामानां कामाङ्कुराणामसंरोहमनुत्पत्तिरूपं वरं वृणे धर्मादिपुरुषार्थेच्छानुदयरूपं वरं याच इत्यर्थः ॥ ७ ॥

ननु, कामोत्पत्तौ सत्यां को दोषस्तत्राह—इन्द्रियाणीति । यस्य हृदि सञ्जातकामाङ्कुरस्य कामान् कामयमानस्येन्द्रियादीनि जन्मना जन्मपरम्परया नश्यन्ति कामिनोऽन्ततः स्थावरत्वप्राप्तौ इन्द्रियमनःप्राणात्मानः एवासत्प्राया भवन्ति किं पुनर्धर्मादय इति भावः । नहीतोऽन्यः कश्चिदनर्थो विद्यत इति तात्पर्यम्, तत्रात्मा-प्रत्यगात्मा. धर्मो वर्णाश्रमाऽनुगुणो भगवदाराधनरूपः धृतिधैर्यमिन्द्रियजयो द्वन्द्वसहिष्णुता वा. मतिः स्वात्मपरमात्मविषया. ह्रीरनुचितकृत्यविषया लज्जा. श्रीर्ज्ञानसम्पत्तिरैश्वर्यं वा. तेजोऽन्याऽनपेक्षता स्मृतिः हेयोपादेयाऽविस्मरणात्मिका. सत्यं भूतहितञ्च सत्यवचनं वा ॥ ८ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

अस्मिन्नध्याये भक्त्यैव पुरुषार्थो न द्वेषेणेत्येतत्प्रतिपादनं पुनःपुनर्भक्तेः प्राधान्यज्ञापनायान्यदासुरमोहनार्थेति तात्पर्यम्, वराननिच्छन् प्रह्लादो हरिं किमप्युवाचेति हार्दं युधिष्ठिरप्रश्नं परिहरन्

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

नारदस्तत्र वक्तीत्याह–नारद इति। वयसार्भको न तु ज्ञानेनेत्येतद्विशेषप्रकाशनाय हेति विशेषणं हि हेतावित्यमरः ॥ १ ॥

ज्ञानमैन्द्रियवृत्तित्वाद्धृषीकेशेन त्वया मन्मनोगतं ज्ञातमिति यद्यतो मत्परीक्षणार्थं एतैर्मनःप्रलोभनं न कुर्विति प्रार्थयते, इत्याशयेनाह—मामेति । गुरुवचनमज्ञातप्रबोधकत्वेन प्रमाणं स्यादिदं स्वभावत एव ज्ञातप्रबोधकत्वाद्व्यर्थमिव प्रतिभातीत्याशयवानाह–उत्पत्त्येति । आसक्तमिति लोकवृत्तान्तप्रदर्शनपरं प्रह्लादस्यार्भकात्वकथामारभ्य विष्णुधर्मैकनिष्ठत्वात् यतो विषयसङ्गिनामनर्थपरम्परा दृश्यते तस्माद्विषयाणां । विषयिणां विषयाऽसिद्ध्या तात्कालिकप्रसूननिर्वेदवन्नायं निर्वेद इत्याह-मुमुक्षुरिति । अनेन प्रह्लादस्याधिकारलक्षणसामग्री विद्यत इति दर्शितम् ॥ २ ॥

ननु, भगवद्वाक्यं क्वापि विप्रलम्भकं न भवति "भजस्यावञ्चकचेतसः" इति श्रुतेः । भवता तथैव प्रोच्यते तथाच भगवद्वाक्यस्या विश्वसनीयत्वं स्यादिति तत्राह—भृत्येति । चोदयात् चोदयति "धियो यो नः प्रचोदयात्" इति श्रुतेः ॥ ३ ॥

वञ्चनार्थमेव तथोच्यत इति किन्न स्यादत्राह—नान्यथेति । अखिलगुरुत्वान्यथानुपपत्त्या न वञ्चनं युक्तमित्यर्थः । इतोऽपि भृत्यलक्षणजिज्ञासैव प्रयोजनं त्वद्वचनस्यान्यथा तवेष्टजनघातकत्वदोषापत्तिः स्यात् सा निर्दोषत्वेन न युक्तेत्याशयवानाह–नष्टेति । न केवलमितरगुरुवन्मार्गमात्रप्रदर्शकः किन्तु गमय च, अतो विप्रलोभनं न युक्तमतो वाह–नयतीति। पारदर्शिनः पारं चान्तं द्रष्टुमिच्छतः ननु, मत्प्रार्थिकामाशीर्दानवचनमस्तु नाम प्रलोभनं तत्कामुकस्याशीर्दानवचनेऽनाकाङ्क्षनाभिधानं स्यादिति तत्राह, यस्त इति । ते तव सकाशात् आशिषः सम्पदः सेवायाः । तर्हि स क इति तत्राह—स इति । "वन षण सम्भक्तौ" इति धातोः सम्भजनं विक्रेयं द्रव्यं प्रसार्य दानलक्षणं तत्कर्त्ता वणिग्वै । हि अयं च किञ्चित्सुकृतकरणलक्षणदानेन भवादृशाज्जनात्पुण्यलक्षणफलादानं करोतीति यस्मात्तस्माद्वणिगित्यर्थः । आशास्ते इच्छति अनेन फलदस्य स्वामित्वं च विघटितं भवतीति दर्शितम्.* तर्हि कयोः स्वामिभृत्यभाव इति तत्राह–सवा इति । "लुभ गार्ध्ये" इति धातोः भक्त्यादिगुणोद्रेकाकाङ्क्षिणौ गुणलुब्धौ मिथः फलानि न कामुकौ ॥ ४ ॥

ननूभयोः फलकामित्वे को दोष इति तत्राह–आशासान इति। स्वामिनि समवेता आशिष आत्मनः स्वस्याशासानो यः स भृत्यो न वै नैव किन्तु प्रतिभट एव वरदानादिना भृत्यात्स्वस्य स्वामित्वमिच्छन् यो भृत्यायाशिषो राति ददाति स स्वामी न च । कल्पितस्वामित्वेन तच्छब्दस्य मुख्यार्थाभावात् ॥ ५ ॥

प्रकृते किमभूदिति तत्राह–अहन्त्विति । अनपाश्रयो भृत्यप्राप्यफलानाश्रयः स्वामी अव्याहतस्वामीत्यर्थः । एतदेव द्रढयति, नान्यथेति । निष्कामत्वेन भृत्यत्वं मम अनपाश्रयत्वेन स्वामित्वम् एतस्मादन्यथा प्रकारान्तरेणावयोरर्थो नास्ति किन्तत्प्रकारान्तरं तत्राह—राजेति । इह लोके यथा राज्ञः सेवकस्य च स्वाज्ञानतिलङ्घनभीत्यादिलक्षणश्चेतनादिलक्षणस्वार्थोऽस्ति तथेति ॥ ६ ॥

ननु, शास्त्रेषु प्रतिपाद्यमानमैश्वर्यमवञ्चकभावं ज्ञातृज्ञेयभावो दातृस्वीकर्तृभाव इत्यादि सम्बन्धिसम्बन्धलक्षणार्थसम्भवादावयोरर्थो नास्तीति निषेधः कथं क्रियते? इत्याशङ्कां परिहर्तुमाह-यदीति । "नान्यथेश्वरभाषितम्" इति वचनात् भवदुक्तम् अन्यथा माभूदिति भीत्या च तं वृणे इत्यतो वाह—यदीति। "रा दाने" इति धातुः कामयन्ते कामाः अभिमता एव वरास्तान् कामानां विषयाणाम् असंरोहं सम्यगनुत्पादं नाम वरं वृणे इत्यन्वयः ॥ ७ ॥

केन दोषेण तेषामनुत्पादः प्रार्थ्यत इति तत्राह–इन्द्रियाणीति। येषां कामानां विषयाणां जन्मना इन्द्रियादयो नश्यन्ति तेषामिति शेषः "सर्वेन्द्रियाणां जरयन्ति तेज" इति श्रुतेः। आत्माभक्तिः ॥ ८ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

॥ १ ॥

मुमुक्षुस्तान् कामान् त्यक्तुमिच्छुः ॥ २ ॥

भृत्येति सार्द्धकम् । भृत्यस्य लक्षणम् असाधारणं धर्मं जिज्ञासु लोकेषु ज्ञापयितुमिच्छुरित्यर्थः ॥ ३ ॥

यस्त इत्यर्द्धकम् ॥ ४ ॥ ५ ॥

व्यतिरेके दृष्टान्तः राजसेवकयोरिवेति ॥ ६—१० ॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

प्रह्लादाय वरं दत्वा दशमेऽन्तर्हिते हरौ ।
तस्यैवानुग्रहादीशः पुरारितत्रो दशाह सः ॥

तत्सर्वं वरजातं कामयमान इति मां बालकमतं प्रलोभयन् प्रभुरयं मद्बुद्धिं परीक्षते इति विचार्येत्थं स्मितम् ॥ १ ॥

उत्पत्त्या स्वभावेनैव वरैर्वरदानैस्तेषां कामानां सङ्गाद्भीतः अत एव मुमुक्षुस्तान् कामान् मोक्तुमिच्छुः ॥ २ ॥

ननु, किमहं भक्तं प्रलोभयामि? न हि न हि स्वभक्तस्य सर्वोत्कृष्टां निष्ठां लोके ख्यापयामीत्याह–भृत्येति । मयादीयमानान् वरान् कथं न गृह्णासीत्युक्ते मद्भृत्य एव मद्भृत्यस्य लक्षणं कथयिष्यतीत्यभिप्रायस्तवावगम्यते इति भावः। प्रभुरिति सर्वज्ञस्य तव जिज्ञासा नोपपद्यत इत्यतः सर्वान् ज्ञापयितुमेवेति भावः । अखिलगुरोः सर्वहितोपदेष्टुस्तव ब्रह्मरुद्रादीनामिवेति भावः ॥ ३ ॥

तद्ब्रूहि भृत्यलक्षणमिति चेत्स्वामिभृत्ययोरुभयोरपि लक्षणं ब्रवीमीत्याह—य इति । ते त्वत्तः वणिगिति तुभ्यं किञ्चित् पत्रपुष्पनैवेद्यादिकं दत्वा हस्त्यश्वरथादिमतीं सम्पत्तिं ब्रह्मेन्द्रादिपदं वा जिघृक्षतीति भावः ॥ ४ ॥

उक्तमेवार्थं पुष्णाति—आशासान इति । भृत्यहेतुकमात्मनः स्वाम्यमैश्वर्यं इच्छन् यो भृत्याय ददाति स च नैव स्वामी ॥५॥

आवयोस्तु स्वामिभृत्यभावस्तात्त्विक इत्याह–अहं त्विति । अनपाश्रयः सेवकाधीनमपकृष्टमैश्वर्यं नाश्रयसे इत्यर्थः । अन्यथा स्वकामिताभिसन्धिना ते नाभिसन्धिकः स्वामिभृत्यभावो लोके प्रसिद्धोऽपि सोपाधित्वाद्विगीत एवेति द्योतितम् ॥ ६ ॥

---

* "सवै स्वामी सवै भृत्यो गुणलुब्धौ न कामुकौ" इति विजय० पाठाधिकः ।

**विमुञ्चति यदा कामान्मानवो मनसि स्थितान् ।**
**तर्ह्येव पुण्डरीकाक्ष ! भगवत्त्वाय कल्पते ॥ ९ ॥**

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी।

ननु, तथापि मम परमोदारस्य सुखार्थं किमपि वृणिष्वेति चेदत्राह, असंरोहं मम हृदि कामा नोत्पद्यतामित्यर्थः ॥ ७ ॥

यस्य कामस्य इन्द्रियादीनां स्वन्माधुर्यास्वादनमेव कुपथगामिता सैव नाशः ॥ ८ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

अथ प्रह्लादं प्रत्यनुग्रहं कृत्वा ब्रह्माणं प्रत्येवंविधो वरो ऽसुरेऽप्यस्त्वया न देय इत्युक्त्वा हरिरन्तर्हितोऽभूदिति अनेन भक्तवत्सलेन हरिणा रावणादिभाव गतयोः स्वपार्षदयोर्युद्धलीलया ऽनुग्रहः कृत इति शिवेऽप्यनुग्रहः कृतः इति च दशमे श्रीनारद आह—भक्तियोगस्येति । भक्तियोगस्यान्तरायतया विच्छेदकतया तत्सर्वं वरजातं मन्यमानः ॥ १ ॥

मामुत्पत्त्यास्वभावेनैवं कामेषु सक्तं तैर्वरैर्मा प्रलोभय ततस्तेषां कामानां सङ्गाद्भीतो मुमुक्षुरहं त्वामुपाश्रितोऽस्मि ॥ २ ॥

भृत्यलक्षणजिज्ञासुः जानन् अपि भृत्यलक्षणं ज्ञातुमिच्छुः लोके ख्यापयितुमित्यर्थः । हृदये ग्रन्थिर्वासनात्मकं मूलं येषां तेषु संसारबीजेषु कामेषु मामचोदयत् अन्यथा करुणात्मनः करुणाया आश्रयस्य करुणानिधेः तेषु भक्तप्रेरणा न घटेत ॥ ३ ॥

ते त्वत्तः आशिषः कामान् य आशास्ते प्रार्थयते स वणिक् न तु स भृत्यः किन्तु यः आत्मनः स्वकृते स्वामिनि आशिषः नासाशानो वै निश्चितं स भृत्यो भवति. भृत्यतः स्वाम्यं स्वार्थमिच्छन् यः आशिषो राति स स्वामी न भवति सोऽपि वणिक् ॥ ४ ॥ ५ ॥

आवयोः स्वस्वामिभावस्तु शुद्ध इत्याह—अहमिति । अहमकामो निष्कामस्त्वद्भक्तस्त्वं च अनपाश्रयः स्वानन्दपूर्णः मम स्वामी अतः आवयोरर्थः प्रयोजनम् राजसेवकयोरिव अन्यथा इतरेतरप्रयोजनमूलो न हि ॥ ६ ॥

हे ईश ! यदि भक्तवात्सल्यतः मे कामान् वाञ्छितान् वरान् रास्येव तर्हि हे वरदर्षभ ! कामानां विषयसङ्कल्पानाम् हृदि असंरोहमनुत्पत्तिं भवतः सकाशात् वरं वृणे ॥ ७ ॥

यस्य विषयसङ्कल्पस्य जन्मना इन्द्रियादयो नश्यन्ति तत्रेन्द्रियमनःप्राणानां नाशो ऽधर्मप्रवृत्तिरूपः आत्मनो देहस्य चिन्ताशोकादिजन्यज्वरार्त्तत्वरूपश्च आत्मनो जीवस्य वा स्वरूपविस्मरणरूपः धर्मादीनां ततो निर्गमनरूपः तथोक्तम्——

"देहीति वचनं श्रुत्वा देहस्थाः पञ्च देवताः ।
तत्क्षणादेव गच्छन्ति धीश्रीह्रीधृतिकीर्त्तयः" ॥ ८ ॥

---

### भाषा टीका ।

**नारद उवाच ।**

नारद जी बोले, कि—छोटा सा बालक प्रह्लाद, इन सब वरों को भक्ति के विघ्नकारी जानकर हसता सा हृषीकेश श्रीनरहरि से बोला, ॥ १ ॥

**प्रह्लाद उवाच ॥**

प्रह्लाद बोले, कि—हे प्रभो ! मै तो उत्पत्ति से ही विषयों मे आसक्त हू, मुझे वरों से मत लुभाइये, उस सङ्ग से भय भीत निर्वेद को प्राप्त हुआ मै मुमुक्षु आपके शरण आया हू ॥ २ ॥

हे प्रभो ! आप अपने भक्त के लक्षण जानने की इच्छा से हृदय के ग्रन्थि रूप और संसार के बीज रूप कामों के लिये प्रेरणा करते हो ॥ ३ ॥

हे अखिल गुरो ! अन्यथा परम दयालु आपका ऐसा कथन कैसे घटे, जो आप से कुछ चाहना करता है वह भृत्य नहीं किन्तु वणिक् है ॥ ४ ॥

स्वामी से अपने लिये कुछ चाहना जो करने वाला है, वह भृत्य नहीं है, और वह स्वामी भी नहीं है जो अपने भृत्य से स्वामीपने की इच्छा करता हुआ कुछ इच्छित प्रदान करता है ॥ ५ ॥

मै तो आपका निष्काम भक्तहूं. और आप मेरे निरुपाधिक स्वामी है, यदि जो कामादि की अभिसंधि होती तो राजा और सेवक के तरह कुछ प्रयोजन ही नहीं था ॥ ६ ॥

हे वरद श्रेष्ठ ! यदि आप मुझे वरही देते हैं तो आपसे में यही वर मागता हूं कि मेरे हृदय में किसी कामना का अंकुर नहो । कि जिस से मै फिर भी कभी वर न मागूं ॥ ७ ॥

क्योंकि ? जिस कामना के उत्पन्न होने से ही इन्द्रिय मन प्राण आत्मा धर्म धृति मति लज्जा श्री तेज स्मृति सत्य ये सब ही नष्ट होजाते हैं ॥ ८ ॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका ।

कामाभावे गुणमाह—विमुचन्तीति । भगवत्त्वाय त्वत्समानैश्वर्याय तथाच श्रुतिः "यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि श्रिताः । अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुते" इति ॥ ९ ॥

नमो भगवते तुभ्यं पुरुषाय महात्मने ।
हरयेऽद्भुतसिंहाय ब्रह्मणे परमात्मने ॥ १० ॥

श्रीनृसिंह उवाच ।

नैकान्तिनो मे मयि जात्विहाशिष आशासतेऽमुत्र च ये भवद्विधाः ।
अथापि मन्वन्तरमेतदत्र दैत्येश्वराणामनुभुङ्क्ष्व भोगान् ॥ ११ ॥
कथा मदीया जुषमाणः प्रियास्त्वमावेश्य मामात्मनि सन्तमेकम् ।
सर्वेषु भूतेष्वधियज्ञमीशं यजस्व योगेन च कर्म हिन्वन् ॥ १२ ॥
भोगेन पुण्यं कुशलेन पापं कलेवरं कालजवेन हित्वा ।
कीर्तिं विशुद्धां सुरलोकगीतां विताय मामेष्यसि मुक्तबन्धः ॥ १३ ॥
य एतत्कीर्तयेन्मह्यं त्वया गीतमिदं नरः ।
त्वां च मां च स्मरन् काले कर्मबन्धात्प्रमुच्यते ॥ १४ ॥

प्रह्लाद उवाच ।

वरं वरय एतत्ते वरदेशान्महेश्वर ! ।
यदनिन्दत्पिता मे त्वामविद्वांस्तेज ऐश्वरम् ॥ १५ ॥
विद्धामर्षाशयः साक्षात्सर्वलोकगुरुं प्रभुम् ।
भ्रातृहेति मृषा दृष्टिस्त्वद्भक्ते मयि चाघवान् ॥ १६ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

निर्दोषान्कामान्दातुमिच्छन्तं प्रत्याख्यातुमसमर्थः सन्नमस्यति, नम इति ॥ १० ॥

सत्यमेकान्तभक्तस्त्वं तथापि मदाज्ञा करणीयेत्याह—नेति । मे एकान्तिनः कदाचिदपि इहामुत्र च मत्त आशिषो न वाञ्छन्त्येव तथाप्येतन्मन्वन्तरमात्रं भोगान्भुङ्क्ष्व ॥ ११ ॥

ननु, तर्हि बन्धः स्यादित्यत आह, कथा इति द्वाभ्याम् । सर्वेषु भूतेषु सन्तमेकमीशं यज्ञाधिष्ठातारं मामात्मन्यावेश्य यजस्व तर्हि-तेनैवापि कर्मणा बन्धः स्यान्नेत्याह, योगेन मय्यर्पणेन कर्म हिन्वंस्त्यजन्यजस्व ॥ १२ ॥

किञ्च भोगेन सुखानुभवेन प्रारब्धं पुण्यं हित्वा मुक्तबन्धः सन् लोकानुग्रहार्थं कीर्तिं च विस्तार्य मां प्राप्स्यसि कुशलेन पुण्याचरणेन पापं हित्वेति विभीषणाश्रम्, अन्यथा तस्य राज्येऽप्रवृत्तेः । ननु तस्य प्राचीनं पापमस्ति "तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशात्" इति न्यायात् "तत्सुकृतदुष्कृते विधुनुते" इति श्रुतेश्च । नचेदं प्रारब्धं पापाभिप्रायं तस्य भोगेनैव क्षयात् कुशलेन हित्वेति वचनाऽनुपपत्तेः नचाऽसावविद्वानिति वाच्यं भगवतैव कृतार्थत्वस्यानन्तरं वक्ष्यमाणत्वात् अत एव योगेन कर्म हिन्वन्नितीदमपि लोकसङ्ग्रहार्थं कर्मणि प्रवर्तितस्यानुष्ठेयमात्रा-येति सर्वमनवद्यम् ॥ १३ ॥

किञ्च य इति, त्वां च मां च मच्चरित्रं च स्मरंस्तत्स्तोत्रं यः कीर्तयेत्सोऽपि कर्मबन्धाद्विमुच्यते कुतस्तव बन्धशङ्केत्यर्थः ॥ १४ ॥

ईश्वराज्ञया प्राप्तकर्माधिकारः सन्पितुर्निष्कृतिं प्रार्थयते, त्रिभि । वरं वरणीयमेतदपरं वृणे ते त्वत्तः ॥ १५ ॥

विद्धोऽमर्षेण क्रोधेनाऽऽशयो यस्य ॥ १६ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

निष्कामस्तु त्वां भजंस्त्वत्साधर्म्यं प्राप्नोतीत्याह—विमुञ्चतीति यदा मानवो मनुष्यःस्वहृदिस्थितान् कामान् विमुञ्चति अनन्य-प्रयोजनेन त्वां भजतीति भावः । हे पुण्डरीकाक्ष ! तर्हि तदा स मानवः भगवत्त्वाय भगवतो भावः भगवत्त्वं तस्मै कल्पते अपहतपाप्मत्वादिधर्माविर्भावाय कल्पते आविर्भूतगुणाष्टकत्वेन भगवत्साधर्म्यमागतो मुक्तो भवतीति यावत् ॥ ६ ॥

मम हृदि कामानुदयरूपाद्वरादन्यं वरं सर्वथा मादा इति प्रार्थनाऽभिप्रायेण भगवन्तं नमस्करोति—ओमिति भगवते पूर्ण-

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

षाड्गुण्याय पुरुषाय सर्वान्तरात्मने महात्मने केवलं भक्तानुग्रहैकस्वभावाय हरये आश्रितार्तिहराय अद्भुतसिंहाय मादृशसाधुपरित्राणार्थमुपात्तनृसिंहरूपाय ब्रह्मणे स्वरूपेण गुणैश्च निरतिशयबृहते परमात्मने लोकत्रयस्यान्तःप्रवेशेन भर्त्रे प्रणवप्रतिपाद्याय तुभ्यं नमः ॥ १० ॥

एवं प्रत्याख्यातवरयाञ्चं प्रह्लादमाह भगवाञ्छ्रीनृसिंहः—नैकान्तिन इति चतुर्भिः भवद्विधास्त्वादृशा मयि एकान्तिन एकान्तभक्ता अनन्यप्रयोजनेन भजन्तः मे मत्तः जातु कदाचिदपि इहामुत्र च लोके आशिषः कामान्नाशासते. यद्यपि न प्रार्थयन्ते तथाप्येतन्मन्वन्तरपर्यन्तमत्रैव लोके दैत्येश्वराणामधिपो भूत्वेतिशेषः । भोगान् भुङ्क्ष्व ॥ ११ ॥

तर्हि बद्धः स्यामित्यत्राह—कथेति । प्रियः मम निरतिशयप्रियः त्वं मदीयाः कथाः जुषमाणः सेवमानः प्रिया इति पाठे कथाविशेषणं मत्कथाः शृण्वंस्त्वं न बद्धः स्या इति भावः । नन्वनिच्छन्तमपि बलात्कामेषु किमर्थं योजयसीत्यत आह—आत्मनि सर्वेषु भूतेषु चान्तरात्मतया सन्तमधियज्ञं यज्ञाधिपतिमीश्वरं मां भक्तियोगेन यजस्वाराधयस्व किं कुर्वन् मत्प्राप्तिविरोधिपुण्यपापात्मकं कर्म हित्वन्नपनुदन्मुमुक्षोरप्यभ्युपगतमत्प्राप्तिविरोधिप्रारब्धफलस्य सुखदुःखात्मकस्यावश्यमनुभाव्यत्वादनिच्छन्तमपि त्वां कामेषु योजयामीति भावः ॥ १२ ॥

एतदेव व्यनक्ति—भोगेनेति । पुण्यमभ्युपगतप्रारब्धपुण्यकर्म तत्फलभोगेन हित्वा त्यक्त्वा अपनुदपापमभ्युपगतप्रारब्धाख्यं पापं कर्म कुशलेन भोगेन हित्वा भोगकौशलेन हित्वेत्यर्थः । पापफलभोगस्य दुःखरूपत्वान्मनोविकारः स्यादिति यथा मनो न विक्रियते तथा भोगकौशलेनेत्यर्थः । "दुःखेष्वनुद्विग्नमनाः सुखेषु विगतस्पृहः । समदुःखसुखं धीरम्" इत्याद्युक्तरीत्याऽनुद्वेगसमत्वादिभोगकौशलेनेति यावत्. कुशलेन पुण्येन यज्ञादिकर्मणा पापमभ्युगतप्रारब्धमपुण्यं कर्म हित्वेति नार्थ. । अनुभवैकविनाश्यस्य पुण्यकर्मणा निवृत्त्यनुपपत्तेः । न चात्र पापशब्दः सञ्चितानभ्युपगतादिपापपरः तस्य भक्तियोगेनैव निवृत्तेः न च भक्तियोगप्रतिबन्धकपापपरः परिपूर्णभक्तियोगनिष्ठत्वात्प्रह्लादस्य तन्निवृत्तेः पूर्वमेव जातत्वात्तस्माद्यथोक्तएवार्थः, कालजवेन कालवेगेन कलेवरं हित्वा कालवेगेन निमित्तेनानुभूतप्रारब्धावसाने कलेवरं हित्वेत्यर्थः । सुरलोकेपि गीयमानं स्वीयां कीर्तिं विताय विस्तीर्य मुक्तबन्धः मद्भक्तियोगेन विनष्टाश्लिष्टपूर्वोत्तराघरूपमत्प्राप्तिप्रतिबन्धको मामेष्यसि प्राप्स्यसीत्यर्थः ॥ १३ ॥

किञ्च यः पुमान् त्वां च मां च स्मरन्यदिदं मह्यं त्वया गीतं मत्स्तुत्यात्मकं स्तोत्रं कीर्तयेत् सोपि पुमान् काले प्रारब्धाऽनुभवावसानकाले कर्मबन्धान्मत्प्राप्तिबन्धकात्पुण्यपापात्मककर्मरूपाद्विमुच्यते त्वद्गुणकीर्तनसञ्जातमद्भक्तियोगनिरस्तमत्प्राप्तिप्रतिबन्धककर्मबन्धाद्विमुक्तो भवतीत्यर्थः ॥ १४ ॥

ईश्वराज्ञया प्राप्तदैत्याधिपत्यः स्वपितुर्निष्कृतिं प्रार्थयते-त्रिभिः प्रह्लादः वरमिति । हे महेश्वर ! वरदानां ब्रह्मादीनामपि-ईश्वरात्ते त्वत्तोऽहमेतद्वरं वृणे, किं तत् ? यन्मे पिता ईश्वरस्य तव सम्बन्धि तेजः प्रभावमविद्वानजानन् ॥ १५ ॥

सर्वलोकहितोपदेष्टारं प्रभुं त्वामनिन्दन्निन्दितवान्,कथंभूतःत्वं भ्रातृहेति मृषादृष्टिर्दुरभिमानयुक्तः अत एव वृद्धामर्षाशयः प्रवृद्धो योऽमर्षः क्रोधः तद्युक्त आशयोन्तःकरणं यस्य तादृशः इद्धेति पाठेऽप्ययमेवार्थः । विद्धेति पाठे विद्धो व्यथितः सचासावमर्षयुक्तान्तःकरणश्चेत्यर्थः । एवं भूतस्त्वां सर्वलोकहितोपदेष्टारं प्रभुमनिन्दद्दिति यत् यच्च त्वद्भक्ते मय्यघवान् द्रोहीति द्रोहं कृतवानिति ॥ १६ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

ननु, कामासंरोहो नाम काममोक्षो विवक्षितस्तस्मात्किं फलमिति तत्राह—विमुञ्चतीति । भवाय पुनर्जननाय ॥ ९ ॥

भवशमनादिलक्षणा भक्तिश्च तत्फलमित्याह*नम इति । भगवत इत्यनेन किञ्चित्पुण्यमात्रवस्तुसिध्यत्यतः पुरुषायेत्यनेनापि कश्चिदेवेत्यतो महात्मन इति. कोसावित्यतो हरय इति. हरिशब्दस्यानेकार्थत्वादत्र क इत्यतोऽद्भुतेति. तिर्यक्प्राणिना त्वया किं स्यादित्यतो-ब्रह्मण इति. अस्याप्यनेकार्थत्वादत्र क इत्यतः परमात्मन इति ॥१०॥

अहं त्वकाम इत्येकांतभक्तलक्षणं यत्त्वयोक्तं तत्सत्यं तथापि मदाज्ञाकारिणस्तव पुण्याभिवृद्धिः स्यादत एतत्कर्तव्यमित्याह, नैकान्तिन इति । किन्तदिति तत्राह, तथापीति ॥ ११ ॥

ननु, कर्दमजलस्नानाऽनिच्छया ह्येतावन्तं कालं मया कण्ठशोषणमकारि तद्दरण्यरोदनवद्व्यर्थमभूत्तत्त्वं तत्रैव स्नाहीत्युपदिशस्यतस्त्वदाज्ञातुलङ्घ्या त्वमेव जानासीति शङ्कारोगनिर्मूलनाश सुखसाध्यमौषधं विधास्यामीत्याशयवानाह—कथा इति । बहुवचनेन सर्वावताराादिकथा उपलक्षयति, भूतेष्वित्युपलक्षणं चरुपुरोडाशादिष्वपि यज्ञमूर्तिसन्निहित इति योगेन भक्तियुक्तध्यानेन हिन्वन् नाशयन् ॥ १२ ॥

नन्वेतावता मम किं कालान्तरभाविनी त्वत्प्राप्तिः स्यादेवेत्याह—भोगेनेति । भुक्त्वावनिमतं पुण्यं भो[illegible] क्षपयित्वा प्रायश्चित्तादिकुशलकर्मणा पापं निर्मूलयित्वा वि[illegible]य विस्तृत्य ॥१३॥

मया तवोक्तयोगकरणाशक्तस्यानायाससाध्यं योगमुपादिशामीत्युपसंहरति—य इति । मह्यं मामुद्दिश्य युक्तकाले ॥ १४ ॥

अभिमतमित्युक्तत्वादिमं त्वदभिमतं वरं वृणु इत्याह—वरमिति । ते सकाशात् अनेन दातृस्वीकर्तृभावसम्बन्धोस्तीति ज्ञायते ॥ १५—१६ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

अथापीति, श्रीनृसिंहवाक्यैनैतान् विहायेति तत्प्रार्थनानुसारेण सर्वलोककृतार्थीकरणमेव मुख्यं प्रयोजनम् अन्यत्तु लक्ष्यमात्रं । तथैव वक्ष्यते "कीर्तिं विशुद्धां सुरलोकगीतां विताय" इति । य एतदिति च ॥ ११ ॥

* नारदेनोपदिष्टं मे तवमन्त्रमिमं स्मरे । इत्यधिकः पाठः ।

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

यांस्तु दृष्टश्रुतांस्त्वमधुना स्मरसि तेषां का वार्त्तेति तच्छ्रवणा-गतानामपि कीर्त्यर्थमभिप्रेतम् ॥ १२ ॥

भोगेन पुण्यं प्रारब्धं कुशलेन मद्भजनेन तत्प्रतियोगितया पापञ्च प्रारब्धमेव "श्वादोऽपि सद्यः सवनाय कल्पते" इति न्यायात् "भक्तिः पुनाति मन्निष्ठा श्वपाकानपि सम्भवात्" इति न्यायाच्च ॥ ॥ १३ ॥ १४ ॥

वरं वरय इत्यर्द्धकम् । अनेन श्रीप्रह्लादस्य स्वपित्रोर्जयविजय-त्वादि ज्ञानं नासीदिति गम्यते यादिनि सार्द्धयुग्मकम् ॥ १५-१७ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

ननु, यदि कामं न कामयसे तर्हि वद मे तव दास्ययोग-मिति ब्रुवन् कथं मद्दास्यं कामयसे तत्राह–विमुञ्चतीति । मनसि स्थितान् स्थायिभावतया वर्त्तमानान् कामान् अप्राकृतांस्त्वद्दा-स्यसख्यादीनपि यदा विशेषेण मुञ्चति भगवत्त्वाय सायुज्याय तत्र सायुज्यं मे नाभीष्टं किं तैर्गुणाव्यतिकरादिह ये स्व-सिद्धा धर्मादयः किमगुणेन च काङ्क्षितेन "सारं जुषाम् चरणयो रुपगायताम् नः" इति मदुक्तेरेवातो भवद्दास्यरूपमप्राकृतम् काम-मर्हं त्वमेव एव भगवतत्त्वाय भगवत्समानैश्वर्य्यायेति श्रीस्वामि-चरणाः ॥ ९ ॥

ननु, मत्सायुज्यमात्मारामसुनिभिरप्यादरणीयं किमित्य-सुरबालकोऽपि भूत्वा तत्र कटाक्षयसीति भगवद्वाचा पराजित-म्मन्यः प्रणमति–ओं नम इति ॥ १० ॥

न केवलं तवैवायं स्वभावः अपि तु सर्वेषामेव मद्भक्ताना-मित्याह–नेति । एतन्मन्वन्तरमात्रं त्वत्वाधिकं ददामि मा क्रुध्येति-भावः ॥ ११ ॥

ननु, मां विषयान्धकूपे केनापराधेन क्षिपसीत्यत आह– कथा इति । अधियज्ञं सर्वयज्ञाधीश्वरं मां स्वयोगेन स्वीयभक्ति-योगेनैव यज भज इतिभक्त्या सपि अश्वमेधादयो यज्ञाः कृता एव भविष्यन्तीत्यधियज्ञपदेन द्योत्यते कर्म वैदिकं लौकिकं च हिन्वन् त्यजन् मद्भक्तस्याधिकारिणः कर्मकरणानौचित्यात् ॥ १२ ॥

भोगहेतुकात् कर्मबन्धात्तु नैव शङ्कितव्यस्तव पूर्वजन्मन्येव सर्वं कर्म नष्टमेवेत्याह–भोगेन सुखानुभवेन प्रारब्धं पुण्यं कुशलेन सुकृताचरणेन पापं कलेवरं पूर्वदेहं च हित्वा पश्चि मां सम्प्रति प्राप्नोषि अथि मुक्तबंधः इत्यस्मिन् जन्मनि तु मुक्तबन्धो जीवन्मुक्त एव वर्त्तसे इत्यर्थः । एवं प्रह्लादस्यांशेन साधनसिद्धत्वं नित्यसिद्धत्वं च नारदादिवत् ज्ञेयम् ॥ १३ ॥

तव कर्म बन्धाभावे कैमुत्यं श्रृणिवत्याह–य इति । मह्यं मां प्रसादयितुम् ॥ १४ ॥

किञ्च पूर्वं संसारिणां नृणां मोचाय श्रीमच्चरणेषु प्रार्थितं सम्प्रति यद्यतादृशं सौभाग्यं मह्यमदास्तर्ह्येकस्य मह्यपराधिनोऽपि निस्ताराय प्रार्थयं इत्याह–वरमिति त्रिभिः । वरये वृणे ॥ १५ ॥

विद्धोऽमर्षेणाऽशयो यस्य सः ॥ १६ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

भगवत्त्वाय कल्पते भगवद्भावापत्तियोग्यो भवति, भगवद्भा-वापत्तिर्नाम भगवत्साधर्म्यप्राप्तिः——

"इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः ।
सर्गेऽपि नोपजायन्ते प्रलये न व्यथन्ति च" ॥

इति श्रीमुखवचनात् ॥ ९ ॥

अतिदुर्लभभगवद्दर्शनचरणस्पर्शवचनामृतश्रवणादि निर्वृतो नमस्करोति नम इति ॥ १० ॥

भगवानपि तत्प्रारब्धकर्मानुसारेण तद्दर्शनादिना लोकानिम विशोधयितुं च किञ्चित्कालमत्रैव मां भजन् वासं कुरु पुनर्मा-मेष्यतीत्याह–नैकान्तिन इति त्रिभिः ॥ ११ ॥

सर्वेषु चेतनाचेतनेषु भूतेषु एकं नियन्तारं मां सन्तम् आत्मनि हृदि आवेश्य मदीयाः कथाः जुषमाणः सेवमानः योगेन मदर्पणविधियोगेन अधियज्ञं यज्ञाधिष्ठातारं मां कर्म प्रारब्धं कर्म हिन्वन् क्षपयन् यजस्व ॥ १२ ॥ १३ ॥

प्रह्लादोक्तस्वशास्त्रोक्तकीर्त्तनादिफलमाह–य इति ॥ १४ ॥

ते त्वत्तो वरं वरये वृणे मे पिता ऐश्वरं भवदीयं तेजः अविद्वान् त्वां यदनिंदत् तस्मात् अघात् मे पिता पूयेतेति तृतीयेनाऽन्वयः ॥ १५ ॥

विद्धो व्याप्तो ऽमर्षेण क्रोधेनाशयो यस्य सः ॥ १६ ॥

---

भाषा टीका ।

और पुरुष जब मन के मनोरथों को छोड़ देता है, हे पुण्डरीकाक्ष ! तब वह आप ही भगवद्भाव को समर्थ होता है ॥ ९ ॥

षडैश्वर्य सम्पन्न पुरुष महात्मा हरि अद्भुत सिंह ब्रह्म स्वरूप परमात्मा ऐसे आप को नमस्कार हो ॥ १० ॥

श्री नृसिंह उवाच ॥

श्री नृसिंहजी बोले, कि–तुमारे सदृश हमारे एकांती भक्त लोग इसलोक और परलोक के पुरुषार्थों को हम से कभी चाहना नहीं करते हैं, तौभी इस मन्वन्तर पर्यन्त यहां पर दैत्येश्वरों के भोगों को तुम भोगो ॥ ११ ॥

हमारी प्रिय कथाओं का सेवन करते हुए, सर्वभूतों में वर्त्तमान एक ईश्वर यज्ञों का अधिष्ठाता ऐसे मुझको अपने

तस्मात्पिता मे पूयेत दुरन्ताद्दुस्तरादघात् ।
पूतस्ते ऽपाङ्गसन्दृष्टस्तदा कृपणवत्सल ! ॥ १७ ॥

श्रीभगवानुवाच ।

त्रिस्सप्तभिः पिता पूतः पितृभिःसह तेऽनघ ! ।
यत्साधो ऽस्य गृहे जातो भवान्वै कुलपावनः ॥ १८ ॥
यत्र यत्र च मद्भक्ताः प्रशान्ताः समदर्शिनः ।
साधवः समुदाचारास्ते पूयन्त्यपि कीकटाः ॥ १९ ॥
सर्वात्मना न हिंसन्ति भूतग्रामेषु किञ्चन ।
उच्चावचेषु दैत्येन्द्र ! मद्भावेन गतस्पृहाः ॥ २० ॥
भवन्ति पुरुषा लोके मद्भक्तास्त्वामनुव्रताः ।
भवान्मे खलु भक्तानां सर्वेषां प्रतिरूपधृक् ॥ २१ ॥
कुरु त्वं प्रेतकार्याणि पितुः पूतस्य सर्वशः ।
मदङ्गस्पर्शनेनाङ्ग ! लोकान्यास्यति सुप्रजाः ॥ २२ ॥
पित्र्यं च स्थानमातिष्ठ यथोक्तं ब्रह्मवादिभिः ।
मय्यावेश्य मनस्तात ! कुरु कर्माणि मत्परः ॥ २३ ॥

नारद उवाच ।

प्रह्लादो ऽपि तथा चक्रे पितुर्यत्साम्परायिकम् ।
यथा ऽह भगवान् राजन्नभिषिक्तो द्विजोत्तमैः ॥ २४ ॥

भाषाटीका ।

आत्मा में आविष्ट करके मेरा यजन करो मेरे विषै कर्मों का अर्पण करते हुए त्याग करते जावो ॥ १२ ॥

सुखानुभव करके पुण्य को और कुशलाचरण से पाप को और काल के वेग से कलेवर को छोड कर तथा सुरलोक गीत विशुद्ध कीर्ति को विस्तार समस्त बन्धनों से मुक्त होकर हमको प्राप्त होगे ॥ १३ ॥

जो नर इस तुमारे गाये हुए स्तोत्र का कीर्त्तन करेगा तथा तुमारा और हमारा स्मरण करेगा वह समय पर कर्मों के बन्धों से मुक्त हो जावेगा ॥ १४ ॥

प्रह्लादउवाच ॥

प्रह्लाद बोले, कि—हे महेश्वर ! वर देने वालों के ईश्वर आप से मैं यही वर मागताहूँ कि आप के ऐश तेज को न जानने वाला और "यह मेरे भ्राता का मारने वाला है" इस प्रकार मिथ्या दृष्टि वाला और क्रोध से विद्धचित्त जिसका, ऐसे मेरा पिताने, सर्व लोक के गुरु और प्रभु ऐसे आपकी जो निन्दा की है, और आप के भक्त ऐसे मेरे विषै अपराध किया है ॥ १५—१६ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

ते ऽपाङ्गेन सन्दृष्टो ऽतः पूत एव तथापि भोः कृपणवत्सल ! कार्पण्येन प्रार्थय इत्यर्थः ॥ १७ ॥

यद्यपि कश्यपो मरीचिर्ब्रह्मा चेति तत्पितृत्रय एव पूर्वजास्तथापि त्रिःसप्तभिः सहेति प्राक्कल्पगतपित्रभिप्रायेणोक्तं यद्यस्मात् ॥ १८ ॥

सम्यगुत्तम आचारो येषां ते कीकटा अपि देशास्तत्कुल्या वंशाश्च पूयन्ते शुद्धा भवन्ति ॥ १९ ॥

ननु, त्वद्भक्तानामयं महिमेति न चित्रं अहं तु तादृशो न भवामि

श्रीधरस्वामिकृतभावार्थदीपिका ।

इति चेत्तत्राह—सर्वात्मनेति, द्वाभ्याम् । मद्भावेन मद्भक्त्या विगता स्पृहा येषाम् ॥ २० ॥

त्वामनुगता ये केचित्पुरुषास्ते ऽप्येवं लक्षणाः सन्तो मद्भक्ता भवन्त्यतो भवान्मे भक्तानां सर्वेषां प्रतिरूपधृगुपमानास्पदं श्रेष्ठः खल्वित्यर्थः ॥ २१ ॥

मदङ्गस्पर्शनेन सर्वशः पूतस्य ते पितुः पापशङ्कैव नास्ति केवलं पुत्रकृत्यानि प्रेतकार्याणि कुरु ॥ २२ ॥

ब्रह्मवादिभिर्वेदवादिभिः उक्तमनतिक्रम्य मत्परः सन्कर्माणि कुरु ॥ २३—२६ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तस्माद्दुस्तरादघात् पापान्मे पिता पूयेत विशुद्धयेत् एतद्वर वरये इत्यन्वयः । यद्यपि ते तवापाङ्गेन सन्दृष्टो ऽतएव पूतएव मम पिता तथापि हे कृपणवत्सल ! कार्पण्येन प्रार्थये इत्यर्थः ॥ १७ ॥

एवं प्रह्लादेन प्रार्थितो भगवांस्तमाह—त्रिस्सप्तभिरिति षड्भिः । न केवलं तव पितैव पूतः अपितु हे अनघ ! त्रिःसप्तभिः पितृभिः सह तव पिता त्रिः पूत इति त्रिवारमनुगृह्णामीत्यर्थः । त्रिसप्तभिरिति पाठे, एकविंशतिपर्यन्तैः पितृभिः सह पूत इत्यर्थः । कुतः यद्यस्मात् हे साधो ! महाभागवतः कुलपावनो भवान् तस्य हिरण्यकशिपोर्गृहे जातः । यद्यपि हिरण्यकशिपोः पितरः कश्यपो मरीचिर्ब्रह्मा चेति त्रय एव ; तथापि प्राक्कल्पगतपित्राद्यभिप्रायेण त्रिसप्तभिरित्युक्तं मद्भक्तस्य तव जननादेवेदं त्वत्कुलं पूतमित्यभिप्रायः ॥ १८ ॥

एतदेव स्वभक्तप्रभावप्रदर्शनमुखेनाह—यत्रेति । समदर्शिनःकृत्स्नं जगत् ब्रह्मात्मकत्वेन पश्यन्तः प्रशान्ताः जितेन्द्रियाः सम्यगुत्तमः आचारो येषां ते साधवः परोपकारशीलाः मद्भक्ताः यत्र यत्र देशे सन्ति ते कीकटा अपि कीकटकल्पाम्लेच्छदेशा अपिशब्दात्तत्प्रभवा अपि पूयन्ते शुद्धाभवन्ति ॥ १९ ॥

ननु, मद्भक्तानामयं प्रभाव इति न चित्रं नाहं तु तादृशः इति चेत् तत्राह—सर्वात्मनेति, द्वाभ्याम् । हे दैत्येन्द्र ! लोके ये मद्भक्ताः पुरुषास्ते त्वां मद्भक्तश्रेष्ठमनुव्रता अनुवर्त्तमाना भवन्ति. त्वं यथा मद्भक्तश्रेष्ठस्तथा वयमपि भगवद्भक्ता भवेम इति त्वत्पदवीमनुवर्तमाना मद्भक्ता भवन्ति. अतः सर्वेषां भक्तानां भवान् प्रतिरूपधृक् दृष्टान्तभूतः अतस्त्वं भागवतोत्तमोत्तम इति भावः । तदनुवृत्तिप्रकारमाह—उत्कृष्टेषु च भूतग्रामेषु देवमनुष्यादिभूतसङ्घेषु सर्वात्मना करणत्रयेण न किञ्चिदपि हिंसन्ति. मद्भावेन मद्भक्त्या विगता स्पृहा येषां मत्साम्यापत्तिनिस्स्पृहा इति वा तादृशाश्च भवन्ति. त्वद्दृष्टान्तेनैवात्मानं शिक्षयन्तीत्यर्थः ॥ २० ॥ २१ ॥

अतः सर्वथा पूतस्य विशुद्धस्य तव पितुः प्रेतकार्याणि दाहादिकर्माणि कुरु अङ्ग हे प्रह्लाद ! शोभना प्रजास्त्वद्रूपो यस्य सः त्वत्पिता मदङ्गस्पर्शनेन मच्छरीरसंस्पर्शनेन हेतुना लोकान्पुण्यलोकान् यास्यति प्राप्स्यति. पश्यतीति पाठे द्रक्ष्यतीत्यर्थः वर्त्तमानसामीप्ये भविष्यति लट् ॥ २२ ॥

पित्र्यं पितृसम्बन्धि पित्राधिष्ठित महेन्द्रभवनं विहाय पित्र्यं दानवाधिपत्यस्थानमधितिष्ठेत्यर्थ. । हे तात ! मयि मन आवेश्य ब्रह्मवादिभिरुक्तमनतिक्रम्य कर्माणि मदाराधनरूपाणि मत्परः अहमेव परस्तेषां कर्मणां फलं यस्य तादृशः सन् कुरु ॥ २३ ॥

एवमुक्त प्रह्लादो यथोक्तमकरोदित्याह नारदः—प्रह्लादोपीति । हे राजन् युधिष्ठिर ! यथा भगवानाह तथैव प्रह्लादः पितुर्यत्सांपरायिकं प्रेतोद्देशेन कर्त्तव्यं तत्सर्वं चक्रे ततो द्विजोत्तमैरभिषिक्तश्च बभूव दानवादीनामाधिपत्यमकरोदित्यर्थः ॥ २४ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

शुद्ध्यर्थं साधनान्तरानुष्ठानं नापेक्षितमित्याह—पूत इति ॥१७॥

न केवलमयमेव पिता पूतः किन्तु जन्मान्तरेपि विद्यमानाः पितरः पूताः स्युरित्याशयवानाह—त्रिःसप्तभिरिति । सा विशुद्धिर्मत्कटाक्षपात्रीभूतत्वज्जन्मनेत्याह—यत्साधोऽस्येति ॥ १८ ॥

एतन्न्यायमन्यत्रातिदिशति—यत्रेति । कीकटा इति पाठे आभीरा इत्यर्थः ॥ २९ ॥

ननु, त्वद्भक्तानामेवंविधमाहात्म्यं कस्मादित्याशङ्क्य तपोवृद्धिक्षयहेतुहिंसाद्यभावादित्याह—सर्वात्मनेति । सर्वात्मना यदपि किञ्चन कृकलासादिकमपि "तस्मात्प्राणभृतः प्राणं न विच्छिन्द्यादपि कृकलासस्य" इति श्रुतेः । तत्र निमित्तमाह—मद्भावेनेति "ईश्वरोजीवकलया प्रविष्टः" इति वचनात् सर्वत्र मम भावः सत्तास्तीति भावो भावना निरन्तरानुस्मरणं तेन गतस्पृहाः नष्टस्पर्द्धाः हिंसायाः कारणं निमित्ताभावान्नैमित्तिकाभाव इत्यर्थः ॥ २० ॥

इह लोके ये मद्भक्ताः पुरुषा भवन्ति विद्यन्ते ते न हिंसन्तीत्यन्वयः मद्भक्तेष्वपि तव विशेषोस्तीत्याह—भवानिति । प्रतिरूपधृक् दृष्टान्तस्थलभूतः खलुशब्देन कांश्चिन्निषिध्यावशिष्टानां सर्वेषामित्यर्थो गृह्यते तेन शयत्तावादित्यर्थः । "ऋते तु सात्त्विकान्देवान्नारदादींस्तथैव च । प्रह्लादादुत्तमः को नु विष्णुभक्तो जगत्त्रये" इति वचनात् "निषेधवाक्यालङ्कारजिज्ञासाऽनुनये खलु" इत्यभिधानम् ॥ २१ ॥

मत्पिता भगवद्द्वेषीति मत्वा तत्प्रेतकार्याणि न करोमीति मतिर्माभूत् "श्रौतं स्मार्तं न लङ्घयेत्" इति वचनात् मदाज्ञया तान्यपि कर्तव्यानि "नावैष्णवाय दातव्यं नोदबिन्दुं न तण्डुलम्" इत्येतदसम्बन्धिविषयत्वेन सावकाशमित्याशयेनाह ·मदङ्गेति सुप्रजाः सुपुत्रः ॥ २२ ॥

पितृमेधं कृत्वा विरज्य वनं न व्रज किन्तु राज्यं कुर्वित्याह—पित्र्यमिति । राज्यं कुर्वन् पितृवल्लोकोपद्रवं न कुरु किन्तु ब्रह्मवाद्युक्तधर्मेणेत्याह यथोक्तमिति न तावता पूर्यते ऽन्यच्च-

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

आवश्यकमित्याह-मयीति । कर्माणि सामादिविषयाणि पूजादीनि वा ॥ २३ ॥

भगवदाज्ञानुल्लङ्घनेन भगवत्प्रीतिः स्यादिति कृत्वा तदाज्ञाकरणप्रकारमाह—नारद इति । साम्परायिकं पारलौकिकम् ॥ २४ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

त्रिःसप्तभिरिति । यदि सप्तत्रयसङ्ख्यास्तव पितरः सम्भवन्ति तदा तैरपि सह पूनः स्यादित्यर्थः । प्राक्तनपगतत्वे यदिति हेतुवाक्यं न सङ्गच्छते. श्रीप्रह्लादस्यात्र जन्मना सह पूर्वपितॄणाम् सम्बन्धात् स्वत एव सम्बन्धाच्च हिरण्यकशिपोश्च पूर्वजन्माभावात् ॥ १८ ॥ १९ ॥

सर्वात्मनेति युग्मकम् ॥ २० ॥ २१ ॥

कुर्विति, अस्य भवता सुप्रजस्त्वं भगवत्प्रार्थनया भवदपराधखण्डनमुत्तमलोकप्रापणञ्च करिष्यतीत्यर्थः ॥ २२—३९ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

यद्यपि अपाङ्गेन दृष्टः पूत एव तदपि श्रीमुखात् प्रसादवाचं श्रोतु कार्पण्यात्प्रार्थये इति भावः ॥ १७ ॥

त्रिःसप्तभिरित्यस्मिन् जन्मन्ययं तव पिता पूत इति किं वक्तव्यं तव त्रिसप्तजन्मसु ये त्रिःसप्तसङ्ख्याः पितरोऽभूवन् तेऽपि पूता इत्यर्थः । पितॄन् पुनाति इत्येतमपि कियत् यतस्त्वं कुलपावनः पितृमात्रादिकुलमपि ते पूनम् ॥ १८ ॥

मद्भक्तः स्वसङ्गिनं देशमपि पुनाति किमुत पित्रादीनित्याह-यत्रेति । पूयन्ति पूयन्ते पूता भवन्तीत्यर्थः ॥ १९ ॥

ननु, त्वद्भक्तानामयं महिमा न चित्रम् अहं तु तादृशो न भवामीति चेत्तत्राह-सर्वेति । ये पुरुषास्त्वामनुव्रता भवन्ति तेऽपि मद्भक्ता भवन्ति कीदृशाः मम भावेन प्रेम्णैव विगतविषयस्पृहाः सर्वात्मना अहिंसकाश्च भवन्ति. अतस्तव महिमा केन निरुच्यतामिति भावः । यतो भवान् मे भक्तानां प्रतिरूपधृक् उपमानास्पदं तेषु श्रेष्ठत्वादिति भावः ॥ २० ॥ २१ ॥

मदङ्गस्पर्शनेनैव सर्वशः पूतस्य ते पितुः पापशङ्कैव नास्ति तदपि प्रेतकार्याणि प्रेतस्यैव कृत्यानि कुरु, केवलं व्यवहाररक्षार्थमित्यर्थः ॥ २२ ॥

यद्यपि मद्भक्तस्य तव नास्ति कर्माधिकारस्तदपि मदाज्ञयैव व्यवहाररक्षायै कर्माणि कुरु म [illegible] इति कर्मसु श्रद्धाशून्यः इत्यतः कर्मणां करणमप्यकरण एव पर्यवसस्यतीति मा शुच इति भावः ॥ २३ ॥ २४ ॥ २५ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

यद्यपि हे कृपणवत्सल ! ते अपाङ्गेन दृष्टः तस्माद्घात् ते निन्दारूपात् मे पिता पूत एव तथापि पूयेत स्वपित्रादिसाहित्येनेत्यर्थः ॥ १७ ॥

त्रयो ब्रह्ममरीचिकश्यपाः अष्टादश जन्मान्तरीयाः एवं त्रिसप्तभिस्ते पितृभिः सह ते पिता पूतो ऽस्ति । हे साधो ! यस्मादस्य गृहे भवान् कुलपावनो जातः । दैत्यकुलमपि त्वज्जन्मना पूतमित्यर्थः ॥ १८ ॥

किं बहुना सम्यगुत्तमः मत्प्रावण्यप्रधान आचारो येषां ते यत्र यत्र सन्ति ते कीकटा अपि देशास्तत्तुल्याश्च पूयन्ते ॥ १९ ॥

स्वभक्तस्तुतिपूर्वकं प्रह्लादमभिनन्दति-सर्वात्मनेति, द्वाभ्याम् । भूतग्रामेषु किञ्चन अपि न हिंसन्ति उच्चावचेषु कुलेषु भवन्तीत्युत्तरेण सम्बन्धः । अतो हे दैत्येन्द्र ! दैत्योऽस्मीति मा शुच इति भावः ॥ २० ॥

त्वामनुव्रताः ये दैत्यादयस्तेऽपि मद्भक्ता भवन्ति भवांस्तु मे भक्तानां सर्वेषां प्रतिरूपधृक् प्रतिनिधिरूपधृक् ॥ २१ ॥

त्वज्जन्मना मदङ्गस्पर्शनेन च सर्वशः पूतस्तथापि लोकसंग्रहार्थं पुत्रकृत्यानि प्रेतकार्याणि कुर्वित्यर्थः ॥ २२ ॥

वेदवादिभिर्मन्वादिभिर्यथोक्तं तदनुसारेण कर्माणि कुरु यतस्ते मद्भजनाऽविरोधेनेत्यर्थः ॥ २३—२४ ॥

---

भाषाटीका ।

उस दुस्तर पापसे मेरा पिता पवित्र होजाय, हे कृपणवत्सल ! यद्यपि उसी समय आप के कृपा कटाक्ष से पवित्र हो गया है तौ भी मैं अपनी कृपणता से ऐसा वर मांगता हूँ ॥ १७ ॥

श्रीभगवानुवाच ॥

श्री भगवान् बोले, कि—हे अनघ ! सप्तविंशन्ति पितरों सहित तुमारा पिता पवित्र हुआ; क्योंकि ? हे साधो ! कुल को पवित्र करने वाले तुमारे सरी के इस के [illegible] में पुत्र हुए ॥ १८ ॥

जहाँ २ प्रशांत समदर्शी साधु उत्तमाचार वाले मेरे भक्त रहते हैं, वे कीकट ( मगद ) देश भी पवित्र हो जाते हैं ॥ १९ ॥

हे दैत्येन्द्र ! मेरी भक्ति से विगत स्पृहावाले लोग ऊंचे नीचे भूत ग्रामों को किसी प्रकार भी किञ्चित् पीडा नहीं देते हैं ॥ २० ॥

लोक में हमारे भक्त लोग तुमारे सदृश होते हैं और तुमतौ सम्पूर्ण हमारे भक्तों में उपमा देने [illegible] हो ॥२१॥

मेरे अंगस्पर्श से सर्व प्रकार पवित्र देहे तुमारे पिता के

प्रसादसुमुखं दृष्ट्वा ब्रह्मा नरहरिं हरिम् ।
स्तुत्वा वाग्भिः पवित्राभिः प्राह देवादिभिर्वृतः ॥ २५ ॥

ब्रह्मोवाच ।

देवदेवाऽखिलाध्यक्ष ! भूतभावन ! पूर्वज ! ।
दिष्ट्या ते निहतः पापो लोकसन्तापनो ऽसुरः ॥ २६ ॥
योऽसौ लब्धवरो मत्तो न वध्यो मम सृष्टिभिः ।
तपोयोगबलोन्नद्धः समस्तनिगमानहन् ॥ २७ ॥
दिष्ट्या ऽस्य तनयः साधुर्महाभागवतोऽर्भकः ।
त्वया विमोचितो मृत्योर्दिष्ट्या त्वां समितो ऽधुना ॥ २८ ॥
एतद्वपुस्ते भगवन् ! ध्यायतः प्रयतात्मनः ।
सर्वतो गोप्तृ सन्त्रासान्मृत्योरपि जिघांसतः ॥ २९ ॥

श्रीनृसिंह उवाच ।

मैवं वरोऽसुराणां ते प्रदेयः पद्मसम्भव ! ।
वरः क्रूरनिसर्गाणामहीनाममृतं यथा ॥ ३० ॥

नारद उवाच ।

इत्युक्त्वा भगवान् राजन् तत्रैवान्तर्दधे हरिः ।
अदृश्यः सर्वभूतानां पूजितः परमेष्ठिना ॥ ३१ ॥
ततः सम्पूज्य शिरसा ववन्दे परमेष्ठिनम् ।
भवं प्रजापतीन्देवान् प्रह्लादो भगवत्कलाः ॥ ३२ ॥

---

भाषा टीका ।

प्रेतकार्य ( मरण के अंतर के कृत्य ) करो, तुमारे सदृश सुन्दर जिसके पुत्र हैं, ऐसा तुमारा पिता उत्तम लोकों को जावेगा ॥२२॥

ब्रह्मवादि लोगों की उक्ति के अनुगुण अपने पिता की गादी पर बैठ कर मेरे विषें मन लगाकर मत्परायण होकर कर्म करो ॥ २३ ॥

नारद उवाच

नारदजी बोले, कि—हे राजन् ! द्विजोत्तमों से अभिषिक्त होकर, प्रह्लाद ने भी भगवदाज्ञा के अनुगुण पिता का अंतिम कृत्य यथावत् किया ॥ २४ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

मम सृष्टिभिर्मया सृष्टैर्भूतैः समस्तान्निगमान्धर्मानित्यर्थः अहन् हतवान् स त्वया हतः एतद्दिष्ट्या भद्रम् ॥ २७ ॥

समितः सम्यक् प्राप्तः ॥ २८ ॥

सर्वतः सन्त्रासात् गोप्तृ रक्षकम् ॥ २९ ॥

एवं वरस्त्वया न प्रदेयः क्रूरो निसर्गः स्वभावो येषाम् अमृतं क्षीरम् ॥ ३०—३४ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

ततः प्रसादाभिमुखं सुन्दरं मुखं यस्य तं नरहरिं श्रीनृसिंह-रूपं हरिमाश्रितार्तिहरं भगवन्तं दृष्ट्वा ब्रह्मा चतुर्मुखः वेधा-

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

द्रिभिः परिवृतः पत्निभिर्वाग्भिः स्तुत्वा वाचां भगवद्गुण-विषयकत्वेन लोकपावनत्वात्पवित्राभिरित्युक्तं प्राहोवाच ॥२५॥

तदेवं चतुर्भिः श्लोकैराह—देवेति चतुर्भिः । हे देवदेव, देवानामपि देव ! ननु, न्वम्, इन्द्रादिदेवानामपि देवो नाहं तत्राह—हेऽखिला-ध्यक्ष ! ननु, सोपि त्वमेव तत्राह—हे भूतभावन ! भूतानि भावयत्यु-त्पादयतीति तथा ननु, सोपि त्वमेव तत्राह—हे पूर्वज ! ममापि पूर्वं कारणत्वेनावस्थित लोकानां सन्तापनकरोऽत एव पापोऽयम-सुरो दिष्ट्या दैवात्ते त्वया निहतः दिष्ट्या हत इति तद्वधस्य दुष्करत्वं सूचितम् ॥ २६ ॥

तदेवाविष्कुर्वन् असुरं विशिनष्टि—योऽसाविति । योऽसावसुरः मत्तः लब्धो वरो येन तादृशः मम सृष्टिभिर्मया सृष्टैर्भूतै-र्न वध्यः हन्तुमशक्यः तपोयोग एव बलं तेनोन्नद्धः गर्वितः समस्तनिगमान् शास्त्रोक्तधर्मान् हन् विनाशितवान् स तु त्वया विना-शितः एतद्दिष्ट्या जातमिति भावः ॥ २७ ॥

किं तदापि दिष्ट्या जातं किमस्यासुरस्य तनयो महा-भागवतोऽर्भकः प्रह्लादः त्वया मृत्योः सकाशाद्विमोचित इति स च त्वामतीव कोपाविष्टं सम्यगितः प्राप्तो ऽभुताचेति चैत-दपि दिष्ट्या जातमित्यर्थः ॥ २८ ॥

हे भगवन् ! तवैतद्वपुः नृसिंहरूपं ध्यायतः प्रयतात्मनः समा-हितमनसः पुंसः सर्वतः सन्त्रासात् भयाद्गोप्तृ रक्षकं जिघांसतः हन्तुमिच्छतः मृत्योरपि सकाशाद्गोप्तृ एतच्च प्रह्लादहष्टान्तेना-स्माभिरनुमितमिति भावः ॥ २९ ॥

एवमभिहितस्तमाह श्रीभगवान्—नेति । हे पद्मसम्भव ! इतः प्रभृ-त्येवं विधो वरोऽसुराणां ते त्वया न प्रदेयः । क्रूरो निसर्गः स्वभावो येषां तेषाम् अहीनां सर्पाणाममृतं क्षीरं यथा क्षीरप्रदत्वेन तद्वर्धनं यथा लोकोपद्रवकारि तद्वदिदं तेषां वरप्रदानमि-त्यर्थः ॥ ३० ॥

एवं ब्रह्माणमनुज्ञाप्यान्तर्दधे हरिरित्याह—नारद, इतीति । हे राजन् ! इति इत्थमुक्त्वा परमेष्ठिना पूजितः सर्वप्राणिनामदृश्यः हरिरित्युक्त्वान्तर्दधेऽदृश्योऽभूत् ॥ ३१ ॥

ततः प्रह्लादः परमेष्ठिनं ब्रह्माणं भवं रुद्रं प्रजापतीन् मरी-च्यादीन् देवान् इन्द्रादींश्च भगवत्कलाः भगवदंशभूतान् सम्पूज्य शिरसा ववन्दे ननाम ॥ ३२ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

तत्रागतेषु देवेष्वेकतमेनापि संल्लापोहरेरभूत्र वा आद्ये केन द्वितीये दैत्येभ्य एषां को विशेषः ? किञ्च सेव्यसेवकादिभावेन ब्रह्मविद्याधिकारोऽप्युत्पादितः स्यादित्याशङ्कां परिहरति—ब्रह्मा-देति, देवादिभिर्वृत इत्यनेन तैरपि स्वच्छन्दवचनं कृतमिति ज्ञात-व्यम् ॥ २५ ॥

दिष्ट्या सुखमभूत् ॥ २६ ॥

मम सकाशाल्लब्धं सर्जनमेषामस्ति ते मम सृष्टिस्तैर्मयासृष्टै-रित्यर्थः ॥ २७ ॥

दिष्ट्या मङ्गलसुखहेतुतः अधुना तस्मै दिष्ट्या सुखलक्षणो-वर्गो दृश्य इति शेषः ॥ २८ ॥

अनेन वपुषा न केवलं दैत्यहननमेव प्रयोजनं किन्त्वन्यच्चा-स्तीत्याह—एतदिति ॥ २९ ॥

एवं स्तुतोऽभगवान् कमनुग्रहमकार्षीत्तेषामिति तत्राह—श्रीभगवा-निति । निसर्गतः क्रूराणाम् अमृतं पयः "देवास्ते सलिले क्षीरे त्वमृतं नाविमुक्तिमे" इति अत्र हिरण्यकशिपुमन्तरेणान्येषां न दातव्य इत्याज्ञा क्रियते नतवस्य हि । "यथा हिरण्यकस्यादादन्तः स्थितहरीरितः"इत्यादिना स्वप्रेरितत्वावगमादिति ॥ ३० ॥

मङ्गल्यानामपि योग्यप्रत्यक्षत्वे "हरेरुपर्युपरि व्यवहारेण ध्या-यन्ति देवमनुष्याः"इति श्रुतेः । देवस्वभावो यः स विहितः स्यादिति मत्वा तद्रक्षणार्थं तद्विग्रहेणादृष्टोऽभूदित्याह—नारद इति । सर्वभू-तानामदृश्य इत्यनेन भक्तानुकम्पित्वं प्रदर्शितम् ॥ ३१ ॥

अनन्तरं प्रह्लादेन ब्रह्मादयो देवाः सत्कृता उतात्मनोभगवदनुग्रह-पात्रत्वेनाहम्भावेन धिक्कृताः ? आद्ये वैष्णवाचारः प्रवर्तितः स्यात् द्वितीये भगवच्छिक्षणं गजस्नानवत्स्यादिति तत्राह, तत-इति । भगवतः कलालेशा येषु तथा भगवतो भिन्नांशा वा ॥ ३२ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

भूतभावनाः ब्रह्ममरीच्यादयः पूर्वजाः प्रथमजाता यस्मात् ॥ २६ ॥ २७ ॥ २८ ॥

मृत्योः सकाशादपि गोप्तृ ॥ २९ ॥

एवं वरो वरः अतिबृहत्तमो वरः ॥ ३०—३४ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

हे पूर्वज, सर्वेभ्यो ऽस्मदादिभ्यः पूर्ववर्तिन् ! पूर्वं बहुधा कृतावतार इत्यर्थः ॥ २६ ॥

मम सृष्टिभिः निगमान् त्वदाज्ञारूपान् वेदान् महन् उपेक्षि-तवान् ॥ २७ ॥

दिष्ट्या भद्रं त्वां सद्भिः सम्यक् प्राप्तः ॥ २८ ॥

गोप्तृ रक्षकम् ॥ २९ ॥

अहीनाममृतं यथा न देयम् तथा वरः श्रेष्ठः एवं वरो ते त्वया क्रूरनिसर्गाणां दुष्टस्वभावानामसुराणां मा प्रदेयः न देयः ॥ —३०—३४ ॥

ततः कात्यादिभिः सार्द्धं मुनिभिः कमलासनः ।
दैत्यानां दानवानां च प्रह्लादमकरोत्पतिम् ॥ ३३ ॥
प्रतिनन्द्य ततो देवाः प्रयुज्य परमाशिषः ।
स्वधामानि ययू राजन् ! ब्रह्माद्याः प्रतिपूजिताः ॥ ३४ ॥
एवं तौ पार्षदौ विष्णोः पुत्रत्वं प्रापितौ दितेः ।
हृदि स्थितेन हरिणा वैरभावेन तौ हतौ ॥ ३५ ॥
पुनश्च विप्रशापेन राक्षसौ तौ बभूवतुः ।
कुम्भकर्णदशग्रीवौ हतौ तौ रामविक्रमैः ॥ ३६ ॥
शयानौ युधि निर्भिन्नहृदयौ रामसायकैः ।
तच्चित्तौ जहतुर्देहं यथा प्राक्तनजन्मनि ॥ ३७ ॥
ताविहाथ पुनर्जातौ शिशुपालकरूषजौ ।
हरौ वैरानुबन्धेन पश्यतस्ते समीयतुः ॥ ३८ ॥
एनः पूर्वकृतं यत्तद्राजानः कृष्णवैरिणः ।
जहुस्त्वन्ते तदात्मानः कीटः पेशस्कृतो यथा ॥ ३९ ॥
यथा यथा भगवतो भक्त्या परमया ऽभिदा ।
नृपाश्चैद्यादयः सात्म्यं हरेस्तच्चिन्तया ययुः ॥ ४० ॥

भाषा टीका ।

अपने ऊपर प्रसन्न जानकर सुमुख श्रीनृसिंहदेव की पवित्र वाणी से स्तुतिकर, सब देवताओं के सहित ब्रह्माजी बोले ॥ २५ ॥

ब्रह्मोवाच ॥

ब्रह्माजी बोले, कि——हे देव देव ! हे अखिलाऽध्यक्ष ! हे भूतभावन ! हे पूर्वज ! लोकों को संताप देनेवाले पापी का आपने वध किया यह बड़ा मंगल हुआ ॥ २६ ॥

एकतो इसने मेरेसे यह वरपाया था कि "मेरीसृष्टि से न मरे और दूसरे तप योग और बलसे उन्नद्ध ( मत्त ) होने से इसने सब वेदों का नाश करदिया ॥ २७ ॥

यह भी बड़े मंगल की बात हुई, कि इसका छोटा सा पुत्र परम भागवत साधु ऐसे प्रह्लादको आपने मृत्युसे छुड़ाया, और यह उससे भी मंगल हुआ जोकि ? यह इसी समय में आपको प्राप्त होगया ॥ २८ ॥

हे भगवन् ! जोपुरुष आपके इसदिव्य मंगल विग्रह का ध्यान करेगा वह सर्व त्रासों से और मारते हुए मृत्युके त्रास से भी छूट जावेगा ॥ २९ ॥

श्रीनृसिंह उवाच ॥

श्रीनरसिंहजी बोले, कि——हे पद्मसंभव, हे ब्रह्माजी ! इसप्रकार के क्रूरस्वभाव वाले असुरों को तुम ऐसा वर मतदियाकरो । जैसे कि सर्पों को अमृत ॥ ३० ॥

नारद उवाच ॥

नारदजी बोले, कि——हे राजन्, हे युधिष्ठिर ! श्री हरिभी ब्रह्माजी [illegible] कहकर ब्रह्माजी से पूजित होकर सर्व प्राणियों के अ[illegible] होकर अंतर्धान होगये ॥ ३१ ॥

तबप्रह्लादने ब्रह्मा शिव प्रजापति और सर्व देवों को भगवानकी कला जानकर शिर से वंदना की ॥ ३२ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

शिशुपालदन्तवक्रयोर्द्विषतोः श्रीकृष्णसायुज्यं कथमिति यत्पृष्टं तदेव तयोः पूर्वजन्मकथनादिभिरुपपादितमुपसंहरति——एवमिति सप्तभिः । दितेः पुत्रत्वं प्रापितौ विप्रशापेनेत्युत्तरस्यानुषङ्गः ॥ ३५ ॥ ३६ ॥

तच्चित्तौ श्रीरामे चित्तं ययोस्तौ ॥ ३७ ॥

करूषजो दन्तवक्रः हरौ सायुज्यं समीयतुः ॥ ३८ ॥

### श्रीधरस्वामिकृतभावार्थदीपिका ।

कृष्णनिन्दादिना पूर्वकृतं च यदेनः पापं तद्ध्यानेन तदात्मानः सन्तो जहुः । तदात्मत्वे दृष्टान्तः, कीटः पेशस्कृतो ध्यानेन यथा तदात्मा भवतीति ॥ ३९ ॥

अभिदा भेददर्शनशून्यया हरेः सात्म्यं सारूप्यम् ॥४०॥ ४१ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

ततः कमलासनो ब्रह्मा काव्यादिभिर्भार्गवादिभिस्सह सहितः प्रह्लादं दैत्यानां दानवानां च पतिमकरोत् ॥ ३३ ॥

हे राजन् ! ततो ब्रह्मादयः सर्वे देवाः प्रह्लादं प्रतिनन्द्याहो त्वत्प्रभावोऽनितरसाधारण इत्यभिनन्द्य, परमाः श्रेष्ठाः आशिषः प्रयुज्य प्रह्लादेन प्रतिपूजिताः स्वधामानि स्वकीयस्थानानि ययुः ॥ ३४ ॥

तदेवं शिशुपालदन्तवक्रयोर्भगवन्तं द्विषतोः कथं मुक्तिरिति युधिष्ठिरप्रश्नस्य तत्पूर्वजन्मकथनादिमुखेनोक्तमुत्तरमुपसंहरति—एवमिति, सप्तभिः । विष्णोः पार्षदौ स्थितौ विप्रशापेन सनकादीनां शापेन दितेः पुत्रत्वमेवं प्रापितौ वैरभावेन हेतुना स्वहृदि स्थितेन हरिणा नृसिंहरूपं बिभ्रता हतौ ॥ ३५ ॥

पुनः कुम्भकर्णरावणाख्यौ राक्षसौ बभूवतुः तौ च दाशरथेः रामस्य विक्रमैर्हतावभिभूतावित्यर्थः ॥ ३६ ॥

तौ च रामस्य राघवस्य बाणैर्युधि निर्भिन्नं हृदयं ययोस्तौ तच्चित्तौ तस्मिन् श्रीरामे एव चित्तं ययोस्तौ यथा प्राक्तनजन्मनि तद्वद्देहं जहतुः सन्त्यजतुः ॥ ३७ ॥

तावेवेह शिशुपालकरूषजौ, करूषजो दन्तवक्रः शिशुपालदन्तवक्ररूपेण जातौ पुनर्हरिणा हतौ वैरानुबन्धेन हेतुना ते तव पश्यतः सतः समीयतुः सायुज्यं प्रापतुः ॥ ३८ ॥

न केवलं शिशुपालकरूषजौ एव समीयतुः अपित्वन्येऽपि राजानः कृष्णवैरिणस्ते सर्वेऽपि यदेनः पापं पूर्वं कृतं तच्च उज्जहुः तत्यजुः तदात्मानः कृष्णात्मानश्चाभवन्. यथा पेशस्कृतश्चिन्त्यमानाद्धेतोः कीटः तदात्मा भवति, तद्वत् तदात्मानस्तत्तुल्यस्वभावा अभवन् इत्यर्थः। आत्मशब्दः स्वभाववाची तस्यैवाऽऽत्मा स्वभावो येषां ते इत्युपमानबहुव्रीहिः अन्यथा दृष्टान्तवैषम्यात्. न हि कीटः पेशस्कृता ऐक्यं याति किन्तु तस्य समानाकारो भवत्यत एव ह्यनन्तरग्रन्थे साम्यं ययुरित्युक्तम् ॥ ३९ ॥

यथा अभिधा अनन्यया भक्त्या भगवतः साम्यं यान्ति तद्भक्तास्तथा चैद्यादयोऽपि नृपास्तस्य भगवतश्चिन्तया संरम्भपूर्वकचिन्तया हरेः साम्यं ययुः ॥ ४० ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

भगवच्चित्तज्ञेन ब्रह्मणा वेदमन्वग्राहीत्याह—तत इति । अनेन भक्तेन भगवद्भक्तेषु यथायोग्यं प्रेमकर्तव्यमिति शास्त्राचारो दर्शितः ॥ ३३ ॥

प्रह्लादवरदानानन्तरं भगवता स्वाचारत्वेन यद्दर्शनमकारि तदस्माभिरप्यनुष्ठेयमिति कृत्वा ब्रह्माद्या अपि स्वगृहान्ययुरित्याह, प्रतिनन्द्येति ॥ ३४—३५ ॥

इदानीं विशकलितोक्तमर्थं निश्चित्योपसंहरति—एवमिति । हृदि स्थितेन वैरभावेन हेतुना हरिणा हतौ ॥ ३६ ॥

प्राक्तनजन्मनि जयविजयशब्दवाच्यौ पूर्वजन्मनि यथा तच्चित्तौ तथा ऽत्रापीति शेषः । हिरण्यकशिपुर्हिरण्याक्षाख्यः पूर्वजन्मनि यथा तथेति वा ॥ ३७ ॥

वैरानुबन्धेन वैरोपमर्जनेनाऽनुबन्धेन स्नेहेन समीयतुर्हरिमिति शेषः । तत्रासुरौ तम ईयतुरित्यनुसन्धेयम् सम्यग्भक्त्यैव श्रीहरिप्राप्ति' तदभावेन तम एवेति द्योतनाय समित्युपसर्गः—

"मधुकैटभौ भक्त्यभावाद्दूरौ भगवतो मृतौ ।
तम एव क्रमादाप्तौ भक्त्या चैद्यो हरिं ययौ "

इति वचनात् ॥ ३८ ॥

अन्येषामपि सद्भावादेतद्रूपलक्षणार्थमुक्तमित्यभिप्रेत्याह—एव इति । अत्रापि वैरानुबन्धेनेत्यनुवर्त्तते. ये राजानः पौण्ड्रकादिशब्दवाच्यास्तेष्वसुरदेहस्थात्मारूपविशेषो येषां ते तथा तत्रापि तस्मिन्कृष्णे आत्मा चित्तं येषां ते तथा तदनुष्ठितपुण्यफलस्वीकारार्थं तत्राविष्टास्तद्भक्ता इत्यर्थः । ते अस्यैव वत्पूर्वकृतं तत्तत्स्वजन्मप्राप्तमेनः पापं तज्जहुः तद्धित्वा हयाज्ञाकरणप्राप्तपुण्यप्रचयेन तं हरिमीयुः त एव कृष्णवैरिणो ऽनादिकालमारभ्य भगवद्द्वेषिणः कृष्णाश्च तामसाश्च वैरिणः वैरिरूपिणो राजानोऽसुराः तत्प्रकृतयो दैत्याः तदात्मानो द्वेषरूपिणः ते जन्मप्रभृतिचीर्णं यदेनः तेन पापेन वैरानुबन्धेन निरन्तरवैरिचिन्तया पूर्वकृतं ब्रह्मणा पूर्वं कृतं तमो जहुर्जग्मुरित्यन्वयः । "ओहाङ्गतौ"इति धातुः इति 'रवे कहाल्तस्य सनुकूल सुरं प्रवेशे हाङ्‌, इति प्रयोगश्च । अन्ते भक्त्यादिसाधनसामग्र्यनन्तरं इतरश्च द्वेषपूर्वेनन्तरमित्यत्र "तस्य तावदेव चिरम्" इति श्रुतेः "अनेवंविन्महत्पुण्यं कर्म करोति तद्धास्यान्ततः क्षीयते" इत्याः कीटाः पेशस्कृतचिन्तनया पेशस्कृताकारमाप्नुवन्ति नतु तदात्मत्वम् अत्र प्रमाणम् "पौण्ड्रके नरके चैव शाल्वे कंसे च रुक्मिणि । आविशन्ते हरेर्भक्तास्तद्भक्त्या हरिमीयिरे ॥ असुरास्तु स्वयं ते तु महानमसि पातिताः" इति वाक्यम् ॥ ३९ ॥

अत्रापि साम्यमस्तीत्याह,यथेति । भिदां विशेषम् "भेदो विशेषे दलने"इत्यभिधानम् अभिदामसम्प्रज्ञातसमाध्यवस्थां ययुरिति वा. साम्यं निर्दोषत्वादिचतुर्भुजलक्षणम् । अन्यथा कीटाः पेशस्कृतो ध्यानेन केचन पेशस्कृतो भवन्ति नतु स एव पृथग् दृश्यमानत्वादित्ययं दृष्टान्तोऽनर्थः स्यादिति ॥ ४० ॥

---

आख्यातं सर्वमेतत्ते यन्मां त्वं परिपृष्टवान् ।
दमघोषसुतादीनां हरेः सात्म्यमपि द्विषाम् ॥ ४१ ॥
एषा ब्रह्मण्यदेवस्य कृष्णस्य च महात्मनः ।
अवतारकथा पुण्या वधो यत्रादिदैत्ययोः ॥ ४२ ॥

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

यथेति । यथा यथा भगवतः परया भक्त्या अन्ये सारूप्यं ययुस्तथा चैद्यादयो नृपा अपि परमया तच्चिन्तया तद्ध्यानावेशेन ययुः अभिदा व्यवधानशून्यया निरन्तरयेत्यपि भक्तिचिन्तयोः विशेषणं तत्र चैद्यकारूषकयोः सारूप्याविर्भाव एव तत्प्राप्ति-रिति गम्यम् ॥ ४०—४२ ॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

शिशुपालदन्तवक्रयोः सायुज्यं कथमिति यत्पृष्टं तत्तयोः पूर्व-जन्मकथनादिभिरुपपादितमित्युपसंहरति, एवमिति ॥ ३५ ॥

एनोऽपराधः कृष्णनिन्दादिनेत्यर्थः । पूर्वकृतं यत् पापं तदपि तद्ध्यानेन तदात्मानः सन्तो जहुः । तदात्मत्वे दृष्टान्तः कीटः पेशस्कृतः कीटविशेषस्य ध्यानेन यथा तदात्मा भवतीति ॥ ३६ ॥ ३७ ॥ ३८ ॥ ३९ ॥

भक्त्या यथा यथा अभिदा अभेदेन ज्ञानिभक्ता हरेः सात्म्यं ययुः तथा चैद्यादयोपि तच्चिन्तया तद्ययुः भक्त्या कीदृश्या तदीयज्ञानवैराग्यादिभ्योऽपि परमया अग्रेऽप्येवं "निभृत मरुन्मनः" इत्यत्र "तदरयोपि ययुः स्मरणात्" इति वक्ष्यते ॥ ४० ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

भगवद्द्रोहवासनया तौ जन्मद्वयानन्तरं भगवन्तं साम्यं गता-वित्याह-एवमित्यादिना । हरेः पार्षदौ तौ जयविजयौ दितेः पुत्रत्वं प्रापितौ विप्रशापेनेत्युत्तरस्याऽनुषङ्गः ॥ ३५—३७ ॥

तौ राक्षसौ वैरानुबन्धेन शिशुपालकरूषजौ शिशुपालदन्त-वक्रौ पुनर्जातौ ते पश्यतः हरौ सायुज्यं च समीयतुः ॥ ३८ ॥

कृष्णवैरिणो राजानः पेशस्कृतः सारूप्यं तद्ध्यानेन कीटो यथा प्राप्नोति तथान्ते तदात्मानः कृष्णसाधर्म्यं गताः सन्तः यत्पूर्व कृतमेनः पापं तत् जहुः ॥ ३९ ॥

यथा यथा स्वस्वद्रोहानुरोधेन चिंतया हरिस्मरणेन चैद्या-दयो हरेः सात्म्यं सारूप्यं ययुर्यदा तदा नृपा अंबरीषादयः भगवतो भक्त्या तत्रापि परमया तत्रापि अभिदा "आत्मेति तूपगच्छन्ति ग्राहयन्ति च" ४।१।३ इति पारमार्षसूत्रोक्ततदात्मक-त्वानुसन्धानयुक्तया हरेः सात्म्यं ययुरिति किमुत वक्तव्यम् ॥ ४० ॥

---

### भाषा टीका ।

तदनंतर ब्रह्माजी ने शुक्रआदि मुनियों को साथ लेकर प्रह्ला-दजीको दैत्य और दानवोंका पति बनाया ॥ ३३ ॥

हे राजन् ! उस समय ब्रह्मादिक सर्व देवता लोग पूजित होकर प्रह्लादके अभिषेक का अभिनंदन कर उत्तम आशीर्वाद देकर अपने २ घर को पधारे ॥ ३४ ॥

एसे वे दोनो ( जय विजय ) श्रीविष्णुके पार्षद दिति के पुत्र होकर हृदयमें स्थित हरि के साथ वैरभाव से युद्धकरके हरि ही से मृत्युको प्राप्त हुए ॥ ३५ ॥

फिर वेहीदोनों सनकादिकों के शाप से कुंभकर्ण और रावण नामसे राक्षस हुए, जोकि ? सर्व लोकाभिराम दूर्वा-दलश्याम श्रीचक्रवर्तिकुमार श्रीरामचन्द्र के पराक्रम से मारे गये ॥ ३६ ॥

संग्राममें श्रीराम के वाणों से विदीर्ण हृदय पृथ्वीपर सोये हुए, श्रीराम में चित्त लगाकर देहको छोड़ते हुए जैसे पूर्वजन्म मे ( हिरण्यकशिपुके जन्ममें ) छोडा ॥ ३७ ॥

वेही दोनों फिर यहां शिशुपाल और दन्तवक्रहुए श्रीहरि में वैरके संबंधसे आपही को प्राप्तहुए ॥ ३८ ॥

ऐसेही श्रीकृष्ण से वैर करने वाले और राजा लोगभी पूर्वकृत पाप को छोडतेहुए, और जैसे कीट [ कीडा ] भृङ्गी के भयसे भृङ्गीरूप होजाता है एसे ही, आपके स्वरूप को प्राप्त हुए ॥ ३९ ॥

भगवान से कुछ भेदभाव न रखकर अर्थात् कपट न रखकर परमभक्तिसे जैसे भक्तलोग आपको प्राप्त होतेहैं, ऐसेही शिशुपालादिक रिपुगणभी हरि की चिंतासे आपके सात्म्यको ( समान विग्रहयोग्य ) प्राप्तहुए ॥ ४० ॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका ।

प्रह्लादचरितार्थमुपसंहरति-एषेति, चतुर्भिः । अवतारः श्रीनृसिं-हरूपस्तस्य कथा आख्यातेति शेषः ॥ ४२ ॥

प्रह्लादस्यानुचरितं महाभागवतस्य च ।
भक्तिर्ज्ञानं विरक्तिश्च याथात्म्यं चास्य वै हरेः ॥ ४३ ॥
सर्गस्थित्यप्ययेशस्य गुणकर्माऽनुवर्णनम् ।
परावरेषां स्थानानां कालेन व्यत्ययो महान् ॥ ४४ ॥
धर्मो भागवतानां च भगवान् येन गम्यते ।
आख्याने ऽस्मिन्समाम्नातमाध्यात्मिकमशेषतः ॥ ४५ ॥
य एतत्पुण्यमाख्यानं विष्णोर्वीर्योपबृंहितम् ।
कीर्तयेच्छ्रद्धया श्रुत्वा कर्मपाशाद्विमुच्यते ॥ ४६ ॥
एतद्य आदिपुरुषस्य मृगेन्द्रलीलां दैत्येन्द्रयूथपवधं प्रयतः पठेत ।
दैत्यात्मजस्य च सतां प्रवरस्य पुण्यं श्रुत्वा ऽनुभावमकुतोभयमेति लोकम् ॥ ४७ ॥
यूयं नृलोके बत भूरिभागा लोकं पुनाना मुनयो ऽभियन्ति ।
येषां गृहानावसतीति साक्षाद्गूढं परं ब्रह्म मनुष्यलिङ्गम् ॥ ४८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

प्रह्लादस्यानुचरितमित्यादेः समाम्नातमिति तृतीयेनान्वयः अस्मिन्नेवोक्तं सर्गस्थित्यप्ययानामीशस्य हरेर्याथात्म्यं तत्त्वम् अनेन कृतं हरेर्गुणकर्मानुवर्णनं चेत्यर्थः ॥ ४३ ॥

परावरेषां देवदैत्यादीनां यानि स्थानानि तेषां व्यत्ययो विपर्यासः ॥ ४४ ॥

आध्यात्मिकमात्मानात्मविवेकादि ॥ ४५ ॥

एतच्छ्रवणादिफलमाह-य इति, द्वाभ्याम् । एतच्छ्रुत्वा यः कीर्तयेत् ॥ ४६ ॥

एतदेतां मृगेन्द्रस्य लीलां, तामेवाह—दैत्येन्द्रस्य यूथपानां च वधं यः शुचिस्सन्पठेत पुण्यमनुभावं प्रभावं मतिनिश्चयं वा लोकं वैकुण्ठम् ॥ ४७ ॥

अहो प्रह्लादस्य भाग्यं येन देवो दृष्टो वयं तु मन्दभाग्या इति विषीदन्तं प्रत्याह-यूयमिति, त्रिभिः । येषां युष्माकं गृहान्मुनयः अभियन्ति सर्वतः समायान्ति तत्कस्य हेतोः येषु गृहेषु नराकार गूढं स्वच्छीकृष्णाख्यं परं ब्रह्म साक्षाद्वसतीति ॥ ४८ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

हे नृप त्वं मां यत्पृष्टवान् किं तद्विद्विषतामपि दमघोषसुतादीनां शिशुपालादीनां हरेः साम्यमित्येतत्सर्वं ते तुभ्यमाख्यातं कथितं मयेति शेषः ॥ ४१ ॥

तदेवं प्रश्नस्योत्तरमुपसंहृत्य तदेतदाख्यानं विशिंषन् तत्कीर्तनश्रवणादिफलमाह-एवेति, षड्भिः । ब्रह्मणि ब्रह्मकुले साधुब्रह्मण्यः स चासौ देवस्तस्य लोकत्रयमन्तःप्रविश्य बिभ्रतः कृष्णस्येयमवतारकथा पुण्या पुण्यावहा यत्र कथायामादिदैत्ययोर्हिरण्याक्षहिरण्यकशिप्वोर्वधः प्रतिपाद्यते ॥ ४२ ॥

तथा यत्र महाभागवतस्य प्रह्लादस्य चरित्रं भक्तिर्ज्ञानं विरक्तिश्च, भक्तिशब्देन भक्तियोगानुष्ठानप्रकारो विवक्षितः विरक्तिशब्देन तदुत्पत्तिप्रकारः ज्ञानशब्देनात्मयाथात्म्यविवेचनपूर्वकतदनुसन्धानप्रकारः । एतत्सर्वं यत्र कथायां प्रतिपाद्यत इत्यर्थः ॥ ४३ ॥

तथा जगत्सर्गस्थितिलयकारणस्य हरेर्याथात्म्यं तत्त्ववर्णनं तस्य गुणानां कर्मणां च वर्णनम् परावरेषां देवासुरादीनां यानि स्थानानि तेषां कालेन निमित्तेन महान् व्यत्ययो विपर्यासश्च ॥ ४४ ॥

भगवान् येन गम्यते लभ्यते स भागवतानां धर्मश्च यच्चाध्यात्मिकमात्मानमधिकृत्य वर्त्तमानः वस्तु चेति तदेतत्सर्वमस्मिन्नाख्याने सम्यगाख्यातम् ॥ ४५ ॥

यः पुमानेतद्विष्णोर्वीर्येण पराक्रमादिगुणजातेनोपबृंहितं तत्प्रतिपादनेन विस्तीर्णमत एव पुण्यमाख्यानं श्रद्धया श्रुत्वा कीर्तयेत् स पुमान् कर्मपाशैः पुण्यपापात्मकैः कर्मभिरेव पाशैर्विमुच्यते ॥ ४६ ॥

किञ्च यः पुमानादिपुरुषस्य मृगेन्द्रस्य सिंहस्येव या लीला दैत्येन्द्रयूथपवधात्मिका प्रतिपाद्या यस्मिन् तदेतदाख्यानं प्रयतः समाहितचित्तः सतां प्रवरस्य दैत्यात्मजस्य प्रह्लादस्य पुण्यं प्रभावं च श्रुत्वा पठेत्पठेत् सोऽकुतोभयं कुतश्चिद्भयरहितं लोकं वैकुण्ठाख्यमेति प्राप्नोति, पूर्वं कर्मपाशैर्विमुच्यत इत्युक्तमत्राकुतोभयं लोकमेतीत्युक्त कर्मपाशविमोचनद्वाराऽकुतोभयं लोकमेतीत्यर्थः । अतोऽत्र न पौनरुक्त्यम् ॥ ४७ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

अहो प्रह्लादस्य भाग्यं येन भगवान् दृष्टः वयं तु मन्दभाग्या इति विषीदन्तं युधिष्ठिरमाह—यूयमिति त्रिभिः । नृलोके यूयमहो बतभूरिभागा. अहो बहुभाग्यवन्तः नदेव व्यञ्जयन् तान्विशिनष्टि, येषां युष्माकं गृहान् लोकं पुनानाः मुनयोऽभियन्ति सर्वतः समायान्ति. नत्कुतः मनुष्यलिङ्गं मनुष्यस्येव लिङ्गं शरीरं यस्य तत् परं ब्रह्म श्रीकृष्णरूपं गूढं प्रच्छन्नं सर्वेषां युष्माकं गृहानावसति इति हेतोः समायान्ति ॥ ४८ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

ग्रन्थाधिकभयादुपसंहरति, आख्यानमिति । अतश्चैद्यादयो दमघोषसुतादीनामित्यादि बहुवारोक्तिर्भक्तेरनादिकालसम्बन्धित्वद्योतनार्था अन्यथा वेनादीनामित्याद्युक्तिरपि स्यात् ॥ ४१ ॥

श्रद्धाजननाय स्तौति—एषेति । ब्रह्मण्यदेवस्य रामस्य चशब्दान्नरसिंहस्य यत्र कथायाम् ॥ ४२ ॥

भक्त्यादिकमेव मुक्तिसाधनं न द्वेषादिकमित्येतदत्र प्रतिपाद्यते इत्युपसंहरति—प्रह्लादस्येति । भक्त्यादिलक्षणो धर्मश्चात्र कथित इत्यन्वयः ॥ ४३ ॥

येन भक्त्यादिलक्षणधर्मेण हरिमितरेभ्योऽव्यावर्त्तयति, सर्गेति । अव्यत्ययो यथास्थितत्वम् ॥ ४४ ॥

आत्मानमधिकृत्य वर्तमानमिन्द्रियादिस्वरूपं च कथितमस्मिन्नाख्यान इत्याहुः, तदुपाख्यान इति । अत्रैव वै पार्षदौ विष्णोरित्यावृत्तानुकथनं च भक्त्यादिकं मुक्तिसाधनं न द्वेषादिकमिति ज्ञापनाय येन भागवतधर्मेणैव भगवान् गम्यते न द्वेषादिनेति शेषः,

"भक्तिर्ज्ञानं विरक्तिश्च नवकं श्रवणादिकम् ।
धर्मो भागवतः प्रोक्तस्तद्भक्तेषु तथा नव" ॥

इति वचनात् भागवतधर्मेणैव श्रीहरिर्गम्यत इति कथमुच्यते ? भक्त्यादिना विनेतीयमाशंका परिहृता भक्त्यादेर्धर्मशब्दवाच्यत्वात् श्रवणं कीर्तनं विष्णोरित्यादिश्रवणादि नवकम् ॥ ४५ ॥

अधुनाऽऽख्यानकीर्तनादिना यत्पुण्यं तदाह य इति ॥ ४६ ॥

सामान्यत उक्तं विवृणोति एतदिति ॥ ४७ ॥

ननु, प्रह्लादानुभवस्यात्युत्तमत्वज्ञानेन युधिष्ठिरादीनां ततोऽधमत्वं प्रतीयत इति मन्दाशङ्कां परिहरति—यूयमिति । मुनय एतानिति यथानीय वर्णयन्ति वत विस्मये "खेदानुकम्पासन्तोषविस्मयामन्त्रणे बत." इति ॥ ४८ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

प्रह्लादस्येति त्रिकम् । अस्य श्रीकृष्णाख्यस्य हरेर्याथात्म्यं तत्तद्यथावन्माहात्म्यं सर्वावतारित्वात्. टीकायामस्येति पाठमुत्थाप्य व्याचष्टे, अनेन प्रह्लादेनोक्तमित्यादिकं गम्यम् ॥ ४३—४७ ॥

अहो प्रह्लादस्य भाग्यम् इति सविस्मयं तं राजानं प्रत्याह—यूयमिति,त्रिभिः । मनुष्यलिङ्गमिति तदाकारे तदाविर्भावस्याऽपि न तादृशत्वमिति व्यञ्जितम् ॥ ४८ ॥ ४९ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

अनुचरितम् आख्यातमिति पूर्वेण समाम्नातमिति परेण वान्वयः । हरेर्याथात्म्यं हरेः स्वरूपम् मनतिक्रम्य स्वार्थे यत्र् सर्गति सृष्ट्यादयोऽपि उक्ताः परावरेषां देवदैत्यादीनां यानि स्थानानि तेषां व्यत्ययो विनाशः ॥ ४१-४६ ॥

एतत् एतां मृगेन्द्रस्य सिंहस्य लीलाम् "ऋद्धस्य राजमातङ्गा." इति वत्समास आर्षः । लीलामाह-दैत्येन्द्र एव यूथपो हस्ती तस्य दैत्येन्द्राणां यूथपस्य हिरण्यकशिपोश्च वधम् ॥ ४७ ॥

अहो !! प्रह्लादस्य भाग्यं येन देवो दृष्टः वयं तु मन्दभाग्या इति विषीदन्तं राजानंप्रति यूयं प्रह्लादात् प्रह्लादगुरोर्मत्तोपि अन्येभ्योऽपि भक्तेभ्यो युष्मत्पूर्वजेभ्यो यदुपुरूरवःप्रभृतिभ्योपि वसिष्ठमरीचिकश्यपादिऋषिभ्योऽपि ब्रह्मरुद्राभ्यामपि भूरिसौभाग्यवन्त इत्याह, यूयं नृणां जीवानां लोकमध्ये भूरिभागाः येषां युष्माकं गृहान् लोकं स्वदर्शनदानादिना पवित्रीकुर्वन्तोपि मुनयो अभि सर्वतोभावेन स्वीकृतार्थीकरणादिना हेतुनाऽपि गच्छन्ति. यतो गूढ सवताऽपि रहस्य यन्मनुष्यलिङ्गं नराकृतिपरं ब्रह्म तत्सम्यक प्रकारेण युष्माभिरनाहूतमप्यासक्तिपूर्वकं येषां गृहेषु साक्षाद्वसति, सदैव. न हि प्रह्लादादीनां गृहेषु नराकृतिपरं ब्रह्म साक्षाद्वसति न च तद्दर्शनेन कृतार्थीभवितुं मुनयो गच्छन्तीति भावः ॥ ४८ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः :

उपसंहरति-आख्यातमित्यादिना । दमघोषसुतः शिशुपालस्तदादीनाम् ॥ ४१ ॥

कृष्णस्य अवतारः श्रीनृसिंहस्तस्य कथा आख्यातेति लिङ्गव्यत्ययतः पूर्वेणान्वयः ॥ ४२ ॥

प्रह्लादस्यानुचरितमित्यादेः अस्मिन्नाख्याने । समाम्नातमिति तृतीयेनान्वयः । अस्य हरेर्याथात्म्यं तत्त्वम् ॥ ४३ ॥

सर्गादिनाशिनस्य हरेः प्रह्लादकृतं गुणकर्मानुवर्णनं च परावरेषां ब्रह्मादिमनुष्यान्तानां यानि स्थानानि तेषां व्यत्ययो विपर्यासः ॥ ४४ ॥

आध्यात्मिकमात्मानमधिकृत्य वर्त्तमानं जीवात्मानो ब्रह्मात्मकत्वं चैतत्सर्वं समाम्नातम् ॥ ४५ ॥

आख्यानकीर्त्तनादिफलमाह—य इति, द्वाभ्याम् ॥ ४६ ॥

अकुतोभयमप्राकृतं लोकम् ॥ ४७ ॥

स वा अयं ब्रह्म महद्विमृग्यं कैवल्यनिर्वाणसुखानुभूतिः ।
प्रियः सुहृद्वः खलु मातुलेय आत्माऽर्हणीयो विधिकृद्गुरुश्च ॥ ४९ ॥
न यस्य साक्षाद्भवपद्मजादिभी रूपं धिया वस्तुतयोपवर्णितम् ।
मौनेन भक्त्योपशमेन पूजितः प्रसीदतामेष स सात्वतां पतिः ॥ ५० ॥
स एष भगवान्राजन्! व्यतनोद्विहतं यशः ।
पुरा रुद्रस्य देवस्य मयेनाऽनन्तमायिना ॥ ५१ ॥

राजोवाच ।

कस्मिन्कर्मणि देवस्य मयोऽहन् जगदीशितुः ।
यथाचोपचिता कीर्तिः कृष्णेनाऽनेन कथ्यताम् ॥ ५२ ॥

नारद उवाच ।

निर्जिता असुरा देवैर्युध्यनेनोपबृंहितैः ।
मायिनां परमाचार्यं मयं शरणमाययुः ॥ ५३ ॥
स निर्माय पुरस्तिस्रो हैमीरौप्यायसीर्विभुः ।
दुर्लक्ष्यापायसंयोगा दुर्वितर्क्यपरिच्छदाः ॥ ५४ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

यूयमपि धन्या इति प्रसङ्गाद्राजानमभिनन्दति यताहो नृलोके यूयं भूरिभागाः येषां युष्माकं गृहान् लोकं पुनाना ये मुनयस्ते ऽभियन्ति सर्वतः समायान्ति, तेषां समागमने हेतुमाह, येषु गृहेषु गूढं अनिगोप्यं ब्रह्म श्रीकृष्णाख्यं साक्षात् वसति कथंभूत मनुष्यलिङ्गं मनुष्यार्थं मनुष्योपलक्षितभक्तहितार्थं लिङ्गानि चक्रादीनि चिह्नानि वंशीवेत्रनियोगपाशादीनि च यस्य तत् ॥ ४८ ॥

---

नारद उवाच ।

राजन्! जो आपने शिशुपालादि द्वेषियों कोभी भगवत्प्राप्ति का आख्यान हमसे पूंछा सो हमने सब कहा ॥ ४१ ॥

यहसाक्षात् ब्रह्मण्यदेव महात्मा श्रीकृष्णकी नृसिंह अवतार की कथा है, कि जिसमें दोनों आदिदैत्यों का बध है ॥ ४२ ॥

और महाभागवत श्रीप्रह्लादका चरित्र है जिसमे भक्ति ज्ञान वैराग्य और प्रह्लाद को हरि के याथात्म्य की प्राप्ति का वर्णन है ॥ ४३ ॥

सृष्टि पालन और संहार करने वाले ईश्वर के गुणकर्मों का वर्णन है, और देवदैत्यों के स्थानों के कालकृत व्यत्यास का वर्णन है ॥ ४४ ॥

और जिनसे भगवान् प्राप्त होते हैं ऐसे भागवतों के धर्मों का वर्णन है, और इस आख्यान में संपूर्ण आध्यात्मिक शास्त्र का वर्णन है ॥ ४५ ॥

श्रीविष्णुके पराक्रमोंसे पूरित इस पुण्य आख्यान को जो श्रवणकर श्रद्धासे कीर्तन करे वह कर्मकी पाश ( फाँसी ) से छूटता है ॥ ४६ ॥

जो पुरुष आदिपुरुष श्रीनृसिंहदेवकी दैत्येन्द्र यूथपवधरूप मृगेन्द्रलीला को, और सत्पुरुषों में श्रेष्ठ ऐसे दैत्यात्मज श्री प्रह्लाद के प्रभाव को श्रवण कर प्रयत्न से पढते हैं वे सर्वत्र निर्भय श्री वैकुंठलोक को प्राप्त होते हैं ॥ ४७ ॥

हे राजन्! युधिष्ठिर! इस मनुष्यलोक में तुम तो बडे बड-भागी हो, क्योंकि? लोकों को पवित्र करने वाले मुनिजन चारो तरफ से जिन तुम्हारे यहां आते हैं, और उसका भी यह हेतु है, कि तुम्हारे यहां मनुष्य के चिन्हों से छिपा हुआ वह गुप्त और स्वरूपसे सबसे बडा साक्षात् परब्रह्म निवास करता है ॥ ४८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

ननु, कृष्णोऽस्माकं मातुलेयः कथं ब्रह्मेत्युच्यते तत्राह, सवा इति, सो ऽयं ब्रह्मैव कथम्भूतः महद्भिर्विमृग्यं यत्कैवल्यनिर्वाणसुखं निरुपाधिः परमानन्दस्तदनुभूतिरूपो वो युष्माकं खलु प्रियः सुहृदित्यादिरूपो भवति विधिकृत् आज्ञानुवर्ती ॥ ४९ ॥

ननु, परं ब्रह्म चेत्कथं द्व्यष्टसहस्रस्त्रीषु रतिः कथं वा धर्माधाचरणं तत्रपेक्षत आह-नेति । यस्य रूपं तत्त्वं भवादिभिरपि धिया

**ताभिस्तेऽसुरसेनान्यो लोकांस्त्रीन्सेश्वरान्नृप!।**
**स्मरन्तो नाशयाञ्चक्रुः पूर्ववैरमलक्षिताः॥ ५५॥**
**ततस्ते सेश्वरा लोका उपासाद्येश्वरं विभो!।**
**त्राहि नस्तावकान्देव! विनष्टांस्त्रिपुरालयैः॥ ५६॥**

### श्रीधरस्वामिकृतभावार्थदीपिका।

स्वबुद्ध्या वस्तुतश्चेदमित्थमिति साक्षान्नोपवर्णितं स युष्माकं स्वयमेव प्रसन्नः अस्माकं तु मौनादिसाधनैस्तत्प्रसादः प्रार्थनीय एवेत्याह-मौनेनेति। स एष सात्वतांपतिर्नः प्रसीदतु नहि प्रह्लादस्य गृहेषु परं ब्रह्म वसति नच तद्दर्शनाय मुनयस्तद्गृहानभियन्ति नच तस्य ब्रह्म मातुलेयादिरूपेण वर्तते नच स्वयमेव प्रसन्नतो यूयमेव ततोऽप्यस्मत्तोऽपि भूरिभागा इति भावः॥ ५०॥

नन्वन्यैर्दुष्करं त्रिपुरभेदादिकं श्रीरुद्रः कृतवान् स एवम्भूतः ईश्वरोऽप्यस्य तत्त्वं न जानातीति कथमित्यपेक्षायां तस्याप्येतत्साहाय्यादेवासौ प्रभावो न केवलस्येति वक्तुमाख्यानमुपक्षिपति—स एष इति॥ ५१॥

राजा युधिष्ठिर उवाच।

जगदीशितुर्देवस्य कीर्तिं कस्मिन्कर्मणि मयो हतवान्॥ ५२॥

अनेन श्रीकृष्णेनोपबृंहितैः सम्वर्द्धितैः॥ ५३॥

हैमी च रौप्या चायसी चेति तिस्रः पुरो निर्माय तेभ्यो ददाविति शेषः। दुर्लक्ष्यावपायसंयोगौ गमनागमने यासां दुर्वितर्क्याः परिच्छदा यासु॥ ५४॥

सेनान्यः सेनापतयः पूर्ववैरं स्मरन्तः॥ ५५॥ ५६॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

ननु, श्रीकृष्णोऽस्माकं मातुलेयः कथं परं ब्रह्मेत्युच्यते? तत्राह, स वा इति। स वै सोयं श्रीकृष्णो ब्रह्मैव; किन्तद्ब्रह्म? यदभिन्नः श्रीकृष्णो वो युष्माकं न केवलं मातुलेयोऽपितु प्रियः सुहृच्च आत्मा अन्तरात्मा अर्हणीयः पूज्यः विधिकृन्नियोगकारी गुरुर्हितोपदेष्टा च एवमनेकधा युष्माकं तत्सम्बन्धिनां भाग्यं कियदिति वक्तव्यमिति भावः। महद्भिर्मृग्यमित्यनेन महतामपि तत्स्वरूपं यथावद्दुरवगममित्युक्तम्, प्रियः सुहृच्च इत्यनेन तन्महद्भिर्मृग्यं ब्रह्म स्वयमेव युष्माकं प्रसन्नमिति च॥ ४९॥

तन्महद्भिर्मृग्यत्वमेव प्रपञ्चयन् तत्प्रसादं प्रार्थयते—नेति। यस्य भगवतो रूपं भवपद्मजादिभिः रुद्रब्रह्मादिभिः धिया स्वमनीषया वस्तुतया याथात्म्येन नोपवर्णितम्, उपवर्णितं विषयीकृतं न भवति वाङ्मनसागोचरस्वरूपस्वभावत्वादैरेनावदित्युपवर्णितुमशक्यमित्यर्थः। किन्तु केवलं मौनेन शुभाश्रयसंशीलनरूपेण भक्त्योपासनात्मिकया प्रीतिरूपया उपशमेनेन्द्रियजयादिना च पूजितः आराधितः स सात्वतां योगेश्वराणां पतिर्भगवान् मे मह्यं प्रसीदताम् प्रसन्नो भवतु॥ ५०॥

एवं सम्प्रार्थ्य श्रीकृष्णस्य मनुष्यलिङ्गस्य परब्रह्मत्वसूचकम् इतिहासं प्रस्तोष्यन् तत्प्रश्नावसरप्रदानाय श्रीकृष्णं विशिनष्टि—स इति। हे राजन्! स एष भगवान् ज्ञानशक्तिबलैश्वर्यादिषाड्गुण्ययुक्तः श्रीकृष्णः पुरा अनन्तमायिना ऽनन्ताः बह्वी माया यस्य तेन मयेन निमित्तभूतेन रुद्रस्य देवस्य यद्विहतं यशः तद्व्यतनोत् तेनानेन रुद्रादीनामपि यशआदिगुणबृहत्वाधायकत्वकथनेन स्वयमबृहत् इतरेषां तदाधायकत्वायोगात् सामर्थ्याच्चास्यापि तल्लाभेन च परब्रह्मत्वं सूचितम्॥ ५१॥

तदेवं लब्धप्रश्नावसरो युधिष्ठिरः वृद्धयश उपचयप्रकारं बुभुत्सुः पृच्छति—कस्मिन्निति। जगदीशितुः भगवदाश्रयजगदीशितृत्वस्य "विलोक्य भग्नसङ्कल्पं विमनस्कं वृषध्वजम्" इत्यादिना भगवदाश्रयसामर्थ्यस्य वक्ष्यमाणत्वाद्देवस्य रुद्रस्य कीर्तिं कस्मिन् कर्मणि अनेन श्रीकृष्णेन कर्त्रा मयेन निमित्तेनोपचिता वर्द्धिता तत् कथ्यताम्॥ ५२॥

इति पृष्ट आह देवर्षिः—निर्जिता इत्यादिना। अनेन रुद्रेणोपबृंहितैः आहितबलैर्देवैर्निर्जिता असुराः मायिनां परमाचार्याणामप्याचार्यं मयं शरणं जग्मुः॥ ५३॥

ततः स विभुः समर्थो मयः हेम्नो विकृतिर्हैमी रूप्यस्य रजतस्य रौप्या आयसो लोहस्यायसी अयाणामितरेतरयोगद्वन्द्वः ताश्च तिस्रः पुरो निर्मायासुरेभ्यो ददाविति शेषः। पुरो विशिनष्टि, दुर्लक्ष्यः दर्शनाविषयः अपायः संयोगश्च यासां ता इमाः पुरः अत्रागताः इतो गताश्चेति जनैरलक्षिता इत्यर्थः। तथा दुर्वितर्क्याः सार्वजनीनसाधारण्येन तर्कितुमशक्याः परिच्छदा उपकरणानि यासां ताः॥ ५४॥

ताभिर्विमानरूपाभिरपेक्षितदेशगमनक्षमाभिः पुरीभिरसुरसेनान्यः दैत्यसेनानायकाः हे नृप! अलक्षिताः देवैरदृश्यमानाः पूर्ववैरं स्मरन्तः सेश्वरान् सपालान् त्रीन् लोकान् नाशयाञ्चक्रुः नाशयितुमारब्धवन्त इत्यर्थः॥ ५५॥

ततस्ते सेश्वरा इन्द्रादिलोकपालैः सहिता लोका जनाः ईश्वरं रुद्रमुपासाद्य प्राप्य आनताः सन्त ऊचुः, तदेवाह—हे विभो! त्रीणि पुराणि आलयाः स्थानानि येषां तैर्विनष्टान् तावकान् त्वदीयान् अस्मान् हे देव, रुद्र! त्राहि पालयेति॥ ५६॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

ननु, परब्रह्मणि मुक्तिगा इत्यतः परब्रह्मशब्देन विष्णुत्व-

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

निश्चयः कथमिति ? तत्राह–स वा इति । कैवल्येनाऽनासक्तत्वेन अनिर्वाणसुखमशरीरसुखम् तस्यानुभूतिरनुभवो यस्य स तथा अनन्ययोग्यस्वरूपानन्दमनुभवतीत्यर्थः । अनेन विष्णुत्वं निरणायि विधिकृदाज्ञाकारी गुरुर्हितोपदेष्टा ॥ ४९ ॥

ननु, दुर्ज्ञेयरूपत्वं हि विष्णुलिङ्गं "नहि सुज्ञेयमणुर्ह्येष आत्मा सः" इति श्रुतेः । स्वरूपानन्दानुभवित्वं सायुज्यभाजोऽप्यस्त्यतः कथं निर्णय ? इति तत्राह–न यस्येति ॥ ५० ॥*

अस्मिन्नध्याये हरौ भक्तिविधानार्थं रुद्रमाहात्म्यकथनव्याजेन तन्माहात्म्यं प्रतिपाद्यते. अधुना "नत्रैको रुद्रो न द्वितीयो वनस्थे" इत्यादि श्रुतेः प्रतीयमानरुद्रस्याद्वितीयार्थत्वं प्रतिपाद्यमानैर्जनैर्महाद्रव्यव्ययेन पूज्यमानस्य "ईशानः सर्वविद्यानामीश्वरः सर्वभूतानाम्" इत्यादि मन्त्रैः स्तूयमानस्य सतः रुद्रस्यासुरावेशात्संशयो बभूव. इदं सर्वं भगवदधीनं नवेति तत्र दयालुर्भक्तवत्सलः श्रीनारायणो रुद्रस्य तं संशयमपाचक्रे कथं केनेति तत्राह–स एष इति । स भगवान्नृसिंहात्मना प्रह्लादस्तवरेणद्गमहिरण्यकशिपुपुरस्सरासुरजातिं निर्मूलयित्वा प्रह्लादादिभक्तसमुदायस्याऽनुग्रहीता स एष युष्मद्बन्धुभूतः श्रीकृष्णः पुरा कल्पविशेषे देवस्य हरेः स्तुतिध्यानादिकं कुर्वाणस्य रुद्रस्य रोदनाद्यवगतनलक्षणस्यात एव तत्रास्तः शिवस्यानन्तमायिनाऽनेकशतसहस्रमायावताऽत एवार्थादल्पेन मयेन वक्ष्यमाणप्रतीकारं कृत्वा तस्य रुद्रस्य भगवद्भक्तप्रधान इत्यादि यशो विततं त्रिपुरनाशेन व्याप्तमकरोदात्मनोऽनिशङ्क्यत्वामित्वेन तदनुग्राहकत्वेन च विमलमकृतेत्यन्वयः ॥ ५१ ॥

"नापृष्टः कस्यचिद्ब्रूयात्" इति वचनात्प्रसक्तं प्रमेयं निस्तृत्य श्रोतुं राजा पृच्छति–कस्मिन्कर्मणीति । कस्मिन्कर्मणि मयो विपरीतं चकार येनाशितुर्देवस्य यशोऽभूत् सा च कीर्तिः कृष्णेन यथावधमुपाचिता प्रजिना स कथाविशेषो मम कथ्यतामित्यन्वयः ॥ ५२ ॥

नारदः प्रश्नं परिहरति–निर्जिता इति । अनेन हरणोपबृंहते. अन्यसहायेनासुरा जिता इत्येनद्देवानां न दोषाय विश्वक्षेत्रणस्य स्वनर्मलक्ष्यत्वाद्देवानां सापेक्ष न तु दोषाय "यत्र सिद्धमपेक्षिणम्" इति वचनात् ॥ ५३ ॥

अनेन त्रिपुरनिर्माणकर्मविपरीतं कृतमित्याह–स निर्मम इति । स निर्ममे दुर्लक्ष्यो दुर्ज्ञेयोऽपायसंयोगो नाशसम्बन्धोऽनाप्रवेशसम्बन्धो वा यासां तास्तथाऽत एवादृश्य बहुतरायुधादिपरिकराः ॥ ५४ ॥

असुरसेनान्य असुरसेनानायका ॥ ५५ ॥

सेश्वराः सहस्य अत्रापि विष्णुसहितदेवानां रुद्रापेक्षितत्वं न दोषाय त्रिपुरहनने रुद्रेण कार्यमिति हरिणाऽनुकूलत्वात् इन्द्रादिभिर्वा ॥ ५६ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

ननु, कैश्चिदस्यैतद्रूपमप्यवस्तुत्वेन मन्यते तत्राह–न यस्येति, यस्य साक्षात् प्रत्यक्षमपि रूपं परमविद्वद्भिर्भवपद्मजादिभिस्तु अवस्तुतया अपरमार्थतया नोपवर्णितं किन्तु परमार्थतया निर्णीतमित्यर्थः । "त्वं ब्रह्म परमं साक्षादिति, यन्मित्र परमानन्दमित्यादिना, मल्लानामशनिर्नृणां नरवर इत्यादौ, विराड्विदुषां तत्त्वं परं योगिनाम् इत्यनेन च ॥ ५० ॥ ५१ ॥

अनेनेति । सर्वत्र श्रीकृष्णमेव स्वालम्बनत्वेनावतारित्वेन च दर्शयति, एवमुत्तरत्रापि ॥ ५२—७० ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

न च परं ब्रह्मैव नराकृतिः कृष्णोऽभूदिति वाच्यं किन्तु कृष्ण एव परं ब्रह्म भवतीत्याह—सोयं प्रसिद्धो नराकृतिः कृष्ण एव ब्रह्म कीदृश महद्भिर्विमृग्यं यत् कैवल्यनिर्वाणसुखं निरुपाधिः परमानन्दः तस्यानुभूतिरनुभवरूपमित्यर्थः । कृष्णस्तु भगवान् स्वयमिति वदनुवादिविधेयभावेन व्याख्येयमत्र प्रमाणम् "ब्रह्मणो हि प्रतिष्ठाहम्" इति गीतोपनिषद्वचनावदर्थस्य निश्चायिकेति शब्दार्थः । न केवलं स युष्मद्गृहे वसति मात्रं किन्तु प्रियः सन्निति युष्माकं तेनानन्दनीयत्वं सुहृदिति हिते प्रवर्तनीयत्वं मातुलेय इति सम्बन्धविशेषणानुगम्यत्वम् आत्मेति स्वीयशरीरभावेनाभिमन्तव्यत्वम् अर्हणीय इति कृपया प्रतिपाल्यत्वं विभिकृत् किङ्कर इति सारथ्यादिनोपास्यत्वं गुरुरित्यनुशासनीयत्वमिति. न च प्रह्लादादीनां गृहेषु सगुरुकिङ्करादिभावेन तिष्ठतीति भावः ॥ ४९ ॥

नन्वेवं साक्षात्परब्रह्मप्रतिष्ठाभूतस्यास्य ग्राम्यानामस्मादृशानां कैङ्कर्यादौ किङ्करणमिति चेत् सत्यम्, अस्यमैश्वर्यस्य प्रेमवश्यतायाश्च तत्त्वं विज्ञातु कोऽहं वराको यतो ब्रह्माद्या अपि न जानन्तीत्याह—न यस्येति । रूपं तत्त्व वस्तुतया याथात्म्येन इदमित्थमिति साक्षान्नोपवर्णितं धियेति तत्र बुद्धेः प्रवेशाभावादेवेति भावः । मौनेनेत्यस्मदादयो यत् प्रसादं मौनादिभिः साधनैः प्रार्थयते स कृष्णो युष्मत्प्रसादं कैङ्कर्यादिना प्रार्थयत इति युष्मदस्मदाद्योरेतदेवान्तरमिति भाव. ॥ ५० ॥

ननु, पद्मजो न जानातु भवस्तत्वीश्वर एव सत्यं तस्याप्यैश्वर्यमेतद्दृष्टमेवेति वक्तुमाख्यानमारभ्यते स एव इति ॥ ५१ ॥

राजा युधिष्ठिरः अहन् कीर्तिम् ॥ ५२ ॥

अनेन कृष्णेन ॥ ५३

दुर्लक्ष्यौ अपायसंयोगौ गमनागमने यासां ताः निर्मायासुरेभ्यो ददाविति शेषः ॥ ५४—५५ ॥

ईश्वरं रुद्रम् ॥ ५६–५७ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

भक्तहितकारित्वं भगवतो वर्णयति–स इति । सोऽयं वो युष्माकं भक्तानां सुहृत् अनुकूलः विधिकृत् दूत्यसारथ्यादिकर्ता गुरु-

* विजयध्वजटीकायामेकादशोऽध्यायः समाप्तः । इत एकादश आरब्धः ॥

अथानुगृह्य भगवान्मा भैष्टेति सुरान्विभुः ।
शरं धनुषि सन्धाय पुरेष्वस्त्रं व्यमुञ्चत ॥ ५७ ॥
ततो ऽग्निवर्णा इषव उत्पेतुः सूर्यमण्डलात् ।
यथा मयूखसन्दोहा नाऽदृश्यन्त पुरो यतः ॥ ५८ ॥
तैः स्पृष्टा व्यसवः सर्वे निपेतुः स्म पुरौकसः ।
तानानीय महायोगी मयः कूपरसे ऽक्षिपत् ॥ ५९ ॥
सिद्धामृतरसस्पृष्टा वज्रसारा महौजसः ।
उत्तस्थुर्मेघदलना [(१)]वैद्युता इव वह्नयः ॥ ६० ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

हितोपदेष्टा आत्मा अन्तर्यामी अर्हणीय उपास्यः सर्वथा प्रियः प्रीतिविषयः कैवल्यनिर्वाणसुखं निरतिशयनित्यानंदस्तदनुभवरूपः एवंभूतो मातुलेय. महद्भिर्मृग्यं ब्रह्मैव ॥ ४९ ॥

भगवतो गूढत्वं वर्णयन् तत्प्रसादं प्रार्थयते-नेति । यस्य रूपं साक्षाद्भवपद्मजादिभिर्धिया निपुणया बुद्ध्यवस्तुतया इदमित्थमिति भावेन नोपवर्णितम् स एषः श्रीकृष्णः सात्वतां भक्तानां पतिः पालकः मौनेन मुनिधर्मेण ब्रह्मचर्यादिरूपेण भक्त्योपशमेन पूजितो ऽस्माकं प्रसीदताम् ॥ ५० ॥

भवाद्योऽपि तद्रूपं साकल्यन नैव वर्णयन्तीत्युक्तं तत्र हेतुं दर्शयितुं भववृत्तान्तकथनेन तेषां भगवद्दैश्वर्यत्वं द्योतयति, स एष इत्यादिना ॥ ५१ ॥

जगदीशितुः शिवस्य कस्मिन् कर्मणि मयो ऽहन् हतवान् कीर्तिमिति शेषः । यथा चानेन कृष्णेन जगदीशितुः कीर्तिरुपचिता वर्द्धिता तथा कथ्यताम् ॥ ५२ ॥

अनेन श्रीकृष्णेनोपबृंहितैः स्वशक्त्या समर्द्धितैः ॥ ५३ ॥

दुर्लक्ष्यापायसंयोगाः दुर्ज्ञेयो ऽपायः तिरोभावः संयोग आविर्भावश्च यासां ता निर्माय तेभ्यो ददाविति शेषः ॥ ५४ ॥

पूर्ववैरमनुस्मरन्तस्ते असुराणां सेनान्यः सेनापतयः ताभिः पूर्भिः सेश्वरान् इन्द्रादिसहितान् नाशयाञ्चक्रुः नाशितवन्तः ॥५५॥

उपासाद्य निकटं गत्वा ॥ ५६ ॥

भाषा टीका ।

यह श्रीकृष्ण वहीपरब्रह्म हैं जोकि-महात्माजनों के ढूढने योग्य कैवल्य मोक्षसुख के अनुभवरूप, प्रिय, और सुहृद और आपके मामाके पुत्र, आत्मा पूजनीय और आज्ञा करने वाले तथा गुरुभी हैं, तस्मात् तुमारे भाग्य धन्य हैं ॥ ४९ ॥

जिनके रूपका वर्णन वास्तव रीतिसे अपनी बुद्धिसे शिव ब्रह्मादिक भी नहीं कर सके, किंतु मौन होकर भक्तिसे और शांतिसे पूजनमात्र किया, वो यह भक्तो का पति श्रीकृष्ण मेरे ऊपरप्रसन्न हो ॥ ५० ॥

हे राजन् यह वही भगवान् है कि जिनोंने, बडे मायावी मयदानव से खंडित हुए रुद्रके यशको फिर विस्तार किया ॥ ५१ ॥

राजा उवाच ॥

राजायुधिष्ठिर बोले, कि-जगदीश्वर श्रीमहादेवजी के यश को मयदानवने किसप्रकार नष्टकिया और फिर श्रीकृष्णने कैसे श्रीभोलानाथ की कीर्तिका विस्तार किया, सोआप कहिये ॥ ५२ ॥

नारद उवाच ॥

नारजी बोले, कि-इन श्रीकृष्ण की सहायसे देवताओं ने असुरोंको जब जीता तब असुर लोग मायावियोंके परम गुरु मय दैत्यके करण गये ॥ ५३ ॥

मयनेभी सोने चांदी और लोहेकी तीन पुर एसे निर्माण किये, कि-जिनकी सामग्री तर्कना करने मे न आवे, और जिन के नाश का संबन्ध भी किसी को लखाई नहो ॥ ५४ ॥

हेराजन् ! उनतीन पुरोंसे वे असुरो के सेनापति लोग देवतों के पहिले वैरकी यादकर २ लोकपालों सहित तीनो लोकों को नाश करने लगे ॥ ५५ ॥

तदनन्तर अधिष्ठाताओं सहित तीनो लोक श्रीशिवजी के समीप जाकर बोले, कि—हे विभो ! तीन पुरो मे रहने वाले शत्रु से नष्ट हुए ऐसे हम देव लोग आपके हैं हमारी आप रक्षा करो ॥ ५६ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

अस्त्रमभिमन्त्रितं शरं पुरेषु व्यमुञ्चत ॥ ५७ ॥

ततः शरात् सूर्यमण्डलान्मयूखसन्दोहा रश्मिसमूहा इव यतो येभ्यः ॥ ५८ ॥

कूपरसे स्वयं निर्मितकूपामृते ॥ ५९ ॥

(१) मेघ दलनाविति प्रा० वीर०

विलोक्य भग्नसङ्कल्पं विमनस्कं वृषध्वजम् ।
तदाऽयं भगवान्विष्णुस्तत्रोपायमकल्पयत् ॥ ६१ ॥
वत्स आसीत्तदा ब्रह्मा स्वयं विष्णुरयं हि गौः ।
प्रविश्य त्रिपुरं काले रसकूपामृतं पपौ ॥ ६२ ॥
ते ऽसुरा ह्यपि पश्यन्तो न न्यषेधन्विमोहिताः ।
तद्विज्ञाय महायोगी रसपालानिदं जगौ ॥ ६३ ॥
स्वयं विशोकः शोकार्तान्स्मरन्दैवगतिं च तान् ।
देवो ऽसुरो नरोऽन्यो वा नेश्वरो ऽस्तीह कश्चन ॥ ६४ ॥
आत्मनोऽन्यस्य वा दिष्टं दैवेनाऽपोहितुं द्वयोः ।
अथाऽसौ शक्तिभिः स्वाभिः शम्भोः प्राधनिकं व्यधात् ॥ ६५ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

वज्रसाराः वज्रवद्दृढाङ्गाः महौजसो महाबलाः मेघदलनाः मेघभेदिनो विद्युद्रूपा वह्नय इव ॥ ६० ॥ ६१ ॥

काले मध्याह्ने ॥ ६२ ॥ ६३ ॥ ६४ ॥

आत्मनो वा अन्यस्य वा द्वयोरपि वा दैवेन दिष्टमुपकल्पितम् अपोहितुं परिहर्तुमिह कश्चिदपीश्वरः समर्थो नास्ति असौ श्रीकृष्णः प्रधनं संग्रामस्तत्साधनम् ॥ ६५ ॥ ६६ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

अथ तद्विज्ञापनानन्तरं तान् सुरान् माभैष्ट भयं माकार्ष्ट इत्यनुगृह्य भगवान् विभूः रुद्रः धनुषि शरं बाणं सन्धायास्त्रं पाशुपतं तस्मिन् संयोज्येति शेषः । पुरेषु व्यमुञ्चत ॥ ५७ ॥

ततः शराद्यथा सूर्यमण्डलान्मयूखसन्दोहाः रश्मिसमूहाः तथाग्निवर्णा इषवो बाणा उत्पेतुः यतो येभ्य इषुभ्यः पुरो नादृश्यन्त जनैरिति शेषः । तावद्भिरिषुभिः प्रच्छन्ना बभूवु-रित्यर्थः ॥ ५८ ॥

ततः किमत आह, तैरिषुभिः स्पृष्टास्ताडिताः क्षीणा पुराण्येवौकांसि स्थानानि येषां ते असुराः सर्वे व्यसवः विगता असवो प्राणा येषां तादृशाः सन्तो निपेतुः पतितवन्तः तान् व्यसूनसुरानानीय महायोगी मयः कूपरसे स्वयं निर्मितकूपगते रसेऽमृतसंजीवइत्यर्थेऽक्षिपदपातयत् ॥ ५९ ॥

तेच सिद्धामृतरसेन स्पृष्टा असुराः वज्रसारवत् दृढाङ्गाः महौजसः महाबलाः सन्तः मेघदलनात् मेघच्छेदाद्विद्युद्रूपा वह्नयः इवोत्तस्थुरुत्थितवन्तः ॥ ६० ॥

तथा भग्नः सङ्कल्पो यस्मात् एव विमनस्कं दुःखितमनस्कं वृषध्वजं रुद्रं विलोक्यायं भगवान् श्रीकृष्णरूपो विष्णुस्तत्र सिद्धामृतरसविनाशे उपायमकल्पयत् ॥ ६१ ॥



तदेवाह—वत्स इति । अयं श्रीकृष्णरूपो विष्णुः स्वयं गौर्धेनुरूपा आसीत् ब्रह्मा चतुर्मुखो वत्स आसीत् ततो गोरूपोऽयं विष्णुस्सवत्सः त्रिपुरं त्रयाणां पुराणां समाहारस्तत्प्रविश्य काले मध्याह्ने रसकूपामृतं रसरूपं कूपगतममृतं पपावपिबत् ॥ ६२ ॥

तेऽसुराः पिबन्तीं गां पश्यन्तोपि भगवन्मायाविमोहिताः न न्यषेधन् न न्यवारयन् तत्पानं ज्ञात्वा महायोगी मयः रसं कूपामृतरसं पालयन्तीति तथा तानसुरान् शोकार्तान् तां दैवगतिं स्मरन् अत एव विगतशोकः स्वयं [illegible]िदं वक्ष्यमाणं जगौ उवाच ॥ ६३ ॥

तदेवाह—देव इति । आत्मनोऽन्यस्य वा द्वयोरपि दैवेनेश्वरेण दिष्टमुपकल्पितं सुखं दुःखं वाऽपोहितुमिह लोके दैत्यादन्यतमो यः कश्चिद्देवादिरीश्वरः न प्रभुर्नसमर्थः दैवमेव सुखदुःखादहेतुरित्यर्थः । अथ निःशेषकूपामृतरसपानानन्तरम् असौ श्रीकृष्णः धर्मादिभिः स्वाभिः शक्तिभिः शम्भो रुद्रस्य प्राधनिकं प्रधनं संग्रामः तत्साधनं यत् रथसूतादिरूपं तद्व्यधात् क्रमेण धर्मादिस्वशक्तीरेव रथादिरूपेण अकरोदित्यर्थः स्वशक्त्याहितशक्तिमकरोदिति यावत् ॥ ६४ ॥ ६५ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

विभुः शिवः माभैष्टेत्युक्त्वा पुराणीत्येकवचनं जातिविवक्षया ॥ ५७ ॥

ततो धनुषो मयूखसन्दोहाः रश्मिराशयः यतो यैः शरैः पुरः पुराणि ॥ ५८ ॥

स्पृष्टास्तस्मा व्यसवः गतप्राणाः इदं च मयेन कृतं विपरीतमित्याशयवानाह—तानिति ॥ ५९ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

सिद्धामृतरसोमृतसञ्जीवनरसः तस्मिन् स्पृष्टाः स्नाताः वपुताः विद्युत्सम्बन्धिनः चशब्देन जलादिना यथा नाशो नास्ति तथैषामिति सूचयति ॥ ६० ॥

कथं कृष्णेनोपचिता कीर्तिरितीमं प्रश्नं परिहर्तुमाह—विलोक्येति ॥ ६१ ॥

कोऽन्यानिति तत्राह—वत्सइति । हिशब्देन विष्णुर्ब्रह्माद्या-अपेक्षते इति न दोषायेति तत्संकल्पतकारित्वेन सिद्धत्वादिति सूचयति काले माध्यन्दिने ॥ ६२ ॥

ग्रन्थान्तरसिद्धत्वाद्धिशब्देन भगवन्मायावत्मायातोऽपरिमितमाहात्म्यमस्तीति सूचयति, स्वकृतापराधप्रहाणाय स्वस्य भगवद्भक्तिप्रकटनाय च मयस्तद्विषण्णत्वं च मतास्तीत्यभिप्रायेणाह—तदिति । तद्दैत्यवधोपायकरणं किञ्चित्कालमसुराणां जयदायिनीमिदानीं देवानामिति दैवगतिं किं जगदिति तत्राह, देव इति । आत्मनः स्वस्य अन्यस्य तेजस्तस्य चेति द्वयोर्दैवेन विष्णुना दिष्टं कृतं व्यपोहितुम् अन्यथा कर्तुम् इह जीवराशौ देवोऽसुरोऽन्यो वा कश्चनेश्वरः समर्थो नास्तीत्यतस्तूष्णींभाव एव वरीयानित्यर्थः ॥ ६३ ॥ ६४ ॥

ननु, सिद्धरसपानं व्यर्थमिव प्रतिभाति त्रिपुराणामनाशा-दित्याशङ्क्य तन्नाशसाधनमाह—अथेति । अथ दैत्यजीवनसाधनरसनाशानन्तरं स्वाभिः शक्तिभिः भूम्यादिभिः शम्भोः प्राधनिकं युद्धसाधनं रथादिकं व्यधादित्यन्वयः ॥ ६५ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

यथेति सूर्यमण्डलादिवस्मात् पूर्वे योऽयं यतो येभ्य इषुभ्यो हेतुभ्यः ॥ ५८ ॥

कूपरसे स्वनिर्मितकूपरसामृते ॥ ५९ ॥

मेघदलना मेघभेदिनो विद्युद्रूपावह्नयः इव मेघस्थाविद्युतो यथा मेघकान्तितिरस्कारिण्यस्तथैव ते वीरा अपि श्यामविमानकान्तितिरस्कारिण इत्यर्थः ॥ ६०—६१ ॥

काले मध्याह्ने ॥ ६२—६३ ॥

आत्मनो वा अन्यस्य वा द्वयोरपि वा दैवेनोपकल्पितं दिष्टम् अपोहितुं दूरीकर्तुम् इह कश्चिदपीश्वरः समर्थो नास्ति ॥ ६४ ॥

असौ कृष्णःप्रधनं संग्रामस्तदर्हं रथादिकं स्वाभिः शक्तिभिः धर्मादिभिरविर्भूतं कलेवा व्यधादिति स्वशक्तीनामनश्वरत्वात तद्विधानां रथादीनामपि तादृशत्वं तत्र जीवधर्मस्य भक्तियोगस्यावेशो रथे भक्तियोगाश्रितानां ज्ञानादीनां रथाश्रितेषु सूतादिषु ज्ञेयः ॥ ६५ ॥ ६६ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

शरं सर्वाविशेषं तदेवास्त्रम् अस्त्रेण पाशुपतेनाधिष्ठितत्वात् ॥५७॥

ततः अस्त्राधिष्ठिताच्छरात् यतो येभ्यः पुरो नादृश्यन्त बभ्रुः अभवन् ॥ ५८ ॥

तान् व्यसून् मयः कूपरसे स्वनिर्मितकूपस्थसिद्धामृतरसे ॥५९॥

वज्रस्येव सारः काठिन्यं येषाम् महौजसो महाबलाः मेघदलना घनभेदिनस्तडिद्रूपा वह्नय इवोत्तस्थुः ॥ ६०—६१ ॥

काले सुरासुरसमृद्धसमृद्धिकरं ॥ ६२—६३ ॥

आत्मनोऽन्यस्य वा द्वयोर्वा दैवेन कर्मफलदात्रा आदिष्टं प्रापितं फलमपोहितुं परिहर्तुं देवो ऽसुरो नरो वा नेश्वरः समर्थो नास्ति असौ श्रीकृष्णः धर्मादिभिः स्वशक्तिभिः सह प्राधनिकं प्रधनं संग्रामस्तदर्हं रथादिकं व्यधात् ॥ ६४—६६ ॥

---

भाषा टीका ।

तब तो भगवान् श्रीशङ्कर अनुग्रह करके देवतों से बोले, कि—तुम लोग भय मत करो बस इतना कहकर धनुष के ऊपर बाण लगाकर श्रीभोलानाथ ने अस्त्र छोड़े ॥ ५७ ॥

तब तो अग्नि के समान वर्ण वाले बाण श्रीमहादेवजी के धनुष में चलने लगे, जैसे सूर्य मण्डल से किरणों का समूह निकलें, जिन बाणों के मारे तीनों पुर अदृश्य होगये ॥ ५८ ॥

बस उन तीनों पुरों के रहने वाले जिन २ दैत्यों को बाणों का स्पर्श हुआ, वो सब बिना प्राण के होकर पतन हुए, बड़े योगी मय दैत्य ने भी उन सबों को लाकर कूप के अमृत रस में डाला ॥ ५९ ॥

उस कूप के सिद्ध उस अमृत रसके स्पर्श होते ही वज्र सदृश अंग वाले बड़े पराक्रमी एकही बार सब उठ खड़े हुए जैसे मेघों का दलन करने वाली विद्युतों की अग्नियां ॥ ६० ॥

उस समय वृषभध्वज श्रीमहादेव के संकल्प के भंग होने से उदास होने पर, इन्हीं श्रीकृष्ण ने वहां उपाय रचा ॥ ६१

तब ब्रह्माजी तो बछड़ा बने और ये विष्णु स्वयं गौ बनें, और मध्यान्ह में त्रिपुर में प्रवेश करके उस कूप के अमृतरस का पान कर गये ॥ ६२ ॥

वे असुर लोग सब देखते ही रहे पर आपकी माया से विमोहित होकर देखने पर भी निषेधन किया, ऐसा समाचार जान कर बड़ा योगी विगत शोक वाला स्वयं मय दैत्य, उस दैवी गति का स्मरण करता हुआ शोक से व्याकुल ऐसे उन रस पालों से यो बोला, कि देव असुर नर अथवा और भी कोई, दैव रचित प्रारब्ध के हटाने को समर्थ नहीं। बस वहां तो यों बातें होती थीं इतने में इन श्रीकृष्णने अपनी शक्तियों से भोलानाथ श्रीशम्भुकी संग्रामकी सामग्री त्यार करदी ॥ ६३—६५ ॥

---

धर्मज्ञानविरक्त्यृद्धितपोविद्याक्रियादिभिः ।
रथं सूतं ध्वजं वाहान्धनुर्वर्म्मशरादि यत् ॥ ६६ ॥
सन्नद्धो रथमास्थाय शरं धनुरुपाददे ।
शरं धनुषि सन्धाय मुहूर्ते ऽभिजितीश्वरः ॥ ६७ ॥
ददाह तेन दुर्भेद्या हरो ऽथ त्रिपुरो नृप !।
दिवि दुन्दुभयो नेदुर्विमानशतसङ्कुलाः ॥ ६८ ॥
देवर्षिपितृसिद्धेशा जयेति कुसुमोत्करैः ।
अवाकिरन् जगुर्हृष्टा ननृतुश्चाप्सरोगणाः ॥ ६९ ॥
एवं दग्ध्वा पुरस्तिस्रो भगवान्पुरहा नृप ! ।
ब्रह्मादिभिः स्तूयमानः स्वधाम प्रत्यपद्यत ॥ ७० ॥
एवंविधान्यस्य हरेः स्वमायया विडम्बमानस्य नृलोकमात्मनः ।
वीर्याणि गीतान्यृषिभिर्जगद्गुरोर्लोकान्पुनानान्यपरं वदामि किम् ॥ ७१ ॥

इति श्रीमद्भागवते महापुराणे सप्तमस्कन्धे पारमहंस्यां संहितायाम्
वैयासिक्यां युधिष्ठिरनारदसंवादे त्रिपुरविजयो नाम
दशमोऽध्यायः ॥ १० ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

अभिजिति मध्याह्ने ॥ ६७ ॥

विमानशतानि सङ्कुलानि सङ्कीर्णानि येषां ते देवादयः। ॥ ६८ ॥ ६९ ॥

आदित आरभ्य स्कन्धार्थं निगमयन्नि,एवं विधानीति नृलोके नराकारमात्मनो विडम्बमानस्याऽनुकुर्वतः ॥ ७० ॥ ७१ ॥

इति श्रीमद्भागवते महापुराणे सप्तमस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिकायाम्
दशमोऽध्यायः ॥ १० ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तत्र शक्तिर्नाम स्वापृथक्सिद्धविशेषणभूतकार्योपयुक्ता स्वा च धर्मादिरूपेण बहुविधा तत्र धर्मशक्तिर्नाम स्वाधुपरिज्ञान-सामर्थ्यात्मिका ज्ञानशक्तिरिह"यः सर्वज्ञः सर्ववित् सर्वदर्शी स्वाधीनोऽनादिः सर्वेश्वरः सर्वदृक्"इत्यादिभ्योऽवगता सर्वसाक्षात्कार-सामर्थ्यात्मिका तथा चोक्तं श्रीमद्यामुनिभिः "यो वेत्ति युगपत्सर्वं प्रत्यक्षेण सदा स्वतः" इति. विरक्तिर्नाम "सर्वामद-मभ्यासोऽवाक्यनादरः"इति श्रुत्यवगताऽवाप्तसमस्तकामत्वेपि तदनादरेण ऽनवस्थानसामर्थ्यात्मिका, ऋद्धिर्नामैश्वर्यम् "एष सर्वेश्वरः कृष्णः"इत्यादिप्रमाणाऽवगतं सर्वान्तरात्मत्वेन नियन्तृत्वसामर्थ्यम्. तपश्शक्तिर्नाम "स तपो ऽतप्यत सतपस्तप्त्वा इदं सर्वमसृजत" इत्याद्यवगता जगत्सृष्ट्युपयुक्तसङ्कल्परूपज्ञानात्मिका, विद्यानाम "सत्यकामः सत्यसङ्कल्पः"इत्याद्यवगता सत्यसङ्कल्पात्मिका सत्यसंकल्पत्वं च स्वावताराद्यपूर्वभोग्यान्तरसृष्टौ जगद्व्यापारादिषु चामोघसङ्कल्पत्वम्. क्रियानामाघटितघटनात्मिका"स्वाभाविकी ज्ञानबलक्रिया च" इत्याद्यवगता. आदिशब्देन बलवीर्यतेज आदयस्तत्र बलं श्रमप्रसङ्गरहित सर्वधारणसामर्थ्यम् "एषसेतुर्विधरणः" इत्यादिभ्योऽवगतम्. वीर्यं नाम, सर्वधारणेऽपि विकाररहितत्वम् तेजः अन्याधीनसहकार्यनपेक्षत्वम्. रथमिति वाहानश्वान् वर्म कवचमादिशब्देन प्रग्रहादिकं गृह्यते ॥ ६६ ॥

भगवद्धर्मशक्त्यात्मकं रथमारुह्य सन्नद्धः कवचित ईश्वरो रुद्रः शरं धनुश्चोपाददे स्वीकृतवान् ततो धनुषि शरं सन्धायाभिजिति मुहूर्ते अभिजिन्नामके मुहूर्ते दिवसस्याष्टमे मुहूर्ते ॥ ६७ ॥

भगवतः श्रीकृष्णस्य तेजसोऽभिधेन युक्तस्त्रिपुरं ददाह बाणाग्रमुखद्वारेण दग्धवान् । हे नृप ! तदा दिवि दुन्दुभयो नेदुः दध्वनुः विमानशतानि सङ्कुलानि येषां ते ॥ ६७ ॥

देवर्ष्यादयः जयेति वदन्तः इति शेषः । उत्कर्षेण वर्तस्वेति

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

वदन्तः कुसुमोत्करैः पुष्पवर्षैः शम्भुमवाकिरन् ववृषुः अप्सरसांगणाश्च जगुर्ननृतुश्च ॥ ६९ ॥

हे नृप ! एवमित्थं निस्रः पुरः पुरीर्दग्ध्वा पुरहा भगवान् रुद्रः ब्रह्मादिभिः स्तूयमानः स्वस्थानं प्रत्यपद्यत प्राप्तवान् ॥ ७० ॥

श्रीकृष्णस्य परब्रह्माभिन्नत्वसूचकप्रभावप्रतिपादनम् उपसंहरन् प्रश्नान्तरावसरं प्रयच्छति--एवमिति । आत्मनः स्वस्य मायया सङ्कल्पेन न तु कर्मणेति भावः । नृलोकं विडम्बमानस्यानुकुर्वतः इतरसजातीयचेष्टां कुर्वत इत्यर्थः । हरेराश्रितार्त्तिहरस्य लोकस्य हितोपदेष्टुरस्य श्रीकृष्णस्य ऋषिभिरस्मदादिभिर्गीतान्येवंविधानि वीर्याणि लोकं पुनानानि बहूनि सन्तीति शेषः । साकल्येन केनापि वक्तुं न शक्यानीतिभावः । अपरमन्यत्किं वदाम अतो अन्यत्किञ्चित्त्वया प्रष्टव्यमस्तिचेत् तत्कथयामेत्यर्थः ॥ ७१ ॥

इति श्रीमद्भागवते महापुराणे सप्तमस्कन्धे

श्रीमद्वीरराघवाचार्यकृत भागवतचन्द्रचन्द्रिकायाम्

दशमोऽध्यायः ॥ १० ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

धर्मादिबलोपेतत्वात् अभेद्याभिः किं तत्प्राधनिकामिति तदाह–रथमिति । भगवतो हरेस्तेजसा गुप्तो रक्षितः ॥ ६६॥६७ ॥

यशोवितितिप्रकारमाह—दिवीति । जयेत्युक्त्वा जगुरित्यनेन यशोवितितिर्ज्ञायते ॥ ६८ ॥ ६९ ॥

ब्रह्मादिभिर्ब्रह्मोत्पन्नैः सनकादिभिः "इमा रुद्राय स्थिरधन्वने गिरः क्षिप्रेषवः" इत्यादिवेदवाक्यैर्या शम्भोः पुरदहनमाहात्म्यं यत् तत् श्रीनारायणकर्त्तृकमित्याशयेनोपसंहरति–एवंविधानीति । अपरं भगवच्चरितं तद्वदेति शेषः । अपरमन्यद्गुरुत्वेवंविधमाहात्म्योपेतं किं वदामि न किमपीति वा ॥ ७० ॥ ७१ ॥

इति श्रीमद्भागवते महापुराणे सप्तमस्कन्धे

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम्

दशमोऽध्यायः ॥ १० ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

एवमिति । नृलोकं तच्चेष्टाम् ॥ ७१ ॥

इति श्रीस्वामिपादैः प्रह्लादचरितं त्रिपुरविजयं च दशमोऽध्यायः इत्येव पाठः

इति श्रीमद्भागवते महापुराणे सप्तमस्कन्धीये

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे

दशमोऽध्यायः ॥ १० ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

अभिजिति मध्यान्हे ॥ ६७—७० ॥

स्वमायया विडम्बमानस्य अत एव मोहवशात् अत एव नृलोकस्तं न भजत इति भावः ॥ ७१ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् ।

सप्तमे दशमोऽध्यायस्सङ्गतः सङ्गतस्सताम् ॥ १० ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

सन्नद्धो वर्त्तितः अभिजिति मध्याह्ने ॥ ६७ ॥

विमानशतानि सङ्कुलानि सङ्कीर्णानि येषां ते देवादयः जयेति वदन्तः कुसुमोत्करैरवाकिरन् ववृषुः ॥ ६८—७० ॥

आत्मनः स्वस्य नृलोकं भक्तजनं स्वमायया विडम्बमानस्य स्वकृपया ऽनुकुर्वतः तत्तद्भावानुरूपं चेष्टितं कुर्वतः अस्य श्रीकृष्णस्य हरेः भक्तदुःखहारिणः लोकान् पुनानानि वीर्याणि ऋषिभिर्गीतानि एवंविधानि सन्ति, तत्र किञ्चिदुक्तमपरं किं वदामि तद्गुणगतामिति शेषः ॥ ७१ ॥

इति श्रीमद्भागवते महापुराणे सप्तमस्कन्धीये

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे

दशमोऽध्यायार्थ प्रकाशः ॥ १० ॥

---

भाषा टीका ।

अर्थात धर्म ज्ञान विरक्ति ऋद्धि तप विद्या क्रिया इत्यादि कों से रथ सूत ध्वजा घोडे धनुष कवच बाण आदि जो चाहिये से सबही कुछ रचदिया ॥ ६६ ॥

श्री शिवजी भी कटिबद्ध होकर रथ पर बैठ धनुषबाण हाथ में लेकर मध्याह्न काल अभिजित मुहूर्त में धनुष के ऊपर बाण लगाकर ॥ ६७ ॥

भाषा टीका।

हे नृप ! उस बाण से श्रीहर ने दैत्यों के तीनो पुर जलादिये, बस तब तो स्वर्ग में सैकड़ों विमानों पर बैठकर देवता लोग दुंदुंभी बजाने लगे ॥ ६८ ॥

देव ऋषि पितृ सिद्धेश जय २ शब्द करके कुसुमों की बर्षा करने लगे, और हर्ष के मारे गाने लगे अप्सरा गण नृत्य करने लगे ॥ ६९ ॥

हे नृप ! ऐसे भगवान् श्री शंकर जी तीनो पुरों को जलाकर अपने धाम को सिधारे ॥ ७० ॥

इस प्रकार मनुष्य लोक का अनुकरण करने वाले इन जगद्गुरु श्री हरिके पराक्रम हैं जिनको ऋषि लोग गान करते है, और जो लोकों को पवित्र करते हैं ऐसे आपके वीर्य हैं सो मैने तुमसे कहे अब और क्या कहूं ॥ ७१ ॥

इति श्रीमद्भागवत महापुराण सप्तम स्कन्ध में

दशम अध्याय की भागवताचार्य कृत

भाषा टीका समाप्त ॥ १० ॥

इति श्रीमद्भागवते महापुराणे सप्तमस्कन्धे दशमोऽध्यायः ॥ १० ॥



## ॥ एकादशोऽध्यायः ॥

श्रीशुक उवाच ।

श्रुत्वेहितं साधुसभासभाजितं महत्तमाग्रण्य उरुक्रमात्मनः ।
युधिष्ठिरो दैत्यपतेर्मुदायुतः पप्रच्छ भूयस्तनयं स्वयम्भुवः ॥ १ ॥

युधिष्ठिर उवाच ।

भगवन् ! श्रोतुमिच्छामि नृणां धर्म्मं सनातनम् ।
वर्णाश्रमाचारयुतं यत्पुमान्विन्दते परम् ॥ २ ॥
भवान्प्रजापतेः साक्षादात्मजः परमेष्ठिनः ।
सुतानां सम्मतो ब्रह्मंस्तपोयोगसमाधिभिः ॥ ३ ॥
नारायणपरा विप्रा धर्मं गुह्यं परं विदुः ।
करुणाः साधवः शान्तास्त्वद्विधा न तथा परे ॥ ४ ॥

नारद उवाच ।

नत्वा भगवते ऽजाय लोकानां धर्महेतवे ।
वक्ष्ये सनातनं धर्म्मं नारायणमुखाच्छ्रुतम् ॥ ५ ॥
यो ऽवतीर्यात्मनोंऽशेन दाक्षायण्यां तु धर्म्मतः ।
लोकानां स्वस्तये ऽध्यास्ते तपो बदरिकाश्रमे ॥ ६ ॥
धर्ममूलं हि भगवान्सर्ववेदमयो हरिः ।
* स्मृतं च तद्विदां राजन् ! येन चात्मा प्रसीदति ॥ ७ ॥
सत्यं दया तपः शौचं तितिक्षा शमो दमः ।
अहिंसा ब्रह्मचर्यं च त्यागः स्वाध्याय आर्जवम् ॥ ८ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

एकादशे नृणां धर्माः साधारण्येन वर्णिताः ।
विशेषेण च वर्णानां मुख्यामुख्याश्च योषिताम् ॥ १ ॥
"तदेवं दशभिर्ज्ञानभक्तियोगावुदीरितौ ।
अथ पञ्चभिरध्यायैः कर्मयोगो ऽनुवर्ण्यते ॥ २ ॥

दैत्यपतेः प्रह्लादस्य साधूनां सभासु सभाजितं सत्कृतमीहितं चरितं श्रुत्वा पुनर्नारदं पप्रच्छ कथम्भूतस्येहितं महत्तमानामग्रण्यो मुख्यस्य तत्र हेतुः उरुक्रमे आत्मा मनो यस्य ॥ १ ॥

श्रवणेच्छायां हेतुः यद्यतो धर्मादनुष्ठितात्परं ज्ञानं भक्तिं च विन्दते ॥ २ ॥ ३ ॥

ननु, स्मृतिकारैर्धर्म उक्त एव तत्राह—नारायणपरा इति ॥ ४ ॥

अजाय श्रीनारायणाय तस्यैव मुखाच्छ्रुतम् ॥ ५ ॥

* स्मृतिरिति पाठः, वीरराघ० ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

तन्मुखादात्मनः श्रवणं सम्भावयन्विशिनष्टि, य इति ॥ ६ ॥

प्रथमं तावद्धर्मे प्रमाणमाह–धर्मेति । धर्मस्य मूलं प्रमाणं स्मृतं च स्मृतिः तद्विदां वेदविदां येन चाऽऽत्मा मनः प्रसीदति तुष्यति च । तथाच याज्ञवल्क्यः "श्रुतिः स्मृतिः सदाचारः स्वस्य च प्रियमात्मनः । सम्यक्सङ्कल्पजः कामो धर्ममूलमिदं स्मृतम्" इति. मनुश्च "वेदोऽखिलो धर्ममूलं स्मृतिशीले च तद्विदाम् । आचारश्चैव साधूनामात्मनस्तुष्टिरेव च" इति ॥ ७ ॥

तत्र तावन्नरमात्रसाधारणधर्ममाह–सत्यमिति, पञ्चभिः । तपः एकादश्युपवासादि ईहा युक्तायुक्तविवेकः शमो मनसस्संयमः दमो बाह्येन्द्रियाणाम्. त्यागो दानं स्वाध्यायो यथोचितजपः ॥ ८ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तदेवं श्रुतप्रह्लादचरितोऽपरं वदाम किमिति प्रश्नाय चोदितो युधिष्ठिरः वर्णाश्रमादिधर्मान् तत्रतत्र भगवद्भक्तियोगाङ्गत्वेनोक्तान् बुभुत्सुः पप्रच्छ देवर्षिमित्याह भगवान् बादरायणिः, श्रुत्वेति । उरुविक्रमे भगवत्यात्मा मनो यस्य तस्य दैत्यपतेः प्रह्लादस्य साधुभिः समाजितमनुसेवितम् आहतं वा ईहितं चरित्रं श्रुत्वा मुदा हर्षेण अन्वितो युक्तो युधिष्ठिरः पुनर्महत्तमानामग्रण्यं प्रथमतो गण्यं स्वयंभुवो ब्रह्मणः. तनयं नारदं पप्रच्छ "साधु सभासभाजितं महत्तमाग्रणयउरुक्रमात्मनः" इति पाठान्तरं तत्र महत्तमानामग्रण्यः मुख्यः उरुक्रमे भगवति आत्मा मनो यस्य दैत्यपतेः प्रह्लादस्येहितं साधूनां सभायां सभाजितं सत्कृतं श्रुत्वेत्यर्थः. ॥ १ ॥

प्रश्नमेवाह—भगवन्निति, त्रिभिः । हे भगवन् ! अहं वर्णानां ब्राह्मणादीनाम् आश्रमाणां ब्रह्मचर्याद्याश्रमनिष्ठानां चाचारयुतं नृणां सनातनमनादिपरंपरागतं नत्वर्वाचीनपाषण्डकल्पितं वर्णाश्रमाचारयुतं नतूत्पथप्रतिपन्नजनाचारयुतम् एवंविधाद्धर्मादेव परमात्मानं विन्दत इतिभावः—

"वर्णाश्रमाचारवता पुरुषेण परः पुमान् ।
विष्णुराराध्यते नान्यः पन्थास्तत्तोषकारणम्" ॥

इति स्मृतेः । धर्मं श्रोतुमिच्छामि तच्छ्रवणेच्छायां हेतुं वदन्विशिनष्टि–यद्यस्माद्धर्मात्परं परमपुरुषं विन्दते भक्तियोगनिष्पत्तिद्वारा प्राप्नोतीत्यर्थः ॥ २ ॥

नन्वेतद्धर्मविदो बहवः सन्ति अतस्तंप्रति नाहं प्रष्टव्यस्तत्राह—भवानिति । त्वमिवान्ये धर्मं गुह्यं न विदुरतस्त्वमेव ब्रूहीति भावः । तदेव व्यञ्जयंस्त्वं विशिनष्टि, प्रजानां पत्युः परमेष्ठिनः साक्षाद्भगवानात्मजः पुत्रः सर्वोऽपि धर्मः परमेष्ठिमुखोपदिष्ट इति ततो गृहीतधर्मरहस्यस्त्वमेव तद्वक्तुं समर्थ इति भावः । ननु, परमेष्ठिनः सुता अपि बहवः सन्तीत्यत्राह–हे ब्रह्मन् ! सुतानां मध्ये भवान्परमेष्ठिनः संमतः सुतः नितरां प्रीतिविषयः सुतोऽतो धर्मरहस्यं तेन तुभ्यमुपदिष्टम् भवेदितिभावः ॥ ३ ॥

ननूपदिष्टधर्मरहस्योऽप्यहं तद्विस्मृतवानस्मीत्यत्राह–तप आदिभिरुपायैर्नारायणपराः नारायणः पर उत्कृष्ट उपास्यो येषां तादृशा विप्रा यूयं परं धर्मगुह्यं विदुः भगवद्भक्त्यङ्गत्वेन वर्णाश्रमादिधर्ममनुतिष्ठतां युष्माकं न तद्विषया विस्मृतिरितिभावः. । जानन्तो वयं रहस्यत्वादेव न कथयाम इति चेत्तत्राह–करुणा इति । करुणाः करुणावन्तः करुणावतां मम धर्मरहस्याऽज्ञानप्रयुक्तदुःखस्य निराचिकीर्षा युक्तैवेति भावः । ननु, तच्छ्रवणे त्वमनधिकारीति शङ्कां निराकुर्वन्विशिनष्टि, शान्ता रागादिप्रयुक्तवैषम्यरहिताः किं तवैतद्रहस्योपदेशेन मम प्रयोजनं तत्राह. साधवः स्वार्थनिरपेक्षपरोपकारशीलाः एवंभूतास्त्वद्विधा एव न त्वपरे सन्तीत्यर्थः ॥ ४ ॥

एवमापृष्टो धर्मान् भगवान् नारदस्तान्विवक्षुः स्वस्य साक्षात्तदुपदेष्टारं श्रीमन्नारायणं नमस्कुर्वन् प्रतिज्ञाय तं विशिनष्टि—नत्वेति द्वाभ्याम् । अजाय कर्मायत्तोत्पत्तिरहिताय भगवते नारायणाय लोकानां यो धर्मस्तस्य हेतवे नारायणाय प्रवर्तकाय नत्वा नारायणमुखाच्छ्रुतं सनातनं धर्ममहं वक्ष्ये ॥ ५ ॥

एवं प्रतिज्ञां कृत्वाऽथ तन्मुखादात्मनः श्रवणं संभावयन् तं विशिनष्टि—य इति । यो भगवानात्मनोंऽशभूतेन नरेण सह दाक्षायण्यां दक्षदुहितरि मूर्तौ धर्मतो मूर्त्यां भर्तुर्धर्मादवतीर्य लोकानां स्वस्तये बदरिकाश्रमे ऽद्याप्यध्यास्ते ॥ ६ ॥

तावद्विवक्षिते धर्मे प्रमाणमाह—धर्ममूलमिति धर्मस्य मूलं प्रमाणं धर्मप्रमापको भगवानेवेत्यर्थः । ननु, भगवतः प्रत्यक्षादिप्रमाणानन्तर्भूतत्वात्कथं तस्य धर्मप्रमापकत्वमितिशङ्कां निराकुर्वन् तं विशिनष्टि, सर्ववेदमयः ऋग्यजुस्सामादिसर्ववेदप्रचुरः न साक्षाद्धर्मे भगवान् प्रमाणमपितु साक्षात्प्रमाणभूतसर्ववेदाविष्कारद्वारेतिभावः । तदाविष्कारकारकत्वं च तस्य श्रूयते "तस्यह वा एतस्य महतो भूतस्य निःश्वसितमेतद् यदृग्वेदः" इत्यादि. किञ्च हे राजन् ! तद्विदां वेदविदां स्मृतिश्च तद्धर्ममूलमित्यर्थः तद्विदामित्यनेन स्मृतीनां स्वमूलभूतश्रुत्यनुमापनद्वारा धर्मप्रमापकत्वमिति सूचितम् तद्विदां स्मृतय इत्यनेनतातद्वेदनमूलकशाक्यादिस्मृतिव्यावृत्तिः । स्मृतिश्चेति च शब्देन शिष्टाचारादिसंग्रहः । तदुक्तं मनुना—

"वेदोऽखिलो धर्ममूलं स्मृतिशीले च तद्विदाम् ।
आचारश्चैव साधूनामात्मनस्तुष्टिरेव च ॥ इति.

याज्ञवल्क्यश्च—

"श्रुतिः स्मृतिः सदाचारः स्वस्य च प्रियमात्मनः ।
सम्यक् सङ्कल्पजः कामो धर्ममूलमिदं स्मृतम् ॥ इति.

धर्मं विशिनष्टि, येन धर्मेण स्वाराधनभूतेनात्मा परमात्मा प्रसीदति परमात्मप्रसादहेतुत्वादवश्यं तच्छ्रवणादिकर्तव्यम् इति भावः ॥ ७ ॥

एवं धर्मप्रमाणान्यभिधाय तावन्नृणां ये साधारणा धर्माः तानाह—सत्यमिति पञ्चभिः, । सत्यं भूतहितत्वं दया स्वार्थनिरपेक्षपरदुःखासहिष्णुत्वम्. तप अनशनादिरूपम्. शौचं स्नानादिजं शुचित्वम्. तितिक्षा शीतोष्णादिद्वन्द्वसहिष्णुता. ईहा हेयोपादेयविवेकः, शमोऽन्तरिन्द्रियजयः दमो बाह्येन्द्रियजयः अहिंसा करणत्रयेणापि परपीडानिवृत्तिः । ब्रह्मचर्यमनुचितकालेषु

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

श्रीमद्भराहित्यं त्यागो लोभराहित्यं स्वाध्यायो यथोचितमन्त्रजपः आर्जवं मनोवाक्कायानामैक्यरूपम् ॥ ८ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

भगवद्भक्त्या यथावद्गीतवर्णाश्रमाचाराचरणेन समुत्पन्नाऽपरोक्षज्ञानेन प्रसन्नो हरिः स्वस्वयोग्यां मुक्तिं ददातीत्येतदर्थमुत्तरेणाध्यायेनारम्भः । तत्र वर्णाश्रमधर्माञ्छ्रोतुकामो युधिष्ठिरो नारदं पृच्छतीत्याह—श्रुत्वेति । महत्तमानामग्रयस्य अग्रस्य उरुक्रमे ईश्वरात्मा मनो यस्य स तथा तस्य दैत्यपतेः प्रह्लादस्य ईहितं चरितं साधुसभासु सभाजितं सम्भावितं महत्तमानां ब्रह्मादीनां उत्तमस्य दैत्यानामपि पत्युरुरुक्रमात्मनो नरसिंहस्येति वा ॥ १ ॥

धर्मं विशिनष्टि-वर्णेति । वर्णाश्रमाचारयुतं "यु मिश्रणे" इति धातुः ॥ २—५ ॥

पुरुषार्थोपयोगित्वाद्वक्तुमिच्छामीत्याह—यो वर्तीयेति । दाक्षायण्यां नाम्ना मूर्त्तौ धर्मतो धर्मप्रवर्तनार्थम् "स्यादध्यधिक ईश्वरः" इत्यभिधानादधीश्वरः तप उद्दिश्य बदरिकाश्रम आस्त इत्यन्वयः बदरिकाश्रमे तपोऽध्यास्त इति वा ॥ ६ ॥

तत्रानुष्ठानधर्मविषये ज्ञाते क्षिप्रप्रवृत्तिः स्यादधिकारिणामिति तमाह—धर्ममूलमिति । धर्ममूलं धर्मविषयः सर्ववेदमयः सर्ववेदप्रतिपाद्येषु प्रधानः अनेन रुद्रादयो निवृत्ता इति ज्ञातव्यं न केवलं धर्मविषय एव तत्प्रतिष्ठापकश्चेत्यतो धर्ममूलमित्यत्र प्रमाणं सर्ववेदमय इति, प्रमाणान्तरं चास्तीत्याह—स्मृतिरिति, प्रमाणमिति शेषः । भगवत्प्रसादहेतुत्वात्प्रमाणमित्याह—येनेति । अनेन भगवत्तत्त्वज्ञैः स्मृतो धर्मो न कपिलादिभिरित्युक्तम् भवति ॥ ७ ॥

विषयं निरूप्य सर्वसाधारणं सर्वधर्मसाधनमाह—सत्यमिति । सत्यादिचतुष्टयमन्तरङ्गं तितिक्षादिकमुपाङ्गमिति ज्ञातव्यम् ॥ ८ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

हतसन्देहत्वान्मुदा युतः । अत एव राज्ञाऽनुकूलत्वैर्धर्मकथामकरोदित्याह, पप्रच्छेति ॥ १ ॥

तामपि लोकहितायैव परमार्थमाभित्यैव श्रीनारदेन सममेव वाकरोदित्याह—यत् पुमानिति ॥ २ ॥ ३ ॥

ननु, मन्वादयो नारायणपरा एव तत्राह-गुह्यमिति । गुह्यत्वात्तेऽपि न प्रकाशयन्तीत्यर्थः ॥ ४ ॥

धर्महेतव इति । धर्मोऽत्र ज्ञानभक्तिजनको धर्मविशेषो ज्ञेयः ॥ ५ ॥

आत्मवतामनुकम्पया तपोऽव्यक्त गतिश्चरतीति पञ्चमस्कन्धात् आत्मनोंऽशेन नरेण ॥ ६ ॥

तस्य प्रमाणं—आज्ञयां तद्बहिर्मुखधर्मस्य अपार्थत्वं भगवद्धर्मस्यैवावश्यकत्वं चोक्तम् अत एव "वेदोऽखिलो धर्ममूलम्" इत्यादि मनुस्मृतिवाक्यादप्यत्र विशिष्टतयोपदिष्टं नच युक्तं "धर्मः प्रोज्झित कैतवोऽत्र परमो निर्मत्सराणां सताम्" इत्याद्युक्तत्वात् येनैव धर्मेण मनः प्रसीदतीत्यनेन ययात्मा सुप्रसीदतीतिवत् सुशब्द विशिष्टतया अनुक्तत्वात्तच्छूद्रलक्षणा साक्षाद्भक्तेरेव प्रशस्तत्वञ्च बोधितं येन चात्मेत्यात्मतोषोऽपि प्रमाणमित्यर्थः ॥ ७ ॥

सत्यमित्यादि सार्द्धपञ्चकम् ॥ ८—१२ ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

वासनाभगवद्भक्तसङ्गात् साध्वी निरूपिता ।
दशभिः पञ्चभिश्चाथ सत्कर्म प्रभवोच्यते ॥
नृणां साधारणान् धर्मान् विप्रादीनां विशेषतः ।
स्त्रीणां सङ्करजातीनां चोवाचैकादशे मुनिः ॥

तदेवं निर्गुणभक्तिवासनायाः कारणत्वेन महत्कृपां दशभिरध्यायैरुक्त्वा सगुणभक्तिवासनायाः कारणं निष्कामकर्मयोगं पञ्चभिरध्यायैर्वक्तुमारभते-श्रुत्वेति । साधूनां सभासु सभाजितं सत्कृतं महत्तमानामग्रयो मुख्यस्य प्रह्लादस्य ॥ १ ॥

सनातनं फलप्राप्तावपि स्थास्नु भक्तियोगमित्यर्थः । वर्णाश्रमाचारयुतमिति वर्णाश्रमाचारधर्मं च श्रोतुमिच्छामीत्यर्थः ॥२॥३॥

नन्वन्ये मुनयः स्मार्त्ताः पृच्छ्यन्तामित्यत आह, नारायणेति ॥ ४ ॥

अजाय श्रीकृष्णाय ॥ ५—६ ॥

धर्मस्य मूलं कारणं प्रमाणं च हि निश्चितं भगवानेव यतः सर्ववेदेति तद्भक्त्या विना धर्मा नैव सिद्ध्यन्तीति भावः । स्मृतं स्मृतिः तद्विदां सर्ववेदमयभगवद्विदां तेन प्राथमिकविष्णुपूजाविरहितश्राद्धादिसप्तमीविद्धरोहिण्यष्टमीव्रतादिविधायिकाः स्मृतयो व्यावृत्ताः येन च आत्मा मनः प्रसीदतीति.

"सवै पुंसां परो धर्मो यतो भक्तिरधोक्षजे ।
अहैतुक्यप्रतिहता ययाऽऽत्मा सुप्रसीदति" ॥

इतिवत्सुशब्दाप्रयोगात् यथा केवलया भक्त्या न तथा कर्मादिमिश्रया भक्तिमिश्रकर्मणा वा मनः प्रसीदतीति ज्ञापितं भक्तिरहितो धर्मस्त्वग्राह्य एव तेन—

"श्रुतिः स्मृतिः सदाचारः स्वस्य च प्रियमात्मनः ।
सम्यक् सङ्कल्पजः कामो धर्ममूलमिदं स्मृतम्" ॥

इति याज्ञवल्क्योक्तेः

"वेदोऽखिलो धर्ममूलं स्मृतिशीले च तद्विदाम् ।
आचारश्चापि साधूनामात्मन स्तुष्टिरेवच" ॥

इतिमनूक्तेरपि सकाशात् धर्ममूलं हि भगवानिति नारदोक्तिरेव श्रेयसी यदुक्तं नारसिंहे—

**सन्तोषः समदृक्सेवा ग्राम्येहोपरमः शनैः।**
**नृणां विपर्ययेहेक्षा मौनमात्मविमर्शनम् ॥ ९ ॥**

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

"सनकाद्यो निवृत्ताख्ये ते च धर्मे नियोजिताः।
प्रवृत्ताख्ये मरीच्याद्या मुक्त्वैकं नारदं मुनिम्"

इति नारदस्यैव तेभ्य उभयेभ्यः श्रैष्ठ्यं सर्वधर्मसारविज्ञत्वं च ध्वनितम् ॥ ७ ॥

तत्र तावन्नरमात्रसाधारणं सनातनं भक्तियोगं धर्ममाह, सत्यमिति, पञ्चभिः। तत्र सत्याद्या एकविंशतिभक्त्युपकरणीभूताः श्रवणाद्या नव तु साक्षाद्भक्तिरेवेति ज्ञेयं तप एकादश्युपवासादिः शमो मनसो निग्रहः दमो बाह्येन्द्रियाणां स्वाध्यायो यथोचितजपः ॥ ८ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

एवमतिक्रान्तेन ग्रन्थेन भगवत्प्रियो भक्तियोगो ज्ञानयोगश्च वर्णितः अथ तत्प्रियः कर्मयोगः पञ्चभिरध्यायैर्वर्ण्यते तत्रैकादशेनाध्यायेन सर्वेषामधिकारिणां साधारणा धर्माः विशेषतश्च वर्णानां स्त्रीणां च धर्मा वर्ण्यन्ते। युधिष्ठिरः, महत्तमा हरिध्याननिष्ठास्तेषामग्रं हरिध्यानं नयति वहतीति महत्तमाग्रणीस्तस्य महत्तमाग्रण्यः यतः उरुक्रमे हरौ आत्मा मनो यस्य तस्य दैत्यपतेः प्रह्लादस्य साधुसभासु सभाजितं प्रशंसितमीहितं हरिज्ञानभक्तिगर्भं सुचरितं श्रुत्वा पुनर्ज्ञानभक्तिसाधनभूतकर्मयोगज्ञानार्थं स्वयंभुवस्तनयं नारदं पप्रच्छ ॥ १ ॥

सनातनं नित्यसिद्धं वेदप्रोक्तम् यद्यतो धर्माद् ज्ञानभक्तिद्वारा परं परमेश्वरं विन्दते प्राप्नोति ॥ २ ॥

परमेष्ठिनः साक्षात्सुतः सुतानां मरीच्यादीनां मध्ये तपआदिनिमित्तैः सम्मतः प्रीतिविषयश्च ॥ ३ ॥

भवद्विधा नारायणपरा एव धर्मं जानन्ति ते परोपदेष्टुं कुशलाः नान्ये इत्याह—नारायणपरा इति ॥ ४ ॥

अजाय श्रीनारायणाय ॥ ५ ॥

यः धर्मस्तद्भार्यायां दाक्षायण्यां मूर्त्तौ आत्मना स्वेच्छया अंशेन स्वांशेन नरेण सह अवतीर्य लोकानां स्वस्तये तपोऽध्यास्ते ६ ॥

धर्मे प्रमाणमाह—धर्ममूलमिति। आत्मा परमात्मा प्रसीदति तस्य धर्मस्य सर्ववेदमयो वेदमूर्तिः भगवान् मूलं प्रवर्तकः प्रमाणमित्यर्थः। तद्विदां वेदविदां स्मृतं स्मृतिश्च धर्ममूलम् ॥ ७ ॥

प्रथमं सर्वसाधारणं धर्ममाह—सत्यमिति, पञ्चभिः। सत्यं सार्वत्रिकं याथार्थ्यं तप एकादश्युपवासादिः ईक्षा हेयोपादेयविवेकः शमोऽन्तरिन्द्रियसंयमः दमो बाह्येन्द्रियसंयमः त्यागो दानम् स्वाध्यायो यथाधिकारं गुरुवाक्यसाधारणम् ॥ ८ ॥

---

भाषा टीका।

श्रीरुक्मिणीप्राणनाथाय नमः ॥

श्रीशुक उवाच।

श्रीशुकदेवजी बोले, कि—हे परीक्षित! महत्तमों में अग्र गण्य श्रीहरि में लग्नचित्त दैत्यपति ऐसे श्रीप्रह्लादके साधु सभामें संश्लाघनीय चरितो को सुनकर हर्षमे निमग्न हुए२ युधिष्ठिरजी ब्रह्मपुत्र श्रीनारदजीसे फिरपूँछने लगे ॥ १ ॥

युधिष्ठिर उवाच।

युधिष्ठिरजी बोले, कि-हे भगवन्! हे श्रीनारद जी! मैं वर्णाश्रम के आचार सहित मनुष्यो के सनातन धर्मो के श्रवण करने की इच्छा करता हूं जिनसे पुरुष परमात्माको प्राप्त होता है ॥ २ ॥

हे ब्रह्मन् आप परमेष्ठी श्रीब्रह्माजीके पुत्र है तपयोगसमाधि से सब पुत्रों में सम्मत हैं ॥ ३ ॥

कारुणिक साधु शान्त आप सदृश नारायणपरायण विप्रजन-ही उत्कृष्ट ऐसा शुभ जो सनातन धर्म है तिस जानते हैं ऐसा और हरिविमुख जन नहीं जानते हैं ॥ ४ ॥

नारद उवाच।

नारद जी बोले, कि—भगवान् अजन्मा श्रीनारायण को नमस्कार करके उनही श्रीनारायण के मुख से सुने हुए सनातन धर्मों को कहता हूं ॥ ५ ॥

जो साक्षात् अपने अंश से दक्षपुत्री श्रीमूर्ति मातामें धर्म-से अवतार लेकर लोकों के स्वस्ति (कल्याण) के लिये श्रीबदरिका आश्रम में तप आचरण करते हैं ॥ ६ ॥

[illegible]ा मूलतो हे राजन्! सर्व देवमय भगवान श्रीहरी ही हैं, और वेदार्थ साक्षात्कार करनेवाले महर्षियों की स्मृतियें हैं कि जिनके आचरण से मन सन्तुष्ट होताहै ॥ ७ ॥

सत्य दया तप शौच ( शुद्धि ) तितिक्षा ( सहन स्वभाव ) शम दम अहिंसा ब्रह्मचर्य त्याग स्वाध्याय आर्जव ॥ ८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका।

सन्तोषो दैवलब्धेनालम्बुद्धिः समदर्शी महतां सेवा. ग्राम्येहोपरमः प्रवृत्तकर्मभ्यो निवृत्तिः, विपर्ययेहेक्षा निष्फलक्रियाणामीक्षणम्. मौनं वृथालापनिवृत्तिः, आत्मविमर्शनं देहादिव्यतिरिक्तात्मानुसन्धानम् ॥ ९ ॥

अन्नाद्यादेः संविभागो भूतेभ्यश्च यथाऽर्हतः ।
तेष्वात्मदेवताबुद्धिः सुतरां नृषु पाण्डव ! ॥ १० ॥
श्रवणं कीर्तनं चास्य स्मरणं महतां गतेः ।
सेवेज्याऽवनतिर्दास्यं सख्यमात्मसमर्पणम् ॥ ११ ॥
नृणामयं परो धर्मः सर्वेषां समुदाहृतः ।
त्रिंशल्लक्षणवान् राजन् ! सर्वात्मा येन तुष्यति ॥ १२ ॥
संस्कारा यत्राविच्छिन्नाः स द्विजोऽजो जगाद यम् ।
इज्याऽध्ययनदानानि विहितानि द्विजन्मनाम् ।
जन्मकर्मावदातानां क्रियाश्चाश्रमचोदिताः ॥ १३ ॥
विप्रस्याध्ययनादीनि षडन्यस्याऽप्रतिग्रहः ।
राज्ञो वृत्तिः प्रजागोप्तुरविप्राद्वा करादिभिः ॥ १४ ॥
वैश्यस्तु वार्तावृत्तिश्च नित्यं ब्रह्मकुलानुगः ।
शूद्रस्य द्विजशुश्रूषा वृत्तिश्च स्वामिनो भवेत् ॥ १५ ॥
वार्ता विचित्रा शालीनं यायावरशिलोञ्छनम् ।
विप्रवृत्तिश्चतुर्धेयं श्रेयसी चोत्तरोत्तरा ॥ १६ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

आत्मेति देवतेति च बुद्धिः ॥ १० ॥

अस्य श्रीकृष्णस्य श्रवणादयो नव इज्याऽर्चनम् ॥ ११ ॥

एवं त्रिंशल्लक्षणवान् ॥ १२ ॥

इदानीं वर्णधर्मान्वक्तुं द्विजानां लक्षणमाह-संस्कारा मन्त्रवन्तो गर्भाधानादयो यस्मिन्नविच्छिन्नाः स द्विजः तर्हि शूद्रस्यापि संस्काराविच्छेदे सति द्विजत्वं स्यात्तत्राऽऽह-अजो ब्रह्मा यमेवंभूतसंस्कारयुक्तं जगाद स द्विजः शूद्रं तु न मन्त्रवत्संस्कारयुक्तं जगाद न चोपनयनवन्तमतो नासौ द्विजः तथाच स्मृतिः "विवाहमात्रसंस्कारं शूद्रोऽपि लभतां सदा । न केनचित्समसृजच्छन्दसा तं प्रजापतिः" इति. श्रुतिश्च "गायत्र्या ब्राह्मणमसृजत त्रिष्टुभा राजन्यं जगत्या वैश्यं न केनचिच्छूद्रम्" इति अतो विवाहव्यतिरिक्तसंस्कारस्यानावश्यकत्वादुपनयनस्य तु सर्वथा निषेधान्न तस्य द्विजत्वमित्यर्थः । पाठान्तरे वैदिकादय इति गर्भाधानादय इत्यर्थः त्रैवर्णिकानामावश्यकान्धर्मानाह-इज्येति । जन्मना विशुद्धेन कुलेन कर्मणा चाचारेण अवदातानां शुद्धानां दुष्कुलानां दुराचाराणां च नैतानि विहितानीत्यर्थः । ब्रह्मचर्याद्याश्रमविहिताः क्रियाश्च शूद्रस्य तु वर्णधर्मा एव आश्रमभेदकृतविशेषाभावात् ॥ १३ ॥

ब्राह्मणादीनां चतुर्णामपि वृत्तिरूपान्धर्मानाह-विप्रस्येति सार्द्धैः सप्तभिः । विप्रस्य षट् कर्माणि विहितानीत्यनुषङ्गः । तत्र त्वध्यापनं याजनं प्रतिग्रहश्च जीविका यथाह मनुः "षण्णां तु कर्मणामस्य त्रीणि कर्माणि जीविका । याजनाध्यापने चैव विशुद्धाच्च प्रतिग्रहः" इति. अन्यस्य क्षत्रियस्य अप्रतिग्रह इति प्रतिग्रहातिरिक्तं याजनाध्यापनं चाप्यनुजानाति वक्ष्यति चानन्तरमेव ऋतं राजन्यमिति । श्रूयते चाश्वपतिकैकयप्रभृतीनां क्षत्रियाणामुपदेष्टृत्वादि प्रजापालनेऽधिकृतस्य क्षत्रियस्य वृत्त्यन्तरमाह-राज्ञ इति, आदिशब्देन दण्डशुल्कादि ॥ १४ ॥

वार्ता कृषिवाणिज्यादिलक्षणा वृत्तिर्वैश्यस्य शूद्रस्य द्विजानां शुश्रूषा विहिता स्वामिनो द्विजस्य तु शुश्रूषावृत्तिश्च भवेत् ॥ १५ ॥

विप्रस्य मुख्याऽनुकल्पभेदेन वृत्त्यन्तराण्याह—वार्तेति । वार्ता विचित्रा कृष्यादिरूपा. शालीनं धार्ष्ट्यं विनैव प्राप्तमयाचितम्. यायावरं प्रत्यहं धान्ययाच्ञा. शिलं शालिक्षेत्रादौ स्वामित्यक्तकणिशोपादानं उञ्छनमापणादिपतितकणोपादानं शिलोञ्छनद्वयमेकीकृत्य चतुर्धेत्युक्तं श्रेयसी उत्तमा ॥ १६ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

सन्तोषो दैवाल्लब्धेनालम्बुद्धिः समदृक्सेवा समदर्शां महतां सेवा ग्राम्येहाभ्यः प्रवृत्तिकर्मचेष्टाभ्य उपरमो निवृत्तिः नृणां

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

विपर्ययेहेक्षा निष्फलचेष्टानिरूपणं मौनं मितभाषणम् आत्मविमर्शनं देहविलक्षणात्मयाथात्म्यपरिशीलनम् ॥ ९ ॥

भूतेभ्यो यथायोग्यमन्नाद्यमन्नभक्षणं तदादेः संविभागः विभज्य प्रदानं तेषु भूतेष्वात्मदेवताबुद्धिः आत्मेति च देवेति च बुद्धिः आत्मनः स्वस्य देवता दैवत परमात्मा तद्बुद्धिः ब्रह्मात्मकत्वबुद्धिरिति वा आत्मतुल्यता बुद्धिः देवताबुद्धिश्चेति वा. इष्टदेवताबुद्धिः । हे पाण्डव ! भूतानांमध्ये नृषु मनुष्येषु तु सुतरामन्तर्यामिदेवताबुद्धिरित्यर्थः ॥ १० ॥

महतां गतेः भक्तानां शरण्यस्य भगवतः श्रवणं गुणश्रवणं कीर्तनं गुणप्रतिपादकनामादिकीर्तनम्. स्मरणं स्वरूपरूपगुणविभूतिस्मरणम्. सेवा पादपीडनादिरूपा. इज्याऽर्घ्यपाद्यादिनिवेदनरूपा. अवनतिः नमस्कृतिः प्रह्वीभावो वा. सख्यं सर्वात्मना आनुकूल्यम्. आत्मसमर्पणं आत्मतदनुबन्धिनश्च तदायत्तस्वत्वादिमत्त्वानुसन्धानं चेत्ययं त्रिंशल्लक्षणवान् सर्वेषां नृणां साधारणः पर उत्कृष्टो धर्मः उदाहृत. प्रदर्शितः येन धर्मेण सर्वान्तरात्मा भगवान् तुष्यति प्रसन्नो भवति सोऽयं त्रिंशल्लक्षणवानित्यर्थः ॥ ११ ॥ १२ ॥

एवं नृणां साधारणं धर्ममभिधायाथ तद्विशेषाणां ब्राह्मणादीनां वर्णानां त्रयाणामावश्यकान् धर्मानभिवक्ष्यंस्तावत् त्रैवर्णिकसाधारणेन द्विजत्वलक्षणमाह—संस्कार इति । यद्यत्र संस्काराः गर्भाधानादयः षोडश अविच्छिन्नाः स द्विजः । ननु, शूद्रस्यापि तदविच्छेदे द्विजत्वं स्यात्तत्राह, अजो ब्रह्मा यमेव संस्कारयुक्तं जगाद श्रुतिस्मृतिमुखेन स द्विज, शूद्रं तु न मन्त्रवत्संस्कारयुक्तं जगाद. न चोपनयनवन्तमतो नाऽसौ द्विजः । तथा च स्मृतिः—

"विवाहमात्रं संस्कारं शूद्रोऽपि लभतां सदा ।
न केन चित्समसृजच्छन्दसा तं प्रजापतिः" ॥ इति.

श्रुतिश्च—गायत्र्या ब्राह्मणमसृजत त्रिष्टुभा राजन्यं जगत्या वैश्यं न केनचिच्छन्दसा शूद्रम्" इति । अतो विवाहव्यतिरिक्तसंस्कारस्याभावात् उपनयनस्य निषेधात् तस्य द्विजत्वमुच्यते इति व्याचक्षते । [illegible], द्विजत्वादिकमपि विशेषसम्बन्धरूपं न जातिरूपं न ब्राह्मणोऽयमित्यादिबुद्धिविषयरूपं केवलसंस्कारमात्रत्वं वा [illegible] प्रजापतिप्रभवानांपक्षाद्विजातिप्रभृतीनां [illegible] सन्तानविशेषप्रसूतत्वादिकं [illegible] सन्तानविशेषोत्पत्तिमूलकसंस्कारैः [illegible] कार्यत्वादलौकिकप्रकर्षविशेषकारणत्वाच्च । एवं च "कार्येण कारणानुमानम्" इति न्यायेन अत्र कार्यभूता संस्काराः अविच्छिन्नाः पित्रादिपरम्पराऽविच्छिन्ना दृष्टाः स द्विज इत्यर्थः । सन्तानविशेषप्रभवत्वतन्मूलकसंस्कारादिमत्त्वानु[illegible] द्विज इति यावत् संस्काराश्च ब्राह्मणादि[illegible] [illegible] कर्तव्यत्वेन प्रजापतिना "अष्टवर्षं ब्राह्मणमुपनयीत" इत्यादिश्रुतिस्मृत्यादिमुखेन प्रगदिताः तथा च यत्सन्तानादिविशिष्टस्य संस्कारमजो जगाद तत्सन्तानप्रभवत्वानुमितादृष्टविशेषसम्बन्धवान् द्विज इति फलितोऽर्थः । त्रैवर्णिकानामावश्यकान् धर्मानाह—इज्येति । जन्मना कुलेन कर्मणा चावदातानां शुद्धानां द्विजानां त्रैवर्णिकानामिज्यादीनि स्वाश्रमचोदिताः ब्रह्मचर्याद्याश्रमेषु विहिताः क्रियाः चोदितानि विहितानि एषामकरणे प्रत्यवाय इति भावः । तुर्याश्रमिणामनग्नित्वेनेज्याया अभावात्तदभिप्रायेण स्वाश्रमचोदिताः क्रिया इत्युक्तम्. साग्नित्वे इज्यादीनि त्रीणि स्वाश्रमचोदिताः क्रियाः चैतानि विहितानि अनग्नित्वे स्वाश्रमचोदिताः क्रियाविहिता इत्यर्थः । अनाश्रमिणां विधुरादीनां तु पूर्वोक्तत्रिंशल्लक्षणवान् धर्म इति भावः ॥ १३ ॥

एवं त्रैवर्णिकानामावश्यकान् धर्मानभिधायाऽथ तत्र विप्रस्य जीविकाधर्मानाह—विप्रस्याध्यापनादीनीति । आदि शब्देन याजनप्रतिग्रहौ विवक्षितौ याजनाध्यापनप्रतिग्रहाः जीविकाधर्माः इज्याऽध्ययनदानादीनि त्वावश्यकाधर्मा इत्यर्थः । एवं संभूय विप्रस्य षट् धर्माः तथा चोक्तं मनुना—

"षण्णां तु कर्मणामस्य त्रीणि कर्माणि जीविका ।
याजनाध्यापने चैव विशुद्धाच्च प्रतिग्रहः" ॥ इति.

अथ क्षत्रियस्य जीविकाधर्मानाह—अन्यस्याऽप्रतिग्रह इति, अत्रान्यस्य क्षत्रियस्याऽप्रतिग्रह इति प्रतिग्रहातिरिक्तं याजनमध्यापनं चानुजानाति, वक्ष्यति चानन्तरमेव "ऋतेराजन्यम्" इति. श्रूयते च अश्वपतिकैकयप्रभृतीनां क्षत्रियाणामुपदेष्टृत्वादिप्रजापालनेऽधिकृतस्य क्षत्रियस्य वृत्यन्तरमाह—राज्ञ इतीति व्याचक्षते तच्चिन्त्यम्. "प्रमुखादार्त्विज्यं सर्ववर्णानां स्यात्" इति द्वादशाध्यायान्त्याधिकरणे क्षत्रियादेर्याजनाध्यापनयोः प्रतिषिद्धत्वात् । तत्र हि दर्शपौर्णमासज्योतिष्टोमादिषु किं त्रिभिरपि द्विजातिभिरार्त्विज्यं कारयितव्यमुत ब्राह्मणैरेवेति संशय्य तत्र त्रयोऽप्यार्त्विज्यमर्हन्ति विद्वत्त्वाद्वरणं पुनः पुरुषार्थमतः क्रतुवैगुण्य नास्ति । किञ्च याजनाध्यापनप्रतिग्रहाः ब्राह्मणस्यैव वृत्त्युपाया इति नियमः पुरुषार्थतया स्मर्यते न क्रत्वर्थतया तेन क्षत्रियवैश्यावार्त्विज्यं कुर्वन्तौ नियमाऽतिक्रमात्कामं स्वधर्मात्प्रच्यवेयातां न क्रतोः कदाचिद्गुणहानिः तस्मात् त्रिभिरप्यार्त्विज्यं कारयितव्यमिति पूर्वपक्षं प्रापय्य "द्विजोत्तमानामार्त्विज्यं ननु क्षत्रियवैश्ययोः ब्राह्मणार्त्विज्यनियमः क्रत्वर्थेनापीहि स्मृतः" एवं व्याख्यास्याम इत्युपक्रम्य "ब्राह्मणानामार्त्विज्यम्" इति यज्ञसूत्रकाराः क्रत्वर्थेन स्मरन्तीति स्पष्टोक्तत्. तथा च भगवद्रामायणेऽपि—

"क्षत्रियो याजको यस्य चण्डालस्य विशेषतः ।
कथं सदसि भोक्तारो हविस्तस्य सुरर्षयः" ॥ इति

सुरा देवता ऋषयश्च आर्त्विज्यभुता इति देवताहविर्भागनिराकरणात् क्रतुवैगुण्यमेवदर्शितम् "राजयाजकयाज्यस्य विनश्यति यथा हविः" इति ब्राह्मणार्त्विज्ये हविर्विनाशः स्मृतः लिङ्गानि च दर्शितानि "ब्राह्मणानामिदंहवि." इत्येवमादीनि तस्माद्ब्राह्मणानामेवार्त्विज्यं सिद्धमिति राद्धान्तितम्. तस्मान्न राजन्यवैश्ययोर्याजनाध्यापनाधिकारः अश्वपतिकैकयप्रभृतीनां यद्वेदान्तेषूपदेष्टृत्वमवगतम् नतदध्यापनरूपं किन्तु सूतादीनामिव

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

ब्रह्मस्वरूपतदुपासनाद्युपदेष्टृत्वरूपम्. अध्यापनन्नाम स्वोच्चारणा-नूच्चारणाय शिष्योद्देशेन आगद्ध्यात्मवेदराशेः साङ्गस्य स्वर-वर्णाद्यनपभ्रंशपूर्वकमुच्चारणम् तस्माद्प्रतिग्रह इत्यस्यायमर्थः । प्रतिग्रहग्रहणं याजनाध्यापनयोरप्युपलक्षणम्. ये ब्राह्मणानां याजनाध्यापनप्रतिग्रहरूपा वार्तारूपा धर्माः न ते राजन्यादेर्जी-विका धर्मा इति. का तर्हि राजन्यादेर्वृत्तिरित्याह—राज्ञ इति. तत्र राजन्यो द्विविधः प्रजापालनाधिकृतस्तदनधिकृतश्चेति. तत्रा-द्यस्य वृत्तिरनेनोच्यते द्वितीयस्य तु ऋतामृताभ्यामित्यनेन-वक्ष्यति प्रजागोप्तुः प्रजापालनाधिकृतस्य राज्ञो राजन्यस्याऽविप्रा-द्विप्रेतरात् करादिभिर्वृत्तिः. स्वाविग्राह्यभागः करः तदादिभिरा-दिशब्देन दण्डशुल्कादिकं विवक्षितं वा शब्देन प्रजापालनानधि-कृतस्य तु वृत्त्यन्तरमेवेति सूचयति ॥ १४ ॥

अथ वैश्यस्याह—वैश्य इति । नित्यं ब्रह्मकुलं विप्रकुलमनुगच्छ-त्यनुवर्त्तते इति अनुगः ताहशस्सन् वार्त्ता कृषिवाणिज्यादिलक्षणा वृत्तिर्यस्य स भवेत् । अथ शूद्रस्याऽवश्यकं धर्मं वृत्तिरूपं चाह-शूद्रस्येति । तत्र द्विजशुश्रूषा शूद्रस्यावश्यको धर्मः स्वामिनो वृत्तिश्च भवेत्स्वामिदत्तेनान्नादिना जीवनं भवेदित्यर्थः ॥ १५ ॥

एवं चातुर्णां वर्णानामावश्यकान् जीविकारूपांश्च धर्मानभिधा-यऽथतेषामेवोत्कृष्टस्य लाभे वक्ष्यमाणा निकृष्टलाभवद्ब्राह्मणस्य मुख्यानुकल्पभेदेन वृत्त्यन्तरमाह—वार्त्तेति । विचित्रा वार्त्ता कृषि-गोरक्षादिरूपा शालीनं धार्ष्ट्यं विनैव प्राप्तमयाचितमित्यर्थः।"शालीन कौपीने धृष्टाकार्ययोः" इति निघण्टुः शालीनशब्दः। इदं द्वितीयं यायावरं यायावरः प्रयाणं तस्य कर्म यायावरं प्रत्या-सादिना याच्ञापूर्वकमर्जनं तृतीयं शिलोञ्छनम् "उञ्छः कणश आ-दानं कणिशाद्यर्जनं शिलम्" तदुभयमेकीकृत्य चतुर्थं विप्रस्य वृत्तिरित्युक्तम् आसां चतसृणां वृत्तीनां पूर्वपूर्वापेक्षयोत्तरोत्तरा श्रेयसी ज्यायसी उत्तमेति यावत् । यद्यपि पूर्वं विप्रस्याध्ययना-दीनि षडन्त्यस्याप्रतिग्रह इति विप्रस्य प्रतिग्रहवृत्तेः कथि-तत्वात् अत्र शालीनं यायावरमिति च न वाच्यम्; तथापि स एव प्रतिग्रहो याच्ञापूर्वकस्तदपूर्वकश्चेति द्विविध इति वक्तुं शालीनं यायावरमित्युक्तम् ॥ १६ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

आत्मेहोपरमः विषयभोगेच्छानिवृत्तिः विषयविपर्ययहेतुः प्राणिनां स्वत एव निषिद्धकर्मचेष्टा ईहा तस्याः पर्यालोचनं मोक्षविपरीतप्रवृत्तिदर्शनं वा मौनं मन्त्रार्थचिन्तनं प्रलापवर्जनं वा आत्मविमर्शनमात्मविचारः ॥ ९ ॥

तेषु नृषु आत्मदेवताबुद्धिः परमात्माऽस्थित इति ज्ञानम् सुतरामित्यनेन नृषु विशेषतः कर्त्तव्यमिति सूचयति—

"अहिंसा सत्यमस्तेयं शौचमिन्द्रियसंयमः।
दमः क्षमार्जवं दानं सर्वेषां धर्मसाधनम्" ॥

इति स्मृतत्वादेषां धर्माङ्गत्वं नतु धर्मत्वमिति ज्ञातव्यम् ॥ १० ॥

ननु, तर्हि कोयं धर्मो नामेत्याशङ्क्य सर्वसाधारणं धर्म-माह—श्रवणमिति । महतां या गतिः स्थितिस्तस्याः सेवा सङ्गतेः सेवेति वा दास्यात्मसमर्पणयोरेकार्थत्वात् कथं पृथ-ग्ग्रहणं कृतमित्याशङ्क्य—

अनाद्यनन्तकालेषु मुक्तौ संसार एव च ।
मयिस्थश्चोदयत्येको विष्णुर्मां सर्वदैव तु ॥
इति सप्रीतिकं ज्ञानं विद्यादात्मसमर्पणम् ।
यद्धिश्चेश्वरदासत्वं दास्यमित्युच्यते बुधैः ॥

इत्यनेन परिहरणीया. अनाद्यनन्तकालं मयि स्थित्वा विष्णुः सर्वत्र मां प्रेरयतीति प्रीतिपूर्वकज्ञानमात्मसमर्पणं प्रतिमादि-सन्निहितभगवद्दासत्वज्ञानं दास्यम् ॥ ११ ॥

तारतम्यज्ञानार्थं ब्रह्मादिविषयश्रवणादिरपि धर्मः स्यादतो विशिष्योच्यत इत्यत उक्तं पर इति, "एष मे सर्वधर्माणां धर्मो-धिकतमो मतः" इति वचनात्समुदाहृत इति समीचीनत्वं कुतो ऽत्राह—त्रिशल्लक्षणेति । अनन्तलक्षणस्य हरेस्त्रिशल्लक्षणयुक्तत्वं "तथापि पुरुषाकारो भक्तानां त्वं प्रकाशसे" इति वचनात् भक्त-प्रकाश्याकारविवक्षया "समपादश्चतुर्हस्तः" इत्यादिशास्त्रेषु पुरुषलक्षणस्य निरूपितत्वात् इदं च भक्तिप्रचयाय प्रोक्तमिति ज्ञायते अनेन भगवत्तोषकरो धर्मो नान्य इत्युक्तं भवति ॥ १२ ॥

एवं धर्मस्वरूपं निरूप्य तदधिकारिणं निरूपयति—संस्कारा इति । निषेकादिश्मशानान्ता ये संस्कारास्ते यस्याविच्छिन्ना अखण्डिताः स द्वि[illegible] स [illegible]नोति शेषः । अविच्छेद्य-त्वेन कर्तव्यत्वे [illegible]—वैदिकेति । वेदप्रतिपाद्य-त्वेन प्रामाणिकत्वेन कल्पिता इत्यर्थः । नन्विदं द्विजमात्रसा-मान्यं किमित्याह—आद्य इति स्त्रीणां ब्राह्मणजातित्वेपि मन्त्रेण क्रिया एता इति यद्यतः शिष्टाचारत्वेन संगृहीतत्वात् इद वैदिकत्वेपि कर्तव्यत्वं नतु स्त्रीणां वैदिकसंस्काराभावे यागा-नधिकारित्वमित्यस्येदमेवोत्तरं वैदिकादय इति वैदिका अवैदि-काश्च सन्तीत्यर्थः तदुक्तम्—

"निषेकाद्याः श्मशानान्तास्तेषां वै मन्त्रतः क्रियाः ।
गर्भाधानमृतौ पुंसवनं च स्पन्दनात्पुरा ॥
षष्ठेऽष्टमे वा सीमन्तो मासतो जातकर्म च ।
अह्न्येकादशे नाम चतुर्थे मासि निष्क्रमः ॥
षष्ठेऽन्नप्राशनं मासे चूडा कार्या यथाकुलम् ।
एवमेनः शमं याति बीजगर्भसमुद्भवम् ॥
तूष्णीमेताः क्रियाः स्त्रीणां विवाहस्तु समन्त्रकः ।

इत्यादि—

तां पूषञ्छिवतमामेरयस्व यस्यां बीजं मनुष्या वपन्ति ।
या न ऊरू उशती विश्रयाते यस्यामुशन्तःप्रहराम शेपं ॥
उपोयमे परामृश्य मा मे दभ्राणि मन्यथाः ।
सर्वाहमस्मि रोमशा गन्धारीणामिवाविका ॥

इत्यादि संस्कारमन्त्राः ब्राह्मणाः क्षत्रिया वैश्याः शूद्राश्चत्वारः वर्णास्तेषां आद्यास्त्रयो द्विजाः तेषां साधारणं धर्ममाह इज्येति "ब्रह्मक्षत्रियविट्शूद्रा वर्णास्त्वाद्यास्त्रयो द्विजाः" इति स्मृतेः "इज्या-ध्ययनदानानि विप्रस्य क्षत्रियस्य च" इत्यादेः एतान्यपि द्विज-मात्रस्य न किन्तु विशिष्टानामित्याशयेनाह—जन्मेति । जन्मना

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

कर्मणा वा ऽवदातानां "कारीर्या यजेत वृष्टिकाम", मलवद्वाससा न सम्वदेत्" इत्यादिवेदोदिताः क्रियाश्च विहिता इत्याह, क्रिया इति ॥ १३ ॥

विशेषधर्ममाह—विप्रस्येति । अध्यापनयाजनप्रतिग्रहाः तत्तो ब्राह्मणादन्यस्य क्षत्रियादेरप्रतिग्रह "प्रतिग्रहाधिको विप्रो याजनाध्यापने तथा" इति वचनात् प्रतिग्रहादिनापि प्रवृत्तिमभिप्रेत्य राजादिवृत्तिमाह—राज्ञ इति । आदिशब्देन न्यायतो दण्डाद्यागतं धनं गृह्यते प्रजागोप्तुरित्यनेन प्रजागुप्त्यैव ततो धनमाहर्तव्यम् अन्यथा दुष्कृतमेवादत्त इति सूचयति, वाशब्देन ह्येवा गृह्यन्ते देवविप्रैर्विनेत्यर्थः दण्डार्हविप्रमन्तरेण चेति॥१४॥

वार्ता कृषिगोरक्षवाणिज्यलक्षणा स्वामिनः सकाशाज्जीवनं चेति शेषः । भृत्यानां स्वामिनः शुश्रूषा च वृत्तिरिति वा ॥ १५॥

विप्रवृत्तिं कण्ठोक्त्याह—वार्तेति । अत्र वार्तादिकमापदीति ग्राह्यं विप्राऽनुज्ञया क्षत्रियवैश्ययोस्तत्त्वविज्ञापनं धर्म इत्युच्यते ॥ १६ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

संस्कारा इत्यर्द्धकम. ननु, शूद्रस्यापि तेषु संस्कारेषु कृतेषु द्विजत्वं स्यात्तत्राह—अजो यं सृष्ट्वा द्विजं जगाद द्विजत्वेन निर्दिदेश तज्जातिक एव संस्कारेषु लब्धेषु द्विजः स्यादित्यर्थः ॥ १३ ॥

अविप्राद्वेति वाशब्दात् क्वचिद्विप्रादपीत्यर्थः । वपनं द्रविणादानमित्यादेः ॥ १४ ॥ ३५ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

समदृशां महतां सेवा विपर्ययेहा निष्फलक्रियास्तासां पर्यालोचनं मौनं वृथा वाक्यनिवृत्तिः आत्मविमर्शनमात्मनो देहभिन्नत्वभावना ॥ ९ ॥

अन्नाद्यादेः अन्नमोदनं आद्यं मोदकादि तत्तदादेर्वस्त्रस्रक्चन्दनादेर्यथोचितं विभज्यैव ग्रहणम् आत्मवत् देवतावच्च बुद्धिर्भावना ॥ १०—१२ ॥

इदानीं वर्णधर्मान् वक्तुं द्विजानां लक्षणमाह—संस्कारा मन्त्रयुक्ता गर्भाधानादयो यस्मिन् स वा स द्विजः विच्छिन्नसंस्कारो द्विजबन्धुरित्यर्थः । अजो ब्रह्मा यं जगादेति ब्रह्मसृष्ट्यारम्भत एव प्रवृत्तायां द्विजजातौ विशुद्धमातापितृकं जन्मैव मुख्यं लक्षणमित्यर्थः ॥ १३ ॥

ब्राह्मणादीनां चतुर्णां वृत्तिरूपान् धर्मानाह—विप्रस्येति सार्द्धैः सप्तभिः । षट् विहितानीत्यनुषङ्गः । तत्र त्वध्यापनं याजनं प्रतिग्रहश्च जीविका । तथा च मनुः—

"षण्णान्तु कर्मणामस्य त्रीणि कर्माणि जीविका ।
याजनाध्यापने चैव विशुद्धाच्च प्रतिग्रहः" ॥ इति

अन्यस्य क्षत्रियस्य अप्रतिग्रह इति याजनाध्यापने आपद्वृत्ती प्रतिग्रहस्तस्यापद्यपि निषिद्धः प्रजागोप्तुरिति पाल्यमानाभिः प्रजाभिर्दत्तं प्रणत्युपायनमेव वृत्तिरित्यर्थः । विप्रभिन्नात् लोकात् करदण्डशुल्कादिभिर्वा ॥ १४ ॥

वार्ता कृषिवाणिज्यादयो वृत्तिर्यस्य सः द्विजशुश्रूषा धर्मः स्वामिनो द्विजस्य शुश्रूषा सेवा वृत्तिश्च ॥ १५ ॥

विप्रस्य वृत्यन्तराण्याह—वार्ता विचित्रा विविधा तत्र शालीनमयाचितं यायावरं प्रत्यहं धान्यमात्रयाञ्चा शिलं शालिक्षेत्रादौ स्वामित्यक्तकणिशोपादानं उञ्छनं आपणादिपतितकणोपादानम् ॥ १६ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः :

सन्तोषो न्यायागतेनान्नादिना ऽलंबुद्धिः आग्रेहोपरमः अधार्मिकजनचेष्टात्यागः विपर्ययेहा विपरीतफलासु चेष्टासु हेयहृष्टिः मौनं निष्फलभाषणत्यागः आत्मविमर्शनं देहेन्द्रियमनोबुद्धिभ्यः पृथक्भूतस्यात्मनो ऽनुसन्धानम् ॥ ९ ॥

तेषु भूतेषु आत्मवत् मानार्हत्वात् देवतावद्भगवद्धत् भगवदंशत्वात् बुद्धिर्भावना ॥ १० ॥

अस्य श्रीकृष्णस्य सेवा परिचर्या इत्याऽऽद्येनम् ॥ ११ ॥

नृणामित्युपलक्षणं तत्फलत्रस्यापि त्रिंशल्लक्षणवान् सत्यत्वादित्रिंशद्विभागवान् येन सर्वात्मा भगवान् तुष्टो भवति ॥१२॥

इदानीं वर्णधर्मान् वक्तुं द्विजलक्षणमाह—यमजो ब्रह्मा गायत्र्यादिना सृष्ट्वा जगाद द्विजकुलत्वेनोक्तवान् यत्रैव गर्भाधानादयः संस्काराः अविच्छिन्नाः स द्विजः ब्रह्मप्रवर्तितकुलजः संस्कारवान् द्विज इत्यर्थः । "गायत्र्या ब्राह्मणमसृजत् त्रिष्टुभा राजन्यं जगत्या वैश्यं न केनचिच्छूद्रम्" इति श्रुतिरत्रानुसन्धेया शूद्रकुले मंत्रपूर्वकं ब्रह्मणानप्रवर्तितमत एव शूद्रस्य द्विजातिसंस्काराभावाच्च द्विजत्वं "विवाहमात्रसंस्कारं शूद्रोऽपि लभतां सदा" "न केनचित् समसृजच्छन्दसा तं प्रजापतिः" इति श्रुतिः द्विजावश्यकान् धर्मान्[illegible]ज्येति । जन्मना ब्रह्मप्रवर्तितकुलोत्पत्त्या कर्मणा संस्कारेण [illegible]दातानां शुद्धानाम् आश्रमचोदिताः ब्रह्मचर्याद्याश्रमविहिताः ॥ १३ ॥

चतुर्णां वर्णानामावश्यकान् जीविकारूपांश्च धर्मानाह—विप्रस्येति, सार्द्धैः सप्तभिः । अध्ययनाध्यापनयजनयाजनदानप्रतिग्रहाः इत्यध्ययनादीनि षट् कर्माणि विप्रस्य, तत्राध्यापनयाजनप्रतिग्रहाश्च जीविकाः

"षण्णां तु कर्मणामस्य त्रीणि कर्माणि जीविकाः ।
याजनाध्यापने चैव विशुद्धाच्च प्रतिग्रहः" ॥ इति.

मनुवचनात् अन्यस्य क्षत्रियस्य अप्रतिग्रहः प्रतिग्रहाभावः अर्थात्प्रतिग्रहातिरिक्तानि अध्ययनाध्यापनयजनयाजनदानानीत्यर्थः ॥ १४ ॥

जघन्यो नोत्तमां वृत्तिमनापदि भजेन्नरः ।
ऋते राजन्यमापत्सु सर्वेषामपि सर्वशः ॥ १७ ॥
ऋतामृताभ्यां जीवेत मृतेन प्रमृतेन वा ।
सत्यानृताभ्यां जीवेत न श्ववृत्त्या कथञ्चन ॥ १८ ॥
ऋतमुञ्छशिलं प्रोक्तममृतं यदयाचितम् ।
मृतं तु नित्ययाञ्चा स्यात्प्रमृतं कर्षणं स्मृतम् ॥ १९ ॥
सत्यानृतं तु वाणिज्यं श्ववृत्तिर्नीचसेवनम् ।
वर्जयेत्तां सदा विप्रो राजन्यश्च जुगुप्सिताम् ।
सर्ववेदमयो विप्रः सर्वदेवमयो नृपः ॥ २० ॥

श्रीवच्छुकदेवकृतसिद्धान्तप्रदीपः ।

कृषिवाणिज्यादिरूपा वार्त्ता वृत्तिर्यस्य सः शूद्रस्य द्विजशुश्रूषा आवश्यको धर्म इत्यर्थः । स्वामिन अन्नादिदानेन नियतकैङ्कर्यकारित्वस्तु द्विजस्य शुश्रूषा वृत्तिर्जीविका भवेदित्यर्थः ॥१५॥

विप्रस्य जीविकान्तरमाह—वार्तेति । विचित्रा वार्त्ता कृष्यादिरूपा शालीनमयाचितग्रहणम् यायावरं भिक्षाटनम् शिलोञ्छनेति चतुर्धा ॥ १६ ॥

भाषा टीका ।

सन्तोष, समदर्शियों की सेवा, धीरे धीरे ग्राम्य चेष्टाओं से विराम, मनुष्यों की लौकिक चेष्टाओं को निष्फल देखना, मौन और आत्मा का विचार ॥ ९ ॥

हे पाण्डव ! और यथा योग्य प्राणी मात्र को अन्नादिका अच्छी तरह विभाग करना उन अतिथि प्रभृति प्राणियों में और मनुष्यों में निरन्तर दैवत बुद्धि करना ॥ १० ॥

आपने दैवत श्रीहरिके गुणोंका श्रवण और कीर्तन तथा महज्जनो के प्राप्य श्रीगोविन्दकी सेवा पूजा सार्वांगप्रणाम, दास भाव सख्य भाव, और आत्मसमर्पण, अर्थात् पञ्चरात्र शास्त्रोक्त भगवत्शरणागतिः ॥ ११ ॥

हे राजन् ! यह सर्व मनुष्यो का साधारण तीस (३०) लक्षण वाला धर्म कहा गया है सर्वात्मा श्रीनारायण इसी के आचारण से सन्तुष्ट होते है ॥ १२ ॥

और अविच्छिन्न अर्थात् परम्परासे संस्कार गर्भाधानादि निरन्तर जिनके यहां चले आते हैं और ये संस्कार ब्रह्माने जिस व्यक्तिके कहे हैं वेही द्विजहै । और द्विजन्माओं को अर्थात् ब्राह्मण क्षत्रिय और वैश्यको जोकि जन्मकर्म से शुद्ध है उनको इज्या ( यज्ञ करना ) अध्ययन ( वेदपढ़ना ) दान ( दान देना ) यह तीन कर्म वेद विहित है, और आश्रम के उचित जो क्रिया है वो भी विहित है ॥ १३ ॥

और ब्राह्मण को अध्ययनादिक छै ( ६ ) कर्म विहित है, वो छै ये हैं कि ( यजन याजन अध्ययन अध्यापन दान प्रतिग्रह) ब्राह्मण से अन्य को प्रतिग्रह ( दानलेना ) निषिद्ध है प्रजापालक राजा की जीविका यह है कि विप्र को छोड़कर और लोगों से षष्ठांश कर लेवे ॥ १४ ॥

वैश्य की जीविका वार्त्ता ( खेती, गोरक्षा, व्यापार, व्याज ) है । और सदा ब्राह्मण कुलके अनुगामी रहना यह वैश्य का धर्म है शूद्र को तीन वर्णों की शुश्रूषा करके जीविका करना यही शूद्र का धर्म है ॥ १५ ॥

खेती, १ ढिठाईके बिना, बिना मांगे मिलजावे; २ प्रतिदिन अन्न की भिक्षा, ३ ( शिल ) खेत में शिला बीनले, ऊंछ बाजार में दाना बीनले, ४ सब यह चार प्रकार की वृत्ति ब्राह्मण की है, इसमें उत्तरोत्तर श्रेष्ठ है ॥ १६ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

वृत्तिस्वेच्छ व्यवस्थां दर्शयन्नापद्वृत्तीराह—जघन्यो नीचः उत्तमामध्यापनादिरूपां ऋते राजन्यं क्षत्रियस्तु प्रतिग्रहादन्यां भजेत् ॥ १७ ॥

चतुर्विधां पूर्वोक्तां विप्रवृत्तिमितरेषामपि दर्शयन्नाह—ऋतामृताभ्यामिति ॥ १८ ॥

श्लोकं व्याचष्टे ऋतमिति ॥ १९ ॥

तयोस्तद्वर्जने हेतुमाह—सर्ववेदमय इति ॥ २० ॥

शमो दमस्तपः शौचं सन्तोषः क्षान्तिरार्जवम् ।
ज्ञानं दयाऽच्युतात्मत्वं सत्यं च ब्रह्मलक्षणम् ॥ २१ ॥
शौर्यं वीर्यं धृतिस्तेजस्त्याग आत्मजयः क्षमा ।
ब्रह्मण्यता प्रसादश्च रक्षा च क्षत्रलक्षणम् ॥ २२ ॥
देवगुर्वच्युते भक्तिस्त्रिवर्गपरिपोषणम् ।
आस्तिक्यमुद्यमो नित्यं नैपुण्यं वैश्यलक्षणम् ॥ २३ ॥
शूद्रस्य सन्नतिः शौचं सेवा स्वामिन्यमायया ।
अमन्त्रयज्ञो ह्यस्तेयं सत्यं गोविप्ररक्षणम् ॥ २४ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

वर्णानामभिव्यञ्जकरूपान्धर्मानाह—शम इति, चतुर्भिः । अच्युतात्मत्वं श्रीविष्णुपरत्वम् ॥ २१ ॥

शौर्यं युद्धोत्साहः वीर्यं प्रभावः तेजःप्रागल्भ्यम् त्यागो दानं आत्मनो मनसो जय ॥ २२ ॥ २३ ॥

अमन्त्रयज्ञः नमस्कारेणैव पञ्चयज्ञानुष्ठानं तथाच याज्ञवल्क्यः "नमस्कारेण मन्त्रेण पञ्चयज्ञान्नहापयेत्" इति ॥ २४ ॥

श्रीमद्वीरराघवाचार्य्यकृतभागवतचन्द्रचन्द्रिका ।

एवं विप्रस्य याजनाद्यलाभे वार्तादिरूपा वृत्तिस्तत्राप्युत्तरोत्तरोत्तमत्वं चोक्तम् अथोत्तरोत्तरवर्णस्य स्वस्ववृत्त्यलाभरूपापदि पूर्वपूर्ववर्णस्य चोत्तरोत्तरस्य वा वृत्त्याश्रयणं वक्तुं तावदनापदि तदाश्रयणं निषेधति—जघन्य इति । जघन्यवर्णो नरः अनापदि स्वस्ववृत्त्यलाभरूपापदभावे उत्तमां पूर्वपूर्ववर्णसम्बन्धिनीं वृत्तिं न भजेन्नाश्रयेत् आपत्सु तु राजन्यं विना राजन्यव्यतिरिक्तानां सर्वेषामपि यथालाभं सर्वा अपि वृत्तय आश्रयणीया भवन्ति सर्वेषां सर्वत्र इत्येतावदुक्तं राजन्यस्य प्रजापालनप्रयुक्तकरादानरूपस्ववृत्त्यलाभरूपापदि याजनाध्यापनप्रतिग्रहादिरूपपूर्ववर्णवृत्त्याश्रयणं वार्ताशुश्रूषणोत्तरवर्णवृत्त्योराश्रयणं प्रजकस्वृत्तेराजन्यमिति निषिध्यते ॥ १७ ॥

अथ विप्रराजन्ययोः स्वस्ववृत्त्यलाभरूपापदुपादेयां वृत्तिं निष्कृष्य दर्शयन्नुत्तरोत्तरवर्णसेवारूपां वृत्तिं प्रतिषेधति—ऋता मृताभ्यामिति । ऋतादन्यतमेन जीवेत श्ववृत्त्या तु कथञ्चन न जीवेत सर्वथा श्ववृत्तिं नाश्रयेदित्यर्थः ॥ १८ ॥

ऋतादिपदार्थानाह—वार्त्तेन ऋतमिति । स्पष्टोऽर्थः ॥ १९ ॥

न कथञ्चनेति व्याचष्टे—वर्जयेदिति । विप्रो राजन्यश्च तां नीचसेवां स्वोत्तरवर्णसेवां जुगुप्सितां निन्दितां परिवर्जयेत् जुगुप्सितत्वमेव वदन्विप्रराजन्यौ विशिनष्टि—सर्ववेदमय इति । प्राचुर्ये मयट् पूज्ययोः पूजकसेवानिन्दितेति भावः ॥ २० ॥

अथवर्णानामभिव्यञ्जकान् धर्मानाह—शम इति चतुर्भिः । शमादिपदार्थानामर्थास्त्रिशल्लक्षणधर्मव्याख्यायामुक्ताः । तत्र क्षान्तिरक्रोधः अच्युतात्मत्वमच्युतप्रवणचित्तत्वम् । शमादिकं ब्रह्मलक्षणं ब्राह्मणकुलाभिव्यञ्जकमित्यर्थः ॥ २१ ॥

शौर्यमिति । शौर्यादिक्षत्रलक्षणं क्षत्रियत्वाभिव्यञ्जकं तत्र शौर्यं स्वगृह इव युद्धे प्रवेशसामर्थ्यं वीर्यं परैरनभिभाव्यत्वं धृतिः धैर्यमापद्यदुःखित्वं तेजः पराभिभवसामर्थ्यं त्यागः लोभराहित्यदानशीलता आत्मजयो देहजयः देहधर्मैरनभिभाव्यत्वं क्षमा सहिष्णुता ब्रह्मण्यता ब्राह्मणकुलानुवृत्तिः प्रसादोऽनुग्रहः रक्षा प्रजापालनम् ॥ २२ ॥

एवं देवादिभक्त्यादिकं वैश्यलक्षणं तत्र देवगुर्वार्य्यगोभक्तिः देवाश्च गुरवश्चार्या ज्ञानवृद्धा गावश्चैषां भक्तिः त्रिवर्गस्य धर्मादिपुरुषार्थत्रयेण परितोषणं परितुष्टिः अस्ति परलोक इति मतिर्यस्य सः आस्तिकस्तस्य भाव आस्तिक्यं नित्यमुद्यमः अर्थार्जने प्रयत्नः तत्र नैपुण्यम् ॥ २३ ॥

शूद्रस्य सन्नत्यादिकं लक्षणमित्यनुषङ्गः । सन्नतिः पूर्ववर्णविषये नम्रता. शौचं स्नानादिजं स्वस्वामिन्यमायया निष्कपटभावेन सेवा. अमन्त्रयज्ञः नमस्कारेणैव यज्ञानुष्ठानम्. तथाच याज्ञवल्क्यः "नमस्कारेण मन्त्रेण पञ्च यज्ञान्नहापयेत्" इति. अस्तेयमचौर्यं सत्यमनृतावदनं गवां विप्राणाञ्च रक्षणम् ॥ २४ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

तदभावे शूद्रस्य कथमिति तत्राह—जघन्य इति । जघन्यो नरः शूद्रोऽनापदि तत्सद्भावे उत्तमां वृत्तिं तत्त्वज्ञानलक्षणां न भजेन्न कुर्यादित्यन्वयः । आपदि तदभावे तदनुज्ञया कुर्यादित्यतो नापदीति विशेषणं पालनादि वृत्तिं वा । ननु, वर्णहीनस्य कथमित्यस्येदमेवोत्तरं जघन्यो वर्णहीनो नापद्यप्युत्तमां वृत्तिं न भजेत "वर्णोत्कर्षेषु वर्णस्तु न ज्ञानी स्यात् कथञ्चन" इति श्रुतिः ।

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

राजानं विना सर्वेषां विप्रादीनामापद्युक्तसर्ववृत्तिभिर्जीवने दोषो नास्तीत्याह—ऋते राजन्यमिति ॥ १७ ॥

ऋतादीनामप्रतीतार्थत्वाद्व्याचष्टे—ऋतमित्यादिना । कर्षणम् कृषि ॥ १८ ॥ १९ ॥

श्ववृत्तिवर्जनेहेतुमाह–सर्वेति । "सर्वा देवता वेदविदि ब्राह्मणे वसन्ति" इति श्रुतेः नाविष्णुः पृथिवीपतिरित्यादेश्च ॥ २० ॥

विप्रादीनां विनिश्चय ज्ञाने प्रथमं लक्षणमाह—शम इत्यादिना । अच्युतात्मत्वमच्युतमनस्कत्वम् ॥ २१ ॥

त्यागो दातव्ये मुक्तहस्तता आत्मजयो मनोजयः ॥ २२ ॥

त्रिवर्गैर्धर्मार्थकामैः ईश्वरपरितोषणं त्रयो वर्गा येषां ते त्रिवर्गाः तेषां द्रव्यादिना परितोषणम् ॥ २३ ॥

शूद्रस्यांततः सकृत्स्पृष्टाभिरद्भिराचमनलक्षणं शौचं "हृत्कण्ठतालुगाभिस्तु यथासंख्य द्विजातयः । शुध्येरन् स्त्री च शूद्रश्च सकृत्स्पृष्टाभिरन्ततः" इति वचनात् कण्ठस्पर्शमात्रमनुशोचनम्... ॥ २४ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

आपद्वृत्तीराह—जघन्यो नीचः उत्तमां अध्ययनादिरूपां ऋते राजन्यं क्षत्रियं तु प्रतिग्रहादन्यां भजेत् ॥ १७ ॥

विप्रवृत्तीर्वैश्यवृत्तीश्च काश्चित् सर्वेषामप्यापद्यनुजानीते ऋता मृताभ्यामिति ॥ १८ ॥

श्लोकमिमं व्याचष्टे ऋतमिति सार्द्धेन ॥ १९ ॥

तयोस्तद्वर्जने हेतुमाह—सर्वेति । तेन वैश्यशूद्रयोः नीचसेवयाप्यापदि न तावान् दोष इति भावः ॥ २० ॥

वर्णानामभिव्यंजकानि लक्षणान्याह–शम इति चतुर्भिः । अच्युतात्मत्वं विष्णुतनस्कत्वम् ॥ २१—२४ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

जघन्यः कनिष्ठवर्णः उत्तमां श्रेष्ठवर्णोचितामनापदि न भजेत् ऋते राजन्यं स तु अनापद्यपि उत्तमामपि याजनरूपामध्यापनरूपां च भजतित्यर्थः आपत्सु तु यथोक्तवृत्त्यलाभे सर्वेषां सर्वशो वृत्तयः ॥ १७ ॥

पूर्वोक्ताश्चतुर्विधा विप्रवृत्तयो ऽन्यैरपि ग्राह्याः श्वापेक्षया नीचसेवा तु न कर्त्तव्या विप्रराजन्याभ्यां तु विशेषतो नीचसेवा वर्ज्यैत्याह–ऋतामृताभ्यामित्यादि सार्द्धैस्त्रिभिः ॥१८—२०॥

वर्णानां लक्षणान्याह शम इति चतुर्भिः । अच्युतात्मत्वं विष्णुमनस्कत्वम् ॥ २१ ॥

शौर्यं न्यायप्राप्तयुद्धोत्साहः वीर्यं प्रभावः तेजःप्रागल्भ्यम् त्यागः उदारत्वम् आत्मजयो जितमनस्कत्वम् प्रसादः प्रसन्नता ॥ २२ ॥

आस्तिक्यं श्रद्धा उद्यमो ऽनालस्यम् ॥ २३ ॥

शूद्रस्य सत्यादिकम् लक्षणमिति शेष' अमायया निष्कापट्येन अमन्त्रयज्ञः नमस्कारेण पञ्चयज्ञानुष्ठानम् तथाच याज्ञवल्क्यः "नमस्कारेण मन्त्रेण पञ्चयज्ञान्नहापयेत्" इति ॥ २४ ॥

---

भाषा टीका ।

नीचवर्ण ऊंचे वर्ण की वृत्तिको अनापदकाल में न करे एक क्षत्रिय को छोडकर अध्ययनादिमात्र ब्राह्मण की वृत्ति करले, आपद के विनादूसरेकी वृत्ति न करे यह तात्पर्य है सो आपदमेंभी श्व को छोडकर सब कोई सब की वृत्ति करे ॥ १७ ॥

ऋत अमृत मृत प्रमृत इन चारो से अपना जीवन करे अथवा सत्याऽनृत से जीवै परञ्च श्ववृत्ति से कदापि जीवन न करे ॥ १८ ॥

ऋत, यह उंछ शिल का नाम है । अमृत, यह विना मागे जो मिले उसकानाम है । मृत, यह नित्य भीख मागे से जो अमृत, यह खेती से प्राप्त किये का नाम है ॥ १९ ॥

सत्या नृत, यह वाणिज्य का नाम है । श्ववृत्ति, यह नीच सेवा का नाम है। ब्राह्मण और क्षत्रिय इस निन्दित वृत्ति को सर्वदा वर्जन करे क्योंकि ? वि सर्वदेव मय है, और राजा सर्व देव मय है ॥ २० ॥

शम, दम, तप, शौच, संन्तोष, क्षान्ति, ( सीधापन ) ज्ञान, दया, और गोविन्द में चित्त लगाना, सत्य बोलना, ये ब्राह्मण के लक्षण है ॥ २१ ॥

शूरता, वीरता, धृति, तेज, त्याग, मनका जीतना, क्षमा, ब्राह्मणोंकी भक्ति, प्रसन्नता, और सर्व वर्ण कीरक्षा यह क्षत्रिय का लक्षण है ॥ २२ ॥

देव गुरु गोविन्द में भक्ति, अर्थ धर्म काम की पुष्टि आस्तिक होना, नित्य उद्यम करना, और निपुणता यह वैश्य का लक्षण है, ॥ २३ ॥

नम्ररहना, शुद्ध रहना, निष्कपट स्वामिकी सेवा करना, विना मंत्र के यज्ञ करना चोरी न करना सत्य बोलना, गो-विप्र की रक्षा करना ये शूद्रके लक्षण हैं ॥ २४ ॥

स्त्रीणां च पतिदेवानां तच्छुश्रूषाऽनुकूलता।
तद्बन्धुष्वनुवृत्तिश्च नित्यं तद्व्रतधारणम् ॥ २५ ॥
सम्मार्जनोपलेपाभ्यां गृहमण्डनवर्त्तनैः।
स्वयं च मण्डिता नित्यं परिमृष्टपरिच्छदा ॥ २६ ॥
कामैरुच्चावचैः साध्वी प्रश्रयेण दमेन च।
वाक्यैः सत्यैः प्रियैः प्रेम्णा कालेकाले भजेत् पतिम् ॥ २७ ॥
सन्तुष्टाऽलोलुपा दक्षा धर्मज्ञा प्रियसत्यवाक्।
अप्रमत्ता शुचिः स्निग्धा पतिं त्वपतितं भजेत् ॥ २८ ॥
या पतिं हरिभावेन भजेच्छ्रीरिव तत्परा।
हर्यात्मना हरेर्लोके पत्या श्रीरिव मोदते ॥ २९ ॥
वृत्तिः सङ्करजातीनां तत्तत्कुलकृता भवेत्।
अचौराणामपापानामन्त्यजान्तेऽवसायिनाम् ॥ ३० ॥
प्रायः स्वभावविहितो नृणां धर्मो युगेयुगे।
वेददृग्भिः स्मृतो राजन्! प्रेत्य चेह च शर्मकृत् ॥ ३१ ॥
वृत्त्या स्वभावकृतया वर्त्तमानः स्वकर्मकृत्।
हित्वा स्वभावजं कर्म शनैर्निर्गुणतामियात् ॥ ३२ ॥

श्रीधरस्वामिकृतभावार्थदीपिका।

स्त्रीधर्मानाह-स्त्रीणामिति, पञ्चभिः। पतिरेव देवो यासाम्, तस्य पत्युरेव शुश्रूषा पादसंवाहनादिभिः तदनुकूलता च हिताचरणं तस्य यद्व्रतं नियमस्तस्य धारणमाचरणं एतच्चतुष्टयं पतिव्रतानां लक्षणं धर्मश्च ॥ २५ ॥

किञ्च सम्मार्जनोपलेपाभ्यामित्यादेः पतिं भजेदित्युत्तरेणान्वयः परिमृष्टा उद्वर्तनादिना निर्मलीकृताः परिच्छदा गृहोपकरणानि यया ॥ २६ ॥ २७ ॥

किञ्च सन्तुष्टा यथालाभेन तावन्मात्रभोगे ऽप्यलोलुपा दक्षा अनलसा प्रिया सत्या च वाग्यस्याः सर्वत्राप्यप्रमत्ता ऽत्रहिता अपतितं महापातकशून्यम्, यथाह, याज्ञवल्क्यः"आशुद्धेः सम्प्रतीक्ष्यो हि महापातकदूषितः" इति ॥ २८ ॥

तत्परा सती भजेत् श्रीर्हरिमिव हर्यात्मना पत्या सह ॥ २९ ॥

प्रतिलोमजानुलोमजानां वृत्तिमाह—वृत्तिरिति। तत्तत्कुलकृता कुलपरम्पराप्राप्ता परम्पराप्राप्तमपि चौर्यं हिंसादिकं च प्रतिषेधति, अचौराणामपापानां चेति तत्तत्प्रदर्शनार्थं कांश्चित्प्रतिलोमजविशेषानाह-अन्त्यजेति"रजकश्चर्मकारश्च नटो बुरुड एव च। कैवर्त्तमेदभिल्लाश्च सप्तैते अन्त्यजाः स्मृताः" अन्तेऽवसायिनस्तु चण्डालपुल्कसमातङ्गादयः तेषां परम्पराप्राप्तैव वस्त्रनिर्णेजनादिवृत्तिरित्यर्थः ॥ ३० ॥

यद्यादपि परधर्मात् नीचोऽपि स्वधर्म एव श्रेयानित्याह-प्राय इति, स्वभावेन सत्त्वादिप्रकृत्या विहितो धर्मः शर्मकृत्सुखहेतुः स्मृतः कैः वेदा एव दृक् चक्षुर्येषां तैः भगवता चोक्तम्"श्रेयान्स्वधर्मो विगुणः परधर्मात्स्वनुष्ठितात्" इति ॥ ३१ ॥

ननु, स्वाभाविकस्य कर्मणो बन्धहेतुत्वात्कथं सुखहेतुत्वं तत्राऽऽह-वृत्त्येति ॥ ३२ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

अथ स्त्रीणां धर्मानाह—स्त्रीणामिति। पतिरेव देवो दैवतं यासां तासां स्त्रीणाम्. तस्य पत्युः शुश्रूषा परिचर्या तदनुकूलता च तस्य पत्युर्बन्धुषु पितृभ्रात्रादिषु अनुवृत्तिः तस्य तु यद्व्रतं पत्यर्थं यो नियमस्तस्य धारणमेतच्चतुष्टयं पतिदेवतानां पतिव्रतानां स्त्रीणां लक्षणं धर्मश्चेत्यर्थः ॥ २५ ॥

किञ्च संमार्जनोपलेपाभ्यां गृहस्येति शेषः। गृहसंमार्जनादिभिः पतिं भजेदित्युत्तरेणान्वयः। सेकः जलविक्षेपः मण्डनं पिष्टरलङ्कारः

श्रीमद्वीरराघवाचार्य्यकृतभागवतचन्द्रचन्द्रिका ।

वर्त्तनं नित्यं स्वगृह एवावस्थानम् एतैः कथंभूता स्वयं मण्डिता अलंकृता परिमृष्टाः विशोधिताः परिच्छदाः पात्रवस्त्रभूषणादयो यया तादृशी ॥ २६ ॥

उच्चावचैर्नानाविधैः पत्युरपेक्षितैः कामैः प्रश्रयेण विनयेन दमेन उपशान्त्या सत्यैः प्रियैश्च वाक्यैः प्रेम्णा च कालेकाले उचितसमये उचितकामेषु सन्तुष्टा यथालाभेन तावन्मात्रभोगेऽप्यलोलुपा दक्षाऽनलसा धर्मज्ञा भर्तृशुश्रूषणमेव परं धर्मं जानातीति प्रिया तथोक्ता सत्या च वाग्यस्याः सा वाक्यैः सत्यैरिति पतिविषये सत्यवाक्यमुक्तम् प्रियसत्यवागित्यनेन तदितरविषयेऽपीत्यतो न पौनरुक्त्यम् ॥ २७ ॥

सर्वत्राप्यप्रमत्ता अवहिता शुचिः परिशुद्धा स्निग्धा अनुरक्ता पति भजेदपतितं महापातकरहितं पतिं भजेत् तु शब्देन पतितं न भजेदिति सूचितम्. यदाह, याज्ञवल्क्यः "आशुद्धेः संप्रतीक्ष्यो हि महापातकदूषितः" इति ॥ २८ ॥

एवंविधस्य भर्तृभजनस्य फलमाह–येति । श्रीलक्ष्मीर्हरिमिव या स्त्री हरिभावेन तत्परा स पतिरेव परो दैवतं यस्याः सा पतिं भजेत् सा हर्य्यात्मना हरिरूपेण हरिसमानरूपेण पत्यासह श्रीर्हरिणा सहैव हरेर्लोके मोदते शनैः पत्या सह मुक्ता भवेदित्यर्थः ॥ २९ ॥

अथ सङ्करजातीनां वृत्तिमाह–वृत्तिरिति । सङ्करजातयः प्रतिलोमजाः अनुलोमजाश्चेति द्विविधाः तत्रोत्तरवर्णात्पूर्ववर्णायां स्त्रियां जाताः प्रतिलोमजाः पूर्ववर्णादुत्तरवर्णायां जातास्त्वनुलोमजाः तेषां तत्कुलकृता कुलपरम्पराप्राप्तैव वृत्तिर्भवेदिति. कुलक्रमागतमपि चौर्यहिंसादिकं निषेधन् तान्विशिनष्टि–अचोराणामपापानाञ्चेति । तत्र प्रदर्शनार्थं कांश्चित्प्रतिलोमजविशेषानाह–अन्त्यजाश्चान्तेवसायिनश्च तेषां सङ्करजातीनामित्यन्वयः तत्र—

"रजकश्चर्मकारश्च नटोबुरुडएव च ।
कैवर्त्तमेदभिल्लाश्च सप्तैते अन्त्यजातयः" ॥

अन्तेऽवसायिनस्तु चण्डालपुल्कसमातङ्गादयः तेषां परम्पराप्राप्तैव वस्त्रनिर्णेजनादिवृत्तिरित्यर्थः ॥ ३० ॥

"श्रेयान् स्वधर्मो विगुणः परधर्मात् स्वनुष्ठितात्" इति भगवदुक्तमर्थमाह–प्रायइति, द्वाभ्याम् । हे राजन् ! नृणां ब्रह्मक्षत्रादिरूपेणावस्थितानां सर्वेषामपि प्रायशः स्वभावविहितः सात्त्विकादिस्वभावानुसारेण विहितः । यद्वा भावः प्रकारः वर्णाश्रमादिरूपः स्वस्ववर्णाश्रमोद्देशेन विहित इत्यर्थः । इज्याऽध्ययनादिरूपः स एव धर्म इह लोके प्रेत्याऽमुत्र च लोके शर्मकृत् सुखकृद्वेदभिर्मन्वादिभिः स्मृतः कथितः ॥ ३१ ॥

एवं वृत्तिरपि प्रातिस्विकीज्यायसीति वदन्नेवंवर्त्तमानस्य फलमाह–वृत्त्येति, स्वभावकृतया वर्णाश्रमादिस्वभावकृतया वृत्त्या अध्यापनादिरूपया जीविकया स्वकर्मणेज्यादिरूपे वर्त्तमानः स्वस्वकर्मानुतिष्ठन् स्वभावजं सात्त्विकादिस्वभावप्रयुक्तं प्राकृतसत्त्वादिगुणावश्यताप्रयुक्तं बन्धकं पुण्यपापात्मकं कर्म हित्वा "धर्मेण पापमपनुदत्यविद्यया मृत्युं तीर्त्वा" इत्यादि श्रुत्यर्थोऽत्राभिसंहितः शनैर्निर्गुणतां सत्त्वादिगुणराहित्यं प्रकृतिसम्बन्धराहित्यं मुक्तिमितियावत् इयात् प्राप्नुयादिति शनैरित्यस्य भगवदुपासननिर्वृत्तिद्वारा प्राप्नुयादित्याशयः ॥ ३२ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

स्त्रीणां सामान्यलक्षणमाह–स्त्रीणामिति । अनुकूलतोक्तकारित्वं "यत्रानुकूल्यं दंपत्योस्त्रिवर्गस्तत्रवर्द्धते । स्त्रीभिर्भर्तृवचः कार्यमेष धर्मः परं स्त्रियः" इति वचनात् तद्बन्धुषु भर्तृबन्धुषु भागिनेयादिषु तद्व्रतधारणं पातिव्रत्यं तस्य यद्व्रतं तदेवास्या व्रतमिति वा ॥२५॥

गृहमण्डनवर्तनैर्गृहालङ्कारकरणैः ॥ २६ ॥

कामैर्विषयैः ॥ २७ ॥

अलोलुपा अयोग्याऽभिलाषरहिता अपतितं ब्रह्महत्यादिपातकरहितम् ॥ २८ ॥

अस्मिन् पत्यौ हरिः सन्निहित इति या बुद्धिः स हरिभावः "हरिरस्मिन् स्थित इति स्त्रीणां भर्तरि भावना । शिष्याणाञ्च गुरौ नित्यं शूद्राणां ब्राह्मणादिषु ॥ भृत्यानां स्वामिनि तथा हरिभाव इतीरितः" इतिवचनात्तयोरैक्यार्थः हर्यात्मना हरेर्विशेषसन्निधानवता पत्या सह ॥ २९ ॥

क्षत्रियाद्विप्रस्त्रीसूतानां विप्रात् क्षत्रियस्त्रीजातानां क्षत्रियाद्वैश्यस्त्रीसूतानां वैश्याच्छूद्रस्त्रीसूतानामित्येवं जातानां का वृत्तिरिति तत्राह,येषां जातिविशेषाः अम्बष्ठनिषादपारशवादिनाम्ना ज्ञातव्याः तदुक्तं विप्रान्मूर्द्धावसिक्तास्त्री राज्ञोऽम्बष्ठविशोऽङ्गना"इत्यादि अध्ययनमन्तरेणाम्बष्ठादीनां संस्कारादिकं तत्कुलानुकूल्येन तेषां गुणमाह, अचौराणामिति. यद्य यस्याविहितं तत्करणं चौर्यं तद्रहितं शूद्राद्ब्राह्मण्यां जाता अन्त्यजाः रजकादिसप्त कारवस्ततो जाता अन्तेऽवसायिनः पुल्कसमातङ्गादयः येषां तत्कुलविहित एव धर्मः "ब्राह्मण्यां क्षत्रियात्सूतो वैश्याद्वैदेहिकस्तथा । शूद्राज्जातस्तु चण्डालः सर्ववर्णविगर्हितः" इति च ॥ ३० ॥

तत्तद्वर्णैस्तत्तत्स्वभावेनानुष्ठितस्य धर्मस्य फलमाह–प्रायइति, सात्त्विकादिस्वभावानुसा[illegible] ब्राह्मणानां विहितः अत्रप्रमाणमाह, वेदेति स्मृतो ग्रन्थस्वरूपेण कृतः प्रेत्य परलोके "नाश्रमः कारणं धर्मे क्रियमाणो भवेद्धि सः ॥ अतो यदात्मनः पथ्यं परस्य न तदा चरेत्॥ सर्वधर्मान्परित्यज्य मामेकं शरणं व्रज"इत्यादिवचनात् भक्त्युपबृंहितस्य धर्मस्यापिचिताशेषपुरुषार्थहेतुत्वं न केवलस्येत्यभिप्रायेण प्राय इत्युक्तम्. तत्र तत्तद्विशेषणावर्णने ग्रन्थबाहुल्यं स्यादित्युपरम्यते ॥ ३१ ॥

न केवलमनेन धर्मेण स्वर्गादिप्राप्तिरपि तु भक्त्यादिसाधनपूर्णेन मुक्तिरपि स्यादित्याह–वृत्त्येति । स्वभावेन स्वात्मना कृतया प्रेरितया सात्त्विकादिस्वभावपूर्णया वा [illegible]त्या जडलक्षणया भक्त्या वा योग्यतया स्वाविहितकर्मणा वर्तमानः पुरुषः शनैःशनैर्बहूनां जन्मनामन्ते स्वभावजं कर्म पुण्यपा[illegible]णं मुक्त्वा निर्गुणतां मुक्तिम्. "यदेव विद्यया करोति श्रद्धय[illegible]निषदा तदेव वीर्यवत्तरं

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

भवति" इति श्रुतेः। ज्ञानपूर्वकमनुष्ठितो नित्यानन्दाविर्भावलक्षण-पुरुषार्थस्य हेतुः यदप्यनेवंविन्महत्पुण्यं कर्मकरोति "तद्धस्यान्ततः क्षीयत एव" इति श्रुतेः तत्त्वज्ञानपूर्वकं भगवद्भक्तप्रद्वेषोपरक्तः प्रवृद्धो-धर्मो नित्यदुःखाविर्भावलक्षणपुरुषार्थस्य त्रैविद्या मां सोमपाः पूत-पापा यज्ञैरिष्ट्वा स्वर्गतिं प्रार्थयन्त इत्यादि नित्यं प्रार्थनादिगुणो-परक्तो नित्यसत्त्वगुणानिमित्तसुखलक्षणस्येत्यादि ॥ ३२ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

साध्वीनां लक्षणानि धर्मांश्चाह—स्त्रीणामिति, पञ्चभिः। पति-रेव देवः पूज्यो यासाम् ॥ २५—२८ ॥

हर्य्यात्मना पत्या सह ॥ २९ ॥

अनुलोमप्रतिलोमजानां वृत्तिमाह—वृत्तिरिति। कुलकृता कुल-परम्पराप्राप्ता यथा नापितरजकादीनां मुण्डनवस्त्रनिर्णेजनादिका अपापानामिति कुलपरम्पराप्राप्तमदिरापानविधवाविवाहादिपा-पवतां पापाभाव उक्तः। चौर्य्यं तु तेषामपि प्रतिषिद्धमित्याह-अचौराणामिति। अचौरत्वे सत्त्वे सत्येव वृत्तिः कुलकृता विहिता पापाभावश्चोक्त इति भावः। तत्र प्रदर्शनार्थं कांश्चित् प्रतिलोमज विशेषानाह-अन्त्यजेति-

"रजकश्चर्मकारश्च नटो बुरुड एवच।
कैवर्त्तमेदभिल्लाश्च सप्तैते अन्त्यजाः स्मृताः" ॥

अन्तेऽवसायिनस्तु चाण्डालादयः ॥ ३० ॥

श्रेष्ठादपि परधर्मान्नीचोऽपि स्वधर्मः श्रेयानित्याह-प्राय इति। वेददृग्भिर्वेदज्ञैः शर्मकृत् सुखहेतुः स्मृतः भगवता चोक्तम्. "श्रेयान् स्वधर्मो विगुणः परधर्मात्स्वनुष्ठितात् इति प्रायग्रहणात् दुर्जातीनां दुराचारत्यागस्तु नाशर्मकृत् ॥ ३१ ॥

शनैर्बहुजन्मान्त एव। यदुक्तम्. "स्वधर्मनिष्ठः शतजन्मभिः पुमान् विरिञ्चितामेति" इत्यादि ॥ ३२ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

अथ स्त्रीधर्मानाह-स्त्रीणामिति, पञ्चभिः। पतिरेव देवः पूज्यो यासां तासाम् तस्य पत्युः शुश्रूषा सेवा अनुकूलता तच्चित्तानु-सारित्वं तस्य यद्व्रतं नियमस्तस्यनित्यं धारणमिति लक्षण-मिति शेषः ॥ २५ ॥

किञ्च संमार्जनादिभिः पतिं भजेदित्यग्रिमेणान्वयः ॥२६-२७॥

किञ्च अलोलुपेति छेदः स्निग्धा प्रीतिमती अपतितं भजेत् महापातकी तु आशुद्धेः परिहार्यः तथाह-याज्ञवल्क्यः "आशुद्धेः संपरीक्ष्यो हि महापातकदूषितः" इति ॥ २८ ॥

हरिरात्मा आश्रयो यस्य तेन पत्या सह ॥ २९ ॥

अन्त्यजान्तेवसायिनाम् अन्त्यजान्तेऽवसायिप्रभृतीनां सङ्करजा-तीनां प्रतिलोमजानां तत्तत्कुलकृता तत्तत्परम्पराप्राप्ता वस्त्रनिर्णे-जनादिरूपा वृत्तिर्भवेदिति परम्पराप्राप्तमपि चौर्यहिंसादिकं त्याज्य-मित्याशयेनाह-अचौराणामपापानामिति। तत्रान्त्यजाः "रजकश्च-र्मकारश्च नटो वरुड एव च। कैवर्त्तो मेदभिल्लाश्च सप्तैते ह्यन्त्यजाः स्मृताः" अन्तेऽवसायिनस्तु चाण्डालपुक्कसमातङ्गादयः ॥ ३० ॥

वेददृग्भिः वेदविद्भिः मन्वादिभिः स्वभावतः वर्णादिभावा-नुसारेण विहितो ऽनुज्ञातः नृणां धर्मः इह प्रेत्य च शर्मकृत्सुखदः स्मृतः तथा च स्मृतिः "श्रेयान्स्वधर्मो विगुणः परधर्मो भयावह." इति ॥ ३१ ॥

निर्गुणतां गुणातीतताम् ॥ ३२ ॥

---

भाषा टीका।

और स्त्रियों के लक्षण ( धर्म ) यही है कि पति को देवता के सदृश माने, और उसकी शुश्रूषा करे, पति के अनुकूल रहे और पति के बन्धुवर्गों का अनुवर्त्तन करे, तथा नित्य पति ही के व्रत को धारण करे ॥ २५ ॥

सम्मार्जन ( झाड़ूलगाना ) उपलेप ( लीपनापोतना ) और से मण्डलवर्त्तन ( चौकपूरने ) से गृह को मण्डित ( भूषित ) रखे और नित्य आप भी अपने उपकरणों से स्वयं भूषित रहे ॥ २६ ॥

सुशीला स्त्री घर के ऊंचे नीचे सर्व कामों से नम्रता से इन्द्रियों के जीतने से तथा सत्य और प्रिय वाक्यों से प्रेम से समय २ पर पति की सेवा करे ॥ २७ ॥

सदा सन्तोष राखे भोगों मे लोलुपता छोडे, चतुराई रखे साची मीठी वाणी बोले, प्रमाद छोडकर शुद्धरहे और स्नेहवाली होकर पति को भजे यदि पति पतित न होवै तो ॥२८॥

जो स्त्री लक्ष्मी के नाई पति को हरि की भावना से भज-ती है, वह हरिलोक में हरि स्वरूप अपने पति के साथ लक्ष्मी के तरह मोद को प्राप्त होती है ॥ २९ ॥

रजक आदि सङ्कर जाति लोग, तथा अन्त्यज वर्ण बाह्य लोग अपने२ कुलोचित जीविका करे चोरी और हिंसा को छोड कर, ॥ ३० ॥

प्राय करके मनुष्यों का युग २ में वेद द्रष्टाओं ने स्वभाव वि-हित धर्म ही कहा है वही इस लोक और पर लोक मे सुख करने वाला है ॥ ३१ ॥

अपने स्वभाव से प्राप्तवृत्ति से अपने कर्म को करता हुआ वर्त्तमान रहे, कालांतर में धीरें २ स्वभाव से जायमान कर्म को भी छोडकर, अर्थात् कर्म करता हुआ भी परमात्मा में समर्पण कर निर्गुणता को प्राप्त हो जावे, अर्थात् गुणकर्म कृत बन्धन से छूट जावे ॥ ३२ ॥

---

उप्यमानं बहु क्षेत्रं स्वयं निर्वीर्यतामियात् ।
न कल्पतो पुनः सूत्या उप्तं बीजं च नश्यति ॥ ३३ ॥
एवं कामाशयं चित्त कामानामतिसेवया ।
विरज्येत यथा राजन्नाग्निवत्कामबिन्दुभिः ॥ ३४ ॥
यस्य यल्लक्षणं प्रोक्तं पुंसो वर्णाभिव्यञ्जकम् ।
यदन्यत्रापि दृश्येत तत्तेनैव विनिर्दिशेत् ॥ ३५ ॥

इति श्रीमद्भागवते महापुराणे सप्तमस्कन्धे पारमहंस्यां संहितायाम्
वैयासिक्यां युधिष्ठिरनारदसंवादे सदाचारनिर्णयोनाम
एकादशोऽध्यायः ॥ ११ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

ननु, काम्यानि कर्माणि कुर्वतस्तत्फलभोगपरस्य कथं नैर्गुण्यं स्यात्? तदुक्तं प्रह्लादेन "औपस्थ्यजैह्व्यं बहुमन्यमानः कथं विरज्येत दुरन्तमोहः" इत्यादि तत्राधिकारिभेदेन व्यवस्थां सदृष्टान्तमाह—उप्यमानमिति द्वाभ्याम्, पुनः सूत्यै सस्यप्रसवाय ॥ ३३ ॥

कामा आशेरते वासनारूपेण यस्मिंस्तत् । अयम्भावः उत्कट-वासनाविष्टस्य सहसैव कामत्यागासम्भवाद्धर्मोक्तनियमेन बहुशः कामान् भुञ्जानस्यैव नित्यनैमित्तिकैर्विशुद्धचेतसस्तद्दोषदर्शनेन ययातिसौभरिप्रमुखानामिव शनैर्विरागो भवति यथा स वीर्यं क्षेत्रं शनैर्निर्वीर्यं भवति यथाच प्रज्वलितोऽग्निर्न घृतबिन्दुभिः शाम्यति महता तु घृतपूरेण शाम्यत्येव तद्वत् प्रह्लादकस्तुतौ कौमार एव निवृत्त्युपदेशो मन्दवासनानामधिकारेण । तदुक्तं तत्रैव "बालानदूषितधियः द्वन्द्वारामैरितेहितैः" इति अतः सर्वमनवद्यम् ॥ ३४ ॥

शमादिभिरेव ब्राह्मणादिव्यवहारो मुख्यो न जातिमात्रादित्याह–यस्येति । यद्यदि अन्यत्र वर्णान्तरेऽपि दृश्येत तद्वर्णान्तरं तेनैव लक्षणनिमित्तेनैव वर्णेन विनिर्दिशेत् न तज्जातिनिमित्तेनेत्यर्थः ॥ ३५ ॥

इति श्रीमद्भागवते महापुराणे सप्तमस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिकायाम्
एकादशोऽध्यायः ॥ ११ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

ननु स्वभावकृतया वृत्त्या स्वकर्माणि वर्तमानस्य पुनःकामक्रोधादिवर्द्धकबन्धककर्मसम्भावनया कथं नैर्गुण्यप्राप्तिरिति शङ्कां निराकर्तुं गृहस्थस्य ज्ञानवैराग्यवतः शास्त्राविरुद्धान्नपानादिसेवया रागवर्द्धकत्वाभवे तावद्दृष्टान्तमाह–उप्यमानमिति । यथा मुहुर्मुहुरुप्यमानं क्षेत्रं निर्वीर्यतामसारतां प्राप्नुयात्पुनः सूत्यै सस्यप्रसवाय न कल्पते न समर्थमत एव उप्तं बीजं च नश्यति ॥ ३३ ॥

तथा कामानामाशयमाश्रय चित्तं पुनः कामानामतीव सेवया विरज्येत नाग्निवदिति घृतबिन्दुभिरग्निरिव न वर्द्धेत इत्यर्थः यथा प्रज्वलितोऽग्निः घृतबिन्दुभिर्न शाम्यति किन्तु महता घृतपूरेण, तथा चित्तं कामलेशैर्न शाम्यति महद्भिः कामैरित्यर्थः ॥ ३४ ॥

शमादिभिरेव ब्राह्मणादिव्यवहारो मुख्यो न जातिमात्रादित्याह—यस्येति । यस्य पुंसो यल्लक्षणं वर्णाभिव्यञ्जकं प्रोक्तं "शमो दमस्तपः" इत्यादिना तच्चेत् यद्यन्यत्रापि वर्णान्तरेऽपि दृश्येत तर्हि तद्वर्णान्तरं तेनैव लक्षणनिमित्तेनैव वर्णेन निर्दिशेत्, न जातिनिमित्तेनेत्यर्थः ॥ ३५ ॥

इति श्रीमद्भागवते महापुराणे सप्तमस्कन्धे
श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायाम्
एकादशोऽध्यायः ॥ ११ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

ननु सगुणो धर्मः सगुणपुरुषार्थहेतुर्भवत्यनुकूलत्वान्निर्गुणपुरुषार्थस्य कथं विरुद्धत्वादित्याशंक्य मनो हि पुरुषार्थकारणं तद्विषयोपरक्तं दुःखोदर्कविषयसुखाय स्यात्सदैव विषयाणां क्षणभङ्गुराणां दुःखोदर्काणां दुःसाधनत्वचिन्तया वैराग्यानलभर्जितं पुनस्तदंकुरीभावासमर्थं भगवच्चरणारविन्दभक्तिसलिलसिक्तं चेत् तज्ज्ञानांकुरीकरणनिदानं भवतीत्येतमर्थं सदृष्टान्तमाह—उप्यमानमिति यथा बीजैरुप्यमानं पुनः मेदुरसाधनहीनं क्षेत्रं केदारलक्षणं निर्वीर्यतां सस्यजननशक्तिराहित्यमेति तत्रैव स्फुटयति पुनरिति सूत्यै उत्पत्त्यै न केवलमुत्पादनासमर्थं किन्तु बीजनाशहेतुश्च ॥ ३३ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

एवं यथा कामाशयं कामाशाविश्रमं चित्तं विषयसेवासमये दुःखस्य तदभावे सुखस्य च स्मरणासमर्थं मनः कामानां विषयाणामतिसेवया क्षयरोगादिहेतुभूतया द्रव्यादिनाशकारणानित्यसुखाय विरज्येत विरक्तं भवति असारताबुद्धिं प्राप्नोति इदं च योग्यानामेव नायोग्यानामिति. किञ्चिद्विषयसेवया किं स्यादिति तत्राह–यथेति। कामानां बिन्दुभिः किञ्चित्सेवितैः मनो यथावत्पुरुषार्थहेतुतया न विरज्यते विरक्तं न भवति पुनः तृष्णातिशयः स्यात् कथमिव सुखकान्तिहेतुत्वात्कामः आज्य तद्बिन्दुभिर्यथा अग्निर्वर्धते तथेति भावः ॥ ३४ ॥

नन्वत्र वर्णादिज्ञानं यथा तारतम्यतत्पूजापि यद्योग्यस्य निःश्रेयसी यस्य एतदभावे तद्धितकरणाद्यभीष्टा सिद्धिः स्यादिति तत्राह–यस्येति. यस्य ब्राह्मणादेः ब्राह्मणत्वादिव्यञ्जकं शमदमादिलक्षणं प्रोक्तं शास्त्रत इति शेषः। तल्लक्षणं यद्यन्यत्र व्यक्तं दृश्येत अपिशब्देनाऽशास्त्यादिदोषाभावं सूचयति-तर्हीनरलक्षणेनैव तद्वस्तु ब्राह्मणादिकमिति निर्दिशेत् उपदिशेत्. गोः किं लक्षणमिति पृष्टः सास्नादिमान् गौरिति उपदिशति. यद्वा तद्वा पुच्छवत्वश्रृङ्गवत्वादि व्यभिचार्यं विहाय यं गोपिण्डं सास्नादिमन्तं पश्यति. यथा प्रत्येति तत्प्रयुक्तं व्यवहारं करोति आशयं दर्शयति च तथाऽत्रापि विरक्तिबलभक्तिरेव ब्राह्मणादेः मुक्तिसाधनं लक्षणमिति सकलशास्त्रतात्पर्यार्थः ततः सैव मुमुक्षुभिः सम्पादनीयेति भावः ॥ ३५ ॥

इति श्रीमद्भागवते महापुराणे सप्तमस्कन्धे
श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम्
एकादशोऽध्यायः ॥ ११ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

इति श्रीमद्भागवते महापुराणे सप्तमस्कन्धे
श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे
एकादशोऽध्यायः ॥ ११ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

अत्युत्कटवासनाविशिष्टानां तु वेदोक्तनियमेन कामत्यागासम्भवात् बहुशः कामान् निषिद्धेतरान् ययातिसौभरिप्रमुखानामिव भुञ्जानानामकुटिलचित्तानां विरागः स्यादिति सदृष्टान्तमाह–उप्यमानमिति, द्वाभ्याम्। निर्वीर्यतामेवाह, क्वचिद् सूत्यै सस्य प्रसवाय न कल्पते क्वचित् उप्तमेव बीजं नश्यति ज्वलति कामा आसम्यगेव शेरते वासनारूपेण यत्र तत् नाग्निवदिति यथा प्रज्वलितोऽग्निर्न घृतबिन्दुभिः शाम्यति किन्तु महता घृतपूरेण शाम्यत्येव तद्वत् ॥ ३३ ॥ ३४ ॥

किञ्च यस्य पुंसो वर्णाभिव्यञ्जकं यल्लक्षणं वर्णं ब्राह्मणादिजातिमभिव्यञ्जयति यत् तच्च सामान्यतो विहितमेव शमदमादिकं न तु विशेषतो विहितं संध्योपास्त्यादिकं यद्यन्यत्र जात्यन्तरेऽपि दृश्येत तज्जात्यन्तरमपि तेनैव ब्राह्मणादिशब्देनैव विनिर्दिशेदिति ब्राह्मणादितुल्यादरं लभतीति न च “परधर्मो भयावहः” इति वाच्यं शमदमादीनां परधर्मत्वाभावादिति भावः ॥ ३५ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम्।
एकादशः सप्तमस्य सङ्गतः सङ्गतस्सताम् ॥ ११ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

सूत्यै प्रसवाय ॥ ३३ ॥

उत्तमाधिकारिपक्षे“कौमारं आचरेत्प्राज्ञः” इत्यादिना सर्वभोगत्यागपूर्वकं भजनमुक्तम् मन्दाधिकारिपक्षे“गृही भूत्वा वनी भवेत्” “कुर्वन्नेवेह कर्माणि, जिजीविषेच्छतं समाः” इत्याद्याश्रुतयः आश्रमादाश्रमान्तरगमन यावज्जीवं तावत्कर्मानुष्ठानं च बहुभोगेन विषयेभ्यो निर्वेदोदयार्थमाहु: यथोक्तकर्मसम्पादितबहुभोगेन मनः शाम्यति न स्वल्पभोगेन बहुघृतेनाग्निर्यथा शाम्यति न घृतबिन्दुभिरित्याह–एवमिति। कामाः विषयाः शेरते वासनारूपेण यस्मिन् तत् अतिसेवया बहुभोगेन विरज्यते विषयेभ्य उपरम्यते न तु कामबिन्दुभिः ॥ ३४ ॥

यद्यपि प्रजापतिप्रवर्त्तिता वर्णा मुख्यास्तथापि कालकृतसङ्करादिदोषतस्तन्निश्चयाभावे सत्यादिलक्षणेन तत्तत्कुले ब्राह्मणादिनिश्चयः कर्त्तव्यः अन्यवर्णेऽपि यद्यन्यवर्णलक्षणं दृश्येत तर्हि तेन लक्षणेनापि तं वर्णिनं विजानीयादित्याह—यस्येति। यस्य पुंसो वर्णाभिव्यञ्जकं यल्लक्षणं यद्यदि अन्यत्र वर्णान्तरेऽपि दृश्येत तद्वर्णान्तरं तेनैव लक्षणादिनिमित्तेन विनिर्दिशेत्“न वयं विष्णो ब्राह्मणाः स्मोऽब्राह्मणा वा ये च स्मामहे”इति श्रुतिः“जातिरत्र महासर्पमनुष्यत्वे महामते! सङ्करात्सर्ववर्णानां दुष्परीक्ष्येति मे मतिः॥ तस्माच्छीलं प्रधानेष्टं विदुर्वै तत्त्वदर्शिनः”इति स्मृतिश्चात्रानुसन्धेया ॥ ३५ ॥

इति श्रीमद्भागवते महापुराणे सप्तमस्कन्धीये
श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे
एकादशाऽध्यायार्थप्रकाशः ॥ ११ ॥

---

भाषा टीका।

जिस खेत में बहु अर्थात् (बारंबार) बीज बोया जाता है वह क्षेत्र निर्वीर्य आपही होजाता है, उसमें बोया हुआ बीज

भाषा टीका।

फिर उत्पन्न होने को नहीं समर्थ होता किन्तु वहीं नष्ट होजाता है ॥ ३३ ॥

हे राजन्! ऐसेही जिस पुरुष का चित्त सदा कामनाओं से वासित है उसका चित्त वैदिक कर्म करते २ नियम पूर्वक बहुत काल भोग भोगने से जैसा धीरें २ आपही वैराग्य को प्राप्त होता है, तैसा शीघ्रता से नहीं। जैसे कि? घृत के बिंदुओं से अग्नि नहीं शान्त होती है ॥ ३४ ॥

जिन पुरुषों के वर्णों का अभिव्यंजक (जानने वाला) जो लक्षण कहा है वह यदि वर्णान्तर में देख पड़े तब उसको भी उसी निमित्त से निर्देश करे कुछ जाति के निमित्त से नहीं जाति तो जिसकी जो है वही रहेगी ॥ ३५ ॥

इति श्रीमद्भागवत सप्तस्कन्ध में एकादश अध्याय की भागवताचार्यकृत भाषा टीका समाप्त ॥ ११ ॥

इति श्रीमद्भागवते महापुराणे सप्तमस्कन्धे एकादशोऽध्यायः ॥ ११ ॥



## ॥ द्वादशोऽध्यायः ॥

नारद उवाच ।

ब्रह्मचारी गुरुकुले वसन्दान्तो गुरोर्हितम् ।
आचरन्दासवन्नीचो गुरौ सुदृढसौहृदः ॥ १ ॥
सायं प्रातरुपासीत गुर्वग्न्यर्कसुरोत्तमान् ।
उभे सन्ध्ये च यतवाग्जपन्ब्रह्म समाहितः ॥ २ ॥
छन्दांस्यधीयीत गुरोराहूतश्चेत्सुयन्त्रितः ।
उपक्रमे ऽवसाने च चरणौ शिरसा नमेत् ॥ ३ ॥
मेखलाऽजिनवासांसि जटादण्डकमण्डलून् ।
बिभृयादुपवीतं च दर्भपाणिर्यथोदितम् ॥ ४ ॥
सायं प्रातश्चरेद्भैक्ष्यं गुरवे तन्निवेदयेत् ।
भुञ्जीत यद्यनुज्ञातो नो चेदुपवसेत्क्वचित् ॥ ५ ॥
सुशीलो मितभुग्दक्षः श्रद्दधानो जितेन्द्रियः ।
यावदर्थं व्यवहरेत्स्त्रीषु स्त्रीनिर्जितेषु च ॥ ६ ॥
वर्जयेत्प्रमदागाथामगृहस्थो बृहद्व्रतः ।
इन्द्रियाणि प्रमाथीनि हरन्ति प्रसभं मनः ॥ ७ ॥
केशप्रसाधनोन्मर्दस्नपनाऽभ्यञ्जनादिकम् ।
गुरुस्त्रीभिर्युवतिभिः कारयेन्नात्मनो युवा ॥ ८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

द्वादशे वर्ण्यते धर्मो ब्रह्मचारिवनस्थयोः ।
चतुर्णामाश्रमाणां च साधारण्येन कश्चन ॥ १ ॥

वर्णादीनां धर्मा उक्ताः इदानीम् आश्रमधर्मा उच्यन्ते. तत्राऽस्मिन्द्वादशेऽध्याये ब्रह्मचारिवानप्रस्थयोरसाधारणाश्चतुर्णाम्—साधारणाश्चोच्यन्ते. त्रयोदशे यतेर्धर्माः, चतुर्दशे गृहस्थस्य पञ्चदशे सर्वधर्मसारसंग्रहः ब्रह्मचारी गुरुकुले वसन्गुर्वादीनुपासीतेत्युत्तरेणान्वयः ॥ १ ॥

तानाह–सायमिति। ब्रह्म गायत्रीं जपन् सन्ध्यात्रयमुपासीत उभे सन्ध्ये तु यतवाक् सायं प्रातः सन्ध्याकालनिमित्तं मौनं कुर्यादित्यर्थः ॥ २ ॥

उपक्रमे आदाववसाने अन्ते गुरोश्चरणौ नमेत् ॥ ३ ॥

यथोदितमिति, "पालाशो दण्डो ब्राह्मणस्य" इत्यादिनियममनतिक्रम्य, जटाधारणं तु केशप्रसाधनाभावमात्रम् ॥ ४ ॥ ५ ॥

यावदर्थं यथोपयोगमात्रमेव ॥ ६ ॥

बृहद्व्रतः ब्रह्मचर्यवान् ग्रहस्थव्यतिरिक्तः सर्वोऽपि प्रमदागाथां वर्जयेत् तत्र हेतुः इन्द्रियाणि बलवन्ति संयतस्यापि मनो हरन्तीति ॥ ७ ॥ ८ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तदेवं चातुर्वर्ण्यादिधर्मानभिधायाऽथ चातुराश्रम्यधर्मान्विवक्षुस्तावद्ब्रह्मचर्याश्रमधर्मानाह-ब्रह्मचारीति।ब्रह्मचर्यं द्विविधमौपकुर्वाण

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

नैष्ठिकश्चेति । तत्र गार्हस्थ्यादिवन्नैष्ठिकमप्यौपकुर्वाणपूर्वकमेवेति-दर्शयितुं तावदौपकुर्वाणब्रह्मचर्यधर्म्मा उच्यन्ते. यो गुरुकुले वसन् स ब्रह्मचारी उपकुर्वन् ब्रह्मचारीत्यर्थः । कथम्भूतो वसन् दान्त उपशान्तः दासवन्नीचः स्वनैच्यमनुसन्दधत् गुरोर्हितमाचरन् गुरौ सुदृढं सौहार्दं यस्य तादृश. ॥ १ ॥

किञ्च सायम्प्रातश्च गुरुमग्निमर्कं सूर्यं सुरोत्तमं भगवन्तञ्च उपासीत उभे सन्ध्ये प्रातः सायं च यतवाङ्मौनी समाहितचित्तो ब्रह्म गायत्रीं जपन् गुर्वादीनुपासीतेत्यन्वयः ॥ २ ॥

आहूतश्चेत्सुयन्त्रितः समाहितो गुरोः छन्दांसि वेदानधीयीत नित्यमध्ययनोपक्रमसमाप्त्योर्गुरोश्चरणौ शिरसा नमेत् ॥ ३ ॥

यथा विहितं मेखलादीनि बिभृयात् जटाधारणं तु केशप्रसाधनाभावमात्रं दर्भं पवित्रं पाणौ यस्य सः ॥ ४ ॥

सायं प्रातश्च भैक्षं भिक्षाकर्म चरेत्कुर्यात् तद्भिक्षया लब्धमन्नं गुरवे निवेदयेत् गुरोः पुरतो निदध्यात् ततो यदि गुरुणाऽप्यनुज्ञातश्चेत् तदन्नं भुञ्जीत नोचेत् कदाचिदुपवसेत् कदाचिदित्यनेन तन्मनः परीक्षार्थं कदाचिद्गुरुर्नाज्ञापयेदिति सूच्यते ॥ ५ ॥

मितं भुङ्क्ते इति तथा सुशीलः सुस्वभावः सदाचारो वा दक्षोऽनलसः श्रद्दधान' गुरूपदिष्टार्थेषु विश्वासयुक्त. जितानीन्द्रियाणि येन स्त्रीषु स्त्रीभिर्निर्जिता ये स्त्रीवश्यास्तेषु च यावदर्थं यावत्प्रयोजनं व्यवहरेत्नाधिकं ताभिस्तैश्च सम्भाषेतेत्यर्थः ॥ ६ ॥

प्रमदागार्यां स्त्रीविषयां वार्तां वर्जयेत् यतः स्वयमगृहस्थो बृहद्व्रतः ब्रह्मचर्यवान् स्त्रीसङ्गादिरहितः । ननु, तद्वाधामात्रेणा को दोषस्तत्राह—इन्द्रियाणीति । प्रमाथीनि बलवन्ति, अतः संयतचित्तस्यापि मनः प्रमदागाथाश्रवणकथनादिना स्ववशङ्कुर्वन्ति अतस्तां परिवर्जयेत् इत्यर्थः ॥ ७ ॥

गुरुस्त्रीभिर्गुरुपत्नीभिरन्याभिश्च युवतीभिः केशप्रसाधनादिकं न कारयेत् ॥ ८ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

नीचः प्रश्रितः हितं हिताचरणं । मनोवाक्कायकर्मभिरिति शेषः ॥ १ ॥ २ ॥ ३ ॥ ४ ॥

क्वचिदपरार्धे सति । एकान्नादनवर्जनार्थमुपवसेदित्युक्तम् ॥५॥
स्वार्थेगार्थसिद्धिः तन्मात्रं यावदिति ॥ ६ ॥

बृहद्व्रतो ब्रह्मचारी स्त्र्यादिव्यवहारवर्जननिमित्तमाह—इन्द्रियाणीति । निर्जितेन्द्रियग्रामो यतिः । "ये निर्जितेन्द्रियग्रामा यतिनो यतयश्च ते" इत्यभिधानात् ॥ ७ ॥

प्रसाधनं संस्करणम्—

"मधुमांसोच्छिष्टं शुक्तस्त्रीप्राणिहिंसनम् ।
भास्करालोकनाश्लीलपरिवादांश्च वर्जयेत्" ॥

इत्यपर्यालोचनं न कर्तव्यम् ॥ ८ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

१—४ ॥
नोचेदिति, गुरोरन्यत्र गमनादौ ॥ ५—१० ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

द्वादशे वर्णिनो धर्मा वनस्थस्याऽपिवर्ण्यते ।
साधारणाश्चाश्रमाणां देहत्यागविधिस्तथा ॥

ब्रह्मचारी गुर्वादीनुपासीतेत्युत्तरेणान्वयः ब्रह्म गायत्रीम् ॥ १—५ ॥

यावदर्थं गुरुसेवार्थं गुरुगृहे भिक्षार्थं गृहस्थगृहेषु च यथोपयोगमेव च ॥ ६ ॥

अगृहस्थो गृहस्थभिन्नः सर्वोपि बृहद्व्रतो ब्रह्मचारी ॥ ७ ॥

कारयेदिति गुरुपत्न्यो हि शिष्यमपि पुत्रमिव वात्सल्येन पश्यन्त्यो यदि केशप्रसाधनादिकं स्वेच्छयैव कुर्वन्ति तदपि न कारयेदित्यर्थः ॥ ८ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

ब्रह्मचारी वनस्थयोर्धर्मः सर्वाश्रमसाधारणाश्च कश्चन धर्मो द्वादशेनाऽध्यायेन वर्ण्यते. ब्रह्मचारी गुरुकुले वसन् गुरोर्हितमाचरन् उभे सन्ध्ये ब्रह्म गायत्रीं जपन् गुर्वादीनुपासीतेति द्वयोः अन्वयः ॥ १ ॥ २ ॥ ३ ॥

जटाधारणं केशप्रसाधनाभावमात्रं यथोदितं "पालाशो दण्डो ब्राह्मणस्य" इत्यादिनियमानतिक्रम्य दर्भपाणिः कुशहस्त. ॥ ४ ॥ ५ ॥

यावदर्थं भिक्षायापेण ॥ ६ ॥

बृहद्व्रतः नैष्ठिकब्रह्मचर्यवान् अगृहस्थो वानप्रस्थादिश्च प्रमाथीनि बलवन्ति यतः जितेन्द्रियस्यापि ॥ ७ ॥ ८ ॥

---

भाषा टीका ।

श्रीराधिकाप्राणप्रियवल्लभाय नमः ॥

नारद उवाच ।

नारदजी बोले, कि—ब्रह्मचारी दमन शील होकर गुरुकुल में वास करता हुआ, गुरु का हित आचरण करे और दास के नाई नीचाऽनुसंधान कर गुरु में दृढ सौहृद राखे ॥ १ ॥

प्रातःकाल और सायंकाल में गुरु अग्नि सूर्य और देवताओं की उपासना करे, और दोनों संध्याओं में मौन होकर सावधानी से गायत्री का जप करे ॥ २ ॥

गुरूजी के बुलाने से बड़ा नम्रता पूर्वक वेद का अध्ययन करे पढ़ने के प्रथम और पश्चात् (अन्तमें) गुरूजी के चरणों को शिरसे प्रणाम करे ॥ ३ ॥

नन्वग्निः प्रमदानाम घृतकुम्भसमः पुमान् ।
सुतामपि रहो जह्यादन्यदा यावदर्थकृत् ॥ ९ ॥
* कल्पयित्वाऽऽत्मना यावदाभासमिदमीश्वरः ।
द्वैतं तावन्न विरमेत्ततो ह्यस्य विपर्ययः ॥ १० ॥
एतत्सर्वं गृहस्थस्य समाम्नातं यतेरपि ।
गुरुवृत्तिर्विकल्पेन गृहस्थस्यर्तुगामिनः ॥ ११ ॥
अञ्जनाभ्यञ्जनोन्मर्दस्त्र्यवलेखामिषं मधु ।
स्रग्गन्धलेपालङ्कारांस्त्यजेयुर्ये धृतव्रताः ॥ १२ ॥
उषित्वैवं गुरुकुले द्विजोऽधीत्यावबुध्य च ।
त्रयीं साङ्गोपनिषदं यावदर्थं यथाबलम् ॥ १३ ॥
दत्त्वा वरमनुज्ञातो गुरोः कामं यदीश्वरः ।
गृहं वनं वा प्रविशेत्प्रव्रजेत्तत्र वा वसेत् ॥ १४ ॥
अग्नौ गुरावात्मनि च सर्वभूतेष्वधोक्षजम् ।
भूतैः स्वधामभिः पश्येदप्रविष्टं प्रविष्टवत् ॥ १५ ॥
एवंविधो ब्रह्मचारी वानप्रस्थो यतिर्गृही ।
चरन्विदितविज्ञानः परं ब्रह्माधिगच्छति ॥ १६ ॥

भाषा टीका ।

जैसा शास्त्र में कहा है उसरीत से मेखला मृगचर्म वस्त्र जटा दंड कमंडलु और दर्भों को धारण करे ॥ ४ ॥

सांझ सवेरें भिक्षाटन करके गुरुजी के अर्पण करे, जो गुरुजी आज्ञा देवें तौ भोजन करे नहीं तौ कभी उपवास भी करजावे ॥ ५ ॥

सुशील मितभोजी चतुर श्रद्धावान् और जितेन्द्रिय रह कर, स्त्रियों में और स्त्रीनिर्जित अर्थात् लंपटो में जितना प्रयोजन उतना ही व्यवहार राखे ॥ ६ ॥

बृहद्व्रत ( बडे व्रत वाला ) विरक्त पुरुष स्त्रियों के गीत को न सुनें, क्योंकि ? इन्द्रियें बडी मथन करने वाली है बलात्कार से मन को हरलेतीं हैं ॥ ७ ॥

यदि आप युवा अवस्था वाला हो तौ युवा अवस्था वाली गुरु पत्नियों से केशप्रसाधन, ( केस सम्हारना ) उन्मर्दन ( उबटन ) स्नान, अभ्यंजन, ( तेल लगावना ) इत्यादिक कार्य न करावे ॥ ८ ॥

———

श्रीधरस्वामिकृतभावार्थदीपिका ।

न कारयेदित्यत्र हेतुः—नन्विति । रहः एकान्ते अन्यदा केशप्रसाधनादिव्यतिरिक्तावसरे अनेकान्तावसरे वा यावदर्थं तदुक्तं कुर्यात् ॥ ९ ॥

ननु, मिथ्यात्वात् अतिकष्टत्वाच्च स्वयं सत्कप्रायं इत्थादि जह्यादिति कोऽयमतिनिर्बन्धः ? तत्राह—कल्पयित्वेति । आत्मना स्वरूपसाक्षात्कारेणेदं देहेन्द्रियादिकम् आभासमात्रं कल्पयित्वा निश्चित्य यावदसौ जीव ईश्वरः स्वतन्त्रो न भवेत्, तावत् द्वैतम् अहं पुमानियं स्त्रीति भेदो न निरसेत्. ततः किमत आह, ततो हि द्वैताद्विपर्ययः गुणाध्यासेन भोग्यताबुद्धिः अतो जह्यादेवेत्यर्थः ॥ १० ॥

एतत् सर्वं सुशील इत्याद्युक्तं गृहस्थस्य विशेषमाह—गुरुवृत्तिरिति ॥ ११ ॥

अञ्जनादीनामामिषान्तानां द्वन्द्वैक्यम् अञ्जनं शरीरस्य अभ्यञ्जनं शिरसः स्त्रियश्चावलेखाश्च चित्रकर्म स्त्रीणां कुड्यादौ लेखनं वा तन्निरीक्षणं वा अत्राभ्यङ्गादि स्वरूपतो निषिध्यते पूर्वन्तु कथञ्चिदापदि प्राप्तमपि स्त्रीकर्तृकं निषिद्धमिति भेदः ॥ १२ ॥

* कल्पमत्यात्मना इति वीर० पाठः ।

श्रीधरस्वामिकृतभावार्थदीपिका ।

अङ्गैः शिक्षादिभिरुपनिषद्भिश्च सहितां वेदत्रयीमधीत्य अवबुध्य च तदर्थञ्च विचार्य यावदर्थं स्वाधिकारानुसारेण ॥ १३ ॥

यदीश्वरः शक्तः तर्हि गुरोः काममपेक्षितं वरं दत्त्वा यथाधिकारं गृहस्थाद्याश्रमं स्वीकुर्यात्तत्रैव वा वसेत् नैष्ठिकः स्यादित्यर्थः ॥ १४ ॥

स्वधामभिः स्वाश्रयैर्भूतैर्जीवैः सह तं नियन्तृतया ॥ १५ ॥

चरन् एवमाचरन् विदितं विज्ञानं विज्ञेयं येन सः ॥ १६ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

कुतस्तन्मात्रकरणे दोषः? तत्राह—नन्विति । अग्निः अग्निसदृशी प्रमदा यथा चातीवाग्निसहचरितं घृतकुम्भं क्षरति तथा पुमानपि प्रमदासहचारी संमुह्येदित्यर्थः । अतः सुतामपि पुत्रीमपि पुमान् रह एकान्ते जह्यात् त्यजेत् अन्यदा केशप्रसाधनादिव्यतिरिक्तावसरे अनैकान्तावसरे वा यावत्तदुक्तमर्थं प्रयोजनं तावन्मात्रं करोतीति तादृशो भवेत् ॥ ९ ॥

एवं ब्रह्मचारिणो धर्मानभिधाय यदुक्तं "सुशीलो मितभुक्" इत्यादि तद्यतिगृहस्थयोरपि ब्रह्मोपासननिष्ठयोरतिदेक्ष्यन् तावद्यावच्छरीरावसानमेवं धर्मा अनुष्ठेया इत्याह-कल्पयतीति । ईश्वरो भगवान् यावदिदमात्मन आभासं दृश्यं शरीरं कल्पयति प्रवृत्तिः समर्थं करोति तावद्द्वैतं देवत्वमनुष्यत्वब्राह्मणत्वाद्यभिमानरूपं भेदज्ञानमनुवर्त्तत इति शेषः । नन्वनुवर्त्ततां ततः किं तत्राह, अस्य पुंसस्ततोऽध्यासाद्विपर्ययः उत्तरोत्तरविपर्ययः देहात्मभ्रमः पुरुषार्थविपर्ययो वा भवति तस्माद्यावद्द्वैतानुवृत्तिः स्वधर्मेभ्यो न विरमेत् । कल्पयित्वेति पाठान्तरम् तत्र यावदिदमाभासं शरीरं तावदीश्वरः प्रभुः समर्थः स्वधर्मानुष्ठानशक्तस्सन् आत्मनः स्वस्य द्वैतं मनुष्यत्वब्राह्मणत्वादिभेदं कल्पयित्वा स्थित इति शेषः । देहात्माभिमानयुक्त इत्यर्थः । अत एव तावन्न विरमेद्धर्मादितिशेषः । विरामे बाधकमाह—हि यस्मादध्यासाद्विरामाद्वाऽस्य विपर्ययः उत्तरोत्तरदेहात्मभ्रमः यद्वा यावदिदं शरीरमनुवर्त्तते तावदिदं द्वैतं मनुष्यत्वादिकमात्मन आभासमात्रं कल्पयित्वा द्वैतं देहाकारो न त्वात्माकार इति कल्पयित्वा देहविलक्षणमात्मानमनुसन्धायेत्यर्थः । ईश्वरः कर्त्तुं समर्थः न विरमेत् स्वधर्मान्नविरमेदित्यर्थः ॥ १० ॥

उक्तं यतिगृहस्थयोरप्यतिदिशति—एतदिति । एतत्सुशील इत्यादिनोक्तं सर्वं वनस्थस्य ब्रह्मोपासनरूपव्रतनिष्ठस्य यतेस्तुर्याश्रमिणः अपि शब्दाद्गृहस्थस्यापि समाम्नातं तत्र गृहस्थस्य किञ्चिद्विशेषमाह-गुरुवृत्तिरिति । गुर्वी वृत्तिर्गुरुवृत्तिः स्त्रीसङ्गराहित्यादिरूपा ब्रह्मचर्यवृत्तिः गृहस्थस्य तु विकल्पेन कदाचिद्भवेत् कदाचिन्न स्यात् । कदा न भवेत्? इत्यपेक्षायां तं कालं निर्दिशन्विकल्पे हेतुं वदन् गृहस्थं विशिनष्टि—ऋतुगामिन इति । ऋतुगामित्वाद्गुरुवृत्तिविकल्प इति भावः । ऋतुकालेषु गुरुवृत्तिर्नास्तीति च भावः अन्यथा वृत्तेर्दुष्करत्वाभिप्रायेण गुर्विति विशेषणमुपात्तम् ॥ ११ ॥

किञ्च ये धृतव्रताः गृहस्थास्ते अञ्जनादीन् त्यजेयुः अञ्जनाद्यामिषान्तानां द्वन्द्वैक्यं तत्राञ्जनं शरीरस्य तैलाद्यञ्जनम् शिरस अभ्यञ्जनमवशिष्टदेहस्य उन्मर्दः उद्वर्तः स्त्र्यवलेखा कुड्यादिषु स्त्रीप्रतिकृतिलेखनमामिषं मांसं मधु मद्यमिदं स्त्रियाद्यभिप्रायकं स्रक् च गन्धलेपश्चाऽलङ्कारश्च तान् ॥ १२ ॥

एवं ब्रह्मचर्याश्रमधर्मानभिधायाथाश्रमान्तरधर्मान्विवक्षुस्तावदाश्रमन्तराणामुक्तविधब्रह्मचर्याश्रमपूर्वकत्वमाह उषित्वैवमिति, द्वाभ्याम् । द्विजस्त्रैवर्णिकः एवमित्थं गुरुकुले उषित्वा साङ्गोपनिषदं सांगसशिरस्कां त्रयीं यथाबुद्धिबलं यावत्स्वापेक्षितमधीत्याऽवबुध्य तदर्थं ज्ञात्वा अवबध्येति पाठस्तूचितः "वेदमधीत्याभिसमावृत्य कुटुम्बे शुचौ देशे" इति श्रुत्यर्थस्याऽत्र प्रत्यभिज्ञानादवबध्य समावर्त्तनं कृत्वा ॥ १३ ॥

यदीश्वरः शक्तश्चेत्तर्हि गुरोः काममपेक्षितं वरं दत्त्वा गुरुणाऽभ्यनुज्ञातः गृहं वनं वा प्रविशेद्गृहस्थाश्रमं संन्यासाश्रमं वा स्वीकुर्यादित्यर्थः । वनशब्दः शुचिदेशोपलक्षकः कुटुम्बे शुचौ देशे इति श्रुत्यनुरोधान्न तु वानप्रस्थाश्रमोपलक्षकः ब्रह्मचर्यानन्तरं तत्परिग्रहानुपपत्तेः सहि गार्हस्थ्यानन्तरभावि "ब्रह्मचर्यं समाप्य गृही भवेत् गृहाद्वनी भूत्वा प्रव्रजेत् यदि वेतरथा ब्रह्मचर्यादेव प्रव्रजेद्गृहाद्वनाद्वा" इति जाबालिश्रुतेः गार्हस्थ्यानन्तरं प्रव्रजेत् प्रव्रजनन्तु संन्यासाश्रमपरिग्रहो वानप्रस्थाश्रमपरिग्रहश्चेत्युभयविधं विवक्षितं यथेष्टं संन्यसेद्वनं वा प्रतिष्ठतेत्यर्थः । तत्र वा वसेत् तत्र शब्देन ब्रह्मचर्यं गार्हस्थश्च विवक्षितं ब्रह्मचर्य एव निष्ठितो भवेत् गृहं प्रविश्य तत्रैव वा स्थितो भवेदित्यर्थः ॥ १४ ॥

एवं यथेष्टं परिगृहीतानां सर्वाश्रमाणामनुगतं धर्मं तत्फलं चाह—द्वाभ्याम्, अग्नाविति । अग्नाविति तुर्याश्रमव्यतिरिक्ताश्रमाभिप्रायकं तस्यानग्नित्वात् गुणवत्प्राधानात्मनि स्वस्मिन् सर्वभूतेषु चान्तःप्रविश्यानियमनपूर्वकं धारकतया स्थितमिति शेषः । स्थितम् अधोक्षजं भगवन्तं पश्येत् अधोक्षजो धामाऽऽधारो येषां तैर्भूतैरप्रविष्टं पश्येत् व्याप्यवस्तुगतदोषासंस्पृष्टं पश्येत् प्रविष्टवच्च पश्येत् अन्तर्बहिश्च व्याप्याव्यावृत्तित्वादिति भावः ॥ १५ ॥

एवंविधदर्शी ब्रह्मचर्याद्यन्यतमस्वस्वाश्रमधर्माननुतिष्ठन्विदितं विज्ञानं विज्ञेयं स्वात्मपरमात्मयाथात्म्यं येन तादृशः परं ब्रह्माधिगच्छति प्राप्नोति ॥ १६ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

कुतो न कार्यमत्राह—नन्विति । अन्यदा व्यवहारयोग्यसमये ॥ ९ ॥

ननु, बन्धनिवृत्त्यर्थं भगवदर्पणबुद्ध्या धर्मोऽनुष्ठेय इति विधीयते तस्य मिथ्यात्वेन स्वत एव निवृत्त्युपपत्तेर्न तद्विधानमत्रावश्यकमित्याशङ्क्येश्वरकल्पितस्य मिथ्यात्वासम्भवेन । यद्बुद्ध्या यस्य शृङ्खलाबन्धस्तस्य तत्प्रसादेन तन्निवृत्तिर्यदी-

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

श्वरप्रसादजनकधर्मग्रामो विधेयो ऽन्यथा बन्धानुवृत्तिरित्याशयवांस्तस्येश्वरकल्पितत्वमाह-कल्पयेदिति। यावत् कालमीश्वरः आत्मनो जीवस्य ज्ञानलक्षणरहितं ज्ञानवदवभासमानमिदमाभासमज्ञानं कल्पयेत्तावंतं कालं द्वैतमयथार्थज्ञानं न विरमेन्नापगच्छेत् ततोऽ ज्ञानादस्य विपर्ययो बन्धो ऽनुवर्तेत इति शेषः तदुक्तम्—

(१) "बहुत्वेनैव वस्तूनां यथार्थज्ञानमुच्यते।
अद्वैतज्ञानमित्येव द्वैतज्ञानं तदन्यथा ॥
(२) यथा ज्ञानं तथा वस्तु यथा वस्तु तथा मतिः।
नैव ज्ञानार्थयोर्भेदस्तत एकत्ववेदनम्"इति च।

ननु, वर्णादेर्विहितो धर्मग्रामः कियन्तं कालमनुष्ठेयो बहुसमयसाध्यत्वे दुःखप्रयासत्वेनाशक्त्यविरक्त्यानधिकारिकः स्यादित्याशङ्क्याह—कल्पयेदिति। यावदीश्वर इदमाभासं मिथ्याभूतं जगत्कल्पयेत् तावद् द्वैतं वर्णाश्रमादिधर्मलक्षणं न विरमेत् नापगच्छेत् ततो ऽधिष्ठानं ज्ञानं स्यात्ततो विहितधर्मग्रामस्य विपर्ययो निवृत्तिरित्ययमर्थो हिशब्दसूचितया "सत्यसृष्टावशक्ता हि मायासृष्टिं वितन्वत" इति स्मृत्या विरुद्धत्वेनानुपपन्नः ईश्वर इत्यनेन सत्यसृष्टिसामर्थ्यं सूचयति तात्पर्येण विधान चानुपपन्नं यत उक्त एवार्थः ॥ १० ॥

नन्वयं धर्मो ब्रह्मचारिणो भवेदुतान्यस्यापि सम्भवति ? नाद्यः अतिव्याप्तेः न द्वितीयः पृथग्विधानानुपपत्तिरित्यतोऽतिदेशन्यायेन यथासम्भवमन्यस्यापीत्याह-एतदिति। अन्यद्वक्ष्यमाणं न केवलं गृहस्थस्यैव किन्तु यतेरपीत्याह—यतेरपीति। यथासम्भमित्युक्तं विवृणोति-गुरुवृत्तिरिति। गुरुवृत्तिर्गुरौ वासः ब्रह्मचर्यं भिक्षावृत्तिरित्येतत्सर्वं गृहस्थस्य निवर्तत इत्यर्थः। विकल्पेन व्यवस्थितविकल्पेनोदितानुदितहोमवदित्यर्थः। कुतो निवर्तत इति तत्राह-ऋतुगामिन इति ॥ ११ ॥

पञ्चयज्ञाद्याचरणाभ्यासेन कालायापनं कुर्वतो गृहस्थस्यापि व्रतधारणे ब्रह्मचारिवदभ्यञ्जनादिकं वर्जनीयमित्याह—अञ्जनेति। अवलेपं दर्पम् ॥ १२ ॥

अवबुध्य अर्थविचारं कृत्वा तत्त्वं ज्ञात्वा ॥ १३ ॥
गार्हस्थ्यधर्मस्य वानप्रस्थधर्मस्य यतिधर्मस्य चानुष्ठानेन समर्थश्चेदेष्वभीष्टं कुर्यादित्याह—यदिति—

"नैष्ठिको ब्रह्मचारी तु वसेदाचार्यसन्निधौ।
तदभावे * स्यतनये पत्न्यां वैश्वानरेऽपि च" ॥

(१) वस्तूनांबहुत्वेन बहुत्वप्रकारकवस्तुविषयकत्वेन यथार्थज्ञानमेवाद्वैतज्ञानमित्युच्यते। वस्त्वैक्यविषयकं तु द्वैतज्ञानमित्युच्यते नन्वेतद्विरुद्धम् ॥

(२) अद्वैतज्ञानस्यैव वस्त्वैक्यज्ञानत्वेन वक्तव्यत्वादित्याशङ्क्यतद्धटयति-यथेति। ज्ञानार्थयोः सादृश्यलक्षणमैक्यमादायाऽद्वैतज्ञानं भेदज्ञानमित्युच्यते ननु वस्त्वैक्यविषयम् ॥

* गुरुपुत्रे गुरुपत्न्यांवेति

इति वचनात्. एतादृशस्य गुरौ वासो ऽनुज्ञायते नन्यस्य गुरोराज्ञया दूरं गत्वा गृहाश्रम इति तदुक्तं "गुरोराज्ञानुरोधेन दूरस्थो वा गृही भवेत्" इति चेति ॥ १४ ॥

भगवदर्पणबुद्ध्याऽग्न्यादौ क्रियमाणं कर्म तस्य बुद्ध्या कर्तव्यं नतु तदैक्यबुद्ध्येत्याशयेनाह अग्नाविति—

"सगुरुर्यः क्रियाः कृत्वा वेदमस्मै ददाति च।
उपनीय ददेद्वेदमाचार्यः स उदाहृतः ॥
एकदेश उपाध्याय ऋत्विग्यज्ञकृदुच्यते।
एते मान्या यथापूर्वमेभ्यो माता गरीयसि" ॥

इति वचनात् गुरुशब्देन सर्वे एते विवक्ष्यन्ते स्वधामभिरावासस्थानभूतैरप्रविष्टं सर्वगतं प्रविष्टवत्स्थितं अनुरूपवन्तं अप्रविष्टः सर्वगतः प्रविष्टस्त्वनुरूपवान् "एवं द्विरूपो भगवान्हरिरेको जनार्दनः" इतिवचनात् ॥ १५ ॥

एवमाकारेण क्रियमाणस्य कर्मणः फलमाह एवं विध इति ॥ १६ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

गुरुवृत्तिरिति, गुर्वनुवृत्तिः ॥ ११ ॥

अञ्जनेत्यस्य टीकायां स्त्रीकर्तृकं निषिद्धमिति विचार्यम् अभ्यञ्जनेनाति विशेषात् ॥ १२ ॥

उषित्वेति युग्मकम् ॥ १३—३१ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

तत्र हेतुः—नन्वग्नि रिति। रहः रहसि एकान्ते अन्यदा अन्यत्र अनेकान्तेपि यावदर्थकृत् यावताऽवस्थानेनार्थःप्रयोजनं सिद्ध्येत्तावदेवस्थिति कुर्यादित्यर्थः ॥ ९ ॥

ननु, निवृत्ताभिमानस्य विजितेन्द्रियज्ञानिनो युवतयः किमपकर्तुं प्रभवेयुः? तत्राह—कल्पयित्वेति। ईश्वरोज्ञानसमर्थोऽपि इदं देहदैहिकविषयाभिमानादिकं बाधितानुवृत्तिन्यायेनाभासं कल्पयित्वा तत्त्वज्ञानेन विजितं नाममात्रेणैव स्थितमकिञ्चित्करं कृत्वाऽपि यावदात्मना मनसा सह वर्त्तेत. तावत् द्वैतं अहं पुमान् इयं स्त्री इदं मे प्रियमिदमप्रियमिति भेदबुद्धिर्न विरमेत्. ततश्च विपर्य्ययः पूर्ववत् संसारावृत्तिः। यद्वा ननु,त्यक्तसुतभगिन्यादिबन्धुवर्गस्य जितेन्द्रियस्य किमस्माद्भयं? तत्राह-कल्पयित्वेति। व्यवहारं व्यावहारिकं वस्तु च त्यक्त्वापि आत्मना मनसा यावत् यत् प्रमाणकम् इदम् आभासं इयं मे भगिन्येव इयं माता इयं सुतेत्यादिसम्बन्धाभासं कल्पयित्वा ईश्वरः तत्तत्कृतस्नेहोत्थसुखेन ईशीतः तावत् तत्प्रमाणकं द्वैतं भेदो न विरमेत् नत्वस्य स्तोकत्वात् कल्पितत्वाच्च न काचिच्चिन्ता तत्राह—ततो हीति ॥ १० ॥

सर्वं सुशीलं इत्याद्युक्तं विकल्पेन कर्त्तव्यमित्यर्थः ॥ ११ ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

अञ्जनं शरीरस्य अभ्यञ्जनं शिरस शिरं च अवलेखां चित्र कर्म च अन्नाभ्यञ्जनादिकं स्वरूपत एव निषिद्धयन् पूर्वन्तु कथञ्चिदापदि प्राप्तमपि स्त्रीकर्तृकं निषिद्धमिति भेदः ॥ १२—१३ ॥

यदीश्वरः शक्तस्तदा गुरोः काममपेक्षितं वरं दत्त्वा गृहं प्रविशेत् गृहस्थो भवेदित्यर्थः । तत्रैव वा वसेत् नैष्ठिकब्रह्मचारी स्यात् ॥ १४ ॥

स्वधामभिः स्वाश्रयैर्जीवैः सह तन्नियन्तृतया ॥ १५—१७ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

अन्यदा अनेकान्ते यावदर्थं यथोपयोगं तत्क्षालनादिकम् कुर्यात् ॥ ९ ॥

सुताया एव का कथा सर्वोऽपि लोकवेदप्रसिद्धः ग्राह्याऽग्राह्यभेदः यावन्महाप्रलयस्तावदनिवार्यं यत्र वस्तु सर्वं प्राकृतमिदमेकमेव किमग्राह्यं वाति सा हठेन ग्राह्यमेव न स्वीकरोति तस्य विपर्ययः स्यादित्याह—कल्पयित्वेति । ईश्वरः सर्वात्मा जगद्धेतुरिदं स्वशक्तिविकारभूतमाभासं आ समन्ततः ग्राह्याग्राह्यादितया भासमानम् आत्मना कल्पयित्वा यावद्वर्तते तावत् द्वैतमिदं ग्राह्यमिदमग्राह्यमिति भेदो न विरमेत् अङ्गीकार्य्य एव भवेत् हि यस्तु नाङ्गीकरोति ततो अनङ्गीकारात् अस्मादङ्गीकर्तुः अमृतवद्विषोदकपानेन जलवदग्निस्नानेन विपर्ययः शरीरनाश एव स्यादित्यर्थः ॥ १० ॥

एतत्सर्वं सुशील इत्यादिनोक्तं गृहस्थस्य यतेस्तुर्य्याश्रमिण उपलक्षणं यतेरित्युक्तिर्वानप्रस्थस्यापि समाम्नानम् गृहस्थस्य गुरुशुश्रूषायां विकल्पं वदन् ब्रह्मचारिप्रभृतिभिर्नित्यं गुरुशुश्रूषा यथोपयोगं कार्येति द्योतयति गुरुवृत्तिरिति गुरौ वृत्तिर्वर्तनं तच्छुश्रूषेत्यर्थः गृहस्थस्य विकल्पेन बोध्या तत्र हेतुगर्भं विशेषणम् ऋतुगामिन इति आवश्यकर्तुगमनादिपरवशस्य नित्यं गुरुशुश्रूषाया अभावकालाभावादित्यर्थः ॥ ११ ॥

अञ्जनं नेत्रयोः अभ्यङ्गं शिरसः उन्मर्दश्च उन्मर्दनं शरीरस्य स्त्री च अवलेखा च रूपादिप्रतिकृतिश्च आमिषं च तेषां अन्वेक्षणम् मधु मद्यं स्रगादिकान् च ये धृतव्रतास्ते त्यजेयुः ॥ १२ ॥

अङ्गैः शिक्षादिभिरुपनिषद्भिश्च सहितां त्रयीं वेदत्रयीम् द्विज त्रैवर्णिकः अधीत्य तदर्थं चावबुध्य ॥ १३ ॥

यदीश्वरः समर्थस्तर्हि गुरोः कामं यथेष्टं वरं दत्त्वा यथेष्टां दक्षिणां दत्त्वा गृहं प्रविशेत् गृही भवेत् विषयेभ्यो विरक्तश्चेद्वनं वनोपलक्षितं जितेन्द्रियवासयोग्यं स्थानं प्रविशेत् तत्र द्वैविध्यमाह—प्रव्रजेत् सन्यासी भवेत् तत्र वा वसेत् तत्रैव ब्रह्मचर्याश्रमे वसेत् नैष्ठिको भवेदित्यर्थः ॥ १४ ॥

भूतैः चेतनाचेतनरूपैर्भोक्तृशक्तिमयैः स्वधामभिः अधोक्षजाधिष्ठितैः सहाधोक्षजं सर्वभूतेषु अप्रविष्टमपि विमुखरूपस्य शक्तिद्वयं विनत्य संस्थितस्य प्रवेशायोगात् प्राविष्टवत्पश्यत् एकैकस्मिन् भूते क्षराक्षरभगवद्रूपाणि पश्येत् तथोक्तम्—

"क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते ।
उत्तमः पुरुषः स्त्वन्यः परमात्मेत्युदाहृतः ॥
यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः" ।

अग्नौ गुरौ च तद्भेदनोपासनार्थं पश्येत् आत्मनि चोपासके आपि कृतमङ्गलमूर्तिं पश्येदित्यग्न्यादिपृथक् निर्देशाभिप्रायः ॥ १५ ॥

एवंविधः विदितं विज्ञानं तत्वत्रयज्ञानं येन सः ब्रह्मचारी वानप्रस्थो वा यतिर्वा गृही वा चरन् प्रारब्धकर्मफलं भुञ्जन् परमधोक्षजं ब्रह्माधिगच्छति भगवत्प्राप्तिरूपा मुक्तिस्तत्वत्रयज्ञानपूर्वकभगवद्ध्याननिष्ठा यस्मिन्नाश्रमे भवेत्तस्यैव वाश्रमिणः स्यादिति फलितार्थः ॥ १६ ॥

भाषा टीका ।

क्योंकि ? यह निश्चित और प्रसिद्ध है, कि—स्त्री अग्नि रूप है और पुरुष घृत कुंभमय ( घीके कुप्पे के समान ) है, इस लिये प्रयोजन से अधिक अपनी पुत्री को भी एकांत में त्यागदे ॥ ९ ॥

ज्ञान समर्थ होकर भी भान होने वाले इस जगत को जबतक अपने मनसे द्वैत भाव से अर्थात् स्त्री पुत्रादि रूप भेद भाव कल्पना करके वर्तमान है, तब तक विहित कर्मों से विराम को न प्राप्त होवे क्योंकि ? विराम को प्राप्त होने से ही इसका विपर्यय है अर्थात् उत्तरोत्तर संसार है ॥ १० ॥

ये जो सुशील मितभाषी इत्यादि षष्ठ श्लोक में कहे हुए धर्म हैं, सो गृहस्थ के और यति के भी हैं, और ऋतु गामी होने से गृहस्थ को गुरुकी वृत्ति में विकल्प है ॥ ११ ॥

जो अध्ययनादि व्रत धारण करने वाले हैं उनको अंजन ( काजर ) अभ्यंजन, उन्मर्दन, स्त्री चित्र दर्शन, आमिष मधु माला चंदनलेप और अलंकार ये सब वर्जित हैं ॥ १२ ॥

ब्राह्मण इस प्रकार गुरुकुल वासकर षट् अङ्ग और उपनिषदों सहित वेद का यावत्प्रयोजन और बुद्धि बलके अनुसार अध्ययनकर के गुरुजीको दक्षिणा देकर गुरुकी आज्ञापाकर यथेष्ट गृहमें प्रवेश करे, यदि समर्थ होय तो आज्ञालेकर वनमें जावे अथवा संन्यास ग्रहण करे, वा गुरु के समीप ही निवास करे ॥ १३ ॥ १४ ॥

अग्नि गुरु आत्मा तथा सर्वभूतों में अपने आश्रयरूप भूतों सहित अप्रविष्ट भी ईश्वर को नियमन कर्तृत्व बुद्धिसे प्रविष्ट सरीखा देखे ॥ १५ ॥

इस प्रकार का ब्रह्मचारी हो वानप्रस्थ हो यति हो वा गृहस्थ

वानप्रस्थस्य वक्ष्यामि नियमान्मुनिसम्मतान् ।
यानातिष्ठन्मुनिर्गच्छेदृषिलोकमिहाञ्जसा ॥ १७ ॥
न कृष्टपच्यमश्नीयादकृष्टं चाप्यकालतः ।
अग्निपक्वमथाऽऽमं वा अर्कपक्वमुताहरेत् ॥ १८ ॥
वन्यैश्चरुपुरोडाशान्निर्वपेत्कालचोदितान् ।
लब्धे नवेनवेऽन्नाद्ये पुराणं तु परित्यजेत् ॥ १९ ॥
अग्न्यर्थमेव शरणमुटजं वाऽऽद्रिकन्दरम् ।
श्रयेत हिमवाय्वग्निवर्षार्कातपषाट् स्वयम् ॥ २० ॥
केशरोमनखश्मश्रुमलानि जटिलो दधत् ।
कमण्डल्वजिने दण्डवल्कलाग्निपरिच्छदान् ॥ २१ ॥
चरेद्वने द्वादशाब्दानष्टौ वा चतुरो मुनिः ।
द्वावेकं वा यथा बुद्धिर्न विपद्येत कृच्छ्रतः ॥ २२ ॥
यदा ऽकल्पः स्वक्रियायां व्याधिभिर्जरया ऽथवा ।
आन्वीक्षिक्यां वा विद्यायां कुर्यादनशनादिकम् ॥ २३ ॥
आत्मन्यग्नीन्समारोप्य सन्न्यस्याहंममात्मताम् ।
कारणेषु न्यसेत्सम्यक्सङ्घातं तु यथाऽर्हतः ॥ २४ ॥

भाषा टीका ।

हो ऐसे आचरण करता हुआ विज्ञान को प्राप्त होकर पर-ब्रह्म को प्राप्त होताहै ॥ १६ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

ऋषिलोकं महर्लोकम् ॥ १७ ॥

अकृष्टमकृष्टपच्यम् अकालतः पाककालात्पूर्वमेव निष्पन्नमित्यर्थः । अर्कपक्वं फलादि आहरेदश्नीयात् ॥ १८ ॥

वन्यैर्नीवारादिभिश्चरुपुरोडाशान् कालचोदितान्नित्यान् पुराणं पूर्वसञ्चितम् ॥ १९ ॥

हिमादीन्सहत इति तथा ॥ २० ॥

केशादीन्मलं चाप्रक्षालनेन धारयन् कमण्डल्वादींश्च दधत् ॥ २१ ॥

कृच्छ्रतस्तपःक्लेशाद्यथा बुद्धिर्न नश्येत्तथा चरेत् ॥ २२ ॥

द्वादशाब्दाद्यनन्तरमपि यदि स्वधर्मानुष्ठाने शक्तस्तर्हि वन एव वसेत् यदि तु ज्ञानाभ्यासे योग्यस्तर्हि संन्यसेदित्युत्तराध्याये वक्ष्यति तदुभयरहितस्य तु यत्कृत्यं तदाह, यदाऽकल्पोऽसमर्थः आन्वीक्षिक्यां विद्यायां ज्ञानाभ्यासे ॥ २३ ॥

अनशनादिकं कुर्वतः पूर्वकृत्यमाह—आत्मनीत्यादि, यावत्समाप्ति । यथाऽर्हतो यथायोग्यं स्वकारणेष्वाकाशादिषु संघातं देहं न्यसेत्प्रविलापयेत् ॥ २४ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

वानप्रस्थधर्मान् वक्तुं प्रतिजानीते—वानप्रस्थस्येति । मुनीनां सम्मतान् वानप्रस्थस्य नियमान् धर्मान् वक्ष्यामि. नियमान् विशिनष्टि—यान्नियमानिह लोके ऽनुतिष्ठन् मुनिरञ्जसा ऋषीणां लोकं महर्लोकं प्राप्य भगवल्लोकं वा गच्छेत् ॥ १७ ॥

नियमानाह—नेति । कृष्टपच्यं कृष्याद्युपायैर्निष्पन्नं शालयन्नादिकं नाश्नीयाद्वनस्थ इति शेषः । अकृष्टपच्यमपि फलमूलादिकमकालतः पाककालात् पूर्वमेव परिपाकावस्थायाः पूर्वमेव तथाग्निपक्वमामञ्च नाश्नीयात् उताप्येतु अर्कपक्वं सूर्यकिरणपक्वं फलादिकमेवाहरेदश्नीयात् ॥ १८ ॥

एवं वानस्थो धर्म उक्त अथावश्यकान् नियमानाह-वन्यैरिति । वन्यैर्नीवारादिभिश्चरुपुरोडाशान् कालचोदितान्नित्यान्निर्वपेत् नीवारादिनिष्पन्नैरेव चरुपुरोडाशैर्यथोदितधर्मान् कुर्यादित्यर्थः । नवेनवे नूतने नूतनेऽन्नाद्येऽन्ने लब्धे पुराणं पूर्वसञ्चितमन्नाद्यं परित्यजेत्॥१९॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

अग्न्यर्थमग्नीनां रक्षणार्थमेव उटजं पर्णशालात्मकं शरणं स्वगृहं कुर्यादथवाद्रिकन्दरं पर्वतगुहां वा श्रयेत स्वयन्तु हिमं च वायुश्चाग्निश्च वर्षश्च सूर्यातपश्च तान्सहेत इति हिमवाय्वग्निवर्षार्कातपषाट् ॥ २० ॥

जटाः सन्त्यस्येति तादृशः केशादीन् देहमलश्चाघमर्षणेन धारयन् कमण्डल्वादींश्च दधदग्निपरिच्छदाः स्रुक्स्रुवाद्युपकरणानि च दधत् ॥ २१ ॥

कृच्छ्रतः क्लेशाद्यथा बुद्धिर्न विपद्येत न नश्येत् तथा द्वादशाब्दान् संवत्सरानष्टौ वा चतुरो वाब्दौ द्वौ वा एकं वा चरेन्नियमानिति शेषः ॥ २२ ॥

यदा द्वादशाब्दाद्यनन्तरं व्याध्यादिभिरुत जरया वा स्वक्रियायां स्वकीयधर्माचरणे आन्वीक्षिक्यामात्मविचाररूपायां विद्यायां तुरीयाश्रमधर्मे चाशक्तस्तदाऽनशनादिकमादिशब्देनाग्न्यारोपणादिकं वक्ष्यमाणं विवक्षितं तत्कुर्यात् ॥ २३ ॥

तदेवाह—आत्मनीति । अग्नीनात्मनि समारोप्याहङ्कारममकारौ संन्यस्य त्यक्त्वा यथायोग्यं स्वस्वकारणे संघात भूतसंघातरूपं-शरीरेन्द्रियजातादिक सम्यक् न्यसेल्लीनमनुसन्दधीत ॥ २४ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

ब्रह्मचारिवानप्रस्थनियमानां कृच्छ्रसाध्यत्वेन साध्यात्प्रथमाश्रमधर्मकथनानन्तरं वानप्रस्थधर्मानाह—वानप्रस्थस्येति । ऋषेः सर्वज्ञस्य लोकं वैकुंठं "त्वमग्ने प्रथमो अङ्गिरसः" इति श्रुतेः "ऋषिर्हरौ तापसे च ज्ञानवत्यपि कीर्तितः" इति ॥ १७ ॥

कृष्टपच्यं कर्षणादिना पक्वं व्रीह्यन्नं अकालतो विहितकालमुल्लङ्घ्य आममग्न्यादिनाऽजातपाकम् आमलकादि ॥ १८ ॥

वन्यैर्देवव्रीह्यादिभिः कालचोदितान् तत्तत्कालविहितान् ॥१९॥

अग्न्यर्थमग्निरक्षार्थम् उटजं पर्णशालां शरणं गृहं अन्यदा हिमादिकं श्रयेत आतपनमातपः ॥ २० ॥

अग्निपरिच्छदा दर्भादयः ॥ २१ ॥

न विपद्येत क्लिष्टो न भवेत् ॥ २२ ॥

अकल्पोऽसमर्थः आन्वीक्षिक्यां आत्मविचारलक्षणायाम् अनशनमशनत्यागः तत्राशक्तौ मासे गते पक्षे वा दिवसे वा ऽश्नीयादित्यादिकमादिपदेन गृहीतं यथाह, याज्ञवल्क्यः "पक्षे गते वा प्राश्नीयान्मासे वाऽहनि चागते" इति ॥ २३ ॥

क्रियमाणेन पुरुषेणा ऽध्यात्मं कार्यकारणजातं यत्तत्रेदं कार्यमेतस्मिन्कारणे विलीयत इति ध्यानं कर्तव्यमित्यभिप्रायेणाह, कारणेष्विति । सङ्घातं कार्यजातं न्यासो ज्ञानपूर्वकं ध्यान "कार्यस्य कारणलयज्ञानमात्रं विलापनम्" इति वचनात् ॥ २४ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

अकालतः पाककालात्पूर्वमेव पक्वमित्यर्थः ॥ १८ ॥

वन्यैः नीवारादिभिः निर्वपेत् दद्यात् कालचोदितान् विहितान् ॥ १९ ॥

हिमादीन् सहेत इति सः ॥ २० ॥

मलानि दन्ताद्यधावनोत्थानि ॥ २१ ॥

यदा द्वादशाब्दादि मध्य एव अकल्पः असमर्थः आन्वीक्षिक्यां ज्ञानाभ्यासे ॥ २२—२३ ॥

अनशनादिकरिष्यतः पूर्वकृत्यमाह—आत्मनीत्यादि, यावत् समाप्ति । यथार्हतः यथायोग्य स्वकारणेष्वाकाशादिषु सङ्घातं देहं न्यसेत् प्रविलापयेत् ॥ २४ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

ऋषिलोक महरादिलोकं सकामश्चेद्गच्छेत् उत्करीत्या अध्यात्मध्याननिष्ठस्य तु मुक्तिरुक्तैवेति विवेकः ॥ १७ ॥

कृष्टपच्यं कृष्या निष्पन्नं नाश्नीयात् अकृष्टमकृष्टपच्यमपि फलादिकमकालतः पक्वं नाश्नीयात् वन्यैर्वनोद्भवैः फलादिभिः कालचोदितान् कालेकाले विहितान् चरुपुरोडाशान् निर्वपेत् दद्यात् पुराणं पूर्वसञ्चितम् ॥ १८ ॥ १९ ॥

स्वयं हिमादीन् सहेत इति तथा अग्न्यर्थं तु शरणं वृष्ट्यादिनिवारकं गृहमुटजम् पर्णादिनिर्मितमद्रिकन्दरम् वा श्रयेत् ॥ २० ॥

जटाः सन्त्यस्येति जटिलः केशादीन् मलं चोद्धर्षमाना घकरणेन कमण्डल्वादीन् अग्निपरिच्छदान् शुक्स्रुवादीन् दधत् चरेदित्युत्तरेणान्वयः ॥ २१ ॥

द्वादशाब्दान् अष्टौ वा चतुरो वा एकमब्दं वा यथा कृच्छ्रनः क्लेशाद्बुद्धिर्न विपद्येत नावसीदेत् तथा वने चरेत् विचरेत् ॥ २२ ॥

यदा स्वक्रियायां स्वनियमे अकल्पः असमर्थः स्यात्तदा आन्वीक्षिक्यां ज्ञानाभ्यासे यत्नेन अनशनादिकं वा कुर्यात् ॥२३॥

अनशनादिकं करिष्यतः पूर्वकृत्यमुपदिशति—आत्मनीत्यादिना । आत्मनि अग्नीन्समावेश्य अहं पूज्यात्पूज्यतरपरमपूज्ये आत्मनि परमात्मनि विसृज्य यथार्हतो यथायोग्यं स्वकारणेषु आकाशादिषु सङ्घातं देहं न्यसेत् प्रविलापयेत् लीनं भावयेत् ॥ २४ ॥

---

भाषा टीका ।

नारदजी बोले, कि—अब हम मुनि संमत वानप्रस्थों के उन नियमों को कहते है, इहां पर मनन शील होकर जिन के अनुष्ठान करने से ऋषि लोक को प्राप्त होता

खे खानि वायौ निश्वासांस्तेजस्यूष्माणमात्मवान्।
अप्स्वसृक्श्लेष्मपूयानि क्षितौ शेषं यथोद्भवम् ॥ २५ ॥
वाचमग्नौ सवक्तव्यामिन्द्रे शिल्पं करावपि।
पदानि गत्या वयसि रत्योपस्थं प्रजापतौ ॥ २६ ॥
मृत्यौ पायुं विसर्गं च यथा स्थानं विनिर्दिशेत्।
दिक्षु श्रोत्रं सनादेन स्पर्शमध्यात्मनि त्वचम् ॥ २७ ॥
रूपाणि चक्षुषा राजन्! ज्योतिष्यभिनिवेशयेत्।
अप्सु प्रचेतसा जिह्वां घ्रेयैर्घ्राणं क्षितौ न्यसेत् ॥ २८ ॥
मनो मनोरथैश्चन्द्रे बुद्धिं बोध्यैः कवौ परे।
कर्माण्यध्यात्मना रुद्रे यदहम्ममता क्रिया।
सत्त्वेन चित्तं क्षेत्रज्ञे गुणैर्वैकारिकं परे ॥ २९ ॥
अप्सु क्षितिमपो ज्योतिष्यदो वायौ नभस्यमुम्।
कूटस्थे तच्च महति तदव्यक्ते ऽक्षरे च तत् ॥ ३० ॥
इत्यक्षरतया ऽऽत्मानं चिन्मात्रमवशेषितम्।
ज्ञात्वा ऽद्वयो ऽथ विरमेद्दग्धयोनिरिवानलः ॥ ३१ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायाम् वैयासिक्यां
सप्तमस्कन्धे युधिष्ठिरनारदसम्वादे आश्रमधर्मो नाम
द्वादशोऽध्यायः ॥ १२ ॥

भाषाटीका।

वानप्रस्थ, जोतने बोने से पैदा हुए अन्न को न भोजन करे, और विना जोते बोये होने वाले को भी यदि विना समय का हो, तौ वर्जन करे, अग्नि पक्व वा कच्चा वा सूर्य के तेज से पक्व हो उसका आहार करे, ॥ १८ ॥

वन में स्वयं उत्पन्न होने वाले नीवारादि धान्य से समय २ पर शास्त्र विहित पुरोडाशादि का निर्वाप करे, नये२ अन्नादि के प्राप्त होने पर पुराने संचय का त्याग करता जावे ॥ १९ ॥

अग्नि की रक्षा मात्र के लिये कुटी वा पर्वतादि की कंदरा ( गुहा ) का शरण ले, और आप तौ स्वयं हिम वायु अग्नि वर्षा सूर्य का आतप ( घाम ) इन सबों को सहे ॥ २० ॥

केश मस्तक पर रोम शरीर पर, नख डाढी मूँछ, और शुद्ध स्नान से शरीर पर मैल, जटा कमण्डलु मृग-चर्म दण्ड वल्कल और अग्नि के उपकरण [दर्भादि] को धारण करे ॥ २१ ॥

इस प्रकार वानप्रस्थ द्वादशवर्ष आठ वर्ष चार वर्ष दो वर्ष वा एकही वर्ष वन में निवास करे जिस प्रकार अति दुःख से शरीर न नष्ट होजावे, ॥ २२ ॥

जब व्याधियों से वा जरा अवस्था से अपने क्रिया करने में असमर्थ होजावे, अथवा ज्ञानाभ्यास करने में भी अशक्त होजावे, तब अनशन व्रत को धारण करले, अर्थात् भोजनादि का त्याग करदे ॥ २३ ॥

अहंकार ममकार का त्याग कर आत्मा में अग्नि का समारोपण करके भूत संघात शरीर को अपने २ कारणों में न्यास करे ॥ २४ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका।

तदेव विभज्य दर्शयति, खे आकाशे खानि देहगतच्छिद्राणि आत्मवान्धीमान् शेषमस्थिमांसादिकाठिनांशम् ॥ २५ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

एवं स्थूलशरीरस्य लयमुक्त्वा लिङ्गशरीररूपस्याध्यात्मादित्रयस्य लयमाह—वाचमित्यादिना । तत्र यद्यपि यथोद्भवं लयस्य युक्तत्वादध्यात्मादीनां स्वस्वकारणेषु राजसाहङ्कारादिषु लयो वाच्यस्तथापीह तेषां लयभावने यथाद्वितीयात्मप्रतिपत्तिपरेति यथाकथञ्चिल्लये भाव्ये देवतानां प्रवर्तकत्वेन प्राधान्यादिन्द्रियतद्विषययोर्देवतासु लयः कथ्यते वक्तव्यसहितां वाचमग्नौ न्यसेत् एवं सर्वत्र पदानि पादौ वयसि विष्णौ ॥ २६ ॥

स्वनादेन शब्देन सह अध्यात्मनि वायौ अध्यात्माधिविति पाठे वायाविति ज्ञातव्यम् ॥ २७ ॥

ज्योतिष्यादित्ये रूपाणि रसगन्धयोस्त्वनिन्द्रियादाकर्षकत्वेन प्राधान्यविवक्षया देवतासहितस्येन्द्रियस्य विषये लयमाह,प्रचेतसा सह जिह्वां रसनमप्सु रसरूपासु घ्राणशब्देनाश्विनोरप्युपलक्षणं अश्विभ्यां सह घ्राणं धैर्यैर्गन्धैरुपलक्षितायां क्षिताविसर्थः ॥ २८ ॥

परे कवौ ब्रह्मणि अध्यात्मनाऽहङ्कारेण अध्यात्मतामितिपाठे कर्मणयहङ्कारं चेत्यर्थः कथम्भूते रुद्रे यद्यस्मादहंममतापूर्विका क्रिया भवति तस्मिन् सत्त्वेन चेतसा गुणैर्गुणमयकार्यैः प्रागवशिष्टैर्दैवैः सह । यद्वा सत्त्वादिभिर्गुणैर्हेतुभूतैः वैकारिकं भोक्तृत्वादिविकारवन्तं क्षेत्रज्ञं परे निर्विकारे ब्रह्मणि ॥ २९ ॥

ननु, विकारवतः कथं परेऽविकारे लयः स्यात् ? विकारहेतूनां सर्वोपाधीनां लयद्वारेणाह—अप्स्विति । अपो ज्योतिः तच्च नभः कूटस्थेऽहन्तत्त्वे तच्च कूटस्थं महति महत्तत्त्वे तदव्यक्ते प्रधाने तच्चाव्यक्तमक्षरे परमात्मनि ॥ ३० ॥

इति सर्वोपाधिलयादेनोरवशेषितं चिन्मात्रमात्मानं क्षेत्रज्ञमक्षरतया ज्ञात्वाऽद्वयः सन्विरमेत् दग्धकाष्ठो यथाऽनलः ॥ ३१ ॥

इति श्रीमद्भागवते महापुराणे सप्तमस्कन्धे

श्रीधरस्वामिकृतभावार्थदीपिकायाम्

द्वादशोऽध्यायः ॥ १२ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तदेव सविस्तरमाह—खइत्यादिना । खे आकाशे खानि शरीरगतच्छिद्राणि प्रलीनानि भावयेत् निश्वासान् देहगतानुच्छ्वासादीन् प्राणान् वायौ तथा ऊष्माणं तेजसि न्यसेत् आत्मवान् धीमान् असृग्रुधिरं च श्लेष्म च पूयं मूत्रादिकं चैतान्यप्सु शेषमास्थिमांसादिकं कठिनांशं क्षितौ इत्येवं यथोद्भवं यद्यत उत्पन्नं तथा तदनतिक्रमेण स्वकारणेषु प्रलीनानि अनुसन्दधीत ॥२५॥

एवंभूतसङ्घातात्मकशरीरावयवानां यथोद्भवं स्वस्वकारणे लयाऽनुसन्धानमुक्तमथ सव्यापाराणां वागादीन्द्रियाणां स्वाऽधिदैवतेषु लयानुसन्धानप्रकारमाह—वाचमिति । यद्यप्यधिदैवतेभ्यो नेन्द्रियाणामुत्पत्तिरिति तत्र तेषां लयाऽनुसन्धानकथनमसङ्गतं तथापि तेषां तत्प्रवर्तकत्वेन प्राधान्यात्तैस्तावत्संश्लेषाऽनुसन्धानं तेषामपि स्वकारणे लयानुसन्धानाय कथ्यते——वक्तव्यमुक्तिः भावे तव्यः सवक्तव्यां सोक्तिकां वाचं वागिन्द्रियमग्नावधिदैवते विनिर्दिशेदित्युत्तरेणान्वयः । करौ शिल्पमादानादिरूपं व्यापारं चेन्द्रे तदधिदैवते गत्या सह पादौ वयसि कालात्मके विष्णौ-रत्या सहोपस्थमिन्द्रियं प्रजापतावधिदैवते ॥ २६ ॥

सोत्सर्गं पुरीषोत्सर्गादिव्यापारसहितं अपानं पायुमिन्द्रियं मृत्यावधिदैवते यथास्थानं यत् यस्याधिदैवतरूपं स्थानं तदनतिक्रमेण निर्दिशेत् संश्लिष्टमनुसन्दधीत एवं कर्मेन्द्रियाणां तदधिदैवते संश्लेषाऽनुसन्धाने क्रम उक्तः । अथ श्रोत्रादिज्ञानेन्द्रियाणामाह, दिक्ष्विति । श्रोत्रमिन्द्रियं नादेन शब्देन विषयभूतेन सह दिक्षु अधिदेवतासु त्वगिन्द्रियं स्पर्शेन विषयेण सहाध्यात्मनि वायावधिदैवते; हे राजन् ! चक्षुरिन्द्रियेण सह रूपाणि तद्विषयभूतानि ज्योतिषि सूर्येऽधिदैवतेऽभिनिवेशयेदभिनिविष्टं संश्लिष्टं भावयेत् ॥ २७ ॥

जिह्वां रसनेन्द्रियमप्सु रसेषु विषयभूतेषु अप्शब्दो रसोपलक्षकः प्रचेतसा वरुणेनाऽधिदैवतेन सहाभिनिवेशयेदित्यनुषङ्गः अपाणां संश्लेषमात्रविवक्षया प्रचेतसेत्यप्रधाने तृतीया ध्रैयैर्गन्धैर्विषयैः सह घ्राणमिन्द्रियं क्षितौ क्षितिशब्दोपलक्षितयोरश्विनोर्न्यसेत् मनोरथैर्व्यापारैः सह मन इन्द्रियं चन्द्रेऽधिदैवत बोध्यैर्विषयैः सह बुद्धिं परे श्रेष्ठे कवौ चतुर्मुखेऽध्यात्मना आत्मनि देहवर्तमानेनाहङ्कारेण सह तत्कर्माणि देहात्माभिमानादिरूपाणि अहङ्काराधिदैवते रुद्रे विन्यसेत् अहङ्कारकर्माण्येव दर्शयति, यद्यस्मादहंकारात् अहंममताक्रियाः । देहेऽहंबुद्धिर्देहानुबन्धिषु ममकारस्तन्मूलाः क्रियाः प्रवृत्तयश्च भवन्ति चित्त चिन्तावस्थमन्तःकरणं सत्त्वेन सत्त्वगुणकार्यभूतस्वच्छत्वप्रकाशत्वादिरूपचित्तवृत्त्या सह क्षेत्रज्ञेऽधिदैवते न्यसेत् ततो वैकारिकं सात्विकाहङ्कारं गुणैः स्वकार्यभूतैरिन्द्रियैः सह परे तत्कारणे महत्तत्त्वे न्यसेत् ॥ २८ ॥ २९ ॥

एवं वैकारिकाहङ्कारस्य महति लयाऽनुसन्धानमुक्तं पूर्वं खे खानीत्यादिना तत्तत्कार्यप्रलयानुसन्धानमुक्तम् अथ तत्त्वैः सह तत्कारणभूतस्य तामसाहङ्कारस्य महति लयाऽनुसन्धानप्रकारमाह—अप्स्वित्यादिना । तावत्क्षितिमप्सु आपो ज्योतिषि अदः ज्योतिर्वायावमुं वायुं नभसि आकाशे तच्च कूटस्थे तामसाहङ्कारे तच्च महति महत्तत्त्वे तच्च महत्तत्त्वम् अव्यक्ते चित्समष्टिसंसृष्टे अचित्समष्ट्यात्मके प्रधाने तच्चाक्षरे परमात्मात्मके जीवे न्यसेत् ॥ ३० ॥

अत एवमवशेषितं प्रत्यगात्मानमक्षरतया परमात्मशरीरात्मकत्वस्वाभाविकस्वरूपतया ज्ञात्वाऽद्वयः आत्मनि जातिगुणाद्यभिमानरहितः विरमेत् दग्धयोनिर्निःशेषदग्धकाष्ठोऽनलोऽग्निर्यथा विरमति तद्वत् धर्मानुष्ठाने ऽशक्तो वानप्रस्थ एवमनुसन्दधानो देहत्यागायानशनव्रतं कुर्यादित्यर्थः ॥ ३१ ॥

इति श्रीमद्भागवते महापुराणे सप्तमस्कन्धे

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायाम्

द्वादशोऽध्यायः ॥ १२ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

यथार्हत इत्युक्तं विवृणोति—खे खानीति । खे आकाशे खानि शरीरावच्छिन्नाकाशानि श्वासं शरीरवायुबाह्यवायौ शारीरमूष्माणं कारणतेजसि आत्मवान् परमात्मज्ञानवान् वशीकृतमना वा श्लेष्मपूयासृक्कार्याण्यप्सु लीयन्त इति चिन्तयेत् शेषं गन्धं क्षितौ नन्वाकाशादेर्लाघवादीनामुत्पत्तेः कथमियतामेव लयश्चिन्त्यत इति तत्राह—यथोद्भवमिति—

"आकाशाल्लाघवं सौक्ष्म्यं शब्दं श्रोत्रं तथा बलम् ।
वायोस्तु प्रेरणा चेष्टा व्यूहनं सौक्ष्म्यमेव च ॥
अग्नेस्तु दर्शनं शक्तिरौष्ण्यं रूपप्रकाशकम् ।
रसेभ्यो रसनं शैत्यं स्नेहक्लेदनमार्दवम् ।
भूमेर्गन्धस्तथा घ्राणं गौरवं मूर्तिरेव च" ॥

इति वचनात् उत्पत्त्यनुसारेण लयश्चिन्तनीय इत्यर्थः ॥ २५ ॥

इदानीं वागादीन्द्रियाणां अग्न्यादिदेवताधीनत्वमपि चिन्तनीयमित्याह—वाचमिति । सवक्तव्यमिति क्रियाविशेषणं प्रजापतौ दक्षे ॥ २६ ॥

यथास्थानमित्यनेनाभिमानिनामभिमन्यमानानां तत्तदुत्पत्तिकारणमनुसृत्येत्युच्यते स्वनादेन श्रोतव्येन सह त्वचं त्वगिन्द्रियं स्पर्शेन सह वायाविति शेषः ॥ २७ ॥

ज्योतिष्यादित्ये निवेशयेत् निविशतीति चिन्तयेत् जिह्वां रसनेनेति शेषः परे कवौ बृहस्पतौ उशनसोऽपि कविशब्दवाच्यत्वात्तद्व्यावृत्त्यर्थं पर इति अध्यात्मनाऽहङ्कारेण सह कर्माणि रुद्रे तत्र हेतुर्यदहमिति क्रिया यत् अहं ममता अहङ्कारादुत्पन्नत्वेन संमता इति यत्तस्मादिति शेषः सत्त्वेन साधुपुण्यकर्मणा सह चित्तं क्षेत्रज्ञे हिरण्यगर्भे निवेश्य एतल्लक्षणं विलयं स्मृत्वा वैकारिकनामानं हिरण्यगर्भं गुणैः सह क्षेत्रज्ञाख्ये परे परमात्मनि लक्ष्मीद्वारा लयमार्गे चिन्तयेत्—

"चित्तं हिरण्यगर्भे तु विलाप्य परमात्मनि ॥
क्षेत्रज्ञाख्ये लापयेच्च ततोनान्यत्स्मरेद्बुधः"

इति चात्रमानम् ॥ २८ ॥ २९ ॥

इदानीमबादीनां लयप्रकारं निरूपयति—अप्स्विति । तच्च नभः कूटस्थे वैकारिकतैजसतामसकूटरूपे ऽहङ्कारतत्त्वे तदहङ्कारतत्त्वं महति महत्तत्त्वे तन्महत्तत्त्वमव्यक्ते तदव्यक्तमक्षरे हरौ विलयप्रकारं स्मरेत् जडस्य स्वकारणैक्यमभिमानिनो जीवस्य प्रवेशलक्षणं तत्तत्कार्यस्थहिरण्यगर्भस्योत्तररूपेणैक्यं हिरण्यगर्भस्थहरेरप्युत्तरोत्तररूपैकीकरणमिति लयभेदं तु शब्दो ज्ञापयति ॥ ३०

इति शब्दो लयसमाप्तिसूचकः "कूटस्थोऽक्षर उच्यते" इति वचनात् अक्षराख्यां चित्प्रकृतौ स्थित्वा ऽक्षरलक्षणानित्यत्वहेतुत्वादक्षरनामत्वेन स्थितमात्मानं परमात्मानं चिन्मात्रमवशेषितं सृष्ट्यादिव्यापारोदासीनं ज्ञात्वा ऽद्वयो हरिव्यतिरिक्तवस्तुस्वातन्त्र्यस्मरणरहितो ऽथ कृत्याद्विरमेदित्यन्वयः कृत्याद्विरमोक्तिरत्र कथमित्याह—दग्धयोनिरिति । दग्धयोनिरिन्धनलक्षणा येन स तथा यथाऽग्नेरिन्धनदहनात्परं कृत्यं नास्ति तथा श्रीनारायणोपासकस्य सविकासं तत्त्वज्ञानात्परं कृत्यं नेति भावः "न हरेस्स्मरतः कृत्यं दग्धेन्धनहुताशवत्" इति वचनात् ॥ ३१ ॥

इति श्रीमद्भागवते महापुराणे सप्तमस्कन्धे
श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम्
द्वादशोऽध्यायः ॥ १२ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

इति श्रीमद्भागवते महापुराणे सप्तमस्कन्धे
श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे
द्वादशोऽध्यायः ॥ १२ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

खानि देहच्छिद्राणि अभिनिवेशयेदित्युत्तरेणैव सर्वेषामन्वयः शेषं अस्थिमांसादिकाठिन्यांशम् ॥ २५ ॥

स्थूलशरीरस्य लयमुक्त्वा लिङ्गशरीरलयमाह—वाचमिति । इन्द्रियाणां तद्विषयाणाञ्च प्रवर्त्तकत्वेन देवतास्वेवात्र लय उक्तः, वह्नौ विष्णौ यथास्थानं स्थानमनतिक्रम्य तत्तत् स्थानं स्पृष्ट्वा विनिर्दिशेत् प्रथम इमं वाचमग्नौ विलापयामीति प्रयुञ्जीत ततोऽभिनिवेशयेदित्यन्वयः ॥ २६ ॥

स ज्ञानी नादेन सहेत्यर्थः अध्यात्मनि वायौ ज्योतिषि सूर्ये ॥२७॥

प्रकृष्टं चेतो यत्र स प्रचेतो मधुरादिरसस्तेन सह जिह्वां अप्सु जलाधिष्ठातरि वरुणे घ्रेयैर्विविधगन्धैः सह घ्राणेन्द्रियं क्षितौ क्षीयते लीयते ऽत्रेति क्षितिस्तदधिष्ठातृदेवता तस्यामश्विनावित्यर्थः । मनोरथैर्मननीयैर्विषयैः बोध्यैर्बुद्धिविषयैः परे कवौ ब्रह्मणि अध्यात्मना अहङ्कारेण सहकर्माणि तद्वृत्तिपर्यायात् रुद्रे यद्यस्मादहं ममता पूर्विका क्रिया भवति तस्मिन् रुद्रे सत्त्वेन चेतनया सह क्षेत्रज्ञे चित्ताधिष्ठातरि वासुदेवे गुणैर्गुणकार्यैर्दैवैः सहेति वासुदेवस्य गुणकार्यत्वाभावात्तदितरैरित्यर्थः । वैकारिकं जीवं परे ब्रह्मणि ॥ २८—२९ ॥

ननु, तदपि कथमद्वयब्रह्मज्ञानं, स्यात् ? समष्टितत्त्वानां पृथिव्यादीनां वर्त्तमानत्वादिति चेत्तेषामपि यथोद्भवं लयं ज्ञानवत एवेत्याह—अप्स्विति । अदो ज्योतिः अमुं वायुं तच्च नभः कूटस्थे ऽहङ्कारे तच्च कूटस्थं महति महत्तत्त्वे तदव्यक्ते प्रधाने तदक्षरे परमात्मनि ॥ ३०—३१ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् ।
सप्तमे द्वादशोऽध्यायः सङ्गतः सङ्गतस्सताम् ॥ १२ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

एवं स्थूलदेहलयमुक्त्वा सूक्ष्मदेहावयवानां सविषयाणामिन्द्रियाणां तत्तत्प्रवर्त्तके तत्तदधिदैवते तत्तन्नियम्यतया सम्बन्धमात्रं सूचयन् तत्तत्कारणे लयमाह—वाचमिति त्रिभिः। वागादिकं वक्तव्यादिसहितमग्न्यादौ प्रवर्त्तके नियम्यतया विनिर्दिशेत् यथास्थानम् उत्पत्तिस्थानमनतिक्रम्याभिनिवेशयेच्च विलीनं भावयेदिति त्रयाणामन्वयः। अग्न्याद्युत्पत्तिस्थानं सात्त्विकाहंकारस्तेषां लयं तत्र भावयेत् वागादीनामुत्पत्तिस्थानं राजसाहंकारस्तेषां लयं तत्र भावयेत् अथ पदयोजना सवक्तव्यां वाचमग्नौ अधिदैवते नियम्यतया विनिर्दिशेत् यथास्थानमभिनिवेशयेच्च एवमग्रेपि पदानि पादौ वयसिविष्णौ॥ २६॥

सनादेन शब्देन सह अध्यात्मनि अधिदैवते वायौ॥ २७॥

ज्योतिषि आदित्ये अप्सु रसरूपां सलोलुपां जिह्वां रसनेन्द्रियं प्रचेतसा अधिदैवतेन प्रवर्त्यां यथास्थानं निवेशयेत् ग्रेयैर्गन्धैः सघ्राणम् अश्विदैवत्यं क्षितौ उत्पत्तिभूमौ राजसाहंकारे एव॥ २८॥

अन्तःकरणस्य चतुर्विधस्य लयं सात्विकाहङ्कारे आह—मन इति। मनः मनोरथैः सह चन्द्रे बोध्यैः सह बुद्धिं परे कवौ ब्रह्मणि च कर्माणि अहङ्कारविषयाणि अध्यात्मना अहंकारेण सह यद्यस्माद्रुद्रात्प्रवर्तकादहममतापूर्विकाक्रिया भवति तस्मिन् रुद्रे च चित्तं गुणैश्चित्तविषयभूतैः सह क्षेत्रज्ञे च नियमतया स्थितं विभाव्येति शेषः सत्त्वेन वैकारिकाहंकारेण कारणेन योजयेदिति शेषः अन्तःकरणचतुष्टयं वैकारिके ह्यभिनिवेशयेदित्यर्थः। वैकारिकं तु परे तत्कारणे महत्तत्त्वे योजयेदित्यर्थः॥ २९॥

महाभूतानां तामसाहंकारे तस्य महत्तत्त्वे तस्य प्रकृतौ प्रकृतेः परमात्मनि च लयमाह—अप्सु इति। क्षित्यादिभूतानि अबादिषु न्यसेत् कूटस्थे तामसाहङ्कारे अव्यक्ते प्रकृतौ तत्तदव्यक्तसत्तरे परमात्मनि न्यसेत् चकारोऽनुक्तसमुच्चयार्थः॥ ३०॥

इत्येवं दग्धयोन्यनल इवाद्वयः देहेन्द्रियादिद्वयरहितोऽत एवावशेषितं चिन्मात्रं ज्ञानस्वरूपमात्मानं जीवं अक्षरतया परमात्मांशत्वेन तदपृथक्त्वतयाज्ञात्वा विरमेत् मुक्तो भवेत्॥ ३१॥

इतिश्रीमद्भागवते महापुराणे सप्तमस्कन्धे
श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे
द्वादशोऽध्यायः॥ १२॥

भाषा टीका।

जैसे कि! छिद्रों को आकाश में श्वासों को वायु मे उष्णता को तेज में, रुधिर कफ पीवको जल में बाकी पृथिवी के विकार अस्थि आदि को पृथिवी में इस प्रकार जो जहां से उत्पन्न है उसको उसी तत्व में लीन होने का अनुसन्धान करता जाय॥ २५॥

ऐसे ही वक्तृता सहित वाणी को अग्नि में शिल्प अर्थात् हस्तों के कर्म सहित हस्तों को इन्द्र में पाद के कर्म गति सहित पगों को पद के अधिष्ठातृ देवता विष्णु में, आनंद सहित उपस्थ इन्द्रिय को प्रजापति में निर्देश करे,॥ २६॥

विसर्ग सहित पायु (गुदा) इन्द्रिय को मृत्यु में यथा स्थान निर्देश करे, शब्द सहित श्रोत्र इन्द्रिय को दिशाओं में स्पर्श सहित त्वचा को वायु मे लीन होने का अनुसन्धान करे,॥ २७॥

चक्षु इन्द्रिय सहित रूपको ज्योति में, प्रचेता सहित जिह्वा को जल में अश्विनी कुमार सहित नासिका को पृथिवी मे लीन करे॥ २८॥

मनोरथ सहित मनको चन्द्र में, बोध सहित बुद्धि को ब्रह्मा में, अध्यात्म सहित कर्मों को रुद्र में वे रुद्र कैसे हैं अहङ्कार ममकार जिनसे होता है, सत्त्व के सहित चित्त को क्षेत्रज्ञ मे और क्षेत्रज्ञ जीवको परब्रह्म मे लीन माने यहां लीन होना ऐसा समुझना चाहिये कि जैसे वृक्ष में पक्षी लीन होजाते है अर्थात् पृथिवी को जल में जलको तेज में तेज को वायु में वायु को आकाश में आकाश को अहङ्कार में अहङ्कार को महत्तत्व में महान् को प्रकृति में प्रकृति को परमेश्वर में लीन भावना करे॥ ३०॥

इस प्रकार चैतन्यमात्र अवशिष्ट अक्षर आत्मा को जानकर तदनंतर अद्वितीय आपही एक विराम को प्राप्त होजावे, जैसे कि? काष्ठ के जलजाने से अग्नि आपही शांत होजाती है॥ ३१॥

इति श्रीमद्भागवत महापुराण सप्तमऽस्कन्ध में
द्वादशअध्याय की भागदत्ताचार्यकृत भाषाटीका
समाप्त॥ १२॥

इति श्रीमद्भागवते महापुराणे सप्तमस्कन्धे द्वादशोऽध्यायः॥ १२॥

## ॥ त्रयोदशोऽध्यायः ॥

नारद उवाच ।

कल्पस्त्वेवं परिव्रज्य देहमात्रावशेषितः ।
ग्रामैकरात्रविधिना निरपेक्षश्चरेन्महीम् ॥ १ ॥
बिभृयाद्यद्यसौ वासः कौपीनाच्छादनं परम् ।
त्यक्तं न दण्डलिङ्गादेरन्यत्किञ्चिदनापदि ॥ २ ॥
एक एव चरेद्भिक्षुरात्मारामोऽनपाश्रयः ।
सर्वभूतसुहृच्छान्तो नारायणपरायणः ॥ ३ ॥
पश्येदात्मन्यदो विश्वं परे सदसतोऽव्यये ।
आत्मानं च परं ब्रह्म सर्वत्र सदसन्मये ॥ ४ ॥
सुप्तप्रबोधयोः सन्धावात्मनो गतिमात्मदृक् ।
पश्यन्बन्धं च मोक्षं च मायामात्रं न वस्तुतः ॥ ५ ॥
नाभिनन्देद्ध्रुवं मृत्युमध्रुवं वाऽस्य जीवितम् ।
कालं परं प्रतीक्षेत भूतानां प्रभवाप्ययम् ॥ ६ ॥
नासच्छास्त्रेषु सज्जेत नोपजीवेत जीविकाम् ।
वादवादांस्त्यजेत्तर्कान्पक्षं कं च न संश्रयेत् ॥ ७ ॥
न शिष्याननुबध्नीत ग्रन्थान्नैवाभ्यसेद्बहून् ।
न व्याख्यामुपयुञ्जीत नारम्भानारभेत्क्वचित् ॥ ८ ॥
न यतेराश्रमः प्रायो धर्महेतुर्महात्मनः ।
शान्तस्य समचित्तस्य बिभृयादुत वा त्यजेत् ॥ ९ ॥
अव्यक्तलिङ्गो व्यक्तार्थो मनीष्युन्मत्तबालवत् ।
कविर्मूकवदात्मानं स दृष्ट्या दर्शयेन्नृणाम् ॥ १० ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

त्रयोदशे यतेर्धर्मः साधकस्योच्यते महान् ।
अवधूतेतिहासेन सिद्धावस्था च वर्ण्यते ॥ १ ॥

एवं ध्यात्वा कल्पो नाशनादिकं कुर्यात् आन्वीक्षिक्यां कल्पस्त्वेवं ध्यात्वा परिव्रजेति सम्बन्धः ? किमत्रत्याज्यम् देहव्यतिरिक्तं सर्वमित्याह—देहमात्रेति । तस्य धर्मानाह ग्रामैकरात्रेति नवभिः ॥ १ ॥

कौपीनं गुह्यमाच्छाद्यते यावता तावन्मात्रं परं केवलमन्यदिति वा त्यक्तं प्रैषोच्चारणात्पूर्वमेव ॥ २ ॥ ३ ॥

सदसतः परे कार्यकारणव्यतिरिक्ते ॥ ४ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

नन्वात्मानं परं ब्रह्मेति कथं सामानाधिकरण्यनिर्देशः ? नहि बद्धमुक्तयोरैक्यं सम्भवति तत्राह—सुप्तेति । सुषुप्तौ हि तमसावृतमात्मतत्त्वं जाग्रत्स्वप्नयोस्तु विक्षिप्तं प्रकाशते सन्धौ तु न तमो नापि विक्षेपः अतस्तदा आत्मदृगात्मानं लक्षीकृत्य स्थितः स्वात्मनो गतिं तत्त्वं पश्यन् अत एव बन्धं मोक्षं च मायामात्रं पश्यन् आत्मानं परं ब्रह्म सर्वत्र पश्येदित्यन्वयः तदुक्तं योगग्रन्थे—

> "निद्रादौ जागरस्यान्ते यो भाव उपजायते ।
> तं भावं भावयन्नित्यं मुच्यते नेतरो यतिः" ॥

इति ॥ ५ ॥

अस्य देहस्य प्रभवोऽप्ययश्च यस्मात्तं कालम् ॥ ६ ॥

असच्छास्त्रेष्वनात्मपरेषु जीविकां नक्षत्रविद्यादिवृत्तिम् वाद-वादान् जल्पवितंडादिनिष्ठान् कञ्च कमपि पक्षं निर्बन्धेन न संश्रयेत् ॥ ७ ॥

शिष्याननुबध्नीत प्रलोभनादिना बलान्नापादयेत् आरम्भान्मठादिव्यापारान् ॥ ८ ॥

परमहंसस्य विशेषमाह—न यतेराश्रमो धर्मार्थः कथम्भूतस्य यतेः महात्मनः तस्य लक्षणं शान्तस्येत्यादि प्राय इत्यस्यार्थं भावः ज्ञानोत्पत्तिपर्यन्तं बहूदकादिलिङ्गमाश्रित्य सत्त्वशुद्ध्यर्थं यमान्नियमांश्चाचरन्नेव ज्ञानोत्पत्तौ यतेत उत्पन्ने तु ज्ञाने न नियमैः कृत्यमस्ति यमाश्च स्वत एव स्युः अतस्तदा लिङ्गादिभिः प्रयोजनाभावाल्लोकसंग्रहार्थं धारयेद्वा त्यजेद्वेति ॥ ९ ॥

तस्यैव ज्ञानदार्ढ्याभावे योगभ्रंशपरिहारार्थमाह—न बहिर्व्यक्तं लिंगं यस्य व्यक्तोर्थः प्रयोजनमात्मानुसन्धानं यस्य स मनीष्युन्मत्तवद्बालवच्च कविरपि मूकवदात्मानं नृणां दृष्ट्या दर्शयेत् न यथोन्मत्तादिरूपं मन्येरंस्तथा वर्तेत स्वदृष्ट्येति पाठे बाह्यानुसन्धानाभावेनेत्यर्थः ॥ १० ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

एवं स्वधर्मानुष्ठाने तुर्याश्रमधर्मे चाशक्तस्य वानप्रस्थस्यैवमनुसंधानपूर्वकानशनव्रतेन देहत्याग उक्तः अथ तच्छक्तस्य तुर्याश्रमपरिग्रहं वदंस्तद्धर्मानाह त्रयोदशेनाध्यायेन—कल्पइति । आश्रमान्तरधर्मानुष्ठानसमर्थश्चेदेवमनुसंदधत्परिव्रज्य संन्यस्य देहमात्रेणावशेषितः देहातिरिक्तं तदनुबन्धि सर्वं परित्यज्येत्यर्थः ग्रामैकरात्रविधिना एकैकस्मिन् ग्रामे एकैकरात्रनयनविधिना निरपेक्षो महीं चरेत् ॥ १ ॥

यद्यसौ परिव्राट् त्यक्तं देहाद्यतिरिक्तं किञ्चन विभृयाच्चेत्तर्हि कौपीनमाच्छादने येन तच्च वासः परं केवलं बिभृयात् दण्डकमण्डलुभ्यामन्यत्किञ्चिदप्यनापदि न बिभृयात् दण्डपात्रग्रहणमुपवीतकटिसूत्रादेरप्यावश्यकस्योपलक्षणम् अनापदीत्यनेन शीताद्यसहिष्णुत्वरूपापदि तु किञ्चित्तन्निवारकं वासोन्तरादिकमपि विभृयादिति सूचितम् ॥ २ ॥

अनपाश्रयः परित्यक्तनियतनिवासदेशः एकोऽसहायः भिक्षुः भिक्षोपजीवी आत्मारामश्चरेत् सर्वेति सर्वभूतेषु तरतमेषु सुहृद्भगवदात्मकत्वानुसन्धानेन नितरामनुकूलः शान्तः क्रोधरहितः नारायणएव परायणं प्राप्यं प्रापकमाधारश्चेत्यध्यवसाययुक्त इत्यर्थः ॥ ३ ॥

सदसतः चिदचिद्भ्यां परे विलक्षणोऽतएवाव्यये स्वरूपतः स्वभावतश्च विकाररहिते आत्मनि परमात्मन्यदः इदं विश्वं पश्येत्तदायत्तसत्तास्थितिप्रवृत्तिमत्त्वेन तच्छरीरत्वेन च पश्येदित्यर्थः । तथा परं ब्रह्मात्मानं परमात्मानं सदसन्मये चिदचिदात्मके सर्वत्र जगति नियंतृतयात्मतया च स्थितं पश्येदेव वासुदेवशब्दार्थानुसन्धानमुक्तम् ॥ ४ ॥

सुप्तेति । सुप्तप्रबोधयोः सन्धौ सायंप्रातरित्यर्थः यद्वा तयोस्सन्धिमध्यमावस्थायामित्यर्थः स्वप्नावस्था तदानीं शयानदेहात्मनोप्यतिरेकः सुग्रहः परमात्मनो विचित्रसृष्टियोगश्च "न तत्र रथानरथयोगान्पन्थानो भवन्त्यथ रथानरथयोगान्पथः सृजते" इति श्रुतिः एवं च सुप्तप्रबोधयोः सन्धौ स्वप्नावस्थायामात्मदृग्देहविलक्षणप्रत्यगात्मस्वरूपविमर्शनपरः आत्मनः परमात्मनो गतिं विचित्र पथरथयोगादिस्रष्टृत्वादिप्रकारं पश्येदनुसन्दधीत तथा बन्धं मोक्षं च मायामात्रं न वस्तुत इति पश्येत् सम्बन्धादिकमीश्वरसंकल्परूपज्ञानाधीनं नत्वात्मस्वरूपप्रयुक्तमिति पश्येदित्यर्थः । मायाशब्दश्च ज्ञानपर्यायः "माया च वयुनं ज्ञानम्" इति नैघण्टुकाः बन्धमोक्षयोश्च परमात्मसङ्कल्पाधीनत्वं सूचितम् "पराभिध्यानात्तु तिरोहितं ततो ह्यस्य बन्धविपर्ययौ" इति बन्धमोक्षयोः प्रकृत्यन्वयव्यतिरेकरूपत्वाच्च मायामात्रत्वं ननु कथंमोक्षस्य स्वरूपप्रयुक्तत्वाभावः ? बन्धप्रतियोगित्वादिति ब्रूमः नह्यबद्धस्य मोक्षसंभवः ॥ ५ ॥

ध्रुवं निश्चितं मृत्युमध्रुवमस्थिरं जीवितं च नाभिनंदेन्मृत्युमिनिदृष्टान्तार्थम् वा यथा मृत्युं नाभिनन्दन्ति तथाऽध्रुवं जीवनमपि नाभिनन्देदिति परं केवलं तु भूतानां प्रभवाप्ययौ यस्मात्समुत्पत्तिप्रलयहेतुं कालमेव प्रतीक्षेत कालगतिमेवालोचयेदित्यर्थः ॥ ६ ॥

असच्छास्त्रेष्वनाध्यात्मशास्त्रेषु न सज्जेत न सक्तो भवेत् जीविकां जीवनोपायभूतां वृत्तिं नोपजीवेत् अतिवादान् जल्पवितण्डादिनिष्ठान् तर्कान् त्यजेत् कमपि पक्षमाग्रहेण नाश्रयेत् ॥ ७ ॥

शिष्याननुबध्नीत तद्वित्तलोभाभावादिति भावः बहून् ग्रन्थान्नैवाभ्यसेन्नैवपठेत् व्याख्यां नोपयुञ्जीत न पाठयेदित्यर्थः चित्तस्यान्यपरत्वप्रसङ्गादिति भावः आरंभान् माठपत्याद्यारंभान् क्वचिदपि नारभेत न कुर्यात् निग्रहानुग्रहादिवैषम्यप्रसङ्गादिति भावः यद्वा आरम्भान् गृहाद्यारंभान्नारभेदित्यर्थः ॥ ८ ॥

शान्तस्य समचित्तस्य महात्मनो यतेराश्रमः प्रायो न धर्महेतुः अपितु ज्ञानप्रयोजकः अतो धर्मं विभृयाद्वा त्यजेद्वा धरणत्यागौ व्यवस्थितविकल्पौ ज्ञानहीनः सन्यासाश्रमनिष्ठः धर्मं

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

प्रयोजनत्वेन बिभृयात् ज्ञानवांस्तु धर्माख्यं फलं त्यजेदित्यर्थः । यद्वा -उपवासादिदेहक्लेशकररूपधर्मः शरीरदौर्बल्यमुखेन योगविघातको न चेत् बिभृयात् विघातकश्चेत्तं त्यजेदित्यर्थः । यद्वा ननु, शिष्यानुबन्धनग्रन्थाभ्यासव्याख्योपयोजनादिभिः कश्चिद्धर्म एवार्जितः स्यादिति किमर्थं ते निषिध्यन्ते ? इत्यत्राह—नेति । यदि यतेराश्रमो धर्मार्थः स्यात्तर्हि कर्तव्याः स्युः शिष्याऽनुबन्धनादयः स तु प्रायशो न धर्महेतुः यत्याश्रमस्य धर्महेतुत्वाभावे हेतुत्वं वदन् तं विशिनष्टि—शान्तस्येति । शान्तस्य जितेन्द्रियस्य धर्मसाध्यैहिकामुष्मिकशब्दादिविषयभोगादिरहितस्य समचित्तस्य अधर्मस्य इव धर्मस्यापि स्वफलजननद्वारा मुक्तिप्रतिबन्धकत्वज्ञानवत्त्वेन धर्माऽधर्मयोः समचित्तस्य प्राय इत्यनेन कचिद्यत्याश्रमस्यापि धर्महेतुत्वमस्त्येवेति सूचितम् । अतो यदि यतिधर्मप्रयोजनकयत्याश्रमनिष्ठश्चेच्छिष्याऽनुबन्धनादीन् बिभृयात् धर्महेतुत्वाभावे तु त्यजेदित्यर्थः ॥ ९ ॥

ननु, शिष्याद्यनुबन्धनाद्यभावे स्वस्य ज्ञानित्वादिमाहात्म्यं न प्रकाशितं स्यादित आह—अव्यक्तलिङ्ग इति । अव्यक्तलिङ्गो अस्फुटचिह्नः स्वमाहात्म्यमनाविष्कुर्वन् वर्तेत यतिरिति भावः तथा च शारीरकं सूत्रम् "अनाविष्कुर्वन्नन्वयात्" इति. श्रुतिश्च "तस्माद्ब्राह्मणः पाण्डित्यं निर्विद्य बाल्येन तिष्ठासेत्" इति बालस्य कर्म स्वमाहात्म्याऽनाविष्काररूपं बाल्यं तेन तिष्ठासेदित्यर्थः । ज्ञानित्वाद्यनाविष्काराभिप्रायेण दृष्टान्तयति—उन्मत्तबालवदिति । उन्मत्तवद्बालवच्च किञ्चाव्यक्तार्थः परैरविदितप्रयोजन. मुनिरात्मस्वरूपशीलनशीलश्च वर्तेताऽऽत्मस्वसंशीलनं शुभाश्रयपरिशीलनमेतदेव "बाल्यञ्च पाण्डित्यञ्च निर्विद्याऽथ मुनिर्भवति" इति मुनिशब्देन विहितं तद्विषयकं चेदं सूत्रम् "सहकार्यन्तरविधिः पक्षेण तृतीय तद्वतो विध्यादिवत् । ३ । ४।४६।" इति. नत्वत्र बालवदिति दृष्टान्तेन बालस्य यत्कर्म कामचारादिकं तदभिप्रेतम् "नाविरतो दुश्चरितान्नाशान्तो नाऽसमाहितः नाऽशान्तमानसो वापि प्रज्ञानेनैनमाप्नुयात्" इति दुश्चरितस्य परिनिष्पन्नसाधनविरोधित्वश्रवणात् मनीष्युन्मत्तबालवदिति पाठे मनीष्युन्मत्तादिवच्चरेदिति यथोक्त एवार्थः । कविर्विद्वानपि सुनिपुणं भाषितुं समर्थोऽपि स्वात्मानं मूकमिव नृणां दृष्ट्या दर्शयेत् यथोन्मत्तादिरूपं मन्येरंस्तथा वर्तेत स्वदृष्ट्येति पाठे स्वदृष्ट्या देहविलक्षणया स्वात्मदृष्ट्येत्यर्थः ॥ १० ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

क्रमप्राप्तं यतिधर्मं निरूपयति—कल्प इति । एवमुक्तं कृच्छ्रं सोढुं कल्पः अप्यर्थस्तुशब्दस्तर्हि परिव्रज्य सन्न्यस्य महीं चरेदित्यन्वयः । देहमात्रावशेषित इत्यनेन प्रव्रजनं विशिनष्टि—

"अधीतवेदो जपकृत्पुत्रवानन्नदोऽग्निमान् ।
शक्त्या च यज्ञकृन्मोक्षे मनः कुर्यात्तु नान्यथा" ॥ इति

नियमं तुशब्देन वारयति, "यदहरेव विरजेत् तदहरेव प्रव्रजेत्" इति विशेषविधानात् ब्रह्मचारिणोऽपि तुर्याश्रमग्रहणोपपत्तेरत एव कल्प इत्युक्तं कामक्रोधादिसहजशत्रुजयसमर्थ इत्यर्थः—

"उपनीय गुरुः शिष्यं महाव्याहृतिपूर्वकम् ।
वेदमध्यापयेत्पश्चाच्छौचाचारांश्च शिक्षयेत्" ॥

इति वचनात् ब्रह्मचारिणोऽध्ययनप्रारम्भेणाऽधीतवेदत्वं युज्यत इति वा सन्न्यासाश्रमश्चतुर्धाभिधने कुटीचको बहूदको हंसः परमहंस इति तत्र परमहंसधर्मः कथ्यत इत्यर्थद्योतको वा तुशब्दो निरपेक्षः अलोलुपः ॥ १ ॥

देहमात्रावशेषित इत्यस्यापवादमाह—बिभृयादिति । यद्यसौ भिक्षुरप्सु त्यक्त वासः परं पश्चाज्जातिनिखिलत्वया बिभृयाद्धर्तुमिच्छेत्तर्हि कौपीनलक्षणमाच्छादनं बिभृयादथवा कौपीनं शीतातपनिवारकमेकमाच्छादनं च बिभृयात् परं न बिभृयादित्यर्थः—

"शीतातपनिवारार्थमेकमाच्छादनं यतेः ।
कौपीनात्परमित्याहुरेके नान्यद्विना वपुः" इति—

वचनात् कौपीनाच्छादनं वस्त्रैकवद्वासः । नन्वयं यतिरिति केन ज्ञातुं शक्यते तत्राह—न लिङ्गेति । लिङ्गदण्डाभ्यां विना किञ्चित् न बिभृयात् लिङ्गं चक्रशङ्खादिमुद्राधारणं कमण्डल्वादिकं वा "सर्वभूतहितः शान्तस्त्रिदण्डी सकमण्डलुः" इति वचनात् वाक्कायचेतसां यमनं त्रिदण्डित्वं लिङ्गदण्डाभ्यामिति विशेषणादेक एव तु लक्षणो दण्डोऽन्यथा परमहंसत्वं न स्यात् दण्डो वाग्देहचेतसामिति वक्ष्यति ॥ २ ॥

अनपाश्रयः ग्रामाद्यावासविधुरः यथाह, याज्ञवल्क्यः—

"एकारामः परिव्रज्य भैक्षार्थी ग्राममाश्रयेत् ।
अप्रमत्तश्चरेद्भैक्ष्यं सायाह्नेऽनुपलक्षितः" ॥

इति वचनात् ॥ ३ ॥

नारायणपरत्वं दर्शयति—पश्येदिति । अदो विश्वमात्मनि पश्येत् तदाधारत्वेन स्थितमिति शेषः । आत्मनीति जीवः किं न स्यादिति तत्राह—पर इति । सदसतः परे उत्कर्षवाचित्वेन विकल्पात् सर्वनामसंज्ञा नास्ति जीवस्य संसारित्वेनाऽनुत्कृष्टत्वान्नैतादृशोऽन्यो स्तीत्याह—अद्वय इति । नैतावता पूर्ति इत्याह, आत्मानं चेति । सर्वत्र सदसन्मये जगति अवस्थितमात्मानं परं ब्रह्म पश्येदीदृशं नामचिन्तनम् ॥ ४ ॥

सुप्तप्रबोधयोः सुप्तिजागरणोः सन्धौ अरुणोदयकाले शयनप्रारम्भकाले चात्मनः स्वस्य गतिं "सता सौम्य ! तदा सम्पन्नो भवति" "अतः प्रबोधो स्मात्" ३।२।८ इत्यादि प्रमाणबलात्परमात्माधीनलक्षणां स्थितिं होः स्वातन्त्र्यलक्षणां पश्यन् बन्धं मोक्षं मायामात्रमयं हरेरिच्छया निर्मितं ज्ञातं पश्यन्वस्तुतः; स्वातन्त्र्येण नान्याधीनत्वेन पश्येत् ॥ ५ ॥

मृत्युं ध्रुवमिति नाभिनन्देत् स्वजीवितं वाऽध्रुवमिति तर्हि कथं निश्चय इति तत्राह—कालमिति । भूतानां प्रभवाप्ययं कालाख्यभगवदधीनं प्रतीक्षेत किं बहुना सर्वं भगवदधीनमिति पश्येत् ॥ ६ ॥

जीविकाश्वेतनादिलक्षणां वेदबाह्यमतीत्य तर्कान्वैशेषिकादिशास्त्रनिष्ठितान् अप्रयोजकं पक्षं सिद्धान्तं "नाप्रयोजनपक्षी स्यान्न वृथा शिष्यबन्धकृत् । न चोदासीनशास्त्राणि न विरुद्धानि चाभ्यसेत्" ॥ ७ ॥

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

"न व्याख्ययोपजीवेत न निषिद्धान्समाचरेत् । एवंभूतो यतिर्याति तदेकशरणो हरिम्" इति निर्णीतमात बहून् ग्रन्थान् वैष्णवाभासान् मोक्षविरुद्धान् वात्स्यायनादीन् ज्योतिःशास्त्रादीन् व्याख्ययोपजीवनं न कुर्यात् आरम्भान्निषिद्धान् कृष्यादीन् ॥ ८ ॥

कृष्यादिनोत्पन्नद्रव्येण दानादिधर्मसम्पादनोपपत्तेः कथमारम्भान्नारभेतेत्युच्यत इति तत्राह—न यतेरिति । प्रायो यतेराश्रमो धर्महेतुर्न भवति किन्तु निरन्तरोपासनया ज्ञानहेतुः ज्ञानाधिकारे प्रवृत्तस्य कर्माधिकारप्रवृत्तिरधःपातहेतुः स्यात् ईश्वराज्ञोल्लङ्घनदोषापातात् स्वे ब्रह्मणि चित्तं सततस्मरणसमर्थमन्तःकरणं यस्य स तथा तस्यैवंविधस्य यतेः आश्रमलक्षणदण्डादि साधारणं न चावश्यकमित्याह—बिभृयादिति । यदाह याज्ञवल्क्यः "आश्रमः कारणं धर्मे क्रियमाणो भवेद्धि सः । अतो यदात्मनः पथ्यं परस्य न तदाचरेत्" ॥ ९ ॥

बाह्यलिङ्गाभावेऽप्यान्तरं लिङ्गमस्तीत्याह—अव्यक्तेति । अव्यक्तं जनेनाज्ञातं मानसं स्वरूपं लिङ्गं यस्य स तथा विद्या तप आदिभिरप्रकटितस्वरूपो वा तर्ह्यस्य किं वक्तव्यमत्राह—व्यक्तार्थ इति । अपरोक्षीकृतभगवत्स्वरूपलक्षणपुरुषार्थः अनेन लिङ्गादिदण्डधारणादेवंविधस्य नावश्यकमन्यस्येत्युक्तं भवति मनीषी निरन्तरमननशीलः अव्यक्तस्वरूपं दर्शयति—अदृश्यः प्राकृतजनाज्ञेयः कविरतिक्रान्तदर्शी ॥ १० ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

१—११ ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

त्रयोदशे यतेर्धर्मस्तस्य चाजगरी परा ।
दशाऽद्भुतप्रह्लादसम्वादेनैव वर्ण्यते ॥

एवं ध्यात्वाऽकल्पश्चेदनशनादिकं कुर्यात् आन्वीक्षिक्यां कल्पस्त्वेवं ध्यात्वा परिव्रज्य चरेदिति सम्बन्धः तस्य धर्मानाह—ग्रामैकरात्रेति, त्रिभिः ॥ १ ॥

त्यक्तं व्यावहारिकजनसङ्गं न बिभृयात् लिङ्गदण्डादिकादन्यद्वस्त्वपि न अनापदीति आपदि तु देहरक्षार्थं त्यक्तमपि धारयेत् ॥ २—३ ॥

सदसतः परे कार्यकारणव्यतिरिक्ते ॥ ४ ॥

सुप्ते सुषुप्ते हि तमसा वृतमात्मतत्त्वं जाग्रत्स्वप्नयोस्तु विक्षिप्तप्रकाशते सन्धौ तु न तमो नापि विक्षेपः अतस्तदा आत्मदृक् आत्मानं लक्ष्यीकृत्य स्थितः स्वात्मनो गतिं तत्त्वं पश्यन् अत एव बन्धं मोक्षं च मायामात्रं पश्यन् आत्मानं परं ब्रह्म सर्वत्र पश्येदित्यन्वयः तदुक्तं योगग्रन्थे—

"निद्रादौ जागरस्यान्ते यो भाव उपजायते
तं भावं भावयेन्नित्यं मुच्यते नेतरो यतिः"

इति ॥ ५ ॥

अस्य देहस्य ॥ ६ ॥

किञ्च कमपि पक्षं न संश्रयेत् ॥ ७ ॥

नानुबध्नीयात् प्रलोभनादिना बलान्न कुर्यादित्यर्थः । आरम्भान् मठादिव्यापारान् ॥ ८ ॥

संन्यासिनां मध्ये परमहंसस्य विशेषमाह—न यतेरिति । यतेराश्रमो न धर्मप्रयोजनकः तस्य लक्षणं शान्तव्येत्यादि प्रायइत्यनेन कथञ्चित् कश्चिदपरिपक्वज्ञानस्तु सत्त्वशुद्ध्यर्थं यमनियमधर्मांश्च चरेदपि ज्ञानपरिपाके तु न नियमैः कृत्यमस्ति यमाश्च स्वत एव स्युः अतस्तदा लिङ्गादिभिः प्रयोजनाभावाल्लोकसंग्रहार्थं धारयेत् त्यजेद्वा इति ॥ ९ ॥

स च योगभ्रंशपरिहारार्थमेवंभूतो भवेदित्याह, न बहिर्व्यक्तं लिङ्गं यस्य स व्यक्तोर्थः प्रयोजनमात्मानुसन्धानं यस्य सः ॥ १० ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीप ।

त्रयोदशे तुर्याश्रमधर्मानाह—कल्प इति । वानप्रस्थनियमाचरणोऽकल्पोऽनशनादिकं कुर्यादित्युक्तं नियमान्समाप्यापि कल्पो दृढदेहेन्द्रियश्चेद्गृहं न गच्छेत्किन्तु परिव्रज्य तुर्याश्रमी भूत्वा ग्रामैकरात्रवासविधिना महीं चरेत् ॥ १ ॥

यद्यसौ वासो बिभृयात्तर्हि कौपीनमाच्छादनं येन तत्कौपीनाच्छादनं परं केवलं बिभृयात् लिङ्गभूतदण्डादेरन्यत् त्यक्तं परित्यक्तं वस्त्रादिकमन्यदनापदि न बिभृयात् ॥ २ ॥

नारायणपरायणः नारायण एव परमयनमाश्रयो यस्य सः ॥ ३ ॥

सदसतः क्षेत्रक्षेत्रज्ञात् परे पुरुषोत्तमे अदो विश्वमात्मानं च पश्येत् सर्वत्र सदसन्मये जडचेतनमये विश्वस्मिन् आत्मनि च परं ब्रह्म पुरुषोत्तमं च पश्येत् ॥ ४ ॥

सुप्तप्रबोधयोः सन्धौ सायं प्रातश्च आत्मदृक् देहेन्द्रियमनोबुद्धिप्राणादिविलक्षणस्वस्वरूपदृक् आत्मनः स्वस्योपासकस्य गम्यते इति गतिर्भगवान् तं पश्यन् ध्यायन् मायात्रिगुणा प्रकृतिस्तया ऽनादितस्तत्सुखबुद्ध्या गृहीतया बन्धः दुःखत्रयभयात्त्यक्तया मोक्षः एवं मायामात्रं न वस्तुतः केवलस्वरूपतः बन्धं मोक्षं च पश्यन् विचरेदिति शेषः ॥ ५ ॥

अस्य देहस्य ध्रुवमावश्यकं मृत्युम् अध्रुवमनित्यं जीवितं च नाभिनन्देत् प्रभवाप्ययौ जन्ममरणे यस्मात्तम् ॥ ६ ॥

असच्छास्त्रेषूक्तध्यानविरोधिषु जीविकां चिकित्सानक्षत्रादिविद्यावृत्तिं नोपजीवेत् वादवादान् ग्राम्यजनयोग्यान् वादप्रतिवादान् तर्कान् हेतुवादान् त्यजेत् किञ्च कमपि पक्षं न संश्रयेत् भगवद्ध्यानविच्छेदनं न कुर्यादिति भावः ॥ ७ ॥

शिष्यान्नानुबध्नीयात् प्रलोभनादिना आत्मसेवार्थं वश्यान्न कुर्यात् नाभ्यसेन्न पठेत् व्याख्यानं नोपयुञ्जीत न पाठयेत् आरम्भान् जीविकाव्यापारान् ॥ ८ ॥

अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
प्रह्लादस्य च संवादं मुनेराजगरस्य च ॥ ११ ॥
तं शयानं धरोपस्थे कावेर्यां सह्यसानुनि ।
रजस्वलैस्तनूदेशैर्निगूढामलतेजसम् ॥ १२ ॥
ददर्श लोकान्विचरँल्लोकतत्त्वविवित्सया ।
वृतोऽमात्यैः कतिपयैः प्रह्लादो भगवत्प्रियः ॥ १३ ॥
कर्मणा कृतिभिर्वाचा लिङ्गैर्वर्णाश्रमादिभिः ।
न विदन्ति जना यं वै सोऽसाविति न वेति च ॥ १४ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

शान्तस्य "शान्त उपासीत" इतिश्रुत्युक्तध्यानार्हशान्ति प्राप्तस्य स्वे भगवति चित्तं यस्य भगवद्ध्याननिष्ठस्य परमहंस-भागवतनिष्ठां गतस्य महान् अतिविशुद्धः आत्मा चित्तं यस्य तस्य यतेः आश्रमः प्रायो धर्महेतुर्न भवति धर्मः प्रवर्तनीय-तया हेतुर्निमित्तं फलं यस्य स तथा धर्मप्रवृत्त्यर्थो न भवति किन्तु मुक्त्यर्थ इत्यर्थः । अतः आश्रमसूचकलिङ्गादिभिः प्रयो-जनाभावादाश्रमित्वाभिमानं त्यक्त्वा तानि त्यजेदित्यत्रोक्तेति सिद्धान्तः "मौनानीहानिलायामदण्डा वाग्देहचेतसाम् । न ह्येते यस्य सन्त्यङ्ग वेणुभिर्न भवेद्यतिः" ।

ज्ञाननिष्ठो विरक्तोवामद्भक्तो वा नपेक्षकः ।
सलिङ्गानाश्रमांस्त्यक्त्वा चरेदविधिगोचरः" ।

इति वक्ष्यमाणत्वाच्च ॥ ९ ॥

अव्यक्त लिङ्गमाश्रमचिह्नं यस्य सः अव्यक्तोऽपरोऽर्थः परम-पुरुषार्थः भगवत्प्राप्तयर्थं यस्य सः मनीषी भगवदनुसन्धान-परः कविरपि स्वकीये ध्येये भगवति दृष्ट्या निमग्नचित्ततया मूकवदात्मानं दर्शयेत् ॥ १० ॥

---

भाषा टीका ।

श्रीरुक्मिणीकान्ताय नमः ॥

नारद उवाच ।

नारद जी बोले, कि—ये अनशनादिक तौ शरीर यात्रामे असमर्थ के कहे, और यदि समर्थ होवै तौ संन्यास लेकर सब का परित्याग करदे, एक देहमात्र अवशिष्ट रखे, और ग्रामैकरात्र विधिसे अर्थात् एक ग्राम में एक ही रात्रि रहना अधिक नहीं, इस प्रकार निरपेक्ष होकर पृथिवी पर विचरे ॥ १ ॥

यदि कुछ रखने की इच्छा हो तौ केवल एक लज्जांग ढाकने के लिये कौपीन रखे, और जास्ती इच्छा हो तो एक शरीर के आच्छादन ( ओढने ) के लिये वस्त्र रखे बस इससे जास्ती नहीं, और अनापद काल में दण्डऔर संन्यासके चिन्ह के सिवाय त्यागकिये हुए किसी पदार्थ को न ग्रहण करे, यदि कोई आपद ( दुःखादि ) आ पड़े तौ उतने मात्र काल की चिन्ता नहीं ॥ २ ॥

आत्माराम होकर किसी का आश्रय न लेकर सर्व प्राणियों का सुहृद और शान्त होकर संन्यासी एकला ही विचरे, परन्तु सदा नारायण परायण होकर ॥ ३ ॥

इस विश्वको कार्य कारण से पर अव्यय पर ब्रह्म में देखे, और आत्मा जो पर ब्रह्म है उसको कार्य कारण मय समस्त विश्व में अनुस्यूत अर्थात् व्याप्त देखे ॥ ४ ॥

और वह आत्मज्ञानी दोनो सन्ध्याओं में अपने आत्माकी गति का चिंतन करे, तथा बन्ध और मोक्षको माया मात्र जाने वास्तव मे नहीं ॥ ५ ॥

ध्रुव ( निश्चित ) मृत्युका अभिनन्दन न करे, अथवा अध्रुव इसके जीवित को भी न चाहे, केवल भूतों के उत्पत्तिनाश का हेतु काल मात्र की प्रतीक्षा करे ॥ ६ ॥

असत् शास्त्र में आसक्त न होवै, और किसी जीविका का उपजीवन न करे और शुष्कवाद विवाद को त्यागदे, और केवलतर्क में किसी का पक्ष न लेवे ॥ ७ ॥

और बहुत से शिष्य न करडाले और बहुत से ग्रन्थों का अभ्यास न करे, लोकप्रतिष्ठा के लिये बड़ी व्याख्या का उपयोग न करे, और बहुत से कार्यों का आरंभ न करे ॥ ८ ॥

प्राय करके यति का धर्महेतु कोई आश्रम नहीं है, शांत हो समचित्त हो तौ आश्रम को धारण करे वा त्यागदे कुछ चिंता नहीं ॥ ९ ॥

अव्यक्त चिन्हों वाला अप्रकट प्रयोजन वाला मनीषी व्याख्यान समर्थ होकर भी अपने को उन्मत्त और बालक के तरह, तथा ज्ञानी होकर भीमेको मूक सदृश जनावे, ॥ १० ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

परमहंसधर्ममेवेतिहासेन स्फुटयति—अत्रापीति. यावदध्याय-समाप्ति । आजगरव्रतस्य मुनेश्च ॥ ११ ॥

तं नत्वाऽभ्यर्च्य विधिवत्पादयोः शिरसा स्पृशन् ।
विविित्सुरिदमप्राक्षीन्महाभागवतोऽसुरः ॥ १५ ॥
बिभर्षि कायं पीवानं सोद्यमो भोगवान्यथा ।
वित्तं चैवोद्यमवतां भोगो वित्तवतामिह ।
भोगिनां खलु देहोऽयं पीवा भवति नान्यथा ॥ १६ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

धरोपस्थे भूपृष्ठे सह्याद्रेस्तटे रजोभिर्धूसरैस्तनूदेशैर्देहावयवैर्निगूढममलं तेजो यस्य तम् ॥ १२ ॥ १३ ॥

कर्मादिभिर्जना यं न विदुस्तं पादयोः शिरसा स्पृशन्नत्वा अप्राक्षीदित्युत्तरेणान्वयः ॥ १४ ॥ १५ ॥

उद्यमसहित इव भोगवानिव पीवानं स्थूलं देहं धारयसि तत्र हेतुं वदेति तृतीयेनान्वयः उद्यमं विनैव मम भोगोऽस्तीति चेत्तत्राह, वित्तं चेति ॥ १६ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

आजगरव्रतस्य सन्यासाश्रमाऽनपेक्षित्वेऽपियदृच्छयोपनतसन्तोषस्य मोक्षविरोधिप्रवृत्त्युपरतज्ञानानाविष्कारस्य च तदपेक्षितत्वात् तदवगमनाय तदितिहासं प्रस्तौति—अत्रापीति । अत्र स्वमहात्म्यानाविष्कारादिना ज्ञानिनोऽवस्थाने इतिहासमपि दृष्टान्तत्वेन उदाहरन्ति निदर्शयन्ति इतिहासं विशिनष्टि-पुरातनं नत्वस्मत्कपोलकल्पितं प्रह्लादस्याजगरस्याजगरव्रतधरस्य मुनेश्च संवादरूपम् ॥ ११ ॥

तमजगरव्रतस्थं सह्यपर्वतस्य सानुनि कावेर्या कावेरीतटे धरोपस्थे भूपृष्ठे शयानं रजस्वलैर्धूलिभिर्धूसरैस्तनूदेशैर्देहावयवैर्निगूढ प्रच्छन्नममलं तेजो देहकान्तिर्यस्य तं प्रह्लादो ददर्शेत्यन्वयः ॥ १२ ॥

कथम्भूतः भगवत्प्रियः कतिपयैरमात्यैः परिवृतो लोकानां तत्त्वस्य विजिज्ञासया वेत्तुमिच्छया चरन् कर्मादिभिर्यं सोऽसौ भवति न भवति वेत्येवं जना न विदुः । तं पादयोः शिरसा स्पृशन् नत्वा विधिवदभ्यर्च्य, वेत्तुमिच्छुर्महाभागवतः प्रह्लाद इदं वक्ष्यमाणमप्राक्षीत् पृष्टवान् ॥ १३—१५ ॥

तदेवाह—बिभर्षीति सार्द्धैस्त्रिभिः, । उद्यम्युद्यमसहितः भोगवान् देहपोषणशीलो यथा तद्वत्त्वं पीवानं कायं देहं बिभर्षि इति सन्देहः । ननूद्यमं विनैव मम प्रारब्धवशादेव भोगः सम्प्राप्नोतीत्यत्राह— इह लोके तावदुद्यमवतामेव वित्तं धनं भवति वित्तवतामेव भोगः । त्वन्तु निरुद्यमः कुतस्तव वित्तं कुतस्तरां भोग इति भावः । अन्तरेणापि भोगं मम देहः पीवा इत्यत्राह—भोगिनां भोगवतामिव देहः पीवा भवति भोगेन पीवा भवत्यन्यथा तु कृशोभवति तत्कथमन्तरेणापि भोगं देहपुष्टिरिति भावः ॥ १६ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

अत्राऽपरोक्षज्ञानाय यत्याचारे इतिहासशब्दार्थमाह—पुरातनमिति । आजगरस्य अजगरव्रतधारिणः ॥ ११ ॥

सह्यसानुनि सह्याख्यपर्वततटे कावेर्यां कावेर्युत्पत्तिक्षेत्रे तनूदेशैः शरीरावयवैः ॥ १२ ॥

विवित्सया वेदितुमिच्छया ॥ १३ ॥

स एव देवदत्तो सौ न वेति नाविन्दत न ज्ञातवान् ॥१४॥१५॥

भोगवान् सम्पन्नः ननु परिश्रममानस्य देहस्य पीनत्वं विशेषः परिणामोऽपि कस्माच्चित् धान्यादिरसेभ्यस्येव किमत्र चोद्यमत्राह-वित्तमिति । सत्यं कृष्याद्युद्योगवतो देहिनो व्रीह्यादिवित्तं भवतीहलोके तद्वतां भोगः खलु भोगिनामयं देहः पीनो भवति, हेत्वन्तरं नास्तीत्याह—नान्यथेति ॥ १६ ॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

तं शयानमिति युग्मकम्. तनू इत्यत्र त्वक् इति पाठो बहुत्र ॥ १२ ॥ १३ ॥

कर्मणेति युग्मकम् ॥ १४ ॥ १५ ॥

बिभर्षीत्यर्द्धकम् ॥ १६ ॥ १७ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

आजगरस्य अजगरवृत्तेः ॥ ११ ॥

सह्यनाम्नः तनूदेशैः तन्ववयवैः ॥ १२ ॥ १३ ॥

जनास्तज्जन्मभूमिनिवासिनोपि विवित्सुर्विविदिषुः महाभागवत इति महाभागवतत्वादेव तत्र स्वचित्ताकर्षणलिङ्गेनैव तं महानुभावं निश्चित्यैवेतिभावः ॥ १४ ॥ १५ ॥

न ते शयानस्य निरुद्यमस्य ब्रह्मन्नु हार्थो यत एव भोगः ।
अभोगिनोऽयं तव विप्र ! देहः पीवा यतस्तद्वद नः क्षमं चेत् ॥ १७ ॥
कविः * कल्पो निपुणदृक् चित्रप्रियकथः समः ।
लोकस्य कुर्वतः कर्म शेषे तद्वीक्षिताऽपि वा ॥ १८ ॥

नारद उवाच ।

स इत्थं दैत्यपतिना परिपृष्टो महामुनिः ।
स्मयमानस्तमभ्याह तद्वागमृतयन्त्रितः ॥ १९ ॥

ब्राह्मण उवाच ।

वेदेदमसुरश्रेष्ठ ! भवान्नन्वार्यसम्मतः ।
ईहोपरमयोर्नृणां पदान्यध्यात्मचक्षुषा ॥ २० ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

पीवानं स्थूलं न च स्वभावेनैव मत्कायः पीवेति वाच्यमित्याह-उद्यमवतां वित्तं वित्तवतां भोगः भोगवतामेव देहः पीवेति पीवत्वस्यादि कारणमुद्यम एव नतु स्वभाव इत्यर्थः ॥ १६ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

परमहंसभगवद्धर्ममेवेतिहासेन दर्शयति—अत्रापीत्यादिना । आजगरस्य अजगरवृत्तदत्तस्य ॥ ११ ॥

धरोपस्थे भूपृष्ठे कावेर्या तत्समीपे सह्यसानुनि सह्यगिरितटे रजोव्याप्तैस्तनूदेशैः शरीरावयवैर्निगूढममलं तेजो यस्य तम् ॥ १२ ॥ १३ ॥

कर्मणा निवृत्तिप्रवृत्तिरूपेण आकृतिभिः अनाद्यकलुषाकत्वादिचेष्टावद्भिरङ्गैः तथा वागादिभिर्जना यं न विदन्ति पादयोः शिरसा स्पृशन् नत्वा अभ्यर्च्य च अप्राक्षीदित्युत्तरेणान्वयः ॥१४॥

अप्राक्षीत् पृष्टवान् ॥ १५ ॥

सोद्यमो व्यापारपरो भोगवान् यथा पीवानं पुष्टं देहं बिभर्त्ति स देहो यतः पीवा तत्रो वदेत्यनेनान्वयः ॥ १६ ॥

भाषा टीका ।

इस प्रकरण में एक पुरातन इतिहास को उदाहरण करते हैं जिसमें और आजगर मुनि श्री दत्तात्रेय का संवाद है ॥ ११ ॥

एक समय की बात है कि—भगवत्प्रिय श्रीप्रह्लादजी कितने एक मन्त्रियों सहित लोकों के तत्त्व जानने की इच्छा से लोकों में विचरते हुए, श्री कावेरी गंगा के किनारे सह्य पर्वत की शिखर पर पृथिवी के ऊपर पडे हुए, धूलि भरे हुए, शरीर से गूढतेजवाले एक मुनि को देखते हुए ॥ १२ ॥ १३ ॥

जिन को देखकर कर्म आकृति वाणी और वर्णाश्रमोंके चिन्हों से मनुष्य नहीं जान सके ये कि ये वही प्रसिद्ध दत्तात्रेय जी महाराज है ॥ १४ ॥

प्रह्लादजीने उनकोविधिवत् पूजन करके मस्तक से चरणों को छूकर नमस्कार किया, और महा भागवत असुर प्रह्लाद जी ज्ञान की इच्छा करके यों पूछने लगे ॥ १५ ॥

प्रह्लादजी बोले, कि आप शरीर को तो ऐसे पुष्टको धारण करते हो, कि जैसे बडा उद्यम वाला भोगों को भोगने वाला अपने शरीर को पुष्ट रखता है परन्तु भोग तो वित्त से होता है और वित्त ( धन ) से भोग प्राप्त होता है, यह देह तो भोग भोगने वालों का ही ऐसा पुष्ट होता है आपका क्यों का और बिना भोग भोगने के न [illegible] ॥ १६ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

नु इति निश्चये ह इति प्रसिद्धौ तवार्थो नास्तीति प्रसिद्धमेवेत्यर्थः । यतोऽर्थादेव यतो हेतोः पीवा क्षमं योग्यं चेत् ॥ १७ ॥

किञ्च वित्तार्जनाद्यसमर्थोऽप्ययं जनस्तदर्थमुद्यमं करोति त्वं तु समर्थोऽपि किमिति न करोषीत्याह—कविर्विद्वान् कल्पो दक्षः निपुणदृक् चतुरः चित्राः प्रियाः लोकरञ्जनाः कथा यस्य तथाऽपि लोकस्य कर्म कुर्वतः सतः शेषे तद्वीक्षिताऽपि तत्सर्वं पश्य-

* कल्प इति पाठः वीर० ॥

यस्य नारायणो देवो भगवान् हृद्गतः सदा ।
भक्त्या केवलयाऽज्ञानं धुनोति ध्वान्तमर्कवत् ॥ २१ ॥
अथापि ब्रूमहे प्रश्नांस्तव राजन् ! यथाश्रुतम् ।
सम्भावनीयो[1] हि भवानात्मनः शुद्धिमिच्छताम् ॥ २२ ॥
तृष्णया भववाहिन्या योग्यैः कामैरपूरया ।
कर्माणि कार्यमाणोऽहं नानायोनिषु योजितः ॥ २३ ॥
यदृच्छया लोकमिमं प्रापितः कर्मभिर्भ्रमन् ।
स्वर्गापवर्गयोर्द्वारं तिरश्चां पुनरस्य च ॥ २४ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

अपि पाठान्तरे न द्वेक्षि, तत्कर्म न द्वेक्षि, नौषि वा न च स्तौषी-त्यर्थः ॥ १८ ॥

तस्य वागेवामृतं तेन यन्त्रितो वशीकृतः सन्प्राह ॥ १९ ॥

अध्यात्मचक्षुषाऽन्तर्दृष्ट्या भवान्वेदैव आर्याणां ज्ञानिनां सम्मतो ननु-भवान् इदमिति यदुक्तं तदेवाह—नृणामीहोपरमयोः प्रवृत्तिनिवृत्त्योः पदानि स्थानानि फलानीत्यर्थः ॥ २० ॥

वेदेत्यत्र हेतुः, यस्येति । हृदि प्रविष्टस्सन्नज्ञानं धुनोति नाशयतीति अर्को यथा बहिर्ध्वान्तम् ॥ २१ ॥

यथाश्रुतमित्यौद्धत्यपरिहारायोक्तम् ॥ २२ ॥

लोकः कर्मसु प्रवर्त्तते त्वं तु निवृत्तः सन्किं शेषे इति यदुक्तं तत्राऽऽह—तृष्णयेति, चतुर्भिः । भवप्रवाहकारिण्या यथोचितैरपि विषयैः पूरयितुमशक्यया तृष्णया कर्मसु प्रवर्त्यमानो[illegible] नाना योनिषु प्रवेशितः ॥ २३ ॥

तयैव तृष्णयेम लोकं मनुष्यदेहं यदृच्छया [illegible] लोकं धर्मेण स्वर्गस्य द्वारं साधनम् । अधर्मेण तिरश्चां श्वसूकरा-दियोनेर्द्वारं मिश्राभ्यां ताभ्यां पुनरस्यस्य मनुष्यत्वस्य द्वारं सर्वतो निवृत्याऽपवर्गस्य द्वारमित्यर्थः ॥ २४ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तदेव विवृण्वन् पृच्छति—नेति । हे ब्रह्मन् ! शयानस्यात एव निरुद्यमस्य निर्व्यापारस्य तव । न ह्यर्थः नूनं वित्तं नास्ति हि नु इति निश्चये ह्यति प्रसिद्धौ तवार्थो नास्तीति प्रसिद्धमेवेत्यर्थः यतो वित्तादेव हेतोर्भोगाः देहपोषणादयो भवन्ति अतो भोग-रहितस्य तव देहो हे विप्र ! यतो हेतोः पीवाऽभवत् तत्कारणं नोऽस्माकं श्रोतुमिनिशेषः । क्षमं योग्यं चेत्तर्हि वद कथय अगोप्यं चेत्तर्हि वर्णयेत्यर्थः ॥ १७ ॥

किञ्च त्वं कविर्विद्वान् कल्यः दक्षः निपुणादृक् चतुरः चित्राः प्रियाः लोकरञ्जनाः कथा यस्य स एवभूतोऽपि लोकस्य कर्म व्यापारं कुर्वतः सतः तद्वीक्षताऽपि सम उदासीनस्सन् तूष्णीं शेषे शयानोऽसि तत्कारणं च वदेति भावः ॥ १८ ॥

एवं दैत्यपतिना प्रह्लादेन पृष्टस्सन् महामुनिस्तस्य प्रह्लादस्य वागेवामृतं तेन यन्त्रितः चोदितः स्मयमानः तमभ्याहाऽभिमुख मुक्तवान् ॥ १९ ॥

तदेवाह—यावदध्यायसमाप्ति, वेदेति । असुरश्रेष्ठ ! इदं किन्नृणामीहोपरमयोः प्रवृत्तिनिवृत्त्योः पदानि कारणानीति यत्तदिदं भवानध्यात्मचक्षुषा सर्वलोकमनोभिप्रायविषयकज्ञानेन-वेद जानात्येव कुतः यतस्त्वमार्याणामतीन्द्रियार्थदर्शिनां सम्मतो-ऽग्रेसरः ॥ २० ॥

किञ्च भगवान् षाड्गुण्यपूर्णः स्वतेजसा दीप्यमानो नारायणोऽनन्यप्रयोजनया भक्त्या तुष्टो यस्य त्वादृशस्य सदा हृद्गतः सन्नर्कवत् सूर्यवत् ध्वान्तमज्ञानरूपमन्धकारं धुनोति निरस्यति निःशेषनिरस्ताज्ञानानां सर्वज्ञानां भवादृशां किमविदित-मस्तीति भावः ॥ २१ ॥

यद्यप्येवमथापि हे राजन् ! यथाश्रुतं तव प्रश्नान्प्रति ब्रूमहे प्रश्नानामुत्तराणि वदाम इत्यर्थः । यथाश्रुतमित्यौद्धत्यपरिहारायो-क्तम आत्मनः स्वस्य शुद्धिमिच्छता पुंसा भवानवश्यंत्वं सम्भाव-नीयो हि ॥ २२ ॥

लोकः कर्मसु प्रवर्त्तते त्वं तु निवृत्तः सन्किं शेषे इति यत्पृष्टं तत्र तावदुत्तरमाह-तृष्णयेति, चतुर्भिः । तावदहं योग्यैर्यथोचितै-रपि कामैरपूरया पूरयितुमशक्यया भववाहिन्या जन्मपरम्परा-कारिण्या तृष्णया विषयेच्छया कर्माणि पुण्यपापात्मकानि कार्य-माणः कर्मसु प्रवर्त्तमानः पूर्वं नानायोनिषु योजितः प्रवेशितः ॥ २३ ॥

तैरेव कर्मभिर्भ्रमन्यदृच्छया दैवादिमं लोकं मनुष्यजन्मप्रापितः लोकं विशिनष्टि स्वर्गमोक्षयोः तिरश्चां तिर्यक्त्वानां पुनरस्य मनु-ष्यत्वस्य च प्राप्तेर्द्वारं कारणम । धर्मेण स्वर्गस्य द्वारं ज्ञान-सम्पादनेन त्वपवर्गस्य ऽधर्मेण तिरश्चः तिर्यक्त्वस्य पूर्व-

(१) सम्भाषणीय इति वीर० विज० पा० ।

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

सजातीयसुकृताऽऽचरणेन तु पुनर्मनुष्यत्वस्य च कारण-मित्यर्थः ॥ २४ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

प्रकृतेऽपि तथा स्यादिति तत्राह, न त इति. अर्थो वित्तं यतो वि-त्तात्पीवोनि यत्तस्मात् बत विस्मयो जायते लोके निमित्तान्तराभावे सति पीनत्वं भोगित्वेन दृष्टम् अत्र भोगित्वं न दृश्यते पीनत्वं तु दृश्यते तस्मिन्निमित्तान्तरमस्ति तदस्माकं श्रोतु क्षम चेद्वदेत्यन्वय. ॥१७॥

इतोऽपि निमित्तान्तरेण भाव्यमन्यथा कवित्वादयो भोगि-गुणा न स्युरित्याह–कविरिति। न चेत्तर्हि वेदाननुभवसि "अन्न-मयं हि सौम्य ! मन आपोमयः प्राणस्तेजोमयी वाक्" इति श्रुते.

"यः कण्टकैर्वितुदति चन्दनैर्यश्च लिम्पति—
अक्रुष्टो परिकृष्टश्च समस्तस्य स तस्य च" इति श्रुतेः

सर्वस्य समः न द्वेक्षि न द्वेषं करोषि नौषि स्तुतिं करोषि अनेन समत्वं विवृतम् ॥ १८ ॥

इतरत्र विरक्त्या भक्त्या श्रीनारायणचरणारविन्दस्मरण-मकरन्दपानमेव पीनत्वे निमित्तमिति परिहारमभिप्रेत्य प्रह्लादं प्रति ब्रूते इत्याह–नारद इति ॥ १९ ॥

ज्ञानिष्वेको भवानिदं वेदेत्यन्वय. । इदमिति किं केन साध-नेन वेद अत्राह—वेदेति। भवानध्यात्मचक्षुषा परमात्माऽनुग्रहो-त्पन्नज्ञानेन नृणामीहोपरमयोः प्रवृत्तिनिवृत्तिलक्षणयोर्मार्गयोः पदं निश्चित विषयस्थान वेदेति शेष. ॥ २० ॥

देहिनामज्ञानसम्भवात्तेष्वेकत्वात् ममाऽपि तद्विषयं ज्ञानं नास्तीति किं न स्यादित्याशङ्क्य सत्यं विशेषोऽस्ति तवेत्याह—यस्येति। इदन्तत्व सामान्यमिति मत्वा श्लिष्ट इत्युक्त केवलया फलानामाकाङ्क्षया ध्वान्तमज्ञानलक्षणम् अन्यत्रान्धकारमज्ञानं तत्त्वाप्रतिपत्तौ कारणत्वेन दृष्टं यतस्तव नास्ति तस्माद्भवान् जानातीत्यर्थः ॥ २१ ॥

यद्यपि वक्तव्यांशो नास्त्यथापीदमप्राक्षीदित्येकविषय-प्रश्नः कृतः परिहारे प्रश्नानित्याद्यनेकविषयः कथमयं सङ्गच्छते इति चेत्, निरुद्यमस्य वित्तं कथम् ? निर्वितस्य भोगः कथम् ? अभोगिनः पीनत्वं कथम् ? इति प्रश्नानामपि बहुत्वात् इदमित्यस्या-व्ययत्वेन जातिविशेषत्वेन चोपपत्तेः तव प्रश्नान् ब्रूमह इत्यनेन तदनुवादः क्रियते उत परिहारः नाद्यो ऽदर्शनात् द्वितीयोऽपि तद्वाचकपदप्रयोगाभावादनुपपन्नः तव प्रश्नानुद्दिश्य परिहा-रान् ब्रूमह इति पक्षोऽपि गौरवादयुक्त इति चेदुच्यते "ब्रूञ् व्यक्तायां वाचि" इति धातोर्व्यक्तिर्नाम स्पष्टीकरणं तस्य परि-हारार्थोपपत्तेः यथाश्रुतमित्यनेनापि स्पष्टीकरणप्रतीतेरिति. ननु, यदज्ञातज्ञापकं तदेवोपादेयं न चेदं तथा प्रह्लादस्य भगवदनु-ग्रहेण ज्ञाताऽशेषार्थत्वादतः कस्मै स्पष्टीक्रियत इत्याशङ्क्य तदज्ञानमस्माभिर्न बोध्यते किन्तु महत्सम्भाषणलक्षणार्थसे-वयाऽन्तःकरणशुद्धिः स्यादिति मत्वा स्पष्टीक्रियत इत्याह—सम्भाषणीय इति। अनेन ब्रूमह इत्यात्मनेपदार्थो विवृत इति ज्ञायते ॥ २२ ॥

निवृत्तिमार्ग एव संसारोन्मूलनहेतुरिति वक्तुं प्रवृत्तिमार्गस्तु नानादुःखहेतुत्वेन हेयः प्रेक्षावतेत्येतत्स्वानुभवसिद्धमित्याह–तृष्ण-येति। भववाहिन्या नदीवद्वर्तमानया संसारापादिकया वा इतरन-दीनामृतुभेदेन पूर्त्यपूर्त्ती स्यातां नास्याः कदापि पूर्तिरित्याह–ग्राम्यैरिति ॥ २३ ॥

यदृच्छया दैवेच्छया लोकं शरीरम् "अस्माल्लोकात्प्रेत्य" इति श्रुतेः न केवल स्वर्गादेर्द्वारं किन्तु तिर्यगादिजन्मनोऽपि कारणमि-त्याह—तिरश्चामिति । अस्य मनुष्यशरीरस्याऽपि द्वारमिति शेषः ॥ २४ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

तद्वीक्षितापि इत्यत्र त्व न द्वेक्षि नौषि वेति पाठः न द्वेषीति गौडपाठः ॥ १८—३६ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

ननु, 'पीनो देवदत्तो दिवा नभुङ्क्ते' इति वन्ममोद्यमादिकमनुमी-यतामिति चेत्तत्राह–नेति। दुर्निश्चये ह स्पष्ट हे विप्र ! इति ब्रह्म-तेजसैव विप्रत्वस्यावगमात् ॥ १७ ॥

किमेवं ते विचारेणेति चेत् त्वद्देहे सामुद्रकलक्षणदृष्ट्या कवित्वकल्पत्वाद्दिकमनुमाय त्वया त्वं कृतार्थीकर्तु कमप्यालापा-मृतमिच्छामीत्याह—कविरिति। कर्म कुर्वत. कर्मोद्यमवन्त लोक-मनादृत्य तमपश्यन्नेव शेषे शयन करोषि तस्य वीक्षिता कौतु-केन त पश्यन्नेव वा ॥ १८ ॥ १९ ॥

अध्यात्मचक्षुषा अन्तर्दृष्ट्या इदं भवान् वेदैव किम् ईहोपरमयोः सकामत्वनिष्कामत्वयोः पदानि स्थानानि फलानीत्यर्थः। भोगार्थ-मुद्यमैर्देहपुष्टिर्भुक्तानां दुःख यद्यहं जानास्यं तदा उद्यम-महमप्यकरिष्यामिति भावः ॥ २० ॥

वेदेत्यत्र हेतु. यस्येति केवलया ज्ञानकर्माद्यनिश्रया ॥ २१ ॥

अतो मया त्वं सम्माननीय एवेत्यतः सर्वत्र मौनव्रतापि त्वयि मौनमनादृत्यैवोच्यते इत्याह—अथापीति। यद्यपि भवान् वेदैव अथापीति यथाश्रुतं नतु स्वकपोलकल्पितम् ॥ २२ ॥

यदहं निरुद्यमोऽस्मि तत्र कारणं शृणिवत्याह-तृष्णयेति त्रिभिः। भवसंबन्धिन्या वाहिन्या नद्येति यथा नद्या अन्तो दुष्प्रापस्तथा तृष्णा-या अपि किञ्च नदी इन्द्रेण वृष्यमाणैरम्बुभिः पूर्यते इयं तु ब्रह्मणापि वृष्यमाणैः कामैर्न पूर्यते इत्याह योग्यैरिति यथा च नद्या वाहितो-ऽर्थस्तृणकाष्ठपाषाणकण्टकादिषु योज्यते तथैवाहमपि नानायो-निषु यथा च नद्या ग्राहकच्छपावर्त्तादिभिर्भीषयित्वातत्परित्राणाय-नानासाधनानि कार्यन्ते तथैवाहमपि कर्माणि ॥ २३ ॥

यथाच नद्या कदाचित् कश्चित्तुच्छस्यैकतदेशमपि प्राप्यते तथैवाहमपि साम्प्रतमिमं लोकं नृशरीरं कीदृशं पुण्येन स्वर्गस्य द्वारं साधनं ज्ञानभक्तिभ्यामपवर्गस्य पापेन तिरश्चां सूकरादि-

अत्रापि दम्पतीनां च सुखायाऽन्यापनुत्तये ।
कर्माणि कुर्वतां दृष्ट्वा निवृत्तोऽस्मि विपर्ययम् ॥ २५ ॥
सुखमस्याऽऽत्मनो रूपं सर्वेहोपरतिस्तनुः ।
मनःसंस्पर्शजान्दृष्ट्वा भोगान्स्वप्स्यामि संविशन् ॥ २६ ॥
इत्येतदात्मनः स्वार्थं सन्तं विस्मृत्य वै पुमान् ।
विचित्रामसति द्वैते घोरामाप्नोति संसृतिम् ॥ २७ ॥
जलं तदुद्भवैश्छन्नं हित्वाऽज्ञो जलकाम्यया ।
मृगतृष्णामुपाधावेद्यथाऽन्यत्रार्थदृक्स्वतः ॥ २८ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

यानैरपि पुण्यपापाङ्कर्वा चकारात्तद्भोगान्ते च पुनरप्यस्य नृजन्मनोऽपि द्वारम् ॥ २४ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

श्रमं श्रावयितुं च योग्यं चेत्तर्हि नोऽस्मभ्यं वद ॥ १७ ॥

त्वं कवित्वादिगुणयुक्तोऽपि लोकस्य कर्म कुर्वतः कुर्वन्तं न द्वेक्षि न स्तौषि स्वयं च शेषे अन्तर्वृत्तिरसि यतस्तद्वदेति पूर्वेणान्वयः कविः कान्तदर्शी दक्षः समर्थः निपुणदृक् स्वार्थे दृढदृष्टिः चित्राः अद्भुताः प्रियाः कथाः यस्य सः सर्वत्र तुल्यदृष्टिः ॥ १८ ॥

स्मयमानः मन्दस्मितयुक्तः तद्वागेवामृतं तेन यन्त्रितो वशीकृतः ॥ १९ ॥

हे असुरश्रेष्ठ ! नन्वहो भवानार्यसम्मतः नृणामीहोपरमयोः प्रवृत्तिनिवृत्त्योः पदानि स्थानानि फलानि अध्यात्मचक्षुषा अन्तर्दृष्ट्या वेद ॥ २० ॥

केवलया तदेकविषयिण्या भक्त्या नारायणो देवः सदा हृद्गतः अज्ञानं धुनोति ध्वान्तं तिमिरमर्को यथा ॥ २१ ॥

यद्यपि भगवान् वेद तथापि ब्रूमहे यथाश्रुतमित्यनेनौद्धत्याभावः सूच्यते ॥ २२ ॥

भववाहिन्या जन्ममरणलक्षणसंसारवाहिन्या योग्यैरपि कामैर्विषयैरपूरया कर्माणि कार्यमाणः कर्मसु प्रवर्त्यमानः नानायोनिषु योजितः ॥ २३ ॥

इमं लोकं नरदेहम् ॥ २४ ॥

भाषा टीका ।

परंच हे ब्रह्मन् ! आप तौ विना उद्यमके सोये हुए हैं, आपको धन कहां से प्राप्त होसक्ता है, और विना धन के भोग कहां ? हे विप्र ! विना भोग के आपका यह देह जो पुष्ट होरहा है इसका क्या कारण है ? यदि हमारे कहने के योग्य हो तौ कहिये ॥ १७ ॥

आप तौ कवि ( पंडित ) समर्थ निपुणदृष्टि वाले और विचित्र प्रिय बोलने वाले है, और लोगो को कर्म करते हुए देखकर भी सोते रहते है ॥ १८ ॥

नारद उवाच ॥

नारदजी बोले कि,—उन महामुनि श्रीदत्तात्रेय को जब दैत्यपति प्रह्लादजी ने इस प्रकार पूंछा, तब प्रह्लाद की वाणी रूप अमृत के वश होकर किञ्चित् हँसतेहुए मुनि बोले ॥ १९ ॥

ब्राह्मण उवाच ॥

दत्तात्रेयजी बोले, कि—हे असुर श्रेष्ठ, हे प्रह्लाद ! आप श्रेष्ठ लोगों के सम्मत हौ और ज्ञानदृष्टि से, मनुष्यों की चेष्टा और उपराम से जो फल होता है उसको भी जानते हौ ॥ २० ॥

क्योंकि ? जिन तुमारे हृदय में केवल भक्ति, से भगवान् श्री नारायण देव सदा स्थित है, और सूर्य जैसे तम को तैसे ही अज्ञान को नाश करते है ॥ २१ ॥

हे राजन् ! तथापि तुमारे प्रश्नों का उत्तर जैसा सुना है तैसा कहते है क्योंकि ? आप तौ आत्मा की शुद्धि की इच्छा वाले महाजनों के भी माननीय हौ वा संभाषणीय हौ ॥ २२ ॥

योग्य कार्यों से जिसका कभी पूरा न पडे ऐसी तृष्णा के वश होकर मैंने ऊँचे नीचे बहुत प्रकार के कर्म किये फिर उन कर्मों से नाना योनियों में जाता गया ॥ २३ ॥

फिर हरीच्छा से भ्रमते २ इस मनुष्य देह को भी प्राप्त हुआ जो मनुष्य देह स्वर्ग और अपवर्ग ( मोक्ष ) का द्वार है, और इसी देह के कर्मों से जीव तिर्यक् योनि को तथा फिर भी इसी मनुष्य देह को प्राप्त होसक्ता है ॥ २४ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

अत्रापि मनुष्यत्वेऽपि अन्यापनुत्तये दुःखनिवृत्त्यै विपर्ययं दृष्ट्वा निवृत्तोऽस्मि ॥ २५ ॥

ननु प्रवृत्त्या कदाचित्सुखं स्यान्निवृत्त्या तु किमयादिति । चेत्तत्राह—सुखमस्य जीवस्य स्वस्वरूपमेव, तर्हि किं न प्रकाशते ? तत्राऽऽह—सर्वेति । तनोतीति तनुः सर्वक्रियानिवृत्तौ स्वतएव प्रका-

देहादिभिर्दैवतन्त्रैरात्मनः सुखमीहतः ।
दुःखात्ययं चाऽनीशस्य क्रिया मोघाः कृताः कृताः ॥ २९ ॥
आध्यात्मिकादिभिर्दुःखैरविमुक्तस्य कर्हिचित् ।
मर्त्यस्य कृच्छ्रोपनतैरर्थैः कामैः क्रियेत किम् ॥ ३० ॥
पश्यामि धनिनां क्लेशं लुब्धानामजितात्मनाम् ।
भयादलब्धनिद्राणां सर्वतोऽभिविशङ्किनाम् ॥ ३१ ॥
राजतश्चोरतः शत्रोः स्वजनात्पशुपक्षितः ।
अर्थिभ्यः कालतः स्वस्मान्नित्यं प्राणार्थवद्भयम् ॥ ३२ ॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका ।

शान इत्यर्थः । भोगांश्च मनःसंस्पर्शजान्मनोरथमात्रजानशाश्वतान् दृष्ट्वा स्वप्स्यामि निरुद्यमोऽस्मीत्यर्थः । तर्हि कदाचित्कथं भुङ्क्षे ? तत्राऽऽह—संविशन् प्रारब्धभोगान्भुञ्जान इत्यर्थः ॥ २६ ॥

एवञ्चेत्कोऽपि संसारं न प्राप्नुयात्तत्राऽऽह—इत्येतदात्मन सुखात्मकं रूपं स्वार्थं स्वस्मिन्नेव सन्तं पुरुषार्थं विस्मृत्य अ-सत्यपि द्वैते ॥ २७ ॥

तदेव दृष्टान्तेन स्पष्टयति—जलमिति । तदुद्भवैस्तृणशैवाला-दिभिः जलकाम्यया जलेच्छया स्वत आत्मस्वरूपादन्यत्र पुरुषार्थं पश्यन् ॥ २८ ॥

एवं स्वस्य निरुद्यमत्वे कारणमुक्त्वा विपर्ययं दृष्ट्वेति यदुक्तं तद्विवृणोति—देहादिभिरिति, पञ्चभिः । ईहत इच्छतः अनीशस्य निरीश्वरस्य पुनःपुनः प्रारब्धाः क्रियाः मोघाः विफला एव भवन्ति ॥ २९ ॥

क्रियाणां सफलत्वेऽपि फलस्याऽनुपयोगमाह—आध्यात्मिका-दिभिरिति । मर्त्यस्य मरिष्यतः कृच्छ्रेण दुःखेनोपनतैः प्राप्तैः ॥ ३० ॥

कृच्छ्रं विनैव प्राप्तेष्वर्थेषु दुःखं तदवस्थमित्याह—पश्यामीति ॥ ३१ ॥

भयं प्रपञ्चयति—राजत इति । स्वस्मान्मत्त एव कथञ्चित्त्याग-भोगविस्मरणादिना नाशः स्यादिति प्राणवतामर्थवतां च भयं नित्यम् ॥ ३२ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

अत्रापि अस्मिन्नपि मनुष्यजन्मनि स्वर्गापवर्गदेऽपि दम्पतीनां स्त्रीमैथुनादिसुखं तदर्थमन्यापनुत्तये दुःखनिवृत्तये च कर्माणि कुर्वतां लोकानां विपर्ययं सुखार्थं कृतेभ्यः कर्मभ्यः दुःखप्राप्तिरूपं विपर्ययं दृष्ट्वा निवृत्तोस्मि ॥ २५ ॥

ननु, प्रवृत्त्या कदाचित्सुखं स्यादपि किं निवृत्त्या स्यादित्यत्राह—सुखमिति । सुखमस्यात्मनः प्रत्यगात्मनो रूपं स्वरूपमेवातो न तदर्थं यत्नः कार्य इति भावः । तर्हि स्वत सुखरूप आत्मा तत्त्वेन किं नोपलभ्यते इति शङ्कां निराकरोति—सर्वासामीहानां देहगतव्यापाराणामुपरमः अभावोऽस्यात्मनस्तनुराकारः निष्क्रियं सुखमेव तस्य तनुरित्यर्थः । कार्त्स्न्येनेहोपरमपूर्वकं तद्याथात्म्य-विमर्शनेन सुखरूपतयोपलभ्यत इति भावः । यत एवमतो भोगान् शब्दादिविषयभोगान् मनस्संस्पर्शजान्मनोरथमात्रजानशाश्वतान् दृष्ट्वा संविशन्नात्मयाथात्म्याऽवलोकने प्रविष्टोऽहं प्रारब्धानुसंधे प्रविष्टो वा स्वप्स्यामि शयानोऽस्मि ॥ २६ ॥

तर्हि सर्वोऽपि लोकस्त्वमिव सुखरूपमात्मानं किन्नोपलभ्यते इति शङ्कां निराकुर्वन् स्वाभाविकसुखरूपात्मस्वरूपाविमर्शनमूलकदेहात्मभ्रमेण न भेते किन्तु संसरतीत्याह—इतीति । इत्येतदा-त्मनः सुखात्मकं रूपं स्वार्थं स्वस्य पुरुषार्थरूपं स्वत एव सन्तं विस्मृत्य स्वत एव सन्तमात्मनः सुखरूपं स्वरूपात्मकं स्वपुरुषार्थं विस्मृत्येत्यर्थः । पुमान् देही असति स्वत आत्मन्यविद्यमानेऽपि द्वैते देवमनुष्यादिभेदे देवोऽहं मनुष्योऽहमित्यभिमानरूपे द्वैते भेदनि-मित्ते द्वैतेनेत्यर्थः । विचित्रां गर्भजन्मजरामरणादिरूपामत एव घोरां भयङ्करां संसृतिमाप्नोति ॥ २७ ॥

एतदेव दृष्टान्तमुखेनाह—जलमिति । जलं तदुद्भवैस्तृणशै-वालादिभिश्छन्नं जलं हित्वा अज्ञो यथा जलकाम्यया मृग-तृष्णां जलवत्प्रतीयमानामुपधावेत्तथा स्वतः सुखरूपमात्मनः स्वरूपं विस्मृत्याऽन्यत्र वैषयिकसुखेष्वर्थदृक् पुरुषार्थदृष्टिर्धावति लोकः स्वत आत्मनोऽन्यत्र देहादौ पुरुषार्थदृग्वा ॥ २८ ॥

विपर्ययं दृष्ट्वा निवृत्तोस्मीत्येतदेव विवृणोति—देहादिभिरिति, पञ्चभिः । दैवतन्त्रैः कर्माधीनैर्देहेन्द्रियादिभिरात्मनः स्वस्य सुखं दुःखनिवृत्तिञ्चेहतः इच्छत अनीशस्य कर्मवशस्य पुंसः कर्तरि षष्ठी इच्छता कृता कृताः पुनःपुनरारब्धाः क्रियाः मोघाः व्यर्थाः न सुखजनका नाऽपि दुःखनिवर्तकाश्च दृष्टा इति भावः ॥ २९ ॥

कथञ्चित्क्रियाणाममोघत्वेपि तज्जन्यं सुखमनुभूयमानदुःखेभ्यो-ऽल्पमित्याह—आध्यात्मिकादिभिः । आदिशब्देनाधिदैविकाधिभौ-तिके ग्राह्ये तैर्दुःखैः कर्हिचित्कदाचिदपि अविमुक्तस्य मर्त्यस्य मरणशीलस्य कृच्छ्रोपनतैर्दुःखेनार्जितैरर्थैर्वित्तैस्तन्निमित्तैः कामैश्च किं कियत्सुखं क्रियेत न किमपीत्यर्थः ॥ ३० ॥

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

ननु, धनार्जने हि दुःखं लब्धधनानां तु सुखमेवेत्यत्राह-पश्यामीति । धनिनां लब्धधनानामपि क्लेशं पश्यामि क्लेशित्वे हेतुं वदन् धनिनो विशिनष्टि—लुब्धानामिति । लुब्धानामलब्धधनलिप्सया लब्धधनव्ययभयेन च क्लिश्यतामिति भावः । अजितात्मनामजितेन्द्रियाणां कामानामपर्याप्त्या च क्लिश्यतामिति भावः । भयादलब्धा निद्रा यैस्तेषां चोराद्यो धनमपहरेयुरिति भयाद्विगतनिद्राणामित्यर्थः । इतोऽपि क्लेश इति भावः । अत्र हेतुं वदन्विशिनष्टि-सर्वतः सर्वेभ्योऽप्यतीव विशङ्किनामपहरेयुरिति शङ्कां कुर्वताम् ॥ ३१ ॥

एतदेव विवृणोति—राजत इति । राजादिभ्यः पशुतः पशुभ्यः गजाश्वादिभ्यः पक्षितः पक्षिभ्यः सस्यादिभक्षणार्थं प्रवृत्तेभ्यः कालतः स्वस्मादानभोगयोः प्रवृत्तात् स्वस्माच्च प्राणास्तत्तुल्यमर्थं येषामस्तीति तथा तेषां नित्यं भयमनुवर्तेत ॥ ३२ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

कृष्यायुद्योगवतो वित्तं स्यादित्यादिना यदुक्तं सुखं स्यादिति तत्परिहरति-अत्रापीति । अत्रापि मनुष्यशरीरेऽपि दम्पतीनां विपर्ययं दुःखं दृष्ट्वा निवृत्तिमार्गमाश्रितोऽस्मीत्यन्वयः । अन्यापनुत्तये सुखादन्यस्य दुःखस्य निरासाय "सुखाय कर्माणि करोति लोको न तैः सुखं नान्यदुपारमं वा" इति स्वोक्तेः ॥ २५ ॥

कर्मणो निवृत्तस्य दुःखस्य निरासाय सुखावाप्तौ किमन्तरङ्गमित्याशङ्क्य यदि सुखं स्वरूपाद्भिन्नं तर्हि तत्प्राप्तौ यत्नः कर्तव्यो न चैवं स्वरूपत्वात् सुखस्य तद्व्यक्तौ स्वरूपाच्छादकसर्वनिषिद्धकर्मनिरसनाविर्भूतभगवत्प्रसाद एव सुखव्यक्तिमित्यत्राह-सुखमिति । "बलमानन्द ओजश्च सहो ज्ञानमनाकुलम् । स्वरूपाण्येव जीवस्य व्यज्यन्ते परमाद्विभोः" इत्यादि हिशब्देन दर्शयति, अस्यात्मनो जीवस्य स्वरूपभूतं यत्सुखं तत्सर्वेहोपरतेः प्रकाशात्मवर्णा पूर्वोक्ता चेष्टा यस्य स सर्वेहः "को ह्येवान्यात्" इति श्रुतेः । उपार्जका स्फुटीकारतिरानन्दो यस्य स उपरतिः "यदेष आकाश आनन्दो न स्यात्" इति श्रुतेः । सर्वेहश्च उपरतिश्च सर्वेहोपरतिस्तस्माद्भगवताविर्भवतीति शेष. । "उपाधिके" इति सूत्रात् । ततः किं तत्राह, मनःसंस्पर्शजानिति । मनोऽधिष्ठितेन्द्रियाणां विषयैः संस्पर्शनात्सम्बन्धात् जाताञ्छब्दान् स्रगादिभोगांश्च सन्निवेशेत न सेवेत बुद्धिमानिति शेषः ॥ २६ ॥

एतदङ्गीकारविरुद्धस्य बाधकमाह-इतीति । आत्मन इत्येतदुक्तमित्येवं नैव सिद्धमिति शेषः । इति शब्दः प्रकारवचनः तत्र पुमान्सन्तं सदातनं स्वार्थं पुरुषार्थं विस्मृत्य भ्रमति भगवत्प्रसादेन निवर्तमानं द्वैतेऽन्यथा ज्ञाने विषये विचित्रां सुरनरादिनानायोनिविषयां घोरां संसृतिमाप्नोतीत्यन्वयः ॥ २७ ॥

स्वतृष्णाया अनिवृत्तफलत्वात्संसारस्य घोरत्वमितीममर्थं सदृष्टान्तमाह—जलमिति । तदुद्भवैर्जलोद्भवैः शैवलादिभिरन्नो

ज्ञानरहितोऽजितेन्द्रियो मृगतृष्णां सूर्यमरीचिसम्पृक्तसलिलं यथोपधावेत्तथा स्वतः स्वतन्त्राद्धरेरन्यत्र देवदत्तादावर्थदृक् पुरुषार्थदर्शी ॥ २८ ॥

ननु, पुरुषार्थसाधनत्वेन जातैर्देहादिभिरनुष्ठिताः क्रियाः सुखादिहेतवः स्युरित्याशङ्क्य भगवदर्पणबुद्धिचिकित्सारहिता व्यर्था इत्याह—देहादिभिरिति । या याः कृताः कृताः क्रियास्तास्ताः सर्वा अपि मोघाः तत्र हेतुगर्भं विशेषणम् अनीशस्येशाविरुद्धस्य ॥ २९ ॥

इतोपि वित्तापादने न प्रयतनीयम. आध्यात्मिकादिक्लेशग्राहगृहीतत्वेन डुंडुभग्रस्तमण्डूकवत्समृद्धशारीरबलाभावात् कृतान्तपाशबद्धगलस्य पुरुषस्य पुरतो निहितक्षीरासववद्व्यर्थं वित्तमित्याह-आध्यात्मिकादिभिरिति । कामैः शब्दादिविषयैः ॥ ३० ॥

कस्यचिददृष्टबलादुपार्जितवित्तस्य समृद्धशारीरबलस्याऽपि लोभाभिभूतमनस्कत्वेनाऽपि भोगो दुर्घट इत्याह, पश्यामीति ॥३१॥

प्राणार्थवद्भयम् अर्थवतः प्राणभयं भवति प्राणवतोऽर्थवतश्चेति वा ॥ ३२ ॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

अत्रापि मनुष्यत्वेऽपि अन्यापनुत्तये दुःखनिवृत्त्यै विपर्ययं दुःखमेव दृष्ट्वा निवृत्तोऽस्मि कर्ममार्गेभ्य इत्यर्थः ॥ २५ ॥

कर्मणा कदाचित् सुखं स्यादपि सर्वकर्मनिवृत्त्या किं स्यादिति चेत्तत्राह—सुखमस्य जीवस्य मम स्वरूपमेव तर्हि किं नाभाकाशते तत्राह—सर्वेति । सर्वा ईहाः कर्माणि तद्धेतुः तृष्णा च तासाम् उपरतिरेव तनुः तनुं विना यथा सुखं नोपलभ्यते तथा तामपि विनेत्यर्थः । भोगांस्तु प्राकृतान् मनःस्पर्शजान् मनोरथमात्रजान् क्षणभङ्गुरान् दृष्ट्वा तत्राकिञ्चित्करत्वं संविशन् स्वाभाविकानश्वरानन्दमुपभुञ्जानः स्वप्स्यामि स्वापिमि-नेतृष्णार्गलदिव्यकुसुमशय्यायामिति स्वस्य पीनत्वे सुखभोग एव हेतुरुक्तः "निवृत्तिः पुष्टिकराणाम्" इति वैद्यकोक्तेः यद्वा स्वप्स्यामि सन्नस्यापि तृष्णाभावतस्यानिवृत्त्या यद्यपि सम्यगात्मसुखानुपलम्भस्तथापि पञ्चपर्दिनैस्तस्यापि निवृत्त्या सम्यक् संविशन् शयिष्य इत्यर्थः । "सम्वेशः स्वापश्रीरतबन्धयोः" इति मेदिन्युक्तेरत्र सामान्यत एवोपभोगवाची संवेशशब्दो-ज्ञेयः ॥ २६ ॥

एवं चेत् सर्वेऽप्येव किमिति सुखिनो नस्युस्तत्राह—इत्येतदिति । स्वार्थं स्वीयं सुखरूपमर्थं विस्मृत्य द्वैते दुःखरूपे असति हेतावेव वस्तुत आत्मनः अविद्यमानेऽपि यद्वा असति असार्वकालिके ॥ २७ ॥

एतदेव दृष्टान्तेन स्पष्टयति—जलमिति । तदुद्भवैर्जलप्रवोद्भूतैर्नेतु जलादुद्भूतैस्तृणशैवालादिभिश्छन्नमिवात्मसुखं तत्रोद्भूतैर्मायिकतृणादिभिः छन्नंहित्वा स्वतोऽन्यत्र पुरुषार्थं पश्यन् ॥ २८॥

विपर्ययं दृष्ट्वेति यदुक्तं तद्विवृणोति—देहादिभिरिति पञ्चभिः । सुखं दुःखात्ययञ्च ईहत ईहमानस्य क्रिया मोघाः निष्फलाः ॥२९॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

यदि कदाचित् सफलाः स्युस्तदपि फलभोगाऽसामर्थ्यमाह—अध्यात्मिकादिभिरिति। दुःखसहितः सुखभोगोऽपि नेत्याह-मर्त्यस्य अकस्मादेव सम्भावितमृत्योः ॥ ३० ॥

तदेवमर्थैर्न दुःखनिवृत्तिः प्रत्युत दुःखाधिक्यमेवेत्याह, पश्यामीति ॥ ३१ ॥

स्वकर्मादिति मत एव कथञ्चिद्दानभोगविस्मरणादिना नाशः स्यादिति प्राणेषु अर्थेषु चासक्तिमतां भयं प्राणोऽत्र शारीरबलं स्वभोगादिप्रयोजकं ज्ञेयं जीवनमात्रन्तु विहितमेव "जीवस्य तत्त्वजिज्ञासा" इत्यादौ ॥ ३२ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

अत्रापि नरदेहे ऽपि सुखाय अन्यस्य दुःखस्यापनुत्तये कर्माणि कुर्वतां विपर्ययं सुखाभावं दुःखप्राप्तिञ्च दृष्ट्वा निवृत्तोऽस्मि तादृशकर्मत इति शेषः ॥ २५ ॥

सुखं तु अस्य हृदि दृश्यमानस्य भगवतः रूपं सर्वैः कुतो नाऽनुभूयते अत्राह—सर्वासामीहानामुपरतिर्यस्मात्समाधिः अस्याऽऽत्मनस्तनुः शरीरम् ध्यानसमाधिशून्यैर्जनैर्नाऽनुभूयते इतिफलितोऽर्थः. अतः मनःसंस्पर्शजान् मनसा संस्पृश्यते विचार्यते इति मनःसंस्पर्शी प्रारब्धं कर्म तज्जान् भोगान् दृष्ट्वा आवश्यभोग्यतया विलोक्य संविशन् भुञ्जन् स्वप्स्यामि शयानो ऽस्मीत्यर्थः ॥ २६ ॥

इत्येतद्भगवद्ध्यानरूपम् आत्मनः स्वार्थं स्वपुरुषार्थं सन्तं साधुमङ्गलावहमित्यर्थः। विस्मृत्य असत्यमङ्गले द्वैते आभ्यां चेतनाचेतनाभ्यां युतं द्वितं तदेवद्वैतं द्वयोर्भावो द्विताद्वितैव द्वैतं वा तस्मिन् चेतनाचेतनात्मके प्रपञ्चे जगति घोरां भयङ्करां संसृतिं जन्ममरणादिरूपामाप्नोति ॥ २७ ॥

यथा तदुद्भवैस्तृणादिभिः छन्नं जलं हित्वा मृगतृष्णामज्ञ एवोपधावेत् तद्वत्स्वतः स्वीयादीश्वरात् अन्यत्रार्थदृक् अज्ञ एव स्यात् ॥ २८ ॥

तस्यानीशस्य ईश्वरादन्यत्राऽर्थदृशः देहादिभिः सुखं दुःखाऽऽत्ययञ्च इच्छतः कृताः कृताः पुनः पुनः प्रवर्त्तिताः क्रिया मोघाः निष्फलाः स्युः ॥ २९ ॥

कर्हिचित् कदाचित्कुर्छ्रेण कष्टसाध्यया कयाचित् क्रियया उपनतैः प्राप्तैरपि अर्थैः धनैः कामैर्भोगैश्च मर्त्यस्य मरिष्यतः अध्यात्मिकादिभिर्दुःखैरमुक्तस्य किं न किमपि सुखमित्यर्थः ॥ ३० ॥

प्राप्तार्थस्य प्रत्युत दुःखं पश्यामीत्याह—पश्यामीति, आभ्याम ३१ ॥

राजादिभिः प्राणोपलक्षितदेहवतामर्थवतां च नित्यं भयं भवति ॥ ३२ ॥

---

भाषा टीका।

इस योनि में भी सुख और दुःखनिवृत्ति के लिये कर्म करने वाले स्त्री पुरुषों के विपरीत फल को देखकर अब मैं सुखादि की कामनाओं से कर्म करने से निवृत्त भया हूं ॥ २५ ॥

सुख तो इस आत्मा का स्वरूप ही है, पर वह मन-को स्पर्शकरने वाले विषयों से जायमान भोगों को देख कर, सर्व चेष्टाओं से उपराम को प्राप्त होकर अनुभव करने से ज्ञान होता है, ऐसे ही प्रारब्ध से आनेवाले भोगों को भोगते हुए हम भी सो रहे हैं ॥ २६ ॥

पुरुष इस प्रकार के सत् स्वार्थ को विस्मरण करके देव मनुष्यादि द्वैत भाव को असत् होने पर भी चिचित्र घोर संसृति को प्राप्त होता है ॥ २७ ॥

जल से उत्पन्न होने वाले शैवाल (सिमार) काई प्रभृति से छन्न (ढके हुए) जल को छोडकर, अज्ञ पुरुष जल-की कामना से जैसे मृगतृष्णा को दौडता है। और फल-को नहीं प्राप्त होता, ऐसे ही अपने अन्तर्यामी से अन्यत्र अर्थ दृष्टि करने वाला भी निष्फल प्रयत्नवान् होता है ॥ २८ ॥

प्रारब्ध के परतन्त्र इन देहादिकों से स्वयं असमर्थ होकर भी सुख प्राप्ति और दुःख के छूटने की चेष्टा करने वाले पुरुष की करीहुई सब क्रियायें निष्फल होती हैं ॥ २९ ॥

कदाचित् बडे कष्ट उठाने से द्रव्य प्राप्त भी होजावै तो-भी आध्यात्मिकादि दुःखों से नहीं छूटनेवाले पुरुष का द्रव्य से क्या स्वार्थ किया जायगा ॥ ३० ॥

और तुम कहते हो कि धन के विना भोग उपपन्न नहीं होता है, पर हम तो जिन लुब्धोंने धन जोड २ कर इकट्ठा किया है, अजितेन्द्रिय ऐसे उन धनियों को भी मैं बडा दुःखी देखता हूं। भय से निद्रा उन को नहीं आती, सब ही लोगों से सदा शङ्का करते रहते हैं ॥ ३१ ॥

राज से चोरों से शत्रुओं से स्वजनों से पशु से पक्षियों से याचकों से द्रव्यवाले को भय रहता है। ऐसे ही प्राण वाले को भी ॥ ३२ ॥

शोकमोहभयक्रोधरागक्लैब्यश्रमादयः ।
यन्मूलाः स्युर्नृणां जह्यात् स्पृहां प्राणार्थयोर्बुधः ॥ ३३ ॥
मधुकारमहासर्पौ लोकेऽस्मिन्नो गुरूत्तमौ ।
वैराग्यं परितोषं च प्राप्ता यच्छिक्षया वयम् ॥ ३४ ॥
विरागः सर्वकामेभ्यः शिक्षितो मे मधुव्रतात् ।
कृच्छ्राप्तं मधुवद्वित्तं हत्वा ऽप्यन्यो हरेत् पतिम् ॥ ३५ ॥
अनीहः परितुष्टात्मा यदृच्छोपनतादहम् ।
नो चेच्छये बह्वहानि महाहिरिव सत्त्ववान् ॥ ३६ ॥
क्वचिदल्पं क्वचिद्भूरि भुञ्जे ऽन्नं [(१)] स्वाद्वस्वादु वा ।
क्वचिद्भूरिगुणोपेतं गुणहीनमुत क्वचित् ॥ ३७ ॥
श्रद्धयोपाहृतं क्वापि कदाचिन्मानवर्जितम् ।
भुञ्जे भुक्त्वाऽथ कस्मिंश्चिद्दिवा नक्तं यदृच्छया ॥ ३८ ॥
क्षौमं दुकूलमजिनं चीरं वल्कलमेव वा ।
वसे ऽन्यदपि सम्प्राप्तं दिष्टभुक् तुष्टधीरहम् ॥ ३९ ॥
क्वचिच्छये धरोपस्थे तृणपर्णाश्मभस्मसु ।
क्वचित्प्रासादपर्यङ्के कशिपौ वा परेच्छया ॥ ४० ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

अतोऽनर्थहेतुत्वात्प्राणे जीवनेऽर्थे च स्पृहा न कार्येत्याह—शोकेति ॥ ३३ ॥

नन्वेवमनर्थाननुभवन्तोऽपि न केचिद्विरज्यन्ते न च यथालाभेन तुष्यन्ति त्वं तु कथं वैराग्यादिकं प्राप्तोऽसि ? तत्राऽऽह, मधुकारेति. मधुमक्षिकाऽजगरौ ययोः शिक्षया वृत्तपर्यालोचनया ॥३४॥

मधुकाराच्छिक्षितमाह—विराग इति । वित्तपतिं हत्वाऽन्यो वित्तं हरेदित्येवम् ॥ ३५ ॥

अजगराच्छिक्षितमाह—अनीह इति । सत्त्ववान्धैर्यवान् ॥ ३६ ॥

पीनत्वे हेतुं वदन्यदृच्छया प्राप्तात्परितोषं प्रपञ्चयति—क्वचिदल्पमिति, षड्भिः ॥ ३७ ॥ ३८ ॥

चीरं जीर्णवस्त्रखण्डम् वसे परिदधे दिष्टभुक् प्रारब्धकर्मफलभोगी ॥ ३९ ॥

प्रासादमध्ये पर्यङ्के तत्रापि कशिपौ तूलिकायाम् ॥ ४० ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

न केवलं भयमेवापितु शोकमोहभयादयः सर्वे यन्मूलाः यदर्थमेव मूलं येषां ते नृणां स्युर्भवेयुः तस्माद्बुधः हेयोपादेयविवेकवान् तयोः प्राणार्थयोः स्पृहां जह्यात् त्यजेत् ॥ ३३ ॥

यदुपदेशात् त्वमीदृशं निवृत्तिधर्मास्थितस्तं कथयेत्यत्राह—मधुकारेति । अस्मिन् लोके नोऽस्माकं गुरुश्रेष्ठौ मधुकार महासर्पौ मधुमक्षिकौ अजगरावेवैतद्धर्मशिक्षकौ भवतः तदेवाह—ययोर्मधुकारमहासर्पयोः शिक्षया वृत्तिपर्यालोचनया वयं वैराग्यं परितोषं दैवाल्लब्धात् सन्तोषं च प्राप्ताः तत्र मधुकाराद्वैराग्यं महासर्पात् परितोषं च प्राप्ता इत्यर्थः ॥ ३४ ॥

एतदुभयं विवृणोति—विराग इति, द्वाभ्याम् । तावत्सर्वेभ्यः विरागो मया मधुव्रताद्भ्रमराच्छिक्षितः तच्छिक्षया मम वैराग्योदय इत्यर्थः । किं तच्छिक्षितम् ? तदाह—यथा मधुव्रतैरितस्ततः पुष्पेभ्य आनीय कथञ्चिन्निवेशितं मधु तत्स्वामिनो मधुव्रतान् हत्वाऽन्यो हरति तथा मधुवत् दुःखार्जितं धनमन्यः पतिं धनस्यपतिं हत्वा हरेदित्येतन्मधुव्रताच्छिक्षितमित्यर्थः ॥ ३५ ॥

अजगराच्छिक्षितमाह—अनीह इति । महाहिरिवाऽहमप्यनीहः निर्व्यापारः यदृच्छोपनताद्दैवाल्लब्धादन्नादेः परितुष्टात्मा सन्तुष्टचित्तः नो चेत् यदृच्छोपनतं नो प्राप्तं चेत्तर्हि सत्त्ववान् धैर्यवान् बहून् अहानि शये शयानोऽस्मि ॥ ३६ ॥

पीनत्वे हेतुत्वेन यदृच्छया प्राप्तात्परितोषं प्रपञ्चयति—

(१) साध्वसाधु इति वीर० पा० ।

श्रीमद्वीरराघवाचार्य्यकृतभागवतचन्द्रचन्द्रिका ।

कश्चिदल्पमिति । कचित् कदाचिदल्पं कदाचिच्च भूरि बहु कचिच्च साधु कचिच्चासाध्वसमीचीनममृष्टं कचिच्च गुणावद्रसवत् कदाचिन्निर्गुणम् ॥ ३७ ॥

कदाचिच्छ्रद्धया नीतं कदाचिन्निन्दापूर्वकमानीतं वाऽन्नादिकं भुञ्जे अग्नि कदाचिद्दिवा नक्तं च यदृच्छया प्राप्तं भुञ्जे ॥ ३८ ॥

एवं वस्त्रमपि दुकूलाद्यन्यतममन्यद्वा दैवाल्लब्धं वसे आच्छादयामि परिदधे च चीरं जीर्णवस्त्रञ्च एवं दिष्टभुक् प्रारब्धभुक् सन्तुष्टचित्तश्चाहम् ॥ ३९ ॥

कचिद्भूपृष्ठेऽत्र कचिच्च तृणादिषु शये कचिच्च प्रासादोपरि पर्यङ्के तत्रापि कशिपौ वा तस्य दौर्लभ्यशङ्कां निराह-परेषामिच्छयेति । इदमुत्तरत्राप्यनुषञ्जनीयः ॥ ४० ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

ननु, सर्वोऽनर्थशमने किं कारणमित्याशङ्क्य स्पृहा सर्वापदो निदानमतस्तत्त्याग एव प्रथमतः कारणमित्याह-शोकेति । या स्पृहा मूलं येषां ते तथा प्राणे ऽर्थे च स्पृहां वैष्णवसिद्धान्ते तद्विरोधिनो जनात् प्राणसङ्कटे प्राप्ते प्राणरक्षणे स्पृहाऽपि न कार्या किमुतार्थे इति प्रदर्शनाय प्राणग्रहणम् ॥ ३३ ॥

वित्तवतः प्राणभयं वित्तस्पृहया शोकादिकं स्यादित्याद्युक्तमर्थं मधुकराजगरदृष्टान्तेन बोधयति—मधुकरेति । गुरूत्तमाद्या शिक्षा साऽऽभ्यामेवाप्तेति गुरूत्तमावित्युचे ॥ ३४ ॥

यथा च तं मधुवनं हत्वा ऽन्यो मधु हरति तथा वित्तापादकं हत्वा कृच्छ्रादर्जितं राजाद्यन्यतमो हरेत् मधुव्रतस्थितिं दृष्ट्वा सर्वकामेभ्यो विरागः शिक्षितः ॥ ३५ ॥

उदरपोषणप्रयत्नशून्योऽनीहः नोचेद्यदृच्छया ऽप्राप्तं चेन्महाहिरजगरः ॥ ३६ ॥

भूरिगुणोपेतं कस्मिंश्चिद्दिवाऽह्न्येव भुक्त्वा नक्तं भुञ्जे कस्मिंश्चिद्दिने नक्तं भुक्त्वाऽह्नि भुञ्जे ॥ ३७ ॥ ३८ ॥

क्षौमं दुकूलमित्यादिकमेकस्मिञ्जन्मनि बहु जन्मनि चेति यथायोग्यमङ्गीकर्तव्यम् दैवलब्धेन भुञ्जे इति दिष्टभुक् क्षौमाद्याच्छादनं गजादिभिश्चरणं क्षत्रजन्मनि प्रासादादिशयनं भूपृष्ठशयनं च पश्वादिजन्मनि भस्मादौ शयनं श्वानादिजन्मनि बाल्ये च अजिनादि अजिनाद्याच्छादनमृष्यादिजन्मनि अस्मिन् जन्मनि जन्मान्तरे वा दिग्वासाः दिगम्बरः ॥ ३९ ॥ ४० ॥ ४१ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

कचिदिति, सार्द्धकं । स्वाद्वस्वादु वेत्यत्र साध्वसाधु वेति कचित् पाठः ॥ ३७ ॥

भुञ्जे इत्यर्द्धकम ॥ ३८—४४ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

"प्राणार्थयोः स्पृहां जह्यात्" इति शरीरबलाधिक्यार्थं धनाधिक्यार्थं च न यतेत स्वल्पेनापि बलेन स्वल्पेनापि धनेन पारमार्थिककृत्यसिद्धेरिति भाव. ॥ ३३ ॥

ननु, कस्माद्गुरोरेतत्त्वया शिक्षितम् ? तत्राह-मधुकारेति ॥ ३४ ॥

मधुमक्षिकातः शिक्षितमाह—वित्तपतिं हत्वाऽन्यान्यो वित्तं हरेदिति मे वित्ते विरागः ॥ ३५ ॥

अजगराच्छिक्षितमाह—अनीह इति । शये स्वपिमि सत्त्ववान् धैर्यवान् ॥ ३६ ॥ ३७ ॥ ३८ ॥

वसे परिदधे ॥ ३९ ॥

धरोपस्थे धराक्रोडे "उपस्थः शेफसि तथा क्रोडे मदनमन्दिरे" इति मेदनी ॥ ४० ॥ ४१ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

मतो नृणां शोकादयो यन्मूलाः स्युस्तां प्राणार्थयोः स्पृहां बुधो जह्यादेव ॥ ३३ ॥

यच्छिक्षया यद्वृत्तिपर्यालोचनया वैराग्यं परितोषं च वयं प्राप्ताः ॥ ३४ ॥

हत्वा पतिं वित्तपतिम् ॥ ३५ ॥

यदृच्छोपनतादन्नादितः नो चेदनुपनते अन्नादौ सत्त्ववान् धैर्यवान् शये स्वपिमि ॥ ३६-३७-३८ ॥

चीरं वस्त्रखण्डम् वसे परिदधे दिष्टभुक् प्रारब्धभुक् ॥ ३९-४० ॥

---

भाषाटीका ।

शोक मोह भय क्रोध राग दैन्य श्रम आदिक सर्वो का मूल कारण तो, प्राण और द्रव्य की स्पृहा है, अर्थात् चाहना है, बुद्धिमान उसे छोड देवें ॥ ३३ ॥

मधुकार और महासर्प ये दोनों इस लोक में हमारे उत्तम गुरू हैं, हमने वैराग्य और सन्तोष नहीं की शिक्षा से पाया है ॥ ३४ ॥

सर्व कामों से वैराग्य हमने मधु की मांखी से सीखा है। जैसे कि ? मधुमक्षिका मधु जोडती है, फिर फल को नहीं प्राप्त होती है, कोई दूसरा पुरुष पति को मारकर लेता है ऐसे ही धन की दशा है ॥ ३५ ॥

और अजगर से हमने यह सीखा है, कि विना चेष्टा किये हरीच्छा से जो प्राप्त हो जावे, उसी से सन्तोष करे, यदि कभी कुछ नहीं प्राप्त होवै। तब धैर्य को धारणकर अजगर के तरह सोते रहते हैं ॥ ३६ ॥

क्वचित्स्नातो ऽनुलिप्ताङ्गः सुवासाः स्रग्व्यलङ्कृतः ।
रथेभाश्वैश्चरे क्वापि दिग्वासा ग्रहवद्विभो ! ॥ ४१ ॥
नाऽहं निन्दे नच स्तौमि स्वभावविषमं जनम् ।
एतेषां श्रेय आशासे उतैकात्म्यं महात्मनि ॥ ४२ ॥
विकल्पं जुहुया[1] च्चित्तौ तां मनस्यर्थविभ्रमे ।
मनो वैकारिके हुत्वा तं मायायां जहोत्यनु ॥ ४३ ॥
आत्मानुऽभूतौ तां मायां जुहुयात्सत्यदृङ् मुनिः ।
ततो निरीहो विरमेत् स्वानुभूत्या ऽऽत्मनि स्थितः ॥ ४४ ॥
स्वात्मवृत्तं मयेत्थं ते सुगुप्तमपि वर्णितम् ।
व्यपेतं लोकशास्त्राभ्यां भवान्हि भगवत्परः ॥ ४५ ॥

नारद उवाच ।

धर्म्मं पारमहंस्यं वै मुनेः श्रुत्वा ऽसुरेश्वरः ।
पूजयित्वा ततः प्रीत आमन्त्र्य प्रययौ गृहम् ॥ ४६ ॥

इति श्रीमद्भागवते महापुराणे सप्तमस्कन्धे पारमहंस्यां संहितायाम्
वैयासिक्यां युधिष्ठिरनारदसंवादे यतिधर्मे
त्रयोदशोऽध्यायः ॥ १३ ॥

भाषा टीका ।

कभी थोडा कभी बहुत स्वादु वा अस्वादु जैसा अन्न-मिले वैसा भोजन करलेते है, कभी बहुगुण वाला, कभी किसी जगह गुणहीन भी मिलता है, तौ उसी से सन्तुष्ट रहते है ॥३७॥

किसी समय श्रद्धा से लाया हुआ, कभी मानवर्जित, किसी समय दिन में, कभी रात में, यदृच्छा से भोजन करलेते है। कभी न भोजन करके भी रहजाते है ॥ ३८ ॥

बहुत उत्तम क्षौम ( अतसीका वस्त्र ) कभी रेशमी कभी मृग चर्म वा चीर अथवा वल्कल अथवा और जो कुछ प्राप्त होगया उसको पहिन लेते है। और प्रारब्ध को भोगते हुए उसी में बुद्धि-का सन्तोष करलेते है ॥ ३९ ॥

किसी समय पृथिवी के पृष्ठपर कभीतृण पर, कभी पत्तोंपर, कभी पत्थर पर, कभी धूलि वा भस्म में पडे रहते हैं, किसी समय दूसरे की इच्छा से महलों में पर्यंक के ऊपर, कभी खड्डा के ऊपर सो जाते हैं ॥ ४० ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

चरे विचरामि क्वचिद्ग्रहवद्दिगम्बरो विचरामि ॥ ४१ ॥

न च मानापमानकर्तृषु मम वैषम्यमित्याह—नाहमिति । नाहं निन्दामि नच स्तौमि महात्मनि विष्णौ ॥ ४२ ॥

एवंभूतत्वेन स्थितावुपायमाह—विकल्पमिति. द्वाभ्याम । चित्तौ भेदग्राहकमनोवृत्तौ अर्थरूपो विभ्रमो यस्मिन्मनसि तन्मनो वैकारिके ऽहङ्कारे तमहङ्कारमन्वनन्तरं महत्तत्त्वद्वारेणेत्यर्थः ॥ ४३ ॥

सत्यमेव पश्यतीति तथा ॥ ४४ ॥

मन्ददृष्ट्या लोकशास्त्राभ्यां व्यपेतं नतु तत्त्वदृष्ट्या यतो भवान्भगवत्परः ॥ ४५ ॥ ४६ ॥

इति श्रीमद्भागवते महापुराणे सप्तमस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिकायाम
त्रयोदशोऽध्यायः ॥ १३ ॥

[1] चित्तं तन्मनसि इति पाठः—वीर० विजय० ।

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

स्नातमनुलिप्तं चन्दनेन चाङ्गं यस्य शोभनं वासो वस्त्रं यस्य स्रग्भिरलंकृतः रथादिभिर्यानैः चरे सञ्चरामि क्वचिच्च दिग्वासा दिगम्बरः ग्रहवच्चरे हे विभो ! ॥ ४१ ॥

न च मानावमानादिकर्तृषु मम वैषम्यमित्याह—नाहमिति । स्वभावत एव विषमं जनं स्तुतिनिन्दयोः कर्तारं न स्तौमि न निन्दे च किन्तु तेषां जनानां सर्वेषां श्रेयः धर्माविरूपम् उताऽपि च महात्मनि भगवत्यैकात्म्यमेकचित्तत्वं चाशासे प्रार्थये ॥ ४२ ॥

इत्थमन्यस्याप्यवस्थितौ उपायमाह—विकल्पमिति । विकल्पं जातिरूपादिविकल्पं चित्ते मनोव्यापारे जुहुयात् प्रलीनं भावयेत्त्चित्तमर्थविभ्रमे देहात्मभ्रमहेतौ मनसि मनश्च वैकारिके सात्त्विकाहंकारे तं च वैकारिकं मायायां मूलप्रकृतौ जुहुयात् सर्वत्र होमोनाम लयानुसन्धानरूपः ॥ ४३ ॥

तां च मायां स्वात्माऽनुभूतौ जुहुयात् ततः सत्यंस्वात्मशरीरकं परमात्मानं पश्यतीति सत्यदृक् मुनिः तन्मननशीलः निरीहो निश्चेष्टः स्वानुभूत्यात्मनि परमात्मात्मके परिशुद्धजीवस्वरूपे स्थितः तदनुसन्धानपरः विरमेत्प्रारब्धावसाने कलेबराद्विरमेत् ॥ ४४ ॥

उक्तं स्ववृत्तमुपसंहरति—स्वात्मवृत्तमिति । इत्थं मया गुप्तमपि स्वात्मनो मम वृत्तं मन्ददृष्ट्या लोकशास्त्राभ्यां व्यपेतं न तु तत्त्वदृष्ट्या व्यपेत बहिर्भूतं ते तुभ्यमुपवर्णितं हि यस्माद्भवान् भगवत्परोऽतो गुप्तमुपवर्णितमित्यर्थः ॥ ४५ ॥

एवं मुनिनोपवर्णितं पारमहंस्यं तुर्याश्रमनिष्ठानां गुणं श्रुत्वा ऽसुरेश्वरः प्रह्लादः तं यतिं प्रीतस्सन् पूजयित्वा आमन्त्र्य अनुज्ञाप्य स्वगृहं प्रति ययौ ॥ ४६ ॥

इति श्रीमद्भागवते महापुराणे सप्तमस्कन्धे

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायाम्

त्रयोदशोऽध्यायः ॥ १३ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

सत्वादिगुणस्वभावेन विषमं सात्विकराजसतामसभेदं भिन्नं सर्वेभ्यो भयं मत्त इति यतिधर्मत्वात् भूतानां भद्रमेवाशासे तत्रापि भगवत्स्वामित्वं न विस्मरामीत्याह—आशास इति । उतेत्याशास इत्यनुवर्तते जगत एक एव स्वामीतिभावमैकात्म्यम् उताशासे कस्मिन्विषये महात्मनि भगवद्विषय इत्यर्थः ॥ ४२ ॥

तुर्यावस्थेन विहितोपासनानन्तरमिदं च कर्तव्यं ब्रह्मप्राप्तिमार्गत्वादित्याह—विकल्पमिति । विकल्पं जगच्चित्ते मनोवृत्त्यभिमानिनि न्यसेज्जुहुयात् जगच्चित्ताख्याग्न्यधीनमिति चिन्तयेत् चित्तमग्निमर्थेषु भ्रममाणे भगवत्युपाधावमाने मनसि मनो नामेन्द्राधीनतया तिष्ठतीति चिन्तयेत् मन इन्द्रं वैकारिके रुद्रे हुत्वा सञ्चिन्त्यामु रुद्रं मायायां प्रकृतिविकारे महत्तत्त्वे विरिञ्चे सञ्चिन्त्य तां मायां तं विरिञ्चं वाऽऽत्मानुभूतौ चित्प्रकृतौ जुहुयात् चिन्तयेत् "चित्ताख्याऽग्नेरधीनं हि जगदेतद्विचिन्तयेत् । मनो नामेन्द्रवशगमग्निं च प्रतिचिन्तयेत्" इति वा वाक्यात्सर्वमवगन्तव्यम् । अत्र जडकार्यस्य जडकारणात्मकत्वं चेतनस्य चेतनाधीनत्वं चिन्तनीयमित्यर्थः । तामात्मानुभूति स्वानुभूतेर्लक्ष्म्या आत्मनि स्वामिनि पत्यौ निरन्तरं चिन्तयेत् ततो मुनिरनन्तरं कृतकृत्यो "वेत्ति वेद्यस्य सर्वस्य मुनिः सद्भिरुदाहृतः" इत्युत्पलमालावचनात्. किञ्च सत्यं साधुगुणपूर्णं विष्णुं पश्यतीति सत्यदृक् स्वानन्दानुभवात्मनि स्वमहिम्नि स्थितः "महिम्निस्वे महीयते" इति वचनात् स्वरूपानन्दज्ञानात्मनि ब्रह्मणि स्थित इति वा निरीहः अत एव निषिद्धचेष्टारहितो विरमेत् कृत्यादिति शेषः ॥ ४३ ॥ ४४ ॥

प्रतिपादितमर्थं निगमयति—स्वात्मेति । मया स्वात्मनो मम वृत्तं तुभ्यमनुवर्णितमित्यन्वयः । स्वात्मनो जीवस्य वा परमात्मनो वा कीदृश मुखतो लोकशास्त्राभ्यां व्यपेत रहितं आन्तरतो विपरीतत्वेन प्राप्त शास्त्रसिद्धत्वाच्छास्त्रीयमित्यर्थः—

"अशास्त्रीयत्वान्मुखतः शास्त्रापेतमिदं विदुः ।
शास्त्रनिर्णयगम्यत्वाच्छास्त्रीयमभिधीयते" ॥

इति वचनादुक्त एवार्थः । इदं सिद्धमित्यभिप्रेत्याह—भवानिति ॥ ४५ ॥

ततः प्रह्लादेन किं कृतमित्यतस्तद्वचनमाह—नारद इति । पारमहंस्यं परमहंसानां निवृत्तिमार्गस्थानां विद्यमानम् ॥ ४६ ॥

इति श्रीमद्भागवते महापुराणे सप्तमस्कन्धे

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम्

त्रयोदशोऽध्यायः ॥ १३ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

भगवत्पर इति क्वचित् पाठः ॥ ४५ ४६ ॥

इति श्रीमद्भागवते महापुराणे सप्तमस्कन्धीये

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे

त्रयोदशोऽध्यायः ॥ १३ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

श्रेयो भक्तियोगं तस्य भगवतः सकाशाद्दुर्लभत्वमाशंक्याह, उतेति । ऐकात्म्यं सोऽहं महात्मनि परमात्मनि ॥ ४२ ॥

एवंभूतत्वेन योगिनः स्थितावुपायमाह—विकल्पमिति, द्वाभ्याम् । विविधं कल्पनं इति विकल्पो व्यवहारस्तं चित्तौ मनोवृत्तौ तत एव तस्य प्रवृत्तेः तां मनसि अर्थानां विविधं भ्रमणं यातायातं यतस्तस्मिन् वैकारिकेऽहंकारे तं महति तच्च महान्तं मायायाम् अत्र तं महतीति पदद्वयमध्याहार्यम् ॥ ४३ ॥ ४४ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

लोकशास्त्राभ्यां व्यपेतं रहितमिति मन्ददृष्ट्या नतु तत्त्वदृष्ट्या किञ्च हीति हि यतो भवान् भगवत्प्रियो महाभागवतः तवाऽनेन प्रयोजनाभाव इति भावः ॥ ४५ ॥ ४६ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् ।
त्रयोदशः सप्तमस्य सङ्गतः सङ्गतस्सताम् ॥ १३ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीप ।

चरे विचरामि ॥ ४१ ॥

श्रेयो मुमुक्षूणां मायामयमैश्वर्य्यम् महात्मनि भगवति मुमुक्षूणामैकात्म्यं तद्भावापत्तिलक्षणं मोक्षम् ॥ ४२ ॥

महात्मन्यैकात्म्यलक्षणस्य मोक्षस्योपायमाह—विकल्पमिति, द्वाभ्याम् । स्वानुभूत्या स्वीयस्य परमात्मनो ध्यानेन आत्मनि परमात्मनि स्थितः भगवद्ध्याननिष्ठो मुमुक्षुः विकल्पं चित्तं चित्तौ बुद्धौ जुहुयात्तां मनसि मना वैकारिके सात्विकाहङ्कारे हुत्वा अनु अनन्तर तं महत्तत्त्वद्वारा मायायां प्रकृतौ जुहोति जुहुयात् ॥ ४३ ॥

तां मायाम् आत्मानुभूतौ जगत्कारणे जुहुयात्तच्छक्तितया तस्मिन्प्रविलाप्य स्वयमात्मनि भगवति अंशिनि दृग् दृष्टियस्य सः विरमेत् संसारादिति शेषः । देवयानेन तत्पदं व्रजेदित्यर्थः ॥४४॥

भवान् भगवत्प्रियोऽनस्ते आत्मवृत्तं सुगुप्तमपि मया वर्णितम् कथम्भूतं लोकशास्त्राभ्यां लोकः प्रसिद्धः शिश्नोदरतृट्शास्त्रं तदनुरूपं कर्मादिप्रतिपादकं भगवच्छास्त्रविरुद्धं ताभ्यां व्यपेतं दूरीभूतम् ॥ ४५—४६ ॥

इति श्रीमद्भागवते महापुराणे सप्तमस्कन्धीये
श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे
त्रयोदशाऽध्यायार्थप्रकाशः ॥ १३ ॥

---

भाषा टीका ।

किसी समय किसी की इच्छा से स्नान कर चन्दन का लेपन कर सुन्दर वस्त्रो को धारण कर माला पहिन अलंकृत होकर, रथ हस्ती घोडाओं पर बैठकर चलते हैं । हे विभो! और कभी दिगम्बर (नग्न) होकर, जैसे कोई राहु केतु शनि आदि नवग्रहोंमे से कोई ग्रह आगया हो वा पिशाच हो,इस तरह विचरते रहते हैं ॥ ४१ ॥

जनतो स्वभाव से विषम हैं, कोई प्रतिकूल वर्त्तता है, कोई अनुकूल वर्त्तता है, परञ्च मैं तो किसी की निन्दा भी नही करता और किसी की बडाई भी नहीं करता हूं किन्तु इन सबों के श्रेय ( मङ्गल ) को मनाता हूं, और परमात्माभे एकता ( निष्कपटता ) चाहता हूँ ॥ ४२ ॥

मनके संकल्पविकल्पों को चित्त की वृत्तियों मे हवन करे, उनको अर्थ के विभ्रम करने वाले मन में होमदें, मनको सात्विक अहंकार मे, उसको महतत्त्व में, उसको प्रकृतिमे, हवन का अनुसंधान करे ॥ ४३ ॥

उस प्रकृति पद वाच्य माया को आत्मानुभव में हवन करे, फिर वह सत्य दृष्टा मुनि निश्चेष्ट होकर विराम को प्राप्त हो जाय, और अपने अनुभव से परमात्मा में स्थिर होरहे॥४४॥

हे प्रह्लाद ! अतिगुप्तभी अपना समाचार हमने तुमसे इस प्रकार वर्णन किया और यह लोक शास्त्रसे अविरुद्ध है और आप तो भगवत्प्रिय हो सब जानत ही हो ॥ ४५ ॥

नारद उवाच ॥

नारदजी बोले, । कि असुरेश्वर प्रह्लाद, इस प्रकार परमहंसों के धर्मोंको सुनकर बड़े प्रसन्न हुये , और मुनि की पूजकरा आज्ञा लेकर घर को सिधारे ॥ ४६ ॥

इति श्रीमद्भागवत सप्तस्कन्ध में त्रयोदश अध्याय की
भागवताचार्यकृत भाषा टीका समाप्त ॥ १३ ॥

---

इति श्रीमद्भागवते महापुराणे सप्तमस्कन्धे त्रयोदशोऽध्यायः ॥ १३ ॥



श्रीधरस्वामिकृतभावार्थदीपिका ।

निधानादि, आन्तरिक्षमकस्मादेव प्राप्तम्. एवं खत एवाऽच्युतनिर्मितं दैवलब्धं यत् एतत्पूर्वोक्तं कर्मादि ॥ ७ ॥

दैवाल्लब्धेऽपि नातिरेकेऽपि तत्राऽभिमानो न कार्य इत्याह—यावदिति । म्रियेत पूर्येत ॥ ८ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

एवमाश्रुताश्रमत्रयधर्मो गृहस्थाश्रमधर्मान् बुभुत्सुः पृच्छति, युधिष्ठिरः—गृहस्थ इति । हे देवर्षे ! सन्ध्यभाव आर्षः गृहेष्वेव मूढा धीर्यस्य गृहासक्तचित्तो यादृशो गृहस्थाश्रमस्थः पुमान् येन विधिना एतां पदवीं तुर्याश्रमिगम्यां पदवीं मार्गं मुक्तिमित्यर्थः । यायात् प्राप्नुयात् तं विधिं ब्रूहि ॥ १ ॥

एवमापृष्टगार्हस्थ्यधर्मो देवर्षिस्तदाश्रममभिनन्दंस्तान् धर्मान् वक्तुं प्रतिजानीते—साध्विति । हे महाराज ! जानतापि त्वया लोकान् साधु यथा तथाऽनुगृह्णता साधु पृष्टमेतस्त्वत्पृष्टं गार्हस्थ्यव्रतमहं तुभ्यं प्रवक्ष्यामि यतः कर्मणः मया वक्ष्यमाणगार्हस्थ्यधर्मात् कर्मणां मुक्तिप्रतिबन्धकानां पुण्यपापात्मकानां निरासद्वारा नैष्कर्म्यं ज्ञानयोगलाभो भवेत् ॥ ० ॥

एवं प्रतिज्ञाय गार्हस्थ्यधर्मानाह—गृहेष्वित्यादिना यावदध्यायसमाप्ति । यद्यपि प्रथमाश्रमधर्मकथनानन्तरम् एतेतदाश्रमधर्मवर्णनं युक्तं क्रमप्राप्तत्वात्तथापि गार्हस्थ्यधर्माणां बाहुल्यान्महता प्रबन्धेन वर्णनीयत्वादाश्रमान्तरधर्मवर्णनानन्तरं ते कथ्यन्ते क्रमानादरात् । अत्र केचिद्वदन्ति मोक्षान्तरङ्गत्वेन प्रथमं वनस्थयतिधर्मानभिधाय पश्चाद्गृहस्थधर्मानभिदधातीति,तन्मन्दम् "अतस्त्वितरज्ज्यायो लिङ्गाच्च" ३।४।३९। इति शारीरकन्यायेन ब्रह्मविद्याऽनुग्राहकाल्पधर्माश्रमान्तरापेक्षया तदनुग्राहकबहुधर्मकगार्हस्थ्यस्यैवान्तरङ्गत्वात्तेषां यथोक्त एवाभवः । हे राजन् ! गृहेष्ववस्थितः गृहाश्रमस्थ गृहोचिता आश्रमाऽनुगुणाः क्रियाः कर्माणि सन्ध्योपासनपञ्चमहायज्ञाग्निहोत्रदर्शपूर्णमासादीनि साक्षाद्वासुदेवार्पणं यथा भवति तथा कुर्वन् फलसङ्गकर्तृत्वत्यागपूर्वकं कुर्वन् महामुनीनुपासीत भगवद्गुणानुकूलशीलान्महाभागवतानुपासीत सेवेतेत्यर्थः ॥ २ ॥

कथयमानेभ्यो भगवत अवतारकथामृतमभीक्ष्णं पुनः पुनः यथाकालमानसकर्मानुष्ठानावकाशोचितं कालमुपशान्तजनैः सहितः श्रद्धापूर्वकं शृण्वन् ॥ ३ ॥

एवं सतां सङ्गान्द् दारपुत्रादिषु शनकैः सङ्गं विमुञ्चेदहंममताद्यभिमानं जाग्रदेवं स्वप्नवत्सु स्वप्नाऽभिमानविषयेषु तत्सु देहादिषु स्वप्नवद्बुद्धियुक्तो यथा स्वप्ने लक्षिते पुत्रादौ तस्मादुत्थितः तत्कालमात्राऽनुमान्यतां भावयेत् ॥ ४ ॥

तथा देहे गेहेषु च यावदर्थ दारादिषु न पण्डितः अस्थिरत्वाऽपुरुषार्थज्ञानवान् तत्र देहादौ स्वयं विरक्तोऽपि रक्तवदासक्तवद्यावदर्थं प्राणधारणाऽपेक्षितमर्थमुपासीनः स्वीकुर्वन् नृलोके नृशरीरे नरतां न्यसेदनुसन्दधीत नरत्वादिकं देहगतमनुसन्दधीत नत्वात्मन्यनुसन्दधीतेत्यर्थः ॥ ५ ॥

ज्ञात्यादयस्तेभ्यो ऽन्ये च यद्वदन्ति यच्चेच्छन्ति तत्सर्वं निर्ममः ममकाररहितो मोदेताऽनुमोदेत ॥ ६ ॥

यावदर्थपरिग्रह इत्येतदेव विवृणोति-यद्भगवता निर्मितं प्रापितं दिव्यादिभेदभिन्नं वित्तं तत्र दिव्यं वित्तं वृष्ट्यादिभिर्जातं धान्यादि भौमं भूगर्भाज्जातं सुवर्णादिरूपम् आन्तरिक्षमकस्मादेव प्राप्तम् यद्वा दिव्यं वित्तमर्काऽऽलोकादि आन्तरिक्षं वर्षं भौमं तृणादि तथैतत्सर्वमुपयुञ्जानो विनियुञ्जान अबुधोऽविवेकी चेत् स्वतः स्वत्वेन कुर्यात् अबुधश्चेदेतत्सर्वं स्वत्वेनाभिमन्येतेत्यर्थः । यद्वा बुध इत्येवच्छेदः विवेकी तत्सर्वमुपयुञ्जानः एतद्यथोपयुक्तं स्वतः कुर्यात् स्वत्वेन स्वीकुर्यादिहधारणमात्रोपयुक्तमेव स्वीकुर्यादित्यर्थः ॥ ७ ॥

अधिकं न स्वीकुर्यात् इत्यभिप्रयन् तस्मिन् स्वत्वाभिमानं कुर्यादित्याह—यावदिति । हि यस्माद्यावज्जठरमुदरं म्रियेत पूर्येत तावदेव स्वत्वं देहिनामुदरभरणोपयुक्त एव हि वित्ते देहिनां स्वत्वाभिमान इत्यर्थः । एवं हि योऽधिकमपि स्वत्वेनाभिमन्येत स पुमांस्तेनश्चोर एव यत एवं ततो दण्डमेवार्हति इह दण्डाभावेऽप्यमुत्र दण्डमर्हत्येव यद्वा संसृतिरूपं दण्डमर्हतीति भावः ॥ ८ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

सर्ववर्णाश्रमाणां गृहाश्रममूलत्वात्सूचीकटाहन्यायेन वर्णाद्याश्रमधर्मं निरूप्य गृहाश्रमधर्मं निरूपयत्यस्मिन्नध्याये, तत्र "नापृष्टः कस्यचिद्ब्रूयात्"इति न्यायात् युधिष्ठिरः पृच्छतीत्याह—युधिष्ठिर इति । एतां पदवीमन्याश्रमविषयां विधिना प्रकारेण ॥ १ ॥

* नैष्कर्म्यं मोक्षसाधनत्वम् ॥ ० ॥

गृहोचिताः क्रियाः पञ्चमहायज्ञाः—

"पञ्चपर्वाग्निहुत्यर्थं विद्यां चाध्यात्मिकीं जपेत् ।
बलिकर्मस्वधाहोमस्वाध्यायातिथिसत्क्रियाः ॥
भूतपितृामरब्रह्ममनुष्याणां महामखाः"—

इति याज्ञवल्क्यः । वासुदेवार्पणं कुर्वन्निति शेषः ॥ २ ॥

उपशान्तजनेन संन्यासिजनेनावृतं कालमितम् ॥ ३ ॥

स्वप्नं दृष्ट्वोत्थितः स्वप्नदृष्टपदार्थसङ्गं यथा जहाति तथा जायादिसङ्गं मुञ्चेदित्यन्वयः ॥ ४ ॥

यावदर्थो यावद्देहयात्राप्रयोजनो देहाद्यनुपासीनो ऽवतिष्ठमानश्च देहादौ रक्तवत् स्निग्धवत्सतां नरत्वं न्यसेत्त्यजेत् यतिर्भवेदित्यर्थः ॥ ५ ॥ ६ ॥

अन्तरिक्षं द्यावापृथिव्योर्मध्यभवमच्युतेन निर्मितं यद्वित्तमुपयुञ्जीरन् लोका इति शेषः तत्सर्वं जानन् स्वकीयमिति न स्वीकुर्यात् ॥ ७ ॥

यावदर्थं इत्युक्तं विवृणोति—यावदिति । जठरं यावद्वित्तं म्रियेत गृह्णाति तावद्वित्तं स्वत्वं स्वकीयमिति स्वीकुर्यात् ततोऽधिकादाने दण्डयोग्यमित्याह, अधिकमिति ॥ ८ ॥

---

* साधु पृष्टं महाभाग लोकानामनुगृह्णता । तत्त्वेन तदहं वक्ष्ये नैष्कर्म्यं येन कर्मणाम् ॥ इति मूलग्रन्थे ॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

गृहस्थ इति युग्मकम् ॥ १ ॥

साक्षादिति । तत्प्रीत्यर्थमेव न तु फलसाधनार्थमित्यर्थः ॥ २—११ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

निवृत्तं त्रिषु निर्वर्त्य प्रवृत्तस्तु गृहाश्रमे ।
देशकालादिभेदेन धर्मं उक्तश्चतुर्दशे ॥

तदेवं ब्रह्मचारिवानप्रस्थयतिषु त्रिष्वधिकारिषु निवृत्तधर्मं श्रुत्वा प्रवृत्तधर्ममेकस्मिन् गृहस्थ एवाधिकारिणि वक्तुं प्रवर्त्तमानं मुनिं प्रत्यक्षं प्रवृत्तधर्मेण जन्मसृत्युप्रवाहानुकूलेन बक्तव्येन यदि च प्रवृत्तधर्मेणापि निवृत्तिधर्मफलं मोक्षः सिद्ध्येत्तर्हि तं ब्रूहीत्याशयेनाह—गृहस्थ इति ॥ १ ॥

वासुदेवार्पणं यथा स्यात्तथा कुर्वन् महामुनीन् उपासीत यथाकालं कालेकाले अपराह्णादौ उपशान्तजनावृतस्सन् कथाऽमृतमभीक्ष्णं शृण्वन् न तु कथाश्रवणकाले वार्त्तान्तरं शृण्वन्नित्यर्थः ॥ २—३ ॥

स्वयमेव मुच्यमानेषु वियुज्यमानेषु यथा उत्थितः प्रबुद्धः पुमान् स्वप्नदृष्टेषु पुत्रादिषु सङ्गं मुञ्चति तद्वत् ॥ ४ ॥

उदासीनो भोग्यादिवस्तूनीति शेषः। देहे गेहे च विषये पण्डित इति तत्र तत्र औदासीन्येन वर्त्तमान इत्यर्थः। रक्तवत् अन्तर्विरक्तो बहिस्त्वासक्तवन् तत्र गृहमध्यवर्तिनि नरतां पुरुषत्वं न्यसेत् पुरुषकारमाविष्कुर्यादित्यर्थः ॥ ५ ॥

निर्ममः अनासक्त एव अनुमोदेत ॥ ६ ॥

दिव्यं वृष्ट्यादिनिर्जातं धान्यादि भौममाकराद्युत्थम् आन्तरिक्षमकस्मात् प्राप्तं तत्तद्रूपत्वेन सर्वमच्युतेनैव विनिर्मितमतो विशार्थं नैव चिन्तां कुर्यादित्यर्थः। एतत् पूर्वोक्तं नित्यनैमित्तिकादि स्वतः खं वित्तं तेनेत्यर्थः ॥ ७ ॥

दैवाद्भूरिलाभे जातेऽपि न तत्राभिमानो नापि यथेष्टोपभोगः कार्य्य इत्याह—यावत् यावता भ्रियेत पूर्य्येत ॥ ८ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

गृहस्थधर्मान् वर्णयते, चतुर्दशेऽध्याये तदेव पृच्छति—गृहस्थ इति ॥ १ ॥

वासुदेवार्पणं यथा स्यात्तथा यथोचिताः क्रियाः कुर्वन् महामुनीन् वासुदेवपरान्तून् ॥ २ ॥ ३ ॥

स्वयमेवागमापायित्वेन मुच्यमानेषु आत्मा देहस्तदादिषु सङ्गं मुञ्चेत् यथा उत्थितः प्रबुद्धः स्वप्नवत् स्वप्नदृष्टेषु सङ्गं विमुञ्चति तद्वत् ॥ ४ ॥

पण्डितः बाधाऽबाधार्थवित् देहे गेहे लोके च यावदर्थं यथाप्रयोजनमुपासीत सङ्गं कुर्यात् हृदि विरक्तस्तत्र रक्तवद्वर्तेत नरतां नरत्वाभिमानं न्यसेत् अहन्तां परित्यजेदित्यर्थः ॥ ५ ॥

स्वनिर्बन्धं विहाय ज्ञात्यादीनामुक्तिमिच्छांत चानुमोदेत निर्ममो ममतारहितो भवेत् ॥ ६ ॥

बुधः अच्युतसामर्थ्यवित् दिव्यं देवप्रसादसिद्धं भौमं भूमिजं आन्तरिक्षमकस्मादागतं वित्तं सर्वमच्युतनिर्मितमिति मत्वा भुञ्जान एतत्प्रयुक्तं कुर्यात् ॥ ७ ॥

यावत यावता जठरमुदरं भ्रियेत पूर्येत तावत्स्वत्वं देहिनः यस्तु अधिकमभिमन्येत स तु स्तेनश्चौरः अतो दण्डमर्हति ॥ ८ ॥

भाषा टीका ।

श्रीरुक्मिणीशो जयति ॥

युधिष्ठिर उवाच ।

युधिष्ठिरजी बोले, कि—हे देवर्षे ! इस आप की कही हुई पदवी ( मोक्षोपयोगिदशा ) को जिस विधि से मेरे सदृश मूढ बुद्धि गृहस्थ भी सुलभ से प्राप्त हो जावै, सो विधि आप कहिये ॥ १ ॥

नारद उवाच ।

नारदजी बोले, कि—हे राजन् ! गृह में स्थित रहकर ही पुरुष गृह के उचित क्रियाओं को करता हुआ भी ऐसा करे कि जिस में वे क्रियायें देवतान्तर के अद्वारक साक्षात् श्री वासुदेव के अर्पण होती जाय—ऐसा करता हुआ महा मुनि अर्थात् ज्ञानियों की उपासना करा करे ॥ २ ॥

और सदा शान्त जनों के सत्संग में रहकर श्रद्धा युत होकर, निरन्तर गोविन्द के अवतार कथा रूप अमृत को सुनता रहे ॥ ३ ॥

और अपने को आप ही छोडने वाले ऐसे पुत्र कलत्रादिकों में से, सन्त सङ्ग के प्रभाव से, धीरे२ सङ्ग को छोडता जाय, जैसे कि—स्वप्न से उठा हुआ पुरुष, स्वप्न के देखे हुए पदार्थों में से ममता को छोड देता है, ॥ ४ ॥

ज्ञानी पुरुष, प्रयोजन के अनुगुण देह गेहादिकों में उदासीन रहे, परन्तु विरक्त होकर भी, ऊपर से रागवान् के तरह कुछ उद्यमता करता रहे ॥ ५ ॥

अपने जाति के लोग माता पिता पुत्र भ्राता और सुहृद लोग, जो कुछ कहें और जो २ इच्छा करें, ममता शून्य होकर उसका अनु मोदन करता रहे ॥ ६ ॥

स्वर्ग भूमि और आकाश में होने वाले जो पदार्थ परमात्मा के बनाये हुए हैं, उन सबों को भोगता हुआ बुद्धिमान पुरुष आप से ऐसे ही ( पूर्वोक्त शान्ति के कार्यों को ही ) किया करे ॥ ७ ॥

मृगोष्ट्रखरमर्काखु सरीसृप्खगमक्षिकाः ।
आत्मनः पुत्रवत्पश्येत्तैरेषामन्तरं कियत् ॥ ९ ॥
त्रिवर्गं नाऽतिकृच्छ्रेण भजेत गृहमेध्यपि ।
यथादेशं यथाकालं यावद्दैवोपपादितम् ॥ १० ॥
आश्वाघान्तेऽवसायिभ्यः कामान्संविभजेद्यथा ।
अप्येकमात्मनो दारां नृणां स्वत्वग्रहो यतः ॥ ११ ॥
जह्याद्यदर्थे स्वप्राणान् हन्याद्वा पितरं गुरुम् ।
तस्यां स्वत्वं स्त्रियां जह्याद्यस्तेन ह्यजितो जितः ॥ १२ ॥
कृमिविड्भस्मनिष्ठान्तं क्वेदं तुच्छं कलेवरम् ।
क्व तदीयरतिर्भार्या क्वायमात्मा नभश्छदिः ॥ १३ ॥
सिद्धैर्यज्ञावशिष्टार्थैः कल्पयेद्वृत्तिमात्मनः ।
शेषे स्वत्वं त्यजन्प्राज्ञः पदवीं महतामियात् ॥ १४ ॥
देवानृषीन्नृभूतानि पितॄनात्मानमन्वहम् ।
स्ववृत्त्यागतवित्तेन यजेत पुरुषं पृथक् ॥ १५ ॥
यर्ह्यात्मनोऽधिकाराद्याः सर्वाः स्युर्यज्ञसम्पदः ।
वैतानिकेन विधिना अग्निहोत्रादिना यजेत् ॥ १६ ॥

भाषा टीका ।

प्राणियों का उतना ही स्वत्व है, कि—जितने से जठर पूर्ण होता है, उतने से अधिक पदार्थ को जो अपना मानता है वही तस्कर है, और दण्ड के योग्य है ॥ ८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

अत एव यं कमपि स्वगृहं क्षेत्रं वा प्रविश्य भुञ्जानं न निवारयेदित्याह—मृगेति । मर्को मर्कटः सरीसृप् सर्पः मक्षिकाश्च तैः पुत्रैरेषां मृगादीनां कियदन्तरम् ॥ ९ ॥

अतिकृच्छ्रेणापाद्य न भजेत्किन्तु यावद्दैवप्रापितं तावदेव भजेत् ॥ १० ॥

श्वानश्च अघाश्च पतिताः अन्तेऽवसायिनश्चाण्डालादयः तानभिव्याप्य यथार्हं कामान् संविभजेत् स्वभोज्याद्विभज्य दद्यात् यद्यप्येकैवात्मनो दारा भार्या तस्यामतिथिशुश्रूषणे नियुक्तायां स्वस्य शुश्रूषा हीयेत यस्यां च नृणां स्वत्वग्रहो ममैवेयमित्याग्रहस्तामेकामपि संविभजेत् अतिथिशुश्रूषणे नियुञ्जीतेत्यर्थः । नत्वन्यथा मन्तव्यम् यथाऽर्हं विभजेदित्युक्तत्वात् ॥ ११ ॥

एवञ्चेत्तेनेश्वरो वशीकृतः स्यादित्याह—जह्यादिति । यदर्थं यन्निमित्तम् अन्यैरजितोऽपीश्वरस्तेन जित एव ॥ १२ ॥

ननु, कथमेवं तस्यां स्वत्वाऽभिमानो हातुं शक्यस्तत्राविचारेणेत्याह—कृमिविड्भस्मसु निष्ठा पर्यवसानमन्ते यस्य तदीया देहार्था रतिर्यस्यां सा स्वमहिम्ना नभो ऽपि छादयतीति तथा ॥ १३ ॥

किञ्च सिद्धैर्दैवलब्धैर्यज्ञावशिष्टार्थैः पञ्चयज्ञशेषैरन्नादिभिः महतां निवृत्तानां परमहंसानाम् ॥ १४ ॥

एतद्विवृण्वन्नाह—देवादीन्पञ्चयज्ञदेवताः आत्मानं च एवं पृथक् पुरुषमन्तर्यामिणमेव यजेत ॥ १५ ॥ १६ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

यतोऽधिके स्वत्वाभिमानो दण्डहेतुरत एव तद्गृहे प्रवृत्तान्मृगोष्ट्रादीनात्मनः स्वस्य पुत्रवत्पश्येत् पुत्रानिव मन्येत नतु निगृह्णीयादित्यर्थः । तथाहि तैः पुत्रैः सह एषां मृगादीनां कियदन्तरं न किञ्चिदप्यन्तरं नकिञ्चिदपि तारतम्यमस्तीत्यर्थः । तत्र मृगाः शुनकमार्जारादयः मर्को मर्कटः आखुः मूषकः सरीसृपा अन्ये सर्पणा-

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

स्वभावा जन्तवः *त्रिमच्चिकाः विशब्द पादपूरणार्थः विशिष्टमच्चिका इति वा सरीसृप्खगेति वा पाठः ॥ ९ ॥

विवृतमर्थमुपसंहरति–त्रिवर्गमिति । स्वयं गृहस्थोऽप्यनेन तदुपयुक्तवर्गत्रयनिष्ठता सूच्यते. अतिऽकृच्छ्रेणाऽतिप्रयासेन त्रिवर्गं धर्मार्थकामाश्च भजेत न सेवेत. दैवात्प्राप्तैरेव तुष्येदित्यर्थः । तदेवाह—यावद्दैवेन देशकालाऽनुगुणयेन प्रापितं तदेव यथोपयुक्तम् भजेत ॥ १० ॥

धर्मान्तरमाह—श्वानश्चापा अतिपाप्मानश्चाऽन्ते ऽवसायिनश्चण्डालादयश्च तानभिव्याप्य तेभ्यः यथोचितं कामान् संविभजेद्यथाशक्ति तदपेक्षितान् अन्नादीन्दद्यादित्यर्थः । सङ्गमात्मजायासुतादिषु विमुञ्चेदित्युक्तं जायासङ्गत्यागमुपपादयति-अपीति। आत्मनः स्वस्य दारान् भार्यामेकामपि जह्यात्तस्यां स्वत्वाऽभिमानं त्यजेदित्यर्थः । एतदेव वक्तुं तावत्तस्या दुस्त्यजत्वमाह-यतो यस्यां भार्यायां नृणां स्वत्वग्रहः ममैवेयमित्याग्रहः ॥ ११ ॥

यदर्थं यद्भार्यार्थं स्वकीयान् प्राणान्पितरं गुरुं वा हन्यात् एवं दुस्त्यजा भार्येत्युक्तम् । एवंभूतायां तस्यां स्त्रियां भार्यायां स्वत्वं जह्यात्स्वत्वाभिमानं न कुर्यादित्यर्थः । यः पुमानेवं जह्यात्तेन पुंसा अजितः कैरप्यजितः परमात्मा जितः वशीकृतो भवति ॥ १२ ॥

कथमेवं तस्यां स्वत्वाभिमानस्त्यक्तुं शक्यः ? तत्त्वविचारेणेत्याह, कृमीति । कृमिविड्भस्मसु निष्ठा पर्यवसानमन्तो यस्य तदिदं कलेवरं क. तदीया देहार्था रतिर्यस्या सा भार्या क, नभश्छदः आकाशस्यापि छादयिता आकाशतुल्यो निर्लेप इत्यर्थः । ईदृश आत्मा क्वेत्येवं तत्त्वविचारेण जह्यादित्यर्थ. ॥ १३ ॥

यावदर्थपरिग्रह इति दैवालब्धेष्वपि प्राणमात्रोपयुक्तान्नादिपरिग्रह उक्तः इदानीं तैरपि यज्ञाऽवशिष्टैरेवार्थैरात्मनो वृत्तिं कल्पयेदित्याह—सिद्धैरिति । सिद्धैर्दैवालब्धैः यज्ञावशिष्टैः पञ्चमहायज्ञादिभिरवशेषितैरेवार्थैरन्नादिभिरात्मनः स्वस्य वृत्तिं प्राणधारणरूपां कल्पयेत्. शेषे यज्ञाद्यनुपयुक्ते स्ववृत्त्यनुपयुक्ते च दैवालब्धेऽप्यर्थे स्वत्वाभिमानं त्यजेत् प्राज्ञः एवंविधज्ञानवान् महतां पदवीं महद्भिर्गम्यां मुक्तिरूपां पदवीं प्राप्नुयात् ॥ १४ ॥

एतद्विवृण्वन्नाह—देवानृषीन् नॄन् मनुष्यान् भूतानि पितॄंश्च पञ्च महायज्ञदेवता आत्मानं च स्ववृत्त्या याजनाध्यापनादिपूर्वोक्तवृत्त्या आगतेनार्जितेन वित्तेनाऽन्वहमहरहः पृथक् पुरुषं देवाद्यन्तरात्मानं परमपुरुषं यजेतएकमेव परमपुरुषं देवादिशरीरभेदेनान्तरात्मत्वेनाऽवस्थितमाराधयेदित्यर्थः ॥ १५ ॥

किञ्च यर्हि यदात्मनः स्वस्याधिकारः "अर्थी समर्थो विद्वांश्च" इत्युक्तोऽधिकारः स्यात्तदा सर्वा यज्ञसम्पदः स्युरेव यथाधिकारं सर्वे यज्ञाः कर्तव्या एवेत्यर्थः । वितानो यज्ञग्रन्थः श्रौतकल्पसूत्रादिरूपस्तदुक्तेन विधिनाऽग्निहोत्रादिकर्मणा परमपुरुषं यजेत ॥ १६ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

"आखुभुक् वृषदंशश्च मार्जारो मर्क उच्यते" इत्यभिधानं वयः पक्षिणः अन्तरं भेदः कियान् कोऽपि पराधीनत्वाविशेषात् ॥ ९ ॥

अतिकृच्छ्रेण शास्त्राविहितमार्गेण शूद्रप्रतिग्रहादिलक्षणेन गृहमेधी गृहस्थो ऽपि सर्वाश्रयत्वे ऽपि दैवोपपादितं यदृच्छाप्राप्तं ... वा ॥ १० ॥

कर्माङ्गं चेद्दारग्रहणं प्रयोजनं न ग्राम्यभोगः तथात्वे तदाशापूरणस्य दुःसाध्यत्वेन तत्प्रयत्ने महान्दोष आपद्येत तदभिप्रायेणाह—आप्त्वेति । यदर्थं येषामर्थं कामपूरणार्थं स्वप्राणान् जह्यात् पितरं वा हन्यात् तद्विरोधे सतीति शेषः । किञ्च यतो येभ्यो नृणां सत्त्वग्रहो सत्त्वगुणग्राहो धैर्यनिग्रहो भवतीति शेषः । तानेतान्महतो दारानाप्त्वा कामान्यथायोग्यं संविभज्य श्रेयसे घटेतेति शेषः ॥ ११ ॥

यद्यङ्गना प्राणाद्यपहारिणी तर्हि तया श्रेयसे घटनं कथम् ? इत्याशङ्क्याह—तस्यामिति । सत्त्वग्रह इत्यादिकमुत्तरत्रापि सम्बध्यते अजितोऽपि यस्याः सत्त्वग्रहस्तस्यां स्त्रियां तेन सत्त्वेन जितो वशं गतः स पुमांस्तस्यां स्त्रियां सत्त्वं जह्यादित्यन्वयः । यदि स्वात्मानमुल्लङ्घ्य सा वर्तेत तर्हि तस्यास्त्याग एव वरीयानिति इममर्थं हि शब्देन दर्शयति—

"हृताधिकारां मलिनां पिण्डमात्रोपजीविनीम् ।
परिभूतामधःशय्यां वासयेद्व्यभिचारिणीम्" ॥

इति च—

"यत्रानुकूल्यं दम्पत्योस्त्रिवर्गस्तस्य वर्द्धते ।
मृते जीवति वा पत्यौ या नान्यमुप गच्छति ॥
सेह कीर्तिमवाप्नोति मोदते चोमया सह ।
स्त्रीभिर्भर्तृवचः कार्यमेष धर्मः परः स्त्रियः" ॥

इति च ॥ १२ ॥

ग्राम्यधर्मेण शरीरमेवानित्यं क्षणिकं भयग्रस्तं भयमुपजायते ननु नित्यमतश्च नित्यदुःखं शरीरं च कृमिविड्भस्माऽवसायि न ... नाकाशशरीरब्रह्मज्ञानं दुरुत्पादमेतत्करुणामन्तरेणाऽतो दुःखहेतुत्वाद् दुर्भावनीया ... नित्याश्रयवानाह—कृमीति । तदीयदेहेन क्रियमाणा रतिर्यस्याः सा तथा आत्मा परमात्मा अनात्मा जीवः किं न ... सङ्गादित्यत उक्तं नभश्छदैरिति नभसश्छदैराच्छादकं यस्य स तथा नभो व्याप्यावस्थित इत्यर्थः । "आकाशशरीरं ब्रह्म" इति श्रुतेः "अणुर्ह्येष आत्मा यं वा एते स नीतः पुण्यं च पापञ्च" इति श्रुतेर्जीवस्याणुपरिमाणत्वेन सिद्धत्वात् ॥ १३ ॥

"यज देवपूजासङ्गतिकरणदानेषु" इति धातोः यज्ञो नारायणाख्यदेवपूजा तत्करणावशेषितैः सिद्धैर्धानसाधनयोग्यैरर्थैः स्ववृत्तिं देहयात्रालक्षणां कल्पयेत् तत्रापि शेषे ऽवशिष्टे वस्तुनि स्वत्वं स्वकीयत्वं त्यजेद्यः स प्राज्ञो महतां संन्यासिनां पदवीमाप्नोतीत्यन्वयः ॥ १४ ॥

* सरीसृपाविमच्चिका इति मूलपाठः ।

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

देवादियागेषु तदन्तर्यामित्वेन ततो भिन्नत्वेन भगवत्पूजैव विधेयेत्याशयेनाह—देवानिति ॥ १५ ॥

यर्हि यदाऽस्य यज्ञाधिकारोऽस्ति यदा वा सर्वा यज्ञसम्पदः स्युस्तदा वैतानिकविधिनाऽग्निहोत्रविधिना वा यजेदित्यन्वयः ॥१६॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

जह्यादिति, अजितवशीकारेणैव तादृशत्वं सिद्ध्यतीति भावः ॥ १२ ॥

आत्मा परमात्मा ॥ १३—१६ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

पुत्रवदिति । यथा पुत्रेभ्यो भोज्यं विभजेत् तथैव यथोचितमेभ्योऽपि विभजेदित्यर्थः ॥ ९ ॥

अतिकृच्छ्रेण सम्यक् संपाद्य न भजेत् किन्तु अल्पायासेनैव दैवप्रापितं यावत् तावदेव न तु भूरिसंसारमपेक्षितमित्यर्थः । अधिकाराद्ब्रह्मचर्यादिस्तु गुरुकृत्यादिषु किमुतेति भावः ॥ १० ॥

श्वानश्च अघाः पतिताश्च अन्तेऽवसायिनश्चण्डालादयश्च तानप्यभिव्याप्य यथार्हं कामान् स्वभोग्यान् दारामिति स्त्रीत्वेऽत्वे आर्षं यद्यप्येकैवात्मनः सैव भार्या तस्यामतिथिशुश्रूषणा नियुक्तायां स्वस्य शुश्रूषा हीयते तदपि तामपि विभजेत् अतिथ्यादिशुश्रूषणे नियुञ्जीतैव. तत्रान्यथा मन्तव्यं यथार्हं संविभजेदित्युक्तत्वादिति श्रीस्वामिचरणाः अन्येत्वन्यथापि व्याचक्षते यतः वक्ष्यामः ॥ ११ ॥

स्वभार्यायामभिमानत्यागोऽतिदुष्कर इत्याह, जह्यादिति ॥१२॥

तस्यामभिमानत्यागे विवेकं दर्शयति—कृमिविड्भस्मसु निष्ठा पर्यवसानमन्ते यस्य तदीया रतिर्यस्यां सा क, आत्मा परमेश्वरः स्वमहिम्ना नभोऽपि छादयतीति स क्वेति. यदि तस्यामभिमानत्यागेनैव स प्राप्यते तर्हि कियदेतदिति भावः ॥ १३ ॥

यावता उदरभरणं स्यात्तावदेव वस्तुन्यभिमानं कुर्यादिति यत् पूर्वोक्तं तत्रापि व्यवस्थामाह—सिद्धैर्दिव्यभौमान्तरिक्षैर्यज्ञावशिष्टार्थैः पञ्च यज्ञशेषैरन्नादिभिः ॥ १४ ॥ १५ ॥ १६ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

मर्को मर्कटः सरीसृप् सर्पः अन्तरं भेदः ॥ ९ ॥

गृहमेध्यपि त्रिवर्गं धर्ममर्थं कामं च यथादेशं यथाकालं यावद्दैवोपपादितं भजेत् अतिकृच्छ्रेण तु न भजेत् ॥ १० ॥

श्वा सारमेयः अघः पतितः अन्तेऽवसायी चाण्डालादिः तानभिव्याप्य यथायोग्यं कामान् अन्नादीन् विभजेत्. यतः यस्यां स्वत्वग्रहः आत्मीयत्वाग्रहस्तामेकां स्वगृहकृत्ये जनान्तररहितामपि यथायोग्यं अतिथ्याद्यर्थेन विभजेत् ॥ ११ ॥

जनो यदर्थे यस्याः प्रयोजनार्थं प्राणान् रणादौ स्वान् बन्धून् अन्नाद्यविभागेन जह्यात् पित्रादिकं च हन्यात् खड्गादिना. त्वस्यां यः स्वत्वं जह्यात्तेनाऽजितो ऽपि भगवान् जितः ॥ १२ ॥

अहो अत्यल्पे पदार्थे ममत्वत्यागेन परमपदार्थलाभः इत्याह, कृमीति । कृम्यादिषु निष्ठा पर्यवसानमन्ते यस्य तत्तुच्छं कलेवरं क. क पुनस्तदीया कलेवरार्थो रतिर्यस्यां सा. क चाऽयमात्मा अजितः स्वैभवेन नभो ऽपि छादयतीति तथा ॥ १३ ॥

सिद्धैर्दिव्यभौमान्तरिक्षैः यज्ञावशिष्टैः पञ्चयज्ञशेषैरन्नादिभिरात्मनो वृत्तिं कल्पयेत् शेषे स्वनिर्वाहादधिके स्वत्वं त्यजन् महतां निवृत्तानां पदवीं मोक्षमार्गमियात् ॥ १४ ॥

एतदेव विवृण्वन्नाह—देवादीन्पञ्चयज्ञदेवताः आत्मानं च स्ववृत्त्यागतवित्तेन अन्वहं प्रतिदिनं पृथक् पुरुषमन्तर्यामिणमेव यजेत् अङ्गभूतेषु देवादिषु तदङ्गिनं भगवन्तं पूजयेदित्यर्थः ॥ १५ ॥

यर्हि आत्मनो ऽधिकाराद्याः अधिकारः यज्ञाद्यधिकारस्तदाद्याः अर्थित्वसमर्थत्वादिसर्वाः यज्ञसम्पदः स्युः तदा वैतानिकेन वितानः कर्मप्रतिपादको ग्रन्थस्तदुक्तेन विधिना अग्निहोत्रादिना यजेत पुरुषमित्यन्वयः ॥ १६ ॥

---

भाषाटीका ।

मृग, उष्ट्र, खर, मर्कट, मूषक, सर्प, खग, मक्षिका, इन सबों को अपने पुत्र सदृश देखे, क्योंकि ? इनसे और पुत्रादिकों में क्या अन्तर है ॥ ९ ॥

गृहाश्रमी पुरुष भी त्रिवर्ग को बहुत कष्ट से न सेवन करे, किंतु देश काल के अनुरूप जो प्रारब्ध से उत्पन्न होजावे, उसी से त्रिवर्ग को चलावे ॥ १० ॥

श्वान चांडाल पर्यंत यथायोग्य अन्नादि का सम्यक् विभाग कर दिया करे, और जिस स्त्री के विषें मनुष्यों का 'स्वत्वग्रह' नाम यह स्त्री केवल अनन्य होकर हमारी ही है, ऐसा ज्ञान है, उस अपनी स्त्री को भी अतिथि आदि की सेवा में उचित रीति से विभक्त कर दे ॥ ११ ॥

जिसके लिये पुरुष अपने प्राणों को त्याग देता है और पिता वा गुरु को मार डालता है उस स्त्री में जिसने

न ह्यग्निमुखतोऽयं वै भगवान् सर्वयज्ञभुक्।
इज्येत हविषा राजन् यथा विप्रमुखे हुतैः ॥ १७ ॥
तस्माद् ब्राह्मणदेवेषु मर्त्यादिषु यथाऽर्हतः।
तैस्तैः कामैर्यजस्वैनं क्षेत्रज्ञं[1] ब्राह्मणाननु ॥ १८ ॥
कुर्यादापरपक्षीयं मासि प्रौष्ठपदे द्विजः।
श्राद्धं पित्रोर्यथावित्तं तद्बन्धूनां च वित्तवान् ॥ १९ ॥
अयने विषुवे कुर्याद्व्यतीपाते दिनक्षये।
चन्द्रादित्योपरागे च द्वादशीश्रवणेषु च ॥ २० ॥
तृतीयायां शुक्लपक्षे नवम्यामथ कार्तिके।
चतसृष्वप्यष्टकासु हेमन्ते शिशिरे तथा ॥ २१ ॥
माघे च सितसप्तम्यां मघाराकासमागमे।
राकया चानुमत्या वा मासर्क्षाणि युतान्यपि ॥ २२ ॥
द्वादश्यामनुराधा स्याच्छ्रवणास्तिस्र उत्तराः।
तिसृष्वेकादशीवासु जन्मर्क्षश्रोणयोगयुक् ॥ २३ ॥
त एते श्रेयसः काला नृणां श्रेयोविवर्द्धनाः।
कुर्यात्सर्वात्मनैतेषु श्रेयोऽमोघं तदायुषः ॥ २४ ॥

भाषा टीका।

अपने स्वत्व का अभिमान छोड दिया है, उसने अजित ( श्रीहरि ) को भी जीत लिया अर्थात् वश कर लिया ॥ १२ ॥

अन्त में कृमि विष्ठा और भस्म गात्र को प्राप्त होने वाला कहाँ ? यह तुच्छ कलेवर, और कहां इस की रति का साधन भार्या ? और आकाश के तरह निर्लेप और ज्ञानकृत विभुत्व से आकाश को भी आच्छादन करने वाला वह आत्मा कहाँ ? ॥ १३ ॥

और प्राज्ञ, पंचमहायज्ञ, अथवा श्रीविष्णु के आराधन से अवशिष्ट जो सिद्ध पदार्थ, तिसी से अपना जीवन धारे, और बाकी पदार्थों में से अपने स्वत्व को छोडता जावे, तो पूर्वोक्त परम हंसों की पदवी को प्राप्त होता है ॥ १४ ॥

तथा देवों को ऋषियों को मनुष्यों को और भूत तथा पितृगणों को एवं आत्मा अन्तर्यामी पुरुष श्रीमन्नारायण को अपनी वृत्ति से प्राप्त जो वित्त तिससे पृथक् यजन करे ॥ १५ ॥

यदि अपने को अधिकार से आदि लेकर सर्व संपदा यज्ञ की प्राप्त होवैं, तो वैतानिक विधि से अग्निहोत्रादि यज्ञ से भी यजन करे ॥ १६ ॥

श्रीधरस्वामिकृतभावार्थदीपिका।

न पुनरतिनिर्बन्धो यज्ञार्थं कार्य इत्याह—नहीति। विप्रमुखे हुतैरन्नादिभिर्यथा इज्येत पूज्येत न तथाऽग्निमुखतो हविषा इज्येत ॥ १७ ॥

ब्राह्मणेषु च देवेषु पञ्चयज्ञदेवतासु च मर्त्यादिष्वन्येष्वपि नरेषु पश्वादिषु च क्षेत्रज्ञमन्तर्यामिणं ब्राह्मणाननु मर्त्यादियजनं ब्राह्मणयजनानन्तरमन्येषु यजस्व पठान्तरे ब्राह्मणा आननं यस्य तम् ॥ १८ ॥

प्रौष्ठपदे भाद्रपदे ॥ १९ ॥ २० ॥

शुक्लमासि वैशाखे शुक्लपक्षे अक्षय्यतृतीयायामित्यर्थः। हेमन्ते शिशिरे च मार्गशीर्षादिमासचतुष्टये ऽपि याश्चतस्रोऽष्टकास्तासु ॥ २१ ॥

सम्पूर्णचन्द्रा पौर्णमासी राका न्यूनचन्द्रा सैवानुमतिः तथा मासर्क्षाणि तत्तन्मासनामप्रवृत्तिनिमित्तानि नक्षत्राणि युतानि यदा स्युस्तदा तदुक्तं त्रिकाण्डायाम्—

"पुष्ययुक्ता पौर्णमासी पौषी मासे तु यत्र सा।
नाम्ना स पौषो माघाद्याश्चैवमेकादशापरे" ॥

इति ॥ २२ ॥

(१) ब्राह्मणाननामिति वीर० पा०।

श्रीधरस्वामिकृतभावार्थदीपिका ।

अनुराधा श्रवण उत्तराफाल्गुनी उत्तराषाढा उत्तराभाद्रपदा वा द्वादश्यां यदा स्यात् आसूत्तरास्वेकादशी वा यदा स्यात्तदा च जन्मनक्षत्रस्य श्रवणस्य वा योगेन युक्तं दिनं यदा तदा, योगग्रहणं सम्बन्धबाहुल्यार्थम् ॥ २३ ॥

न केवलं श्राद्धस्यैवैते कालाः किन्तु धर्ममात्रस्येत्याह— त एत इति, द्वाभ्याम् । तदेवाऽऽयुषः अमोघं साफल्यमित्यर्थः ॥२४॥ २५ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

अग्निमुखाराधनाद्विप्रमुखाराधनमतीव भगवत्तोषकदित्याह, नहीति । हे राजन् ! विप्रमुखे हुतैरन्नादिभिर्यथायं सर्वयज्ञभुग्भगवानिज्येनाऽऽराध्येत न तथाऽग्निमुखतो हविषाऽऽराध्येत ॥१७॥

तस्माद्ब्राह्मणेषु देवेषु पञ्चमहायज्ञदेवेषु मर्त्यादिषु च यथाशक्ति यथायोग्यं च तैस्तैः कामैरन्नादिभिर्ब्राह्मणाननं ब्राह्मणा एवाननं मुखं यस्य तमेनं क्षेत्रज्ञं परमात्मानं देवाद्यवस्थजीवशरीरकं वा यजस्वाऽऽराधय ब्राह्मणानन्विति पाठे ब्राह्मणेषु यजनानन्तरमन्येषु मर्त्यादिषु यजस्वेत्यर्थः । युधिष्ठिरस्य गृहस्थत्वात्त्वयाप्येवमाराधनमवश्यं कर्तव्यमित्यभिप्रायेणाऽऽह यजस्वेति मध्यमपुरुषप्रयोगः ॥ १८ ॥

किञ्च प्रोष्ठपदे भाद्रपदे मासि द्विजः त्रैवर्णिको धनवांश्चेत् यथावित्तं वित्तानुसारेण पित्रोर्मातापित्रोस्तद्बन्धूनाञ्चापरपक्षीयं कृष्णपक्षीयं श्राद्धं महालयाख्यं कुर्यात् ॥ १९ ॥

किञ्चायनादिषु कालेषु पित्रोः श्राद्धं कुर्यादित्यन्वयः तत्रायनं कर्कटसङ्क्रान्तिर्मकरसङ्क्रान्तिश्च मेषतुले विषुवसंज्ञिके तथा च वृद्धवसिष्ठः—

"झषकर्कटसङ्क्रान्ती द्वेतूदग्दक्षिणायने ।
विषुवे तु तुलामेषे गोलमध्ये ततोऽपराः ॥" इति

कुहूर्नष्टेन्दुकला चन्द्रादित्ययोरुपरागो ग्रहः ॥ २० ॥

शुक्लपक्षे तृतीयायाम् अक्षयतृतीयायामित्यर्थः । कार्तिके मासि शुक्लपक्षे नवम्यां हेमन्तशिशिरे च ऋतौ चतसृष्वष्टकासु मार्गशीर्षादिमासचतुष्टयकृष्णाष्टमीषु ॥ २१ ॥

माघे मासि सितसप्तम्यां शुक्लसप्तम्यां मघानक्षत्रपौर्णमास्योस्संयोगकाले च सम्पूर्णचन्द्रा पौर्णमासी राका कलाहीनचन्द्रा पौर्णमासी सानुमती ताभ्यां युक्तानि यानि मासर्क्षाणि मासनामप्रवृत्तिनिमित्तानि नक्षत्राणि तदुपलक्षितेषु च कालेषु ॥ २२ ॥

यद्वा द्वादश्यामनूराधाश्रवणास्वुत्तराफाल्गुनी उत्तराषाढोत्तराभाद्रेति तिस्र उत्तरा वा स्युः अनूत्तरासूक्तासु तिसृषु एकादशी वा यदा स्यात्तदा च जन्मर्क्षश्रोणायोगयुक्तजन्मनक्षत्रस्य श्रवणनक्षत्रस्य वा योगेन युक्तः कालः तदा च योगग्रहणं सम्बन्धबाहुल्यज्ञापनायेति सूचितम् ॥ २३ ॥

न केवलं श्राद्धस्यैवैते कालाः किन्तु धर्ममात्रस्येत्याह—त इति, द्वाभ्याम् । त एते अयनादयः नृणां श्रेयसः श्रेयस्साधनधर्मानुष्ठानस्य योग्याः श्रेयो वर्द्धयन्तीति तथा तादृशाः कालाः तस्मात्सर्वात्मना करणत्रयैकयेन एषु कालेषु श्रेयः श्रेयस्साधनं वक्ष्यमाणं स्नानादिकमनुतिष्ठेत्तदेव ह्यायुषः अमोघममोघत्वं साफल्यमित्यर्थः ॥ २४ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

ननु, मुख्यं होमादिकरणं भगवत्प्रीतिजनकं किम् ? तत्राह, नहीति ॥ १७ ॥

उपसंहारमुखेनोक्तार्थं निर्धारयति—तस्मादिति । ब्राह्मणा आननं यस्य स तथा तम् ॥ १८ ॥

ननु, यज्ञसम्भारे सति विशिष्टफलप्रदः कालः क इति तत्राह, कुर्यादिति । प्रोष्ठपदे कन्याख्ये सिंहमासामावास्यामारभ्य कन्यामावास्यापर्यन्ते तत्रापरपक्षीयकाले श्राद्धं कुर्यादित्यपरपर्यन्यत्वेतव्यं तद्बन्धूनां पितृमातृबन्धूनां पितामहमातामहादीनाम् ॥१९॥

अयने उत्तरदक्षिणसञ्ज्ञे विषुवे सम्वत्सरान्तसङ्क्रमणे कुहामामावास्यायां श्रवणेषु श्रवणादित्रिषु चशब्दात्सप्तम्यादित्रिषु त्रयोदश्यां च तदुक्तम्—

"सप्तम्यादित्रयं चैव तथा चैव त्रयोदशी ।
चतस्रस्त्वष्टकाः प्रोक्ताः सर्वपक्षाद्विशेषतः"

इति ॥ २० ॥

वृश्चिकमासामावास्यामारभ्य मकरमासामावास्यापर्यन्तः कालो हेमन्तः तदुपरितनः शिशिरः "हेमन्ते शिशिरे चैव नित्यश्राद्धे गुणोत्तरम्" इति वचनात् अयमपि विशिष्टकालः ॥ २१ ॥

राकापौर्णमासी मघा पौर्णमास्योः सङ्गमे "शशिनि सिनीवाली स्यात्, दृष्टे नष्टे कुहूरमावास्या । अनुमतिरूने राका सम्पूर्णे पौर्णमासी च" इति हलायुधः राकया ऽनुमत्या युतानि मासनक्षत्राणि ॥ २२ ॥

यास्विस्त्रः श्रवणादितारा आसु तारासु प्राप्तैकादशी पुण्यकालो ऽत्र श्राद्धकरणं च विकल्पः एकादश्यां श्राद्धकरणस्य निषिद्धत्वात् वैष्णवाभिप्रायमिति केचित् त्रैविद्याश्चरन्ति च वा यथैकादशी पुण्यदिनम् अत्र क्रियमाणं कर्म सफलं तथा तिसृष्वपि ताराद्विति वा जन्मनक्षत्रे श्राद्धकाल इति शेषः । सौम्ययोगयुग् मृगशिरःसम्बन्धयुक्तं दिनं च ॥ २३—२७ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

अयने इति चतुष्कम् ॥ २०—२२ ॥

तिसृष्वेकादशी चाविति—तत्रोपवासः ग्राह्यः वैष्णवानाम्

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

तत्र श्राद्धनिषेधात् तथाहि ब्रह्मयामले "श्राद्धञ्चैकादशीदिने" इति दीक्षासङ्कल्पनिषेधः । ब्रह्मवैवर्त्ते "ये कुर्वन्ति महीपाल श्राद्धञ्चैकादशीदिने । त्रयस्ते नरकं यान्ति दाता भोक्ता परेतक." इति. पाद्मोत्तरखण्डे—एकादश्यान्तु प्राप्तायां मातापित्रोर्मृतेऽहनि । तद्दिनन्तु परित्यज्य द्वादश्यां श्राद्धमाचरेत् ॥ पुष्करखण्डे- "एकादश्यां यदा राम श्राद्धं नैमित्तिकं भवेत् । तद्दिनन्तु परित्यज्य द्वादश्यां श्राद्धमाचरेत् ॥ २३-२४ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

न पुनरतिनिर्बन्धो यज्ञार्थमेव कार्य्य इत्याह—नहीति । यथा विप्रमुखे हुतैरन्नादिभिरिज्येत तथा न अग्निमुखे इज्येत इत्यर्थः ॥ १७ ॥

ब्राह्मणा एव देवास्तेषु भोज्यदानैः क्षेत्रज्ञं परमेश्वरं यजन्त ब्राह्मणानन्तु ब्राह्मणपूजानन्तरं मर्त्यादिषु च, ब्राह्मणाननमितिपाठः स्पष्टः ॥ १८ ॥

प्रौष्ठपदे भाद्रपदे ॥ १९ ॥

अयने विषुवे च कुर्य्यादिति श्राद्धमिति पूर्वस्यानुषङ्गः एवमग्रेऽपि ॥ २० ॥

शुक्लपक्षे अक्षयतृतीयायामित्यर्थः । हेमन्तशिशिरेषु च चाश्चतस्रो ऽष्टका भवन्ति तासु ॥ २१ ॥

मासर्क्षाणि वैशाखादिमासेषु विशाखादीनि राकया पूर्णचन्द्रया पौर्णमास्या अनुमत्या न्यूनचन्द्रया वा तया यदि युक्तानि स्युस्तदा तेष्वित्यर्थः । "कलाहीने सानुमतिः पूर्णे राका निशाकरे" इत्यमरः ॥ २२ ॥

अनुराधाश्रवणउत्तरफाल्गुनी उत्तराषाढे उत्तरभाद्रपदा वा यदि द्वादश्यां स्यात् आसु उत्तरासु तिसृषु एकादशी वा स्यादिति अत्रोपवासानर्हविद्धैकादश्येव ग्राह्या तत्र श्राद्धनिषेधात् यदुक्तम् ब्रह्मवैवर्त्ते—

"ये कुर्वन्ति महीपाल श्राद्धं चैकादशीदिने ।
त्रयस्ते नरकं यान्ति दाता भोक्ता च प्रेरकः" ॥ इति

उपवासानर्हायास्तस्या अप्राप्तौ तु परदिने, यदुक्तम्—

एकादश्यां तु प्राप्तायां मातापित्रोर्मृतेऽहनि ।
द्वादश्यां तत्प्रदातव्यं नोपवासदिने क्वचित्" ॥

पुष्करखण्डे च—

एकादश्यां यदा राम श्राद्धं नैमित्तिकं भवेत् ।
तद्दिनं तु परित्यज्य द्वादश्यां श्राद्धमाचरेत्" ॥ इति

जन्मर्क्षे स्वीयजन्मनक्षत्रं तस्य श्रोणस्य श्रवणस्य वा योगेन युक्तं यदि दिनं स्यात्तदा तथापि योगग्रहणं सम्बन्धबाहुल्यार्थम् ॥ २३ ॥

श्रेयसो धर्ममात्रस्यैव न केवलं श्राद्धमात्रस्येत्यर्थः । तद्वय आयुषः अमोघममोघत्वम् ॥ २४ ॥ २५ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

किञ्च यज्ञार्थेऽपि नाऽतिहठः कर्त्तव्य इत्याह—नहीति । अयम् "अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव च" इति प्रसिद्धः सर्वयज्ञभुग्भगवान् यथा विप्रमुखे हुतैरन्नाद्यैरिज्येत तथा अग्निमुखतो हविषा नेज्येत ॥ १७ ॥

यस्मादेवं तस्माद्ब्राह्मणेषु पश्चयज्ञदेवेषु ब्राह्मणानन्तु ब्राह्मणार्च्चनानन्तरं मर्त्यादिषु मनुष्यपश्वादिषु च तैस्तैः कामैरेनं क्षेत्रज्ञमन्तर्यामिणं यजस्व ॥ १८ ॥

प्रौष्ठपदे भाद्रपदे मासि अत्रामावास्यापर्यन्तो मासो बोध्यः ॥ १९ ॥

अयने मकरकर्कसङ्क्रमयो मकरकर्कसङ्क्रान्ती "द्वे तूदग्दक्षिणायने" इति वृद्धवसिष्ठवचनात्. विषुवे मेषतुलासङ्क्रमयो "विषुवे तु तुलामेषे गोलमध्ये ततो ऽपरा" इति वृद्धवसिष्ठवचनात् "समरात्रिदिने काले विषुवद्विषुवं च तत्" इति कोशाच्च. कुर्याच्छ्राद्धमिति पूर्वस्यानुषङ्गः एवमग्रेऽपि दिनक्षये त्रिस्पृशातिथौ ॥ २० ॥

शुक्लपक्षे वैशाखे इति शेषः । तृतीयायामक्षयतृतीयाम् कार्तिके शुक्लपक्षे नवम्याम् हेमन्ते शिशिरे मार्गशीर्षादिमासचतुष्टये चतसृष्वष्टकासु अष्टमीषु ॥ २१ ॥

मघानक्षत्रसम्पूर्णचन्द्रयुक्तपौर्णमासी समागमे राका सम्पूर्णचन्द्रा पौर्णमासी सैव कलाहीनचन्द्रयुताऽनुमतिः "कलाहीने सानुमतिः पूर्णे राका निशाकरे" इति कोशात् तथा मासर्क्षाणि तत्तन्मासनामनिर्वर्तकानि नक्षत्राणि युतानि यदा स्युः तदा च यदुक्तं नामलिङ्गानुशासने "पुष्ययुक्ता पौर्णमासी पौषीमासे तु यत्र सा । नाम्ना स पौषो माघाद्याश्चैवमेकादशापरे" इति ॥ २२ ॥

यदा द्वादश्यामनुराधा श्रवणो वा उत्तराफाल्गुनी वा उत्तराषाढा वा उत्तराभाद्रपदा वा स्यात् आसूत्तरासु एकादशी वा स्यात् तदा [illegible]नादिकं विशेषतः कुर्यात् श्राद्धं तु तन्निमित्तं द्वादश्यां [illegible]—

"एकादश्यां यदा राम ! श्राद्धं नैमित्तिकं भवेत् ।
तद्दिनं तु परित्यज्य द्वादश्यां श्राद्धमाचरे ॥

इति पुराणान्तरात् जन्मर्क्षश्रोणायोगयुक् स्वजन्मनक्षत्रयुक्तं श्रवणयुक्तं वा दिनं यदा तदाऽपि श्राद्धं कुर्यात् ॥ २३ ॥

एते श्रेयसः पुण्यमात्रस्य कालाः न श्राद्धमात्रस्य अत एतेषु सर्वात्मना श्रेयः कुर्यात् तत्तः आयुष. अमोघमवैफल्यं स्यात् ॥२४॥

---

एषु स्नानं जपो होमो व्रतं देवद्विजार्चनम् ।
पितृदेवनृभूतेभ्यो यद्दत्तं तद्ध्यनश्वरम् ॥ २५ ॥
संस्कारकालो जायाया अपत्यस्यात्मनस्तथा ।
प्रेतसंस्था मृताहश्च कर्मण्यभ्युदये नृप ! ॥ २६ ॥
अथ देशान्प्रवक्ष्यामि धर्मादिश्रेय आवहान् ।
स वै पुण्यतमो देशः सत्पात्रं यत्र लभ्यते ॥ २७ ॥
बिम्बं भगवतो यत्र सर्वमेतच्चराचरम् ।
यत्र ह ब्राह्मणकुलं तपोविद्यादयाऽन्वितम् ॥ २८ ॥
यत्र यत्र हरेरर्चा स देशः श्रेयसां पदम् ।
यत्र गङ्गादयो नद्यः पुराणेषु च विश्रुताः ॥ २९ ॥
सरांसि पुष्करादीनि क्षेत्राण्यर्हाश्रितान्युत ।
कुरुक्षेत्रं गयशिरः प्रयागः पुलहाश्रमः ॥ ३० ॥
नैमिषं फाल्गुनं सेतुः प्रभासो ऽथ कुशस्थली ।
वाराणसी मधुपुरी पम्पा बिन्दुसरस्तथा ॥ ३१ ॥
नारायणाश्रमो नन्दा सीतारामाऽऽश्रमादयः ।
सर्वे कुलाचला राजन् महेन्द्रमलयादयः ॥ ३२ ॥

भाषा टीका ।

हे राजन् ! सर्व यज्ञों के भोक्ता ये भगवान् श्रीकृष्ण, जैसे ब्राह्मणों के मुख में प्रेम से हविष्यान्न के हवन करने से तृप्त होते है, वैसे अग्नि के मुख से नहीं तृप्त होते, ॥ १७ ॥

तस्मात् ब्राह्मण देव मनुष्य आदिकों मे इन श्रीकृष्ण का यथा योग्य यजन करौ, और ब्राह्मणो के पश्चात् अपने क्षेत्रज्ञ का भी यजन करौ ॥ १८ ॥

ब्राह्मण, प्रौष्ठपद नाम ( भाद्रपद ) मास मे कृष्णपक्ष मे जैसा द्रव्य हो तैसा माता पिता का श्राद्ध करे, और वित्तवाला हो तो उनके बन्धुओं का भी महालय श्राद्ध करे, ( यहां अमान्त-मास मान कर पितृपक्ष को भाद्रपद के कृष्ण पक्ष मे जानना चाहिये ) ॥ १९ ॥

अयन अर्थात् दक्षिणायन उत्तरायण के सूर्य की गती के समय में. जैसेकि कर्क और मकर के सूर्य में, और विषुव नाम तुला और मेष के सूर्य मे, व्यतीपात मे, क्षय तिथिमें, सूर्यग्रहण में, चन्द्रग्रहण में, और द्वादशी श्रवण नक्षत्र में, ॥ २० ॥

अक्षयतृतीया में, कार्तिक शुक्लनवमी में, और हेमन्त शिशिर ऋतुओं में चार अष्टका नाम तिथियों में ॥ २१ ॥

माघशुक्ल सप्तमी मे, मघा और अमावास्या के संगम में, माघशुक्ल पूर्णमासी में, और अमावास्या वा पूर्णिमा से युक्त मास प्रधान नक्षत्रो में, ( जैसे कि ? चैत्रमें चित्रायुत अमावास्या पूर्णिमा वैशाख में विशाखा युत इत्यादि ) ॥ २२ ॥

जब द्वादशी में अनुराधा श्रवण उत्तरा भाद्रपद नक्षत्र होवै, और तीनों उत्तराओं में यदि अनिषिद्ध एकादशीश्राद्ध प्राप्त होवे तो, श्राद्ध करे और जन्म नक्षत्र तथा श्रवण नक्षत्र में श्राद्ध करे ॥ २३ ॥

ये सब मांगलिक काल हैं, मनुष्यो के श्रेयकी वृद्धि करने वाले हैं, तस्मात् इनकालों मे श्राद्धादि शुभकर्म करे तब आयुष्य अमोघ श्रेय होता है ॥ २४ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

संस्कारकाल इति, जायायाः पुंसवनादि अपत्यस्य जात-कर्मादि. आत्मनो यज्ञदीक्षादि. प्रेतस्य संस्था दहनादि. मृताहश्च सांवत्सरिकं यदा अन्यस्मिन्नप्यभ्युदयार्थं कर्मणि श्रेय. कुर्या-दित्यनुषङ्गः ॥ २६ ॥

यत्र यस्मिन्नेतच्चराचरमास्ति तस्य भगवतो बिम्बं रूपम्

श्रीधरस्वामिकृतभावार्थदीपिका ।

सत्पात्रं यत्र लभ्यते स वै पुण्यतमो देशः ॥ २७ ॥ २८ ॥ २९ ॥

अर्हैरुत्तमैराश्रितानि ॥ ३० ॥ ३१ ॥

सीतायारामस्य चाश्रम आदिर्येषां द्वयोः पृथक्ग्रहणं वियोगकालाभिप्रायेण ॥ ३२ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

एषु कालेषु कृतं जपादिकं यच्च पित्राद्युद्देशेन दत्तं 'भावेक.' दानं च तदक्षनश्वरमक्षय्यफलसाधनम् ॥ २५ ॥

किञ्च हे नृप ! जायापत्यात्मनां संस्कारकाले । तत्र जायायाः संस्कारः पुंसवनादिः अपत्यस्य संस्कारो जातकर्मादिः आत्मनस्तस्य संस्कारो यज्ञदीक्षादिः एतेषां कालेषु यदा प्रेतस्य संस्था दहनादि कर्म मृताहश्च तदाऽन्यस्मिन्नभ्युदयार्थे कर्मणि कृतं दानादिकमनश्वरमिति पूर्वेणान्वयः ॥ २६ ॥

एवं श्रेयस्कराः काला उक्ताः अथ देशान्वक्तुं प्रतिजानीते—अथेति । कर्मादि श्रेयस आवहानाशयकान् देशान् प्रवक्ष्यामि तावदयं मुख्यो देशः श्रेयस्कर इत्याह—स इति । यत्र देशे सत्पात्र लभ्यते ॥ २७ ॥

यत्र यस्मिन् सर्वमेतच्चराचरमाधेयतया नियाम्यतया चाऽस्ति तस्य भगवतो बिम्बं यत्र च देशे वर्त्तते यत्र च देशे तपोविद्यादयाभियुक्तं ब्राह्मणकुलं वर्त्तते ॥ २८ ॥

यत्र यत्र देशे हरेर्भगवतोऽर्चा पूजा प्रवर्त्तते स सर्वोऽपि देशः पुण्यतमः श्रेयसां पदं श्रेयःसाधनधर्मानुष्ठानयोग्यं स्थानं किञ्च यत्र येषु देशेषु पुराणेषु प्रसिद्धाः गङ्गादयो नद्यः सन्ति ॥ २९ ॥

तथा पुष्करप्रभृतीनि सरांसि च यत्र सन्तीति पूर्वेण संबन्धः । उत किञ्च यानि चार्हाश्रितानि महात्मभिरधिष्ठितानि क्षेत्राणि सन्ति, तान्येव दर्शयति—कुरुक्षेत्रमिति । यद्वा कुरुक्षेत्रादिव्यतिरिक्तक्षेत्राभिप्रायेणोक्तमर्हाश्रितानीति । गयस्यासुरस्य शिरः तत्पतनस्थानं गयेत्यर्थः । प्रयागो गङ्गायमुनयोस्सङ्गमस्थानं पुलहाऽऽश्रमः सालग्रामक्षेत्रम् ॥ ३० ॥

फल्गुनी नदी गयायामेव तत्स्थानं फाल्गुनम् सेतुः रामसेतुः प्रभासः प्रत्यक्सरस्वतीसंगमस्थानं कुशस्थली द्वारवती पम्पा सरोवरम् बिन्दुसरः कर्दमाश्रमः ॥ ३१ ॥

नारायणाश्रमो बदरिकाश्रमः नन्दा अलकनन्दातटं सीतारामयोराश्रमश्चित्रकूटाद्रिः । एतत्प्रभृतयः । तथा हे राजन् महेन्द्रमलयादयः सर्वे कुलगिरयश्च ॥ ३२ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

सत्पात्रं विशिनष्टि—विश्वमिति । यस्मिन्देशे भागवतस्तत्र विश्वं चराचरं सर्वं जगदस्तीति ज्ञातव्यम्—

"यतिर्यस्य गृहे भुङ्क्ते तत्र भुङ्क्ते हरिः स्वयम् ।
हरिर्यस्य गृहे भुङ्क्ते तत्र भुङ्क्ते जगत्त्रयम्" इति वचनात् ॥ २८ ॥

अर्चाः, सालग्रामादिप्रतिमाः पुराणेषु, भागवतादिषु विश्रुताः ॥ २९ ॥

कृष्णावेण्यादयश्च क्षेत्राणि पुरुषोत्तमादीनि अर्हैः पूज्यैरगस्त्यादिभिराश्रितान्यधिष्ठितानि ॥ ३० ॥

फल्गुन स्थाने हरपुर कन्यातीर्थे वा "कन्यापुरं फल्गुनं स्यात्स्थानं हरपुरं च तत्"इत्यभिधानं वाराणसीपुरी काशी ॥ ३१ ॥ ३२ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

संस्कारकाले जायायाः पुंसवनादि अपत्यस्य जातकर्मादि आत्मनो यज्ञदीक्षादि प्रेतसंस्था प्रेतस्य दाहनादि मृताहः पित्रादेः सांवत्सरिक श्राद्धम् एतेषु अन्यस्मिन्नभ्युदये च श्रेय कुर्यादित्यनुषङ्गः ॥ २६ ॥

सत् साधुश्चासौपात्रश्चेति सत्पात्रं तच्च कीदृशं ? यत्र चराचरमेतज्जगत् तस्य भगवतो बिम्बं विस्वतुल्यमित्यर्थः । प्रतिमा हि प्रतिबिम्बरूपेति तस्याः सकाशादपि भक्तस्योत्कर्षः अत एव मद्भक्तः पूजाऽभ्यधिकेति—

"अर्चायामेव हरये पूजां यः श्रद्धयेहते ।
न तद्भक्तेषु चान्येषु स भक्तः प्राकृतः स्मृत." ॥

इति च वक्ष्यति अर्चा प्रतिमा सालग्रामादिरूपा ॥ २७ ॥ २८ ॥

अर्चा स्थिरप्रतिमा श्रीजगन्नाथादिस्तदाश्रिता उत्कलादयः ॥ २९—३२ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

अनश्वरं बहुफलम् ॥ २५ ॥

जायायाः भार्यायाः संस्कारकाले पुंसवनादौ अपत्यस्य जातकर्मादौ आत्मनो यज्ञदीक्षादौ प्रेतस्य पित्रादेः संस्था दहनादिस्तत्र यदा पित्रादिमृताहस्तत्र सांवत्सरिके अन्यस्मिन् अभ्युदयार्थे कर्मणि श्रेयः कुर्यादित्यनुषङ्गः ॥ २६ ॥

तत्र सत्पात्रं "ॐतत्सदिति निर्देशो ब्रह्मणस्त्रिविधस्स्मृत." इति भगवद्वचनात् सच्छब्दवाच्यस्य भगवतो भजनीयस्य पात्रस्थानं भगवद्भक्त इत्यर्थः । यत्र लभ्यते स पुण्यतमो देशः ॥ २७ ॥

यत्र सर्वमेतच्चराचरं तस्य भगवतो बिम्बं शब्दमयी वेदभागवतादिरूपा मूर्तिः । ब्राह्मणं कुलं च यत्र देशे स पुण्यतमो देश इति पूर्वेणान्वयः ॥ २८ ॥

अर्चा मूर्त्तिः ॥ २९ ॥

अर्हैः शिष्टैराश्रितानि ॥ ३०—३१—३२ ॥

एते पुण्यतमा देशा हरेरर्चाश्रिताश्च ये ।
एतान्देशान्निषेवेत श्रेयस्कामो ह्यभीक्ष्णशः ।
धर्मो ह्यत्रेहितः पुंसां सहस्राधिफलोदयः ॥ ३३ ॥
पात्रं त्वत्र निरुक्तं वै कविभिः पात्रवित्तमैः ।
हरिरेवैक उर्वीश ! यन्मयं वै चराचरम् ॥ ३४ ॥
देवर्ष्यर्हत्सु वै सत्सु तत्र ब्रह्मात्मजादिषु ।
राजन्यदग्रपूजाया मतः पात्रतयाऽच्युतः ॥ ३५ ॥
जीवराशिभिराकीर्ण आण्डकोशाङ्घ्रिपो महान् ।
तन्मूलत्वादच्युतेज्या सर्वजीवात्मतर्पणम् ॥ ३६ ॥
पुराण्यनेन सृष्टानि नृतिर्यगृषिदेवताः ।
शेते जीवेन रूपेण पुरेषु पुरुषो ह्यसौ ॥ ३७ ॥

---

भाषा टीका ।

इन कालों में स्नान जप होम व्रत देवपूजा ब्राह्मण-पूजा, और पितृ देव मनुष्य भूत प्राणियों को जो दिया जाय वह-नष्ट नहीं होता है ॥ २५ ॥

हे नृप ! स्त्री के पुंसवनादि काल मे, पुत्र के जात-कर्मादि काल में, आप के यज्ञादि दीक्षा काल में, प्रेत के संस्था दहनादि काल में, और मृतक के वार्षिक काल मे, और अन्य कालों में भी अभ्युदय कर्मा में श्रेय करे ॥ २६ ॥

नारद जी बोले कि ? अब हम धर्मादिश्रेयों को प्राप्तकरने वाले देशों को कहते है, एक तो यही निश्चित है, कि वही अ-ति पुण्य देश जानना जहां सत्पात्र पुरुष मिलते होवें ॥२७॥

और जिसमें यह सर्वचराचर स्थित है, ऐसे भग-वान् की श्रीमूर्ति जहां पर विराजमान है, और जहां तप विद्या और दया सहित ब्राह्मण कुल विद्यमान है ॥ २८ ॥

और जहां २ श्री हरि की अर्चा ( पूजा अथवा ) विद्यमान है। और जहां पुराणों में विख्यात श्रीगङ्गा आदि पुण्य नदी विद्य-मान है, वही देश श्रेयोंका स्थान है ॥ २९ ॥

और जहा पुष्करादि सरोवर हैं, । और महात्माओं से आश्रित जो क्षेत्र हैं, और कुरुक्षेत्र, गया, प्रयाग, पुलहा-श्रम ॥ ३० ॥

नैमिषारण्य, फाल्गुनतीर्थ, सेतु, प्रभास, द्वारका, काशी, मधुपुरी, पंपासरोवर, बिन्दुसरोवर ॥ ३१ ॥

श्रीबदरीनारायणाश्रम अलकनन्दा, श्रीचित्रकूट से आदि लेकर हे राजन्! महेन्द्र, मलय, प्रभृति सप्तपर्वत ॥ ३२ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

अर्चाश्रिताश्च स्थिरप्रतिमाश्रिताः पूर्वं तु शालिग्रामशिला-द्यर्चनदेश उक्त इत्यपौनरुक्त्यम्. अत्र एषु देशेषु ईहितः कृतः सहस्रगुणमधिकस्य फलस्योदयो यस्मात्स तथा ॥ ३३ ॥

अथ पात्रमाह, हरिरेव पात्रं निरुक्त निर्णीतम् ॥ ३४ ॥

तदेवाऽऽह, देवेषु च ऋषिषु चार्हत्सु च तपोयोगादिषु सिद्धेषु ब्रह्मात्मजादिषु सनकादिष्वपि सत्सु तत्र त्वदीये राज-सूये यद्यस्मादच्युत एव पात्रतया सम्मतः ॥ ३५ ॥

संमतत्वे हेतुमाह, जीवराशिभिर्व्याप्तो ब्रह्माण्डकोश एव योऽङ्घ्रिपः सर्वजीवानामात्मनश्च तर्पणम् ॥ ३६ ॥

एतदेव पुरुषनामनिरुक्त्या द्रढयति–पुराणीति । नृतिर्यगादि-रूपाणि पुराणि शरीराणि तेष्वन्तर्यामिरूपेण प्रत्यगंशेन च यतः शेते अतः पुरुष इति प्रसिद्धः ॥ ३७ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तथा ये हरेरर्चा स्थिरा पूजा प्रतिमाया तया आश्रिताः अधिष्ठि-तास्त एते सर्वे पुण्यतमा देशाः बिम्बं भगवतो यत्रेति सालग्राम-शिलाद्यर्चन देश उक्तः । अत्र तु वेंकटाद्रिस्थानादीन्युच्यन्ते इत्यपौनरुक्त्यम् श्रेयस्कामः पुमानभीक्ष्णशः पुनः पुनरेतान् देशान्नितरां सेवेत ॥ ३३ ॥

पुंसां यत्फलसाधनत्वे यो धर्म उदितो विहितः स एष देशेषु कृतः सहस्रगुणमधिकस्य फलस्य उदयो यस्मात्तादृशो भवेत् । एवं देशकालौ उक्तौ. अथ पात्रमाह—पात्रंत्वित्यादिना । हे उर्वीश ! पात्रवित्तमैः सत्पात्रयाथात्म्यविद्भिः कविभिः हरि-रेक एव पात्रं निरुक्तं हरिरेक एव सत्पात्रमिति निर्णीतमित्यर्थः । पात्रं पूज्य समर्हणीयं वस्तु हरिं

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायाम्

विशिनष्टि—एतच्चराचरात्मकं जगद्यन्मयं यद्धरिप्रचुरमेतेन तत्सम्हर्णेन सर्वे समर्हिता भवन्तीति सूचितम् ॥ ३४ ॥

हरेरेव पात्रत्वं यतो राजसूये ऽधुना त्वयैव दृष्टमित्याह, देवेष्विति । हे राजन् ! देवेषु ऋषिषु अर्हत्सु तपोयोगादिसिद्धेषु ब्रह्मादिषु सनकादिष्वपि सत्सु तत्र त्वदीयराजसूये यद्यस्मादच्युत एवाग्रपूजायां पात्रतया मतो ज्ञातः ॥ ३५ ॥

हरेः समर्हणेन सर्वेषामर्हणं कृतप्रायमित्याह—जीवेति । जीवराशिभिराकीर्णो व्याप्त. ब्रह्माण्डकोश एव यो महानङ्घ्रिपो वृक्षस्तस्य मूलत्वात् कारणत्वादच्युतस्येज्या ऽऽराधनं सर्वेषां जीवात्मनां तर्पणं तृप्तिकरं यथाङ्घ्रिपस्य मूलेऽर्पितं जलं तच्छाखोपशाखानां वृद्धिकरं तथा ब्रह्माण्डकोशमूलभूतेऽच्युते कृते कृतमर्हणमण्डान्तरगतेषु सर्वेषु कृतप्रायमेवेत्यर्थः । अतः स एवोत्तमं पात्रमिति भावः । इतरत्रापि तद्दृष्ट्यैवाऽर्हणं कार्यमिति च ॥ ३६ ॥

एतदेव पुरुषनामनिरुक्त्या दृढयति—पुराणीति । मनुष्यतिर्यगृषिदेवतादिरूपाणि पुराणि शरीरात्मकान्यनेन भगवता सृष्टानि सृष्टेषु च पुरेषु यतो भगवान् जीवेन रूपेण जीवाख्येन शरीरेण "यस्यात्माशरीरम्" इति श्रुतेः । पुरे शेते अतो ऽसौ पुरुष. पुरुषशब्दः पुष्कलप्रवृत्तिनिमित्ताश्रयः । पुरे शेते इति पुरुषः शकारस्य षकारः अकारस्योकारश्च व्यत्ययात् "अन्येष्वपि दृश्यते" इति डश्च जीवेन करणेनास्यन्त केवल सर्वकारणत्वादेव तदर्हणं तत्कार्यपर्यन्त पर्यवस्यति तु तत्तदन्तरात्मतया तत्तद्रूपेणा ऽवस्थितत्वादित्युक्तं भवति ॥ ३७ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

हरेरर्चाश्रिताः हरिक्षेत्रादयः पुनर्वचनं सर्वस्मात्तेषां श्रैष्ठ्यद्योतनाय ॥ ३३ ॥

एतद्देशनिषेवणेन किं निःशेषफलमिति तत्राह—धर्म इति ।

> "कृष्णातरङ्गसम्भूतपवनस्पर्शगात्रतः ।
> निर्धूतपातकाः सर्वे जना विष्णुपदं ययुः ॥"

इत्यादिशास्त्रेषु सहस्राधिकफलोदयत्वेनोदितः पात्रेष्वपि तारतम्यमस्ति तत्र मुख्यपात्रं हरिरित्याह—पात्रमिति । पात्रतारतम्यवित्तमैः कविभिः पात्रं च निरुक्तं वै मुख्यत्वेन निर्णीतं हीत्यन्वयः, किं तत्? इत्यत उक्तं हरिरिति, चराचरं यन्मयं यत्स्वामिकं यद्वचाप्तं सर्वं [illegible] हरिरेव मुख्यं पात्रमित्यन्वयः ॥ ३४ ॥

इदं भवतोऽपि सिद्धमित्याह देवेष्विति । ब्रह्मात्मजादिषु सत्सु देवाश्च ऋषयश्च देवर्षयस्त एवार्हन्तः पूजायोग्या येष्वपि सत्सु तत्र तत्र यज्ञशालायामच्युतो गुणतो वयतः स्वरूपतश्च च्युतिरहितत्वात् श्रीनारायणो ऽग्रपूजायां पात्रतयामतस्त्वया ज्ञात इति वदता मुख्यपात्रं हरिरित्यवधारणा युक्ता ॥ ३५ ॥

किञ्च प्रत्येकं पूजापि न विधेया भगवत्पूजया तत्तृप्ति सम्भवात्तन्मूलत्वात्तेषां तरुमूलनिषेचणं च शाखानामिवेति मुख्यवैष्णवसिद्धान्तमाह—जीवराशिभिरिति ॥ ३६ ॥

ननु, मुख्यपात्रालाभे विहितकर्मानुष्ठानविषयाभावेन तद्विधानं व्यर्थमित्याशङ्क्य तद्योग्यपात्रं वक्तुं कञ्चन सृष्टिप्रकारमाह—पुराणीति । अनेन दयालुना हरिणा नृतिर्यगादिसंज्ञितानि पुराणि शरीराणि सृष्टानीत्यन्वय. । ततः किम् ? तत्राह, शेत इति । श्रीहरिरेषु पुरेषु भोगायतनेषु जीवेन रूपेण स्वप्रतिबिम्बेन सह शेते इति यत्तस्मादसौ पुरुष इत्युच्यते जीवोऽपि तन्नामेति शेषः । "पुरिशयनात्पुरुषः" इति श्रुति हिशब्देन सूचयति ॥ ३७ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

देवर्षीति-तत्र, राजसूये ॥ ३५ ॥

सर्वेषां जीवानामात्मनश्च तर्पणरूपा सैव भवतीत्यर्थः ॥ ३६ ॥

पुराणीति जीवेन जीवयित्रा जीवान्तर्यामिरूपेणेत्यर्थः ॥ ३७ ॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

देशान्तरात्सहस्रगुणाधिकस्य फलस्य उदयो यस्मात् सः ॥ ३३ ॥

अत्र धर्मार्थी कस्मै देयमिति चेत् साधारणये वैष्णवेभ्यो ब्राह्मणेभ्यः सर्वप्राणिभ्यश्चेति वक्तु प्रथमं दानस्य पात्र निर्वक्ति पात्रमिति ॥ ३४ ॥

हरेः पात्रत्वे निर्विवादत्वं तव राजसूययज्ञ एव सिद्धमित्याह । देवेषु ऋषिषु अर्हत्सु तपोयज्ञादिसिद्धेषु ब्रह्मादिषु तदात्मजादिषु सनकादिषु च अग्रपूजायां पात्रतया अच्युत एव मत. ॥ ३५ ॥

संमतत्वे हेतुमाह-जीवेति । य आण्डकोशस्तस्य मूलत्वात् ॥ ३६ ॥

अनन्तस्यावतारसमये साक्षात्तस्मा एव अर्घ्यदानं तदुत्काय सत्पात्रं यत्र लभ्यते बिम्बं भगवत इति पूर्वोक्तेः तदनन्तर तु प्राणिमात्रेभ्य इत्याह-पुराण्यनेनेति ॥ ३७ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

हरेरर्चाश्रिता इति पुनरुक्तिः अर्चाश्रितदेशान्याऽतिपुण्यतम त्वाभिप्राया हि यतः अत्र एषु देशेषु देहिनः कर्तु वाञ्छितोऽपि धर्मः किमुताऽनुष्ठितः सहस्रगुणमधिकस्य फलस्योदयो यस्मात्स तथाभूतो भवति ॥ ३३ ॥

प्रसङ्गात्पात्रमाह-पात्रमिति । हे उर्वीश ! हरिरेवैकः पात्रं पूज्य इत्यर्थः ॥ ३४ ॥

तेष्वेषु भगवान्राजंस्तारतम्येन वर्त्तते ।
तस्मात्पात्रं हि पुरुषो यावानात्मा यथेयते ॥ ३८ ॥
दृष्ट्वा तेषां मिथो नृणामवज्ञानात्मतां नृप ! ।
त्रेतादिषु हरेरर्चा क्रियायै कविभिः कृता ॥ ३९ ॥
ततोऽर्चायां हरिं केचित्*संश्रद्धाय सपर्यया ।
उपासत उपास्तापि नाऽर्थदा पुरुषद्विषाम् ॥ ४० ॥
पुरुषेष्वपि राजेन्द्र ! सुपात्रं ब्राह्मणं विदुः ।
तपसा विद्यया तुष्ट्या धत्ते वेदं हरेस्तनुम् ॥ ४१ ॥
नन्वस्य ब्राह्मणा राजन् ! कृष्णस्य जगदात्मनः ।
पुनन्तः पादरजसा त्रिलोकीं दैवतं महत् ॥ ४२ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायाम्
वैयासिक्यां सप्तमस्कन्धे सदाचारनिर्णयो नाम
चतुर्दशोऽध्यायः ॥ १४ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

हे राजन् ! तत्र त्वदीये राजसूये देवेषु ऋषिषु अर्हत्सु ब्रह्मशिष्यादिषु ब्रह्मात्मजादिषु अर्थात्पूज्येषु पूजकेषु सत्सु तत्र च सर्वोक्तः अच्युत एव अग्रतः पूजायां पात्रतया मतः. तथोक्तं राजसूयप्रकरणे

"कृष्णं कमलपत्राक्षं नार्चयिष्यन्ति ये जनाः ।
जीवन्मृतास्तु ते ज्ञेया न सम्भाष्याः कदाचन"—

इत्यादि ॥ ३५ ॥

अच्युतपूजनेन सर्वपूजनं भवतीत्याह—जीवानां राशिभिः समूहैराकीर्णो व्याप्त आण्डकोश एवाङ्घ्रिपः तत्तस्याच्युतस्य मूलत्वादुक्ताङ्घ्रिपमूलत्वाच्युतेज्या सर्वजीवानामात्मनश्च तर्पणं भवति ॥ ३६ ॥

तस्य सर्वत्र पूजार्थं सन्निहितत्वमाह-अनेन अच्युतेन नृतिर्यगाद्याख्यानि पुराणि सृष्टानि तेषु पुरेषु रूपेण अन्तर्यामिरूपेण शेते, किमर्थम् ? तत्राह-जीवेन पालनीयेन सह शेते जीवपालनार्थमित्यर्थः । अतो असौ पुरेषु शेते इति पुरुष इत्युच्यते ॥ ३७ ॥

---

भाषाटीका ।

ये सब पुण्यतम देश हैं । और जोर श्रीहरीकी अर्चाश्रित देश है वे बड़े पुण्यतम देश हैं श्रेय की कामना वाला-पुरुष इन देशों का निरन्तर सेवन करे, इन देशों धर्म की चेष्टा करने से पुरुषों को सहस्राधिक फल होता है ॥ ३३ ॥

हे राजन् ! अच्छे पात्र अपात्र जानने वाले लोगों ने तो जिन से चराचर जगत व्याप्त हो रहा है, उन एक श्रीहरि ही को पात्र कहा है ॥ ३४ ॥

क्योंकि ? हे राजन् ! देव, ऋषि, और ब्रह्मपुत्रादिकों में पूजनीयों के मध्य में भी, इनहीं की अग्र पूजा हुई । और बड़े बड़े कविलोगों ने पूज्यत्वेन इन ही को पात्र बताया ॥ ३५ ॥

असंख्येयजीव राशियों से व्याप्त यह ब्रह्माण्डही एक महान् वृक्ष है, उस वृक्ष का मूल रूप होने से अच्युत ( श्रीकृष्ण ) की पूजा सर्वजीवात्माओं की तृप्ति करने वाली है ॥ ३६ ॥

इन श्रीकृष्ण ने मनुष्य, तिर्यक् ऋषि, देवता, आदि रूप बहुत से पुरों की सृष्टि करी है, और जीव रूप से आप उनमे शयन करते हैं, इसी से इनका नाम पुरुष भी है ॥ ३७ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

तारतम्येन तिर्यगादिभ्यः पुरुषे यस्मादाधिक्येन वर्तते तस्मात्पुरुषः पात्रम् तत्रापि यावानात्मज्ञानांशो यथा यथा ईयते तप आदियोगेन यत्र यत्र प्रतीयते, तथा तथा ऽसौ पात्रमित्यर्थः । तथाच श्रुतिः"पुरुषत्वे चाविस्तरामात्मा"इत्यादि ॥ ३८ ॥

तर्हि प्रतिमादौ हरेः किमिति पूजां कुर्वन्ति ? तत्राह—दृष्ट्वेति द्वाभ्याम् । मिथोऽवज्ञानमसन्मानस्तस्मिन्नात्मा बुद्धिर्येषां तेषां भावं दृष्ट्वा क्रियायै पूजाद्यर्थम् ॥ ३९ ॥

---

* सश्रद्धया इति पाठः विज० ।

श्रीधरस्वामिकृतभावार्थदीपिका ।

हरिमुपासते उपासिताऽप्यर्चा पुरुषद्वेषिणामर्थदा न भवति पुरुषेषु द्वेषं हित्वाऽर्चिता सती साऽपि मन्दाधिकारिणां पुरुषार्थप्रदा भवत्येवेत्यर्थः ॥ ४० ॥

पुरुषेष्वेव जात्या तप आदिभिश्च पुनर्विशेषान्तरमाह— पुरुषेष्वपीति । यो धत्ते तं सुपात्रं विदुः ॥ ४१ ॥

एतदेव कैमुत्यन्यायेन द्रढयति—नन्वस्येति ॥ ४२ ॥

इति श्रीमद्भागवते महापुराणे सप्तमस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिकायाम्
चतुर्दशोऽध्यायः ॥ १४ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

इतोऽपि पुरुषशब्दवाच्यः स्वसमर्हणोनान्येषां तदाधायकत्व्यमाह—तेष्विति । हे राजन् ! तिर्यगादिष्वप्यस्तेषु पुरुषेषु तारतम्येन स्वकीयज्ञानशक्त्यादिगुणाविर्भावतारतम्येन वर्तते भगवानतोऽसौ पुरुषः पुरु अधिकं पुरुषेषु शेत इति पुरुषः यत एवंभूतोऽतस्तादृशपात्राहणामर्हणीयेषु सर्वेषु पुरुषेषु विधेयमिति भावः यतो देवमनुष्यादिपुरुषेष्वन्तर्यामितया जीवशरीरकतया च भगवान् वर्तते ततश्च सर्वे पुरुषा देवादयो भगवच्छरीरभूतास्तेन तारतम्य व्याप्ताश्च तस्मादात्मा परमात्मा पुरुषः परमपुरुषो यावान्यावद्गुणाविर्भाववान् यथा यत्र यत्र ईयते प्रतीयते तत्तत्पात्रं यत्र यत्राधिकं भगवतो ज्ञानशक्त्यादिगुणाविर्भावस्तत्तदुत्तमम् पात्रं न्यूनाविर्भाववत्त्वमुक्तमानि भावः तदेव भगवत एवोत्तमपात्रत्वमितरेषामपि तदात्मकत्वेनैवार्हणीयत्वं तदपि तदाविर्भावानुसारेण व्यवस्थितमिति चोक्तम् ॥ ३८ ॥

ननु, भगवतस्तदात्मकानां पुरुषाणामेवार्हणीयत्वे स्मृतिकारादिभिराराधनीयत्वे विहिता हरिप्रतिकृतिः पूजिता न फलदा स्यादिति चेत्तद्द्रोहिणां व्यर्थेत्याह—दृष्ट्वेति द्वाभ्याम् । मिथोऽवज्ञानं तिरस्कारः तस्मिन्नाशा बुद्धिर्येषां तेषां भावं दृष्ट्वा हे नृप ! हरेः क्रियायै पूजार्थमर्चाप्रमाणां कविभिः त्रेतादिषु युगेषु कृता पूज्यत्वेन विहिता त्रेतादिष्वित्यनेन प्रायशः कृते सर्वात्मकब्रह्मोपासनमेव विहितमिति सूचितम् ॥ ३९ ॥

तत्रार्चायां पूजार्थप्रतिमायाशां केचिद्धरिं संश्रद्धाय श्रद्धापूर्वकमुपासते एवमुपास्नाराधिताप्यर्चा पुरुषद्विषां भगवदात्मकान् पुरुषान्द्वषन्तीति पुरुषद्विषः तेषां नार्थदा न पुरुषार्थदा भवति पुरुषान् बहुमन्यमानानामेवार्चाराधनं फलवदित्यर्थः ॥ ४० ॥

यदुक्तं "तस्मात्पात्रं हि पुरुषः" इत्यादि, तद्विवृणोति—पुरुषेष्विति । हे राजेन्द्र ! पुरुषेष्वपि ब्राह्मणं सत्पात्रं विदुः सुपात्रतयाऽध्यात्मविदः सुपात्रत्वे हेतुं वदन्विशिनष्टि, इदं ब्राह्मणात्मकं सुपात्रं तपसानशनेन विद्ययाऽऽत्मयाथात्म्यज्ञानपूर्वकभगवदुपासनरूपविद्यया तुष्ट्या दैवाल्लब्धसन्तोषेण चेदं स्वमंशम-

दमादीनामप्युपलक्षणम् एभिर्गुणैर्हरेस्तनुं धत्ते बिभर्ति स्वशब्दः पादपूरणार्थः एवकारार्थो वा हरेरेव तनुं धत्त इत्यर्थः ॥ ४१ ॥

एतदेव कैमुतिकन्यायेन द्रढयति—नन्वस्येति । हे राजन् ! न त्रिलोकीं पादरजसा पुनन्तः पवित्रीकुर्वन्तः जगदन्तरात्मनः श्रीकृष्णस्यापि ब्राह्मणा महद्दैवतं किमुतान्येषामस्मद्विधानां ब्राह्मणा दैवतमित्यर्थः ॥ ४२ ॥

इति श्रीमद्भागवते महापुराणे सप्तमस्कन्धे
श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायाम्
चतुर्दशोऽध्यायः ॥ १४ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

ईशो भगवांस्तेषु पुरेषु स्थितः पुरुषनामसु जीवेषु च तारतम्येन तत्तच्छक्त्यादिगुणतारतम्यानुसारेण सन्निधानतारतम्येन वर्तत इति यस्मात्तस्मात्तत्तद्योग्यतानुसारेण पुरुषो जीवराशिश्च पात्रं तदन्तर्यामिहरिस्मरणपूर्वकमिति शेषः अत्र सन्निधानतारतम्यमेव हरेर्न तु स्वरूपतारतम्यं तदुक्तं—

"ब्रह्मादिस्थानरान्तेषु न विशेषो परे क्वचित् ।
व्यक्तिमात्रविशेषेण तारतम्यं वदन्ति च" इति.

अत्रापीत्थं भावमाह—यावानिति । पुरुषे तु आत्मा यावान् महिम्ना यथा येन प्रकारेण ज्ञायते तदानुकूल्येन जीवराशिः पात्रमित्यर्थः ॥ ३८ ॥

हरिप्रतिमापूजायाः पुरुषस्थितपुरुषनाम्नो हरेः पूजा सफलफलवतीत्याशयेनाह—दृष्ट्वेति । कविभिस्तेषां नृणां मिथ आत्मनो हरेरवज्ञां दृष्ट्वा त्रेतायां सपर्याक्रियायै हरेरर्चा कृता यस्मात् ॥ ३९ ॥

ततः केचित्तत्श्रद्धया सपर्यया अर्चायां हरिमुपासते ये तेषां पुरुषस्थितहरिद्विषां सापासैहिकफलमन्तरेण परमपुरुषार्थप्रदा न भवतीत्यन्वयः ॥ ४० ॥

मुख्यपात्रमाह—पुरुषेष्विति । कीदृशो ब्राह्मणो मुख्यं पात्रमित्यतस्तद्विशिनष्टि—तपसेति । ननु प्रतिमास्थानं अत्र "शिलावत्प्रतिमाः सन्तो विप्राद्याश्च हरेः स्मृताः" इति वचनात् विप्रादिमात्रं हरिशिलास्थानीयं न किन्तु तप आदिगुणविशिष्टब्राह्मणादुक्तं अन्यथा हरेरर्चैषा सा पुरुषार्थप्रदा न स्यादिति तदुपास्तां विनिन्द्य सुपात्रं ब्राह्मणं विदुरिति कथनं व्यर्थं स्यादत एव ब्राह्मण इति तत्पदं मायोजि ॥ ४१ ॥ ४२ ॥

इति श्रीमद्भागवते महापुराणे सप्तमस्कन्धे
श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम् ।
( पञ्चदशोऽध्याय ) श्रीधरीया चतुर्दशः ॥ १४ ॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

तेष्विति तस्मात् तारतम्यवर्तनात् पुरुषः प्रायो मनुष्यः पात्रं तत्र ज्ञानादिकं विशिष्टमिति भगवद्दर्शनस्याऽतिशयात् तत्राऽपि आत्मा यावान् यथा ज्ञानादिपरिमाणादिकः तथा पात्रमित्यर्थः ॥ ३८ ॥

एवं स्थितेपि कालेनोपासकदोषोत्पत्तौ सत्यां वेददृष्ट्या विशिष्टमधिष्ठानान्तरं प्रकाशितमित्याह—दृष्ट्वेति । क्रियायै पूजार्थम् अर्चा कृता तत्परिचर्यामार्गदर्शनाय सा प्रकाशितेत्यर्थः । एतेन तादृशदोषयुक्तेष्वपि कार्यसाधकत्वात् श्रीमदर्चाया आधिक्यमेव व्यञ्जितम् प्रतिमास्वल्पबुद्धीनामित्यत्राल्पबुद्धीनामपीत्यर्थः । श्रीनृसिंहपुराणादौ ब्रह्माम्बरीषादीनामपि तत्पूजाश्रवणात् ॥ ३९ ॥

तत एव प्रभावात् केचिदिदमधिष्ठानवैशिष्ट्येन पूर्वतोऽप्युत्तमसाधनतत्परा इत्यर्थः । नन्ववज्ञातुर्द्विषोऽपि सिद्धि स्यादित्याशङ्क्याऽतिप्रसङ्गवारणेच्छया प्रस्तुतपुरुषरूपाधिष्ठानादरेच्छया च तं वारयति, उपास्तापीति ॥ ४० ॥ ४१ ॥

प्रथमपुरुषे पूर्वोक्तं ब्राह्मणरूपं पात्रमेव स्तौति—नन्वस्येति, जगदात्मनः जगति लोकसंग्रहधर्मादिप्रवर्तनेन तान्नयन्तीत्यर्थः । दैवतं लीलया पूज्यत्वेन दर्शितम् ॥ ४२ ॥

इति श्रीमद्भागवते महापुराणे सप्तमस्कन्धे

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे

चतुर्दशोऽध्यायः ॥ १४ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

तारतम्येन तिर्यगादिभ्यः पुरुषे यस्मादाधिक्येन वर्त्तते तस्मात् पुरुषः पात्रं तत्रापि यथायथा ज्ञानवैराग्यादिभिर्याबानात्मा जीवः उत्कृष्टो भवेत् यः स पात्रं तथाच श्रुतिः "पुरुषत्वेचाविस्तरामात्मा" इत्यादि ॥ ३८ ॥

सर्वप्राणिसंमाननासमर्थानामवज्ञा स्पर्द्धादिमतां तु भगवत्प्रतिमैव पात्रमित्याह—दृष्ट्वेति । मिथः परस्परमवज्ञाने एवात्माबुद्धिर्येषां तेषां भावस्तत्ता ताम् ॥ ३९ ॥

उपास्ता उपासितापि पुरुषद्विषां नार्थदेति अवज्ञादिभ्योपि द्वेषेऽपराधाधिक्यं सूचयति ॥ ४० ॥

पुरुषस्यैव जात्या तपआदिभिश्च श्रैष्ठ्यमाह—पुरुषेष्वपीति । वेदं ब्रह्मशब्दवाच्यं यो धत्ते ज्ञानेन स ब्राह्मण इति तदधीते तद्वेदेत्यणा ब्राह्मणपदव्युत्पत्तिर्दर्शिता ॥ ४१ ॥

कृष्णस्य महत् दैवतमिति तेनाप्याद्रियते ब्रह्मण्यत्वात् नच तद्दैवतत्वात् ब्राह्मणास्तस्मात् सकाशादपि वस्तुत एव पूज्या इति सिद्धान्त एवेति भावः राजसूये बहुष्वपि ब्राह्मणेषु विद्यमानेषु कृष्णस्यैवाग्रपूजनात् ॥ ४२ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् ।

चतुर्दशः सप्तमस्य सङ्गतः सङ्गतस्सताम् ॥ १४ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

तेष्वेषु नृतिर्यगादिषु भगवान् तारतम्येन वर्तते यस्मात्तस्मात् यावान् यथा ईयते तावान् यथा आत्मा तदन्तरात्मा पुरुषः पात्रम् नृतिर्यगादिषु यथा यथेयते तथा तथा पूज्य इत्यर्थः ॥ ३८ ॥

एवं नृतिर्यगादिषु प्राणिषु भगवद्दर्शनमुक्तम् । अथ तद्दृढीकरणार्थं महर्षिभिः संस्थापिता भगवत्प्रतिमा पूजा पुरुषार्थदाऽपि प्राणिद्रोहिणां नार्थदेत्याह—दृष्ट्वेति, द्वाभ्याम् । मिथोऽवज्ञानेऽन्योऽन्यतिरस्कारे आत्मा बुद्धिर्येषां तेषां भावस्तत्ता तां दृष्ट्वा क्रियायै भगवत्पूजार्थम् अर्चा प्रतिमा कविभिः त्रेतादिषु कृता प्रकटीकृता ॥ ३९ ॥

तत्रार्चायां प्रतिमायां केचित् [illegible] सम्यक् श्रद्धाय सपर्ययोपासते तत्तदनन्तप्रत्यर्थदा [illegible] पुरुषद्विषां नृतिर्यगादिप्राणिपीडया परमेश्वरद्वेषिणां तु [illegible]ऽपि न भवति किमुतार्थदा न भवतीति वाक्यम् ॥ ४० ॥

पुरुषेषु नृप च ब्राह्मणं सुपात्रं विदुः यतस्तपआदिभिर्वेदं हरेस्तनुं मूर्तिं च [illegible] अध्ययनेन ध्यानेन च ॥ ४१ ॥

पादरजसा त्रिलोकीं पुनन्तः ब्राह्मणाः । ननु, अहो जगदात्मनः सर्वात्मनः श्रीकृष्णस्यापि महद्दैवतमादरविषयाः किमुतान्येषामित्यर्थः ॥ ४२ ॥

इति श्रीमद्भागवते महापुराणे सप्तमस्कन्धीये

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे

चतुर्दशाऽध्यायार्थप्रकाशः ॥ १४ ॥

---

भाषा टीका ।

हे राजन् ! इन सर्व पुरों ( देहों ) में भगवान् तारतम्य से वर्त्तमान हैं, पर जिस कारण से पुरुष में अधिकता से वर्त्तमान है, तस्मात् पुरुष ही पात्र है, पुरुषों मे भी ज्ञानी लोग और भी पात्र है ॥ ३८ ॥

भाषा टीका ।

असन्मान मे अर्थात् अन्य के तिरस्कार में जिनों की बुद्धि लग्न रहती है, ऐसे मनुष्यों की भी जैसे श्री हरि मे प्रीति होवे। हे राजन् ! इसी हेतु से वेदवेत्ताओं ने त्रेतादि युगों में क्रिया के अर्थ श्रीहरि की अर्चा प्रतिष्ठादि करी है, ॥ ३९ ॥

तिसी से कितने एक धन्य महात्मा जन सम्यक् श्रद्धाकर के अर्चा ही में श्रीहरि की पूजा करके उपासना करते है, परन्तु वह उपासित मूर्ति भी पुरुष द्वेषियों को अर्थदेने वाली नहीं होती है, अर्थात् भूतद्रोही का प्रतिमा पूजन व्यर्थ है ॥ ४० ॥

हे राजेन्द्र ! मनुष्यों में भी महाजन, ब्राह्मण को सुन्दर पात्र जानते है, क्यों कि ? वह, तप विद्या और सन्तोष से साक्षात् श्रीहरि के तनु रूप वेद को धारण करता है ॥ ४१ ॥

हे राजन् ! ये ब्राह्मण लोग इन जगदात्मा श्रीकृष्ण ही के प्रिय और परम दैवत अर्थात् पूजनीय है ॥ ४२ ॥

इति श्रीमद्भागवत सप्तमस्कन्ध में चतुर्दश अध्याय की

भागवताचार्य कृत भाषा टीका समाप्त ॥ १४ ॥

इति श्रीमद्भागवते महापुराणे सप्तमस्कन्धे चतुर्दशोऽध्यायः ॥ १४ ॥



## ॥ पञ्चदशोऽध्यायः ॥

नारद उवाच ।

कर्मनिष्ठा द्विजाः केचित्तपोनिष्ठा नृपापरे ।
स्वाध्यायेऽन्ये प्रवचने ये केचिज्ज्ञानयोगयोः ॥ १ ॥
ज्ञाननिष्ठाय देयानि कव्यान्यानन्त्यमिच्छता ।
दैवे च तदभावे स्यादितरेभ्यो यथाऽर्हतः ॥ २ ॥
द्वौ दैवे पितृकार्ये त्रीनेकैकमुभयत्र वा ।
भोजयेत्सुसमृद्धोऽपि श्राद्धे कुर्यान्न विस्तरम् ॥ ३ ॥
देशकालोचितश्रद्धा द्रव्यपात्रार्हणानि च ।
सम्यग्भवन्ति नैतानि विस्तरात्स्वजनार्पणात् ॥ ४ ॥
देशे काले च सम्प्राप्ते मुन्यन्नं हरिदैवतम् ।
श्रद्धया विधिवत्पात्रे न्यस्तं कामधुगक्षयम् ॥ ५ ॥
देवर्षिपितृभूतेभ्य आत्मने स्वजनाय च ।
अन्नं संविभजन्पश्येत् सर्वं तत्पुरुषात्मकम् ॥ ६ ॥
न दद्यादामिषं श्राद्धे न चाद्याद्धर्मतत्त्ववित् ।
मुन्यन्नैः स्यात्परा प्रीतिर्यथा न पशुहिंसया ॥ ७ ॥
नैतादृशः परो धर्मो नृणां सद्धर्ममिच्छताम् ।
न्यासो दण्डस्य भूतेषु मनोवाक्कायजस्य यः ॥ ८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

ततः पञ्चदशे सर्ववर्णाश्रमनिबन्धनम् ।
सारतः सङ्ग्रहेणाऽथ वर्ण्यते मोक्षलक्षणम् ॥

सर्वेषामपि मोक्षधर्माणां सारसङ्ग्रहार्थमध्यायप्रारम्भः, तत्र श्राद्धगतान्विशेषानाह-कर्मनिष्ठा इति। स्वाध्यायादिषु परिनिष्ठिता इति शेषः ॥ १ ॥

कव्यानि पितॄनुद्दिश्य देयानि दैवे च हव्यान्यपि तस्मै देयानि यथार्हत इति सर्वत्र ज्ञानादितारतम्येन ॥ २ ॥ ३ ॥

ननु, विस्तरः कुतः प्राप्तो येन निषिध्यते तत्राह, स्वजनार्पणात् जामाता चेन्निमन्त्र्यते तत्पित्रादयः कथं [ वर्ज्या इत्येवं प्राप्ताद्विस्तरादित्यर्थः ॥ ४ ॥

मुन्यन्नमारण्यं व्रीह्यादि हरिदैवतं हरये निवेदितं सत् ॥५॥

पुरुषात्मकमीश्वरस्वरूपम् ॥ ६ ॥ ७ ॥

दण्डस्य न्यासो हिंसायास्त्यागो य एतादृशोऽन्यो धर्मो नास्ति ॥ ८ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचान्द्रिका ।

तपसा विद्ययेत्यादिना ब्राह्मणेष्वपि तप आदिगुणतारतम्येन पात्रत्वं तारतम्येन व्यवस्थितमिति सूचितम् एतदेव

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

विवृण्वन्सुपात्रायैव श्राद्धादिष्वन्नादिकं दद्यादिति वदन्नन्यानपि श्राद्धीयनियमानाह, देवर्षि.—कर्मनिष्ठा इत्यादिना । हे नृप ! केचित् द्विजा त्रैवर्णिकाः कर्मनिष्ठाः स्ववर्णाश्रमोचितकर्मनिष्ठाः केचिच्चाऽनशनादितपोनिष्ठाः केचित्स्वाध्याये प्रवचने अध्यापने च परिनिष्ठिताः केचिच्च ज्ञानयोगयोरुभयोरपि निष्ठिता इति शेषः । ज्ञानमात्मयाथात्म्यज्ञानपूर्वकभगवदुपासनात्मकम् योगोऽनभिसंहितफलकर्मयोगः ॥ १ ॥

तत्र ज्ञाननिष्ठाय ज्ञानकर्मयोगानुगृहीतभगवदुपासनात्मकज्ञानयोगनिष्ठाय पितॄनुद्दिश्य देयानि कव्यानि श्राद्धान्नादीनि आनन्त्यमपरिमितं फलं मोक्षरूपं फलमिच्छतां पुंसां देयानि तथा दैवे च कर्मणि हव्यान्यपि ज्ञाननिष्ठायैव देयानि तदभावे ज्ञाननिष्ठस्याभावे इतरेभ्यः कर्मनिष्ठादिभ्योऽपि यथायोग्यं ज्ञानादितारतम्येन देयं स्यात् ॥ २ ॥

दैवे विश्वेदेवस्थाने द्वौ ब्राह्मणौ पितृकार्ये पितृप्रयोजने पित्रर्थमिति यावत् । त्रीन् ब्राह्मणानुभयत्र द्वयोरपि स्थानयोरेकैकं वा ब्राह्मणं भोजयेत्सुसमृद्धोऽपि धनाढ्योऽप्येवं ब्राह्मणान् भोजयेत् न तु श्राद्धे विस्तरं कुर्यात् ॥ ३ ॥

श्राद्धविस्ताराद्दोषमाह—देशेति । देशकालपात्राणि यथोक्तान्येव उचिता श्रद्धा विश्वास. कर्तव्यविषया त्वरा वा अर्हणं पूजासाधनं तानि समीचीनान्यपि स्वजनार्पणाद्विस्तराच्च सम्यग्भवन्ति विगुणान्येव स्युरित्यर्थः । ननु, कुतो विस्तरः प्राप्तः येन निषिध्यते इति शङ्कां वारयितुं स्वजनार्पणादित्युक्तं स्वजनानामर्पणाद्दौहित्रो निमन्त्रितश्चेत्तत्पुत्राद्य. कथं वर्ज्या इत्याद्येवं प्राप्ताद्विस्तरादित्यर्थः ॥ ४ ॥

श्राद्धे विष्णवर्थमपि ब्राह्मणं भोजयेदित्याह—देश इति । देशे पूर्वोक्ते कालेऽपरपक्षादिरूपे मृताहादिरूपे च काले प्राप्ते कर्तव्यत्वेन प्राप्ते श्राद्धे पात्रे सत्पात्रे विधिवच्छ्रद्धया न्यस्तं मुन्यन्नमारण्यं व्रीह्यादिजमप्यन्नं हरिदैवतं विष्णुदैवत्यं तस्मै निवेदितं तदुद्देश्येन च दत्तमन्नं कामधुक् कामदमक्षयफलदं मुक्तिसाधनं चेत्यर्थः ॥ ५ ॥

सर्वाश्रमसाधारणान् कांश्चिद्धर्मानाह—देवर्षीति । देवादिभ्य आत्मने स्वजनाय बन्धुजनाय चान्नं विभजेद्विभज्य दद्यात् तदेवादिकं सर्वं प्राणिजातं पुरुषात्मकं भगवदात्मकं पश्येत् ॥६॥

आमिषं मांसं श्राद्धे पित्राद्युद्देशेन न दद्यात् इदं क्षत्रियाभिप्रायकं तथा धर्मयाथात्म्यवित्स्वयमप्यामिषं नाश्नीयात् यथा मुन्यन्नैरपि परोत्कृष्टा पित्रादीनां प्रीतिः स्यात्तथा पशुहिंसया न स्यात् ॥ ७ ॥

किञ्च सद्धर्ममिच्छतां नृणामेतादृशः एव पर उत्कृष्टो धर्मः कोऽसौ ? यो भूतेषु मनोवाक्कायजस्य दण्डस्य न्यासस्त्यागः करणत्रयेण भूतद्रोहाभाव एव नृणां परो धर्म इत्यर्थः । एतादृशोऽन्यः परो धर्मो नास्तीति भावः । न दद्यादामिषमित्यनेन पशुमृगादिहिंसागर्भमांसादिद्रव्यकश्राद्धादेरपि मुन्यन्नेनापि कृतं श्राद्धादिकं नितरां पित्रादीनां प्रीतिकृदित्युक्तं नैतादृश इत्यनेन भूतहितमेवोत्कृष्टधर्म इत्युक्तम् ॥ ८ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

कर्ममार्गो ज्ञानमार्गश्च कार्याणां कारणेषु लयः प्रवेशलक्षणं च तत्साधनं च प्रपञ्चस्वरूपं च निरूपयत्यस्मिन्नध्याये । तत्र प्रथमतो ब्राह्मणादपि ज्ञाननिष्ठमुत्तमं पात्रं दैवोपलब्धेन द्रव्येणैव नित्यनैमित्तिकक्रियाकरणं धर्माधर्मविवेकश्च कथ्यते. तत्र ब्राह्मणान्विवेचयति—कर्मेति । कर्मनिष्ठा गृहस्थाः तपोनिष्ठा वानप्रस्थाः स्वाध्यायनिष्ठा ब्रह्मचारिणः प्रवचननिष्ठाः कुटीचका बहूदकाश्च योगनिष्ठा हंसाः ज्ञाननिष्ठाः परमहंसा. ॥ १ ॥

तत्र सन्ततेरानन्त्यं मुक्तिं चेच्छता ज्ञाननिष्ठाय परमहंसाय कव्यानि पितृभ्यो दीयमानान्यन्नानि दातव्यानीति विधिरित्यन्वयः । दैवे कर्मणि च तस्मा इति शेषः । तदभावे परमहंसाभावे इतरेभ्यो हंसादिभ्यः श्राद्धादिदानं स्यात् तत्रापि यथार्हतः यथायोग्यम् ॥ २ ॥

अत्र भोक्तृ. सङ्ख्या नियमानाह—द्वाविति, ॥ ३ ॥

कुतो विस्तारो न कर्तव्य इति तत्राह—देशेति । स्वजनार्पणात् आत्मीयार्पणलक्षणात् विस्तारादेतानि देशकालोचितश्राद्धादीनि सम्यक् न भवन्तीति यत्तस्माद्विस्तारं न कुर्यादिति पूर्वेणान्वयः ॥ ४ ॥ ५ ॥ ६ ॥

यतः श्राद्धभोजने मुख्याधिकारित्वे मांसविधान कथमुपपद्यत इति तदपवादत्वेन विधत्ते—न दद्यादिति । शास्त्रान्तरविधिमोहितेन केनचित्कामपरिमोक्षणेन मस्करिणा न भोक्तव्यमिति विधत्ते-नचेति । नच श्राद्धभङ्ग इत्याह, धर्मेति—

"विना मांसेन मधुना विना दक्षिणयाऽऽशिषा ।
अक्षय्यं भवति श्राद्धं यतिश्च श्राद्धभोजिषु ॥
ग्रामे वा नगरेऽरण्ये ज्ञातभिक्षुर्वसेद्यदि ।
तमन्तरेण यच्छ्राद्धं तदासुरमथो भवेत्"

इत्यादि स्मृतेः । तद्विधायकशास्त्रमासुरजनमोहनार्थत्वेन देशकालविशेषविषयत्वेन वा योजनीयम् आमिषाभावे भोक्तुः सौहित्याभावेन पितॄणां सौहित्यं न स्यादिति तत्राह-मुनीनामिति, मुनीनां संयमिनां यथा मांसानदनेन परा प्रीतिः सौहित्यं स्यात्तथा पशुहिंसया जातमांसेन न स्यात्. यथा मुनीनां पितॄणां यतिभोजनेन परा प्रीतिस्तथा पशुहिंसाजातामिषभोजनेन न स्यादिति द्विरावृत्त्यायोजनीयम् "वाचां यमे च सर्वज्ञे मुनिशब्द. पितृष्वपि" इत्यभिधानम्. मुनीनां सर्वज्ञानां देवानां यथा परमा प्रीतिः तथा पशुहिंसालक्षणेन यागेन नेति वा ॥ ७ ॥

श्राद्धे चतुर्थाश्रम्येव पूज्य इति नियमः प्रायिकः तद्धर्मो यस्याऽस्ति सोऽपि मान्य इत्याशयेनाह-नैतादृश इति । सद्धर्ममिच्छतां नृणां भूतेषु मनोवाक्कायकर्मजस्य दण्डस्य न्यासः सन्त्यागो य एतादृशो धर्मः परोऽन्यो नास्ति । अयमेव मुख्यो धर्मः तस्मादेतादृशधर्मोऽपि श्राद्धे मान्य इत्याशयः । "वेणुभिर्नं भवेद्यति."इति वक्ष्यति न केवलं पश्वालम्भनलक्षणहिंसाभावान्मुनीनां प्रीतिजनकोऽपि तु मनआदिना क्रियमाणदण्डलक्षणहिंसाभावोऽपीत्यतो वाह, नेति ॥ ८ ॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

अथ तेषु सर्वोत्कृष्टमाह—द्वाभ्याम्, कर्मनिष्ठा इत्यादयः । क्रमशो गृहस्थवानप्रस्थब्रह्मचारिसन्यासिनो ज्ञेयाः अनेन यथाऽत्र मुमुक्षुप्रभृतीनां ज्ञानिपूजैव मुख्या । पुरुषान्तरपूजा तु तदभाव एव, तथा प्रेमभक्तिकामानाम् प्रेमभक्तपूजापि ज्ञेया । ततः प्रेमभक्तानामपि यच्चात्रस्य परमाश्रयरूपं च तदभिव्यक्तेः सुतरामेवार्चाया आधिक्यमपि । एवं तदाश्रयरूपस्य विलक्षणप्रकाशत्वादेव श्रीविष्णोः व्यापकत्वेऽपि शालग्रामादिषु निर्धारणं तच्च पुरुषवन्नान्तर्यामिदृष्टचपेक्षं किन्तु स्वभावनिर्देश्यः

"तत्र श्राद्धं जपो होमः सर्वं कोटिगुणं भवेत्" ।
"शालग्रामसमीपे तु क्रोशमात्रं समन्ततः ॥
कीकटेऽपि मृतो याति वैकुण्ठभवनं नरः" इति ।

तस्मादर्चाया आधिक्यमेव स्थितम् ॥ १—१२ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

गृहस्थस्यैव धर्मान्तः सर्वधर्मनिरूपणम् ।
अत्र पञ्चदशे सारसङ्ग्रहाख्ये प्रदर्शितम् ॥

पूर्वत्र ब्राह्मणोत्कर्षः प्रतिपादितः तेषु ब्राह्मणेष्वपि तारतम्यमाह—कर्मनिष्ठा गृहस्था विप्राः तपोनिष्ठा वानप्रस्थाः अन्ये स्वाध्याये प्रवचने इति नैष्ठिकब्रह्मचारिणः केचित् ज्ञानयोगयोरिति संन्यासिनः समासान्तर्वर्त्तिना ऽपि निष्ठापदेनात्रानुवर्त्तितेन लक्षणया निष्ठावन्तो व्याख्येयाः ततश्चैषां यथोत्तरमेव श्रैष्ठ्यं दर्शितम् ॥ १ ॥

कव्यानि पितृनुद्दिश्यकवस्तूनि दैवे च हव्यानि देवोद्देश्यकवस्तूनि च ज्ञाननिष्ठाय देयानि आनन्त्यं मोक्षं पितॄणां स्वस्यचेति मोक्षार्थिना गृहस्थेन संन्यासिन एवाधिक्येन भोजनीया इति पञ्चाध्याय्या अस्या मोक्षप्रकरणत्वात् अत एव शुद्धभक्तानां कर्मानधिकारात् गृहस्था अपि ते अत्र कर्मज्ञानप्रकरणेन पठिताः तैस्तु सुप्रतिष्ठव्यवहाररक्षाभागताम्बरीषादिभिरिव स्वप्रतिनिधिद्वारा कर्मकरणेन भक्तिमार्गनिन्दावादाद्यनुत्थानार्थमेव क्रियत इत्युक्तं पञ्चमे, एकादशे च प्रतिपादयिष्यते तस्मान्मोक्षार्थिनां यथा ज्ञानिपूजैव मुख्या पुरुषान्तरपूजा तु तदभाव एव; तथा प्रेमभक्त्यर्थिनामैकान्तिकभक्तपूजैव मुख्येति ज्ञापितमत्रापि "स वै पुण्यतमो देशः" इति पद्यव्याख्यायाम्—

"मुक्तानामपि सिद्धानां नारायणपरायणः ।
सुदुर्लभः प्रशान्तात्मा कोटिष्वपि महामुने !" ॥

इत्यादिना ज्ञानिभ्योऽपि तदुत्कर्षश्रवणात्—

"नमेऽभक्तश्चतुर्वेदी मद्भक्तः श्वपचः प्रियः ।
तस्मै देयं ततो ग्राह्यं स हि पूज्यो यथाह्यहम्" ॥ इति

ब्राह्मणेतरस्यापि तस्य संप्रदानत्वश्रवणाच्च यथा च ज्ञानिनामर्चायां पूजा हि "दृष्ट्वा तेषां मिथो नृणाम्" इत्यनेन कनिष्ठाधिकारिणां व्याख्याता न तथा भक्तानां व्याख्येया तेषां हि मुख्याधिकारिणामपि अर्चायां पूजादिकं मुख्यमेव भक्त्यङ्गं यदुक्तमेकादशे—

"मल्लिङ्गमद्भक्तजन दर्शनस्पर्शनार्चनम् ।
परिचर्यास्तुतिप्रह्वगुणकर्माऽनुकीर्त्तनम् ॥
ममार्चास्थापने श्रद्धा स्वतः संहृत्यचोद्यमः" ॥ इति ।
"वस्त्रोपवीताभरणपत्रस्रग्गन्धलेपनैः ।
अलङ्कुर्वीत सप्रेम मद्भक्तो मां यथोचितम्" ॥ इति

"प्रतिमास्वल्पबुद्धीनाम्" इत्यादिकं तु ज्ञानिपरमल्पबुद्धीनामपीति वा व्याख्येयम् । नृसिंहपुराणे ब्रह्माम्बरीषादीनामपि तत्पूजाश्रवणात् तस्याः महिमाधिक्यं विष्णुधर्मे च तामधिकृत्य अम्बरीषं प्रति श्रीविष्णुवाक्यम्—

"तस्यां चित्तं समावेश्य त्यजता ऽन्यान् व्यपाश्रयान् ।
पूजिता सैव ते भक्त्या ध्याता चैवोपकारिणी ॥
गच्छंस्तिष्ठन् स्वपन् भुञ्जंस्तामेवाग्रे च पृष्ठतः ।
उपर्य्यधस्तथा पार्श्वेचिन्तयंस्तामथात्मनः" ॥ इत्यादि

स्कान्दे च "शालग्रामशिला यत्र तत्तीर्थं योजनत्रयम्" इति पाद्मे च

"शालग्रामसमीपे तु क्रोशमात्रं समन्ततः
कीकटेऽपि मृतो याति वैकुण्ठभवनं नरः" ॥

इति ॥ २ ॥

विस्तरं भोक्तृबाहुल्यम् ॥ ३ ॥

स्वजनार्पणात् स्वजनेभ्योऽप्रदानात् जामाता चेन्निमन्त्र्यते तत्पित्रादयः कथमुपेक्षणीया इत्येवं प्रसात् विस्तरात् ॥ ४ ॥

मुन्यन्नम् आरण्यं व्रीह्यादि न्यायार्जितं वा हरिदैवतं प्रथमं हरये निवेदितं ततः तदेव पितृभ्यो दत्तं ततः पात्रे न्यस्तम् ॥ ५—७ ॥

दण्डस्य हिंसनस्य न्यासस्त्यागः ॥ ८ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

सर्वधर्मसारः पञ्चदशे उच्यते, तत्रादौ श्राद्धगतान् विशेषानाह—कर्मनिष्ठा इत्यादिना । द्विजाः केचित्कर्मनिष्ठाः अपरे तपोनिष्ठा अन्ये स्वाध्याये वेदादिपाठे प्रवचने तदर्थव्याख्याने च परिनिष्ठिता इति शेषः । केचित्तु कर्मादिना निर्मलान्तःकरणा ज्ञानयोगयोः ज्ञानभक्त्योः परिनिष्ठिताः ज्ञाननिष्ठाय ज्ञानभक्त्योरत्यन्तभेदाभावादेकस्य निर्देशः ज्ञानभक्तिसम्पन्नायेत्यर्थः । कव्यानि पितॄनुद्दिश्य देयानि दैवे हव्यानि च देयानि तदभावे इतरेभ्यः कर्मनिष्ठादिभ्यो यथार्हतो देयं स्यात् ॥ १—२ ॥

दैवे विश्वेदेवकार्ये द्वौ ब्राह्मणौ पितृकार्ये त्रीन् उभयत्रैकैकं वा भोजयेत्सुसमृद्धोऽपि धनाढ्योऽपि श्राद्धे विस्तरं न कुर्वीत ॥ ३ ॥

विस्तरे दोषमाह—देशेति । विस्तरात् स्वजनेभ्यो निमन्त्रितेभ्यो ऽनर्पणात् देशकालोचितानि श्रद्धादीनि सम्यङ् न भवन्ति ॥ ४ ॥

एके कर्ममयान्यज्ञान् ज्ञानिनो यज्ञवित्तमाः ।
आत्मसंयमने ऽनीहा जुह्वति ज्ञानदीपिते ॥ ९ ॥
द्रव्ययज्ञैर्यक्ष्यमाणं दृष्ट्वा भूतानि बिभ्यति ।
एष माऽकरुणो हन्यादतज्ज्ञो ह्यसुतृब् ध्रुवम् ॥ १० ॥
तस्माद्दैवोपपन्नेन मुन्यन्नेनाऽपि धर्म्मवित् ।
सन्तुष्टो ऽहरहः कुर्यान्नित्यनैमित्तिकीः क्रियाः ॥ ११ ॥
विधर्मः परधर्मश्च आभास उपमा छलः ।
अधर्मशाखाः पञ्चेमा धर्म्मज्ञो ऽधर्म्मवत्त्यजेत् ॥ १२ ॥
धर्मबाधो विधर्म्मः स्यात् परधर्म्मो ऽन्यचोदितः ।
उपधर्मस्तुपाखण्डो दम्भो वा शब्दभिच्छलः ॥ १३ ॥
यस्त्विच्छया कृतः पुम्भिराभासो ह्याश्रमात्पृथक् ।
स्वभावविहितो धर्मः कस्य नेष्टः प्रशान्तये ॥ १४ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

हरिदैवतं हृदये निवेदितं मुन्यन्नमारण्यं व्रीह्यादिकं श्राद्धप्रोक्तपात्रे न्यस्तमर्पितं सर्वकामधुगक्षयं च भवति ॥ ५ ॥

देवर्ष्यादिभ्यः सर्वत्राऽन्नं विभजन् तत्सर्वं देवर्ष्यादिकम्पुरुषात्मकं भगवदात्मकं पश्येत् ॥ ६ ॥

उत्तमाधिकारी हिंस्रं कर्म त्यजेदेवेत्याह—न दद्यादित्यादिना ॥ ७ ॥

भूतेषु मनोवाक्कायजस्य दण्डस्य हिंसनस्य न्यासस्त्यागो यः स सद्धर्मं भगवद्भक्तिलक्षणं समीचीनं धर्ममिच्छतां परो धर्मश्रेष्ठो भक्तिसाधन एतादृशोऽन्यो धर्मो नास्ति ॥ ८ ॥

भाषा टीका।

॥ श्रीरुक्मिणीरमणचरणनलिनेभ्यो नमः ॥

॥ नारद उवाच ॥

नारद जी बोले, कि—हे राजन्! कितने एक ब्राह्मण, कर्म निष्ठा वाले हैं, कोई तप में निष्ठा वाले है, बहुत स्वाध्याय में निष्ठा करते हैं, अन्य ब्राह्मण लोग प्रवचन ( वेद पढाने ) में निष्ठावाले है, कितने एक ज्ञान में कितने एक योग में निष्ठावाले ब्राह्मण लोग हैं ॥ १ ॥

परंच देव पितृ कार्य में कव्य ( देवताओं के निमित्त प्रदेय अन्न ) हव्य ( पितरन के निमित्त प्रदेय अन्न ) केवल ज्ञान निष्ठावाले ब्राह्मण को ही देना चाहिये, यदि ज्ञाननिष्ठ न मिले तो यथा योग्य ज्ञान तारतम्य देखकर औरों को देवे ॥ २ ॥

देवकार्य में दो ब्राह्मण, पितृकार्य में तीन ब्राह्मण, अथवा दोनों कार्यों में बडा धनी भी एक ही एक ब्राह्मण को भोजन करावे, श्राद्ध में विस्तार कभी न करै ॥ ३ ॥

देश काल के उचित श्रद्धा, द्रव्य, पात्र, पूजन, इन सबके विस्तार से, और श्राद्ध में स्वजनों के अर्पण करने से, ये सब श्राद्धादिक कर्म समीचीन ( अच्छे ) नहीं होते है ॥ ४ ॥

श्राद्ध के देश काल प्राप्त होने पर, प्रथम श्रीहरि को निवेदन कराकर उसी निवेदित मुन्यन्न ( मुनियों के अन्न, ओदनादि ) को श्रद्धा से विधि पूर्वक सत्पात्र को भोजन करावे, तब वह कामनाओं को पूर्ण करने वाला और अक्षय होता है ॥ ५ ॥

देव, ऋषि, पितृ, भूत, ( प्राणी ) आत्मा, और स्वजनों को अन्न का विभाग करता हुआ सबों को भगवदात्मक देखे ॥ ६ ॥

धर्म के तत्त्व को जानने वाला श्राद्ध में मांस न देवे। और आप भी स्वयं मांस भक्षण न करे, जैसी पितृ लोगों को मुनि अन्न से परमप्रीति अर्थात् तृप्ति होती है, वैसी पशु हिंसा से नहीं होती है ॥ ७ ॥

बस समीचीन धर्म की इच्छा वाले मनुष्यों को इससे आगे बडा परमधर्म और कोई भी नहीं है, जो कि? मन वाणी और शरीर से प्राणियों के दंडका त्याग, अर्थात् अपने मन वाणी और शरीर से प्राणी मात्र को पीडा न देना ॥ ८ ॥

श्रीधरस्वामिकृतभावार्थदीपिका।

अत एवोत्तमाधिकारिणो बाह्यानि कर्म्माणि त्यजन्तीत्याह, एक इति। अनीहा निष्कामाः ज्ञानदीपिते आत्मस्फूर्तिमत्यात्मसंयमने

धर्मार्थमपि नेहेत यात्रार्थं वाऽधनो धनम्।
अनीहाऽनीहमानस्य महाहेरिव वृत्तिदा ॥ १५ ॥
सन्तुष्टस्य निरीहस्य स्वात्मारामस्य यत्सुखम्।
कुतस्तत्कामलोभेन धावतोऽर्थेहया दिशः ॥ १६ ॥

### श्रीधरस्वामिकृतभावार्थदीपिका।

जुह्वति मनो निगृह्य तदन्तरायतया त्यजन्तीत्यर्थः। तदुक्तं मर्मज्ञैः—

"प्रत्यक्स्फूर्तिरसत्स्फूर्तिस्तन्निष्ठाविघातकम्।
स्वलक्ष्य सन्त्यजेत्कर्म त्यजन्विघ्नहतोऽन्यथा" ॥

इति ॥ ९ ॥

मा मामेष ध्रुवं हन्यादिति कुतः अकरुणः तत्कुतः असुतृप् प्राणतर्पकः तत्किम् अतज्ज्ञः आत्मतत्त्वाऽनभिज्ञः तथाच श्रुतिः—

"न तं विदाथ य इमा जजानाऽ[illegible]न्तरं बभूव
नीहारेण प्रावृता जल्प्या चासुतृ[illegible]श्चरन्ति"

इति ॥ १० ॥

प्रकृतमनुवर्त्तयति—तस्मादिति ॥ ११ ॥

अधर्मवत्त्याज्यान्निषिद्धवत् ॥ १२ ॥

क्रममनादृत्य पञ्चापि व्याचष्टे—धर्मबाध इति धर्मबुद्ध्याऽपि यस्मिन् क्रियमाणे स्वधर्मबाधः अन्यस्य चोदितोऽन्यस्य परधर्मः उपधर्मेति व्याचष्टे—उपधर्मस्त्विति। शब्दस्य भिन्नोऽर्थोऽन्यथा व्याख्यानं यस्मिन् यथा दशावरान्गोऽर्थ्यादित्युक्ते दशाब्दोऽवरानिति, शत्रुभूदिति पाठे धर्मशब्दमात्रं बिभर्त्तीति तथा यथा गां दद्यादित्युक्ते मरिष्यन्त्या गोर्दानम् ॥ १३ ॥

स्वधर्मानुष्ठानाऽनन्तरं धर्मभूयस्त्वार्थमपि परधर्मो नाऽनुष्ठेयोऽनुपयोगादित्याह—स्वभावविहित इति ॥ १४ ॥

किञ्च अधनो धर्मार्थं धनं नेहेत नापेक्षेत धनार्थं न व्यापियतेति वा दैवोपपन्नेनैव स्वधर्मसिद्धेरुक्तत्वात् यात्रार्थमपि नेहेतेत्येतत् प्रपञ्चयति—अनीहेति, सार्द्धैः षड्भिः ॥ १५ ॥ १६ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

यत एवमत एव केचिज्ज्ञाननिष्ठा हिंसागर्भद्रव्ययज्ञान् जहति ज्ञानयज्ञनिष्ठाश्च भवन्तीत्याह—एक इति। यज्ञवित्तमा यज्ञयाथात्म्यविदः अनीहा निष्कामाः केचिद् ज्ञानिनः पूर्वोक्तोत्कृष्टधर्मज्ञानवन्तः कर्ममयान् यज्ञान्पशुपुरोडाशादिद्रव्यकान्यज्ञान् ज्ञानदीपिते आत्मसंयमने जुह्वति. ज्ञानेन परमात्मोपासनात्मकेन दीपिते प्रज्वलिते आत्मनो मनसः संयमो नियमनं तस्मिन् योगाग्नावित्यर्थः। तत्र जुह्वति "तस्यैवं विदुषो यज्ञस्यात्मा यजमानः श्रद्धा पत्नी शरीरमिध्ममुरो वेदिर्लोमानि बर्हिः" इत्यादि पुरुषविद्योक्तनिष्ठया क्रियामयान् यज्ञान् हित्वा ज्ञानमयान् यज्ञान् अनुतिष्ठन्तीत्यर्थः ॥ ९ ॥

एव जुह्वतामयं भाव इत्याह—द्रव्ययज्ञा इति। द्रव्ययज्ञैः पशुपुरोडाशादिद्रव्ययज्ञैर्यक्ष्यमाणं दृष्ट्वा भूतानि पश्वादीनि एष यक्ष्यमाणो निर्घृणोऽज्ञोऽसुतृप् अस्माकमसुभिः तृप्यतीति तादृशो मां ध्रुवं नूनं हन्यादिति बिभ्यतीत्याशयेन द्रव्ययज्ञान् हित्वा ज्ञानयज्ञाननुतिष्ठन्तीत्यर्थः ॥ १० ॥

तस्मात् पूर्वोक्तभूतसुहृत्त्वरूपोत्कृष्टधर्मवित् पुमान् दैवादुपनतेन मुन्यन्नेनाऽपि न तु मांसादिना ऽहरहः नित्यनैमित्तिकाश्च क्रियाः सन्तुष्टः कुर्यात् यद्यप्यत्र "मुन्यन्नैः स्यात्परा प्रीतिस्तथा न पशुहिंसया" इत्यनेन "द्रव्ययज्ञैर्यक्ष्यमाणम्" इत्यनेन च मांसश्राद्धाग्नीषोमीयादिकर्मणां हिंसागर्भत्वेन पापमिश्रत्वं प्रतीयते तच्च "अशुद्धमिति चेन्न शब्दात् ३।१।२५" इति शारीरकाधिकरणन्यायविरुद्धं तत्र ह्यग्नीषोमीयादिकर्मणां पशुहिंसादिरूपपापमिश्रत्वेनाऽशुद्धियुक्तत्वं परिचोद्य, नैतद्युक्तम् कुतः शब्दादग्नीषोमीयादेः संज्ञपनस्य स्वर्गलोकप्राप्तिहेतुतया हिंसात्वाभावशब्दात्पशोर्हि संज्ञपनानिमित्तां स्वर्गलोकप्राप्तिं वदन्तं शब्दमामनन्ति "हिरण्यशरीर ऊर्ध्वं स्वर्गं लोकमेति" इत्यादिकमतिशयितानुग्रहसाधनभूतव्यापारोऽल्पदुःखदोऽपि न हिंसा, प्रत्युत रक्षणमेव तथा च मन्त्रवर्णः "न वा उ एतन्म्रियसे न रिष्यसि देवाँ इदेषि पथिभिः सुगेभिः यत्र यन्ति सुकृतो नापि दुष्कृतस्तत्र त्वा देवः सविता दधातु" इति. चिकित्सकञ्च तादात्विकदुःखकारिणमपि रक्षकमेव वदन्ति पूजयन्ति च तज्ज्ञा इति हिंसात्वाभावः सिद्धान्तितः। तथाऽप्यत्र हिंसागर्भत्वमात्रं पश्वादिहिंसायाश्च सर्वभूतसुहृदां ज्ञानिनामननुरूपत्वे च तात्पर्यं न तु यागीयहिंसायाः पापत्वेऽपि, न एव केवलं भूतानि बिभ्यतीत्येतावदेवोक्तं न तु तद्धिंसायाः पापत्वमपीत्यतो न शारीरकन्यायविरोधः ॥ ११ ॥

तदेव प्रातिस्विकान् स्वाचरणांश्च वर्णाश्रमधर्मानभिधायाऽथ तेषां धर्माभासेभ्यो विविक्तत्वज्ञापनाय तान् सङ्गृह्य दर्शयन् तेषां त्याज्यत्वमाह—विधर्म इति। विधर्मादयः पञ्चेमे धर्माभासा अधर्मस्य वृक्षरूपस्य शाखाः शाखाभूताः ततस्तान् धर्मयाथात्म्यवित् अधर्मवत्त्यजेत् ॥ १२ ॥

विधर्मादीन् पञ्च व्याचष्टे—धर्मबाध इति। धर्मबुद्ध्या यस्मिन् क्रियमाणे स्वधर्मबाधः स्यात् स विधर्म इत्यर्थः। अन्यस्य क्षत्रियादेश्चोदितो विहितो धर्मः स ब्राह्मणादेः परधर्मः उपधर्म इति पाषण्डः वेदविरुद्धागमोक्तः दम्भो वा परवञ्चनार्थो वा उपधर्म इत्यर्थः। छलं व्याचष्टे—शब्दभिच्छल इति। शब्दस्य प्रमापकस्य भिदन्यथा व्याख्यानं यस्मिन्। यथा द्वादशावरान् भाजयेद्

## श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

इत्युक्ते द्वादशसङ्ख्याकेऽर्थोऽवरानेकादश दश वेत्यादि. शब्दभृदिति पाठे धर्मशब्दमात्रं बिभर्तीति तथा यथा गां दद्यादित्युक्ते मरिष्यन्त्या गोर्दानमिति ॥ १३ ॥

आभासं व्याचष्टे—यस्त्विति । पुम्भिः स्वेच्छया पृथक् चतुर्थे आश्रमेऽपि पृथक्कल्पितः आश्रमो ऽवधूतादिः स्वधर्मानुष्ठानाऽनन्तरमपि धर्मभूयस्त्वार्थमपि परधर्मो नानुष्ठेयोऽनुपयोगादित्याह—स्वभावेति । स्वभावेन ब्राह्मणादिस्वभावा ऽनुगुणत्वेना ऽभिहित इज्यादिरूपस्य एवाऽस्योपशान्तये मनःप्रशान्तये कल्पतेऽतो न परधर्मस्योपयोग इत्यर्थः ॥ १४ ॥

एवं भगवदुपासनाङ्गभूता वर्णाश्रमधर्मा उक्ताः अथ प्रधानभूतभगवदुपासनात्मकाष्टाङ्गयुक्तभक्तियोगानुष्ठानप्रकारं वक्ष्यंस्तदन्तरायविरोधिनां कामक्रोधलोभभयशोकमोहदम्भनापस्त्वयानिद्रादीनां जयोपायानाह—धर्मार्थमपीत्यादिना । पूर्वमिष्टं तथा स्वतःप्रयत्नेन तत्र तावदुपन्तोपकल्पं तासामनर्थत्वाऽनर्थावहत्वं लिप्सितानां धनलिप्सायास्त्याज्यत्वं च वक्तुं दैवादुपपन्नेनैव द्रव्येण स्वधर्मं देहधारणं च कुर्यान्न तु तदर्थं धनं कामयेतेत्याह—धर्मार्थमिति । अभितो निर्द्वन्द्वः पुमान् स्वधर्मार्थमपि गात्रार्थं देहधारणार्थमपि वा धनं वित्तं नेहेत न कामयेत यात्रार्थमपि नेहेतेत्येतत्प्रपञ्चयति—अनीहेति, सार्द्धं पद्यमेव । नहाऽहेतिमाऽनीहमानस्य यात्रार्थं धनार्थमपि चेष्टामकुर्वतः दैवोपपन्नेन प्राणान् धारयमाणस्येत्यर्थः । अनीहाऽकामना एव वृत्तिर्जीवनावहा दैवादुपपन्नेन जीवतोऽकामयमानस्याकामस्येव नितरां सुखजननद्वारा वृत्तिर्दृष्टेति भावः ॥ १५ ॥

तदेवाह—सन्तुष्टस्येति । निरीहस्य सन्तुष्टस्य दैवादुपपन्नेन सन्तुष्टस्य आत्मारामस्य स्वस्यात्मा ऽन्तरात्मा परमपुरुषस्तस्मिन् रममाणस्य स्वशरीरकब्रह्मानन्दाऽनुभवपरस्य यत्सुखं तत्कामलोभेन काम्यन्त इति कामाः शब्दादयो विषयास्तेषु लोभेन सङ्गेन निमित्तेनार्थेहया धनेच्छया कामलोभनिमित्तधनेच्छया सर्वा दिशः प्रतिधावतः आरममाणस्य पुंसः कुतो हेतोर्भवति अनीहया यत्सुखं नदीहया नास्तीत्यर्थः ॥ १६ ॥

---

## श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

श्राद्धादिकर्मग्रामो यत्यादिपात्रमुद्दिश्य कर्तव्यमित्यभिहितम् अधुना परमभागवतास्तदपि न कुर्वन्तीत्याशयेनाह—एक इति, "सर्वधर्मान्परित्यज्य मामेकं शरणं व्रज" इति शिक्षिताः एके भगवदेकार्पितदेहयात्रा ज्ञानिनः कर्ममयान् श्राद्धादियज्ञानात्मसंयमने मनःसंयमनाग्नौ जुह्वति मानसयागं कुर्वन्तीत्यन्वयः । आत्मसंयमनं विशिनष्टि—ज्ञानेति । ज्ञानेन्धनदीपिते यज्ञवित्तमाः मानसयज्ञप्रयोगपटवः अनीहा इति हेतुगर्भविशेषणं निवृत्तमार्गप्रवृत्तत्वादित्यर्थः ॥ ९ ॥

ननु, द्रव्ययज्ञं सन्त्यज्य ज्ञानयज्ञकरणे किं कारणमित्याशङ्क्य भूतभयजनकहेतुत्वेन निरयहेतुरयमित्याशयेनाह—द्रव्येति, एष द्रव्ययज्ञकारिसमुदायो मा मां हन्यादिति भूतानि बिभ्यतीत्यन्वयः । "अग्नीषोमीयं पशुमालभेत" इति विहितत्वात्तदुक्तं कुर्वतो दृष्ट्वा कथं भयं स्यात् ? इत्यत उक्तमतज्ज्ञ इति, विध्यभिप्रायमजानन् "ब्रह्मार्पणं ब्रह्महविः" इत्यादिविहितविधेरभिप्रायः । अत एवाऽकरुणा इत्युक्तम एतादृशो सुरदेश्य इत्याशयेनोक्तमसुतृबिति, "नीहारेण प्रावृता जल्प्या चासुतृप उक्थशासश्चरन्ति" इति श्रुतिर्हीत्यनेन गृह्यते असुतृबित्यय शब्दः श्रीहरिविमुखस्यानर्थं निश्चाययति । "असुन्वन्त समं जहि दूणाशं यो न ते मयः" इति श्रुतेः । ते मयस्त्वत्प्रधानकः दूणाशं दुर्नाशम् असुन्वन्तं सुन्वद्विरोधिनम् अन्यथा "सुन्वन्तं वा पराचिच्छीर्षो वव्रुजुस्त इन्द्रा यज्वानो यज्वभिः स्पर्द्धमाना." इति श्रुतेः ॥ १० ॥

ननु, तर्हि "नित्यनैमित्तिके कुर्यात्प्रत्यवायजिहासया" इति विधानं व्यर्थमिति तदुपायमाह—तस्मादिति । दैवोपपन्नेनाऽयाचितादिविधिना साहित्येन व्रीह्यादिना तदभावे उत्पन्नेन फलशाकादिना ॥ ११ ॥

अधर्मत्वं नाम तत्प्रतिपक्षधर्मभेदलक्षणे ज्ञाते शुद्धं स्यादिति तत्पञ्चकस्य आह—विधर्म इति, ॥ १२ ॥

अधर्मादिपञ्चकस्य धर्मादीनां स्वरूपं दर्शयति—धर्मेति । अधर्मवद्धर्मपीडनं विधर्मः अन्यस्य क्षत्रियादेश्चोदितो विहितो धर्मो ब्राह्मणेनानुष्ठीयमानः परधर्मः दम्भेन क्रियमाणो धर्मो दम्भः स चोपधर्म इत्युच्यते धर्मशब्दस्यार्थमिच्छतां धारको हि धर्मस्तमर्थं भिनत्तीति स छलधर्म इत्युच्यते ॥ १३ ॥

पुम्भिः काम्यफलेच्छया कृतो यो धर्मः स आभास इत्युच्यते हि शब्द इयानेषां भेद इत्याह—धर्मप्रतिपक्षभेदस्वरूपमुक्त्वा धर्मप्रयोजनमाह—आश्रम इति । हि शब्द उत्तरत्रापि सम्बद्ध्यते तेन वर्णो लक्ष्यते—यो ब्राह्मणादिवर्णो यश्च ब्रह्मचर्याद्याश्रमः अत्र तत्तत्स्वभावानुसारेण भगवदर्पणबुद्ध्या पृथक् पृथग् विहितो यो धर्मः स जीवस्योपशान्तये संसारनिर्मूलनाय कल्पते समर्थो भवतीति शेषः । स्वभावपदसामर्थ्यात्सात्त्विको धर्मो मुक्तिहेतुर्नान्यः । राजसतामसः स्वर्गनरकादिहेतुः—

"धर्मो भवत्यधर्मोऽपि कृतो भक्तैस्तवाच्युत ! ।
पापं भवति धर्मोऽपि यो न भक्तैः कृतो हरे ! " ॥

इति वचनात् अस्य जीवस्योपशान्तये मोक्षायेति वा ॥ १४ ॥

ननु, निष्कामेण पुरुषेण धर्मकरणं दुःसाध्यं अर्थाभावात्तस्माद्धनेन तदर्थं कृष्यादिकं कर्म कर्तव्यमिति तत्राह—धर्मार्थमिति । तर्हि देहादियात्रार्थं कर्म कर्तव्यम् अन्यथा तन्नाशे न पुरुषार्थोऽनुदय इति, तत्राह—यात्रार्थमिति । नन्वेवं चेत्कथं देहयात्रासिद्धिः ? इति तत्राह—अनीहेति । अत्रानीहा स्वदेहपोषणायासनिवृत्तिः महाहेरजगरस्य ॥ १५ ॥

निरन्तरं भगवदुपासनामृतपायिनोऽनीहा परमानन्दकारणमित्याह—सन्तुष्टस्येति । यदृच्छया सन्तुष्टस्य यत्सुखं कामलोभेन कामभोगेच्छयार्थेहया धनयाचनप्रवृत्त्या च दिशो धावतः पुंसः कुतः कस्मात्कारणात्तत्सुखं लभ्यते ? इत्यन्वयः ॥ १६ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

धर्मबाध इति सार्द्धकम् । पाषण्डो वेदबाह्यः दम्भः स्कपटः ॥ १३ ॥

स्वभाव इत्यर्द्धकम् ॥ १४—१७ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

अत एवोत्तमाधिकारिणो बाह्यानि कर्म्माणि त्यजन्तीत्याह—एक इति अनीहा निष्कामाः आत्मनो मनसो यत् संयमनं निग्रहः ज्ञानेन दीपितं तत्र कर्ममयान् यज्ञान् कर्म्माणि जुह्वति मनोनियमनस्यान्तरायतया त्यजन्तीत्यर्थः ॥ ९ ॥

एषः अकरुणो मा मां हन्यात् हनिष्यति अनज्ञः आत्मतत्त्वाऽनभिज्ञः तथाच श्रुतिः "न तं विदाथ य इमा जजानाऽन्य युष्माकमन्तरस्बभूव नीहारेण प्रावृता जल्प्या । तार्किकाः मीमांसकाः कार्म्मिन्यः)श्चासुतृप उक्थशासः('कर्म्मिणः)श्चरन्तीति ॥१०॥

सर्वत्र सन्तुष्टः भूतान्यहिंसन्नित्यर्थः ॥ ११ ॥

अधर्म्मवत् निषिद्धमिव ॥ १२ ॥

क्रममनादृत्य पञ्चमा व्याचष्टे—धर्मबाधः धर्मबुद्ध्यापि यस्मिन् क्रियमाणे स्वधर्मबाधः स विधर्मः अन्यस्य चोदितो विहितो यः सो ऽन्यस्य परधर्मः यः पाषण्डः जटाभस्मादिधारणमयः दम्भः स्वस्य धार्मिकत्वज्ञापनामयो वा स उपधर्मः उपमा धर्मस्योपमा न तु धर्म इत्यर्थः । शब्दस्य भित् भेदः प्रकारान्तरेण व्याख्यानं यत्र दशावरान् विप्रान् विभोजयेदित्यत्र बहुव्रीहिं त्यक्त्वा दशभ्योऽवरान् नवाष्टौ वा नन्वेकादशेति तत्पुरुषव्याख्यानेन यः शब्दभित् स छलः । शब्दभृदिति पाठे धर्मशास्त्रमात्रं बिभर्त्तीति तत् यथा गां दद्यादित्युक्ते मरिष्यन्त्यागोदानम् इच्छया कृतः कल्पितदेवतापूजादिमयो यः स आभासः ॥ १३ ॥

तस्मात् स्वस्य भावेन जन्मनैव ब्राह्मणादि—जात्यैव विहितः ॥ १४ ॥

अधनो निर्द्धनः यात्रार्थं देहनिर्वाहार्थं न ईहेत न वाञ्छेत् धनं प्रति न चेष्टेतेति वा अनीहमानस्य अवाञ्छतः अनीहा निष्कामत्वं निर्व्यापारत्वं वा महाहेरजगरस्य ॥ १५ ॥ १६ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

एतदेव सदाचारेण दृढीकरोति—एके इति । एके उत्तमाधिकारिणः उत्तमत्वमाह—यज्ञवित्तमाः—

"यत्करोषि यदश्नासि यज्जुहोसि ददासि यत् ।
यत्तपस्यसि कौन्तेय ! तत्कुरुष्व मदर्पणम् ॥
मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु ।
मामेवैष्यसि सत्यं ते प्रतिजाने प्रियोऽसि मे" ॥

इति भगवदुक्तरीत्या यज्ञरहस्यज्ञाः ज्ञानिनः भगवद्विषयकज्ञानवन्तः अनीहा निष्कामाः कर्ममयान् ज्ञानभक्तिप्राधान्यरहितान् भगवदाराधनविरुद्धान् संसारफलकानित्यर्थः । आत्मनो मनसः संयमने भगवत्प्रावण्ये ज्ञानदीपिते भगवानेव सर्वात्मनाऽऽराधनीय इत्येवंभूतेन ज्ञानेनोद्दीपिते जुह्वति निःक्षिपन्ति न कुर्वन्तीत्यर्थः ॥ ९ ॥

तस्मात्सकामाधिकारिविषयाणि भूतभयावहानि हित्वा निष्कामः सन् भगवदाराधनात्मकानि कर्म्माणि कुर्यादित्याह—द्रव्य यज्ञैरिति, द्वाभ्याम् । द्रव्ययज्ञैर्भूतभयावहपशुपुरोडाशादिसाध्यैः मा माम् ॥ १० ॥ ११ ॥

अधर्मो निषिद्धाचारः पापद्रुमस्तस्य शाखाः ॥ १२ ॥

धर्मस्य स्वधर्मस्य बाधो यस्माद्धर्मेच्छया क्रियमाणात्मविधर्मः स्यात् अन्येनोदितः वनस्थादेर्विहितो गृहस्थादेः परधर्मः पाषण्डः वेदविरुद्धस्मृतिप्रोक्तः दम्भो वा स्वस्य धार्मिकत्वख्यापनाय प्रकाशितो वा उपधर्मः उपमा शब्दस्य भित् भेदनं दुराग्रहादिना मुख्यार्थाद्वियोजनं छलः ॥ १३ ॥

यस्तु आश्रमात्पृथक् स्वेच्छया कल्पितः स आभासः स्वधर्मं प्रशंसति—स्वभावेति । स्वभावविहितो वेदेन स्वभावतः स्वार्थे प्रामाण्यतो विहितो धर्मः प्रशान्तये कस्य नेष्टः सर्वस्येष्ट एव तस्मादधर्मशाखा दूरतस्त्याज्या इति भावः ॥ १४ ॥

अधनो धर्मार्थं स्वभोगार्थं वा धनश्रमं न कुर्यात्किन्तु अजुयत्नेन धर्मरक्षणं कुर्यादित्याह——धर्मार्थमपीत्यादिना । अनीहोपरामः ॥ १५ ॥

स्वस्य क्षेत्रज्ञः स्वात्मान्तर्यामी तदारामस्यात एव सन्तुष्टस्यात एव निरीहस्य यत्सुखं तत् कामस्य भोगस्य लोभेन या अर्थस्य धनस्येहा तया दिशो धावतः कुतो न कुतोऽपि ॥ १६ ॥

---

भाषा टीका ।

कितने एक यज्ञ के परमवेत्ता ज्ञानीलोग, ज्ञान से दीपित आत्मसंयम रूप अग्नि में कर्ममय यज्ञों का हवन करते है, अर्थात् मन का नियमन कर कर, उसके विघ्न रूप कर्म की खटपट छोड केवल श्रीहरि ही में चित्त लगाते है ॥ ९ ॥

द्रव्य यज्ञ से यजन करने वाले को देखकर सब जीव बडा भय करते है, कि अब यह प्राण पोषक, निर्दयी, धर्म के तत्त्व को न जानने वाला, इन बिचारे दीन जीवों को मारेगा ॥ १० ॥

तस्मात् धर्म को जानने वाला, प्रारब्ध से प्राप्त जो मुनिमन्न उसी से सन्तुष्ट होकर दिन २ प्रति नित्य नैमित्तिक क्रियाओं को चलावै ॥ ११ ॥

विधर्म, परधर्म, आभास, उपमा, छल, ये पांच अधर्म की शाखायें है, इसलिये धर्मज्ञ पुरुष इन को अधर्म की तरह दूर से त्याग देवै ॥ १२ ॥

सदा सन्तुष्टमनसः सर्वाः सुखमया दिशः ।
शर्कराकण्टकादिभ्यो यथोपानत्पदः शिवम् ॥ १७ ॥
सन्तुष्टः केन वा राजन्न वर्त्तेतापि वारिणा ।
औपस्थ्यजैह्व्यकार्पण्याद्गृहपालायते जनः ॥ १८ ॥
असन्तुष्टस्य विप्रस्य तेजो विद्या तपो यशः ।
स्रवन्तीन्द्रियलौल्येन ज्ञानं चैवाऽव कीर्यते ॥ १९ ॥
कामस्याऽन्तं च क्षुत्तृड्भ्यां क्रोधस्यैतत्फलोदयात् ।
जनो याति न लोभस्य जित्वा भुक्त्वा दिशो भुवः ॥ २० ॥
पण्डिता बहवो राजन् ! बहुज्ञाः संशयच्छिदः ।
सदसस्पतयो ऽप्येके असन्तोषात्पतन्त्यधः ॥ २१ ॥
असङ्कल्पाज्जयेत्कामं क्रोधं कामविवर्जनात् ।
अर्थानर्थेक्षया लोभं भयं तत्त्वावमर्शनात् ॥ २२ ॥
आन्वीक्षिक्या शोकमोहौ दम्भं (१) महदुपासया ।
योगान्तरायान्मौनेन हिंसां (२) कायाद्यनीहया ॥ २३ ॥
कृपया भूतजं दुःखं दैवं जह्यात्समाधिना ।
आत्मजं योगवीर्येण निद्रां सत्त्वनिषेवया ॥ २४ ॥

भाषा टीका ।

जो धर्म को बाधा करे वह विधर्म होता है, पराये को आचरण के लिये कहा हुआ धर्म परधर्म है । पाखण्ड अथवा दम्भ का नाम उपमा।है जिसको उपधर्म भी कहते हैं, जो शब्द के अर्थ का अनर्थ करने से सिद्ध हो, उसको छल कहते है ॥ १३ ॥

आभास उसे कहते है कि? जो आश्रमधर्मों से पृथक पुरुषों ने अपनी इच्छा से कल्पन किया हो ॥ भलो जिस जाति वर्ण वा आश्रम को उनके स्वभाव से जो शास्त्र विहित धर्म है, वह धर्म किस मनुष्य को शान्ति नहीं दे सका है ॥ १४ ॥

निर्धन पुरुष धर्मार्थ भी धन की प्राप्ति के लिये चेष्टा-( उपाय )न करे, एवं देह यात्रा के लिये भी धन प्राप्त्यर्थ चेष्टा ( उपाय ) न करे, यह चेष्टा का न करना ही उस पुरुष को अजगर के तरह वृत्ति ( जीविका ) देने वाला है ॥ १५ ॥

निःस्पृह सन्तुष्ट आत्मारामों को जो सुख है, काम के लोभ से धन की इच्छा से दशों दिशाओं को दौडने वाले पुरुष को वह सुख कहां से होगा ! ॥ १६ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

उपानहौ पादयोर्यस्य स उपानत्पात्तस्य ॥ १७ ॥

गृहपालः श्वा तद्वदाचरति ॥ १८ ॥ १९ ॥

क्षुधा तृषा च जनः कामस्यान्तं याति अन्नोदकातिरिक्तकामान्तराभावात् क्रोधस्य चाऽन्तं याति एतस्य क्रोधस्य यत्फलं हिंसा तस्योदयान्निष्पत्तेः दिशो जित्वा ऽपि भुवं भुक्त्वा ऽपि लोभस्य नैवान्तं यातीत्यर्थः ॥ २० ॥ २१ ॥

इदानीं कामादिजयोपायानाह—असङ्कल्पादिति, चतुर्भिः । जयेदिति यथापेक्षमन्वेति अर्थे ऽनर्थदर्शनेन तत्त्वाऽवमर्शनादद्वैतानुसन्धानेन ॥ २२ ॥

आन्वीक्षिक्या आत्मानात्मविवेकेन महतां सात्त्विकानां सेवया योगस्यान्तरायान् लोकवार्तादीन् ॥ २३ ॥

येभ्यो भूतेभ्यो भयं जायेत तेष्वेव कृपया हिताचरणेन दैवं देवोपसर्गनिमित्तं क्षुधा मनःपीडादि तदुक्तं याज्ञवल्क्येन "विमना विफलारम्भः ससीदत्यनिमित्ततः" इति आत्मजं देहजम् । योगवीर्येण प्राणायामादिबलेन सत्त्वनिषेवया सात्त्विकाहारादिना ॥ २४ ॥ २५ ॥

( १ ) महदुपाश्रयात् ( २ ) कामाद्यनीहया इति विज० पा० ।

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

एवं दैवोपनतया यात्रयाऽर्थेच्छायास्त्याज्यत्वमुक्तम् अथाऽसन्तोषस्य दुःखहेतुत्वं वक्तुं तावत् सन्तोषस्य सुखहेतुत्वमाह, सदेति । सदा सन्तुष्टं दैवादुपनतेनैव सन्तुष्टं मनो यस्य तस्य पुंसः सर्वा दिशः सुखमयाः यत्र क्वापि गतस्य तस्य सुखमेवेत्यर्थः । यथा उपानहौ पादत्राणे पादयोर्यस्य स उपानत्पात् तस्योपानत्पदः शर्कराकण्टकेभ्योऽपि शिवं सुखमेव तद्वत् ॥ १७ ॥

हे राजन् ! सन्तुष्टोऽसन्तुष्टस्तु पुमान् वारिणापि न वर्तेत सन्तुष्टस्तु वारिणापि यात्रां विधाय सुखयतीत्यर्थः । असन्तुष्टस्तु औपस्थ्य-जैह्व्यकार्पण्यादुपस्थजिह्वासुखार्थं दैन्यापादकत्वात् गृहपालायते गृहपालः श्वा तद्वत् आचरति ॥ १८ ॥

किञ्चाऽसन्तुष्टस्य ब्राह्मणस्य तेज आदयः क्षरन्ति तेजो ब्रह्मवर्चसं विद्या शास्त्रजन्यं ज्ञानं तपः अनशनादिरूपं यशः प्रथा तथेन्द्रियलौल्येनेन्द्रियार्थासक्त्या ज्ञानं विवेकादिजन्यमवकीर्यते च विप्लुप्यते च अपगच्छतीत्यर्थः ॥ १९ ॥

किञ्च कामक्रोधादयः सावधिकाः लोभस्त्वसन्तोषात्मको निरवधिक इत्याह—कामस्येति । अन्तः कामक्रोधलोभानाम् अन्तः क्षुत्तृड्भ्याम् निवृत्ताभ्यामिति शेषः । निवृत्ताभ्यां क्षुत्तृड्भ्यां निमित्तभूताभ्यां कामस्यान्तं याति अन्नोदकादिना क्षुत्पिपासादौ निवृत्ते सति अन्नादिव्यतिरिक्तकामान्तराभावात्कामस्यान्तं गच्छतीति भावः । तथा क्रोधस्याप्यन्तं तत्फलोदयात् तस्य क्रोधस्य यत्फलं परपीडादिरूपं तस्योदयात्प्राप्तेः इतोऽयाति लोभस्यान्तं तु भुवो दिशो जित्वा भुक्त्वाऽपि नैव याति ॥ २० ॥

अत एव हे राजन् ! बहवः पण्डिताः शास्त्रजन्यज्ञानवन्तः बहुज्ञाः बहुविषयज्ञाः किंकर्तव्याकर्तव्याभिज्ञाः अत एव संशयानां छेत्तारः इति तथाऽत एव सदसः सभायाः पतयोऽप्येके जनाः असन्तोषाद्धेतोरधो नरके पतन्ति ॥ २१ ॥

एवमसन्तोषस्याऽनर्थावहत्वमुक्तम् अथ कामादीनां जयोपायानाह—असङ्कल्पादिति, चतुर्भिः । असङ्कल्पाद्भोगार्हताबुद्धिवर्जनात् कामं शब्दादिविषयस्पृहां जयेत् । क्रोधं तु कामविवर्जनाज्जयेदित्यनुषङ्गः । क्रोधः कामानुभावविरोधिविषयको मर्षः लोभं त्वसन्तोषात्मकम् अर्थोऽनर्थेक्षया अर्थे धने ऽनर्थेक्षयाऽनर्थहेतुत्वदर्शनेन जयेत् । भयं तु तत्त्वावमर्शनात् चिदचिदीश्वरयाथात्म्यरूपतत्त्वत्रयाऽनुसन्धानात् ॥ २२ ॥

आन्वीक्षिक्या—

"जातस्य हि ध्रुवो मृत्युर्ध्रुवं जन्म मृतस्य च ।

तस्मादपरिहार्येऽर्थे न त्वं शोचितुमर्हसि" ॥ इत्यादि-

पर्यालोचनयेत्यर्थः । जातस्य विनाशो ध्रुव इति पर्यालोचनया शोकमोहौ, दम्भं तु महतामुपासनया महतामदाम्भिकानां ज्ञानिनामुपासनया सेवया योगान्तरायान् योगस्यान्तरायभूतान्, लोकवार्तादींस्तु मौनेन हिंसां कायाद्यनीहया स्वदेहादिषु निस्पृहया जयेत् ॥ २३ ॥

भूतजं दुःखमाधिभौतिकं दुःखं कृपया येभ्यो भूतेभ्यः स्वस्य दुःखं तेष्वेव कृपया दैवमाधिदैविकं दुःखं समाधिना, इदं प्राप्तमेव किमस्माभिर्विधेयमित्येवं मनःसमाधानेन आत्मजं देहजमाध्यात्मिकं दुःखं योगवीर्येण योगबलेन प्राणायामादिना निद्रां सत्त्वनिषेवया सात्त्विकाहारसेवनेन जह्यात् ॥ २४ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

दुस्त्यजेषु विषयेषु सर्वतो दिशं जाग्रत्सु निष्कर्मणा कथं सुखमुपलभ्यते ? इति तत्राह—सदेति "यस्त्वात्मरतिरेव स्यादात्मतृप्तश्च मानवः" इत्यादेः एतमर्थं निदर्शयति—शर्करेति । शिवं सुखमाप्नोतीति शेषः । शर्कराः पाषाणशकलानि ॥ १७ ॥

अन्नाद्यर्जनायासाभावे ऽपि प्राणधारणार्थं पानीयादिग्रहणस्यावश्य "आपोमयाः प्राणाः" इति श्रुतेः । इति तत्राह—सन्तुष्ट इति । केन वा येन केनापि यत्नमन्तरेणोपनतेन द्रव्येण लोकाधिलक्षणेन परमात्मना वा सन्तुष्टः विषयालम्बुद्धिमान् वारिणाऽपि न वर्ततेत्यन्वयः । ननु, सर्वात्मना सर्वनिषेधस्य कोऽभिप्रायः ? इत्याशङ्क्य किञ्चिदभ्यनुज्ञाते महान्दोषः स्याज्जलस्यन्दनवत् विधिं विना स्वतन्त्रतज्जनस्य कार्पण्यदर्शनाच्चेत्याह—औपस्थ्येति । गृहं पालयते ऽसौ गृहपालः सारमेयस्तद्वच्चरति—

"कृशः काणः खञ्जः श्रवणरहितः पुच्छविकलो

व्रणी पूयक्लिन्नः कृमिकुलशतैरावृततनुः ॥

क्षुधाक्रान्तो जीर्णो ह्यपि नरकपालार्पितगलः

शुनीमन्वेति श्वा हतमपि च हन्त्येव मदनः ।"

इत्यादेः ॥ १८ ॥

उक्तार्थेऽलङ्कारं बाधकमाह—असन्तुष्टस्येति । तेजः शापानुग्रहशक्तिः रेतोलक्षणं वा, विद्या शास्त्रविषया, ज्ञानं मनोरथमखण्डं शास्त्रानुपेतं दीपज्वालानिभमवकीर्यते विक्षिप्यते शिलानिक्षिप्तपांसुरिवाच्छाद्यत इत्यर्थः । 'कॄ विक्षेपे' इति धातोः वृषभविषाणाहतस्येतवत् मुडागमाभावः छान्दसः "अवकीर्णी क्षतव्रतः" इत्यभिधानम् असन्तुष्टस्य विषयानलम्बुद्धेः ॥ १९ ॥

अनानलम्बुद्धिर्द्वेधा विषयाणामुपर्युपरि भोगतृष्णैका द्वितीया विश्रान्तविश्रामाणि तत्पर्याप्त भवतीत्यतो न व्ययामि किन्तु राशीकरोमीत्याकाङ्क्षा तत्र प्रथमाया अलाभे कामः क्रोधश्च तयोरुभयोः शान्तिरनायाससाध्या द्वितीयाया लोभाऽपरपर्यायाया नाशो दुःसाध्य इत्याह—कामस्येति । जनोऽङ्कुरिताभ्यां क्षुत्तृड्भ्यां कामस्योपस्थादिविषयतृष्णापरपर्यायस्यान्तं नाशं याति कुत इत्यत उक्तं हीति "विषया विनिवर्तन्ते निराहारस्य देहिनः" इति स्मृतेः प्रसिद्धं एतत्फलोदयात् एतयोः क्षुत्तृषोरशनपानलक्षणभोगाभ्यां तृप्तिलक्षणफलोत्पत्तेः तदलाभोत्पन्नस्य क्रोधस्य च शान्तिं याति, दिशो जित्वा भुवो भुक्त्वा ऽपि लोभस्यान्तं यागाद्युपाधिना वित्तव्ययेच्छालक्षणं न यातीत्यन्वयः ॥ २० ॥

ननु, बहुत्यागेन वित्तव्ययेन स्वयं नष्टः स्यात्

"अल्पस्यारक्तु यो मोहाद्विस्तारं कर्तुमिच्छति

स विनश्यति दुर्मेधा नारिकेलाम्बुकं यथा"

इति वचनात् तस्माल्लोभो महान्गुणो देहयात्राहेतुत्वादित्यत्राह, पण्डिता इति । पाण्डित्यं नाम सभाकम्पादिदोषराहित्य तत्पूर्णस्याप किं न स्यादित्यत उक्तं, बहुज्ञा इति । सर्वज्ञ सर्वशास्त्रप्रभावज्ञेत्याह—संशयच्छिद इति । एवंविधधर्मवन्तः क इति तत्राह, सदस-

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

रूपतय इति । एतादृशाश्च केचनेत्याह–एक इति । एवंविधा अपि असन्तोषाल्लोभादधः कीटादियोनौ पतन्तीति यस्मात्तस्माद्वैष्णवविषय एव लोभो गुणो ननु वैष्णवविषय इति भावः । एके असन्तोषादिति सन्निकार्याभावो यदि तर्हि इति पदद्वयाध्याहारसूचनार्थः यद्येवंविधा असन्तोषाद्यथा योग्यं यथालब्धद्रव्यं यथापात्रं न नियुञ्जते तर्ह्यधः पतन्तीत्यभ्युपगमसिद्धान्तोऽथ न केवलसन्तुष्टस्य विद्यादि नाशोऽपि त्वधःपातः स्यादित्यतो वाह–पण्डिता इति ॥ २१ ॥

इदानीं कामादिजयोपायमाह–असङ्कल्पादिति । अत्र सङ्कल्पोऽपि द्विविधः पुण्यविषयः पापविषयश्चेति तत्रासङ्कल्पात्पापविरुद्धपुण्यविषयादित्यर्थः । कामान् निषिद्धान् क्रोधं कामितालाभकारणक. कारणनाशेन कार्यनाश इत्यर्थः । अनर्थकार्यस्य लोभस्य नाशः केनेति तत्राह–अर्थेति । अर्थेषु राजादिनिमित्तानर्थदर्शनेनासक्तचयो नश्वरफलहेतुरिति निरीक्षणेन च तत्त्वावमर्शनात् तत्त्वज्ञानाद्वा वैष्णवसिद्धान्तसञ्चलनम् "भी भयचलनयोः" इति धातुः ॥ २२ ॥

शोकमोहौ देहगतावन्तःकरणधर्मौ न त्वात्मस्य स्वतोऽस्य ज्ञानानन्दस्वरूपस्याऽसम्भवात् इत्यादिकया आन्वीक्षिक्या अनुकूलतर्कोपेतव्यासिशानेन आत्मन्यविद्यमानमहिमारोपो दम्भः महता प्राचार्यादिगुणाकारेण आत्मस्तुतिलज्जितानां पुरुषाणां निरन्तरनिषेवया सद्गुणाभ्यासलक्षणया योगान्तरायान् भगवदुपासनानिरोधकमौनेन सम्भाषणवर्जनेन जयेदिति शेषः । कामाद्यनीहया कामादिनिषिद्धेच्छाराहित्येन विवादलक्षणां हिंसां जयेदु इत्यन्वयः ॥ २३ ॥

भूतजं भौतिकं दुःखमुन्मादादिकं वा कृपया मन्त्रौषधसामर्थ्येन 'कृपू सामर्थ्ये' इति धातुः अनुकम्पालक्षणगुणेन वा दैवमाधिदैविकं दुःखं समाधिनेन्द्रादिदेवताध्यानेन "यस्यै देवतायै हविर्गृहीतं स्यात्तां ध्यायेद्वषट् करिष्यन्", "कारीर्या यजेत वृष्टिकामः" इति श्रुतेः । अनावृष्ट्यादिदुःखं जह्यात् क्षीरसागरतरङ्गसीकरप्लुतशेषनारायणध्यानेन वा आत्मजमाध्यात्मिकं दुःखं योगवीर्येण अष्टाङ्गसामर्थ्येन पवनवशीकारेणेत्यर्थः । सत्त्वनिषेवया सात्त्विकपुरुषनिषेवया निद्रामज्ञानम् ॥ २४ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

सन्तुष्ट इति । केन वा न वर्त्तेत अपितु वारिणाऽपि वर्त्तेतेत्यर्थः ॥ १८–२१ ॥

असङ्कल्पादिति युग्मकम् । तत्त्वावमर्शेन परमेश्वराधीनताविचारेण. कृपयेति सार्द्धकम् ॥ २२—२४ ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

उपानहौ पादयोर्यस्य स उपानत्पात् तस्य ॥ १७ ॥

केन वा न वर्त्तेत अपितु वारिणापि वर्त्तेतेत्यर्थः । उपस्थस्य कर्म औपस्थ्यं तत्र कार्पण्यात् गृहपालः श्वा ॥ १८ ॥

अवकीर्यते अधः क्षिप्तं भवति ॥ १९ ॥

असन्तोषो हि लोभमूलको भवति लोभस्य तु दुर्जयत्वादसन्तोषो दुर्वार इत्याह–कामस्येति, द्वाभ्याम् । क्षुत्तृड्भ्यामिति भोज्यस्यालाभे क्षुत्तृषोरतिदीप्तत्वे धातुदाहप्रवृत्तेरिति भावः । एतस्य क्रोधस्य यत्फलं हिंसा तस्योदयान्निष्पत्तेः दिशो जित्वाऽपि भुवो भुक्त्वापि लोभस्य वासनात्मकस्यान्तं न प्राप्नोति भक्ष्यविषयकलोभस्य तूदरपूर्त्यैव शान्तिरिति दुरुपशमत्वाभावात्तस्मौ पृथङ्निर्दिष्टः ॥ २० ॥

लोभप्राबल्ये गुणानां वैयर्थ्यमाह—पण्डिता इति ॥ २१ ॥

तर्हि कथमेतान् जयेत् ? इत्यपेक्षायामाह—असङ्कल्पात् स्त्रीस्मरणादिना कामोत्पत्तावपि नैव स्त्री मया सम्भोक्तव्येति सङ्कल्पसदृशान्निश्चयात् कामं जयेत् सादृश्ये नञ् यथात्र न भोक्ष्यामीति निश्चये सत्युपवासादौ क्षुत्पिपासाजयः कामविवर्जनात् कामं इच्छाविषयः कोऽपि न हिंसनीय इति (जिघांसा नैव कार्येति) हिंसेच्छावर्जनात् क्रोधं जयेत् अर्थे लोभ्ये वस्तुनि आयत्यामनर्थदर्शनाभ्यामाल्लोभं तत्त्वावमर्शनात् प्रारब्धफलस्यावश्यभोग्यत्वेन कः कस्य दुःखहेतुरित्यादितत्त्वविचारात् आन्वीक्षिक्या आत्मानात्मविचारेण ॥ २२ ॥ २३ ॥

येभ्यो भूतेभ्यो दुःखं जायेत तेष्वेव कृपया हिताचरणेनेत्यर्थः । दैवं दैवोपसर्गनिमित्तवृथामनःपीडादि । तदुक्तं याज्ञवल्क्येन "विमना विफलारम्भः संसीदत्यनिमित्ततः" इति समाधिना भगवति चित्तैकाग्र्येण आत्मजं देहोत्थं दुःखं योगवीर्येण प्राणायामादिबलेन सत्त्वनिषेवया सात्त्विकाल्पाहारादिना प्राणिमात्रपरिचर्यया वा रजस्तमसी सत्त्वेन सत्त्वाभिव्यक्तं सत्त्वं च उपशमेन तत्कार्येष्वौदासीन्येन ॥ २४ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

उपानहौ पादयोर्यस्य सः उपानत्पात्तस्य शिवमयाः कल्याणप्रचुराः ॥ १७ ॥

सन्तुष्टः वारिणा अपिशब्दाच्छाकादिना केन वा "कं ब्रह्म" इति श्रुतेः । विश्वंभरेण भगवता वा न वर्तेत न जीवेत अपितु जीवेतैवेत्यर्थः । असन्तुष्टो जनस्त्वौपस्थ्यजैह्वययोः शिश्नरसनसुखयोः कार्पण्यात् गृहपालायते गृहपालः श्वा तद्वदाचरति ॥ १८—१९ ॥

अत्रोदकातिरिक्तकामान्तराऽभावात् एतत्फलोदयात्क्रोधस्य यत्फलं जयपराजयादि तदुदयात् ॥ २०—२१ ॥

कामादिजयोपायं दर्शयति–असङ्कल्पादित्यादिना । भयं संसारभयं तत्त्वावमर्शनात् तन्निवर्तकभगवद्ध्यानावृत्तेः ॥ २२ ॥

आन्वीक्षिक्या आत्मानात्मविवेकेन योगस्य ध्यानस्य अन्तरायान् निष्फलवादादीन् ॥ २३ ॥

कृपया भूतहिताचरणेन दैवं समाधिना परदेवताभिनिवेशेन आत्मजं मनोगतं योगवीर्येण चित्तैकाग्र्यबलेन ॥ २४ ॥

---

रजस्तमश्च सत्त्वेन सत्त्वं चोपशमेन च ।
एतत्सर्वं गुरौ भक्त्या पुरुषो (१) ह्यञ्जसा जयेत् ॥ २५ ॥
यस्य साक्षाद्भगवति ज्ञानदीपप्रदे गुरौ ।
मर्त्याऽसद्धीः श्रुतं (२) तस्य सर्वं कुञ्जरशौचवत् ॥ २६ ॥
एष वै भगवान् साक्षात् प्रधानपुरुषेश्वरः ।
योगेश्वरैर्विमृग्याङ्घ्रिर्लोको (३) वै मन्यते नरम् ॥ २७ ॥
षड्वर्गसंयमैकान्ताः सर्वा (४) नियमचोदनाः ।
तदन्ता यदि नो योगानावहेयुः श्रमावहाः ॥ २८ ॥
यथा वार्त्तादयो (५) ह्यर्था योगस्यार्थं न बिभ्रति ।
अनर्थाय भवेयुस्ते पूर्त्तमिष्टं तथाऽसतः ॥ २९ ॥
यश्चित्तविजये यत्तः स्यान्निःसङ्गोऽपरिग्रहः ।
एको विविक्तशरणो भिक्षुर्भिक्षामिताशनः ॥ ३० ॥
देशे शुचौ समे राजन् ! संस्थाप्यासनमात्मनः ।
स्थिरं समं सुखं तस्मिन्नासीतर्ज्वङ्ग ओमिति ॥ ३१ ॥
प्राणापानौ सन्निरुन्ध्यात्पूरकुम्भकरेचकैः ।
यावन्मनस्त्यजेत्कामान् स्वनासाग्रनिरीक्षणः ॥ ३२ ॥

भाषा टीका ।

सदा ही सन्तुष्ट मन वाले को सब दिशायें आनन्द से भरी हुई हैं । जैसे कि ? पगरखी ( जोडी ) पहिरने वाले को कांकर कंटक आदि से कभी कुछ भी दुःख नहीं ॥१७॥

हे राजन् ! संतोषी पुरुष तो जलमात्र से भी सतोष कर कर रहसक्ता है, और उपस्थ इन्द्रिय और जिह्वा की दीनता से पुरुष श्वान के समान घर २ में अपमान का पात्र होता है ॥ १८ ॥

असन्तुष्ट ब्राह्मण के इन्द्रियों की चपलता से, तेज, विद्या, तप, यश, और लाज, ये सब अवकीर्ण ( नष्ट ) हो जाते हैं ॥१९॥

काम का अंत अर्थात् नाश तो भूख प्यास से होजाता है, जिसके लिये क्रोध किया जाय उस फल के होने पर क्रोध भी नष्ट हो जाता है, परन्तु मनुष्य दशों दिशाओं को जीतकर सब पृथिवी का राज्य भोगकर भी लोभ के अंत को नहीं पहुंचता है ॥२० ॥

हे राजन् ! बडे २ पंडित लोग बहुज्ञ और संशय के छेदन करने वाले कितने एक सभापति लोग भी सन्तोष के न होने से अधः पात को प्राप्त होते हैं ॥ २१ ॥

मन में संकल्प के न करने से काम को जीते, और काम के वर्जन से क्रोध को जीते, धन में अनर्थपने की दृष्टि से लोभ को जीते, और तत्त्व विचार करने से भय को जीत लेवै ॥ २२ ॥

ब्रह्मविद्या के विचार से शोक और मोह को, महात्माओं की सेवा करने से दम्भ को, योग के विघ्नों को मौन धारण करने से, और शरीर की चेष्टा न करने से हिंसा को जीत लेवै ॥ २३ ॥

जिनप्राणियों से अपने को दुःख होता हो, उनपर कृपाकरे, अर्थात् यों विचारले कि? ये गरीब आपही दैवी माया के वश होकर हमको दुःख देतेहैं, ये क्या स्वाधीन थोड़े हैं, बस इस विचार से भूतज दुःखको जीतलेवे, समाधि से दैविक दुःखको जीतलेवे, और अपने से होनेवाले दुःख को योग के बल से जीत लेवे, तथा सत्त्व के सेवन से निद्रा को जीतलेवे, अर्थात् सात्त्विक भोजनादि से निद्रा न्यून हो जावेगी ॥ २४ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

ननु, कथं गुरौ भक्त्या सर्वस्य जयः स्यात् ? तस्याऽपि मनुष्यत्वेन तद्वत्त्वात्तत्राह-यस्येति । मर्त्योऽसद्धीर्मनुष्य इति दुर्बुद्धिः तस्य शास्त्रश्रवणं कुञ्जरस्नानवद्व्यर्थम् ॥ २६ ॥

ननु, गुरोरपि पुत्रादयस्तं नरमेव मन्यन्तेऽत आह— एष गुरुः

( १ ) मनसा ( २ ) असत्सन्धिः श्रुतः ( ३ ) यमन्यत ( ४ ) निगमचोदनाः ( ५ ) विद्या इत्येवं विजयध्वजपाठः ।

## श्रीधरस्वामिकृतभावार्थदीपिका ।

साक्षाद्भगवानेव भवेत् लोकस्य नरोऽयमिति बुद्धिर्भ्रान्तिरित्यर्थः । यद्वा नहि तत्पुत्रादेर्मनुष्यबुद्ध्या प्रतीयमानोऽपि गुरुर्भगवाश्च भवेत् यथैष श्रीकृष्ण इत्यर्थः ॥ २७ ॥

एवं सर्वैरुपायैः कामादिवेगं जित्वा नियतेन्द्रियो भूत्वा ध्यानपरो भवेत् अन्यथा त प्रतिसर्वशास्त्रवैफल्यं स्यादित्याह–षड्वर्गेति । सर्वा अपि नियमचोदना इष्टापूर्त्तादिविषयः षडिन्द्रियवर्गस्य यः संयमस्तस्मिन्नेवैकस्मिन्नन्तो यासां तदेकपरा इत्यर्थ. । नच तावताऽपि चरितार्था इत्याह–तदन्ताः सत्योऽपि यदि योगान्धारणाध्यानसमाधीन्नो आवहेयुर्न साधयेयुस्तर्हि केवलं श्रमावहा एवेत्यर्थः ॥ २८ ॥

एतदेव दृष्टान्तेनाह—यथा वार्तादयः कृष्यादयोऽर्थास्तत्फलानि च योगस्यार्थं मोक्षं न साधयन्ति प्रत्युताऽनर्थाय संसारायैव असतो बहिर्मुखस्येष्टापूर्तादयपि तथा ॥ २९ ॥

एवं योगं युञ्जतोऽपि यस्य कुटुम्बादिसङ्गेन चित्तं विक्षिप्येत तस्य कृत्यमाह–यश्चित्तस्य विजये यत्त उद्युक्त. स भिक्षुः स्यात् सन्न्यसेत् तथाच स्मृतिः—

"कुन्द्राहतस्य गार्हस्थ्यं ध्यानभङ्गादिकारणम् ।<br>
लक्षयित्वा गृही स्पष्टं संन्यसेदविचारयन्" ॥ इति

भिक्षया प्राप्तं मितमशनं यस्य सः ॥ ३० ॥

ऋजुसममङ्गं यस्य सः सुखं यथाभवत्येवमासीत ओमित्युच्चारयन्निति शेषः ॥ ३१॥ ३२ ॥ ३३ ॥

---

## श्रीमद्वीरराघवाचार्य्यकृतभागवतचन्द्रचन्द्रिका ।

रजस्तमश्च सत्त्वेन सात्त्विकाहाराद्युपजातसत्त्वगुणावृद्ध्यास्तस्मान्नःकरणमुपशमेन हर्षाजननमुखेन एतदुक्तं कामादिरूपं सर्वं पुरुषो गुरौ भक्त्या त्वञ्जसा सुखेनैव जयेत् ॥ २५ ॥

गुरुभक्त्यभावे सर्वं कामादिजयात्मकं व्यर्थमित्याह—यस्येति । साक्षाद्भगवति"आचार्यं मां विजानीयात्"इत्युक्तरीत्या भगवदभिन्नत्वेन दर्शनीये ज्ञानमेव दीपस्तत्प्रदे महोपकर्त्तरि गुरौ यस्य पुंसो मर्त्यबुद्धिः 'सोऽपि मादृश एव कश्चिन्मर्त्यः' इति बुद्धिस्तस्य श्रुतमध्ययनं सर्वं कामादिजयादिकञ्च कुञ्जरशौचतुल्यं यथा कुञ्जरस्य स्नानं पुनर्धूलिप्रक्षेपेण कृतमप्यकृतं तद्वत् इत्यर्थः ॥ २६ ॥

गुरोर्भगवत्त्वं श्रीकृष्णदृष्टान्तेनाह–एष इति । एष श्रीकृष्णः साक्षात्प्रकृतिपुरुषयोरीश्वरोऽत एव योगेश्वरैरस्मदादिभिः विमृग्यौ ध्येयौ अङ्घ्री पादौ यस्य स भगवानेव नात्र सन्देहः एवं भूतमपि यं श्रीकृष्णं नरं मन्यते तत्स्वरूपाऽनभिज्ञो लोकस्तथा गुरुयाथात्म्याऽनभिज्ञस्तं नरं मन्यते तद्याथात्म्यवित्तु साक्षाद्भगवन्तं मन्यत इत्यर्थः ॥ २७ ॥

एवं गुरुभक्त्यभावे सर्वं विफलमित्युक्तम् अथावश्यकानां सर्वेषां वर्णधर्माणामाश्रमधर्माणां चेन्द्रियजयार्थत्वं तदभावे तद्वैयर्थ्यमिन्द्रियपर्यन्तानामपि तेषां भगवदुपासनात्मकयोगनिष्पादकत्व एव साफल्यमन्यथा वैफल्यं चाह—षड्वर्गेति । सर्वा नियमचोदनाः वर्णाश्रमानुगुणाऽऽवश्यकधर्मनियमविधयः चोदनाशब्देन चोद्यमुपलक्ष्यते चोदिता धर्मा इत्यर्थः । यद्वा नियमस्य चोदनाः येषु ते धर्माः । षड्वर्गः मनः पर्यन्तषडिन्द्रियवर्गः तस्य संयमो नियमः तदेकान्ताः तदेकप्रयोजना इत्यर्थः । अन्यथा तेषां वैफल्यमेवेति भावः । तदन्ताः षड्वर्गनियमपर्यन्ता अपि यदि योगान् योगावयवान् धारणाध्यानसमाधीन्नावहेयुर्न साधयेयुस्तर्हि केवलं श्रमाऽऽवहा एवेत्यर्थः ॥ २८ ॥

एवमावश्यकधर्माणामिन्द्रियजयद्वारा योगानुगुणत्वमेव साफल्यमन्यथा केवलश्रमफलकत्वञ्चोक्तम् अथ वृत्तिधर्माणामपि योगप्रयोजकत्वाभावे वैयर्थ्यं प्रत्युतानर्थावहत्वं तैः सहावश्यकानामपि वैयर्थ्यं चाह—यथेति । वार्त्तादयो ह्यर्था वृत्तेर्जीवनस्येमे वार्त्तार्था याजनादयः यदा योगस्यार्थं न बिभ्रति योगानुष्ठानैकप्रयोजनं जीवनं न बिभ्रति न पुष्णन्ति न कुर्वन्ति तदाऽनर्थाय नैरर्थक्याय भवेयुः असदर्थव्ययरूपानर्थाय भवेयुरिति वा तथासतस्तथा वर्त्तमानस्य वार्त्तानर्थान्योगैकप्रयोजनजीवनमात्रोपयुक्तानकुर्वतः पुरुषस्य पूर्त्तं स्मार्त्तं कर्म इष्टं यागादिकं वैदिकं कर्म चानर्थकयाय भवेताम् ॥ २९ ॥

अथेन्द्रियजयपर्यन्तस्ववर्णाश्रमधर्मकामादिजयनिष्ठस्य भगवद्भक्तियोगानुष्ठानप्रकारमाह—य इत्यादिना । यः पुमान् चित्तस्य विजये यत्त आयत्तो दक्षः स्यात् तर्हि निःसङ्गस्त्यक्तकलत्रपुत्रादिसङ्गोऽपरिग्रहः शरीरमात्रावशेषितः भिक्षुस्तुर्याश्रमी भूयात् भिक्षुर्भूत्वा चैकोऽसहायः विविक्तशरणः निर्जनदेशेऽवस्थितः भैक्षं भिक्षया लब्धं मितं चाशनमन्नं यस्य भैक्षं मितं चाश्नातीति वा कर्त्तरि ल्युः ॥ ३० ॥

शुचौ परिशुद्धे समेऽनिम्नोन्नते च देशे हे राजन् ! आत्मनः स्वस्यासनं "चैलाजिनकुशोत्तरम्"इत्युक्तविधमास्थाप्य स्थिरं चाञ्चल्यरहितं सुखं च यथा भवति तथा तस्मिन्नासने आसीत उपविशेत् ऋज्वङ्गः ऋज्ववक्रमङ्गं यस्य ऋजुकायः सन्नोम् इत्यनुसन्दधदिति शेषः ॥ ३१ ॥

पूरकुम्भकरेचकैः प्राणाऽपानौ वायू सम्यग्निरुन्ध्यादपानेन प्राणाभिभवो रेचकः प्राणेनाऽपानाभिभवः पूरकः उभयोः समानः कुम्भकः यावन्मनः कामान् शब्दादिविषयांस्त्यजेत् नाऽनुसन्दधीत तावत् स्वस्य नासाया अग्रं निरीक्षत इति निरीक्षणः कर्त्तरि ल्युः ॥ ३२ ॥

---

## श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

सत्त्वगुणेन रजस्तमसी उपशमेन भगवच्छिष्ट्या सर्वत्राऽपि भगवद्भक्तिरेव प्रयोजिकेत्याशयेनाह—एतदिति ॥ २५ ॥

विपक्षे बाधकमाह--यस्येति । अभिसन्धिरातिक्रमणं भक्त्यनुसन्धानराहित्यं अवज्ञेति यावत् ॥ २६ ॥

कथमवज्ञाप्रकारः ? इति तत्राह--एष इति।एष एवंविधमाहात्म्यो-

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

यतो लोको * यं नरं सुखदुःखभोक्तारं मन्यत इत्येवमवज्ञाप्रकार इत्यर्थः ॥ २७ ॥

ननु, हरेः प्रकृतिनिलीनत्वेन नरत्वं सम्भाव्यते "तुच्छ्येनाभ्वपिहितं यदासीत्प्रकृतौ लीनः संसारमेति सच त्यच्चाभवत्" इति श्रुतेः। इति तत्राह-षड्वर्गेति । सर्वा निगमचोदनाः "सन्ध्यामुपासीत" इत्यादिवेदविधयाऽपि हरौ भक्तियोगं न कुर्युस्तर्हि श्रमावहाः क्लेशहेतव एवेत्यन्वयः । आवहन्ति चेत्कथंकारमित्यत उक्तं षडिति, षडिन्द्रियाणां संयमो विषयादाहृत्य हर्येकविषयीकरणलक्षणः तस्मिन्नेवैकान्तो निश्चयेन तात्पर्यं यासां ताः तथाऽन्यत्तात्पर्यं किन्न स्यादिति तत्राह-तदन्ता इति । तस्य भक्तियोगस्यान्तो निर्णयो यासां तास्तथा यथा षड्वर्गसंयमैकान्ताः सर्वा । निगमचोदनाः तदन्ता निगमा यदि योगं नो आवहेयुरिति वा ॥ २८ ॥

इष्टापूर्तादिना पुरुषस्य पुरुषार्थसम्भवेन तद्विधायिवेदः पूज्यार्थो लभत इत्यतो वेदस्य श्रमावहत्व कथम् ? अत्राह-यथेति । यस्य पुंसो या वार्तादयो विद्यास्ता अर्थं न बिभ्रति प्रत्युतानर्थाय भवेयुश्च तथा ऽसतस्तस्य पूर्तमिष्टं चार्थं न विधत्त इत्यन्वयः पूर्तादेरनित्यफलहेतुत्वेन निन्दितत्वात् तदर्थविधायित्वं वेदस्य जुगुप्सितम् अतस्तद्विधाने श्रमावहत्व प्रकटमित्यर्थः । "इष्टापूर्तं मन्यमाना वरिष्ठम्" इत्यादिश्रुतेः ॥ २९ ॥

* यदि नो योगमित्यत्र योगशब्देन ध्यानं चोच्यते तदा तद्ध्यानं ध्येये मनो निधायोपासनापरपर्याय भवेत्तत्र जलचरस्थेवान स्थानस्य मनसो जयेन सफलं स्यादतस्तदुपायमाह-यश्चित्तेति । यश्चित्तविजयेच्छुः स्यात्स ओमिति मन्त्रमुच्चार्य तस्मिन्नासीनेत्यन्वयः । तद्विजयोपायमाह-निःसङ्ग इति । निःसङ्गत्व कथम् ? अत्राह-निष्परिग्रह इति । तत्फलमेक इति एकस्यापि स्वजनरहितस्य जनतामध्यास्थितस्य नानावार्ताश्रवणेन विक्षिप्तस्य पुंसो मनोजयः कथमुपपद्यते ? इत्यत उक्तं विविक्त एतदपि गृहस्थस्य न घटत इत्यत उक्तं, भिक्षुरिति । तस्याप्यशनचिन्तया द्वितीयापेक्षमोक्तं न युक्तमित्यत उक्तं, भैक्ष्येति । भैक्ष्यमपि बहुसम्पन्नं न भोगोपयोगि स्यादित्यत उक्त मितीति ॥ ३० ॥

ऋज्वङ्गः समीकृतकायशिरोग्रीवः ॥ ३१—३२ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

उपशमेन निवृत्त्यात्मकेन सत्त्वेन एतदित्यर्द्धकम् । श्रुतिश्च । "यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ । तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः" इति । अतो ब्रह्मवैवर्त्ते "गुरुभक्त्या स मिलति स्मरणात् सेव्यते बुधैः । मिलितोऽपि न लभ्येत जीवैरहमिकापरैः" इति । पाद्मे देवद्युतिस्तुतौ "भक्तिर्यथा हरौ मेऽस्ति तद्वरिष्ठा गुरौ यदि । ममाऽस्ति तेन सत्येन स्वं दर्शयतु मे हरिः" इति ॥ २५ ॥

मर्त्याऽसद्धीरिति । अत एवोक्तं प्राचीनैः । "अर्च्ये विष्णौ शिलाधीर्गुरुषु नरमतिर्वैष्णवे जातिबुद्धिर्विष्णोर्वा वैष्णवानां कलिमलमथने पादतीर्थेऽम्बुबुद्धिः ॥ शुद्धे तन्नाम्नि मन्त्रे सकलकलुषहे शब्दसामान्यबुद्धिर्विष्णौ सर्वेश्वरेशे तदितरसमधीर्यस्य वा नारकी सः" इति ॥ २६ ॥

न चेद् लोकेष्वाश्चर्यं साक्षाद्भगवति तथा मननादित्याह, एष इति ॥ २७—४० ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

अञ्जसा शीघ्रमायासाभावेन सर्वं जयेत् सर्वरोगोपशमनमुख्यमेकमेव महौषधमित्यर्थः । अत्र कामादिजयो ज्ञानिनां गुरुभक्तेरनुसंहितं फलं शुद्धभक्तानां त्वानुषङ्गिकमिति विशेषो द्रष्टव्यः ॥ २५ ॥

किञ्च सत्यां भूयस्यामपि भक्तौ गुरौ मनुष्यबुद्धिस्तेत्सर्वमेव व्यर्थं भवतीत्याह—यस्येति । साक्षाद्भगवतीति भगवद्दृष्टिबुद्धिरपि गुरौ न कार्येति भावः । यद्वा उपास्ये भगवत्येव साक्षाद्विद्यमाने मर्त्याऽसद्धीः मर्त्य इति दुर्बुद्धिस्तस्य श्रुतं भगवन्मन्त्रादिकं शास्त्रादिकं श्रवणमननादिकं च व्यर्थमित्यर्थः ॥ २६ ॥

ननु, गुरोः पितृपुत्रादय प्रतिवेशिनश्च त नरमेव मन्यन्ते कथमेक एवायं शिष्यस्त परमेश्वर मन्यताम् ? अत आह-एष इति, भगवान् यदुनन्दनो रघुनन्दनो वा वै निश्चितमेव प्रधानपुरुषयोरीश्वरः य लोकस्तदवतारकालोत्पन्नो जन नरं मन्यते तेन किं स नरो भवति ? अपितु परमेश्वर एवेत्येवं गुरुरपीति भाव ॥ २७ ॥

किञ्च य कामादिजयो गुरुभक्त्या साध्यते स एव सर्वशास्त्रोक्तनानासाधनानामपि वास्तव फलमित्याह—षड्वर्गेति-सर्वा अपि नियमचोदना इष्टापूर्तादिविधय षडिन्द्रियवर्गस्य यः संयमः तस्मिन्नेवैकस्मिन्नन्तो यासां तदेकपरा इत्यर्थः । ननु, स यथा गुरुभक्त्या कामादयो जीयन्ते भगवानपि प्राप्यते "तुष्येयं सर्वभूतात्मा गुरुशुश्रूषया" इति "तरन्त्यञ्जो भवार्णवम्" इति च भगवदुक्तेः तथा नियमचोदनाभि षड्वर्गसंयमः साध्यते । भगवान् लभ्यते न वा तत्राह—तदन्तास्तदेकपरत्वादेव योगात् भगवद्ध्यानादीन् न आवहेयुः न साधयेयुः कुतो भगवन्तं प्रापयेयुरित्यर्थः । यदि च नावहेयुस्तर्हि श्रमावहा एवाऽत्र कः सन्देह इति भावः ॥ २८ ॥

एतदेव दृष्टान्तेनाह—यथा वार्त्तादयः कृष्यादयोऽर्थो भोग्यानर्थान् साधयन्तोऽपि योगस्यार्थं मोक्षं न साधयन्ति यदि च मोक्षं न साधयन्ति तदा ते अनर्थाय प्रयोजनाभावायैव भवेयुस्तथैव असतो भगवदभक्तस्य इष्टापूर्तादि विफलायैव ॥२९॥

तदेवं गृहस्थस्यापि कामादिजयो मोक्षप्रकारश्चोक्तः यस्य तु कुटुम्बादिसङ्गदोषेण कामादिजयो यतमानस्यापि न स्यात् स तु निःसङ्गो भिक्षुरेव स्यादित्याह—य इति । यत्नो यत्नेनापि न स्यात् तथा च स्मृतिः—

---

* हरिम् । * अष्टाविंशश्लोकस्यप्रतीकम् ।

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

"द्वन्द्वाहतस्य गार्हस्थ्ये ध्यानभङ्गादिकारणम् ।
लक्षयित्वा गृही स्पष्टं संन्यसेदविचारयन्" ॥

इति ऋजु समभङ्गं यस्य सः ओमिति समुच्चारयन्निति शेषः ३०-३३॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीप ।

उपशमेनोपशान्त्या एतत्कामादिकं सर्वं गुरौ भक्त्या ॥ २५ ॥

उक्तार्थे सम्भावनादिदोषनिवृत्तये श्रीगुरौ मानुषभाववतः सर्वशास्त्रश्रवणादि निरर्थकमेवेति वदन् श्रीगुरोर्माहात्म्यमाह-यस्येति, द्वाभ्याम् । अयं मर्त्यो मनुष्य इत्यसद्धीर्यस्य तस्य श्रुतमित्युपलक्षणम् जपतप आदि कुञ्जरशौचवन्निष्फलं भवति २६

एष श्रीगुरुरूपी साक्षात् भगवान् श्रीकृष्ण एव लोक· अज्ञा जनः नरं मन्यते तस्याभाग्यमिति भावः ॥ २७ ॥

अथ सर्वे उपायाः भगवत्प्राप्तिसाधनानां ज्ञानभक्त्यादीनां योगानामुत्पादका यदि न स्युस्तर्हि कृष्यादिवज्जीवनोपायतया संसारपर्यवसायिन एव न मुक्तिपर्यवसायिन इत्याह—षड्वर्गेति, द्वाभ्याम् । सर्वा अपि नियमचोदना इष्टापूर्तादिविधय· षडिन्द्रियवर्गस्य यः संयमस्तस्मिन्नेवैकं साध्यभूते साधनतयाऽन्तः पर्यवसान यासां ताः तदन्ताः स षड्वर्गः अन्ते अग्रे यासां ता स्वफलेन षड्वर्गसंयमेन सहिता इत्यर्थः । यदि योगान् मुक्त्युपायान् नावहेयुर्न साधयेयुस्तर्हि श्रमावहाः संसारप्रदा एव ॥ २८ ॥

यथा वार्त्तादयः कृष्यादयः अर्थास्तत्फलानि च योगस्य ज्ञानवैराग्यभक्तिरूपस्य अर्थं मोक्षं न बिभ्रति ज्ञानाद्युत्पादनद्वारा मोक्षं न साधयन्ति, प्रत्युत अनर्थाय शिश्नोदरपर्यवसायितया संसाराय भवेयुः तथा असतो हरिविमुखस्य पूर्त्तादिकम ॥ २९ ॥

मुमुक्षुर्गृहे तिष्ठन्नुक्तरीत्या कामादिविजयेन नानानियमसाध्यषड्वर्गसंयमेन साधितैर्ज्ञानभक्त्यादियोगैर्युक्तः स्याद्यदि कुटुम्बादिसङ्गेन सर्वसाधनमूलभूतमनोनिग्रहो दुष्करस्तर्हि गृहात्परिव्रज्येद् कुर्यादित्याह—य इति, षड्भिः । चित्तविजये यत्तः उद्युक्त· भिक्षया प्राप्तं मितमल्पमशनं यस्य सः दण्डादिलिङ्गयुक्तया—

"ज्ञाननिष्ठो विरक्तो वा मद्भक्तो वाऽनपेक्षकः ।
सलिङ्गानाश्रमांस्त्यक्त्वा चरेदविधिगोचरः" ॥

इति भगवदाज्ञया आश्रमलिङ्गादिपरित्यागेन वा भागवतो भिक्षुः स्यात् यतिर्भवतु ॥ ३० ॥

हे राजन् ! शुचौ देशे पवित्रस्थाने आसनमास्थाय ऋज्वङ्गः समकायशिरोग्रीवः सुखं यथा भवत्येवमासीन ओमित्युच्चारयन्निति शेषः । प्राणापानौ सन्निरुन्ध्यादित्यग्रिमेन सम्बन्धः ॥३१॥

पूरकादिभिः प्राणापानौ संनिरुन्ध्यात् प्राणायामं कुर्यात् तदवधिमाह—यावन्मनः कामान् त्यजेदिति ॥ ३२ ॥

---

भाषा टीका ।

रज और तम को सत्व से जीते, उपशांति से सत्व को भी जीते. और पुरुष इन सबों को गुरुके विषे भक्ति करने से तो अनायास ही जीत सक्ता है ॥ २५ ॥

जिस पुरुष की साक्षात् भगवत् स्वरूप ऐसे, ज्ञानदीपप्रद गुरु में खोटी मनुष्यपने की बुद्धि है, उस्का सर्व श्रुत ( वेदादिका सुनना ) कुञ्जर शौचवत्, है अर्थात् हाथी के नहाने तुल्य है ॥२६॥

नारद जी सभा में बैठे हुए श्रीकृष्ण को लक्ष्य कर गुरु के विषे दृष्टान्त देने को बोले, कि हे राजन् ! ये जो तुमारी सभा में मनुष्याकार से बैठे हुए श्रीकृष्ण है, ये मनुष्य नहीं हैं, किंतु साक्षात् प्रधान ( प्रकृति ) और पुरुष ( जीव ) के नियंता है. और बडे२ योगेश्वरों के ढूंढने योग्य चरण कमल वाले है, तौ भी लोक इनको नर अर्थात् मनुष्य मानता है, इसीप्रकार गुरु भी मनुष्य नहीं है किंतु साक्षात् भगवान ही है ॥ २७ ॥

षट् इन्द्रियों के जीतने में परम उपयोगी सम्पूर्ण नियम और शास्त्रीय विधियों का उन श्रीकृष्णमें ही पर्यवसान है, यदि सर्व नियम विधि आदि के अनुष्ठान से भी इनमें प्रीति न हुई, तौ वे नियमादि सब श्रम मात्र देने वाले जानों ॥ २८ ॥

जैसे कि—कृषि वाणिज्य आदि वृत्ति योग के अर्थ को नहीं सिद्ध करसक्ती है, ऐसे ही इनमें जिसकी प्रीति नहीं एसे असत् पुरुष के इष्ट, आपूर्त्त, आदि सब कर्म अनर्थ के ही करने वाले होंगे ॥ २९ ॥

जो पुरुष चित्त के जीतने का उद्योग वाला हो तो संन्यास लेकर सर्व सङ्ग और परिग्रहों ( उपकरणों ) को छोडकर एकला ही एकान्त स्थल का आश्रय लेकर भिक्षा से मित भोजन करता हुआ ॥ ३० ॥

हे राजन् ! सम और शुद्ध प्रदेश में स्थिर सम और सुखदाई ऐसे अपने आसन को बिछाकर, उस पर ऋजु ( सीधा ) अंग कर कर प्रणव ( ॐकार ) का उच्चारण करता हुआ बैठे ॥ ३१ ॥

पूरक कुंभक रेचक प्राणायामों से प्राण और अपान का अच्छे प्रकार निरोध करे जब तक कि अपना मन कामनाओं को न छोड देवे, और अपने नासिका के अग्र भाग का निरीक्षण भी करता जावे ॥ ३२ ॥

---

यतो यतो निःसरति मनः कामहतं भ्रमत् ।
ततस्तत उपाहृत्य हृदि रुन्ध्याच्छनैर्बुधः ॥ ३३ ॥
एवमभ्यसतश्चित्तं कालेनाल्पीसया यतेः ।
अनिशं तस्य [1]निर्वाणं यात्यनिन्धनवह्निवत् ॥ ३४ ॥
कामादिभिरनाविद्धं प्रशान्ताखिलवृत्ति यत् ।
चित्तं ब्रह्मसुखस्पृष्टं नैवोत्तिष्ठेत कर्हिचित् ॥ ३५ ॥
यः प्रव्रज्य गृहात्पूर्वं त्रिवर्गाऽऽवपनात्पुनः ।
यदि सेवेत तान्भिक्षुः स[2] वै वान्ताश्यपत्रपः ॥ ३६ ॥
यैः स्वदेहः[3] स्मृतो नात्मा मर्त्यो विट्कृमिभस्मसात् ।
त एन मात्मसात्कृत्वा श्लाघयन्ति ह्यसत्तमाः ॥ ३७ ॥
गृहस्थस्य क्रियात्यागो व्रतत्यागो बटोरपि ।
तपस्विनो ग्रामसेवा भिक्षोरिन्द्रियलोल्यता ॥ ३८ ॥
आश्रमापसदा ह्येते खल्वाश्रम[4]विडम्बकाः ।
देवमायाविमूढांस्तानुपेक्षेताऽनुकम्पया ॥ ३९ ॥
आत्मानं चेद्विजानीयात्परं ज्ञानधुताशयः ।
किमिच्छन्कस्य वा हेतोर्देहं पुष्णाति लम्पटः ॥ ४० ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

एवमनिशमभ्यस्यतस्तस्य यतेश्चित्तं निर्वाणं शान्तिं याति ॥ ३४ ॥

नच पुनर्विक्षिप्येतेत्याह—कामादिभिरक्षुभितं यच्चित्तं तन्नोत्तिष्ठेत् यतः प्रशान्ता अखिला वृत्तयो यस्य कुतः ब्रह्मसुखेन स्पृष्टम् ॥ ३५ ॥

यस्तु प्रव्रज्यां कृत्वा ऽपि भोगमभिलिप्सुः स्यात्तं निन्दति, य इति । त्रयाणां धर्मादीनां वर्ग आसमन्तादुप्यते यस्मिंस्तस्माद् गृहात् तान्धर्मादीन् वान्ताशी छर्दितभोजी निर्लज्जश्च ॥ ३६ ॥

नचेदमघटितं दृष्टत्वादित्याह—यैः पूर्वं स्वदेहो ऽनात्मादिरूपः स्मृतश्चिन्तितस्त एव पुनरेनमात्मेति मत्वा श्लाघयन्ति स्तावयन्ति हि ॥ ३७ ॥

यतिमुपलक्षणीकृत्याऽन्यानपि स्वधर्मत्यागिनो निन्दति—गृहस्थस्येति, द्वाभ्याम् ॥ ३८ ॥ ३९ ॥

नन्वात्मतत्त्वज्ञस्य भिक्षो रिन्द्रियलौल्येऽपि को दोषस्तत्राऽऽह, आत्मानं परं ब्रह्म चेज्जानीयात् ज्ञानेन धुता निरस्ता आशया वासना यस्य तस्य ज्ञानिनो लौल्यमेव न सम्भवतीत्यर्थः । तथाच श्रुतिः—

"आत्मानं चेद्विजानीयादयमस्मीति पूरुषः ।
किमिच्छन्कस्य कामाय शरीमनुसञ्ज्वरे" ॥
इति ॥ ४० ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

कामैः शब्दादिविषयध्यानैर्हतं विक्षिप्तं सन्मनो भ्रमद्यतो यतः यं यं विषयं निः सरति विषयीकरोति ततस्ततो विषयात् तन्मनः उपाहृत्य प्रत्याहृत्य बुधस्तत्प्रत्याहारविद्हृदि हृदयस्थे शुभाश्रये शनैर्निरुन्ध्याच्छुभाश्रयचिन्ताप्रवणं कुर्यात् अत्र नियमोऽर्थसिद्धः चित्तविजय इति नियम उक्तः स्थिरं सुखमासीतेत्यासनम् । प्राणापानावित्यादिना प्राणायामः यावन्मन इत्यादिना ततस्तत उपाहृत्य इत्यन्तेन प्रत्याहारः निरुन्ध्याच्छनैर्बुध इत्यनेन ध्यानधारणे चोक्ते ॥ ३३ ॥

अथ समाधिमाह—एवमिति, द्वाभ्याम् । एवमनिशम् अहरहः सर्वदा वाऽभ्यसतः तस्य यतेश्चित्तमल्पीयसैव कालेन निर्वाणं याति बहिर्वृत्तिविनाशं याति अनिन्धनवह्निवत् यथाऽनिन्धनः ज्वालाधूमादिरहितो दाह्यरहितो ऽङ्गाररूपेणाऽवशेषितोऽग्निस्तद्वत् इत्यर्थः ॥ ३४ ॥

(१) आविषयणाञ्च (२) सपापो निरपत्रपः (३) यस्यदेहः । इति विज० पाठ० (४) विडम्बिनः । इति विज० वीर० पाठ० ॥

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

न तु विविदिषुम्भजतीत्याह–कामेति । यद्यस्मात् कामादयः शब्दादिविषयाभिध्यानादिभिरनाविद्धमसङ्क्रान्तं प्रशान्ता अपगता अखिला वृत्तयो व्यापारात्मिका यस्य तादृशं चित्तमभूत् तस्माच्चित्तं ब्रह्मसुखस्पृष्टं ब्रह्माऽनुभवसुखाविद्धं सत् कर्हिचिदपि नैश्चोत्तिष्ठेत् गुणाश्रयान्न प्रच्युतं भवति, अयमेव समाधिर्वेद ब्रह्माऽनुभवमग्नचित्ततेति ॥ ३५ ॥

एवमष्टाङ्गयुक्तभगवद्भक्तियोगनिष्ठं तत्फलत्वेन त्रिवर्गं कमायशानं यतिं निन्दति–य इति । त्रिवर्गस्य धर्मार्थकामरूपस्यावपनात् क्षेत्रभूताद् गृहात्प्रव्रज्य पुनर्यः पुमांस्तान् धर्मादीनेव सेवेत सवै भिक्षुर्निरपत्रपो निर्लज्जो वान्ताशी छर्दिताभ्रभक्षी उद्गीर्णाभक्षयितृतुल्य इत्यर्थः । यद्वा प्रव्रज्यापि पुनर्भोगासक्तं यतिं निन्दति—य इति ॥ ३६ ॥

न चेदमप्यनुचितं यद्वत्यादित्याह–यैरिति । यैः परिव्राड्भिः पूर्वं स्वदेहो नात्मा स्मृत आत्मत्वेन न निश्चितः किन्त्वात्मनः व्यतिरिक्तो मर्त्यः मरणधर्मा विट्कृमिभस्मसान्ताग्निनः क्रियाद्यवस्थाभापन्नमानश्चिन्तितः त एव पुनस्तमेवं देहमेव आत्मसात्कृत्वाऽऽत्माऽभिधं कृत्वा श्लाघयन्ति हि, कश्चिदसत्तमाः परिव्राज इत्यर्थः ॥ ३७ ॥

भोगाऽऽसक्तयतिनिन्दाप्रसङ्गेन सहाऽऽश्रमान्तरस्थानपि स्वधर्मादित्यागिनो निन्दति—गृहस्थस्येति । क्रियात्यागः स्ववर्णाश्रमोचितक्रियात्यागः वटोर्ब्रह्मचारिणो व्रतत्यागः गुरुकुलवासादिव्रतत्यागः तपस्विनो वानप्रस्थस्य ग्रामसेवा पुनर्ग्रामवासः भिक्षोः सन्यासिन इन्द्रियलोलता ॥ ३८ ॥

एते आश्रमापसदा येषां गृहस्थादीनां तुच्छा क्रियात्यागादयस्त एते आश्रमेषु आश्रमस्थेषु अपसदा निकृष्टा इत्यर्थः एते ह्याश्रमान् विडम्बयन्त्यनुकुर्वन्तीत्याश्रमविडम्बिनः विडम्बनमात्रमेवैषां नत्वाश्रमसिद्धिरित्यर्थः । अतस्तान् भगवन्मायया विमूढान् अनेन नित्यनिरतिशयाऽऽनन्दरूपपरमात्मप्राप्तिसाधनभूततदुपासनतदङ्गधर्माऽनुष्ठानोपयुक्तमनुष्यजन्मवर्णाऽऽश्रमादिरूपसामग्रीं लब्ध्वापि ये स्वधर्मादित्यागिनस्ते नूनं देवमाया मोहिता इत्युक्तम् भवति । अनुकम्पया अहो इमे उच्चपतिताः किं विधेयमित्येवमनुकम्पापूर्वकचिन्तया तानुपेक्षेत नानुवर्तेतेत्यर्थः ॥ ३९ ॥

आत्मपरमात्मतत्त्वज्ञस्य ब्रह्माऽनुभवसुखतृप्तस्य तु यतेरिन्द्रियलौल्यमेवासम्भावितं तस्य देवमायामोहाभावादित्याह—आत्मानमिति । परं प्रकृतिपुरुषविलक्षणमात्मानम् यद्वा आत्मानं परं परमपुरुषं च विजानीयाच्चेत् तज्ज्ञानेन निर्धूतवासनः कस्य कामाय इष्टसम्पत्तये लम्पटः किमिच्छन्देहं पुष्णाति देहपोषणेन आत्मनः परमपुरुषस्य च नेष्टं सम्पद्यतेऽनिष्टस्यजत्येवेत्यर्थः । यद्वा इच्छन् शब्दादिविषयान्कामयमानः कस्य स्वपरयोरन्यतरस्य कस्य कामायेष्टार्थं देहं पुष्णाति किम्? न पुष्णात्येवेत्यर्थः । कस्य कामायेत्यनेन देहपोषणं न आत्मनो नाऽपिपरमात्मनश्च सुखावहकं तयोः स्वत एव निरतिशयसुखरूपत्वादिति सूच्यते, निरतिशयानन्दपरमात्मोपासनात्मकतदनुभवतृप्तो निरीहो देहपोषणजसुखार्थं न यतत एव, किन्तु परमात्मप्राप्तय एव यतत इति सूचितम् । देवमायाविमूढानित्यनेन परमाऽऽनन्दरूपपरमात्मप्राप्तिसाधनाऽनुष्ठानोपयुक्तशरीरेन्द्रियादिसामग्रीं लब्ध्वाऽपि ये न यतन्ते ते देवमायाविमूढा इति चोक्तम् ॥ ४० ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

उपाहृत्य हृदि स्थिते हरौ ॥ ३३ ॥

इन्धनरहितो वह्निर्यथा निर्वाणं नाशं याति तथा चित्तं प्राकृतं नाशमेति अप्राकृतं स्वरूपभूतं शरीराभिमानरहितं ब्रह्म यातीत्यन्वयः । "वाणं शरीरं सम्प्रोक्तं वाणो वसिसुते शरः" इत्यभिधानम् "निर्वाणममृतमक्षरं ब्रह्म" इत्यभिधानम् ॥ ३४ ॥

एवं विषयीकृतब्रह्मणोऽप्राकृतस्य चित्तस्य स्वभावमाह कामादिभिरिति । यच्चित्तं कामादिभिरनाविद्धत्वात् प्रशान्ताखिलवृत्तित्वाच्च ब्रह्म पूर्णसुखरूपं स्पृष्टं विषयीकुर्वत् तत्कर्हिचित्ततो नोत्तिष्ठेत ततोऽन्यत्र न गच्छतीत्यर्थः ॥ ३५ ॥

ननु, कस्यचिच्चेतोऽन्यत्र गच्छति चेत्किन्दूषणमित्याशङ्क्य तस्य पापकरत्वेन सर्वहास्यत्वं दूषणमित्याशयेनाह—यः प्रव्रज्येति । त्रिवर्गावपनाद्धर्मार्थकामबीजानामावपनक्षेत्रभूतात् तान् कामादीन् यदा सेवेत तर्हीति शेषः ॥ ३६ ॥

एवं विधा असुरजातय इत्यभिप्रायेणाह—यस्येति । यस्य देहिनः अनात्मा देहो विट्कृमिभस्मवत्स्मृतः तस्य तमेव देहं तत्सदृशमेव भोगायतनं आत्मसात्कृत्वाऽहमेवात्मेति कृत्वा ये देहं श्लाघयन्ति ते असत्तमा असुरा इत्यन्वयः । "आत्मैव ह्यात्मा" इति श्रुतिं हिशब्देन सूचयति–यैः स्वदेह इति पाठे यैरस्यैरनात्मा स्वदेहो विट्कृमिभस्मवत्स्मृतः ते तमेव स्वात्मसात्कृत्वा श्लाघयन्ति तर्हि असत्तमा इत्यन्वयः ॥ ३७ ॥

न केवलं यतेराश्रमत्यागे दूषणमपि तु गृहस्थानामपि स्वधर्मत्यागे दोषः स्यादित्याह—गृहस्थस्येति । यत्यादेः कस्य कस्य धर्मत्यागे दोषः स्यादित्यतो वाऽऽह—गृहस्थस्येति । वटोर्ब्रह्मचारिणः यदि गृहस्थादीनां क्रियात्यागादयः सन्ति तर्ह्येते आश्रमापसदा हीत्यन्वयः ॥ ३८ ॥

नन्वेतावताऽपि फलं स्यात्किं नेत्याह—खल्विति । आश्रमान्विडम्बयन्ति अनुकुर्वन्तीत्याश्रमविडम्बिनः खलु आश्रमफलाहेतुत्वादित्यर्थः । निषेधवाक्यालङ्कारादौ खलुशब्दप्रयोगात् न चैते पुण्याशया मान्या इत्याह—देवेति । अतो भगवन्महिमेति भगवद्विषयैवाऽनुकम्पा प्रेमविशेषः ॥ ३९ ॥

यतः स्वधर्मत्यागी निंद्योऽतो विहितातिरेकेण देहपोषो न युक्त इत्याह–आत्मानमिति । विवेकज्ञानेन धूताशयः वशीकृतान्तःकरणः पुरुषः आत्मानं स्वस्वरूपं परमात्मानं च विजानीयात् चेत्तर्हि स किं सुखमिच्छन् कस्य हेतोः सुखस्यार्थे वा लम्पटो रागी-

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

इन्द्रियलोलुपो भूत्वा देहं पुष्णातीत्यन्वयः "सुखार्थी वा त्यजेद्विद्यां विद्यार्थी वा सुखं त्यजेत्" इति वचनात् ॥ ४० ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

निर्वाणं शान्तिं याति ॥ ३४—३५ ॥

त्रिवर्ग आ इयते यस्मिन् तस्मात् गृहात् पूर्वं प्रव्रज्य पुनः पश्चात् तानेव गृहस्थधर्मान् सेवेत वान्ताशी छर्दितभोजी निर्लज्जः ॥ ३६ ॥

अनात्मा देह आत्मा न भवतीति चिन्तितः विट्कृमिभस्मवदित्यन्ते विट्कृमिभस्मरूपो भविष्यतीत्यतोऽधुनापि विट्कृमिभस्मतुल्य इत्यर्थः । त एव एनं देहम् आत्मसात्कृत्वा आत्मानमेव मन्वते इत्यर्थः ॥ ३७ ॥

लौल्यतां लौल्यम् अनुकम्पया सह उपेक्षेत अनुकम्पया तदन्तिकमुपेत्य तदुपदेशादिकं न कुर्यात् तस्य तेषु वैयर्थ्यादिति भावः ॥ ३८ ॥

तेष्वपि मध्ये भिक्षुं विशेषतो निन्दति—आत्मानमिति। अत्र विजानीयादिति विधिलिङ् तेन चायमर्थ आक्षेपलब्धो भवति ज्ञानधुतानाम्, खलु आत्मानं विजानीयादिति विधेर्विषयीभूतः स्यात्सेऽन्यः किमिच्छन्नित्यादि देहं पुष्णातीति जिह्वेन्द्रियलौल्यं लम्पट इत्युपस्थलौल्यञ्च व्यञ्जितं परं देहात् पृथग्भूतम् ॥ ३९ ॥ ४० ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

प्रच्छन्नपार्थिवतनम् यतो यतो यत्र यत्र विचरेत् ॥ ३३ ॥

अनिशं निरन्तरमेवम् अभ्यसतस्तस्य यतेश्चित्तं निर्वाणं नैश्चल्यम् ॥ ३४ ॥

अनाविद्धमक्षुभितम् अत एव प्रशान्ता अखिला वृत्तयो यस्य तत् ब्रह्मणः चिन्तनीयस्य भगवतः सुखेन स्पृष्टं यत् यर्हि भवेत्तदा कर्हिचिदपि नोत्तिष्ठति ॥ ३५ ॥

ब्रह्मसुखस्पर्शाऽभावे तूत्तिष्ठति विषयेषु यतेश्चित्तमतः स निन्द्यो भवतीत्याह—त्रयाणां धर्मार्थकामानां वर्ग आ समन्तादुच्यते यत्र ततो गृहात्प्रव्रज्य यदि तान् गृहस्थोचितान् धर्मादीन् पुनः सेवेत स वान्ताशी छर्दितभोजी अपत्रपो निर्लज्जश्च भवति ॥ ३६ ॥

आत्मविदोपि अनात्मानं देहं ये श्लाघयन्ति ते निन्द्या एवेत्याह—यैरिति । यैः स्वदेहः अनात्मा आत्मभिन्नः मर्त्यो मरणधर्मा कृमिविड्भस्मसात् च स्मृतः चिन्तितः पुनरेनमात्मसात् कृत्वा श्लाघयन्ति त असत्तमाः ॥ ३७ ॥

यतिमुपलक्षीकृत्यान्यानपि स्वधर्मत्यागिनस्तत्तद्धर्मदार्ढीकरणार्थं निन्दति—गृहस्थस्येति, द्वाभ्याम् ॥ ३८ ॥

अनुकम्पया उपेक्षेत न तु दुरुक्त्या पीडयेत ॥ ३९ ॥

"आत्मानं चेद्विजानीयादयमस्मीति पुरुषः ।
किमिच्छन्कस्य कामाय शरीरमनु संज्वरेत्" ॥

इति श्रुत्यर्थमुपबृंहयन् जाते आत्मज्ञानेऽपि देहासक्तं निन्दति—आत्मानमिति । परं देहादन्यम् ॥ ४० ॥

---

भाषा टीका ।

कामनाओं की ताडना से भ्रमता हुआ मन जहां २ से निकले तहां २ से रोक कर बुद्धिमान् धीरे से हृदय में रोके ॥ ३३ ॥

इस प्रकार निरंतर अभ्यास करने वाले यति का चित्त थोड़े ही काल में शान्ति को प्राप्त होजाता है, जैसे, कि—विना इन्धन का अग्नि ॥ ३४ ॥

कामादिकों से क्षोभ को नहीं प्राप्त होने वाला शान्त होगई सर्व वृत्ति जिसकी और ब्रह्म सुख का स्पर्श करने वाला ऐसा यति का चित्त फिर कभी कामनाओं की तरफ नहीं उठता है ३५

जो पुरुष त्रिवर्ग के क्षेत्र रूप अपने गृह से सन्यास लेकर त्यागी होकर यदि फिर उन विषयों का सेवन करे, तो वह निर्लज्ज वान्ताशी है, अर्थात् वमन करे हुए का भक्षण करने वाला है ॥ ३६ ॥

क्योंकि, जिनोंने पहले इस देह को अनात्मा और विष्ठा कृमि भस्म रूप समझा फिर वे ही इसको आत्मा मानकर श्लाघा करें और पालन पोषण करें तो उनके सदृश असत्तम निन्दनीय और कौन है ॥ ३७ ॥

गृहस्थ होकर क्रियाओं का त्याग, ब्रह्मचारी होकर व्रतों का त्याग तपस्वी होकर ग्राम सेवा और भिक्षु होकर इन्द्रियों की चंचलता जिनकी है॥ ३८ ॥

ये लोग आश्रम धारियों में नीच हैं, और आश्रम का विडंबन करने वाले हैं, श्रीहरि की माया से मोहित ऐसे मूढों को कृपा करके दूरसे उपेक्षा करे अर्थात् उनके समीप न बैठे ॥ ३९ ॥

जिसने ज्ञान से वासनाओं का निरास किया है, ऐसा आत्मज्ञानी यति किस इच्छा से और कौन से हेतु से देह का पोषण करेगा, और वह लपट ही क्यों होगा अर्थात् ज्ञानी ऐसा कर ही नहीं सका है ॥ ४० ॥

---

आहुः शरीरं रथमिन्द्रियाणि हयानभीषून्मन इन्द्रियेशम्।
वर्त्मानि मात्रा धिषणां च सूतं सत्त्वं बृहद्बन्धुर[1]मीशसृष्टम्॥ ४१॥
अक्षं दशप्राणमधर्मधर्मौ चक्रेऽभिमानं रथिनं च जीवम्।
धनुर्हि तस्य प्रणवं पठन्ति शरं तु जीवं परमेव लक्ष्यम्॥ ४२॥
रागो द्वेषश्च लोभश्च शोकमोहौ भयं मदः।
मानोऽवमानोऽसूया च माया हिंसा च मत्सरः॥ ४३॥
रजः प्रमादः क्षुन्निद्रा शत्रवस्त्वेवमादयः।
रजस्तमः प्रकृतयः सत्त्वप्रकृतयः क्वचित्॥ ४४॥
यावन्नृकायरथमात्मवशोपकल्पं धत्ते गरिष्ठचरणार्चनया निशातम्।
ज्ञानासिमच्युतबलो दधदस्तशत्रुः स्वाराज्यतुष्ट उपशान्त इदं विजह्यात्॥ ४५॥
नो चेत्प्रमत्तमसदिन्द्रियवाजिसूता नीत्वोत्पथं विषयदस्युषु निक्षिपन्ति।
ते दस्यवः सहयसूतममुं तमोऽन्धे संसारकूप उरुमृत्युभये क्षिपन्ति॥ ४६॥
प्रवृत्तं च निवृत्तं च द्विविधं कर्म वैदिकम्।
आवर्तेत प्रवृत्तेन निवृत्तेनाऽश्नुते ऽमृतम्॥ ४७॥
हिंस्रं द्रव्यमयं काम्यमग्निहोत्राद्यशान्तिदम्।
दर्शश्च पूर्णमासश्च चातुर्मास्यं[2] पशुः सुतः॥ ४८॥

श्रीधरस्वामिकृतभावार्थदीपिका।

अज्ञस्य तु लौल्येन नरकपातापर्यन्तप्रसङ्गेन भद्रा तत्त्वज्ञाने यतितव्यमितीममर्थम् "आत्मानं रथिनं विद्धि शरीरं रथमेव च" इत्यादि श्रुत्युक्तरथरूपकद्वारेणाह–आहुरिति, षड्भिः। इन्द्रियेशं मनोऽभीषून् रश्मीनाहुः मात्राः शब्दादीन्वर्त्मानि गन्तव्यदेशानाहुः सत्त्वं चित्तं बृहद्दृढ्यापि बन्धुरं बन्धनं चित्तं विना ह्यनिबद्धमिव शरीरं भवति ईशसृष्टमिति बन्धनकर्त्ता त्वीश एवेत्यर्थः॥४१॥

प्राणादयः पञ्च "नागः कूर्मश्च कृकलो देवदत्तो धनञ्जय" इत्येवं दशविधप्राणमक्षम् अभिमानं साहङ्कारं जीवं रथिनं शुद्धं जीवं शरं परं ब्रह्म लक्ष्यं यथा धनुषा शरो लक्ष्ये निपात्यते तथा प्रणवेन जीवो ब्रह्मणि निपात्यत इत्यर्थः॥ ४२॥

रागादयो जेतव्याः शत्रवः॥ ४३॥

तत्र रजोऽभिनिवेशः कचिदारूढसमाधेः सत्त्वप्रकृतयोऽपि परोपकारादिप्रवृत्तयः शत्रवः॥ ४४॥

नृकायरूपं रथमात्मवशः उपकल्प इन्द्रियादिपरिकरो यस्मिन्स्तथाभूतं यावत् धत्ते तावदेव गरिष्ठानां गुरूणां चरणसेवया निशितं ज्ञानखड्गं बिभ्रदच्युताश्रयः सन्निरस्तशत्रुरुपशान्तः स्वानन्देन तुष्टो भूत्वेदं रथादिकमुपेक्षेतेत्यर्थः॥ ४५॥

अच्युताश्रयाभावे बाधकमाह—नोचेदिति। असन्तो बहिर्मुखा ये इन्द्रियवाजिनः सूतश्च ते उत्पथं प्रवृत्तिमार्गं नीत्वा विषयाख्येषु दस्युषु निक्षिपन्ति हयैः सूतेन च सह वर्तमानं तमोऽन्धे तमसा व्याप्ते उरु मृत्युभयं यस्मिन्॥ ४६॥

ननु, वेदविहितेष्टापूर्तादिकारिणः पुंसः कथमेवमनर्थप्राप्तिः स्यादित्याशङ्क्य वेदोक्तकर्मणां द्वैविध्यं दर्शयन्फलभेदमाह–प्रवृत्तं चेति, दशभिः॥ ४७॥

हिंस्रं श्येनादि कर्म अशान्तिदमत्यासक्तियुक्तम्, आदिशब्दार्थविवरणं दर्शश्चेति पशुः पशुयागः सुतः सोमयागः॥ ४८॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

न केवलं मयैव शरीरेन्द्रियादेः परमात्मप्राप्तिसाधनानुष्ठानोपयुक्तसामग्रीत्वमुच्यते, अपि तूपनिषद्वाक्यान्यपि—

"आत्मानं रथिनं विद्धि शरीरं रथमेव च।
बुद्धिं तु सारथिं विद्धि मनः प्रग्रहमेव च॥
इन्द्रियाणि हयानाहुर्विषयांस्तेषु गोचरान्।
सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम्"॥

(१ मीशधाम (२) पशुः पुन इति विज० पा०॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

इत्यादीनि संसाराध्वनः पारं वैष्णवं पदं प्रेप्सुस्तमात्मानं रथित्वेन तच्छरीरादीनि रथरथाङ्गत्वेन रूपयित्वा तदाहुरित्याह—आहुरिति । शरीरादीन् रथादिभावेन रूपयन्तस्तेषां परमात्मप्राप्तिसाधनाऽनुष्ठानोपयुक्तसामग्रीत्वमभीष्टदेशप्रेप्सोर्विजिगीषोश्च प्रसिद्धरथादीनां साधनत्वमित्याहुर्वेदान्ता इत्यर्थः । शरीरं रथं रथस्थानीयमिन्द्रियाणि हयानश्वानिन्द्रियाणामश्वस्थानीयानामीशं मुख्यं मनः अभीषून् रश्मीन् रज्जूनिति यावत् मात्राः शब्दादीन् वर्त्मानि मार्गस्थानीयान् धिषणां बुद्धिं सूतं सारथिं सत्त्वं बलं बृहद् दृढं बन्धुरं देहादीनां बन्धनम् ईशसृष्टानि यथायोगं विभक्तिविपरिणामेन शरीरादीनां विशेषणम् ईशेन परमात्मना सृष्टमीशसृष्टम् ॥ ४१ ॥

दशानां प्राणानां समाहारो दशप्राणं प्राणादिपञ्चकं नागकूर्मकृकलदेवदत्तधनञ्जयाख्योपप्राणपञ्चकात्मकम् अक्षमक्षस्थानीयम् अधर्मधर्मौ पुण्यपापे चक्रे पुण्यपापात्मकयोः कर्मणोरेव रथत्वरूपितशरीरप्रवृत्तिहेतुत्वात्तदायत्तत्वेन च चक्रत्वेन रूपणम् अभिमानिनं देहाभिमानं जीवं रथिनमाहुः तस्य रथिनः प्रणवमोङ्कारं धनुः पठन्त्याहुः शरं तु जीवं परं परमात्मानं तु लक्ष्यं पठन्ति "प्रणवो धनुः शरो ह्यात्मा ब्रह्म तल्लक्ष्यमुच्यते । अप्रमत्तेन वेद्धव्यं शरवत्तन्मयो भवेत्" इति श्रुत्यन्तरेप्युक्तं विप्रकृष्टयोः शरलक्ष्ययोरिव जीवपरयोः सम्बन्धज्ञापनहेतुत्वात्प्रणवो धनुरुक्तम् ॥ ४२ ॥

रथित्वेन रूपितजीव एव शरत्वेनापि रूप्यते तत्र जेतव्यानाह—राग इति । रागः शब्दादिविषयाऽऽसक्तिः द्वेषः तद्विरोधिविषयाऽप्रीतिः लोभोऽसन्तोषः मोहः कार्याऽकार्याऽविवेकः भयमागामिदुःखदर्शनजं प्रतिकूलज्ञानं मदो गर्वः मानो बहुमानः अवमानस्तिरस्कारः असूया गुणेषु सत्स्वपि दोषाविष्कारः माया वञ्चनं हिंसा भूतद्रोहः मत्सरः परकृतद्रोहचिन्ता ॥ ४३ ॥

रजः क्रोधः स चामर्षः प्रमादोऽनवधानता एवमादयः एतत्प्रभृतयः शत्रवो जेतव्यास्त एते रजस्तमःप्रकृतयः क्वचित्सत्त्वप्रकृतयश्च रजस्तमसी प्रकृती कारणे येषां ते सत्त्वप्रकृतिः कारणं येषां ते चेति बहुव्रीहिः रजस्तमसोरन्यतरमिश्रसत्त्वप्रकृतय इत्यर्थः ॥ ४४ ॥

तदेवं शरीरेन्द्रियमनोविषयबुद्धिबलप्राणधर्माधर्मजीवाः रथरथाङ्गादि रथ्यादिभावेन परमात्मप्राप्त्युपायसाधनाऽनुष्ठानोपयुक्तत्वज्ञापनाय रूपिताः प्रणवजीवेशास्तु जीवपरयोः सम्बन्धज्ञानजनकत्वपरमात्मैकशेषत्वप्राप्यत्वज्ञापनाय धनुःशरलक्ष्यभावेन रूपिताः हेयत्वज्ञापनाय रागादयः शत्रुत्वेन रूपिताः अथ यस्यैते रथादयो वशे तिष्ठन्ति स एवाध्वनः पारं वैष्णवपदमाप्नोतीति "सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम्" इति श्रुतेरर्थमभिप्रयन् रथादिकमपि उपेक्षेत इत्याह—यावदिति । यावच्छरीरं समीहितसाधने दक्षं स्ववशं च तावदेव ज्ञानासिना जितरागादिशत्रुर्मुक्तिसाधनमनुतिष्ठन् शरीरादिषु निःस्पृहो भवेदित्याह—यावदिति । नृकायरथं नरशरीररूपं रथं यावदात्मवशोपकल्पं स्वाधीनतयोपक्लृप्तं यथा भवति तथा धत्ते तावदेव गरिष्ठानां महतां चरणार्चनयालब्धं निशातं ज्ञानरूपं खड्गं दधद् बिभ्राणः अस्ता निरस्ताः शत्रवो रागादयो येन अच्युतः स्थिताच्युतध्यावतीत्युच्यते भगवानेव बलं यस्य तादृशः उपशान्तः रागाद्यकलुषितचित्तः स्वाराज्यतुष्टः स्वराडकर्मवश्यः तस्य भावः स्वाराज्यं मुक्तैश्वर्यं तेन तुष्टः अवश्यमच्युतः स्वाराज्यं दास्यतीति सन्तुष्ट इदं नृकायरथादिकं विजह्यादुपेक्षेत तेषु स्पृहारहितो भवेदित्यर्थः । इदमेतद्विसंस्मारकं फलं वा विनिश्चितम् ॥ ४५ ॥

यथोक्तविधो न स्यात्तदा तस्यानर्थमाह—नेति । नोक्तविधो न भवेत्तदा प्रमत्तमिमं देहिनमसन्तो बहिर्मुखा इन्द्रियवाजिन इन्द्रियाण्येवाश्वाः सूतो बुद्धिश्चैते उत्पथं प्रवृत्तिमार्गं नीत्वा विषयरूपेषु दस्युषु निक्षिपन्ति ते विषयाख्या दस्यवः हयैः सूतेन च सह वर्तमानममुं प्रमत्तं देहिनमुर्वधिकं मृत्युभयं यस्मिन्नन्धे तमस्यन्धतामिस्रनरकतुल्ये संसारकूपे क्षिपन्ति ॥ ४६ ॥

तदेवं वर्णाश्रमधर्मान् तदनुग्राह्यं भक्तियोगं शरीरेन्द्रियादीनां तदनुष्ठानोपयुक्तत्वं तैरनुष्ठितेन वर्णाश्रमधर्मानुगृहीतेन भक्तियोगेन स्वाराज्यप्राप्तिं सांसारिकफलाभिलाषेणाऽनुष्ठितानां तु धर्माणां संसृतिरूपानर्थावहत्वं चाभिधायाऽथ तेषामेव धर्माणामिष्टापूर्तभेदेन द्वैविध्यं सांसारिकफलसाधनत्वेन कृतानां प्रवृत्तकर्माख्यत्वं पुनरावृत्तिहेतुत्वमुपासनानुग्राहकतया कृतानां तु निवृत्तकर्माख्यत्वं तस्याऽपुनरावृत्तिहेतुत्वं चाह—प्रवृत्तमिति । वैदिकं वेदविहितं कर्म प्रवृत्तं निवृत्तमिति द्विविधं तत्र प्रवृत्तेन कर्मणा आवर्त्तते फलाऽनुभवाय लोकान्तरं प्राप्य तत्र तदनुभूयाऽवशिष्टेन कर्मणा ततः पुनरिहावर्त्तते निवृत्तेन त्वमृतमश्नुते तत्फलरूपममृतं मुक्तिं प्राप्य ततः पुनर्नावर्त्तते ॥ ४७ ॥

प्रवृत्तनिवृत्तभेदभिन्नस्य वैदिकस्यैव कर्मणः स्वरूपमिष्टसंज्ञकत्वं च वक्तुं तद्विशेषांस्तदवान्तरभेदान्दर्शयति—हिंस्रमिति । अग्निहोत्रनामधेयकं कर्म आदिर्यस्य तदग्निहोत्रादि आदिशब्दग्राह्यान्दर्शयति—दर्शश्चेति । दर्शादयः शब्दाः कर्मनामधेयानि पशुः पशुयागः सुतः सोमयागः ॥ ४८ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

नन्वयं देहो हेयश्चेत्किमनेनार्थ इत्याशङ्क्य महाप्रयोजनमस्त्येवं कृतं चेदित्याशयेनाह—आहुरिति । अभीषुं प्रग्रहं इन्द्रियेशं श्रोत्रादीन्द्रियनेतारं मात्राः विषयाः धिषणा बुद्धिः ईशस्य धाम गृहस्थानीयं सत्त्वमन्तःकरणविशेषम् ॥ ४१ ॥

दशप्राणं प्राणदशकमक्षमाहुरिति सर्वत्र योज्यं प्राणापानव्यानोदानसमाननागकूर्मकृकलदेवदत्तधनञ्जयनामानो दश प्राणाः अधर्मधर्मौ पापपुण्यलक्षणौ चक्रे शकटपदस्थानीये अभिमानमहङ्कारलक्षणं जीवं रथिनं पठन्तीत्यन्वयः । शरं तु जीवमित्यत्र तु शब्देनैतत्प्रवृत्तिविशेषभेदं सूचयति न तु स्वरूपभेदम् "प्रणवो धनुः शरो ह्यात्मा" इति श्रुतेः । अथ देवरथस्तस्य वा बुद्धिरिति च परं ब्रह्म ॥ ४२ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

अस्य रथिनो जेतव्यानाह—राग इत्यादिना "अपूज्ये पूज्यबुद्धिस्तु मानः स्त्रिद्भिरुदाहृतः" इति "मानो अभिमानोऽवज्ञे च परिमाणे च पूजने" इति च "अभिमानोऽर्थादिदर्पे ज्ञाने प्रणयहिंसयोः" इति च माया कैतवं रागादय आन्तराः शत्रवः बाह्याः शत्रवः सहोदरा [illegible] शब्देन दुन्दुभ्यादयः सुग्रीववाल्यादयः ते सर्वे शत्रवः [illegible] उपायेन परिहर्तव्या इति शेषः ॥४३॥४४

एवं [illegible] योगमाह—यावदिति । नृकायरथं मनुष्यशरीराख्यरथं "रथ गतौ" इति धातोर्ज्ञानसाधनत्वात्तच्छब्दशब्दितं यावदात्मवशोपकल्पं स्ववशत्वेन कल्पितं धत्ते तावद्गरिष्ठचरणार्चनया महापुरुषश्रीपादपूजनेन निशातं धौतं ज्ञानासिं दधदच्युतो बलं यस्य स तथा अच्युतं बलं यस्य स तथेति वा अस्तशत्रुः निरस्तरागादिशत्रुः स्वाराज्येनैश्वर्येण हृष्टेन तुष्टो विषयालस्बुद्धिमानुपशान्तः [illegible] नोपात्तभगवन्निष्ठ पुरुष [illegible] हृदयेन सर्पनिर्मोकवत् कल्मषं वस्तु जह्यादित्यर्थः [illegible] ४५ ॥

[illegible] मुक्तिरेव न सेत्स्यतीत्याह—नोचेदिति । नोचेदिन्द्रियग्रामं आत्मवशं कृत्वा ज्ञानासिना संसाराऽनुच्छेदः शब्दादिविषयाभिलाषश्चेद्यदि तर्हि असन्तोषिता इन्द्रियहयबुद्धिसूताः प्रमत्तं रागान्धीभूतचक्षुषममुं रथिनं उत्पथमशास्त्रमार्गं नीत्वा शब्दादिविषयलक्षणेषु दस्युषु दुःखाकारेषु चौरेषु निक्षिपन्ति ते विषयचौराः सहयसूतं इन्द्रियबुद्धिसूतमिमं रथमुरुमृत्युभये तमोलक्षणाज्ञानान्धे चक्षुरविषये संसारकूपे क्षिपन्तीत्यन्वयः॥४६॥

ननु, स्वर्गकामो यजेत "इत्यादिवाक्यार्थश्रवणसमनन्तरं तदुक्तकर्मणि प्रवर्तमानदुष्प्रापापारसंसारकूपे पातयन्तीति कथमुच्यते तस्यापि वैदिकत्वेन [illegible] सर्वधर्मपरित्यागस्यावैदिकस्यापि संसारोच्छेद [illegible] त्वं च कथं [illegible] रिति तत्राह—प्रवृत्तं चेति [illegible] भिन्नविषयत्वं दर्शयति— [illegible] "तद्वास्यान्ततः क्षीयन्ते [illegible] परमां [illegible]" [illegible] दिना वैदिकत्वाच्च ॥ ४७ ॥

कीदृशं तत्प्रवृत्तं येनाऽनु [illegible] पुनरावृत्तिः स्यादिति तत्राह, हिंस्रमित्यादिना । अश्वत्थादिद्रव्यच्छेदनात्मकत्वाद्धिंस्रमशान्तिदं मुक्तिविपरीतफलप्रदम् ॥ ॥ ४८ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

आहुरिति युग्मकम् । अधर्मोऽत्र धर्मपरित्यागरूपः सन्न्यासः । तदेवं सर्वस्यां रथसामग्र्यां सत्यामपि धनुरादिकं विना वैयर्थ्यमेवेत्याह-धनुरिति ॥ ४१—४७ ॥

हिंस्रमिति युग्मकम् । सुरावयादिलक्षणं पूर्त्तञ्च प्रवृत्ताख्यामित्यर्थः ॥ ४८—५६ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

यदेव देहेन्द्रियादिकं प्रमत्तस्यानर्थहेतुस्तदेवाप्रमत्तस्य यागिनस्त्वष्टसाधनमितीममर्थम् "आत्मानं रथिनं विद्धि शरीरं रथमेव च" इत्यादि श्रुत्युक्तरथरूपकद्वारेणाह—आहुरिति, षड्भिः। इन्द्रियेशं मनोऽभीषून् रश्मीनाहुः मात्राः शब्दादीन् वर्त्मानि गन्तव्यदेशानाहुः सत्त्वं चित्तं वृहत् देहव्यापि बन्धुरं बन्धनमाहुः चित्तं विना शरीरमनिबद्धं भवतीति भावः । ईशसृष्टमिति बन्धनकर्त्ता त्वीश इति भावः । ईशसृष्टमिति रथादीनां सर्वेषामेव विशेषणं दशविधं प्राणमक्षम् अभिमानमभिमानमयं जीवं रथिनं पठन्ति. प्रणवं गुरुप्रसादरूपमहामूल्यप्राप्तं धनुः शुद्धं जीवं शरं परं [illegible] यथा धनुषा शरो लक्ष्ये निपात्यते तथा प्रणा [illegible] निपात्यत इत्यर्थः । ननु, तर्हि रथादिरूपकस्य [illegible] ब्रह्मणोऽपि लक्ष्यत्वेन शत्रुरूपकत्वमायातं शत्रुत्व [illegible] शरेण भिद्यते युज्यते च तस्य जीवशत्रुत्वम् स्वमायाशक्त्या जीवबन्धकत्वात् सत्यम् । "निभृतमरुन्मनोऽक्षदृढयोगयुजो हृदि यत् मुनय उपासते तदरयोऽपि ययुः स्मरणात्" इत्यरिवाहचरणैव मुनीनां मुक्तिरिति साधर्म्यं व्यनक्ति उभयेषामपि परमेश्वरे शरनिक्षेपकत्वात् परमेश्वरस्तु स्वीयवीररससुखोपकारं ज्ञानान्तर्वर्त्तिगुणीभूतभक्तिकलाश्चाऽऽलक्ष्य उभयेभ्य एव तेभ्यो मोक्षं ददातीति केचित् । अन्ये तु परमात्मनो लक्ष्यत्वेऽपि द्रौपद्यादिस्वयंवरस्यमाधारचक्रवर्तिमीनायमानत्वमेव नत्वन्यथा यथा चार्जुनाद्यास्तं स्वबाहुबलेनैव शरेण भित्वा द्रौपद्यादिकां प्रापुस्तथैव ज्ञानिनोऽपि भक्तिबलेनैव मुक्तिमित्याचक्षते ॥ ४१ ॥ ४२ ॥

यथा च स्वयंवरकन्याप्राप्तिप्रतिबन्धकदुष्टराजन्या बलिष्ठेन हन्यन्ते तथैव भगवद्भक्तिबलेन यतिना ज्ञानासिमादाय रागद्वेषाद्या हन्तव्या इत्याह—राग इति, त्रिभिः । रागद्वेषादयो रज [illegible] क्वचित् परोपकारादयः सत्त्वप्रकृतयः ॥४३॥४४॥

[illegible] म आत्मवश उपकल्प इन्द्रियादिपरिकरो [illegible] तावदेव गरिष्ठानां गुरूणां चरण [illegible] विभ्रत् अच्युतभक्तिबलः सन्नेव निरस्तशत्रुर्भूत्वा स्वाराज्यस्याऽऽनन्दस्य प्राप्त्या तुष्टो भवन्निदं रथादिकं त्यजेदुपयोगाभावादेवेत्यर्थः । अत्र यथासाध्यस्य शत्रुजयस्य स्वाराज्यलाभस्य च सिद्धौ रथादिकात् धनुःशरादिकाच्च पुरुषो वियुज्यते तथा बलात् शरीराच्च वियुज्यते । एवमेव ज्ञानी प्राधानिकादुपाधेर्मुक्तिसाधनाज्ज्ञानाच्च वियुज्य ज्ञानान्तर्भूतया केवलया भक्तिकलया सहित एव परमात्मनि सायुज्यं लभते नतु ततो वियुज्यते तस्याः स्वरूपशक्तिवृत्तित्वेन परमात्मैक्यात् ज्ञानाऽज्ञानयोस्तु मायाशक्तिवृत्तित्वात्तद्द्वयोपेक्षासमुचितैव. अत एव "धनुर्हि तस्य प्रणवं पठन्ति. शरं तु जीवं परमेव लक्ष्यम्" इत्यत्रापि यथा रथादिभ्यो धनुषश्च वियुज्यापि शरः पुरुषबलेन वेगरूपतामापन्नेन सहैव तत्प्रभावादेव लक्ष्यं प्रविशति; तथैव शुद्धजीव देहेन्द्रियादिकमशुद्धजीवं [illegible] स्वरूपामविद्यां त्यक्त्वा मुक्तिसाधनज्ञानकारणप्रणवस्वरूपां विद्यां च त्यक्त्वा अशुद्धजीववर्तिन्या भक्तिकलयैव केवलया सहितस्तद्-

एतदिष्टं प्रवृत्ताख्यं हुतं प्रहुतमेव च ।
पूर्त्तं सुरालयाऽऽरामकूपाऽऽजीव्यादिलक्षणम् ॥ ४९ ॥
द्रव्यसूक्ष्मविपाकश्च[१] धूमो रात्रिरपक्षयः ।
अयनं दक्षिणं सोमो दर्श ओषधिवीरुधः ॥ ५० ॥
अन्नं रेत इति क्ष्मेश ! पितृयानं पुनर्भवः ।
एकैकश्येनानुपूर्वं[२] भूत्वा भूत्वेह जायते ॥ ५१ ॥
निषेकादिश्मशानान्तैः संस्कारैः संस्कृतो द्विजः ।
इन्द्रियेषु क्रियायज्ञान् ज्ञानदीपेषु जुह्वति ॥ ५२ ॥
इन्द्रियाणि मनस्यूर्मौ वाचि वैकारिकं मनः ।
वाचं वर्णसमाम्नाये तमोङ्कारे स्वरे न्यसेत् ।
ओङ्कारं बिन्दौ नादे[३] तं तं तु प्राणे महत्यमुम् ॥ ५३ ॥
अग्निः सूर्यो दिवा प्राह्णः [४]शुक्लो राकोत्तरं स्वराट् ।
विश्वश्च तैजसः प्राज्ञस्तुर्य आत्मा समन्वयात् ॥ ५४ ॥

भाषा टीका ।

और इसी प्राण अक्ष अर्थात् धुरी है अधर्म और धर्म ये दोनो चक्र ( पहिये ) हैं, इसमें अभिमानी जीव चढने वाला रथी है, इसका प्रणव ( ओंकार ) ही धनुष है और शुद्ध जीवस्वरूप ही बाण है, और लक्ष्य ( निशाना ) परमेश्वर है अर्थात् जैसे बाण निशाने में लगता है ऐसे ही जीव को परमेश्वर में लगना चाहिये ॥ ४२ ॥

राग, द्वेष, लोभ, शोक, मोह, भय, मद, मान, अपमान, असूया, माया, हिंसा, मत्सर, ॥ ४३ ॥

रजोगुण, प्रमाद, क्षुधा, निद्रा, ये सब जीतने के योग्य इसके शत्रु हैं। और रजोगुणी तमोगुणी प्रकृति तथा क्वचित् सतोगुणी प्रकृति भी शत्रु है ॥ ४४ ॥

जब तक मनुष्य देह रूप रथ अपने वश का और समर्थ है तब तक ही गुरुजनों के चरणों की सेवा से तीक्ष्ण ज्ञानरूप खड्ग को धारण कर परमेश्वर के बलका आश्रय लेकर सर्व शत्रुओं का अन्त ( नाश ) कर उपशांत होकर ब्रह्मानन्द में मग्न होकर इस रथादिक की उपेक्षा कर देवै ॥ ४५ ॥

यदि अच्युत अर्थात् अपने भक्त के कार्य से कभी न चूकने वाले श्रीगोविन्द के बल का आश्रय न लेवेगा तो दुष्ट इन्द्रियरूप घोडे और बुद्धि रूप सारथि ये सब इस रथी को उत्पथ अर्थात् कुमार्ग में लेजाकर विषयरूप चोरों में छोड देते हैं। वे चोर, घोडा और सारथि सहित इस रथी को बडे मृत्यु के भय वाले संसार रूप घोर अंधकूप में डाल देते है ॥ ४६ ॥

वैदिक कर्म दोप्रकार का है एकप्रवृत्तकर्म, दूसरा निवृत्तकर्म तहां प्रवृत्तकर्म के आचरण से फिर पुनरावृत्ति होती है, और निवृत्ति प्रधान कर्म के आचरण से अपुनरावृत्ति पूर्वक अमृत ( मोक्ष ) को प्राप्त होता है ॥ ४७ ॥

हिंसा प्रधान श्येनयागादि द्रव्यमय काम्य अग्नि होत्रादि ये अशांतिप्रद है, और दर्श, पौर्णमास, चातुर्मास्य पशुयोग सोमयाग ॥ ४८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

हुतं वैश्वदेवम् प्रहुतं बलिहरणम् एतत्सर्वमिष्टमुच्यते एतदेव यदि काम्यमशान्तिदश्च तर्हि प्रवृत्ताख्यमपीत्यर्थः । आजीव्यं प्रपादि ॥ ४९ ॥

प्रवृत्तेन कर्मणा आरोहावरोहाभ्यामावृत्तिप्रकारमाह, द्रव्यस्य चरुपुरोडाशादेः सूक्ष्मो विपाकः परिणामो देहान्तरारम्भको येन-सम्परिष्वक्तो गच्छति य एव श्रुतौ अप्शब्देनोक्तः "इति तु पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति" इति पाठान्तरे द्रव्यशब्देन तेजोमात्राशब्दोक्तानीन्द्रियाणि ऊष्मविपाकशब्देन हृदयाग्रप्रद्योतः तथा च श्रुतिः "स इमास्तेजोमात्राः समभ्याददानो हृदयमेवान्वक्रामदिति तथा तस्य हैतस्य हृदयाग्रं प्रद्योतते तेनैव आत्मा निष्क्रामति" इति धूमादिशब्दैस्तत्तदभिमा-

( १ ) द्रव्यसूक्ष्मविपाकश्च ( २ ) एकैकश्यानुपूर्व्याच्च (४) दिवा वायुरिति विज० पा०। ( ३ ) बिन्दुनादे तु. इति विज० वीर० पा०॥

देवयानमिदं प्राहुर्भूत्वा भूत्वाऽनुपूर्वशः ।
आत्मयाज्युपशान्तात्मा ह्यात्मस्थो न निवर्त्तते ॥ ५५ ॥
य एते पितृदेवानामयने वेदनिर्म्मिते ।
शास्त्रेण चक्षुषा वेद जनस्थोऽपि न मुह्यति ॥ ५६ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

नियो देवता' तत्रापरपक्षः कृष्णपक्षः सोमः सोमलोकः तत्र भुक्तभोगस्यावरोहणप्रकारमाह—दर्श इत्यादि, विपरीत लक्षणा वा विशिष्टभोगक्षयशोकाग्निना देहक्षयेनादर्शनमुच्यते एतदुक्तं भवति भूतसूक्ष्मयुक्तो धूमाद्यातिवाहिकदेवताभिः सोमलोकं प्रापितस्तद्भोगावसाने विलीनदेहो वृष्टिद्वारेणौषधिवीरुधादिसाम्यापत्तिक्रमेण जायते एवं पुनर्भवहेतुः पितृयानं प्रवृत्तकर्ममार्ग इति ॥ ५० ॥

क्ष्मेश, हे भूपते ! पुनर्भवमेवाऽऽह—एकैकश्येन प्रत्येकं क्रमेण भूत्वा तत्तत्सान्निध्यं प्राप्येह भूमौ जायते ॥ ५१ ॥

तत्राधिकारिणमाह—निषेकादीति । अन्यक्लिष्टादिकार्येष्वेवं जन्म लभत इत्यर्थः । निवृत्तकर्मनिष्ठस्योपासनादिविशेषमुपादिशन्नर्चिरादिमार्गेण ब्रह्मलोकप्राप्तिमाह—इन्द्रियेष्वित्यादिना । यद्वा द्रव्ययज्ञेषु हिंसाया दुर्निवारत्वादतिमुख्यं निवृत्तं कर्मैव दर्शयन्नाह—ज्ञानेन दीप्यन्त इति तथा तेषु इन्द्रियव्यापाराणामिष्टापूर्त्तादीनामिन्द्रियतावन्मात्रतां भावयन्तीत्यर्थः । एवमुत्तरत्रापि ॥ ५२ ॥

ऊर्मौ तर्गानादिमत्कूलरूपे मनसि वैकारिकं विकारयुक्तं मनो [illegible] हि मन. कर्तृत्वादिवि[illegible] तद्विशिष्टतत्राच्चः स्वरे [illegible] तं च नादं [illegible] सूत्रा[illegible] प्रज्ञायां ॥ ५३ ॥

[illegible] तत्तदभिमानिन्यो देवतास्ता' प्राप्नोतीति पूर्ववत् [illegible]ऽहः प्राह्णस्तस्यैवान्तः राका शुक्लपक्षस्यान्तः यद्वा प्राह्णा राका इति च पुराणमतम् उत्तरं त्वयनम् स्वराट् ब्रह्मा एव ब्रह्मलोकं गतस्य भोगावसाने मोक्षप्रकारमाह—विश्व इति । विश्वः स्थूलोपाधिः सः स्थूलं सूक्ष्मे विलाप्य सूक्ष्मोपाधिस्तैजसो भवति सूक्ष्मं कारणे विलाप्य कारणोपाधिः प्राज्ञो भवति कारणं च सर्वसाक्षित्वेनान्वयात्साक्षिस्वरूपे विलाप्य तुर्यो भवति तेषां च व्यभिचारिणां साक्ष्याणां लये शुद्ध आत्मा भवति मुच्यत इत्यर्थः ॥ ५४ ॥

यथेतरो भूत्वा निवर्तते तथा न निवर्तत इत्यर्थः ॥ ५५ ॥

वेदेन निर्मिते "ते धूममभिसम्भवन्ति" इत्यादिना "ते अर्चिरभिसम्भवन्ति" इत्यादिना च निश्चयेन विविच्य ज्ञापिते इत्यर्थः । जनस्थोऽपि देहस्थोऽपि न मुह्यति ॥ ५६ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

हुतं वैश्वदेवं प्रहुतं बलिहरणं तदेतत्सर्वं वैदिकं कर्म इष्टमिष्टाख्यम् यद्वानेदव कर्म हिंस्रद्रव्यमयं हिंसा विषयद्रव्यप्रचुरम् । हिंस्रामिति पाठे पश्वादिहिंसागर्भं पुरोडाशादिद्रव्यप्रचुरं च काम्यं स्वर्गादिकामार्थमशान्तिदं पूर्वोक्तरागाद्यनिवृत्तिदं स्यात्तदा प्रवृत्ताख्यमकाम्यं शान्तिदं स्यात्तदा निवृत्ताख्यमित्यर्थः । अथ पूर्त्तसंज्ञकं कर्माह—पूर्त्तमिति । देवालयादिनिर्माणरूपं कर्म पूर्त्तम् आजीव्यमाजीविका ॥ ४९ ॥

तत्र प्रवृत्तधर्मपरायणस्य त्रैवर्णिकस्य तत्फलानुभवाय लोकान्तरारोहणमार्गं फलानुभवाऽवसाने ततः पुनरवरोहणमार्गमेवं सञ्चरतो भूतसूक्ष्मपरिष्वक्तत्वंचाह—द्रव्येत्यादिना सार्द्धद्वयेन । निषेकादिश्मशानान्तैः गर्भाधानादि श्मशानान्तैः संस्कारैः संस्कृतो द्विजस्त्रैवर्णिकः इष्टापूर्त्तदस्तकारी देहत्यागानन्तरं द्रव्यसूक्ष्मविपाकः द्रव्याणां पृथिव्यादिभूतानां सूक्ष्मा विपाकाः सूक्ष्मावस्थाः यस्य सूक्ष्मावस्थपृथिव्यादिभूतयुक्तः भूतसूक्ष्मपरिष्वक्त इति यावत् हे क्ष्मेश, पृथिवीपते ! धूमादयः शब्दास्तदभिमानिदेवतापरा तत्र अपक्षयः अपरपक्षः अयनं दक्षिणं दक्षिणायनं सोमश्चन्द्र इति शब्दः प्रत्येकमन्वेति । धूम इति रात्रिरिति तानेकैकश आनुपूर्व्येण भूत्वा भूत्वा । भूप्राप्तावात्मनेपदीति भवतिरत्र प्राप्त्यर्थकः प्राप्य प्राप्येत्यर्थः । धूमादिक्रमेण चन्द्रं प्राप्य तत्रा तृतमयशरीरयुक्त इष्टादिकर्मफलमनुभूय ततः दर्शः दर्शस्य चन्द्रकलाक्षयहेतुत्वादिना दर्शशब्देन चन्द्रं प्राप्तस्याऽमृतमयशरीरनाशो लक्ष्यते विनष्टामृतमयशरीर इत्यर्थः । चन्द्रमसः स्थानात् क्रमशऔषध्यादीन् प्राप्येह लोके जायते एतच्च पितृयाणं पुनर्भवहेतुरित्यर्थः । यद्वा चन्द्रपर्यन्तं पितृयानं ततो रेतः [illegible]र्यन्तं पुनर्भवयानमित्यर्थः । तत्र दक्षिणायनसोमयोर्मध्ये पितृलोकः आकाशश्च द्रष्टव्यः ओषधेः पूर्वं क्रमेणाकाशवायुधूमाभ्रमेघवर्षाणि द्रष्टव्यानि तत्रारोहणं धूमरात्र्यपरपक्षदक्षिणायनषण्मासपितृलोकाकाशचन्द्रक्रमेण. अवरोहणन्तु चन्द्रमसः स्थानादाकाशवायुधूमाभ्रमेघवर्षौषधिवीरुदन्यतरान्नरेतःक्रमेणेत्यर्थः । तथा च श्रूयते छान्दोग्ये "अथ य इमे ग्रामे इष्टापूर्त्ते दत्तमित्युपासते ते धूममभिसंभवन्ति धूमाद्रात्रिं रात्रेरपरपक्षमपरपक्षाद्यान् षड्दक्षिणेति मासांस्तानेवैते सम्वत्सरमभिप्राप्नुवन्ति मासेभ्यः पितृलोकं पितृलोकादाकाशमाकाशाच्चन्द्रमसमेष सोमो राजा तद्देवानामन्नं तं देवाभक्षयन्ति तस्मिन् यावत्सम्पातमुषित्वाथैतमेवाध्वानं पुनर्निवर्त्तन्ते यथेतमाकाशमाकाशाद्वायुं वायुर्भूत्वा धूमो भवति धूमो भूत्वा अभ्रं भवति अभ्रं भूत्वा मेघो भवति मेघो भूत्वा प्रवर्षति

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

इह व्रीहियवा ओषधिवनस्पतयस्तिलमाषा जायन्तेऽतो वै खलु दुर्निष्प्रपतरं यो यो ह्यन्नमत्ति यो यो रेतः सिञ्चति तद्भूय एव भवति तद्य इह रमणीयचरणा अभ्याशो ह यत्ते रमणीयां योनिमापद्येरन् ब्राह्मणयोनिं वा क्षत्रिययोनिं वा वैश्ययोनिंवा चण्डालयोनिंवा अथ य इह कपूयचरणा अभ्याशो ह यत्ते कपूयां योनिमापद्येरन् श्वयोनिं वा सूकरयोनिंवा चाण्डालयोनिं वा" इति. तत्रारोहणदशायां धूमाद्यभिमानिदेवतालोकगमनमेव धूमादिभाव.,अवरोहणे त्वाकाशवायुधूमाभ्रमेघवर्षेषु तद्भावोनाम तत्संसर्गकृततत्सादृश्यापत्तिरेव "तत्स्वाभाव्यापत्तिरुपपत्ते.३।१।२२। इति शारीरकन्यायात् व्रीह्यादिभावोनाम जीवान्तराधिष्ठितव्रीह्यादिसंश्लेषमात्रम्"अन्याधिष्ठिते पूर्ववदभिलापात्३।१।२४। इति न्यायात् एवंवान्वयः। द्रव्यसूक्ष्मविपाक इति. द्रव्यसूक्ष्मविपाकादय इत्येते सोमपर्यन्ताः पितृयानं दर्शादयो रेतःपर्यन्ताः पुनर्भवः गर्भाधानादिश्मशानान्तैः संस्कृत इष्टादिकारी आनुपूर्व्यात्क्रमेण भूत्वाभूत्वा राज्यादीन् प्राप्य प्राप्य पुनरिह जायते इति ॥ ५० ॥ ५१ ॥

अथापुनर्भवं देवयानं वक्तुं तेन जिगमिषोर्निवृत्तधर्मनिष्ठस्य तावत् कृत्यमनुसन्धानमाह–इन्द्रियेष्विति ज्ञाभ्यामाज्ञानदीपेषु ज्ञानदीपकेषु चक्षुरादीन्द्रियेषु क्रियायज्ञान्कर्मेन्द्रियव्यापारान् जुह्वति देवयानेन जिगमिषव इति शेषः। चक्षुरादिभिर्ज्ञानेन्द्रियैः पाणिपादादिकर्मेन्द्रियाणि नियच्छेयुरित्यर्थः। इन्द्रियाणि चक्षुरादीनि ज्ञानेन्द्रियाणि सङ्कल्पविकल्पादिरूपोर्मिमति मनसि जुह्वति मनसा तानि नियच्छेयुरित्यर्थः। वैकारिकं सत्त्वोत्तरं वाचि शास्त्रात्मिकायां मनः मनसः उच्छास्त्रप्रवृत्तिं निरुंध्यादित्यर्थः। वाचं वर्णसमाम्नाये पञ्चाशदक्षरात्मिकामनुसन्दधीरन् वर्णसमाम्नायमोङ्कारेऽन्तर्गतं विदु. तमोकारं बिंदुनादे चतुर्थ्यां मात्रायां बिन्दुनादश्च प्राणे प्राणसहचारिणि मकारवाच्ये जीवे त्वाचकत्वेनान्तर्भावयेयुः। अमुं जीवं महति महदात्मनि परब्रह्मणि समर्पयेयुरिति मुमुक्षोरनुसन्धानप्रकारउक्तः ॥ ५२ ॥ ५३ ॥

अथ तस्य गतिहेतुभूतमर्चिरादिमार्गमंशतो दर्शयति–अग्निरिति। अग्न्यादिशब्दास्तदभिमानिदेवतापरा. अत्र न क्रमविवक्षा श्रौतक्रमविरोधात् ननु सूर्योऽग्नेरनन्तरं दिवसादिभ्यः पूर्वं श्रूयते किन्त्वेवम्"तद्यइत्थं विदुर्ये चेमेऽरण्ये श्रद्धां तप इत्युपासते तेऽर्चिषमभिसंभवन्त्यर्चिषोऽहरह्न आपूर्यमाणपक्षाद्यान्षडुदङ्ङेतिमासांस्तान्मासेभ्यः संवत्सरं सम्वत्सरादादित्यमादित्याच्चन्द्रमसं चन्द्रमसो विद्युतं तत्पुरुषो ऽमानवः स एनान् ब्रह्मगमयत्येष देवयानः पन्थाः" इति । अत्र सम्वत्सरादनन्तरं वायुं विद्युतोऽनन्तरं वरुणेन्द्रौ च जानीयात् कौषीतकिब्राह्मणे "एतं देवयानं पन्थानमापद्याऽग्निलोकमागच्छति स वायुलोकं स वरुणलोकं स आदित्यलोकं स इन्द्रलोकं स प्रजापतिलोकम्" इति श्रवणात्. स्वराडत्रामानवः प्रजापतिर्वा अयं च सकलश्रुत्यविरोधेन निर्णीतः क्रमो वरदगुरुभिरभिहितः "अग्निरहःसितपक्षानुदगयनाब्दमरुदर्केन्दून् । अपि वैद्युतवरुणेन्द्रप्रजापतीनातिवाहिकानाहुः"इति. पूर्वान्हेराका चातधीतशाखान्तरेष्वामन्तव्यौ उत्तरम् उत्तरायणम् एवं मुक्तप्राप्यभगवल्लोकमार्गो दर्शितः तत्र प्राप्यस्य भगवतश्चतुर्व्यूहविशिष्टतामाह—विश्व इति। यथा सर्वं ज्ञसंहितायाम् "सृष्टिस्थित्यन्तकारिण्यः शक्तयस्तत्र ऊर्जिताः" इत्युपक्रम्य—

"अकारशक्तिर्विश्वाख्या उकाराख्या तु तैजसी ।
मकारशक्तिः प्रज्ञाख्या तासां रूपं पुनःशृणु" ॥

इत्यादिना जाग्रदाद्यवस्थान्वयादिकमुक्त्वा—

"एतास्तिस्रो दशास्तिस्रः शक्तीः संप्रीणयन्ति ताः।
अनिरुद्धादिरूपास्ताः भोक्तुः शक्तीर्विचिन्तयेत् ॥
अर्द्धमात्राऽधिया दिव्याऽप्रकाशार्थप्रकाशिका।
वासुदेवमयीं शक्तिं विद्धि तामनुपस्कृताम्" ॥

इत्युक्तम् अतः सृष्ट्यधिष्ठाता जाग्रदवस्थानिर्वाहकोऽनिरुद्धो विश्व. स्थित्यधिष्ठाता स्वप्ननिर्वाहकः प्रद्युम्नस्तैजसः संहृतिशक्त्यधिष्ठाता सुषुप्तिनिर्वाहकः संकर्षणः प्राज्ञः एते चाऽकारोकारमकारवाच्याः। सर्वकारणभूतः सर्वशक्तिर्मोक्षप्रदः प्रणवार्धमात्रावाच्यो वासुदेवस्तुरीयश्चतुर्थमात्रासहितप्रणवस्य पूर्वमनुसन्धेयतया प्रकृतत्वादेवं तस्यार्थः फलदशायां प्राप्यतयोक्तः। इदं प्रदर्शनार्थमुक्तम् । परव्यूहविभवादिसर्वोऽवस्थाविशिष्टो भगवान् मुक्तप्राप्य इत्यर्थः । समन्वयात्सर्वेषां व्यूहादीनां प्राप्यान्तर्भावादित्यर्थ. ॥ ५४ ॥

इदं देवयानं प्राहुर्वेदान्ता इति शेषः। आत्मयाजी परमात्मोपासक अनुपूर्वशः क्रमेणाऽर्चिरादीन् प्राप्य उपशान्तः निःशेषनिवृत्त आत्मा प्रकृतिर्यस्य तादृशः आत्मनि परमात्मनि स्थितः आधेयतया स्थितः आत्मन्याविर्भूतापहतपाप्मत्वादिगुणाष्टकयुक्तब्रह्मात्मके स्वस्वरूपे स्थितः उक्तविधब्रह्मशेषत्वेनात्मानमनुभवन्नित्यर्थः। पुनस्ततो न निवर्त्तते एवं देवयानपथगोभूत्वा न निवर्त्तते जन्ममरणादिकं तद्धेतुभूतपुनरावृत्तिं च न प्राप्नोतीत्यर्थः ॥ ५५ ॥

"नैते सृती पार्थजानन्योगी मुह्यति कश्चन ।
तस्मात्सर्वेषु कालेषु योगयुक्तो भवार्जुन !" ॥

इति श्रीभगवदुक्तमार्गद्वयचिन्ताफलमाह–य एत इति। यः पुमान्मुमुक्षुर्वेदनिर्मिते वेदबोधिते एते पितृदेवानां अयने वर्त्मनी देवयानपितृयाने शास्त्रात्मकेन चक्षुषा वेद सोऽपि पुमान्नमुह्यति जनस्थोपीऽति पाठे, देहस्थोऽपीत्यर्थः। स्वानुष्ठेयभगवद्भक्तियोगेन मोहं न प्राप्नोतीत्यर्थः ॥ ५६ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

हुतं वैश्वदेवं प्रहुतं हुत्वा बलिहरणमेतद्द्वयमिष्टं सुरालयादिविपाकान्ताः पूर्तम् आजीव्याः सर्वसेव्याः कुट्टिममूला विस्तृतशाखाः तरवः ॥ ४९ ॥

द्रव्यसूक्ष्मविपाकः पुरोडाशादिद्रव्यजनितापूर्वं फलं धूम इत्यादिना धूमादिशब्दवाच्यादेवताश्चाऽत्र गृह्यन्ते इति ज्ञातव्यम् अपक्षयः कृष्णपक्षः सोमश्चन्द्रः पर्वदर्शशब्देन तत्प्रयुक्तकर्मविशेषो ऽत्र तु तदभिमानिदेवा उच्यन्ते. अनेन मार्गेण गतस्य

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

गतिप्रकारमाह—ओषधीति । पितृयानं गतः अम्बुवृष्ट्यादिद्वारेण भुवं प्राप्तः ओषध्यादिर्भवति ॥ ५० ॥

अन्नरूपेण पितरं प्रविश्य रेतोरूपेण मातरं चेति पुनः पुनर्भवतीति पुनर्भवः, स्यादिति शेषः । न केवलमोषध्यादिभावोऽस्य, किन्तु धूमादिभावोऽप्यस्तीति भावेनोक्तं विशदयति—एकैकस्येति । अत्रानुपूर्व्यात्क्रमात् । "अथ इमे ग्राम इष्टापूर्ते दत्तमित्युपासते ते धूममभिसम्भवन्ति'इत्युपक्रम्य 'यो यो ह्यन्नमत्ति यो यो रेतः सिञ्चति तद्भूय एव भवत्यन्ते" अनेनायमर्थः प्रपञ्च्यते ॥५१॥

अत्र च "त इह रमणीयचरणाभ्याशो ह यत्ते रमणीयां योनिमापद्येरन् ब्राह्मणयोनिं वा" इत्यादेरभिप्रायं दर्शयति—निषेकादीति । निषेको रेतःसेकः अनेनापि पुनर्भव इत्यस्य भावो विवृत इति ज्ञायते देवयानापरपर्यायार्चिरादिमार्गाभिमानिदेवचक्रं वदिष्यंस्तन्मार्गगतावित्थंभूतसाधनमाह—इन्द्रियेष्विति । क्रियायज्ञान् क्रियात्मकयज्ञाभिमानिदेवान् ज्ञानं दीपयन्ति जनयन्तीति ज्ञानदीपानि ज्ञानमेव दीपो येषां तानि तथा तेष्विन्द्रियेष्विन्द्रियाभिमानिदेवेषु जुहोति हवनं नाम तत्तद्वशत्वेन स्मरणं, तदुक्तम्—

"यज्ञाभिमानिनो देवान् स्मरन्तीन्द्रियमानिनम् ।
वशगांस्तान्मनो मानिसुरेन्द्रस्य वशे स्थितान् ॥
वेदात्मिकायाः पार्वत्यास्तं तां रुद्रवशे स्थिताम् ।
वर्णत्रयात्मके रुद्रं शेषे तु प्रणवात्मके ॥
बिन्दुरूपे सरस्वत्यां तं तां तस्यां पुनर्न्यसेत् ।
मूलस्थनादरूपायां तां वायौ तं जनार्दने ।
प्रकृत्यामथवा प्राणं तामेव पुरुषोत्तमे" ॥

इति ॥ ५२ ॥

इन्द्रियाणि तदभिमानिदेवान्मनसि मनोभिमानीन्द्रवशे तानेवं पूर्ववत्स्मरन्तीति शेषः । विशिष्टाकारपराक्रमलक्षणं कर्मास्यास्तीति वैकारिकं मनो ऽभिमानिनमिन्द्रं वाचि वेदाभिमानिन्यां पार्वत्यां तामुमां वर्णसमाम्नाये पञ्चवर्णस्वरक्रमाणां सम्यगाम्नायः सम्प्रदायो ऽनन्यथापाठलक्षणो यस्मिन् स तथा अकारोकारमकाराणां त्रयाणां वर्णानां समाम्नायो मेलनं यस्मिन् ओंकारे स तथा तस्मिन् तदभिमानिनि रुद्रे स्थितामिति शेषः । तुशब्देन भार्याभर्तृभावं पूर्वस्माद्विशिनष्टि; तं रुद्रम् ओङ्काराभिमानिनि स्वं परमात्मानं रमयतीति स्वरः शेषः तस्मिन् स्थितं न्यसेत् मनस्तद्विषयं करोति ॥ ५३ ॥

तमोङ्कारं शेषं बिन्दुनादे बिन्दुनादरूपसरस्वत्यां तदाधारत्वेन स्थितं तुशब्देन पूर्वयोरेकत्र त्वमत्र स्वस्वामिभावं सूचयति-तां बिन्दुरूपां मूलाधारस्थनादरूपायां प्रकृतिनाम्न्यां सरस्वत्यामेकीभूय स्थितिशब्देन तयोरेकत्वं दर्शयति—तं तां नादरूपां प्राणं प्रकृष्टानन्दरूपं वायौ स्थिताम् अत्रापि तुना भार्याभर्तृभावमाह—अमुं वायुं महति जनार्दने स्थितं स्मरेत् अथवा प्राणनामानं वायुं महति प्रधाने प्रकृतिशब्दवाच्ये स्थितं अमुमक्षरं प्रकृतिनामानं महति पुरुषोत्तमे स्थितामिति महति शब्दो द्विरावृत्त्या व्याख्येयः एतत्सर्वं बिन्दुरूपसरस्वत्यां तं तां तस्यां पुनर्न्यसेत् इत्यादिपूर्वोक्तेन मानेन सविस्तरमुक्तम्. इदानीमर्चिरादिमार्गे देहादुत्क्रान्तस्य ज्ञानिनः प्राप्यान् देवानाह—अग्निरिति । दिवा दिवसाभिमानी शुक्ल शुक्लपक्षाभिमानी राका पूर्णमास्यभिमानिनी उत्तरमुत्तरायणाभिमानिनी स्वराडिन्द्रः ॥ ५४ ॥

अत्र न केवलमग्न्यादय एव प्राप्याः, अपि तु विश्वाद्या अनिरुद्धाद्या भगवतो मूर्तिविशेषाश्च प्राप्या इत्याशयेनाह—विश्व इति । अथशब्देनाऽनिरुद्धादिग्रहणं तेषामुभयेषां विष्णुरूपत्वं सूचयति,

"विश्वाद्या अनिरुद्धाद्यास्त द्विधा संप्रकीर्तिताः ।
विष्णुरूपास्तदन्ये च तान्सर्वान्याति मोक्षग." इत्युक्तेः

किञ्चान्ये च दिवस्पुत्रास्तन्निकटवर्त्तिनः सन्ति ते ऽप्यथ शब्देन सूचिताः—

"तदन्ये च दिवस्पुत्राः सर्वे च द्युसमीपगाः ।
ते दिवं प्रापयन्त्येनं स वायुः स हरिं पृथक् ॥
विश्वादिरूपं तुर्यश्च वासुदेवश्च नापरः" ।

इत्युक्तेः गतिक्रमोऽप्यनेन ज्ञातव्य. । न परं विश्वादिकमेवाप्तव्यं किन्तु तन्मूलरूपो हरिराप्तव्य इत्याह—आत्मेति । आत्मा विश्वादिरूपो हरि. सम्यगन्वीयते अनेन ज्ञानेनेति समन्वयः तदुक्तं स हरिं पृथग्विश्वादिरूपमिति वासुदेवो तुर्यादन्यो नेत्याह—तुर्य इति । तुर्य आत्मा वासुदेवः "अत सातत्यगमने" इति धातोः सततगमनं व्याप्ति. "यश्चाऽस्य सततोभाव." इति श्रुतेः सर्वत्र वसनशीलत्वात् क्रीडारूपत्वात् जपाकुसुमाद्युपाध्यनाविद्धस्फटिकवन्निर्मलज्ञानरूपत्वाद्वासुदेव.—

"शुद्धस्फटिकसंकाश वासुदेव निरञ्जनम्" इति स्मृतिः ।
एकात्म्यप्रत्ययं सारं प्रपञ्चोपशमं शिवम् ।
अद्वैतं तुर्यं मन्यन्ते स आत्मा स विज्ञेयः" ॥ इति स्मृतेः

तुर्यश्च वासुदेवश्च नापर इति च किञ्च मार्गस्थानां सर्वेषां देवानामपि परमात्मनि समन्वयो ऽस्तीति ज्ञापनाय समन्वय इत्युक्तम् एतस्य नाम निर्दिशति । देवयानमिति । "संवत्सरो वै प्रजापतिस्तस्यायने दक्षिणं चोत्तरं च' इत्यारभ्य 'एतस्मान्न पुनरावर्तन्त इत्येष निरोध." इत्यन्तं वेदान्ताः प्राहुरित्यन्वयः । अस्यफलमाह भूत्वेति । अनुपूर्वशः क्रमेणोपर्युपरि सुखादिभिरधिको भूत्वात्मस्थो मुक्तो न निवर्तत इत्यन्वयः कुत आत्मयाजी परमात्मपूजकत्वात् पुनरावृत्तीच्छापि तस्य नास्तीति भावेनाह, उपशान्तात्मेति. पूर्णानन्दस्वरूपः धूमादिमार्गवदस्यापि पुनरावृत्तिभीरस्ति किमित्यतो भूत्वेति ॥ ५५ ॥

ननु, किमेतज्ज्ञानेन प्रयोजनम् ? येनावश्यं वक्तव्यतामियादिति तत्राह-य एते इति । जनस्थो देहस्थः "तद्य इत्थं विदुर्ये त्रमरण्ये श्रद्धातप इत्युपासते तेऽर्चिषमभिसम्भवन्ति" इत्यादिना शास्त्रेण न केवलं मोहं प्राप्नोति नीचां गतिमपि न यातीत्यतोऽपीत्युक्तं "भक्तिमान्मार्गवित्रैव नीचां गतिमवाप्नुयात्" इतिस्मृतेः ॥ ५६ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

हुतं वैश्वदेवं प्रहुतं बलिहरणम् एतत् सर्वमिष्टमुच्यते आ-जीव्य प्रपादि ॥४९॥

प्रवृत्तेन कर्मणा आरोहावरोहाभ्यामावृत्तिप्रकारमाह–द्रव्येति। सोमपर्यन्तम् आरोहणे सोपानानि दर्शयति–प्रथमं द्रव्यस्य चरु-पुरोडाशादेः सूक्ष्मो विपाकः परिणामः देहान्तरारम्भक येन परि-ष्वक्ता गच्छति य एव श्रुतावपशब्देनोक्तस्तं प्रथमं प्राप्नोति तथा हि "इह तु पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति" इति. द्रव्यसूक्ष्म-विपाकश्चेति पाठे द्रव्यशब्देन तेजोमात्राशब्दोक्तानीन्द्रियाणि ऊष्म-विपाकशब्देन हृदयाग्रप्रद्योतः तदा च चरकर्मसाध।तनीन्द्रियाणि प्रथमं प्राप्नोति ततो निर्याणकाले हृदयाग्रप्रद्योतं प्राप्नोति ततो धूम-मित्येव क्रमः। तथा च श्रुतिः "य इमास्तेजो मात्रा समभ्याद-दानो हृदयमेवानुचंक्रमति" तथा च इति तस्य "हैतस्य हृदय-स्याग्रं प्रद्योतते तेनैवात्मा निष्क्रामति" इति धूमादिशब्दैस्तत्तदभि-मानिन्यो देवता उच्यन्ते ततो धूमाभिमानिनी देवतां प्राप्नोति ततो रात्र्यभिमानिनीमित्येवं अपक्षयः कृष्णपक्षः सोमः चन्द्र-लोकः धूमाद्यातिवाहिकदेवताभिः सोमं लोकं प्रापितो भोगान् भुङ्क्ते इत्यर्थः। तत्र भुक्तभोगस्य तस्यावरोहप्रकारमाह–दर्श इति। चन्द्रक्षयवत्या अमावास्यया भोगदेहक्षयो लक्षितः ततो वृष्ट्या-दिद्वारेण ओषधिवीरुधादि ॥ ५० ॥

ततोऽन्नं तदेव भुक्तं रेतः हे नरेश! उक्तमवरोहप्रकारं व्याचष्टे–एकैकश्येनेति। क्रमेणौषध्यादिकं भूत्वेत्यर्थः ॥ ५१ ॥

तत्र मुख्यं कर्माधिकारिणमाह–निषेकादिष्विति। प्रवृत्तकर्म-निष्ठमुक्त्वा निवृत्तिकर्मनिष्ठस्यार्चिरादिमार्गेण ब्रह्मलोकप्राप्तिमाह, इन्द्रियेषु ज्ञानेन दीप्यन्ते इति तेषु क्रियायज्ञान् जुहोति इष्टा-पूर्त्तादीनां क्रियायज्ञानाम् इन्द्रियव्यापारमयत्वादिन्द्रियतावन्मा-त्रतां भावयतीत्यर्थः। एवमुत्तरत्रापि ऊर्मौ शोकमोहादितरङ्गा-त्मके तादृश मनो वाचि विध्वचादिलक्षणायां तथैव मनः कर्त्तृ-त्वादिविकारवद्भवतीत्यर्थ । वर्णानां समाम्नाये समूहे तद्विशे-षत्वाद्वाचः स्वरे स्वरत्रयात्मकं तच्च बिन्दुं नादे तच्च नादं प्राणे-सूत्रात्मनि अमुं प्राणं महति ब्रह्मणि ॥ ५२ ॥ ५३ ॥

अग्निरिति तत्तदभिमानिन्यो देवताः ताः प्राप्नोतीति पूर्ववत् दिवा अहः अन्हः तस्यैवान्तः शुक्लः शुक्लपक्षः राका तस्यै-वान्तः उत्तरमुत्तरायणं स्वराट् ब्रह्मा एवं ब्रह्मलोकं गतस्य तस्य भोगावसाने मोक्षप्रकारमाह—विश्वः स्थूलोपाधिः स्थूलं सूक्ष्मे प्रविलाप्य सूक्ष्मोपाधिस्तैजसो भवति सूक्ष्मं च कारणे प्रविलाप्य कारणोपाधिः प्राज्ञो भवति कारणं च सर्वसाक्षित्वेनान्वयात् साक्षिस्वरूपे विलाप्य तुर्य्य आत्मा भवति मुच्यत इत्यर्थः ॥ ५४ ॥

अर्चिरादिमार्गस्थो भूत्वा अनुपूर्वशः आनुपूर्व्यक्रमेण ॥५५॥

वेदेन निर्मिते "तजना धूममभिसम्भवन्ति" इत्यादिना "तेऽर्चि-रभिसम्भवन्ति" इत्यादिना च जनस्थोऽपि देहस्थोऽपि ॥ ५६ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

हुतं वैश्वदेवं प्रहुतं बलिहरणमितीष्टम् पूर्त्तन्तु सुरालयादि तत्राजीव्यं जलान्नदानादि एतत् प्रवृत्ताख्यम् भवति ॥ ४९ ॥

प्रवृत्तकर्मफलं जन्ममरणलक्षणं संसारं धूममार्गारोहावरो-हाभ्यां दर्शयति–द्रव्येत्यादिद्वाभ्याम्। द्रव्यस्य चरुपुरोडाशादेः सूक्ष्मो विपाकः परिणामो देवादिदेहारम्भको भूतसूक्ष्मात्मक-स्तेन तदावृतो जीवो लक्ष्यते धूमादिशब्दैस्तत्तदभिमानिन्यो देवताः बोध्याः अपक्षयः कृष्णपक्षः सोमः सोमलोकः भूतसूक्ष्मावृतो जीवः धूमाद्यातिवाहिकदेवताभिः सोमलोकं नीतो भोगान्भुङ्क्ते स पुनर्भोगावसाने यथेह देहं प्राप्नोति तथाऽवरोहप्रकारं सूचयति, दर्श इति। दर्शे चन्द्रो यथा अदृश्यो भवति तथा अदृश्यः विलीन-देवदेह इत्यर्थः। उपमादीनां लोपादत्र लुप्तोपमालङ्कारः ततो मेघा-दिद्वारा ओषधिवीरुधः ओषध्याद्याश्लिष्टो भवति ॥ ५० ॥

ततोऽन्नं भवति अन्नसंश्लिष्टो भवति ततो रेतो भवति अन्ने पितृभुक्ते तद्वीर्यसंश्लिष्टो भवति एवमेकैकश्येव प्रत्येकं क्रमेणा-ऽनुपूर्वं भूत्वा भूत्वा तत्तत्संश्लेषं प्राप्य इह मातृयोनौ जायते हे क्ष्मेश! इति पितृयानं पुनर्भवोपलक्षितजन्ममरणप्रवाहलक्षणसं-सारहेतुरित्यर्थः ॥ ५१ ॥

तदधिकारिणमाह–निषेकादीत्यर्द्धेन। अथ निवृत्तकर्मनिष्ठा देव-यानेन परब्रह्मभावाप्तिलक्षणं मोक्षं प्राप्नुवन्तीति वक्तुं तेषां स्थूल-देहत्यागवेलायां यत्कृत्यं तदाह–इन्द्रियेष्विति, द्वाभ्याम्। ज्ञानेन जीवेन दीप्यन्ते इति तथा आत्मप्रकाशितेषु इत्यर्थः। क्रियायज्ञान् क्रिया मुमुक्षुयोग्यं प्रत्यहमनुष्ठेयं निवृत्तं कर्म तद्रूपान् यज्ञान् भगवदाराधनात्मकान् जुहोति इन्द्रियायत्तान् भावयन्ति ॥ ५२ ॥

इन्द्रियाणि ऊर्मौ इन्द्रियाणां प्रवर्त्तकं ऊर्मिरूपं तत्तत्सङ्क-ल्परूपं यन्मनस्तस्मिन् वैकारिकम् ऊर्मिरूपं मनः वाचि उपदेश-विधौ मनसो नियोजकायां च वर्णसमाम्नाये वेदे तं स्वरे ओङ्कारे ओंकारं बिन्दौ तन्नादे तं प्राणे भगवन्निश्वासे ऽमुं प्राणं वेदस्य पूर्वरूपं महति "एतस्यैव महतो भूतस्य निश्वसितं यदृग्वेदः" इत्या-दिश्रुतिप्रोक्ते परे ब्रह्मणि जुहोतीत्यन्वयः ॥ ५३ ॥

अथैवंविधा येन मार्गेण भगवन्तं प्राप्नुवन्ति तमेकदेशकथ-नतः सूचयति–अग्निरित्यर्द्धेन। अग्निः सूर्यः दिवा दिनाभिमानी देवः प्राह्णस्तस्यैवान्तस्तदन्तर्गत एव बोध्यः शुक्लपक्षः राका तस्यैवा-न्तर्भूता सम्पूर्णचन्द्रा पूर्णमासी धान्यविवक्षया पृथङ्निर्देशः उत्तरमुत्तरायणम् स्वराट् प्रजापतिः एवं मार्गं सूचयित्वा गन्तुः स्वरूपं सर्वावस्थासाक्षित्वेन दर्शयति—विश्व इत्यर्द्धेन। विश्वो जागृदवस्थासाक्षी स एव तैजसः स्वप्नाऽवस्थासाक्षी स एव प्राज्ञः सुषुप्तवस्थासाक्षी अत एव तिसृषु अवस्थासु समन्वयात् अनुगत-त्वात् तुर्यः अवस्थात्रयभिन्नः आत्मा जीवात्मेत्यन्वयः। अग्न्याद्यव-यवान् मार्गः सर्वावस्थासाक्षी ज्ञानस्वरूपो गन्ता इति फलितो-र्थः। क्रमस्तु विद्वान् स्थूलशरीरान्मूर्द्धन्यनाड्या निष्क्रम्य सूर्यर-श्मीनारुह्य यदा परं पदं गन्तुमिच्छति तदार्चिषोऽभिमानिनाऽऽ-तिवाहिकेन सुसत्कृत्य दिनाभिमानिनं नीतस्तथैव तेन पक्षाभिमा-निनं तेन च षण्मासाभिमानिनं तेन संवत्सराभिमानिनं तेन वायुं

आदावन्ते * जनानां सद्वहिरन्तः परावरम् ।
ज्ञानं ज्ञेयं वचो वाच्यं तमो (१) ज्योतिस्त्वयं स्वयम् ॥ ५७ ॥
(२) आबाधितो ऽपि ह्याभासो यथा वस्तुतया स्मृतः ।
दुर्घटत्वादैन्द्रियकं तद्वदर्थविकल्पितम् ॥ ५८ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

तेन स्वस्मिन् छिद्रं दत्वाऽऽदित्यं तथैव तेन चन्द्रमसं तेन विद्युदभिमानिनं देवताविशेषं नीतस्ततश्च वरुणेन्द्रप्रजापतीन् प्राप्य प्राकृतमण्डलं निर्भिद्य विरजां प्राप्नोति तदा परस्मिन् लिङ्गशरीरं हित्वा तां नदीं तीर्त्वा परब्रह्मलोकं प्रविश्य परब्रह्मसाधर्म्यं प्राप्नोतीति ॥ ५४ ॥

आत्मयाजी परमात्मनि तदंशत्वेनात्मनिक्षेपकारी पूर्वोक्तलक्षणो गत्वा अग्न्यादिकमनुपूर्वशो भूत्वा भूत्वा येनात्मस्थ' सुक्तगत्य परमात्मस्थः सन् न निवर्त्तते तदिदं देवयानं प्राहुरित्यन्वयः ॥ ५५ ॥

अनयोर्मार्गयोर्हेयोपादेययोर्ज्ञानमात्रेण बद्धो ऽपि विगतमोहो भवति किमुत हेयं विहायोपादेयेन मोक्षं लब्धा न विमुह्यतीत्याह, य इति। "ते धूममभिसम्भवन्ति" इत्यादिना "तेऽर्चिषमभिसम्भवन्ति" इत्यादिना च वेदेन निर्मिते निर्णीते पितृदेवानां अयने मार्गौ यो वेद स जनस्थो जनानां मध्येवर्त्तमानो ऽपि बद्धावस्थायामपीत्यर्थः। न विमुह्यति पितृयाने रुचिं देवयाने रुचिं च न करोति किमुत मुक्त. ॥ ५६ ॥

भाषा टीका।

इन प्रहुत अर्थात् वैश्वदेव, बलिहरण, ये सब कर्म इष्ट नाम से प्रसिद्ध है, और मंदिर बगीचा कूप तडागादि कर्मों को आपूर्त कहते हैं और यही सब कर्म कामना से किया जाय तो प्रवृत्तकर्म कहाते है ॥ ४६ ॥

द्रव्ययज्ञका फल यही है कि--याज्ञिकपुरुष चरुपुरोडाशादि के सूक्ष्म विपाक अर्थात् शरीरान्तर से धूमाभिमानी देवके लोक को जाताहै, वहांसे कृष्णपक्ष के अभिमानी देवके लोक को जाता है, वहां से दक्षिणायन के अभिमानी देवलोक को जाताहै, वहांसे सोमलोक को जाताहै, इस प्रकार भोग भोगने के पश्चात् विलीनदेह होकर वृष्टिद्वारा औषधि वीरुधादि के साम्यको प्राप्तहोकर, हे राजन्! अन्न वीर्य आदि क्रमसे फिर इसी संसार में उत्पन्न होताहै बस इसी प्रकार प्रवृत्तकर्म के आचरण से इसी प्रकार हो होकर फिरफिर जन्म लेताहै ५० ५१।

निषेकसे आदि लेकर श्मशान्त संस्कारो से संस्कृत द्विज लोग ज्ञान के प्रकाशक इन्द्रियों में क्रिया यज्ञों को हवन करते है अर्थात् ज्ञानेन्द्रियों से कर्मेन्द्रियों के व्यापारों का नियमन करते हैं ॥ ५२ ॥

और ज्ञान इन्द्रियों संकल्पात्मक मन में और सात्विक मन को शास्त्ररूप वाणी में और वाणी को पश्चाशत् अक्षरात्मक वर्ण समुदाय में उसको अक्षरात्मक ओंकार मे उसको चतुर्थी मात्रा बिन्दुनादमे उसको प्राण सहचारी जीवमें न्यास करे अर्थात् अनुसन्धान करे ॥ ५३ ॥

इस प्रकार निवृत्त कर्मानुष्ठानी ज्ञानी पुरुष अर्चिरादि मार्ग से जाते समय प्रथम अग्नि लोक को जाता है फिर सूर्य लोक को पश्चात् दिवसाभिमानी देव के लोक को फिर शुक्ल पक्षाभिमानी देव के लोक को अनंतर उत्तरायणाभिमानी देव के लोक को, इत्यादि क्रम से मोक्ष में प्राप्त होकर स्वराट् होता है ॥ । अर्थात् उत्तरायणाभिमानी देव लोक से वर्षाभिमानी देव लोक में वहां से वायु लोक में वहां से सूर्य लोक में वहां से चंद्र लोक में वहां से विद्युत लोक में वहां से वरुण लोक मे वहां से इन्द्र लोक में वहां से प्रजापति साक्षात् ब्रह्मा के लोक में पूजित होकर आतिवाहि कों के द्वारा सीमांत में विरजा स्नान कर श्रीवैकुंठ में प्राप्त होकर नित्य सेवा पात्र को होता है, वहां पर भी अनिरुद्ध, प्रद्युम्न, संकर्षण रूप से आप पर ब्रह्म विराजते है और इन सबों का जिनमें समन्वय ऐसे पूर्ण पुर्ण पुरुषोत्तम श्रीवासुदेव भगवान सपरिकर विराजते हैं उन को प्राप्त होता ॥ ५४ ॥

सकल वेदांत इसको देवयान कहते हैं। आत्मयाजी अर्थात् परमात्मो पासक पुरुष क्रम से इस देवयान को प्राप्त होकर आविर्भूत गुणाष्टक होकर परमात्मा में आधेय विधेय रूप से स्थित होकर सर्व विधसे वा परायण होकर फिर इस संसार के दुःखों को कभी नहीं प्राप्त होता है ॥ ५५ ॥

जो पुरुष ईश्वर निर्मित इन दोनों पितृयान देवयानों को शास्त्र रूप चक्षु से जानता है वह संपूर्णजनों में स्थित रह कर भी मोह को प्राप्त नहीं होता है ॥ ॥ ५६ ॥

श्रीधरस्वामिकृतभावार्थदीपिका।

तत्र हेतुमाह-आदाविति। जनानां देहनामादौ कारणत्वेनान्ते चाऽवधित्वेन यत्सत्तथा वहिर्भोग्यमन्तर्भोक्तपरमवरं चोच्चनीचम्

* जनानाश्मम. इति विज० जनानां यो इति वीर०  (१) ज्योतिश्च सत्त्वयम-इति वीज० ज्योतिश्च यस्त्वयम्-इति वीर०
(२)अबाधित इति; विज० वीर० पाठा इश्यते

क्षित्यादीनामिहार्थानां छाया न कतमाऽपि हि।
न सङ्घातो विकारोऽपि न पृथङ्नान्वितो मृषा ॥ ५९ ॥
धातवोऽवयवित्वाच्च तन्मात्रावयवैर्विना।
न स्युर्ह्यसत्यवयविन्यसन्नवयवोऽन्ततः ॥ ६० ॥
स्यात्सादृश्यभ्रमस्तावद्विकल्पे ऽसति वस्तुनः।
जाग्रत्स्वापौ यथा स्वप्ने तथा विधिनिषेधता ॥ ६१ ॥
भावाद्वैतं क्रियाद्वैतं द्रव्याद्वैतं तथात्मनः।
वर्तयन्स्वानुभूत्येह त्रीन्स्वप्नान्धुनुते मुनिः ॥ ६२ ॥
कार्यकारणवस्त्वैक्यमर्शनं पटतन्तुवत्।
अवस्तुत्वाद्विकल्पस्य भावाद्वैतं तदुच्यते ॥ ६३ ॥
यद्ब्रह्मणि परे साक्षात्सर्वकर्मसमर्पणम्।
मनोवाक्तनुभिः पार्थ ! क्रियाद्वैतं तदुच्यते ॥ ६४ ॥

श्रीधरस्वामिकृतभावार्थदीपिका।

तमो ऽप्रकाशः ज्योतिः प्रकाशः तत्तु सर्वमयं ज्ञानी स्वयमेव अतस्माद्व्यतिरिक्तं वस्तु किञ्चिदस्ति येन मुह्येदित्यर्थः ॥ ५७ ॥

ननु तर्हि कथं पृथगर्थस्तया ऽपि प्रतीयते तत्रा ऽऽह—आबाधितस्तर्काविरोधेन सर्वतो बाधितो ऽप्याभासः प्रतिबिम्बादिर्वस्तुतया यथा स्मृतस्तद्वदैन्द्रियकं सर्वमर्थत्वेन विकल्पितं न तु परमार्थतः दुर्घटत्वात् ॥ ५८ ॥

तदेवाऽऽह—क्षित्यादीनां पञ्चभूतानां छाया ऐक्यबुद्ध्यालम्बनरूपं देहादिसङ्घातारम्भपरिणामानां मध्ये कतमाप्यन्यतमापि न भवति न तावत्तेषां सङ्घातो वृक्षाणामिव वनम् एकदेशाकर्षणे सर्वाकर्षणानुपपत्तेः न ह्येकस्मिन्वृक्ष आकृष्टे सर्वं वनमाकृष्यते न च विकार आरब्धो ऽवयवी अपिशब्दाच्च परिणामोऽपि कुतः स किं स्वावयवेभ्यः परिणतेभ्यो वा पृथक् तदन्वितो वा न तावदत्यन्तं पृथक् तथा ऽप्रतीतेः नचान्वितः स किं प्रत्यवयवं सर्वो ऽप्यन्वेत्यंशेन वा आद्ये अङ्गुलिमात्रेऽपि देहबुद्धिः स्यात् द्वितीये तस्याप्यंशांगीकारे सत्यनवस्था स्यादतो मृषैवेत्यर्थः ॥ ५९ ॥

एवं देहादेर्मिथ्यात्वमुक्त्वा तद्धेतूनां क्षित्यादीनामपि मिथ्यात्वमाह—धारयन्तीति धातवो महाभूतानि तन्मात्रैः सूक्ष्मैरवयवैर्विना न स्युः अवयवित्वात्तेषामपि तर्ह्यवयवः सत्य इति चेत्तत्राऽऽह, उक्तप्रकारेणावयविन्यसत्यवयवोऽप्यन्ततोऽसन्नेव स्यात् अवयविप्रतीत्यन्यथानुपपत्तिं विना तत्सद्भावे प्रमाणाभावादित्यर्थः। तदुक्तं पञ्चमस्कन्धे "एवं निरुक्तं क्षितिशब्दवृत्तम्" इत्यादि ॥ ६० ॥

नन्ववयविनोभावे आगमापायिषु बाल्यादिषु सोऽयं देवदत्तः इति प्रत्यभिज्ञानं न स्यात् तदुक्तं भट्टैः "आविर्भावतिरोभावधर्मकेष्वनपायि यत् तद्धर्मी" इति तत्राऽऽह—स्यादिति। वस्तुनः परमात्मनो विकल्पे भेदे ऽसति यद्वा वस्तुनो ऽविद्यया विकल्पे सति पूर्वपूर्वारोपसादृश्यात्स एवेति भ्रमः स्यात् स च तावदेव यावदविद्यानिवृत्तिः। ननु, सर्वमिथ्यात्वे शास्त्रस्य विधिनिषेधकता कथम्? तत्राऽऽह—स्वप्नमध्ये जाग्रत्स्वापव्यवस्था यथेति ॥ ६१ ॥

इदानीमुक्तमेवाद्वैतं भावनात्रयोपदेशेन दृढीकरोति—भावाद्वैतमिति चतुर्भिः। वर्तयन्नालोचयन् स्वानुभूत्या आत्मतत्त्वानुभवेन त्रीन् जाग्रदादीन् त्रय आवसथास्त्रयः स्वप्न इति श्रुतेः यद्वा वस्तुभेदबुद्धिरेकः स्वप्नः ततस्तदधिकारभेदेन कर्मभेदबुद्धिर्द्वितीयः ततो मत्कर्मसाधितमेतत्फलं ममैव भोग्यमिति तृतीयः तान्धुनुते निवर्तयति ॥ ६२ ॥

कार्यकारणयोर्वस्त्वैक्यस्य मर्शनमालोचनं तन्तुरेव न पट इति ॥ ६३ ॥

मनोवाक्तनुभिः कृतानां कर्मणां समर्पणं तैः समर्पणमिति वा उद्देश्यफलभेदो हि क्रियाभेदे हेतुः ईश्वरार्पणे च तदभावात्क्रियाणामद्वैतम् ॥ ६४ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

अथ प्राप्यतया प्रकृतस्य भगवतः सर्वात्मकत्वमाह—अदाविति। आदौ सृष्ट्यादौ अन्ते प्रलये च मध्यस्थानां जनानामन्तर्बहिश्च सन्नूवर्त्तमानः। किञ्च यत्परावरमुत्कृष्टापकृष्टं वा तत्रोत्कृष्टमाह

### श्रीमद्वीरराघवाचार्य्यकृतभागवतचन्द्रचन्द्रिका ।

ज्ञानं ज्ञानात्मकं जीवस्वरूपं ज्ञेयमचिद्वस्तु परं वचोनाम वाच्यं रूपं नामरूपात्मकं चिदचिदात्मकं सर्वं वस्तु इत्यर्थः । तमो मूलप्रकृतिः ज्योतिः समष्टिजीवश्चेत्येतत्सर्वं साक्षादयमेव परमात्मैव परमात्मात्मात्मकमेवेत्यर्थः ॥ ५७ ॥

एवं सर्वात्मकत्वमभिधाय तस्यैव प्राप्यस्य ब्रह्मणो निरतिशयपुरुषार्थत्वज्ञापनाय प्राकृतदेहस्य तदनुभाव्यशब्दादिविषयाणाञ्चापुरुषार्थत्वमाह-अबाधित इति । आभासो दृश्यो देहः स अबाधितोऽपि अविनष्टोऽप्यनुवर्त्तमानोऽपि अवस्तुतया अपुरुषार्थतया स्मृतः एवं शब्दाद्यर्थरूपेण विकल्पतमैन्द्रियकवस्तुजातमप्यवस्तु अपुरुषार्थं यद्वा अहङ्कारगोचरं शरीरं यथाऽनित्यं हेयं तथा ममकारगोचरः शब्दादिरप्यपुरुषार्थः न स्थिरः तस्यानित्यपुरुषार्थतया दुर्घटत्वादित्यर्थः । यद्वा आभासः स्वप्नदेहः स तदानीमनिवृत्तोऽपि प्रबोधवेलायामवस्तुतयाऽनात्मतया स्मृतः जाग्रदादिविकल्पितजाग्रच्छरीरमपि तद्वदनात्मा आत्मधर्माणां नित्यत्वादीनां तत्र दुर्घटत्वादित्यर्थः ॥ ५८ ॥

शरीरस्य सर्वत्र सर्वकाले सर्वस्मिन्नप्यात्मनाविनाभावित्वाभावाच्छरीरमप्यात्मा स्यादिति शङ्कानिरासार्थमाह—क्षित्यादीनामिति । क्षित्यादीनां पृथिव्यादिपरिणामरूपाणां वृक्षाणां छाया संघातादिष्वर्थेषु न कतमोऽपि सङ्घातानविकारपृथग्भूतया यावद्वृक्षभाविषु नकश्चिदपीत्यर्थः । तदेव विवृणोति—न सङ्घात इति । वृक्षसङ्घातो न छाया नापि वृक्षविकारः नापि वृक्षात्पृथक् वृक्षं हित्वा स्थातुं न योग्यः नान्वितः नाविनाभूतः यावद्वृक्षसत्ताकं नान्वितोऽयमर्थोऽभिप्रायः पुल्लिङ्गनिर्देशः मृषा अनित्या एव शरीरमप्यात्मनाविनाभावित्वाभावात्प्रतिच्छाया सदृशं आत्मसङ्घातः शरीरं नचात्मविकारः नचात्मानं हित्वा तिष्ठति न यावदात्मभावी अनित्यत्वात् अतो नात्मा शरीरमित्यर्थः ॥ ५९ ॥

शरीरस्यानित्यत्वादात्मप्रतिपत्त्यर्थं मत्तुल्यन्यायेषु पृथिव्यादिष्वनित्यत्वमुपपादयति-धातव इति । पृथिव्यादयो धातव अवयवित्वात्सङ्घातरूपत्वात्तन्मात्रावयवैर्विना न स्युरवयवविनाशे सङ्घातो नश्यतीत्यर्थः । सङ्घातरूपत्वमेव प्रतिपादयति-असन्नीति-यतोऽवयवसंघातरूपोऽवयवी अतएवावयविन्यसति विनष्टे अन्तोऽवयवेऽसन्नेव सदवयविन्यनुपलभ्यमानेऽवयवा एव धातवो नह्युपलभ्यन्ते एवमवयवित्वादनित्यं शरीरं नित्यमात्मा न भवतीत्यर्थः ॥ ६० ॥

तर्हि स्थूलोहमितिप्रतीतिः कथमित्यपेक्षायां भ्रान्तिरित्याह-। स्यात्सादृश्यमिति । तत्रसंसर्गनिमित्ता भ्रान्तिरिति प्रतिपत्त्यर्थं सादृश्यनिमित्तत्वं प्रतिक्षिपति-स्यादिति-द्वयोरप्यर्थयोर्ज्ञानादिगुणाविकल्पे सति कस्यचिद्वस्तुनः केनचित्सादृश्यं भ्रमभेदनिमित्तं स्यात् । देहात्मनोस्तु समानजातिगुणाद्यभावात्सादृश्यमनुपपन्नम् उष्णोऽग्निरिति संसर्गभ्रम इत्यर्थसिद्धम् एवमात्मविषयकज्ञानाभावेपि जानामि न जानामीति विभागप्रतिपत्तौ दृष्टान्तमाह—जाग्रत्स्वप्नाविति । कश्चित्सुप्तिवेलायामेव सुप्तं प्रबुद्धश्चात्मानं पश्यति यदा प्रबुध्यते तदा स्वप्नदृष्टप्रबोधो न वास्तव इति बुध्यते एवमनात्मविदां संसारिणां कदाचिदहज्ञानामीति ज्ञानं निषेधश्चात्मयाथात्म्यज्ञानाननुवृत्तावेव भवत इति विधिनिषेधता विधिनिषेधौ स्वप्नदृष्टस्वापप्रबोधतुल्यावित्यर्थः । संसारिणामात्मज्ञानाभावाद्बाह्यार्थविषयज्ञानमप्यज्ञानतुल्यमित्युक्तं भवति यथा "तज्ज्ञानमज्ञानमतोऽन्यदुक्तम्" इति । शास्त्रविरुद्धार्थविषयज्ञानभ्रान्तिरियं ज्ञानिनां नास्तीत्याह-भावाद्वैतमिति । यद्वा एवं देहविलक्षणात्मज्ञानिनामपि यावत् स्थूलोहं ब्राह्मणोऽहमिति देहात्मभ्रमानुवृत्तिरप्रयाणं तावद्विधिनिषेधात्मकशास्त्रवश्यतेत्याह-जाग्रत्स्वप्नाविति । यथा स्वप्ने जाग्रत्स्वप्नौ स्वोप्नजाग्रत्स्वप्नावस्थे स्वप्नपर्यन्तावेव प्रबुद्धस्य तु तावुभौ निवर्त्तेते तद्वदित्यर्थः ॥ ६१ ॥

एवं यावद्देहात्मभ्रमानुवृत्तिस्तावद्विधिनिषेधता स्थूलोऽहं ब्राह्मणोऽहमिति प्रतीतेर्देहात्मनोरभेदे भ्रममूलकत्वेन सिद्धे किमेवमेव सर्वमद्वैतं भ्रमविषयम् ? उतकिञ्चित्प्रमितिविषयमस्तीत्याशंकायां यच्छास्त्रानुमतमद्वैतं तत्प्रमाविषयं तन्मुमुक्षोरनुसन्धेयमेवेति वक्तुं तदनुमत त्रिविधमद्वैतं दर्शयन् तदनुसन्धानस्य भ्रममूलकद्वैतत्रयनिरासकत्वमाह-भावाद्वैतमिति । यथा देहात्मनोर्भेदः शास्त्रानुमतोनुसन्धेयः तथा भावाद्वैतादिरूपं त्रिविधमद्वैतमात्मनः स्वस्य वर्त्तयन् यद्वा आत्मनो मनसो वर्त्तयन् मनसि प्रतिष्ठितं कुर्वन्नध्यवस्यन्निति यावत् इह मुनिः परमात्मोपासकः स्वानुभूत्या देहविलक्षणब्रह्मात्मकस्वात्मयाथात्म्यानुभवेन त्रीन् स्वप्नान् भावाद्वैतकर्माद्वैतद्रव्याद्वैतज्ञानानि भ्रमात्मकानि धुनते निरस्यति ॥ ६२ ॥

भावाद्वैतादिस्वरूपं विवृण्वन् त्रिविधभ्रान्तिनिरासं श्लोकत्रयेण विवृणोति-कार्येति । तत्रोपादानस्य कार्यस्य चानन्यत्वपरोभावाद्वैतविषयः श्लोकः यत्कार्यकारणयोर्वस्तुनोरैक्यदर्शनं तद्भावाद्वैतं कार्यकारणयोरैक्ये पटतन्तुवदिति दृष्टान्तः यथा तन्तूनामेव व्यतिषङ्गविशेषभाजां नामरूपात्मकावस्थान्तरापत्त्या पटावस्थत्वमिति पटस्य तेभ्योऽनन्यत्वं तद्वत्कृत्स्नं जगच्चिदचिदीश्वरात्मकं सूक्ष्मचिदचिद्विशिष्टाद्ब्रह्मणोऽनन्यदित्येतद्भावाद्वैतं भावयोः कार्यकारणवस्तुनोरद्वैतं भावाद्वैतं अवस्तुत्वाद्विकल्पस्येत्यनेन भावद्वैतं निरस्यति विकल्पस्योपादानातिरिक्तद्रव्यकल्पनरूपाज्ञानस्यावस्तुत्वाद्वस्तुशून्यत्वाच्च भावयोर्द्वैतं किन्त्वद्वैतमेवेत्यर्थः । एवमसत्कार्यवादभ्रमो निरस्तः ॥ ६३ ॥

क्रियाद्वैतं विवृणोति-यदिति । हे पार्थ ! साक्षात्परे ब्रह्मणि यत्करणत्रयेण सर्वकर्मणां समर्पणं तत्क्रियायामद्वैतं भगवदाराधनत्वेन सर्वकर्मणामेकफलानच्छेदः क्रियाद्वैतम् अनेन कर्मणामीश्वरप्रीतिमनपेक्ष्य स्वातन्त्र्येण फलवत्त्वभ्रमो निरस्तः ॥ ६४ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

जाग्रदाद्यवस्थाप्रवर्तकान्विश्वादीन् कल्पितानतिक्रम्य प्रपञ्चोपशमं तुर्यात्मा भूत्वा निर्द्वंद्व आस्ते इति केचिद्व्याचक्षते तन्मत-

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

दूषणायाह–आदाविति । आदावुत्पत्तिकाले मुक्तिकाले च यज्जना नाशं जननं विनाशं च "जनी प्रादुर्भावे" इत्यस्मात् टापि कृते जनेतिरूपं सिध्यति वध्यघातकभावो मार्जारमूषकवत् यच्च बहिरन्तर्विद्यमानं परावरमुत्तमाधमं भूतं भविष्यद्वा यच्च ज्ञानादिकं सर्वस्य ग्लापकत्वात् ग्लानिजनकत्वात्तमः प्रकृतिर्ज्योतिस्तदवभासकः स्वप्रकाशश्च यस्तदेतत्सर्वं स्वयं तुर्यात्मा श्रीहरिस्तत्सत्ताया अपि तदधीनत्वात्स इत्युच्यते नतु तदात्मकत्वात् "पुरुष एवेदं सर्वम्" इति श्रुतेः आदौ यथा तदधीनत्वं तथान्तेपि श्रीनारायणाधीनत्वमित्यतो वाह आदाविति उक्तार्थः श्लोकः निरुपचरितापराधीनत्वं हरेरेव न मुक्तस्यापीत्यतो वाह आदाविति, आदावन्ते उत्पत्तेः प्रागूर्ध्वम् अयं परमात्मा वर्तत इति शेषः । कथङ्कारमत्राह–जनेति । जनकत्वेन नाशकत्वेनेत्यादिरूपेण सर्वकर्तृत्वस्वातन्त्र्येण तच्छब्दवाच्यत्वं हरेरप्युक्तं तमःशब्दस्य ग्लापकत्वादिति णिच् प्रत्ययान्तत्वेन विवरणादयमर्थो ज्ञायत इति ॥ ५७ ॥

ननु, सत्तायास्तदधीनत्वं प्रामाणिकश्चेत् ब्रह्मत्वेनोक्तिर्घटेत ततः कात्र युक्तिरित्याशङ्क्योपपादयति–अबाधित इति । प्राकृतवैकृतलक्षणकार्येषु विशिष्टकान्तिमत्तया भासते विद्योतत इत्याभासो देहः प्रतिबिम्बलक्षणो यथावस्तुतया "वसनाद्वासयेद्वस्तु नित्याप्रतिहतत्वतः" इति स्मृतेर्वस्तुपरमात्मा तत्त्वेन स्मृतः "इद हि विश्वं भगवानिवेतरः" "इन्द्रो मायाभिः" इत्यादिना ननु देहस्य सत्त्वे तत्सत्ताया भगवदधीनत्वेन तद्वक्तुं युक्तं तस्य दग्धपटाभासवदर्थक्रियानर्हत्वादिति तत्राह, अबाधित इति. शुक्तिकायां प्रतिभासितं रजतं वलयकरणाद्यर्थक्रियानर्हत्वेन नेदं रजतमिति बाधितं स्याद्यथा न तथाऽयं बाधितः हानोपादानाद्यर्थक्रियायोग्यत्वात् अपिशब्दोऽत्र स्वातन्त्र्यशंकां सूचयति, हिशब्देन प्रत्यक्षसिद्धत्वेन दग्धपटाभासवैलक्षण्यं दर्शयति, तद्वत्तथैन्द्रियकमिन्द्रियविषयं घटपटादिकम् अर्थशब्दो भावप्रधानः अर्थत्वेनार्थक्रियाख्यं प्रयोजनतया कल्पितं समर्थितं, परमात्मनेति शेषः "कर्तृकर्मक्रियादीनां सत्तावृत्तिस्तथैव च । विष्ण्वधीनं यतः" इति वचनादर्थक्रियासामर्थ्यस्य भगवदधीनत्वेन "सर्वं खल्विदं ब्रह्म" इति सर्वस्य तत्त्वं युक्तमिति भावः । एवमनङ्गीकारे बाधकमाह—दुर्घटत्वादिति । ईश्वरान्येन कर्तुमशक्यत्वात् ॥ ५८ ॥

दुर्घटत्वमेव दर्शयति–क्षित्यादीनामिति । क्षित्यादीनामर्थानां पदार्थानां कतमापि छाया कतमोऽपि प्रकारो विचार्यमाणो सति न घटत इति शेषः "छाया रीतिः प्रकाशश्च भावश्चेत्यभिधीयते" इत्यभिधानम्. इह कार्यप्रपञ्चे हिशब्दो हेत्वर्थः निर्धारणार्थवाचिना तमप्प्रत्ययेन कस्यापि प्रकारस्यासंभवोक्तेः परमेश्वरकल्पितत्वेनैतत्कार्यं सत् इतिवक्तुं युक्तं प्रकारभावमुपपादयति–न सङ्घात इति । परमेश्वरकल्पनामन्तरेण कार्यं भवतीति वदन् प्रष्टव्यो भवति क्षितिलक्षणं कार्यं केवलमपां पुञ्जः तद्विकारो वा तद्व्यतिरेकेणोत्पन्नं वा वृक्षद्वयसंयोगवदुभयोः संयोगमात्रं वा ? न प्रथम इत्याह—नेति । अयं संघातो न असम्भवात्. क्षितेः कठिनावयवारब्धत्वात्केवलमपां द्रवत्वेन तत्कार्ये पर्वतादीनां मज्जनापत्त्याक्षितेः स्वरूपलयप्राप्तेः आधाराभावेन सर्वप्राणिप्राणनाशप्रसङ्गात् न द्वितीय इत्याह—विकार इति । अत्र नञः अध्याहारः कर्तव्यः अपां विकारोपि नोपपद्यते कालुष्यादिलक्षणविकारमात्रेण क्षितित्वानुपपत्तेः न तृतीय इत्याह—न पृथगिति । अद्भ्यः क्षितेः पृथक्स्थित्यदर्शनात् नापि चतुर्थ इत्याह—नान्वित इति । सहावस्थानमात्रेण कार्योत्पत्त्यदर्शनात् क्षित्यादीनामर्थानां पदार्थानां मध्ये कतमापि छाया कतमो ऽपि भावः पदार्थः कार्यजननशक्तिमान् न घटते विचारासहत्वात्. तथाहि, "अद्भ्यः पृथिवी" इति श्रूयते तत्र प्रस्तुतात्मशक्तिमन्तरेण केवलानामपां पृथिवीजनकत्वं कथमिति वा शेषं पूर्ववत् ॥ ५९ ॥

ननु, विश्लिष्टानां पदार्थानामन्योन्यं महत्कार्योत्पत्त्यावसामर्थ्यमस्तु । संश्लिष्टानां नेयमनुपपत्तिरित्याशङ्क्य श्रीनारायणकटाक्षबीजमन्तरेणावयवावयविनोरप्यनुपपत्तिः स्यादेवेत्याह—धातव इति । धातवः क्षित्यादिप्रपञ्चभूतादिपदार्थाः तन्मात्रावयवैर्विना गन्धादिव्यतिरेकेण सुरभिगन्धवती पृथिवी शुक्लभास्वरं सलिलमित्यादिव्यावर्तकधर्माभावे स्वरूपाभावप्राप्तिरेव स्यादित्यर्थः अवयवित्वादिति तद्व्यवयविनोऽवयवाभावे अवयविव्यवहारो युक्तस्तस्मात् चशब्द एवार्थे समुच्चयार्थे वा प्रत्यक्षसिद्धत्वादवयवित्वाच्चेति अयं निर्णयः कुत्र दृष्ट इति तत्राह–अस्नतीति इव यथा आसमन्तात्सन्नावयवाः सर्वात्मना तन्तुलक्षणा । अवयवा नष्टा यदि तर्ह्यसदवयविति तन्तुरहिते पटे पटव्यवहारोऽपि नष्ट इति शेषः तन्तुव्यतिरेकेण पटाभावात् यथावयवाभावो अवयवी नास्ति तथा अवयविनि निवृत्ते अवयवा अपि निवृत्ताः स्युरित्यतो वाह—आसन्नावयवा अपि नष्टाः स्युरित्यर्थः यथाऽऽसन्नावयवा आतानवितानावयवत्वसंसर्गम् प्राप्तास्तन्तुलक्षणा अवयवाः प्रागसत्यवयविनि पटे पटव्यवहारं न जनयन्ति तथा गन्धाद्यवयवाः प्रागसत्सु क्षित्यादिषु पश्चात्क्षित्यादिव्यवहारं न जनयन्तीत्यतस्तदभावे तदभावः स्पष्ट इत्यन्वयव्यतिरेकौ दर्शिताविति ज्ञातव्यमिति एवं दुर्घटत्वेना विद्याकल्पितप्रपञ्चस्याविद्याबाधानन्तरमनुवृत्तस्यापि न वस्तुतत्त्वमिति कल्पनमनुपपन्नं "विश्व सत्यं मघवाना युवोरिदापश्चन प्रमिनन्ति व्रत" "वा यद्युक्त्या विरुध्येत तदीशकृतमेव हि" इति श्रुतिस्मृतिप्रसिद्धा युक्तिशब्देन दर्शयति असत्त्वस्यावयविन्यासन्नावयवा न चेतिकेचित्पठन्ति अयमर्थः गन्धावयवव्यतिरेकेण पृथिव्याद्यवयविनो न स्युश्चेत् किं नाशक्यमिति तत्राह—असतीति । क्षित्यामवयविन्यसति गन्धाद्यवयवा एव नासन्नित्यन्वयः अवयवाभावे ऽवयव्यभावेन कारणाभावापत्त्या सर्वास्मत्त्वप्रसङ्गलक्षणोच्छेद इति भावः ॥ ६० ॥

नन्ववयवावयविनोः सादृश्यमात्रेण तस्यायमवयव इति व्यवहारस्तस्मात्तद्व्यतिरेकेण सोपि नास्तीति कथमापद्यत इति तत्राह—स्यादिति । सत्यं सादृश्यभ्रमः स्यात्तावत्कस्मिन् सतीति तत्राह—विकल्प इति । वस्तुनो विकल्पे भेदे सतीत्यन्वयः यथा पट्टणादिषु रूप्यमवलोक्य तत्संस्कारवतः सदृशकिरणासम्पर्केण चकाशमानं क्वापि शुक्तिकाशकलं संदृश्य द्वयोः

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

सादृश्यमात्रादिदं रजतमिति भ्रमो दृश्यते तथाक्षित्यादेर्गन्धादेर्भेदे वस्तुसादृश्यमात्रेण व्यवहारः स्यात् नचात्रभेदो युज्यते स्वरूपहानेरन्तो वयवाभावे ऽवयव्यभाव आपद्यते स्वरूपत्वादिति भावः पटस्य प्रत्येकं तन्तुना भेदेऽपि समुदायरूपेणाभेदादुक्त युक्तमिति नन्ववयविपदार्थसद्भावे इयं चिन्ता स एव नास्ति परमाणव एव पुञ्जीभूय कार्यं जनयन्तीत्यङ्गीकार्यत्वात्प्रतिक्षणं विनाशाच्च अभेदग्राहिप्रत्यभिज्ञायाश्च संस्कारजनितसादृश्यमात्रविषयतया भ्रान्तित्वादित्यतो वाह–स्यादिति। वस्तुनो भेदे सति तदुक्तं सत्यं स्यात्तदेव नास्ति एकत्वस्य साक्षिप्रत्यक्षेणानुभूयमानत्वात् साक्षिणो भ्रान्तित्वे सर्वस्य विनाशसाधकस्यापि व्याप्तिग्राहकप्रमाणप्रामाण्यस्य साम्यात्परमाणुपुञ्जपक्षेपि निगदितदोषानिस्तारात् परमाणुभिर्विना पुञ्जाभावेन स्वरूपं न स्यादतो दुर्घटघटकेन केनचिद्भवितव्यं स चादृष्टकर्मणोश्चेतनाश्रयत्वेन पृथक् सामर्थ्याभावाच्चेतन एव भवेत् चेतनसामान्यस्याहिताकरणादिना पारतन्त्र्यप्रतीतेर्निरवयवत्वेन प्रवृत्त्यनुपपत्तेश्च तत्प्रवर्तकत्वेनाघटितघटकत्वेन महात्म्याकरपरमचेतनपरिकल्पनयैव शरीरपदार्थोपादानभूतपृथिव्यादियोगो दृश्यत इति सिद्धम्—

"कार्यकारणवस्तूनां विशेषो न निरूपितः ।
तथापीशेच्छयैवासौ दृश्यते नियतोऽपि च" इतिस्मृतेः

एतादृशो विशेषः कुत्र दृष्ट इति तत्राह—जाग्रदिति । यथा स्वप्ने जाग्रदिदमयं स्वप्न इतिविशेष ईश्वरेच्छया दृश्यते "स एष स्वप्नान्दर्शयति" इति श्रुतेः न तत्र "रथा न रथयोगा न पन्थानो भवन्ति अथ रथान् रथयोगान् पथः सृजते." इत्यादेः स्वप्ने प्रतीयमानं सर्वमीश्वरेच्छाकर्तृकमिति ज्ञायते तथा विधिनिषेधविशेषोपीश्वरकल्पनयैव प्रवर्तत इत्याह–तथेति । "अग्निष्टोमेन स्वर्गकामो यजेत" इत्यादि. महाविधित्व अरुणया पिङ्गाक्ष्यैकहायन्या गवा सोमं क्रीणातीत्याद्यवान्तरविधित्वं । तथा ब्राह्मणो न हन्तव्य इत्यादि महानिषेधत्वं न मृषा वदेदित्याद्यवान्तरनिषेधत्वं चेश्वरेच्छाकॢप्तमित्यन्वयः "स इदं सर्वमसृजत" इत्यादेः संकोचकारणाभावान्मुख्यार्थ एवाङ्गीकर्तव्यः । अत्र तत्तद्विशेषस्य परमेश्वरकॢप्तत्वनिश्चयाय मिथ्याभूतजाग्रत्त्वग्रहणं न तु तद्वत्स्वप्नस्यापि मिथ्यात्वनिश्चयाय तस्यार्थक्रियाकारित्वेन सत्यत्वनिश्चयात् अनेन सर्वस्य मिथ्यात्वे रज्जुसर्पस्य मिथ्यात्वं रज्जुखण्डं सत्यमितीयं व्यवस्था कुत इत्याशङ्क्य मिथ्याभूतस्वप्ने ऽपि जाग्रत्स्वप्नव्यवहारवत् व्यवहारमात्रमत्र चेत्यादि श्रुत्योच्यत इति ॥ ६१ ॥

एवं सर्वस्मादात्मन उपकारकत्वेन प्रेष्ठत्वाद्येन विना तत्प्रसादो न भवेद्यस्मिन्सति सञ्जाघटीति भगवति तत्समर्पणसमर्थं भवानाप्रकारं दर्शयति–भावेति । मुनिः शास्त्रतत्त्वज्ञानी आत्मनः भावाद्वैतं क्रियाद्वैतं तथा द्रव्याद्वैतञ्चैव वर्तयन् स्मरणं कुर्वन् स्वानुभूत्याविर्भूतस्वरूपज्ञानेन । इह जगति सतस्त्रीन् स्वप्नान् जाग्रदाद्यवस्थानुभवनिमित्ताज्ञानशब्दवाच्यानर्थान् धुनुते निरस्यतीत्यन्वयः ॥ ६२ ॥

किं तद्भावाद्वैतादिकं येन तदवश्यमनुध्येयमिति तदाह । कार्यकारणेति । महदादिकार्येषु प्रकृतितद्गुणाख्यकारणेषु च स्थितस्य वस्तुनो नित्याप्रतिहतस्य हरेरेकत्वदर्शनं तत्कथमिव पटतन्तुवत् पटस्य तन्तूनां चाभेदलक्षणैकत्वं यथा प्रामाणिकं तथेत्यर्थः । "प्रकृतिं पुरुषं चैव प्रविश्य पुरुषोत्तमः" इत्यादेः सृष्ट इति सामानाधिकरण्येन कार्यकारणयोरभेदोक्त्या श्रीहरिसम्बन्धप्रतीतेः प्रकृतासङ्गतं स्यान्निदर्शनं चैकत्वप्रदर्शनपरमित्युक्त एवार्थः प्रतीतार्थं परित्यज्याप्रतीतार्थकथने किं कारणमत्राह अवस्तुत्वादिति । घटादिप्रपञ्चस्यानित्यत्वेन प्रतिहतत्वात्स्वत एव कार्योत्पादनसामर्थ्याभावादवस्तुत्वादसामर्थ्यत्वाद्विशिष्टत्वान्मिलितत्वात्कार्यजननशक्त्यभावाद्वा, इदं च भगवन्माहात्म्यप्रकटनं गणं युगपदाविशदिति श्लोक्तेः कार्यकारणानुविष्टानां भगवद्रूपाणामत्यैक्यमेकत्वं "तत्सृष्ट्वा तदेवानु प्राविशत्" "समाधिगतोस्मिविधूनभेदमोहः" इत्यादिश्रुतिस्मृतिभिरुच्यत इति ज्ञानपूर्वमुपासनं कार्यमिति शेषः ॥ ६३ ॥

न ऋते त्वत्क्रियते किञ्चनारे महामर्कं मघवं चित्रमर्चेति क्रियाद्वैतम् ॥ ६४ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

मोहाभावकारणं सर्वस्य परमात्मानन्यत्वं विवृणोति । आदाविति । यत् परमात्मलक्षणं वस्तु तत् सत् वर्त्तमानं तदेव स्वयं बहिर्भोग्यम् । ज्योतिः प्रकाशश्च स्फुरति नान्यत् । अन्यस्य तद्विना स्वतः स्फुरणानिरूप्यत्वादिति भावः ॥ ५७ ॥

ननु, कथं तर्हि तस्मादत्यन्तपृथगिवार्थजातं प्रतीयते तत्राह–आबाधितः स्वातन्त्र्यसत्तायाः सकाशान्निरस्तोपि यथा आभासः सूर्यादिप्रतिरश्मिः बालादिभिः पृथक् प्रकाशमानादर्शनाद्वस्तुतया स्वतन्त्रपदार्थतया स्मृतः कल्पितः । तद्वदैन्द्रियकं सर्वं मूढैः स्वतन्त्रार्थत्वेन विविधं कल्पितम् । तत्तु न तत्त्वदृष्ट्या स्वातन्त्र्यनिरूपणस्य दुर्घटत्वादित्यर्थः ॥ ५८ ॥

क्षित्यादीनामिति, तैः तत्र कुत इत्यन्ते स किम् अवयवेभ्यः पृथगारभ्यते परिणमते च तदन्वितो वेत्यूह्यम् । अतो मृषेवेत्यत्र अतो देहादेः स्वातन्त्र्येणावस्थितिर्मृषैवेत्यर्थः इति ज्ञेयम् ॥ ५९ ॥

एवं देहादेः स्वातन्त्र्येणानिरूप्यत्वमुक्त्वा तद्धेतूनाम् क्षित्यादीनामपि तथैवानिरूप्यत्वमाह–धातव इति । तर्ह्यवयव एव स्वतन्त्र इति चेत्तत्राह, उक्तप्रकारेणावयविनि निरूपयितुमसति अवयवोप्यन्ततो निरूपयितुमसन्नेव स्यात् तस्मादैक्यबुद्ध्यालम्बनरूपम् यत् प्रतीयते तत् सर्वत्र परमात्मलक्षणं सर्वकारणं वस्त्वेवेति साधूक्तः आदावन्ते जनानाम् सदित्यादिना एवमेव तृतीयेप्युक्तम् "इति तासां स्वशक्तीनां सतीनामसमेत्य सः । प्रसुप्तलोकतन्त्राणां निशाम्य गतिमीश्वरः ॥ कालसंज्ञां ततो देवीं बिभ्रच्छक्तिमुरुक्रमः । त्रयोविंशतितत्त्वानां गणं युगपदाविशत् ॥ सोऽनुप्रविष्टो भगवांश्चेष्टारूपेण तम् गणम् । भिन्नं संयोजयामास सुप्तं कर्म प्रबोधयन्" इति अत एव "यस्य पृथिवी शरीरम्" इत्यादौ श्रुतौ परमात्मशरीरत्वेन प्रसिद्धि

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

परमात्मनस्तु शरीरित्वेन तदेवमवयवरूपेण प्रधानपरिणामः सर्वत्रावयवीतु परमात्मवस्त्वेवेति सिद्धं ततोऽप्यमिथ्यात्वमेव जगत उपपद्येत् ॥ ६० ॥

ननु, यदि परमात्मवस्त्वेव सर्वत्रावयवी देहः स्यात । ततश्चात्रैव ब्राह्मणत्वादि संज्ञा प्राप्तेर्गुणदोषहेतुविधि-निषेधावपि स्यातां तौ च न सम्भवतः । तस्मादन्यत्र वात्रयवो युज्यते इत्याशङ्क्याह–स्यादिति । वस्तुनः परमात्मनः विकल्पे संशये सतीति तस्य तादृशत्वेन निर्णयो यावन्न स्यादित्यर्थः । तावदेव तस्मात् सर्वैक्यबुद्धिनिदानात् पृथग्देहैक्यनिदान-बुद्धि साहश्यभ्रमः स्यात् । पुर्वापरावयवानुसंज्ञाने सति परस्परमासज्यैकत्र स्थितत्वेनावयवत्वसाधारण्येन चैक्यसाद्-श्यात् । यतो प्रत्यवयवभेकतया प्रतीतेः सोऽयं देह इति भ्रम एव भवतीत्यर्थः । प्रतिवृक्षं तदिदं वनमितिवत् यथोक्तं स्वयं भगवता "सोऽयं दीपोऽर्चिषां यद्वत् स्रोतसां तदिदं जलम् । सोऽयं पुमानिति नृणां मृषाधीर्गीर्मृषायुषाम्"इति । ततश्च तत्रैव ब्राह्मणत्वाद्यभिमाने सति स्वप्नविषयकौ जाग्रत्स्वप्नाविव तद्विषयकौ विधिनिषेधौ स्यातामित्याह । तथा तेन प्रकारेण विधेर्निषिधिना निषेधस्य निषेधतेत्यर्थः । एवं "परस्वभावकर्माणि न प्रशंसेन्न गर्हयेत् । विश्वमेकात्मकं पश्यन् प्रकृत्या पुरुषेण च"इत्यादिरेकादशाष्टाविंशतितमाध्यायोऽपि ज्ञेयः । तत्र "किं भद्रं किमभद्रं वा द्वैतस्यावस्तुनः कियान्"इत्यादिकं स्यात् साहश्य भ्रम इत्याद्यनुसारेणैव व्याख्येयम् । अवस्तु यत् द्वैतं तस्ये-त्यर्थः । तस्मात् स्वातन्त्र्येण निरूपणाशक्त्या परमात्मनोऽनन्य-देव सर्वमिति प्रकरणार्थः ॥ ६१—६३ ॥

अभिद्धज्ञानत्वात्तथापि स्वधर्ममेव कुर्यादित्याह—यदीति । ॥ ६४—६५ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

अत्र सर्वं ब्रह्मेति भावनैव मोहाभावे नैव हेतुरित्याह–आदाविति जनानां देहादीनां आदौ कारणत्वेन अन्ते चावधित्वेन यत् सत् स्वयंब्रह्म तदेव बहिर्भोगं मायिकं वस्तु अन्तर्भोक्तृजीवबृन्दं परावरं उत्कृष्टनिकृष्टात्मकं ज्ञानमिन्द्रियं ज्ञेयं शब्दादिवचो घट-पटादिवाच्यं जात्यादि तमो जीवस्याविद्या ज्योतिर्विद्या तस्मा-द्व्यतिरिक्तं वस्तु किमपि नास्ति येन मुह्येदिति भावः ॥ ५७ ॥

ननु कथं तर्हि तस्मादत्यन्त पृथगिवार्थं प्रतीयते तत्राह— ननु भोक्तृभोग्यादिवस्तूनां सर्वजनैरेव पृथक्तया प्रतीयमानत्वात् कथमेको यतिरेव सर्वं ब्रह्मैवेदमिति प्रत्येतु तत्राह—आबाधित इति । अत्र अद्वयं ज्ञानमेव ब्रह्मोपासनायां पद्धतिः सा च विविध-शक्तिवैचित्रीमयस्य विश्वस्य सत्यत्वप्रतीतौ नसिद्ध्येदतस्तदर्थं ज्ञानिनमधिकारिणं विश्वस्य मिथ्यात्वं प्रत्याययितुं विवर्त्तवादो-यमपभिः प्रस्तूयते यथा भक्तिमते "तस्मात् केनाप्युपायेन मनः कृष्णे निवेशयेत्"इत्युक्तं तथैव ज्ञानिमतेऽयमुपायो ज्ञानिमनो ब्रह्म-मात्रग्रहणार्थं. विश्वस्य सत्यत्वे मनसा निश्चिते तेन निरालंबन मनसा विश्वस्याग्रहणं निषेधकोटिभिरपि दुर्घटमित्यतोऽत्रवि-वर्त्तवादेऽपि शास्त्रस्य तात्पर्यमित्यवसेयं विश्वदेव भगवद्धामनाम-रूपादेरसत्यत्वमननेतु ज्ञानिनोऽप्यधःपात इति प्राक्प्रतिपादितं प्रतिपादयिष्यते च यथास्थानमुपरिष्टादपि श्रीभरतेनापि रघु-गणप्रबोधनार्थम् "अयं जनो नाम चलन्पृथिव्याम्"इत्यादिना विश्व-मिथ्यात्वमुक्त्वा तर्हि किमित्यपेक्षायां भगवच्छब्दसंज्ञं "यद्वासुदेवं कवयो वदन्ति"इत्युपसंहृतम् अथ प्रकृतमनुसरामः आभासो हि चन्द्रादिर्मिथ्याभूतोऽपि यथा बालैर्वस्तुतया स्मृतः तद्वदैन्द्रियकं सर्वमर्थत्वेन कल्पितमेव नतु वस्तुतः दुर्घटत्वात् ॥ ५८ ॥

एतदेवाह–क्षित्यादीनां पञ्चभूतानां छाया ऐक्यबुद्ध्या आलम्बनं देहादिकं संघातारं तु परिणामानां मध्ये कतमापि न भवति न तावत् पञ्चभूतानां सङ्घातः वृक्षाणामिव वनम् एकदेशाकर्षणेन सर्वाकर्षणानुपपत्तेः नह्येकस्मिन् वस्त्रे आकृष्टे सर्वं वनमाकृष्यते न च पञ्चभूतानां विकारः पञ्चभूतैरारब्धो ऽवयवीत्यर्थः । कुत इति चेत् तत्राह–न पृथङ्न्वित इति । अवयवेभ्यो ऽवयवी भता-वदत्यन्तं प्रथक् तथाऽप्रतीतेः अवयवात्पृथगवयविवादिनां मते दोषान्तरमपि द्रष्टव्यं तद्यथा स्वर्णघटमहं ददे इति वाक्यपू-र्वकस्वर्णघटदानानन्तरं तद्घटावयवस्य कपालादेर्ग्रहणे न ब्राह्म-णस्य स्वर्णस्तेयजन्यं पातित्यं स्यात् दातृतस्तनुनाशकस्य दान कर्मत्वाद्त्तस्य घटपदार्थं घटएव स्तवे न घटस्यैव स्वत्वना-शात् कपालादेस्तस्य घटपदार्थभिन्नत्वात् प्रकारान्तरस्वीकारस्य गौरवसहस्रपरहतत्वादेतन्मतमनुपादेयमेव न च तेष्वन्वितः स किम्प्रत्यवयवमवयवी सर्वं एवान्वेति अंशेन वा आद्येऽपाणौ पाणय-ङ्गुल्यादौ वा देहबुद्धौ तन्नाशे देहो नष्ट इति प्रतीतिरापद्येत द्वितीये अंशस्याप्यंशाङ्गीकारे अनवस्था स्यात् अविकारात् पञ्चभूतानां परिणामोऽपि यतो न पञ्चभूतेभ्यः स पृथक् नापि तेष्वन्वितइत्यतो मृषैव मिथ्यैवेति विवर्त्तवादएवोपादेय इत्यर्थः ॥ ५९ ॥

एवं देहादेर्मिथ्यात्वमुक्त्वा तद्धेतूनां क्षित्यादीनामपि मिथ्या-त्वमाह—धातवइति । धारयन्तीति धातवो महाभूतानि तन्मात्रैः सूक्ष्मैरवयवैर्विना न स्युः अवयवित्वात्तेषामपि तर्ह्यवयवः सत्य इति चेत्तत्राह उक्तप्रकारेणावयविन्यसति अवयवो ऽप्यन्ततो ऽसन्नेव स्यात् अवयविप्रतीत्यन्यथानुपपत्तिं विना तत्सद्भावे प्रमाणाभावादित्यर्थः तदुक्तं पञ्चमे "एवं निरुक्तं क्षितिशब्दवृत्तम्" इत्यादि ॥ ६० ॥

ननु,तदपि क्षित्यादीनां सत्यत्वेन प्रतीतिः कुतो नयतीत्यत आह– स्यादिति । विकल्पे क्षित्यादावसति मिथ्याभुतेऽपि वस्तुनः सत्यभू-तस्य भगवन्नित्यधामस्थक्षित्यादीनां साहश्येन भ्रमः सत्यस्य जलस्य मरीचिकायामिवेत्यर्थः । यथैव सत्य एव तेजसि सत्य-स्यैव जलस्य भ्रान्तिमूलके आरोपे सति मरीचिका जलं भवेत् तथैव सत्य एव ब्रह्मणि सत्यस्यैव भगवद्धामस्थक्षित्यादेरज्ञान-मूलके आरोपे सति जगदिदं भवेदित्यर्थः । न च भगवद्धामस्थापि

## श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

विवर्त्तः प्रवर्तेत इति तदप्यसत्यमिति वाच्यं भूगोलचक्रे सप्त पुर्य्यो भवन्ति तासां मध्ये साक्षाक्षाद्ब्रह्मगोपालपुरीहीति गोपालतापिनीश्रुत्या गोपालपुर्यां ब्रह्मस्वरूपभूतत्वप्रतिपादनात्तासामितिनिर्द्धारणषष्ठ्यासाक्षादिति ब्रह्मेति पदयोश्च वैयर्थ्यादन्यवस्तूनामिव ब्रह्मणि गोपालपुर्य्यारोपितत्वमिति व्याख्यातुमशक्यत्वात् किञ्च अर्वाचीना अद्वैतवादिनस्तु मायाशक्त्या तत्वनप विनोध्य भावे आगमापायिषु बाल्यादिषु सोयं देवदत्त इति प्रत्यभिज्ञानं नस्यात् तदुक्तं भट्टे. "आविर्भावतिरोभाव धर्मकेष्वनमापियत् तद्धर्मीति" तत्राह—स्यादिति । वस्तुतः परमात्मनो कल्पभेदो प्रसतिय इव वस्तुनो विकल्पे सति पूर्वपूर्वारोप साहश्यात् एवेति भ्रमः स्यात्सत्वतादेवाविद्यानिवृत्तिः ननु, सर्गमिथ्यात्वे शास्त्रस्य विधिनिषेधता कथ्यते तत्राह—स्वप्नमध्ये जाग्रत्स्वप्नं यथायथेति इतिस्वामिचरणातिरिक्तामंतरङ्गाह्लादिन्यादिशक्ति तद्विलासान् भगवन्नित्यधामाच्चित्यादींश्च मन्यमाना अन्धपरंपरयैव विवर्त्तं मिथ्याभूतस्यैव साहश्यभ्रममाचक्षाणा विगीयन्त एव नन्वेवं जगतो मिथ्यात्वे सर्वज्ञेनापि वेदेन विधिनिषेधौ कथमुच्यते नहि मरीचिका जलस्य गुणदोषौ विदेनोपदिश्येते इत्यत आह—जाग्रत्स्वप्नाविति । स्वप्नमध्ये यथा जाग्रत्स्वप्नव्यवस्था तथैव मिथ्याभूते जगति तावपि मिथ्याभूतावेवेत्यर्थः । अविद्वदधिकारित्वादिति "त्रैगुण्यविषया वेदा निस्त्रैगुण्यो भवार्जुन" इत्यादेः ॥ ६१ ॥

इदानीमुक्तमेवाद्वैतं भावनात्रयोपदेशेन दृढीकरोति—भावाद्वैतमिति चतुर्भिः । तत्रैवमालोचयन् स्वानुभूत्या आत्मतत्वानुभवेन वस्तु भेदबुद्धिरेकः स्वप्नः तत्तत्तदधिकारभेदेन कर्मभेदबुद्धिर्द्वितीयः मत्कर्मसाक्षिन्मेतत्फलं ममैव भोग्यमिति तृतीयः तान् धुनुते निवर्त्तयति ॥ ६२ ॥

कार्य्यकारणयोर्वस्त्वैक्यस्य मर्शनमालोचनं तंतुरेव न पटं इत्येव जगत्प्रकृत्यो. कार्य्यकारणयोरैक्यम् ॥ ६३ ॥

मनोवाक्तनुभिः कृतानां कर्मणां ब्रह्मण्यर्पणमिति उद्देश्यफलभेदो हि क्रियाभेदहेतुः ईश्वरार्पणेच तदभावात् क्रियाणामद्वैतम् ॥ ६४ ॥

---

## श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

मुक्तप्राप्तस्य भगवतो मार्गविशेषगम्यत्ववर्णनेन प्राप्तमेकदेशित्वं निराकरोति–आदाविति । आदौ उत्पादकरूपेण अन्ते प्रवेशस्थानत्वेन बहिर्धारकत्वेन अन्तः प्रेरकत्वेन सत् सर्वदा सत्ताप्रदत्वेन जनानां स्वयं साक्षादयमेव भगवान् अस्ति परं कारणमवरं कार्यं चायमेव ज्ञानं च ज्ञानतत्वं ज्ञेयमचेतनत्वं चायमेव तयोः परावरभगवच्छक्तित्वेन भगवत्पृथगवस्थानाभावात् वचो वाच्यं शब्दार्थौ चायमेव तमो ज्योतिः प्रकाश्यं प्रकाशकं वस्तु अयमेव सर्वात्मत्वात् ॥ ५७ ॥

शरीरादुत्क्रम्य पितृयानेन सोमलोकं देवयानेन परं पदमात्मा यातीत्युक्तं तत्र देहेन्द्रियादिविलक्षणमात्मतत्वं प्रतिपादयन् भूतसंघात एवात्मेति पक्षं बहुपदार्थसंयोगे मद्यशक्तिर्यथोत्पद्यते तद्वद्भूतसंघाते शरीरे विज्ञानमुत्पद्यते इति पक्षं च तथा चक्षुराद्यात्मवादं च बाह्याभिमतं निराकरोति—अबाधित इत्यादिचतुर्भिः । आभासं मृगादिरूपेणाभासमानः स्वप्नदेहो यथा अवस्तुतया अवस्तुमृगादिरूपेऽहंभूतमात्मतत्वं तद्भिन्नतया स्मृतः अपि निश्चये हि हेतौ यतो हेतोः निश्चयेन आबाधितः प्रबोधसमये नाहं मृगादिरूप इत्येवं निराकृतः तद्वत् ऐन्द्रियकं शरीरं अर्थविकल्पितम् अर्थात् आत्मस्वरूपाद्विकल्पेन भेदेन निर्णीतम् कुतः दुर्घटत्वात् तस्मिन् आत्मत्वासम्भवादित्यर्थः ॥ ५८ ॥

इह वस्तुनि जीवे क्षित्यादीनां भूतानां तथाऽन्येषामिन्द्रियाद्यर्थानामचेतनपदार्थानां कतमा छायापि नास्ति न संघातः न विकारः तेषामचेतनानां मध्ये पृथगेकतमः अन्वितः द्वित्वरूपो वा पदार्थस्तत्र नास्तीति किमु वक्तव्यम् तस्माद्भूतसंघातात्मवादः बहुपदार्थसंयोगजतद्विकारभूतमद्यशक्तिवत् भूतसंघातोत्थितविज्ञानात्मवादश्च मृषेत्यर्थः ॥ ५९ ॥

भूतभौतिकानामनात्मत्वदर्शनाय तेषामनित्यतां दर्शयति—धावन्ति नाना अवयवान् इति धातवो देहाः अवयवित्वात् पांचभौतिकत्वात् तन्मात्रावयवैर्देहस्थानमात्रावयवैर्भूतलेशैर्विनष्टा न भवन्तीत्यर्थः । एवं अवयविनि देहे असति नष्टे अन्ततः स्वकारणे भूते लयात् अवयवः भूतलेशः असद्भवति कारणाकार सूक्ष्मभावं प्राप्नोतीत्यर्थः ॥ ६० ॥

तर्हि देहे मृते तद्भिन्न आत्मा नैवास्तीति वा ह्यपक्षो वरीयान् अत्राह—स्यादिति । लोहपिंडे अग्नौ सति अग्निसादृश्यभ्रमो भवति यथा, एवं विकल्पे आत्मभिन्ने देहे यावत्कालपर्य्यन्तं वस्तुनि सति तावदेव वस्तुनः साहश्यभ्रमश्चेतनत्वभ्रमः स्यात् तस्मिन् असति न तु स्यात् तद्वस्तुदेहविलक्षणं नित्यमित्यर्थः । तर्हि देहविभिन्न आत्मा देहो नात्मेति आत्मानात्मविधानप्रतिषेधौ कदा स्याताम्? जाते ज्ञाने भवत, इत्याह—जाग्रत्स्वापाविति । यथा अयं जागरः नायं स्वापः इत्येवं विहितप्रतिषिद्धौ जाग्रत्स्वापौ अस्वप्ने प्रबोधे एव भवतः एवं जाते आत्मानात्मज्ञाने ज्ञानस्वरूपोऽहमात्मा जडवर्गो देहेन्द्रियादिरूपो नात्मेत्युभयोर्विधिनिषेधता स्यादित्यर्थः ॥ ६१ ॥

एवमात्मस्वरूपज्ञानदार्ढ्यार्थं नास्तिकानां संघाताद्यात्मभ्रान्तिवादा निराकृताः अथ तार्किकमीमांसकादिभ्रान्तिवादाननन्तशक्तिमत्सर्वात्मभूतपरमात्मज्ञानदार्ढ्यार्थं निराकरोति–भावाद्वैतमिति चतुर्भिः । भावयोर्जगत्परमात्मनोरद्वैतं क्रियाणां परमात्मांशभूतजीवकृतानां परमात्मन्यर्पणात्मकमद्वैतं द्रव्याणां भोक्तृभोग्यपदार्थानां परमेश्वरात्मकत्वरूपमद्वैतं स्वानुभूत्या वेदान्तश्रवणजन्येन स्वानुभावेन वर्त्तयन् चिन्तयन् आत्मनः त्रीन् स्वप्नान् स्वप्नवदागन्तुकान् दोषान् तार्किकाः जगत्परमात्मनोरत्यन्तं भेदमाहुः तच्छास्त्रश्रवणादेकः मीमांसकाः जीवकृताः क्रियास्तत्तजीवभो-

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

गार्थां नतु पुरमेश्वरेऽर्पयन्ति तच्छास्त्रश्रवणात् द्वितीयः उभयपक्षेऽपि भोक्तृभोग्यपदार्थानामत्यन्तभेदः स तृतीयः आगन्तुको दोषः एवं विधान् दोषान् इहास्मिन् लोके मुनिर्वेदान्तोक्ततत्त्वावज्ञता शृनुते निराकरोति ॥ ६२ ॥

कार्यकारणयोर्जगत्परमात्मनोर्वस्तुनोः कार्यत्वकारणत्वाभ्यां भिन्नयोरपि पटतन्तुवदैक्यस्य मर्शनमनुसन्धानं तदूभावाऽद्वैतमुच्यते श्रुतिभिः "ब्रह्मैवेदमग्र आसीत् सदेव सौम्येदमग्र आसीत् सर्वं खल्विदं ब्रह्म" इत्यादिभिः परमात्मनो ऽत्यन्तं भिन्नं जगत् परमाणुमयत्वादिति विकल्पस्य अत्यन्तभेदस्य अवस्तुत्वात् पटतन्तुवदिति दृष्टान्तेन ब्रह्म सत्यं जगन्मिथ्येति प्रच्छन्नबौद्धानां पक्षोऽपि निरस्तो वेदितव्यः।तन्तूनां मिथ्यात्वं नपटमिथ्यात्वस्यासंभवात् अध्यासवादनिराकरणदर्शने कौतूहलं तर्हि अध्यासगिरिवज्राख्यो ग्रन्थो द्रष्टव्यः। पटस्य तन्त्वभिन्नत्वं दृष्टान्ते दार्ष्टान्ते तु जगतश्चेतनाचेतनरूपपरमात्मशक्तिद्वाराऽभिन्नत्वमिति विवेकः ॥ ६३ ॥

साक्षात्परब्रह्मणि परे श्रीपुरुषोत्तमे सर्वकर्मणां कारयितरि फलदातरि मनोवाक्तनुभिः सर्वकर्मसमर्पणं यत्तत्क्रियाद्वैतम् ॥ ६४ ॥

---

भाषा टीका।

जनो के आदि अन्त मे तथा बाहर और भीतर और जगत् में जो पर, अवर, ज्ञान, ज्ञेय, वचन, वाच्य, तम, और ज्योति अर्थात् समष्टि जीव है वे सबही स्वयं भगवानही है तस्मात् पूर्वोक्तज्ञानी को सर्ववस्तुके भगवदात्मक समुझने से कुछ मोहका कारण ही नहीं है ॥ ५७ ॥

भावहोनेवाला जात्यादि के विकल्पास्पद यहदेह सत्यहोकर भी शास्त्र में अवस्तुत्वेन अर्थात् अपुरुषार्थत्वेन कहाहै, क्योंकि—इसमें आत्मधर्म दुर्घट है इसदेह के तरह जितने इन्द्रियों के विषय है वे भी अपुरुषार्थ रूपही है ॥ ५८ ॥

इहाँपर पृथिवी के परिणाम रूप वृक्षादिकों की छाया जैसे न वृक्षों का समुदायरुपहै, न वृक्षोंका विकाररूप है, न वृक्षो के बिना स्थिति के योग्य, है और न वृक्षोंके अन्वित अर्थात् सदा वृक्षों के साथ रहनेवाली है, क्योंकि अनातप समयपर नहीं रहती है, इसी प्रकार यह शरीर भी न आत्मा का संघात न विकार न पृथक्स्थिति योग्य और न अन्वित तस्मात् मृषा अर्थात् अनित्य है, इसी से आत्मा शरीर नहीं हो सक्ता है ॥ ५९ ॥

ऐसेही पृथिव्यादि धातुओं को भी अवयवि होने से नित्य नहीं कहसक्ते हैं क्योंकि? वे अवयवों के विना नहीं रहसक्ती है, और अवयवि के असत् काल में अर्थात् नाश होने पर अन्त में अवयवों की भी उपलब्धि नहीं होती है, इस प्रकार अवयवि होने से अनित्य शरीर नित्य आत्मा नहीं हो सक्ता है ॥ ६० ॥

यदि कहो कि शरीर आत्मा नही है तब स्थूलोहं अर्थात् मैं स्थूलहूं इस प्रकार की आत्मा को विषय करने वाली अहंप्रतीति इस देह में क्यो होती है? तहां पर कहते है कि—वस्तु के विकल्प ( संशय ) होने पर तो सादृश्य और भ्रम हुआ करते है तहां जड और चेतन का सादृश्य न होने से सादृश्य से तो ब्राह्मणोहं अर्थात् ( मैं ब्राह्मण हूं ) इत्यादि प्रतीति हो नही सक्ती। किन्तु अग्नि के संसर्ग से जैसे उष्णा जलं ( जल उष्ण है ) ऐसा ज्ञान होता है, ऐसे ही शरीर और आत्मा का संसर्ग ( सम्बन्ध ) होने से शरीर गत स्थूलत्व आदि धर्मो का आत्मा में भ्रम होता है, भलाँ यदि आत्मा शरीर नही है? तो विहित और निषिद्ध का अनुष्ठान तो शरीर ही से होता दीखते है फिर शास्त्र आत्मा के लिये क्यों विधि निषेध कहना है? तहाँ कहते है कि—जैसे सोते हुए पुरुष को स्वप्नावस्था में भी स्वप्नावस्था और जाग्रत् अवस्था का अनुभव होना है, और जागने पर सोते समय की दोनो अवस्थाओं के अनुभव का उस को सम्बन्ध नहीं रहना, इसी प्रकार आत्मा को भी प्रकृति सम्बन्ध तक ही अज्ञानकी शय्या पर सोने से विधि निषेध का सम्बन्ध है, और ज्ञान दृढ़ा होने पर ( मुनयोऽपि न बध्यमानाः ) अर्थात् मुनि लोग भी बन्धन से छूट जाते है ॥ इस उक्त प्रकार से स्वस्वरूपादि का पूर्ण ज्ञान होने से विधि निषेध का पात्र नहीं होता है। और आविर्भूत गुणाष्टक होकर मुक्त होने पर भी केवल आत्मा को विधि निषेध से कुछ प्रयोजन ही नही रहता ॥ ६१ ॥

आत्मा का यह तीन प्रकार का अद्वैत है एक भावाद्वैत, दूसरा क्रियाद्वैत, तीसरा द्रव्याद्वैत, तहां मनन शील ज्ञानी लोग आलोचना करते हुए जाग्रदादितीनो अवस्थाओं को निवृत्त कर देते हैं, ॥ ६२ ॥

तीन प्रकार के अद्वैत मे भावाद्वैत वह है, कि पट तन्तु ( वस्त्र सूत ) के तरह विकल्प ( देव मनुष्यादि अवस्था ) को कुछ वस्तु न होने से अर्थात स्थिर न होने से कार्य कारण वस्तु का जो ऐक्य विचार है, ॥ ६३ ॥

हे युधिष्ठिर ! जो कि साक्षात् पर ब्रह्म परमात्मा मे मन वाणी और शरीर से कर्मों का समर्पण है उस को क्रिया द्वैत कहते है ॥ ६४ ॥

आत्मजायासुतादीनामन्येषां सर्वदेहिनाम् ! ।
यत्स्वार्थकामयोरैक्यं द्रव्याद्वैतं तदुच्यते ॥ ६५ ॥
यद्यस्य वा ऽनिषिद्धं स्याद्येन यत्र यतो नृप ।
स तेनेहेत कर्माणि नरो नान्यैरनापदि ॥ ६६ ॥
एतैरन्यैश्च वेदोक्तैर्वर्तमानः स्वकर्मभिः ।
गृहे ऽप्यस्य गतिं यायाद्राजंस्तद्भक्तिभाङ्नरः ॥ ६७ ॥
यथा हि यूयं नृपदेव ! दुस्त्यजादापद्गणादुत्तरतात्मनः प्रभोः ।
यत्पादपङ्केरुहसेवया * भवानहारषीन्निर्जितदिग्गजः क्रतून् ॥ ६८ ॥
अहं पुरा ऽभवं कश्चिद्गन्धर्व उपबर्हणः ।
नाम्ना ऽतीते महाकल्पे गन्धर्वाणां सुसम्मतः ॥ ६९ ॥
रूपपेशलमाधुर्यसौगन्ध्यप्रियदर्शनः ।
स्त्रीणां प्रियतमो नित्यं मत्तस्तु पुरुलम्पटः ॥ ७० ॥
एकदा देवसत्रे तु गन्धर्वाप्सरसां गणाः ।
उपहूता विश्वसृग्भिर्हरिगाथोपगायने ॥ ७१ ॥
अहं च गायंस्तद्विद्वान्स्त्रीभिः परिवृतो गतः ।
ज्ञात्वा विश्वसृजस्तन्मे हेलनं शेपुरोजसा ।
याहि त्वं शूद्रतामाशु नष्टश्रीः कृतहेलनः ॥ ७२ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

आत्मनः स्वस्य जायादीनां च स्वार्थश्च कामश्च तयोः देहादीनां पञ्चभूतात्मकत्वेन भोक्तुश्च परमात्मत्वेनाभेदालोचनेनार्थकामयोर्यदैक्यदर्शनमित्यर्थः ॥ ६५ ॥

उक्तानाश्रमधर्मान्सङ्क्षिप्याह—यदिति । यद्द्रव्यम् येनोपायेन यतः सकाशात् ॥ ६६ ॥

प्रस्तुतमुपसंहरति—एतैरिति । अस्य श्रीकृष्णस्य गतिम् तद्भक्तिभाक् तस्य भक्तः ॥ ६७ ॥

एतत्सर्वसाधारणमुक्तम् भक्तस्य तु भक्तिरेव सर्वपुरुषार्थहेतुरिति पाण्डवानेव लक्षीकृत्याह—यथाहीति । हे नृपदेव ! नृपैर्देवैश्च सहायैर्दुस्त्यजादिति वा आत्मनः श्रीकृष्णादेव प्रभोर्हेतोः अडभाव आर्षः उत्कर्षेणातरतेत्यर्थः यथा यथावत् तमेव भजतेति शेषः यद्वा यथा आपद्गणादुत्तीर्णास्त्वम् यथा च क्रतूनहार्षीत्तथा श्रीकृष्णादेव तारकात्संसारादप्युत्तरतेत्यर्थः ॥ ६८ ॥

श्रीकृष्णसेवा महतामवज्ञया भ्रश्यति तत्कृपया च सिध्यतीति दर्शयन्पूर्ववृत्तमाह—अहमिति सार्द्धैः पञ्चभिः । नाम्ना उपबर्हणः ॥ ६९ ३

पेशलं सौकुमार्यं रूपादिभिः प्रियं दर्शनं यस्य ॥ ७० ॥ ७१ ॥

तदाह्वानं विद्वान् उन्मत्तः सन् गायन्नेव गतः ॥ ७२ ॥—७४ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

द्रव्याद्वैतं विवृणोति—आत्मेति । अर्थशब्दो धनपरः कामशब्दः काम्यस्रक्चन्दनादिभोग्यवस्तुविषयः सच भोगोपकरणभोगस्थानादि प्रदर्शनार्थः यदर्थकामयोरात्मजायादि सर्वदेहिनामैक्यं तद्द्रव्याद्वैतं वित्तगृहक्षेत्रपात्रस्रक्चन्दनादीनामात्मजायाद्यनेकभोक्तृवर्गसाधारणत्वं द्रव्याद्वैतमित्यर्थः । ते एतेन गृहादीनां स्वासाधारणत्वभ्रमो निरस्तः यद्वा द्रव्ययोश्चिदचिद्द्रव्ययोरद्वैतं द्रव्याद्वैतं तत्र चिदचिद्वैतं दर्शयति-आत्मजायेति । आत्मादीनां सर्वदेहिनां जीवानां ज्ञानैकाकारत्वेनैकरूपेण दर्शनं चिदद्वैतं प्रकाराद्वैतम् अर्थकामादीनामचिद्न्यपरिणामरूपत्वभ्रमश्च निरस्तः ज्ञानाद्वैतमितिपाठेऽप्ययमेवाभेददर्शनं ज्ञानाद्वैतमित्यर्थः ॥ ६५ ॥

न केवलं त्रिविधमेवाद्वैतमनुसन्धेयमपितु अन्यदपि शास्त्रानुमतं चेत्तदपीत्याह—यदिति । हे नृप ! येन शास्त्रेण यस्य पुंसः

* भगवान्महर्षिभिर्निर्जितदिग्जनः इति पाठः—वीर० ।

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

यस्य वस्तुनो यतो यस्माद्वस्तुनः सकाशाद्यदद्वैतमनिषिद्धं किन्त्वनुमतं स पुमान् तेनाद्वैतेनाऽनुसन्धीयमानेनेति शेषः। तदनुसन्धानपूर्वकमेव कार्माणि कर्त्तव्यानीहेत कुर्यादन्यैः शास्त्रप्रतिषिद्धैस्तु न कुर्यात् यतोऽयमनापदि न विद्यते आपत्संसारो यतस्तस्यां ज्ञाननिष्ठायां वर्त्तमानः यथा "वाचारम्भणं विकारो नामधेयम्" "व्यवसायात्मिका बुद्धिरेकेह कुरुनन्दन!" इत्यादिशास्त्रेण भावाद्वैतादिकं प्रतिपाद्यते न तथा प्रकाराद्वैतप्रकार्यद्वैतगुरुदेवताद्वैतादिकमपि शास्त्रैः प्रतिपाद्यत इति तदप्युपादेयमेवेत्यभिप्रायेणाऽयं श्लोकः प्रवृत्त. तत्र प्रकार्यद्वैतं नाम ब्रह्माद्वैतं "सर्वंखल्विदं ब्रह्म" इत्यादिब्रह्मप्रकरणे सामानाधिकरण्येन ब्रह्माद्वैतप्रतिपादनात्सामानाधिकरण्यस्य च प्रकारभेदविशिष्टप्रकारैकत्वपरत्वाच्च ब्रह्माद्वैतमेव प्रकार्यद्वैतं "नित्यो नित्यानां चेतनश्चेतनानाम्" इत्यादिश्रुतिभिर्जीवस्वरूपभेदप्रतिपादनेन स्वरूपेणाभेदानुपपत्तेः बद्धमुक्तादिव्यवस्थाऽनुपपत्तेः सुखादिव्यवस्थाऽनुपपत्तेश्च क्वचिज्जीवैकत्वप्रतिपादनं प्रकारैक्याभिप्रायकमेवेति तदद्वैतमेव प्रकाराद्वैतम् "आचार्यं मां विजानीयात् "आचार्यदेवो भव" "आचार्यः स हरिः साक्षाच्चररूपी न संशय." इत्यादिभिर्गुरुदेवतादीनामद्वैतं प्रतिपाद्यत एव॥ ६६॥

यत्पृष्टं "गृहस्थ एतां पदवीं विधिना येन चाञ्जसा। यायाद्देवऋषे ब्रूहि" इति यस्योत्तरमुक्तमुपसंहरति-एतैरिति। हे राजन्! वेदोक्तैरिति वेदशब्दस्तन्मूलकस्मृतिपुराणादीनामपि प्रदर्शनार्थः वेदादिभिरुक्तैः कर्त्तव्यत्वेनोक्तैरेतैर्भावाद्वैताऽनुसन्धानादिभिरित्यन्यैर्देहात्मजीवेश्वरादिभेदाऽनुसन्धानैः स्वस्ववर्णाश्रमोचितकर्मभिश्च तस्य भगवतो भक्तिभाग्भक्तिकुर्वन् गृहेऽपिजनः गृहस्थोऽपि जनोऽस्य श्रीकृष्णस्य गतिं प्राप्नुयादित्यर्थः॥ ६७॥

"मादृशो गृहमूढधीः" इत्यनेनाभिप्रेतां स्वस्य मुक्तिदौर्लभ्यशङ्कां किम्पुनर्न्यायेन निराकरिष्यमाणः तावच्छ्रीकृष्णसेवयैव तरिष्यसीत्याह-यूयमिति। हे नृप देव! यथा प्रभोः सर्वशक्तेरात्मनोऽन्तरात्मनः श्रीकृष्णादेव हेतोर्यूयं दुस्त्यजादापदां गणादुत्तरत अडभावः अन्तादेशाभाव आत्मनेपदश्चार्षाणि उदतरत उत्तीर्णा. यथा च भवान् यस्य श्रीकृष्णस्य पादपङ्कजयोः सेवया हेतुभूतया निर्जिता दिग्जनादिक्पालकाः येन तादृशः सन् महर्षिभिः सह क्रतूनकार्षीदिति शेषः तथा तस्यैव सेवया मोक्ष्यस इत्यध्याहारः॥ ६८॥

लब्धतदीयसेवामात्रेण हेतुना मादृशानां मुक्तिसम्भवे किं पुनः साक्षाल्लब्धतत्सेवानां तादृशामिति प्रतिपादनार्थं स्वपूर्वजन्मवृत्तान्तमाह—अहमिति। अतीते ब्रह्मकल्पे पूर्वजन्मन्यहं नाम्नोपबर्हण इति प्रसिद्धः कश्चिद्गन्धर्व अभूवम् आत्मानं विशिनष्टि--गन्धर्वाणां सुसम्मतः॥ ६९॥

रूपादिभिः प्रियदर्शनः प्रियं यथा भवति तथा दृश्यत इति तथा रूप सौन्दर्य पेशल सौकुमार्य दृष्टिचित्तापहारित्वेन रसावहत्वं सौगन्ध्य स्रक्चन्दनादिगन्धवत्त्वं रूपादिभिः प्रियं दर्शन यस्येति वा स्त्रीणां नित्यं सदा प्रियतमः मत्तः उर्वधिकं लम्पट. विषयलालसः एवं भूतोऽहं स्थितः॥ ७०॥

तत्रैकदा देवसत्रे हरिगुणाऽनुभवात्मकब्रह्मसत्रे विश्वसृग्भिः प्रजापतिभिः हरिकथागायने निमित्ते तदर्थमप्सरसां गणा उपहूताः॥ १७॥

तथाऽहमपि तद्गन्धर्वाह्वान जानन् स्त्रीभिः परिवृतः गायन् हरीतरगाथा गायन् तत्र गतः अगायन्निति पाठे अगायन्नेव गत इत्यर्थः तत् मे मम हेलनमपराधं ज्ञात्वा विश्वसृजः ओजसा तपोबलेन शेपुः॥ ७२॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

आत्मजायादीनामन्येषां च देवदत्तादीनां भगवदधीनत्वदर्शनं यद्यच्चार्थकामयोरैक्यं भगवद्विषयत्वदर्शनं तत्सर्वं द्रव्याद्वैतं "मन्ये तदर्पितमनोवचनात्मगेहप्राणाः पुनाति" इत्यादिनोच्यत इत्यन्वयः अनेन जीवस्य श्रीहरिणा द्वैतमुच्यते तत्रैव चाद्वैतशब्दार्थग्रहणं नतु स्वरूपैक्यमिति शिक्षाग्राह्येति ज्ञायत इति॥ ६५॥

उपासनाप्रकारं निरूप्याधुनार्चनादिप्रकारं दर्शयति—यद्यस्येति। यस्य पुरुषस्य येन द्रव्येण यत्र यस्मिन्देशे काले वा यतो यस्मादुपात्तमनिषिद्धं श्रुतिस्मृतिलोकविहितं स नरस्तेन तस्मिन् देशे काले वा तस्मात्पुरुषादागतेन कर्माणि पूजालक्षणानीहेत कुर्यात् अन्यैर्निषिद्धैर्न कुर्यादित्यन्वयः। नन्वेव तर्ह्यापद्यपरम एव प्राप्त इति तत्राह—अनापदीति॥ ६६॥

एतैरनापदि विहितैरन्यैरापदि विहितै. अस्य हरेर्गतिं ज्ञानं स्थानं वा यायादिति लडर्थे लिङ् आप्नोतीत्यर्थः॥ ६७॥

उक्तमर्थमनुभवसिद्धं करोति—यथेति। दिग्गजशब्देन दिग्पालानुपलक्षयति तस्य सेवा कर्तव्येति शेषः॥ ६८॥

ममाप्यनुभवसिद्धं दर्शयितुं स्वचरितमाह—अहमिति। कश्चिदित्यात्मानं निन्दयत्यथ नाम्नोपबर्हणो गन्धर्व इति। पूर्वं अतीते महाकल्पे अतीतब्रह्मकाले "ब्राह्मकालः परश्चेति महाकल्पश्च कीर्तित." इति॥ ६९॥

तत्पुरलम्पटः तासां पुरे गृहे लम्पटः स्यातुमुत्सुकमनाः॥ ७०॥

गन्धर्वादिगणा अगायन्॥ ७१॥

तद्विदित्वा गतः स्त्रीभिः परिवृतोऽगायं हेलनं विश्वसृजां पुरतः स्त्रीभिः सम्भूय मदोपरक्तगानलक्षणम्॥ ७२॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

यथा येन भक्तिमात्रप्रकारेण आत्मनः स्वस्य वः प्रभुः श्रीकृष्णः तस्मादेव हेतोर्यूयमापद्गणात् उत्तरत उत्तरिष्यथ तदेव प्रलापयति। यदिति॥ —६८॥

तत्र स्वमपि दृष्टान्तयति—अहमित्यादिना। तत्राहमिति युग्मकम्। येनैव भक्तिमात्रप्रकारेण नारदत्वमपि लब्धवानहमिति प्रकरणार्थः॥ ६९-७८॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

आत्मनः स्वस्य जायादीनाञ्च अन्येषाञ्च स्वसम्बन्धरहितानां स्वीयार्थसाधनं कामञ्च तत्प्राप्यं यद्भोग्यं तयोः साधनसाध्ययोरैक्यादैक्यभावनेति यावेषार्थकामौ स्वस्य तावेव सर्वेषामेव देहादीनां पञ्चभूतात्मकत्वेनैक्यात् सर्वेषामेव जीवात्मनां भोक्तृत्वेनैक्याद्भेदाभावादिति भावः ॥ ६५ ॥

उक्तानाश्रमधर्मान् संक्षिप्याह—यद्द्रव्यं येनोपायेन यतः सकाशात् ॥ ६६ ॥

प्रस्तुतमुपसंहरति—एतैरिति । अस्य श्रीकृष्णस्य गतिं गृहे गृहस्थोऽपि यदि तद्भक्तिभाक् स्यादित्यर्थः ॥ ६७ ॥

एषा च पञ्चाऽध्यायी सर्वसाधारण्येनैवोक्ता ऐकान्तिकभक्तानां तु सिद्धानां साधकानां च भगवानेव गतिः तत्र च सिद्धान् स्वयमपरोक्षीभूत एव भगवान् स्वप्रेमतरङ्गे नर्त्तयितुं स्वपादपद्मदानसंगमितांस्तान् यथावदेव कारयति तथैव ते कुर्वन्ति तदभिप्रेताचरणमेव तेषां भजनमिति तत्र पाण्डवानेव प्रमाणीकुर्वन्नाह—यथा हीति । नृदेवैश्च सहायैः दुरत्ययात् आपद्गणात् स्वप्रभोर्ध्यानादिलक्षणाचरणेनैवोत्तरेत उत्तरथेत्यर्थः । यत् यथा च भवांस्तथैव क्रतून् अहार्षीत् तथैवान्ये उग्रसेनादयोऽपि तं सेवन्ते इति शेषः । तेन मादृशां गृहमूढधीरित्युक्त्वा स्वेषां गृहस्थाकर्मिणान्तर्भावो न मान्य इति भावः ॥ ६८ ॥

यादृच्छिकसाधुसङ्गलब्धभक्तीन् साधकांश्च "धर्मान् सन्त्यज्य यः सर्वान्मां भजेत् स च सत्तम" इत्यादि श्रीभागवतशास्त्रस्वरूपेण स एव भगवान् यथादिशति तथैव ते कुर्वन्ति "सलिङ्गानाश्रमांस्त्यक्त्वा चरेदविधिगोचरः" इति भगवदुक्तं विधिवाक्यमेव प्रमाणीकुर्वन्तो वर्णाश्रमाचारादिकं नापेक्षन्ते तत्र पूर्वजन्मनि स्वमेव प्रमाणीकुर्वन्नाह—अहमिति, सार्द्धैः पञ्चभिः । पेशलश्चातुर्य्यम् ॥ ६९ ॥ ७० ॥

तदाह्वानं विद्वान् उन्मत्तः सन् गायन्नेव गतः ॥ ७१ ॥ ७२ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

आत्मनः स्वस्य जायादीनां च स्वार्थस्य स्वरूपस्य कर्मफलभोक्तुः काम्यते इति कामः भोग्यवस्तुजातं तस्य चैक्यं सर्वाधारभूतेन भगवता सह अपृथक्त्वं यत्तद्द्रव्ययोर्भोक्तृभोग्ययोरद्वैतम् "भोक्ता भोग्यं प्रेरितारं च मत्वा सर्वं प्रोक्तं त्रिविधं ब्रह्म मेतत्" इति श्रुतिरत्राऽनुसन्धेया ॥ ६५ ॥

अनापदि द्रव्यदेशकालाद्यनुसारेण कार्याणि कुर्यादित्युपदिशन् प्रस्तुतमुपसंहरति—यद्यस्येत्यादिना । हे नृप ! यस्य कर्त्तुः यत्कार्यजातम् येन द्रव्येण यतः सकाशाच्च यस्मिन् देशे काले च अनिषिद्धं स्यात् स कर्त्ता तान्येव कार्याणि तेन द्रव्येण तत्सकाशादेव तस्मिन्देशे काले च सम्पादेत नान्यत्कुर्यादित्यर्थः ॥ ६६ ॥

एतैरुक्तप्रकारैरन्यैरनुक्तैर्वेदोक्तकर्मभिर्हेतुभूतैः तस्य श्रीकृष्णस्य भक्तिभाङ्नरः गृहेऽपि वर्त्तमानः अस्य श्रीकृष्णस्य गतिं पदवीं यायात् मुक्तो भवतीत्यर्थः । अत्रेदं बोध्यं कर्मणामन्तःकरणशुद्ध्युपास्योपासकस्वरूपज्ञानद्वारा प्रेमलक्षणा भक्तिः साधनं जातायां तस्यां प्रेमगृहगृहीतस्य सिद्धभक्तस्य कर्मावश्यकाशाभावात्कर्मत्यागः "धर्मान्संत्यज्य यः सर्वान्मां भजेत्स च सत्तमः" इत्यस्मिन् शास्त्रे एव सत्तमशब्देन सिद्धभक्तो निर्दिष्टः साधकस्य तु कर्माभावेऽन्तःकरणशुद्ध्यभावाच्च ज्ञानभक्तिसम्भवः तदभावे मुक्त्यभाव इति दिक् ॥ ६७ ॥

हे नृपदेव ! यथा यूयं आत्मनः स्वकीयादुपास्यभूतात्प्रभोः श्रीकृष्णादेव हेतुभूतात् आपद्गणादुत्तरत तद्भाव आर्षः उत्कर्षेणातरतेत्यर्थः । यथा च भवान् यत्पादपंकेरुहसेवया क्रतून् अहार्षीत् तथा असौ प्रसिद्धोऽन्योऽपि गृहे वर्त्तमानः तद्भक्त्या कृतार्थः स्यादिति भावः ॥ ६८ ॥

श्रीकृष्णभक्तिमाहात्म्यं सूचयितुं स्ववृत्तान्तमाह—अहमिति सार्द्धैः पञ्चभिः । नाम्ना उपबर्हणः ॥ ६९ ॥

रूपादिभिः प्रियं दर्शनं यस्य सः तत्र पेशल चातुर्य्यम् ॥ ७०—७१ ॥

अहञ्च तदाह्वानं विद्वान् स्त्रीभिः परिवृतः उन्मत्तः सन् गायन्नेव गतः ॥ ७२—७३—७४ ॥

---

भाषा टीका ।

अपनी स्त्री पुत्रादिकों का तथा अन्य सर्व प्राणिओं का जो अपने अर्थ और काम के निमित्त एकता होती है, इसी को द्रव्याद्वैत कहते है ॥ ६५ ॥

जिस मनुष्य को जिस शास्त्र से जिस विषय में जिस उपाय से जिस कार्य का निषेध नहीं किया है, हे नृप ! वह पुरुष अनापद् काल में उसी उपाय से अपने कार्यों को चलावै और से नहीं ॥ ६६ ॥

हे राजन् ! वेदोक्त इन कर्मों का अथवा और अन्य वेदोक्त स्वकर्मों का आचारण करता हुआ श्रीहरि में भक्तिवाला पुरुष अपने गृह में रहकर भी श्रीकृष्ण की गति को प्राप्त होता है, अर्थात् मोक्ष को प्राप्त होता है ॥६७॥

हे राजन् ! बड़े २ राजाओं से और देवों से दुस्त्यज ऐसे आपद्गणों से आप को जैसे प्रभु ने छुड़ाये है एसे ही संसार से भी पार उतारेंगे क्योंकि इनही के चरण कमल की सेवा से आपने दिग्विजय करके उत्तम यज्ञ किये गये हैं ॥ ६८ ॥

अब नारद जी अपनी पहिली कथा कहने लगे । नारदजी बोले, कि—अतीत कल्प में मैं गन्धर्वों का मान्य उपबर्हण नामक एक गन्धर्व भया रहा ॥ ६९ ॥

सौन्दर्य सौकुमार्य सौगन्ध्य गुण वाला और अति प्रियदर्शन वाला सदा स्त्रियों को बड़ा प्रिय और उन्मत्त और बड़ा लम्पट रहा ॥ ७० ॥

तावद्दास्यामहं जज्ञे तत्रापि ब्रह्मवादिनाम् ।
शुश्रूषया ऽनुषङ्गेण प्राप्तो ऽहं ब्रह्मपुत्रताम् ॥ ७३ ॥
धर्मस्ते गृहमधीयो वर्णितः पापनाशनः ।
गृहस्थो येन पदवीमञ्जसा न्यासिनामियात् ॥ ७४ ॥
यूयं नृलोके बत भूरिभागा लोकं पुनाना मुनयो ऽभियन्ति ।
येषां गृहानावसतीति साक्षाद्गूढं परं ब्रह्म मनुष्यलिङ्गम् ॥ ७५ ॥
स वा अयं ब्रह्म महद्विमृग्यं कैवल्यनिर्वाणसुखाऽनुभूतिः ।
प्रियः सुहृद्वः खलु मातुलेय आत्माऽर्हणीयो विधिकृद्गुरुश्च ॥ ७६ ॥
न यस्य साक्षाद्भवपद्मजादिभी रूपं धिया वस्तुततोपवर्णितम् ।
मौनेन भक्त्योपशमेन पूजितः प्रसीदतामेष स सात्वतां पतिः ॥ ७७ ॥

श्रीशुक उवाच ।

इति देवर्षिणा प्रोक्तं निशम्य भरतर्षभः ।
पूजयामास सुप्रीतः कृष्णं च प्रेमविह्वलः ॥ ७८ ॥
कृष्णपार्थावुपामन्त्र्य पूजितः प्रययौ मुनिः ।
श्रुत्वा कृष्णं परं ब्रह्म पार्थः परमविस्मितः ॥ ७९ ॥
इति दाक्षायणीनां ते पृथग्वंशाः प्रकीर्तिताः ।
देवासुरमनुष्याद्या लोका यत्र चराचराः ॥ ८० ॥

इति श्रीमद्भागवते महापुराणे सप्तमस्कन्धे पारमहंस्यां संहितायाम्
वैयासिक्यां प्रह्लादाऽनुचरिते युधिष्ठिरनारदसंवादे सदाचारनिर्णयो नाम
पञ्चदशोऽध्यायः ॥ १५ ॥
समाप्तश्चायं सप्तमस्कन्धः ॥ ७ ॥
हरिः ॐ तत्सत् ॥

भाषा टीका ।

एक समय देवताओं के यज्ञ में विश्व सृष्टाओं ने हरि गाथा गान के लिये बहुत से गन्धर्व और अप्सराओं को बुलाये रहे ॥ ७१ ॥

उस समय उन के आह्वान को जानता हुआ स्त्रियों के झुंड सहित उन्मत्त की तरह गाता हुआ मैं भी गया, विश्व सृष्टाओं ने मेरे अपराध को जान कर एका एकी मुझे शाप दे दिया ॥ ७२ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

एवं तु कृतार्थं एवेति हर्षेण पुनः पूर्वश्लोकानेव पठति यूयमिति शेषं स्पष्टम् ॥ ७५ ॥ ७६ ॥ ७७ ॥ ७८ ॥ ७९ ॥ ८० ॥

सप्तमस्कन्धगूढार्थपदभावार्थदीपिका ।
संसेव्यतां सदा सद्भिर्यतिश्रीधरनिर्मिता ॥

इति श्रीमद्भागवते महापुराणे सप्तमस्कन्धे श्रीधरस्वामि-
विरचितायां भागवतभावार्थदीपिकायाम्
पञ्चदशोऽध्यायः ॥ १५ ॥
समाप्तोऽयं सप्तमस्कन्धः ॥ ७ ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

कृष्णं चकारन्नारादञ्च त्वमेवंभूतो मम भ्रातेति प्रेम्णा विह्वलः ॥ ७८ ॥

कृष्णपार्थौ कृष्णार्जुनौ कृष्णयुधिष्ठिरौ वा प्रयाणसमये पुनरपि पूजितः ॥ ७९ ॥ ८० ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् ।
पञ्चादशः सप्तमस्य सङ्गतः सङ्गतः सताम् ॥ १५ ॥

श्रीतिश्रपो मौस्थ्यवशान्निगीर्य्य यद्बोधि तद्वच्मि मनो विनोदात् ।
बुधाः कृपा गर्हत वर्हचूलः पुरः स्फुरन्नस्तु स नोऽनुकूलः ।
पौषस्य कृष्णैकादश्यां गान्धर्वायाः सरस्तटे ।
अपूरि सप्तमस्यापि टीकेयं सत्प्रसादतः ।
समाप्तोऽयं सप्तमस्कन्धः ॥ ७ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

मनुष्याणामिव लिङ्गानि वस्त्रालङ्कारादीनि यस्य तत् ॥ ७५—७६ ॥

वस्तुतया साकल्येन नोपवर्णितम् ॥ ७७—८० ॥

शुकेन विदुषा स्वल्पः सम्प्रदायानुरोधतः ।
सप्तमस्कन्धगो दीपः कृतः श्रीकृष्णप्रीतये ॥
इतिश्रीमद्भगवन्निम्बार्कचरणचिन्तकश्रीशुकदेवसुधी-
प्रणीते श्रीमद्भागवतसप्तमस्कन्धीये सिद्धान्तप्रदीपे
पञ्चदशाध्यायार्थप्रकाशः ॥ १५ ॥
ग्रन्थसंख्या २७००
समाप्तश्चायं सप्तमस्कन्धः ॥ ७ ॥

---

भाषा टीका ।

तदनन्तर मैं फिर दासी में उत्पन्न हुआ वहां पर भी ब्रह्मवादि ब्राह्मणों की और महात्माओं की शुश्रूषा के प्रसङ्ग से ब्रह्मा जी के पुत्रत्व को प्राप्त भया ॥ ७३ ॥

नारदजी बोले, कि-राजन् ! पापोंका नाशक ऐसा गृहस्थों का धर्म हमने वह तुमारे आगे वर्णन किया है कि जिस धर्म के आचरण करने से पुरुष घर में रहकर भी सन्यासियों की पदवी को प्राप्त होजावे ॥ ७४ ॥

बस राजन् ! मनुष्य लोक में तौ तुम लोग बडभागी हो, क्योंकि ? जिनके घरों को लोकों को पवित्र करने वाले बडे २ मुनि लोग चले आते है, सो भी क्योंकि ? तुमारे घर में साक्षात् पर ब्रह्म मनुष्य नाट्य से छिपा हुआ वास करता है ॥ ७५ ॥

ये श्रीकृष्ण वही ब्रह्म है कि जिनको महात्मा लोग समाधिस्थ होकर ढूंढते है और वही केवल्य सुख अनुभव के देने वाले है । परञ्च आपका तौ प्रिय सुहृद, मातुलेय, ( मामा का पुत्र ) आत्मा, पूजनीय, आज्ञाकारी, और गुरु भी येही है ॥ ७६ ॥

जिनके रूप का साक्षात् शंकर और ब्रह्मादिक अपनी बुद्धि से वास्तवरीति से ( ठीक २ ) वर्णन नहीं करसक्ते है किंतु केवल मौन और शान्ति पूर्वक भक्ति से पूजा होते है ये भक्तों के पति हम पर प्रसन्न होवै, ॥ ७७ ॥

श्रीशुक उवाच ॥

श्रीशुकदेवजी बोले, कि—युधिष्ठिर महाराज ने श्रीनारदजी के इस प्रकार के कथन को सुनकर बडे प्रसन्न होकर राजा-युधिष्ठिर जीने श्रीनारदजी की पूजाकरी और श्रीकृष्ण के माहात्म्य को सुनकर प्रेम से विह्वल होकर श्रीकृष्ण की भी पूजा करी ॥ ७८ ॥

तदनंतर नारदजी भी श्रीकृष्ण और युधिष्ठर से पूजित होकर श्रीकृष्ण और युधिष्ठिर से पूंछकर यदृच्छा से चले गये और श्रीकृष्ण को परब्रह्म सुनकर युधिष्ठिर भी परम विस्मय को प्राप्त हुए ॥ ७९ ॥

हे परीक्षित, हे राजन् ! इस प्रकार दक्षकी पुत्रियो के पृथक् २ वंश हमने तुमारे आगे वर्णन किये, जिनके वंश में देव असुर मनुष्य आदिक चराचर लोग सभी उत्पन्न हुए हैं ॥ ८० ॥

श्रीमद्भागवतेऽस्मिन् रुचिरकथः सप्तमस्कन्धः ॥
भागवतार्यविनिर्म्मितभाषाटीकासमन्वितो जयति ॥१॥
इति श्रीमद्भागवत सप्तम स्कन्ध में, पंचदश अध्याय की
श्रीवृन्दावनस्थ भागवताचार्य कृत भाषा टीका समाप्त ॥
सप्तमस्कन्ध भी समाप्त भया ॥
श्रीरुक्मिणीरमणो जयति ।

---

इति श्रीमद्भागवते महापुराणे सप्तमस्कन्धे पञ्चदशोऽध्यायः ॥ १५ ॥

———○:*:○———

समाप्तश्चायं सप्तमस्कन्धः ॥ ७ ॥

——○:*:○——

संशोधकौ चास्य ग्रन्थरत्नस्य का० 'कान्दूर' श्रीरङ्गाचार्य—वृन्दावनस्थ भागवताचार्य्यौ ।